## पूर्वकारणागमे प्रतिष्ठातन्त्रे तन्त्रावतारपटल प्रारम्भः

कल्याणं कुरतां कश्चित् करुणावरुणालयः
मयूरनगराथीशोममनृत्तविनायकः १
भूधरस्योर्ध्वशृंगेषु रत्नशृङ्गनिकेतने
तत्रासीन महादेवं श्रीकराठं सुरवन्दितम् २
योगपीठस्थितं तस्य वामे गौरीसमायुतम्
सर्वदेवावृतं सिद्धं मुनिगन्धर्वसेवितम् ३
आद्यंत कारणं पूज्यमपृच्छच्छर्वरुद्रकम्
प्रणम्म्य चरणौ तस्य प्रजापतिरथाब्रवीत् ४
ब्रह्म उवाच
देवदेवमहेशानस्थित्युत्पत्तिलयेशक
जगतामपि प्रीत्यर्थं योगिनां मुक्तिहेतुकम् ५
शिवज्ञानं परं गुह्यं वद मे शर्वरुद्रक ६
शर्वरुद्रोवाच
त्वया पृष्टमिदं सर्वं वक्ष्येहं सुखसाधनम्
कारणाख्यं महातन्त्रं प्रतिष्ठातन्त्रमुत्तमम् ७
कोटयेकग्रन्धसंयुक्तं कर्षणाद्यर्चनान्तकम्
संक्षेपेणाधुना विप्र श्रुणु वक्ष्ये समासतः ८
तस्यादौ तन्त्रसद्भावं मूलभेदोपभेदयुक्
कामिकं योगजं चिन्त्यं कारणं त्वजितन्तथा ९
दीप्तं सूक्ष्मं सहस्रञ्च अंशुमान्सुप्रभेदकम्
विजयञ्चैव निश्वासं स्वयंभुवन्तथानिलम् १०
वीरञ्च रौरवञ्चैव मकुटं विमलन्तथा
चंद्रज्ञानञ्च बिंबञ्च प्रोद्गीतं लळितं तथा ११
सिद्धं सन्तानसर्वोक्तं पारमेश्वरमेव च

किरणं वातुळञ्चैव अष्टाविंशति संख्यया १२
विपुलार्त्थन्तमोघ्नीति तत्वमन्त्रार्त्थदर्शनम्
तन्त्रदेहसमाख्यातं तन्त्रसंज्ञा च संहिता १३
तेषु पूर्वे दशप्रोक्ताश्शिवभेदेति संज्ञिकम्
तथापराष्टदशकं रुद्रभेदमिति स्मृतम् १४
महेशात् शिवभेदानां श्रोतारस्तु त्रयस्त्रयः
रुद्रभेदो महेशाच्च श्रोतारौ द्विद्विकौ मतौ १५
महेशात् प्रणवः प्राप्तः प्रणवात्त्रिकलस्थितः
त्रिकलाच्च हरः प्राप्तः श्रोतारः कामिकस्य तु १६
सादाख्यात् भस्मसंप्राप्तं ततः प्राप्तो विभुस्तथा
योगतन्त्रस्य विख्यातात्सुदीप्ताद्गोपतिः स्मृतः १७
गोपतेरंबिकाख्याता चिन्त्याख्यस्य प्रकीर्तिता
कारणात्सर्वरुद्रस्तु सर्वरुद्रात्प्रजापतिः १८
कारणस्य तु विख्यातस्सूक्ष्माद्वैश्रवणस्तथा
प्रभंजनोधनेशाच्च सूक्ष्मतन्त्रस्य कीर्तितः १९
कालात् भीमस्ततः प्राप्तो विमलं वीरभद्रकः
चंद्रज्ञानमनन्तञ्च संप्राप्तस्तु बृहस्पतिः २०
मुखबिंबं प्रशान्ताच्च संप्राप्तो दधिचिस्मृतः
प्रोद्गीतं शूलिनाप्राप्तः त्वचाख्यो मुनिसत्तमः २१
शूलया लळितं प्रोक्तं रुद्रभैरव एव च
बिन्दोश्चरण्डेश्वरः प्राप्तस्सादाख्यं तंत्रकस्य तु २२
सन्तानं शिवनिष्टाच्च संप्राप्तश्शिवसाधने
सर्वोक्तं सोमदेवाच्च नृसिह्मं प्राप्तवांस्तथा २३
श्री देव्याश्चोशनप्राप्तः पारमेश्वरमेव च
देवपित्रात्तु सिद्धाच्च संवर्तः प्राप्तवांस्ततः २४
शिवात् प्राप्तो महाकाळो वातुळन्तंत्रमुत्तमम्

रुद्रभेदास्सुधी प्रोक्ता ग्रन्धसंख्याश्श्रुणुष्वथ २५
परार्द्धसंख्ययाग्रन्धं प्रथमं परिकीर्तितम्
द्वितीयं लक्षसंख्यञ्च तृतीय्यन्तु सहस्रकम् २६
चतुर्थं कोटिसंख्यञ्च पञ्चमं त्वयुतं स्मृतम्
षष्ठस्य नियुतं प्रोक्तं सप्तमं पद्मसंख्यया २७
अष्टमं शंखसंख्यञ्च नवमं पञ्चलक्षकम्
दशमन्तु त्रिकोटी च एकादशन्तथैव च २८
द्वादशं कोटिसंख्यञ्च सार्द्धकोटि त्रयोदश
अयुतं चतुर्दशं प्रोक्तं नियुतं पञ्चदशं स्मृतम् २९
षोडशञ्चार्बुदञ्चाष्ट शतसाहस्रमाकुटम्
त्रिलक्षं विमलं प्रोक्तं चंद्रज्ञानं त्रिकोटिकम् ३०
मुखबिंबं सहस्रञ्च प्रोद्गीतन्तु त्रिलक्षकम्
लळितञ्चाष्टसाहस्रं सिद्धञ्च सार्द्धकोटिकम् ३१
सन्तानं षट्सहस्रञ्च शिवोक्तन्तु द्विलक्षकम्
पारमेश्वरतन्त्रस्य लक्षद्वादशमुच्यते ३२
किरणं पञ्चकोटिस्स्यात् शतसहस्रन्तु वातुळम्
तन्त्राणां कामिकादीनां ग्रन्धसंख्याः प्रकीर्तिताः ३३
नारसिह्मञ्च वक्त्रारं भैरवोत्तरमेव च
कामिकस्य त्रयोभेदा सुदासन्तादिकारकौ ३४
वीणाशिखोत्तरञ्चैव आत्मयोगं तथैव च
योगजस्य तु भेदानि पञ्चधा कीर्तितानि वै ३५
पापनाशं परोद्भूतं सुचिन्त्यममृतान्वितम्
सुभगं वामसंज्ञञ्च चिन्त्यभेदस्तु षड्विधः ३६
माहेन्द्रं कारणं दौर्गं पावनं भीमसंहिता
विद्वेषं मारणं चैव सप्तधा कारणस्य तु ३७
पार्वती च परोभूतं प्रभूतं पद्मसंहिता

अजितस्य चतुर्भेदा अमेयाख्यमतः परम् ३८
असंख्यमब्दमाच्छाद्य मानन्दममितौजसम्
अद्भुतं माधवोद्भूतमक्षयं दीप्तिकेऽपि वै ३९
सूक्ष्मस्य सूक्ष्ममेकन्तु अतीतम्मराडलं तथा
जातिभागो प्रमेयञ्च प्रभूद्धविबुधन्तथा ४०
हस्तं शुद्धमलंकारं सुबोधं सहस्त्रके दश
काश्यपं वासवं नीललोहितं भूततन्त्रकम् ४१
विद्यापुराणमैंद्रञ्च आत्मालंकारमेव च
वासिष्ठं गौतमं ब्राह्मं ईशानोत्तरमेव च ४२
प्रकारणं तथांशुमान् प्रोक्तं द्वादशभेदकम्
अभेदं सुप्रभेदस्तु भवं सौम्यमथोद्भवम् ४३
मृत्युनाशमघोरञ्च महाघोरन्ततः परम्
परमेश्वरञ्च विजयं विजयस्याष्टभेदकाः ४४
निश्वासोत्तरतन्त्रञ्च यमं निश्वासकैव च
निश्वासाख्यं महातन्त्रं निश्वासोर्ध्वमुखोदयम् ४५
निश्वासनयनञ्चैव मन्त्रं निश्वासमेव च
निश्वासकारीका चैव निश्वासाघोरमेव च ४६
निश्वासञ्चाष्टधा प्रोक्तं प्रजापतिमतं तथा
पद्मञ्च द्विविधंविद्यात् स्वायंभुवविशेषतः ४७
आग्नेयं व्योमतन्त्रन्तु आग्नेयस्य द्विधामतम्
प्रस्तारं फुल्लनयनं प्रबोधं बोधबोधकौ ४८
हकटं मोहसमयं प्रमोहं शकटादिकम्
विलेखनं हलं भद्रं वीरं वीरत्रयोदश ४९
कालाख्यं कालदहनं रौरवं रौरवोत्तरम्
महाकाळ मतञ्चैंद्रं रौरवे षड्विधं स्मृतम् ५०
मकुटोत्तरञ्च मकुटं मकुटस्य द्विधास्मृतम्

वृषगुह्यमथाक्रान्तं वृषभं वृषभोत्तमम् ५१
सुदन्तमथभूतञ्च रौद्रं भोगं तथैव च
आरेवतं सुभद्रञ्च अतिक्रान्तमलंकृतम् ५२
अर्चितञ्चाट्टहासञ्च अनन्तं तारणं तथा
भेदो विमलतन्त्रस्य षोडशैव प्रकीर्तिताः ५३
एकपादपुराणञ्च स्थाणवाख्यं नन्दिकेश्वरम्
स्थिराख्यं शंकरं प्रोक्तं श्रीमुखं शिवभद्रकम् ५४
कल्पभेदमिति प्रोक्तं शिवशासनमेव च
देवीमताख्य तन्त्रञ्च शिवशेखरमेव च
वारुणञ्चैव वायव्यं चंद्रज्ञानञ्चतुर्दश
चतुर्वक्त्रञ्च संस्तोभं प्रतिबिंबमयोगजं ५६
आत्मालंकारवायव्यं तु डिनीरन्तुतौटिकम्
कुट्टिमाख्यं तुलायोगं कुलाप्रत्ययमेव च ५७
पट्टशेखरमेवञ्च महाविद्या महासुरम्
निश्चित्य तिथिविख्यातं मुखबिंबस्य भेदकाः ५८
दंडाधारं पाशबन्धं पिंगळं मतमेव च
वराहांकुश कवचं शिवज्ञानं धनुर्द्धरम् ५७
कालज्ञानञ्च विज्ञानमायुर्वेदञ्च गीतकम्
भरतञ्च धनुर्वेदमातोद्यं सर्वदंष्ट्रकम् ५८
प्रोद्गीताख्यस्य तन्त्रस्य भेदाष्षोडश एव च
लळितोत्तरञ्च कौमारं लळिताख्यमतः परम् ५९
लळितस्य त्रयोभेदाश्शालाख्यं शशिखंडकम्
सारोत्तरञ्च त्वीशानं सिद्धतन्त्रं चतुर्विधम् ६०
अमरेशं सुराद्ध्यत्तं लिंगाद्ध्यत्तमसंख्यकम्
अनिलं शंकरद्वन्द्वे सन्ताने सप्तभेदकाः ६१
ईशानं शिवधर्मञ्च शिवधर्मोत्तरं तथा

दिव्यं प्रोक्तं कुबेराख्यं सर्वोक्तस्येहपञ्चधा ६२
हंसं पद्मञ्च मातंगं सामान्यं यक्षणी तथा
पुष्करं सुप्रयोगं च सप्तधापरमेश्वरे ६३
गारुडं नैर्ऋतं नीलं रूक्षं भानुकमेव च
प्रबुद्धन्धेनुकं बुद्धं कालाख्यं किरणेन च ६४
वातुळोत्तरतन्त्रञ्च कालज्ञानं पुरोहितम्
श्रेष्ठं धर्मात्मकं सर्वं शुद्धं नित्यं महाननम् ६५
विश्वं विश्वात्मकं तन्त्रं वातुळं द्वादशस्मृताः
मूलभेदोपभेदाश्च समासात्परिकीर्तिताः ६६
सदाशिवमुखाब्जेषु महेशेन पुराश्रितः
कामिकाद्यजितान्तञ्च सद्योजातमुखोद्भवम् ६७
दीप्तादिसुप्रभेदान्तं वामदेवमुखोद्भवम्
विजयारभ्यवीरान्तं पञ्चैते घोरवक्त्रजाः ६८
रौरवामुखबिंबान्तं पुरुषाख्यनरोद्भवम्
प्रोद्गीताद्यष्टतन्त्रञ्च ईशाननसमुद्भवम् ६९
येन वक्त्रोक्ततन्त्रेण दीक्षायां कुरुते तथा
तन्त्रेणैव शिवस्येव कर्षणाद्यर्च्चनान्तकम् ७०
कुर्यात्सर्वसमुद्दिष्टमनुक्तञ्चेत्तथान्यके
तन्त्रे संग्राह्य तन्त्रांश्च क्रियां कुर्याश्छिवस्य च ७१
प्रागुक्तानिव तन्त्राणि सिद्धान्तानि विदुर्बुधाः
शैवतंत्रा इमे प्रोक्ताश्शैवं पाशुपतन्तथा ७२
सोमसिद्धान्तकञ्चैव वातुळन्तु चतुर्विधम्
एतेषां सांकरन्दोषं संकरे कर्तृनाशनम् ७३
तस्मिन् प्रोक्तेन कर्तव्यं संकरञ्चतुदोषकम्
येनसिद्धाख्य तंत्रेण दीक्षितश्चादिशैवकः ७४
आदिशैवस्त्रिशैवेषु तथापाशुपतादिषु

स्थापनं यजनं कुर्यात्सिद्धान्तोक्तविधानतः ७५
तत्सौम्य छलतंत्राञ्च संकरन्नेति कीर्तितम्
स्थापितं शुद्धशैवेन नहि पाशुपदादिषु ७६
ते रौद्रफलकन्दत्वा न कुर्यादर्च्चनादिकम्
इमे रौद्रन्तथान्तश्च शैवसौम्यमिति स्मृतम् ७७
रौद्रसौम्येन धर्माणि सौम्ये रौद्रेण वर्जयेत्
इति कारणे प्रतिष्ठातन्त्रे तन्त्रावतारपटल प्रथमः

अथ द्वितीयो मंत्रावतारपटलः
अस्मिन् तंत्रे समासेन मंत्रोच्चारं शृणुष्व तत्
मंत्रं विना क्रिया नास्ति कर्षणाद्यर्चनान्तका १
शिवस्सदाशिवश्चैव महेशो वा तथा क्रयः
वाच्यवाचकराहित्यो वाङ्मनातीतगोचरः २
सर्वज्ञानगुणोपेतस्सर्वतत्वामलप्रभुः
इत्थं भूतश्शिवः प्रोक्तो निष्कळश्चेति कीर्तितः ३
सकळन्निष्कळोपेतस्त्वष्टत्रिंशत्कलात्मकः
सकलोत्कोंऽगसंपूर्णो भुवनाध्वोत्तरो महान् ४
वर्णाविवध्वजोपेतो मंत्रत्वा शुद्र आत्मकः
पदाध्वाद्धस्तिरोमांस शुक्लमज्ञास्थितत्वधृत् ५
सदाशिवषडध्वात्मा तस्य प्राणी शिवस्मृतः
हृदयाद्यगसंपूर्णो ध्याने सकळरूपधृक् ६
निष्कळस्तदभावे तु तस्मात् सकळनिष्कळः
सदाशिवगुणोपेतो तस्य वामे मनोन्मनी ७
महेशस्सकळः प्रोक्तो नानारूपधरो हरः
वह्नावाहनचिह्नाद्यैर्लयभोगाधिकारवान् ८
भवानी सहितो देवस्सर्वाकारेषु वामके

तस्मात्क्रियाणां मूर्तीनां मंत्राणां श्रुणुवर्त्मते ९
नादं नादादिकं कूटं कलाण्डं पार्थिवान्वितम्
वारुणं वह्निसंयुक्तं मरुत्षष्ठस्वरान्वितम् १०
स्वरान्तबिन्दुनादाढ्यं नवर्णात्मा शिवं विदुः
नादो हुंकारमित्युक्तं नादाद्यन्तु सकारकम् ११
कूटाक्षरो क्षकारं स्यात्कालार्णन्तु मकारकम्
पृथ्वी बीजं लकारं स्यात् वरौ वरुणवह्नयोः १२
यकारं मारुतं बीजं षष्ठं स्वरसमन्वितम्
मंत्रः प्रोक्तश्शिवस्येह जगत्सृष्टिलयात्मकः १३
नादार्णन्तु समुद्धृत्य अर्चतुर्दशसंयुतम्
बिन्दुनादसमायुक्तं नादाद्यं प्रथमान्वितम् १४
अष्टवर्गादिमञ्चैव तृतीयस्वरसंयुतम्
सप्तवर्गान्तमुद्धृत्य प्रथमस्वरमण्डनम् १५
पञ्चाक्षरमिदं ह्येवं मंत्रं सदाशिवस्य तु
नादं कालसमोपेतं वह्निमारुतसंयुतम् १६
षष्ठस्वरसमायुक्तं बिन्दुनादसमन्वितम्
एते महेशमंत्रन्तु सर्वसिद्धिकरं परम् १७
पुनस्सान्तं समुद्धृत्य वह्निमाया समन्वितम्
बिन्दुनादसमायुक्तं मनोन्मन्यास्तु मञ्चकम् १८
द्वितीयस्य तृतीयन्तु मायानलसमन्वितम्
बिन्दुनादसमायुक्तं गौरी बीजमिदं परम् १९
षोडशस्वरसंघे तु नपुंसकविवर्जितम्
द्वादशस्वरसङ्घेषु नादाख्याणुसमन्वितम् २०
शान्तमीशानमित्युक्तं मन्ये रौद्रा इति स्मृताः
शुक्लपीतारुणञ्चैव रक्तं वामञ्च कृष्णकम् २१
वर्णानीव षडंगानि त्रिणेत्राश्च चतुर्भुजाः

शूलं कपालहस्ताश्च अभयं वरदान्वितः २२
हस्तनेत्रौ तु रौद्रौ तु शेषाः सौम्या इति स्मृताः
सदाशिवस्य रूपन्तु वक्ष्येऽहं द्विजसत्तमाः २३
कुन्देन्दुस्फटिकाभासा जटामकुटमंडिताः
पञ्चवक्त्रयुतास्तेषु प्रतिवक्त्रं त्रिलोचनम् २४
सर्वाभरणसंयुक्तं दशदोर्भिस्समन्वितम्
शूलं परशुखड्गञ्च वज्राभयौ च दक्षिणे २५
पाशन्नागांकुशञ्चैव घण्टां वह्निञ्च वामके
दिव्यांबरधरन्देवं दिव्यपुष्पैरलंकृतम् २६
दिव्यगन्धानुलिप्ताङ्गं शान्तरूपं स्मिताननम्
मंत्रोच्चारे स्मरेन्मंत्री चतुर्दोर्भिस्समन्वितम् २७
रक्तवर्णो ज्वलां शुक्लवक्त्रेणैव विभूषिताम्
सर्वाभरणसंपूर्णपीनोरुजघनस्तनाम् २८
त्रिणेत्रां गन्धपुष्पाढ्यां केशाळकविभूषिताम्
पद्मोत्पलधरां देवीं वरदाभयपाणिनीम् २९
देवस्य वामभागे तु दिव्यरूपां मनोन्मनीम्
चतुर्भुजो महेशस्तु जटामकुटमंडितः ३०
करण्डमकुटोपेतां नेत्रत्रयसमन्विताम्
इत्थं भूतां वरां गौरीं भावयेत्तु विचक्षणः ३१
पृथिव्यादीनि बीजानि लवरयहकारकः
प्रणवः प्रथमं प्रोक्तं आ ई ऊ तदनन्तरम् ३२
व्योमव्यापिन् चतुर्थञ्च तदूर्ध्वं प्रणवं भवेत्
अस्मिन् तंत्रे विशेषेण दशाक्षरमिति स्मृतम् ३३
हुं फट्कारविसर्गान्तं मंत्रं पाशुपदं स्मृतम्
चिच्छचीच्छयक्षरं गृह्य ---- कृद्वर्णसंयुता ३४
क्षुरिकाद्यष्टवर्णान्तु सर्वकार्येषु पूजितम्

हृं सृं द्दृं बीजमुख्यास्तु विद्यांगानि ततश्शृणु ३५
प्रशान्तायेति हृदयं प्रणवात्मने नमश्शिवः
शिवाय हृं शिखाज्ञेयं हुंकारस्तु पुरुष्टुतः ३६
फट् कारममृतश्चास्त्रमोजुंसो नेत्रमुच्यते
विद्यांगस्त्विति विद्याता वषट्कारसमन्वितः ३७
अनन्तेशस्तथा सूक्ष्मश्शिवोत्तमश्चैकनेत्रकः
एकरुद्रस्त्रिमूर्तिश्च श्रीखण्डश्च शिखण्डिकः ३८
अष्टविद्येश्वरा ह्येते त्रिणेत्राश्च चतुर्भुजाः
सव्ये अभयवज्रौ तु वामे तु वरदांकुशौ ३९
अंगसव्य सदोभेरी टंकशूलसमन्वितः
रक्तं श्वेतं तथा नीलं पीतं कृष्णञ्च कुंकुमम् ४०
अरुणञ्चांजनं पूर्णं क्रमाद्विद्येशवर्णकम्
गौरी चण्डेशनन्दीशो महाकाळो वृषस्तथा ४१
गणेशश्चैव भृंगीशो महासेनो गणेश्वरः
द्विनेत्राद्विभुजाश्यामा गौरी दक्षकरोत्पला ४२
द्विनेत्रा द्विभुजाश्चण्डाश्शंभोर्वै टंकहस्तकाः
चतुर्भुजं त्रिणेत्रस्तु कृष्णवर्णश्चतुर्भुजः ४३
अभयं वरदोपेतो शूरस्तोमरशूलधृक्
वृषभः श्वेतवर्णस्तु तीक्ष्णग्राहो महाबलः ४४
गजाननः त्रिणेत्रस्तु कुंकुमाभश्चतुर्भुजः
पाशदन्तौ तु सव्ये तु वामे त्वंकुशलड्डुकौ ४५
नागयज्ञापवीतश्च लंबोष्ठस्तु गणाधिपः
चतुर्भुजस्त्रिणेत्रस्तु भृंगीशः पिंगळः प्रभुः ४६
दक्षिणे भयटंकौ तु वामे वरदशूलधृक्
रक्तवर्णो महासेनो द्विनेत्रश्च चतुर्भुजः ४७
पुरन्दरोऽथ वह्निश्च यमो वै राक्षसेश्वरः

वरुणो नीलवर्णश्च ईशानो नन्तपद्मजः ४८
श्यामं रक्तन्तथा कृष्णं नीलञ्चानन्तनीलकम्
शंखधूम्रञ्च शुक्लञ्च स्फटिकाभञ्च वर्णकम् ४९
अतसीपुष्पसंकाशं दिक्पालानां निभानि वै
वज्रादिपद्मपर्यन्तं लोकपालायुधस्मृतः ५०
कुलिशश्शक्तिदण्डौ च खड्गपाशांकुशस्तथा
गदात्रिशूलञ्चक्रञ्च पद्मञ्चेति दशायुधाः ५१
नानावर्णमहाविद्युन्नीलजीमूतनीलगे
पावकं पद्मरागञ्च तुषारञ्चेंद्रनीलकम् ५२
शारदाभ्रञ्च मुक्तञ्च वज्रादीनान्तु वर्णकम्
यक्षराक्षसपैशाचगन्धर्वाणां तथैव च ५३
सिद्धानां किन्नराणाञ्च ऋषीणां भैरवैरपि
अन्येषां देवतानाञ्च स्वनामाद्यक्षरेण तु ५४
बिन्दुनादसमायुक्तं तेषां मन्त्रं प्रयोजयेत्
इति कारणाख्ये प्रतिष्ठातन्त्रे मन्त्रावतारपटलो द्वितीयः

## अथ वास्तुविन्यासपटलस्तृतीयः

अतः परं प्रवक्ष्यामि वास्तुविन्यासमुत्तमम्
वास्तुविन्नयासमूलं हि प्रजानामास्पदास्पदम् १
कीर्तिदं जयति द्रव्यमिह पुत्रफलप्रदम्
वास्तूक्तदेवतानान्तु यजनात्र्थं विशेषतः २
अग्रहारस्तथा ग्रामो नगरं राजधानिकम्
पत्तनं कुट्टिमञ्चैवा विकं सेनामुखं त्विति ३
नृपवासप्रधानानां महर्षीबालभूभुजाम्
आरामोपवनानाञ्च नारीणां वणिजामपि ४
नृत्तगेयनियुक्तानां सद्भटानां निवासभूः

चंडालानामथान्येषां राजधानीति कीर्तिता ५
द्वीपान्तरगतद्रव्यक्रयविक्रयहेतुकम्
अभूमिरेवं वणिजा मापादपत्तनं स्मृतः ६
केवलं भद्रजातीनां तेषां कृत्याधिकारिणाम्
निवेशः कुटिकः प्रोक्तो राजवेश्मसमायुतम् ७
राजसेनासमायुक्तं वित्तद्वितिय संज्ञकम्
सर्वजिद्धिस्समायुक्तं मंत्रिभिस्सचिवैर्युतम् ८
सेनामुखमिति ज्ञातं प्रोच्यंतेऽष्टविधास्तुते
ज्येष्ठमद्ध्यकनिष्ठो यमग्रहारस्त्रिधा स्मृतः ९
तदैकैकन्तु नवधा विंशत् सप्ताधिका स्मृता
वेदवेदांगतत्वज्ञान् श्रोतियान् सात्विकान्वितान् १०
पत्नीसन्तानसहितान् वेदाद्धययनतत्परान्
देवाग्निगुरुभक्तांश्च दारिद्र्ये दोषवर्जितान् ११
उक्तषट्कर्मनिरता ननुष्ठानपरायणान्
विप्रानाहूयसंपूज्य निश्चित्य वसुधाक्रियाः १२
दद्यात्पूर्वन्तु संभारान् ग्रहोपकरणानि च
स्त्रीणामाभरणं धान्यं वस्त्रंगाञ्च पयस्विनीम् १३
दासीदासांश्च विप्रेभ्यो दद्यात् ज्ञानान्वितो नृपः
नास्तिकान् पिशुनान् क्रूरान् वेदाग्निगुरुनिन्दकान् १४
ब्रह्मघ्नांश्च खलानज्ञान् तद्ववेत्तुःस्वहारकान्
स्वधर्माचाररहितान् दानकर्मविवर्जितान् १५
लोभान्वितानप्यशुचीन् प्राङ्ग नृपद्रोहसंयुतान्
वर्जयेदनिशं विप्रान् नृपस्तान् दानकर्मणि १६
चतुर्दशसहस्राणां विप्राणामग्रहारकम्
उत्तमे नवमे ज्येष्ठं सहस्रार्द्धद्वयं ततः १७
अर्द्धाधिकसहस्रान्तं मद्ध्यमं नवकं स्मृतम्

सहस्रभूसुराणान्तु निवासस्त्वग्रहारकः १८
कन्यसेनवके ज्येष्ठं सहस्रं तद्विजान्तकम्
शतसंख्याद्वयेणैव कन्नयसं नवकं स्मृतम् १९
दशोन द्विदशाप्राग्वत् शतं द्विशतमुत्तमम्
दशहीनक्रमेणैव क्षुद्रेषु विष्ट उच्यते २०
शतमारभ्य विष्टान्तं पञ्चपञ्चद्वयेण तु
षष्ठकं मद्धयमं प्रोक्तं नवकन्तु समासतः २१
पञ्चपञ्चदशारभ्य यावत्पञ्चदशं पुनः
दशार्द्धेन क्रमेणैव क्षुद्रेषु च कनीयसम् २२
प्रागुक्तगुणसंपन्नान् ज्ञानाकृष्टान् तपोधिकान्
दशारभ्य द्विपर्यन्तमेषामेकैकहीनकम् २३
वेदार्त्थं भूमिदां यद्वा तद्वदारंभमुच्यते
प्रागुक्तगुणयुक्ताय वेदार्त्थनिपुणाय च २४
कुर्यात्तत् ज्ञाननिधये दानं स्यादुत्तमोत्तमम्
एकभोगमिति ख्यातं प्रशस्तमतिदुर्लभम् २५
अथापि विधमारभ्य तत्राढ्यावर्द्धयेत्क्रमात्
अयुतैकसहस्रन्तु षट् शतञ्च ततः परम् २६
चतुष्षष्टि ततोयावदग्रहारस्समासतः
अष्टोत्तरशतं प्रोक्तं श्राद्धपूर्वविधानतः २७
कुर्यादिकमतं तेषु न्यूने न्यूनफलं स्मृतम्
अधिके तत्फलाधिक्यं तस्माद्धीनं नकारयेत् २८
कालं भूमिं परीक्ष्यादौ कर्षणात्तदनन्तरम्
द्वितीयं यत्र विन्यासं तदन्ते वास्तुपूजनम् २९
पञ्चमं ग्रहनिर्माणं देवानां स्थापनं ततः
सप्तमं गतविन्यासमष्टमञ्च तथैव च ३०
प्रायशः परिघारामे जलमार्गे विधानकम्

नवमं भूमिभागन्तु दशमन्तु प्रकीर्तितम् ३१
क्रमेण तानि सर्वाणि अ्रष्टा वा वर्ज्यतत्वतः
अयनञ्चोत्तरं श्रेष्ठं देवचत्वावरान्विते ३२
मार्गशीर्षकमाघौ द्वौ वर्जयेत्तु प्रयत्नतः
शेषेष्वपि च कर्तव्यं त्वरिते तु प्रजायते ३३
कर्षणोक्तविधानेन क्षेत्राधिक्य फलं क्षयेत्
श्वेताभापितृभूमिस्स्यात् भवस्यारुणसन्निभा ३४
पीताभा वैश्यजातेस्तु कृष्णाशूद्रस्य कीर्तिता
मधूद्रक्तामृत्तिका तु वर्णानामपि च क्रमात् ३५
प्रदक्षणैकपत्ती च शस्ताकन्दाहवर्जिताः
ऊषरीतुमभिज्युष्टा वल्मीकाद्याश्च वर्जिताः ३६
हस्तप्रमाणतश्चैवं खात्वा संपूरयेन्मृदा
अधिका तु विफलदा समासमफलप्रदा ३७
न्यूनं मेदिनिविज्ञेया ह्येवं भूमिपरीक्षणम्
ततस्तु कर्षणार्द्धन्तु तत्तज्ञात्यार्हकौ वृषौ ३८
शुभौ नासालवृत्तौ च तरुणौ प्रियदर्शनौ
नागहीनौ बलोपेतौ भूरिस्वर्णान्वितौ वृषौ ३९
गुणवन्तौ सहस्त्रेभ्य हेमशृंगखुरान्वितौ
वस्त्रैर्नानाविधैश्शृंगमलंकृत्य विधानतः ४०
आर्द्रादूर्वातृणं दत्वा क्षीरवृक्षमथ दृढम्
युगं कृत्वा तथा चैव सफलं फलमेव वा ४१
भंजेत फल्लवो भूतपाशेनैवाथ पत्रयेत्
पुण्याहं तत्र कुर्वीत दद्यात्पुण्याहदक्षिणाम् ४२
वस्त्रहेमांगुलीयाद्यैस्तदा सन्तोषयेत् गुरुम्
प्राङ्मुखः प्रथमं कृत्वा ततस्तत्र उदङ्मुखः ४३
वास्तुविन्यासभूमेस्तु कथयेदखिलं तथा

सूक्ष्मपूर्णघृतायान्तु मुद्गमाषतिलास्तथा ४४
सिद्धार्त्थयवधान्यानि वापयेत् क्रमशो मृदि
देशिकस्य वृषौ दद्यात् हलञ्चापि युगन्तथा ४५
वरभूम्यादिसस्यानि ब्राह्मणानान्तु दापयेत्
बधानव्या शुभेनैव सौहारैरघमर्षणैः ४६
उर्वीचार्द्रकृतायावत् तावत् गास्सन्निवासयेत्
गोभिर्निवासिताभूमिस्सर्वदोषाणि नाशयेत् ४७
कर्षणं त्वेवमाख्यातं भूमानमधुना श्रुणु
परमाणवादिरज्वन्तं मानसं धनमुच्यते ४८
रेणुर्वालाग्रविख्याति
लयवकरवजारेणुभिश्चाष्टवृद्ध्याभ्यांगुळ्यन्तदस्मिदिनकारकर
वेदाष्टवृत्तिक्रमेण
तालोभस्तश्च दण्डभवति सहिरणमेवमल्पं ग्रामो द्यादिनि
मेयान्यतधनुशमृतः प्रोच्यते भूमिभागः ४९
दण्डं पञ्चशतेनैव कोशं तत् द्विगुणं भवेत्
गोरुतार्त्थमिति ख्यातं तद्वयं गोरुतं मतम् ५०
योजिनौ कृष्णं स्यादेव विनक्रमं भवेत्
चतुरश्रन्तनुवृत्तं त्रिकोणं चतुराकृतिः ५१
ओजो युग्मपदे वर्त्म विवरं योगमेव तु ५२
द्विगुणेतां सवर्गार्वेति षट्प्रमाणतः
शेषं नक्षत्रमाख्यातमष्टभिर्गुणिते ततः ५३
त्रिंशत् भाजिमशेषस्तु स्थितिरित्यभिधीयते
नक्षत्रशेषमाख्यातं स्थिताय करणे पुनः ५४
रंध्रे हन्ते शान्नमेव निर्गुणितन्तु यत्
मुनिभिर्भाजिते शेषो वर्रीत्युपरिदृश्यते ५५
आयाधिक्यं व्ययाकीर्णमत्रेदं सर्वभूमिदम्

अशुभं विपरीतञ्चेत् ध्वजो धूमश्च केसरी ५६
श्वावृषो गर्दभश्चैव गजः काकोष्टयोनिषु
गजसिह्मौ च नागश्च शुभाश्शेषा विपत्कराः ५७
कर्तृनामाक्षरामाला द्विचतुर्त्थं द्विषड्वथ
स्युः सुनामानि शुभदाश्शेषास्त्वशुभदा स्मृताः ५८
सवायुबर्हळीशस्तमप्रशस्तमथेरितम्
द्वितीया च तृतीया च पञ्चमीशततःपरम् ५९
षष्ठी चैव विशेषेण सप्तमी तु तथैव च
दशम्येकादशी चैव शुक्लपक्षे त्रयोदशी ६०
अपरे प्रतिपच्चैव वास्तुकर्मणि संस्मृताः
कृष्णे प्रागुक्ततिथयस्तथा मद्ध्यफलप्रदाः ६१
तस्करो भुक्तिशक्तिश्च धन्यो पूपो नपूंसकः
निर्भयोथ दरिद्रस्तु प्रेष्योंशनवमस्मृताः ६२
शुभनाम्नि शुभं तेषु दुर्नामाप्यशुभं भवेत्
त्याज्यास्सौरारसूर्याश्च शेषाश्शुभफलप्रदाः ६३
मुखं सर्वानुकूलञ्चेद्दत्ताधिक्यन्तु मद्ध्यमम्
समयञ्चेदथ स्यात्तु दोषाख्यन्तु विवर्जयेत् ६४
दण्डं दण्डेन वर्द्धन्ते हस्तं हस्तेन रोपयेत्
अंगुलञ्चांगुलेनैव सूत्रपातस्त्वनन्तरम् ६५
दिक्भ्रान्तिनाशनार्त्थाय शंकुच्छायावशेन तु
प्राचीमुदीचीं विज्ञाय सूत्रपादं समारभेत् ६६
पलाशं ब्राह्मणस्योक्तमश्वत्थः स्यान्नृपस्य तु
खादिरं वैश्यजातेस्तु कृष्णस्य तु मधूकजः ६७
षडंगुलपरीणाहं तच्च द्विगुणमायतम्
सुवृत्तमरुणं शंकु कलितस्तंभमेव वा ६८
मूलादष्टांशहीनाग्रं शिरस्यापस्कलकम्

शंक्वग्रदारसदृशं वेशं तद्वेदभागतः ६९
कर्णौ भुजौ च कोटी च समकराठफलाकृति
कंठवर्गाभवेत् कोटिभुजवर्गसमासतः ७०
शस्तस्य दशमूलं स्याद्देवमूलक्रमो भवेत्
संवर्गे तु भुजाकोटि तदर्द्धन्तु भुजाफलम् ७१
त्रिवर्गं घनमाख्यातं द्वादशं च षडश्रकः
परिधिर्वित्तविष्कंभस्त्रिगुणञ्च स्वरांशयुक् ७२
नाहं विष्कंभपादघ्नं फलमूलं हतं घनम्
धनुषो बाणसंवर्गन्नचावर्गान्तमुदीरितम् ७३
मणपेन तु सादृश्यं षड्भागन्तु षडश्रभाक्
भुजापिराडदभूतञ्च चतुर्त्थावप्यतन्त्रतु ७४
बाह्यस्योक्त्वा क्रमेणैव फलवर्गसवर्गजः
पातरेखामनेनैव क्रमेण च समानयेत् ७५
इच्छयाफलमाहत्य प्रथमाप्तफलन्तु यत्
तत्फलं सर्वमानीय प्रत्युपन्नेनमेव च ७६
श्रेयसंकिलनादीनि चानेयानि दशानधा
एवं संक्षेपतः प्रोक्तं भूमानं दराडमुच्यते ७७
निधिर्दराडविवृत्यर्त्थमूहात्संवर्द्धयेत् बुधः
एकोनत्रिसहस्रान्तं तदूर्ध्वं नेष्यतेत्र तु ७८
संख्यायैकोनपञ्चाशत् द्विशतं हीनमुच्यते
तदूर्ध्वं मद्ध्यमं प्रोक्तं तत्समञ्चोत्तमं भवेत् ७९
मानं सप्तदशं ज्ञेयं चत्वारिंशत् स्वरोत्तरम्
एवं विस्तारमाख्यातं ग्रामादीनां विशेषतः ८०
कुर्यादिकमतं तेषु आनुकूल्यं सहैव तु
भूमानमिति विज्ञेय मायादीन् लक्षयेत्क्रमात् ८१
धनर्णौ योनिनक्षत्रौ वस्वायुश्चांशुकन्तथा

वारोष्टैतानि संशोद्धय गृहवास्तुसमारभेत् ८२
विस्तरेणाभ्यदेदैर्घ्यन्ताद्रजियुधवा पुनः
विस्तारायामसंयुक्त राशी वाथ निरीच्चयेत् ८३
वसुभिर्गुणिते भानुभूतेशेषो यवः स्मृतः
सगुणयवह्निभिस्सूत्रैर्भक्तशेषो व्ययस्तथा ८४
रामघ्नेष्टभृते योनिरष्टभिर्विधिते पुनः
सप्तविंशतिभक्तैव स्वायुस्तच्च फलं स्मृतम् ८५
कृत्वैवं वास्तुभूमेस्तु मद्धये निलदिगाश्रितम्
मणडलन्दणडमानेन षडंगुलसमन्वितम् ८६
जलेन समतां नीत्वा दर्पणोदरवत्समम्
कृत्वा तु तस्य मद्धयन्तु द्विमयेच्छंकुमानतः ८७
शंकुद्विगुणमानेन वृत्तस्संभ्रामयेत् बहिः
तद्बहिर्ग्रामशंकुश्च त्रिगुणेनैव मद्धयतः ८८
शंकुस्थापनकात्पूर्वरात्र्यामेवाधिवासयेत्
प्रोच्चयेत्पञ्चगव्यैस्तु शुभैश्च शुद्धमृज्जलैः ८९
नवांबरैरसैर्वेददर्भैस्सृग्भर्मनोरमैः
शालिभिस्थंडिलं कृत्वा मणडले तिलतंडुलैः ९०
वस्त्रेणास्तीर्य दर्भैस्तु संप्रोच्च्य प्रणवेन तु
स्थंडिले शाययेच्छंकुं प्राक्छिरस्कं सदर्भकम् ९१
अपरे दिवसे भानोरुभयेत्तु शुभे तथा
पुणयाहं वाच्य तत्रैव शंखकूजननिस्वनैः ९२
शयनाच्छंकुमादाय शंकुमंडलमद्धयमे
स्थापयेत्प्राङ्मुखोधीमानाचार्यश्शिल्पिभिस्सह ९३
गुरुं संपूजयेत्पश्चात् शिल्पिनं पूजयेत्तदा
वस्त्रहेमांगुलीयाद्यैर्गन्धपुष्पादिभिस्तथा ९४
पूर्वाह्णायोश्वायाप्रवेशे निर्गमेऽपि वा

सूत्रत्रयेण तत्प्राची निश्चित्यदृढमानसः ९५
इष्टमासे तु तद्व्यक्तत्रयोलाञ्छनबीजकान्
संख्यादिकामनायैव न्यूने रोप्यधिके ह्रसेत् ९६
शुद्धप्राचीति विज्ञेय सर्वशास्त्रानुसाश्रितम् ८६
मध्याह्ने यनसवेश्चाभाचैवं विधेत्सुधीः
प्राचीसूत्रप्रमाणेन कृत्वामस्य द्वयं ततः ८७
शफलं तस्थसूत्रेण याम्ये सौम्यविनिर्दिशेत्
द्रोणषूत्पलकुर्यान्तु विन्यसेश्चावरं क्रमात् ८८
तद्वत्सूत्रत्रयं कृत्वा प्राचीसूत्रस्य पार्श्वयोः
तथोदीचीनसूत्रस्य सूत्रं याम्योत्तरद्वयम् ८९
लेखयेत्तु चतुष्कोष्ठं चतुरश्रं भवेदिह
सूत्राणि विसृजेत्तस्मात् तदभीष्टप्रमाणतः ९०
विप्राणं समकूर्याश्रं प्रशस्तमथवा पुनः
चतुरश्रार्धभागं वा चतुर्भागमथार्धकम् ८१
त्रिपादं वा त्रिभागं वा त्रियंशे द्व्यंशकं भवेत्
आरोप्य समतुर्यश्रे यथा पूर्वापराधिकम् ९२
कल्पयेदाद्यसौम्यं तु दीर्घं तुर्याश्रमावहेत्
अशुभं युग्मदण्डं च दशयुग्मशुभं भवेत् ९३
दण्डच्छेदनकार्यं स्यात् गृहत् ग्रामे तु यत्नतः
ग्रामं तु पञ्चधा कृत्वा भागमेकं बहिन्यसेत् ९४
तत्पैशाचमिति ज्ञेयं तत्र देवालयं भवेत्
ककितस्मिन् विशेषोऽस्ति तं विशेष शुणु द्विजाः ९५
वास्तुपैशाचिके स्थित्वा ईशो विष्णुश्च मात्रभिः
अन्येषां वास्तुदेवानां पदे पैशाचिके तथा ९६
चतुष्षष्ट्येकशीति वास्तुभूम्यखिलं ततः
चतुष्षष्टिविभागे तु प्राचीनानि निवैव हि ९७

सूत्राणि कल्पयेत्तद्वदुदीचीनानि वास्तुवित्
ब्राह्मयं विद्याच्चतुष्षष्टिपदेष्वन्तश्चतुष्पदम्   ९८
तद्बहिर्द्वादशपदं परितो देविकं विदुः
दैविकादि हितो विंशत् पदं मानुषमुच्यते  ९९
पैशाचान्तं बहिः प्रोक्तमष्टविंशत्पदं तथा
एकाशीते  तु षष्ट्यानि स्थानानि निच वर्जयेत्  १००
युग्मकोष्ठे सूक्ष्मसूत्रयुग्मकेषु पदस्थिताम्
देवानभ्यर्चयेत्तत्र पूर्वाद्यै स्वस्वनामभिः  १०१
ब्रह्माणं संयजेत्तेषां मध्ये कोष्ठे चतुष्कके
मरीचिश्च विवस्वांश्च मित्रे क्षोधर एव च  १०२
ब्रह्माणस्तु चतुर्दिक्षु द्विपदार्थद्वयानुगाः
महेन्द्रादित्यसत्याश्च भ्रशेग्रहक्षतोय सः  १०३
गन्धर्वभृङ्गराजस्तु पुष्पदन्तो जलेश्वरः
असुरश्शोषभल्लाटौ सोमौ ऋगोदितस्तथा  १०४
षोडशैते द्विकोष्ठेस्था प्रागम्य वरुणेन्दुषु
आपस्तथापवत्सश्च साविन्द्रश्च सविन्द्रकः  १०५
इन्द्रश्चेन्द्रजयस्सर्व रुद्रो रुद्रजयस्तथा
द्वितीयावरणे वाह्ये चार्धार्धपदभोगिनः  १०६
जयन्तस्वन्तरिक्षश्च पीतस्थस्तु भ्रगस्त्वभिः
सुग्रीवः पापयक्ष्मा च मुख्यकं च दितिस्तथा  १०७
पार्श्वयोस्त महादिक्षु तदैकैकपदानुगाः
ईशानस्त्वथ पर्जन्यो बहिः पूषा तथैव च  १०८
नीलो द्वारितकश्चैव रोगनागोष्टवे तथा
बाह्यावृतेशकोष्ठादि विदिक्षुर्धार्धकोष्ठगाः  १०९
बाह्ये शूलचतुष्केषु चरक्याद्यास्तु संस्थिताः
वास्तुदेवां चतुष्षष्ठपदेष्वेवं प्रकल्पयेत्  ११०

अपामार्गत्सकोष्ठेषु तस्य वामा भुजा स्मृताः
सविता सवित्रिपदे भुजेन दक्षिणस्तथा  १११
मरीच्यान्तस्य वक्त्रं तु पदे भानोगिरिस्तथा
वामपार्श्वे धरित्रीन्द्रे सव्यपार्श्वो विवस्वति  ११२
इन्द्रे चन्द्रे जये तस्य दक्षिणं पादमुच्यते
रुद्रे रुद्रजये तस्य वामपादः प्रकीर्तिताः  ११३
मित्रे गुह्यप्रदेशस्तु हृन्नाभिश्चाम्बुजासने
एवं चाथोमुखं वास्तु पुरुषं प्रबलं विदुः  ११४
एकाशीति पदान्यत्र लभन्तेषास्तु मध्यमे
देवता यजताद्वास्तु नर आप्तो भवेत्ततः  ११५
दश प्राङ्मुखसूत्राणि दशैवोदङ्मुखानि तु
एकाशीति पदान्यत्र लभन्तेषांस्तु मध्यमे  ११६
ब्राह्मे नवपदं विद्यात् तद्बाह्येकावृते तथा
षोडशानि पदानीह विद्यते देशिकं त्विति  ११७
बाह्येश्चकावृते चैव चतुर्विंशतिमानुषम्
बहिरावरणे चैव द्वात्रिंशेत् पदकं तथा  ११८
पैशाचं त्विति विख्यातं तदेवाश्चान्तरे स्थिताः
नवपञ्च तथा बाह्ये चतुरश्रं शूलगं तथा  ११९
चत्वारिंशन्नवैतानि संयजेदात्मभूतये
वस्वन्धरां धरां देवीसर्वभूताश्रयां वराम्  १२०
वराहात्महरेर्वक्त्रदंष्ट्रोद्धृतममेदिनीम्
सरित्समुद्रवसनां ध्यात्वा तन्नाम मन्त्रतः  १२१
समर्च्य गन्धपुष्पैश्च वास्तुभूमेस्तु मध्यमे
शालिभिस्थण्डिलं कृत्वा तण्डुलैश्च तिलैस्सह  १२२
तस्मिन्नेकोनपञ्चाशत्पदान्यलिखितेषु वै
शालितण्डुलसंसिद्धां चत्वारिंशन्नवाधिकान्  १२३

चरुं विन्यस्य तेष्वेव घृतेनैवाभिघार्य च
संप्रोन्द्य प्रणवेनैव वस्त्रैशाच्छाद्य सत्कुशैः १२४
द्वादशं बहिसंपूर्णं विप्रजातिसमुद्भवम्
सर्वलन्नणसंपूर्णं स्नातामाभरणो द्यताम् १२५
शुक्लाम्बरधरां शुक्लां गन्धपुष्पैरलङ्कताम्
शुक्लाम्बरोत्तरीयां तां संभोज्यात्र यथेच्छितम् १२६
ततस्यैव तु दत्तां तां ताम्बूलं च चरू ---
वास्तुदेवपदेष्वेव पीठे हस्तप्रमाणतः १२७
त्रिमेखलसमायुक्तो गोमये लेपिते पदे
देशिकस्तु बलिं दद्याददीयां तु समाहितः १२८
तदन्ते बलिदातारं पूजयेत्तु विशेषतः
वस्त्रहेमाङ्गुलीयाद्यैर्धान्यगोभूमिकाञ्चनैः १२९
उच्चार्य प्रणवत्तादौ मध्यमे तत्स्वनाम च
समुच्चारं नमोन्ते तु दत्वा पुष्पोदकेषु च १३०
तन्मन्त्रेणबलिं दद्यात् दध्याज्यगुलसंयुतम्
ब्रह्मणे ब्रह्मकोष्ठेषु बलिं दत्वा विशेषतः १३१
मरीचिश्च विवस्वांश्च मित्रश्च पृथिवी धरः
अब्जोद्भवश्चतुर्दिन्नु दिन्नु प्रागादि दिक्स्थिताः १३२
षट् षट् पदेषु तासुष्ट्वा पायसं कृसरं तथा
हरिद्रान्नं गुलान्नं च तेभ्यो दद्यात् क्रमेण तु १३३
आपश्चैवापवत्सश्च पत्मजेशानमध्यतः
सविता चैव सावित्रौ ब्रह्माग्निमध्यमे स्थितौ १३४
इन्द्रइन्द्रजयादिश्चैवीरं चनिलमध्यमे
तावद्विद्विपदे यष्ट्वा कर्णमार्गप्रदानुगात् १३५
प्रियङ्गन्नवमुद्गान्नं माषान्नं वैणवान्नकम्
गोधूमान्नं यवान्नं च कुलस्थान्नतृणान्तकम् १३६

अ्रापादिनामथाष्टान्नं बलिं दद्यात् क्रमेण तु
ईशानस्त्वथ पर्जन्यो जयन्तश्च महेन्द्रकः १३७
भास्करस्सत्यकभ्राज अ्रन्तरिक्षं च पूर्वगाः
तान्यष्टगन्धपुष्पाद्यैः स्वस्वमन्त्रैर्यथाकृतम् १३८
पत्मकन्दसमायुक्तं लाजापूपसमायुतम्
क्रमेणैव चरुं दद्यादेकैकस्य पृथक्पृथक् १३९
वह्निपुष्पा च वितथो गृहक्षतयमौ तथा
गन्धर्वो भृङ्गराजश्च मृगौ दक्षिणतस्थिताः १४०
पूजयित्वा तु तान् गन्धपुष्पाभितसमक्रमात्
कदलीफलसंयुक्तसिदसिद्धार्थसंयुतम् १४१
शाल्यान्यं तु यथान्यान्ते ष्वन्तर्दद्यात् बलिं पृथक्
नीलौ दौवारिकं चैव सुग्रीवं दन्तपुष्पकः १४२
पाशभृच्चासुरश्चैव पापयक्ष्मा तथैव च
पश्चिमे संस्थिता देवा ताद्यष्ट्वा विधिपूर्वकम् १४३
सतिलं पृथुकोपेतं पनसस्य फलान्वितम्
शुद्धान्नं च बलिं तेषां क्रमेणैव तु दापयेत् १४४
पावनौ नागमुख्यौश्च भल्लाटेन्दुर्भगस्तथा
अ्रदीतिश्चातिश्चैव सौदिक्सव्यं व्यवस्थिताः १४५
तान्यष्ट्वा गन्धपुष्पद्यैर्नालिकेरफलान्वितम्
तथा चोत्पलकन्दश्च चारुमात्रफलान्वितम् १४६
बलिक्रमेण चरुणा दद्यान्नाम्नामयाबुधः
सर्वेषामथ शुद्धान्नं बलिं वा दापयेत्पृथक् १४७
वास्तुपूजाविहीनं चेत् स्वच्छं ग्रामो विनश्यति
बलिदानं ततः कृत्वा गृहनिर्माणमारभेत् १४८
अ्रथवा गृहनिर्माणं कृत्वा दद्यां बलिं ततः
कृत्वा तु गृहनिर्माणं कृत्वा ग्रामप्रवेशनम् १४९

तदन्ते तु बलिं दद्यादुत्तमो मध्यमोऽधमः
दण्डकं प्रथमं प्रोक्तं द्वितीयं भद्रमुच्यते १५०
श्रीवत्सं तु तृतीयं स्यात् नाभियुक्तं चतुर्थकम्
पञ्चमं पार्श्वयुक्तं तु षष्ठं चैव प्रकीर्णकम् १५१
सप्तमं स्वस्तिकं प्रोक्तमष्टमं पार्श्वसंयुतम्
दण्डकारक्रमेणैव तेषां लक्षणमुच्यते १५२
यथेष्टामतकथ्यैकद्वारद्वयसमन्वितम्
स दण्डकमिति प्रोक्तं गृहारम्भादि नामतः १५३
पूर्वाग्रमुत्तराग्रं च कृत्वा वीथिद्वयं पुनः
शस्तरभ्या तु परितो भद्रमेतत्प्रकीर्तितम् १५४
सर्वेषां परितः कुर्यात् महामङ्गलवीथिका
पञ्चवीथिसमारभ्य नवत्रिंशतिका विधिः १५५
उदङ्मुखास्त्वायुग्माश्च वीथयस्समुदाहृतः
प्राङ्मुखो वीथयस्तिस्रस्त्वविच्छिन्नोस्तथैव च १५६
अष्टादशविधं ह्येवं श्रीवत्समिह भाषितम्
श्रीवत्सं पूर्ववत्कृत्वा देविकांशसमाप्युतम् १५७
नाभिवीथिं नतः कुर्याच्चतुरश्रं समन्ततः
श्रीवत्सं नाभियुक्तं तु द्वितीयं समुदाहृतम् १५८
श्रीवत्सं पार्श्वयुक्तं चेदात्मसौम्ये त्रियांशके
मध्यवीभ्यास्तु पार्श्वाभ्यां वीथिद्वे मध्यवीथिवत् १५९
पूर्वापरे समाख्याते शेषं श्रीवत्स उच्चरेत्
विस्तारस्यां महावीथ्यां सप्तषट्पञ्च दण्डके १६०
क्षुद्रवीथ्यास्तु विस्तारं चतुस्त्रिद्वेकदण्डकैः
षट्वीभ्याश्चैव पूर्वाग्राचोत्तराग्राष्षसेव हि १६१
पञ्चविंशपदाकारपदेष्वन्तः पृथक्पृथक्
प्राङ्मुखोदङ्मुखाक्षुद्रवीथयस्तिस्र एव च १६२

प्राङ्मुखोदङ्मुखास्तस्माद्वीथयस्त्वेकविंशतिः
एवं प्रकीर्णकं प्रोक्तं स्वस्तिकं त्वधुनोच्यते १६३
प्राङ्मुखा वीथयस्तिस्त्रस्तथैवोदङ्मुखास्मृताः
वास्तुमध्ये त्रियंशे तु वीथयः परिकीर्तितः १६४
दक्षिणाभिमुखाश्चैव पूर्ववीथिं तयेत्तदा
पश्चिमाभिमुखाश्चैव याम्यवीथिनयेदथ १६५
आनयेत्पञ्चवीथिं तु उत्तराभिमुखं ततः
तथैवोत्तरवीथिं च प्रागग्रं तु विनिर्णयेत् १६६
चतुष्काणामन्तराले क्षुद्रवीथीचतुष्टयम्
सङ्कल्प्य परितः कुर्यात् महामङ्गलवीथिकाम् १६७
तन्मध्ये कल्पयेत्कर्तुः प्रधानाञ्जनपञ्जरम्
आग्नेयादिषु कोणेषु जनानां निर्गमं कुरु १६८
त्रिदण्डं गृहविस्तारं तद्दैर्घ्यं सप्तदण्डकम्
गृहः कन्यसमुद्दिष्टं विस्तारं पञ्चदण्डकम् १६९
नवदण्डं तथायामं मध्यमं समुदाहृतम्
दैर्घ्यमेकादशो दण्डो विस्तारं सप्तदण्डकम् १७०
गृहं तदुत्तमं विद्यादेविभीष्टं तु कारयेत्
तत्रैव हस्तमानेन गेहः कुर्याद्विशेषतः १७१
दण्डाभावगमे मावा त्रिचतुर्थालयायुतम्
एकद्वित्रिकविन्यासो वास्वगञ्च न दोषभाक् १७२
गृहश्रेणी विनिश्चित्य समं शङ्कुं निदापयेत्
ग्राममध्यस्थ शङ्कुश्च वास्तुसीमाष्टदिक्षु च १७३
शैवान् संस्थापयेच्छक्र नध्यार्धादण्डमानकान्
ब्रह्माङ्गं तु चतुर्भागं कृत्वा वायव्यभागतः १७४
पञ्चमूर्तिक्रमेणैव विष्णुं संस्थाप्य पूजयेत्
हरिदृष्टस्तु सर्वेषां हरपृष्ठश्शुभस्मृतः १७५

शाङ्करे तु सभास्थानं कुर्यात् कूपं जलाशयम्
आग्नेयां चैव गोवासं चतुर्वर्तिसमायुतम् १७६
क्रयविक्रयकर्मार्थं नैर्ऋत्यां वारुणं तथा
देवानामालयं चैव कारादुत्तममागतः १७७
भास्करे तु यमेन्द्रे तु महामोटयास्तु पावके
षरामुखस्यैव याम्ये तु शास्तुनाह्लादिगोचरे १७८
विष्णुस्तु वारुणे भागे दुर्गायां वायुदेशतः
मातृणां तु तथा सौम्ये शाङ्करे शङ्करस्य तु १७९
ऐन्द्रेशानान्तरे मुख्यं सौम्येशानान्तरेथवा
तटाकतीरे ज्येष्ठाया कारयेदालयं तु वा १८०
वास्तूक्तदेवतानां तु बालस्थानपुरस्सरम्
विमानं विधिनादाय स्थापयेद्विधिना ततः १८१
प्रतिष्ठास्तु च या देवा पूर्वमन्त्रव्यवस्थिताः
उक्तदेशन्यदेशे वा नदेवास्त्वङ्गभाजितः १८२
शिवाराधननैऋत्यां भुक्तिमुक्तिप्रदं भवेत्
अन्येषां पूजयेन्नित्यं ग्रामऋद्धिकरं परम् १८३
देवस्थानं विना यत्र एककालं निवासयेत्
नित्यपूजाविहीने तु श्रद्धां कुर्वन्तदुत्थितम् १८४
तस्मात्सर्वप्रयत्नेन नित्यपूजां समाचरेत्
बालालयश्च देवानां कृत्वा संस्थाप्य पूर्ववत् १८५
बालस्थानं विना यत्र मूलस्थानं न कारयेत्
पदे पैशाचिके द्वाथ महापैशाचिकान् बहिः १८६
कारयेत् परिकान् तत्र प्राकारं सुदृढं यथा
चतुर्द्वारसमायुक्त स्वयान्मे जलमार्गयुक् १८७
तटाकान् कल्पयेद्धीमान् चतुर्दिद्दवंष्टदिज्ञु च
भूसुराणां प्रवेशार्थं स्थिरराश्योदये शुभे १८८

जीवशुक्लादये लग्ने शुभदग्रनिरीक्षणे
ततः प्राक् पञ्चसप्ताहे नवाहे चाङ्कुरार्पणम्  १८९
दैविके मानुषां गेय यश द्वादश षोडश
गृहाणि कृत्वा विप्राणां गृहोपकरणानि च   १९०
भूषणाच्छादनादीनि यवत्साङ्गां तथैव च
ग्राममानुष्य पञ्चाशत् षोदशं सप्तमांशकम्  १९१
कृत्वा तेष्वेव मानं वै परितः पैशाचिकस्य वै
पैशाचेन समारोप्य तस्मिन्कर्मोपजीवनाम्  १९२
आवासं च यथास्थानं परितः कल्पयेत्ततः
वाद्यकानां कुलालानां आवासं त्वीशदेशतः  १९३
तद्भवो दक्षिणे भागे स्थपतिर्नाग्रि वासभृत्
वैश्यानान्तु वाया नामा आवासो दक्षिणे तथा  १९४
तैलविक्रयवृत्तानां शूद्राणां वारुणे पुनः
पुष्पोपजीविनाञ्चैव मत्स्यमांसोपजीविनाम्  १९५
सच्छूद्रादन्यशूद्राणां रसमृत्युदिदित्सया
तद्बाह्ये कर्मकाराणां कारूणां मध्यमोत्तरम्  १९६
तद्बाह्ये कर्मकारामावसच्छाद्यदृच्छया
रजकानां तु तद्बाह्ये चण्डालानान्ततो बहिः  १९७
ग्रामस्य चोत्तरे दूरे नद्यास्तीरेऽथवा पुनः
श्मशानं कल्पयेत्तत्र विस्तारायामसंयुतम्  १९८
तद्बाह्ये त्रिंशतिर्दण्डे वसेच्चण्डालकर्मकः  १९९
एवं प्रोक्तं वास्तुविन्यासमार्गं भूमेर्मानं शालयं देवतानाम्
ग्रामादीनाञ्चोक्तजात्यन्तराणां बाह्ये सालं कारणाख्ये च तन्त्रे  २००
इति कारणे प्रतिष्ठातन्त्रे वास्तुविन्यासनामतृतीयपटलः

अथ आद्येष्टकाविधिपटलश्चतुर्थः

अाद्येष्टिकाविधिं वद्त्ये परं कर्षणपूर्वकम्
पुष्यमासादाषाण्मासं प्रशस्तं चोत्तरायणम् १
अाषाढादि च षाण्मासमशस्तं दद्धिणायनम्
देवानां तदहं प्रोक्तं अयनं चोत्तरं त्विह २
रात्रियुक्तं तु देवानां दद्धिणायनमत्र वै
उत्तरायणकाले तु शुक्लपद्मे विशेषतः ३
पौष्णादित्य मखात्वाष्ट्रखातिसावित्रमैत्रकम्
प्रजापत्य शिवो विष्णुस्तिष्याश्च पुष्य उत्तरः ४
षष्ठी च सप्तमी वापि प्रतिपत् पौर्णमास्यपि
द्वितीया पञ्चमी चैव तृतीया च त्रयोदशी ५
सितसौम्यगुरुं चेन्दुं वाराः श्रेष्ठता स्मृतः
होरादर्शनांश्चैव एषां द्रेक्ककरणकश्शुभाः ६
उदयं शस्तमेतेषां तत्र शन्युदयं विना
नद्मत्रं क्रूरकैर्जुष्टं रोगपीडां करोतिभिः ७
मेषं कर्कटकं तौल्यं मकरं चैव वर्जयेत्
अन्याश्च शुभदा प्रोक्तास्तेषु चापं विवर्जयेत् ८
एवं परीद्त्य कर्तव्यं यदिच्छेच्छ्रेयमात्मनः
यद्देशसत्मकर्तव्यं यद्देशं कर्षणं कुरु ९
विप्रद्मत्रियविदशूद्रस्त्वनलोमष्षडैव हि
सत्म निर्वाणकर्तव्यं सर्वप्राणिहिताय वै १०
श्वेता च लोहिता पीता कृष्णा चेतमहीक्रमात्
चतुर्णां भूसुरादीनां सङ्ग्राह्य वसुधा द्विजः ११
द्मेत्रस्थितिवशादुर्वि कथिता त्वनुलोमिनाम्
मधुरा च कषाया च कटुकाम्ला च वर्णिनाम् १२
कृमिजुष्टान्तदोषध्यां वल्मीकाध्यां च वर्जयेत्
हस्तमात्रावटंखात्वा पूरयेत्तन्मृदा पुनः १३

श्रेष्ठा चत्व वटाधिक्या मध्यमा समतामहि
न्यूने तु कन्यसा प्रोक्ता यादृशी तादृशी फला १४
तरुभिर्यज्ञकैः कार्यं फालं युक्तं हलं युगम्
कौपिलौ श्वेतरक्तौ वा नाङ्गहीनौ वृषौ तथा १५
हेमशृङ्गखुरैर्युक्तौ तरुणौ बलसंयुतौ
बद्ध्वा हलं युगेनैव गोचर्म कृतरज्जुना १६
देशिकस्तु शुचिर्भूत्वा सकलीकृतविग्रहः
नवाम्बरधरोष्णीषसितवस्त्रोत्तरीयकः १६
हेमाङ्गुलीययाज्ञाद्यैर्भूषितस्यादिशैवकः
पुण्याहं वाचयित्वा तु कर्षयेच्छिवमन्त्रतः १८
विशेषेण शिवं ध्यात्वा प्रागुदक्प्रणवं महीम्
देशिकं पूजयित्वा तु दद्यात्तु सहलौ वृषौ १९
वापयेन्नेत्रमन्त्रेण तिलसर्षपमुद्गकाम्
त्रिरात्रेऽङ्कुरिते भूमिस्सोत्तमेति प्रशस्यते २०
भूताहोङ्कुरमध्या च सप्ताहेङ्कुरतेऽधमाः
मध्यपत्ते तु सस्यांश्च गोगणानां निवेदयेत् २१
निश्चित्योर्विस्तुहर्म्यार्थं तस्यैन्द्रे चोत्तरेऽथवा
शङ्करे बालहर्म्यं तु कृत्वा वै बाललिङ्गकम् २२
संस्थाप्यमर्चयेत्तत्र पश्चान्मूलं तु कारयेत्
मूलस्थानस्य नैर्ऋत्यां दण्डमात्रेण भूतलम् २३
जलेन समतां नीत्वा कुट्टिमोच्चं गुणाङ्गुलम्
आसनं खादिरं वापि शमी वैकङ्कतं तु वा २४
ब्राह्मणादि क्रमेणैव शक्त्यर्भदारुमाहरेत्
द्वादशाङ्गुलमायामं नाहं विद्यात् षडङ्गुलम् २५
सुसमं ----------------------
----शिकं चैव संपूज्य शिल्पिनं पूजयेत्ततः २६

गोपुरं च विना यत्र स्थापितं मूलमम्बिकम्
तत्केवलमिदं प्रोक्तं तस्य स्थानं विधीयते २७
शैवे च वैष्णवे वापि दौर्गे स्कन्दे च धामनि
मातृणामालये वापि भास्करस्यालयेऽपि वा २८
मधो स्वज्ञालये वापि यमानेश्च यथापि वा
प्रासादे मराटपे चैव प्राकारवृतहर्म्यके २९
वैष्णवे यान्ति शैवं तु स्थापनं यदि संभवे
सकलं निष्कलं वापि तथा सकलनिष्कलम् ३०
स्थापनं शैवतन्त्रेण पूर्वोक्तविधिना ततः
कृत्वा तु विधिवत् सम्यक् नित्यपूजां समाचरेत् ३१
नित्योत्सवं न कुर्वीत कुर्याद्धातुकमर्चयेत्
नैमित्तिकेक् च स्नपनं बुभूषविषशान्ततः ३२
पवित्रारोहणं चैव सर्वकार्याद्विधानता
उत्सवं तु न कुर्वीत संकरात्स्थानसंकरात् ३३
अन्येषभेतवो नेका वद्त्यन्ते तु भविष्यति
शैवं विष्णुप्रतिष्ठायेत् स्थानकं वासनं तु वा ३४
शयनं वाथ संस्थाप्य तैन्त्रशैवविधानतः
पाञ्चरात्रेण विधिनान्येन संस्थाप्य वाजयेत् ३५
नित्यकर्माणि सर्वाणि कुर्यान्नित्योत्सवं विना
बलिदानं न कुर्वीत बलिपीठाद्यसंभवान् ३६
सर्वयानोत्सवं कुर्यात्केवलस्य प्रजापते
यदि मोहेन कृत्वा तु राजा राष्ट्रं विनश्यति ३७
एवं पूर्वोक्तदेवानामालये चान्यधामसु
प्रोक्ता यस्य विमानस्य यद्दे ---- ध्रुवम् ३८
तस्यै वोत्सम उक्तस्तदाश्रितस्य न चोदितः
एवं शैवेपि शंभोत्तु नोत्सवं तु विधीयते ३९

वैष्णवे धाम्निविष्णोस्तु नैवमुत्सवमाचरेत्
अन्यानि नित्यकर्माणि नित्यं कुर्याद्विधामतः ४०
एवमुक्तं यथा युक्तहरकेशवयोस्ततः
केवलस्थापनन्यायां संक्षेपं न तु विस्तरात् ४१
आद्यं वै शङ्कुमानेन द्विगुणेन द्वितीयकम्
त्रिगुणे तु तृतीयं तु वर्तयेन्मण्डलत्रयम् ४२
देशिकस्य नियोगेन शङ्कुसङ्गृह्य तक्षकः
भानुबिम्बोदये तस्य मण्डले सादिसंभवे ४३
मण्डलस्य च मध्ये तु शङ्कुं संस्थाप्य निश्चलम्
पूर्वापराह्णयोश्छायां बिन्दुवृत्तेषु शाङ्कयेत् ४४
शङ्कुं विसृज्य बिन्द्वन्तछायासूत्रत्रयं लिखेत्
अवच्छाया विना मासे प्राचीसूत्रं विनिश्चितम् ४५
अवच्छायान्विते मासे ह्रासाये दधिकार्धकम्
तन्मानं वर्धये न्यूनं शुद्धाप्राचीं तु निर्णयेत् ४६
प्राचीसूत्रप्रमाणेन मत्स्य षट्कं तु कारयेत्
एवं याम्योत्तरं वद्धवा साधयेच्चतुरश्रकम् ४७
कृत्वा दण्डप्रमाणेन तदर्धे दण्डवा पुनः
तदधिष्ठानमानेन प्रासादसमविस्मृतम् ४८
तदग्रे वास्तुदेवांश्च पदस्थान् सम्यगर्चयेत्
एकाशीतिपदं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः ४९
पत्मजं नवकोष्ठस्थं तन्मध्ये संयजेद्बुधः
ब्राह्मणं च चतुर्दिक्षु षट्षट्पदगतस्त्विमे ५०
स्मरीयपूर्वभागे तु विवस्वं दक्षिणे मता
मित्रस्तु पाशहृद्देशे उत्तरे भूद्धरस्तथा ५१
ईशानस्याब्जमध्ये तु आस्यै चैव पदद्वयम्
आपवत्सपदद्वौ तु वह्नेः पत्मजमध्यमे ५२

सवितेन्द्रपदौ द्वौ च सावित्रस्य पदद्वयः
निर्ऋतो ब्रह्मणे मध्ये विरिञ्चानलमध्यमे ५३
रुद्रस्येह पदौ द्वौ तु पदौ रुद्रजयस्य च
यद्वद्वयवस्थिताः पूर्वं तद्वद्वयवस्थिता भवेत् ५४
इन्द्रश्चैव तु पर्जन्यो जयन्द्रश्च महेन्द्रकः
रोगो नागस्तथा मुख्यो भल्लाटस्सोम एव च ५५
जगश्चैवादितिश्चैव दितिश्चैव तु चोत्तरे
एकैकपदभोक्तारो द्वात्रिंशत् बाह्यदेवता ५६
चारकी च विदारी च पूतना पापराक्षसी
ईशानदिक्षु कोणेषु शूलस्था पदवर्जिता ५७
अधोमुखो भुवं प्राप्य शते वास्तुनरस्मृतः
उग्रत्वात् भवकारित्वात् पूजितस्य फलस्पुभिः ५८
शिरोस्यैशानकोष्ठस्था निर्ऋतौ चरणौ स्थितौ
मध्ये ब्रह्मपदे नाभिरङ्गे सर्वपदानुगम् ५९
चतुर्भुजो जटामौलीं कमण्डलृक्षधारकः
वामहस्तं तु जानूर्ध्वे सव्यहस्तजले स्थितम् ६०
हेमाभमब्जजं यष्ट्वा गन्धाद्यैरुपचारकैः
दद्ध्वाज्यगुलसंमिश्रं शुद्धान्नेन बलिं क्षिपेत् ६१
स्मरीय श्वेतवर्णं तु विवस्वानृत्तवर्णकम्
शातकुम्भनिभो मित्रः कृष्णवर्णस्तु भूधरः ६२
श्वेतवर्णं तथापस्तु जपाभस्वापवन् कसः
सविता नीलवर्णस्तु सावित्रे धूम्रवर्णकः ६३
आदित्यो रक्तवर्णस्तु सत्यकश्चित्रवर्णकः
भृशो बन्धुकपुष्पाभ कुन्दाभस्वन्तरिक्षकः ६४
अग्निस्तद्वर्णकः प्रोक्तः पुरुषा रक्ताब्जसन्निभः
वितथश्चेन्द्रजा चाभो विद्युद्वर्णो गृहक्षतः ६५

यमः कृष्णाञ्जनाभस्तु गन्धर्वः पत्मरागवत्
भृङ्गराजस्तु भृङ्गाभा जीमूताभो मृगस्तथा ६६
निर्ऋृतिः पावकाभिश्च द्वौ वारीरप्सितस्तथा
शिखार्णान्तश्च सुग्रीव इहाभः पुष्पदन्तकः ६७
श्वेताभो वरुणश्चैव कृष्णाभो रक्तकस्तथा
उत्पलाभस्तथा शेषः पावयद्दमेन्द्रनीलवत् ६८
अनिलो धूम्रवर्णाभः रोगो हारिद्रसन्निभः
शङ्खवर्णस्तथा नागो मुख्यो मौक्तिकसन्निभः ६९
वेताब्जाभस्तु भल्लाटः कनकाभस्तु सोमकः
अृगो रक्तोत्पलाभश्च मुदाभो दितस्तथा ७०
उदितः कपिलाभश्च चरकीशङ्खसन्निभाः
पावका भावितारस्यात् पूतना हेमसन्निभः ७१
नीलजीमूतसदृशा वर्णा वै पापराक्षसी
मरीच्यादि चतुर्णां तु पायसं बलिरुच्यते ७२
विदिद्दवापादि देवानामष्टानां कृसरं बलिः
ईशानाद्यष्टदेवानामुद्गान्नं बलिरुच्यते ७३
हुताशनादि देवानां गुलान्नं बलिरुच्यते
निर्ऋृत्यादि पश्चिमस्थान घृतान्नं दापयेद्बुधः ७४
अनिलाद्युत्तरस्थानं दध्यान्नं दापयेद्बलिम्
चतुस्त्राणां च रथ्यादि माषान्नं बलिमाचरेत् ७५
पूर्वे वो चोत्तरे वापि वास्तुहोमं तु कारयेत्
सर्वेषां वास्तुदेवानां स्वनामाद्येन होमयेत् ७६
एकैकं पञ्चविंशद्वा सङ्ख्याष्षोडश वादश
तिलतण्डुलसंयुक्तं होमयेद्देशिकोत्तमः ७७
द्रव्यान्ते व्याहृतिं हुत्वा स्विष्ठान्नं हि समाचरेत्
वास्तुहोमं विना यत्र कृतं वास्तु विनश्यति ७८

होमान्ते यजमानेन देशिकग्गलव्यमुद्धरेत्
गुरुं कर्तारमन्वीद्त्य तदेश्छाल्लाश्च तूद्गुणैः ७९
यदङ्गं स्पृश्यते कर्ता वास्तुदेशे तद्दङ्गके
शल्यं विनिर्दिशेत्प्राज्ञश्शिरस्संस्पर्शने यदि ८०
तत्रार्धस्विष्टताले तु हेमशाल्यं विनिश्चितम्
नासिकायास्तु संस्पर्शे चन्दनं सप्ततालके ८१
गुन्मस्पर्शेऽस्थिशल्यं स्यात् स्पर्शतालास्ति तन्विह
उदरस्संस्पर्शने चैव काजतं पञ्चतालतः ८२
नाभिस्पृष्टे चतुस्तालान् कांसशल्यं विनिर्दिशेत्
गुह्यसंस्पर्शने ताम्रं त्रितालायस्थितं विदुः ८३
स्पर्शनं ऊरुजानू च त्वया संहस्तमात्रतः
यदा गुल्फौ च संस्पर्शे तृपुशल्यं विनिर्दिशेत् ८४
विदित्वैवं व्यपोह्याथ प्रोन्नयेत् पञ्चगव्यकैः
सिकतोपरि मृद्भिस्तु समलं सदृढं कुरु ८५
अधोमुसलपादैश्च हस्तिपादप्रपादनैः
मुष्टिमृद्भिश्च पाषाणैश्शर्करैरिह पादकैः ८६
पादयेत्तत्तले हर्म्य सूत्राद्वै भित्तिसूत्रकान्
हर्म्यसूत्रान् बहिःकल्ल्पजन्मसूत्रान्यसेत्क्रमात् ८७
तस्योत्तरे प्रपां कृत्वा नवहस्तप्रमाणतः
वितानोनेनमाच्छाद्य तरङ्गेणावृतं बहिः ८८
दर्भमाला समावृत्य दिग्ध्वजाश्च प्रलम्बयेत्
तन्मध्ये वेदिकां कुर्यात्त्रिहस्तं विस्मृतां शुभाम् ८९
मुष्टिमात्रोन्नतां ऋद्धि निम्नोन्नतविवर्जिताम्
तस्याश्चैष चतुर्दिन्नु कुण्डानि करमात्रतः ९०
चतुरश्रं धनुर्वृत्तमब्जमिन्द्रादितः क्रमात्
लन्नणोत्तानि कुण्डानि कृत्वा गोमयवारिणा ८१

लेपयेत्पञ्चगव्यैश्च प्रोक्षयेद्धृदयेन तु
शिलाभिश्चेष्टकाभिर्वा स्थापयेत्प्रथमेष्टिका ९२
उपलं शैलजे चैव इष्टका मृण्मये तथा
संमिश्रेप्युपलेश्चैव तरुजो पादपं तथा ९३
आद्येष्टका पुंशिलायास्त्रिधाद्वै द्वारबन्धनम्
नपुंसके बले पेतनमूर्धेष्टां क्षिपेत्ततः ९४
विकाराङ्गुलमायामा पत्यङ्गुलसुविस्मृताः
तप्रा युगाङ्गुलप्रोक्तां तलस्यैकस्य कीर्तिताम् ९५
पक्षाङ्गुलवृद्धया तु अष्टत्रिंशाङ्गुलान्तकः
तदर्धविस्तृतं तासां तीव्रं तस्माद्धमुच्यते ९६
तथा वै रविभूमीनां ततः प्रथशिला स्मृताः
त्रयोदशाङ्गुला मायामन्याङ्गुलविति स्मृताः
निवृत्यन्त ---- स्यार्धमपनीयेष्टकां क्रमात् ९७
तालं प्रत्यङ्गुलं वृद्धयं चतुर्विंशत्यर्धकं क्रमात्
ऋजुरेवापुमां चैव श्रोतारेखानपुंसकाः ९८
जाया चतुर्यश्रेखा च ज्ञानकर्म समारभेत्
बिन्दुरूपायुतां कृष्णां कुञ्जराक्षयुतामपि ९९
धूतयातसमायुक्तं वर्जयेदिष्टकां बुधः
किञ्चिन्मूलं भवेदग्रं तन्मूलं किञ्चिदुन्नतम् १००
वदनं ह्यूर्ध्वभागं स्यात् --- शन्तु पृष्ठकम्
कन्यासाश्च चतुस्रस्तु अलंकृत्य शिलास्ततः १०१
ताभिश्च स्वशिताश्चाग्रास्त्वन्मूलस्त्वितरा स्मृताः
आद्येष्टका दिनात्पूर्वे रात्रौ चैवाधिवासयेत् १०२
आचार्यश्शिवशास्त्रज्ञश्शिवदीक्षाभियुक्तकः
सर्वलक्षणसंपन्नस्त्वादिशैवदृढव्रतः १०३
सुस्नातस्तु शुचिर्भूत्वा सकलीकरणान्वितः

नवाम्बरधरोष्णीषस्सोत्तरीयस्सुमालकः १०४
पञ्चाङ्गभूषणैर्युक्तस्सशिष्यपरिचारकः
इष्टकाः पञ्चगव्यैश्च क्षालयेच्चर्मणागुरुः १०५
हेमकौतुकसूत्रेण कार्पासैर्वा स बन्धयेत्
वैदिकोपरि कर्तव्यमष्टद्रोणैश्च शालिभिः १०६
तदर्धं तण्डुलोपेतां तण्डुलार्धतिलन्वितम्
लिखित्वाष्टदलोपेतं कर्णिकाकेसरान्वितम् १०७
स्थण्डिलं पञ्चगव्येन संप्रोक्ष्य हृदयेन तु
स्वस्वदिक्ज्ञापनार्थं तु लेखयेदिष्टकान्तरे १०८
पूर्वभागे त्वकारं तु यमे त्वाकारमेव तु
उकारं पश्चिमे देशे ईकारे सुम्यके तथा १०९
प्रत्येकं वस्त्रयामेन हृदा वेद्यष्टपुष्पयुक्
स्थण्डिले मध्यमस्थाप्य यथा पूर्वोत्तराग्रकाः ११०
ऋग्यजुस्सामथर्वाणमधिदेवाहपूजयेत्
तन्तुना चित्रकान्कुम्भान् गन्धाम्बुपरिपूजितान् १११
वितानाद्धतवस्त्रस्यात् हेमयुक्तान्सकूर्चकान्
पुष्पाम्रपल्लवोपेतान् इन्द्राद्यष्टदिशासु वै ११२
लोकपालाधपानष्टसंस्थाप्यर्चयेत्सुधीः
ततो होमं प्रकुर्वीत अग्निकार्योक्तमार्गतः ११३
पालाशोदुम्बराश्वत्थ न्यग्रोधस्समिधाः क्रमात्
सद्येन तु समुद्धृत्वा मूलेनाज्यं हुनेत्ततः ११४
अघोरेण चरुं हुत्वा तिलसंमिश्रितं हुतम्
नेत्रेण होमयेद्धीमान्प्रत्येकं शतसंख्यका ११५
प्रभाते विधिना स्नात्वा देशिको मूर्तिपैस्सह
जयादिरभ्याधानां च जुहुयात्तु विशेषतः ११६
ततः पूर्णाहुतिं दत्वा स्विष्टमग्नेतिमन्त्रतः

स्थापकं स्थापितिश्चैव संप्राप्ते तु शुभोदये ११७
वस्त्रहेमाङ्गुलीयैश्च पूजयेत्तौ विशेषतः
मन्दिरे मराटपे चैव प्राकारे गोपुरे तथा ११८
परिवारालये चैव विधिनैतेन विन्यसेत्
मुहूर्ते समनुप्राप्ते द्वारं निश्चित्य बुद्धिमान् ११९
द्वारस्यदक्षिणे चांघ्रिमूले भित्त्यन्तराळके
शिलाश्चैवेष्टका वापि स्थापयेत्स्थापकोत्तमः १२०
ईशानकादिमन्त्रैश्च प्रक्षिप्येंद्रादितः क्रमात्
अग्रमग्रन्तु चैशान्नये पृष्ठपृष्ठञ्च नैर्-ऋते १२१
पृष्ठाग्रे त्वनलौ वायौ ज्ञात्वा कर्मसमारभेत्
तन्मद्ध्ये विन्यसेन्नृत्तं पञ्चमृद्भिस्तु लेपयेत् १२२
श्वभ्रमद्ध्ये हृदा कुंभतोयैश्चैव प्रपूरयेत्
शुभन्तु दक्षिणावर्तं वामावर्तमशोभनम् १२३
वामावर्ते सतिप्राज्ञश्शान्तिसोमं समाचरेत् १२४
इति कारणे प्रतिष्ठातन्त्रे आद्येष्टकाविधिपटलश्चतुर्थः

## अधिष्ठानविधिपटलप्रारंभः

अधिष्ठानविधिं वक्ष्ये उपपीठकपूर्वकम्
आदौ चैव प्रकृत्यूर्ध्वे प्रथमं फलकां कुरु १
पादान्तरं तदुत्सेधं तदूर्ध्वमुपपीठकम्
तन्मद्ध्ये तस्यबाह्ये तु तस्योच्चार्थन्तु नीव्रकम् २
वस्त्वाधारसमायामं समं वा पादहीनकम्
अर्द्धं वोच्चकमेवन्तु उपपीठस्य कीर्तितम् ३
अंघ्रिका द्विगुणं वापि पादोनद्विगुणन्तु वा
द्विगुणार्द्धन्तु वा बाह्ये उपपीठस्य विस्तरम् ४
उपपीठस्य चोत्सेधं भवेद्विंशति भागतः

उपानात् पञ्चभागान्तमर्द्धेनार्द्धेन वर्द्धयेत् ५
तस्योर्ध्वे चोपपीठन्तु कारयेल्लक्षणान्वितम्
श्रीकरं लळितं भद्रमुपपीठं त्रिधामतम् ६
कलांशं विभुजेदायः पक्षांशं जन्म उच्यते
द्विभागे पञ्चकञ्चैव पट्टिकांशेन कीर्तितम् ७
कौशीकांशेन कर्णन्तु व्योमांशेनोर्ध्वपट्टिका
पक्षांशेनोर्ध्वपद्मं स्यान्महापट्टी तथैव च ८
तत्कर्णस्यैव वा बाह्ये मसूरं जगती समम्
पादताराष्टभागैकहीनं कर्णप्रतारकम् ९
एवं श्रीकरमाख्यातं आयामं पूर्ववत् भजेत्
अश्विन्यंशेन जन्मन्तु कंपमेकेन कारयेत् १०
अधः पद्मं द्विभागेन कंपमेकेन कारयेत्
भूतांशं कन्धरं प्रोक्तमेकांशं वेत्रमुच्यते ११
ऊर्ध्वपद्मद्विभागेन महापट्टी तथैव च
लळितं ख्यातमेवन्तु आयामं त्वष्टधा भवेत् १२
अंशेन पादुकां कुर्यादर्द्धांशं कंपमुच्यते
युगांशं गळमित्युक्तमर्द्धांशं वेत्रमुच्यते १३
महापट्टिद्विभागेन भद्रमेवं प्रकीर्तितम्
सिंहव्याळगजैर्वापि भूतकैस्संयुतानि वै १४
उपपीठं समाख्यातमधिष्ठानमथोच्यते
प्रथमं फलकोर्ध्वे वा उपपीठे ध्वजेऽपिवा १५
उपानोर्ध्वे त्वधिष्ठानं कल्पयेदुभयेऽपिवा
प्राक् बाह्ये जन्मनिर्यूहं मूले पादद्वयं भवेत् १६
निर्यूहं त्रिविधं कृत्वा बाह्ये कांशं व्यपोह्य च
पक्षांशेन समायुक्तं कारयेज्जगतीं पुनः १७
मसूरकमधिष्ठानं वस्वाधारं धृतालकम्

चत्वार्यै तानि नामानि पर्याय वचनानि च १८
प्रथमं पादबन्धञ्च द्वितीयं प्रतिबन्धकम्
एकैकन्तु चतुर्भेदं पद्मकं पद्मपूष्कलम् १९
पद्मासनन्तु भेदानि पादबन्धस्य सुव्रत
प्रतिक्रमं प्रकीर्णञ्च प्रतिसुन्दरमेव च २०
प्रतिबन्धस्य भेदानि कारयेल्लक्षणान्वितम्
एकोनसंकरं कुर्यादेकेनैकत्र वा पुनः २१
यदधिष्ठानमानन्तु त्रयोविंशति भागभाक्
पर्वतांशं जगत्युच्चमब्ध्यंशं कुमुदोन्नतम् २२
वस्वंशं कुमुदं ज्ञेयमेकांशेनोर्ध्वपट्टिका
कन्धरन्तु गुणांशेन व्योमांशेनोर्ध्वपट्टिका २३
महापट्टिगुणांशेन एकं स्यात्पादबंधनम्
धराधरोच्चं विभजेदेकविंशति भागतः २४
अधः पद्मं द्विभागेन कंपमेकेन कारयेत्
जगत्युच्चं शरांशेन युगांशं कुमुदं भवेत् २५
अष्टांशं कुमुदं प्रोक्तं कंपमेकं न कारयेत्
गुणांशं कन्धरं प्रोक्तं व्योमांशं वेत्रमुच्यते २६
कंपमेकेन कर्तव्यं महापट्टीगुणांशकम्
पद्मकञ्चैवमाख्यातमायामं पूर्ववत् भजेत् २७
कंपमेकेन कर्तव्यं रसांशं पद्मतुण्डकम्
अंशेन कंपमित्युक्तमंशेनोर्ध्वं सरोरुहम् २८
वेदांशं कुमुदं प्रोक्तं अंशेनाथ सरोरुहम्
अंशेन कंपमित्युक्तं पक्षांशं खण्डमुच्यते २९
वेत्रमंशेन कर्तव्यमंशेनोर्ध्वसरोरुहम्
महापट्टिं द्विभागेन कारयेत्तु विचक्षणः ३०
पद्मपुष्कलमेवं स्यादायामं पूर्ववत् भजेत्

पद्मभागमथोब्जन्तु व्योमांशं वेत्रमुच्यते ३१
भूतांशं जगतीप्रोक्तं अंशेनाथ सरोरुहम्
अर्द्धांशं कंपमित्युक्तमूर्ध्वपद्मं तथैव च ३२
कुमुदोच्चं चतुर्भागमर्द्धेनाथ सरोरुहम्
अर्द्धांशेनैव कंपन्तु सार्द्धपद्मांशकं गळम् ३३
अर्द्धांशेनैव पद्मन्तु ऊर्ध्वपद्मं तथांशकम्
महापट्टी द्विभागेन एतत्पद्मासनं स्मृतम् ३४
पादबंधकमप्येवं प्रतिबंधमथ श्रुणु
तीर्थांशं विभजेदायं भूतांशं जगती भवेत् ३५
तथा वै कुमुदोत्सेधं कंपमेकेन कारयेत्
एकेनान्तरितं प्रोक्तं प्रतिमुख्यन्तु द्व्यंशकम् ३६
प्रतिमुखं कर्करी भूतं नागवक्त्रमथापि वा
प्रतिवाजनमंशेन एतत्स्यात्प्रतिबंधनम् ३७
मसूरकोच्चं विभजेत् षड्विंशत् भागतस्ततः
जगत्युच्चं रसांशं स्यात् सारांशं वप्रमुच्यते ३८
व्योमांशं कंपमित्युक्तं गुणांशेन गळं भवेत्
कंपमेकेन कर्तव्यमेकेनोर्ध्वसरोरुहम् ३९
कपोतन्तु युगांशेन अंशेनालिंगमुच्यते
एकेनान्तरितं प्रोक्तं प्रतिमुख्यं द्वितीयकम् ४०
प्रतिवाजनमेकेन कल्पयेत् कल्पवित्तमः
एतत्प्रतिक्रमं प्रोक्तमायामं पूर्ववत् भवेत् ४१
पद्मतुंडं रसांशेन भूतांशं कुमुदो भवेत्
कंपमेकेन कर्तव्यमेकैकोर्ध्वसरोरुहम् ४२
कपोतन्तु युगांशेन कंपमेकेन कारयेत्
एकेनान्तरितं प्रोक्तं प्रतिमुख्यन्तु द्व्यंशकम् ४३
प्रतिवाजनमेकन्तु एतत्प्रकीर्णकं स्मृतम्

त्रिंशदेकोनभागेन आयामं विभजेत्ततः ४४
अधः पद्मद्विभागेन एकांशेनैव कंपकम्
जगती भूतभागन्तु अद्धयर्द्धेनोर्ध्वकंपकम् ४५
अर्द्धांशं कंपमित्युक्तं अंशेनोर्ध्वसरोरुहम्
कुमुदोच्चं गुणांशेन पुंसेनार्द्धसरोरुहम् ४६
अंशेन कंपमित्युक्तं गुणांशं गळमुच्यते
अंशेनैकोर्ध्वकंपन्तु एकांशेनोर्ध्वपद्मकम् ४७
कपोतोच्चं गुणांशेन अंशेनालिंगमुच्यते
अन्तरीतं तथांशेन प्रतिमुख्यन्तु द्व्यंशकम् ४८
एकेन वाजनं प्रोक्तं मकरव्याळसिंहकैः
गजैश्च वल्लिपत्रैश्च नानालीलासमन्वितम् ४९
मकरास्येवनिक्रान्ता व्याळविद्याधरान्वितम्
एवमन्तरिते कुर्यात् कपोते नासिकायुतम् ५०
प्रतिसुन्दरमेतत् स्यात् वेशनिर्गमनं श्रुणु
वेत्राणाञ्चैव सर्वेषां वेदभागैकनिर्गमम् ५१
यावज्जगति निर्यूहं तावद्वप्रस्य निर्गमम्
पद्मानाञ्चैव सर्वेषां नीव्रन्तं सममुच्यते ५२
एषां पादं बहिर्नीव्रं तावत्प्रोक्तन्तु वेशनम्
अधस्तात्तु महापट्टया नाळी निर्गमनं कुरु ५३
हस्तं वाथ त्रिपादं वा वितस्तिर्वा विशेषतः
व्रजेत् बाह्ये विनिक्रान्ता नाळींशैवमयीन्तथा ५४
गजोष्ठसदृशाकारा सकृत्रिममुखोत्तरा
भूतसिह्मोपगूढावा साधारा वाथकारयेत् ५५
द्विदण्डं वा त्रिदण्डं वा गर्भगेहे तु वेशनम्
लिङ्गतारत्रिपादं वा द्विगुणं वार्द्धमेव वा ५६
प्रणाळमूलविस्तारं त्रिभागैकाग्रविस्तरम्

व्यासत्रिभागभागोनं बहुलं तत्त्रिभागभाक् ५७
वारिसंञ्चारगंभीरं तारंश्लक्ष्णञ्च झर्झरम्
अनिम्नोन्नतमाभित्तेस्तदत्यग्रात् क्रमोन्नतम् ५८
सर्वातोद्य समायुक्तं ततो मंगळवाचकैः
शान्तिहोमं ततः कृत्वा आचार्यं पूजयेत्ततः ५९
शिल्पिनं पूजयेत्पश्चात् सुमुहूर्ते सुलग्नके
आचार्यस्सुप्रसन्नात्मा वारुणं सूक्तमुच्चरेत् ६०
तक्षकः स्थापयेन्नाळीं सुस्निग्धांसुदृढां क्रमात्
लिङ्गप्रासादगर्भस्य यावन्नालस्य चावधि ६१
धारान्तु केवलं कुर्यात् भित्तेस्तालस्य सीमनि
श्रेष्ठमद्ध्यमकानिष्ठं लिंगस्य स्थापनं त्रिधा ६२
धरातलसमाप्ते तु स्थापनं चोत्तमं भवेत्
द्वारबंधस्य पूर्वे तु स्थापनं मद्ध्यमं भवेत् ६३
मूर्द्ध्नोपलस्य पूर्वे तु स्थापनं कन्यसं भवेत्
यः करोत्यन्यधा चैव आभिचाराय चैव हि ६४

इति कारणागमे प्रतिष्ठातन्त्रे
अधिष्ठानविधिपटलः पञ्चमः

गर्भन्यासविधिपटलप्रारंभः

गर्भन्यासविधिं वक्ष्ये ग्रामादीनाञ्च सद्मनः
सगर्भं वर्द्धमानन्तु अगर्भं नाशनं ध्रुवम् १
तस्मात्सर्वप्रयत्नेन गर्भं संस्थापयेत्सुधीः
देवतास्थापनात्पूर्वं स्थापनञ्चोत्तमं भवेत् २
देवतास्थापनस्यान्ते स्थापनं मद्ध्यमं भवेत्
ग्रामविन्न्यासमारभ्य एकाब्दादूर्ध्वकालके ३
स्थापनं कन्नयसं प्रोक्तग्रामादीनामिति स्मृतम्

उत्तरायणकाले तु माघमासविवर्जिते ४
सुवारेषु तिथौ चैव शुक्लपक्षे शुभे दिने
स्थिरांशे स्थिरनक्षत्रे होराकरणयोस्तथा ५
स्थिरद्रेक्काणके चैव स्थिरवारे स्थिरे ग्रहे
अखंडर्क्षे स्थिरे लग्ने सुमुहूर्ते विशेषतः ६
ग्रामादीनाञ्च तद्रात्रौ दिवाकाले तु सद्मनः
हैमराजतकांस्यं वा ताम्रेण फेळकां कुरु ७
कौशिकांभोधिरंध्रार्कगायत्र्यंगुलकैस्तु वा
फेळायाञ्चैव विस्तार उत्सेधं तत्समं भवेत् ८
ग्रहीतोच्चं गुणांशे तु पक्षांशं भाजनोन्नतम्
एकांशं तत्पिधानोच्चं कोष्ठभित्युच्छ्रयं तथा ९
यवत्रयघना वापि द्वियवेन घनान्विता
फेळायास्तु घनार्द्धन्तु कोष्ठभित्तेर्घनं भवेत् १०
त्र्यंशैकेनोर्ध्वभित्तेस्तु घनार्द्धं ह्रासयेद्बहिः
पिधानाभ्यन्तरे तद्वत्संयोगार्द्धन्तु कारयेत् ११
वृत्तं वा चतुरश्रं वा गर्भफेळा कृति स्मृता
पञ्चविंशतिकोष्ठानि फेळामद्ध्ये प्रकल्पयेत् १२
स्पृष्ट्वा बहिर्मलं शोद्ध्य प्रक्षाळ्याम्लेन वारिणा
मंगळांकुरकार्यन्तु विधिना कारयेत् बुधः १३
ब्रह्मस्थाने ग्रहे वापि ग्रामगर्भाधिवासनम्
विमानस्योत्तरे चैंद्रे सद्मगर्भाधिवासनम् १४
दशरंध्राब्धिहस्तेन विस्तृतं मंटपं कुरु
तन्मद्ध्ये वेदिकां कुर्यात् तत्त्रिभागैकभागतः १५
तालमात्रसमुत्सेधा तस्य दिक्षु चतुर्ष्वपि
चतुरश्रानि कुंडानि प्रत्येकं हस्तमात्रतः १६
तयोरष्टानि कुंडानि गोमयेनोपलेपयेत्

वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्  १७
पुष्पमालासमायुक्तं द्वारतोरणसंयुतम्
मंगळांकुरसंयुक्तं तरंगेणैव वेष्टितम्  १८
मण्टपं भूषयित्वा तु पुण्याहं वाचयेत्ततः
भूसुरान् भोजयेत्तत्र तद्दिनात्प्राक् दिनद्वये  १९
वेद्यांशालि दशद्रोणैः स्थण्डिलं तिलतंडुलैः
कृत्वालिख्याष्टदिक्पद्मं कर्णिकाकेसरैर्युतम्  २०
दर्भैश्चैव परिस्तीर्य स्थंडिलन्तु यजेत्ततः
रंभाम्रनाळिकेराणि नारंगानि फलानि च  २१
लैकुचानि फलान्यत्र मातुळंगफलानि च
प्रदक्षिणक्रमेणैव स्थंडिलोपरिविन्यसेत्  २२
वेद्याः पश्चिमभागे तु गोमयालेपिते शुभे
विचित्रे शालिपिष्टे च चतुरश्रे समे ततः  २३
सप्तद्वीपसमायुक्तं सप्तांभोधिसमाकृतिम्
भूधराद्दिग्गजांश्चैव भूम्यधस्तात्तु पन्नगम्  २४
आलिख्यसितचूर्णैश्च भुवनाध्वक्रमान्वितः
फेळांप्रक्षाळ्य गव्यैश्च स्थाप्यचित्रे तु मंडले  २५
देशिकस्समलंकृत्य वस्त्रैः पञ्चांगभूषणैः
सकळी कृतदेहस्तु गन्धपुष्पैर्विभूषितैः  २६
प्राङ्मुखः प्रस्थितो भूत्वा विन्यसेदक्षराणि तु
मद्ध्यकोष्ठे न्यसेत्कूटं बिन्दुनादसमन्वितम्  २७
तत्पूर्वाद्यष्टकोष्ठेषु यादिहान्तानि विन्यसेत्
अकारादिविकाराणि प्राक्कोष्ठादिषु विन्यसेत्  २८
माणिक्कं विन्यसेत्कूटे न्यसेद्वज्रं यकारके
वैडूर्यं तु रकारे तु नीलञ्चैव लकारके  २९
मौक्तिकन्तु वकारे तु शकारे पुष्यरागकम्

षकारे वै मरतकं गोमेधन्तु सकारके  ३०
हकारेस्फटिकन्नयस्य मूलमन्त्रमनुस्मरन्
गजं कृत्वा सुवर्णेन अकारे विन्यसेत्ततः  ३१
राजतेन कपालन्तु कृत्वा कारे तु विन्यसेत्
कूर्मं ताम्रेण कृत्वा तु इकारे चैव विन्यसेत्  ३२
खट्वांगमारकूटेन कृत्वीकारे तु विन्यसेत्
भ्रामकेन पिनाकन्तु उकारे विन्यसेत्ततः  ३३
त्रिशूलं रजतेनैव औकारे विन्यसेद्बुधः
कांस्येन हरिणञ्चैव ऋकारेण तु विन्यसेत्  ३४
परशुं ताम्रकेणैव ॠकारे विन्यसेत्ततः
धीपाधारन्तु ताम्रेण लृकारे चैव विन्यसेत्  ३५
कयसागौळिकं कृत्वा लॄकारे चैव विन्यसेत्
कर्कटकन्तु ताम्रेण कृत्वैकारे तु विन्यसेत्  ३६
ऐकारे तु न्यसेल्लक्ष्मीं कृत्वा सौवर्णकेन तु
ओकारे तु न्यसेत्पूर्णकुंभं ताम्रमयेन तु  ३७
औकारे स्वस्तिकं कृत्वा राजतेन तु विन्यसेत्
अंकारे तु न्यसेच्छंखं कृत्वा सौवर्णकेन तु  ३८
अःकारे तु न्यसेत्खट्वां कृत्वा वै राजतेन तु
यकारे गैरिकन्नयस्य रकारे श्यामकन्नयसेत्  ३९
मनश्शिलां लकारे तु वकारे गंधकन्नयसेत्
शकारे त्वञ्जनं न्यस्य सौराष्ट्रन्तु षकारके  ४०
सकारे हरितालन्तु गोरोचनां हकारके
हृदयं मन्त्रमुच्चार्या विन्यसेद्देशिकोत्तमः  ४१
यकारे विन्यसेच्छालीं रकारे तु यवान्नयसेत्
कोद्रवन्तु लकारे तु वकारे माषकन्नयसेत्  ४२
मुद्गञ्चैव शकारे तु कंबूबीजं षकारके

सकारे प्रियंगुर्विन्नचस्य हकारे तु कुळुत्थकम् ४३
ईशानेन तु मन्त्रेण विन्यसेत्तु क्रमेण तु
सर्वकोष्ठानि संपूर्य हैमेन शालिभिस्तु वा ४४
ग्रामादीनां विमानस्य एतत् सामान्यमुच्यते
किञ्चिदस्तिविशेषोत्र ग्रामादीनाञ्च तं श्रुणु ४५
विप्राणाञ्च हितार्त्थन्तु यज्ञसूत्रं कमंडलुम्
स्त्रुवञ्च प्रणवाकारं सौवर्णं मद्ध्यमे न्यसेत् ४६
रथं हयं गजञ्चैव शार्दूलञ्चापमेव च
च्चुरिकां हेमरूपाञ्च पत्तने राजधानिके ४७
तुलाञ्च मानसात्रञ्च महिषं गोघृतन्तथा
सौवर्णान् मध्यकोष्ठेषु विन्यसेन्नगरेऽपि च ४८
हलं फालं युगञ्चैव युग्ममत्स्यन्तु शालिकम्
सौवर्णं मद्ध्यकोष्ठेषु विन्यसेत्कटकादिषु ४९
ईशानेन तु मन्त्रेण विधानेन विधाय च
वस्त्रेणैव कुशैश्चैव वेष्टचगंधादिभिर्यजेत् ५०
फेळामुद्धृत्य हस्ताभ्यां विन्नचसेत्स्थण्डिलोपरि
आचार्यो मूर्तिपैस्सार्द्धं होमकर्मसमारभेत् ५१
देशिको मूर्तिपाश्चैव होमं कृत्वा विचक्षणः
विधिनाग्निमुखं कृत्वा मूलेन समिधो हुनेत् ५२
पलाशो दुंबराश्वत्थ न्यग्रोधसमिधः क्रमात्
सर्पिषं हृदयेनैव शिखया तु चरुं हुनेत् ५३
लाजंकवचमन्त्रेण सिद्धार्त्थं नेत्रमन्त्रतः
यवञ्चास्त्रेण हुत्वा तु प्रत्येकं शतसंख्यया ५४
मूलब्रह्मषडंगैश्च च्चुरिकाबीजमुख्यकैः
सर्विषाहोमयेद्धीमान् प्रत्येकं पञ्चविंशतिः ५५
वास्तुदेवं स्वबीजैश्च प्रत्येकं वसुसंख्यया

आज्येन जुहुयाद्धीमान् कुण्डं प्रत्येकमाचरेत्  ५६
आत्मेंद्वर्कवियद्वायुतेजो पञ्चस्वबीजकैः
पृथगष्टाहुतिं हुत्वा व्याहृतिं जुहुयात्ततः  ५७
स्रुवापूर्णाहुतिं कुर्याच्छिरोमन्त्रेण देशिकः
घृताहुत्यास्तु मंत्रान्ते संपाताहुतिमार्गतः  ५८
हुत्वाज्यन्तु समानीय फेळायां चोपरिस्रवेत्
--व्यन्न्यासमथारभ्य गर्भसंस्थापनान्तकम्  ५९
ऋगादध्ययनं कुर्यात् क्रमेणैव दशासु च
यावन्मुहूर्तं संप्राप्य तावन्मन्त्रजपं कुरु  ६०
ग्रामादीनामजस्थाने यमेवा वारुणेऽपि वा
द्विहस्तं चैकहस्तं वा तत्रावटन्तु खातयेत्  ६१
ग्रामादीनां क्रमात् गर्भं स्थापयेदप्रकाशतः
गर्भस्थानस्य याम्यायां फेळांदर्भोपरिन्यसेत्  ६२
पञ्चगव्येन संप्रोक्ष्य कवटस्य तु मध्यमे
आलेपयेत्तु तन्मध्ये सामुद्रकमृदा पुनः  ६३
शेषाभागोर्ध्वभूमीस्था सप्तद्वीपोर्णवा स्मृताः
दिग्गजान् भूसुरांश्चैव संकल्प्य क्रमशस्तथा  ६४
कद्रौ क्षेत्रे ह्रदेनद्यां कुळीरावासके हले
वृषभस्य तु शृंगे तु गजदन्तेषु मृत्स्मृता  ६५
इंद्रादीशानपर्यन्तमष्टदिक्षु क्रमान्न्यसेत्
नागं कूर्मं धरान्देवीं सौवर्णेनैव निक्षिपेत्  ६६
उत्पलस्य तु कन्दञ्च कन्दन्नीलोत्पलस्य तु
कुमुदस्य तु कन्दन्तु रक्तपद्मस्य कन्दकम्  ६७
पूर्वादिक्रमयोगेन मृदाचैव तु विन्यसेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः  ६८
कन्यसं दशनिष्कन्तु द्विगुणं मध्यमं भवेत्

त्रिगुणं चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा ६९
गोभूमिदासधान्यानि गृहोपकरणानि च
दापयित्वा विशेषेण देशिकन्तोषयेत्ततः ७०
अर्च्चयेतृमूर्तिधारांश्च दैवज्ञंपूजयेत्ततः
संपूज्यस्थपतिं तत्र वस्त्राभरणकैरपि ७१
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
ध्यात्वा सदाशिवं देवं मूलमंत्रं समुच्चरेत् ७२
फेळान्तु प्राङ्मुखो भूत्वा स्थापयेदादिशैवकः
पांसुना पूरयेत् गर्तं सुस्निग्धं सुदृढं कुरु ७३
तस्योर्ध्वे कल्पयेद्धीमान् सभां वै देवमन्दिरम्
प्रभाते तु विमानस्य गर्भस्थापनमारभेत् ७४
आचार्योमूर्तिपैस्सार्द्धं स्नानं कृत्वा यथाविधि
सकळीकरणं कृत्वा फेळां गंधादिभिर्यजेत् ७५
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टामग्नेति होमयेत् ७६
शंखकाहळभेर्याद्यैर्गीतवेदरवैस्तथा
स्तोत्रैश्च विविधैश्छत्रस्तुत्यैः पिंछैस्समाकुलम् ७७
जले संप्राप्य पुरतः स्वस्तिसूक्तसमन्वितम्
सुगंधपुष्पधूपैश्च दीपैरर्घ्यैस्समन्वितम् ७८
फेळामुद्धृत्य तद्धामप्रादक्षिण्य क्रमेण तु
प्रविश्यालयमार्गस्य दक्षिणे प्राङ्मुखो गुरुः ७९
गर्भप्रक्षेपणं कुर्याद्धामद्वारस्य दक्षिणे
उपानेशूद्रजातीनां जगत्युपरिमद्ध्यमे ८०
कुमुदोर्ध्वे नृपाणान्तु भित्यूर्ध्वे चाग्रजन्मनाम्
सर्वेषां भूगतं शस्तं गर्भन्यासन्तु सर्वधा ८१
अष्टधा विभजेत् भित्तिं वेदांशं बाह्यतस्त्यजेत्

त्रीणि चाभ्यन्तरे कृत्वा मद्ध्ये कांशे तु निक्षिपेत् ८२
आचार्यं मूर्तिपैश्चैव पूर्ववत्संप्रपूजयेत्
आचार्यस्सुप्रसन्नात्मा पूर्ववत्स्थापयेत्क्रमात् ८३
एवं यः कुरुते भक्त्या सपुण्यां गतिमाप्नुयात्
इति कारणागमे प्रतिष्ठातन्त्रे गर्भन्यासविधिपटलः षष्ठः

## प्रासादलक्षणविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि प्रासादानान्तु लक्षणम्
प्रासादं भवनं सद्मगृहं धामनिकेतनम् १
विमानं सदनं हर्म्यं वासो मन्दिरमालयम्
निलयस्त्विति विख्यातास्तस्याः पर्यायवाचकाः २
अंगुलं त्रिविधं प्रोक्तं पूर्वमानांगुलं भवेत्
मात्रांगुलं द्वितीयन्तु देहलब्धं तृतीयकम् ३
जालान्तरगतं रश्मेर्दृश्यादृश्यं तु यद्रजः
परमाणुस्तदाख्यातं रेणुरोमकलीक्षुका ४
यूकं यवं क्रमेणैव वृद्धिरष्टांगुलैस्तथा
यवोदराष्टविस्तारमंगुलञ्चेति कीर्तितम् ५
अंगुलं द्वादशन्तालं किष्कुहस्तञ्च तत्द्वयम्
प्राजापत्यकरं प्रोक्तं पञ्चभिर्विंशदंगुलम् ६
षड्विंशति धनुर्मुष्टिस्सप्तविंशद्धनुग्रहम्
शयनञ्चासनञ्चैव किष्कुमानवशात् कुरु ७
प्रासादादीन् सभां शालां मौळिकां मण्टपं गृहम्
प्राजापत्य करेणैव कारयेत्तु विचक्षणः ८
राजधान्यादिकं राजभवनञ्च तटाहकम्
दुर्गाञ्चैव प्रकर्तव्यं धनुर्मुष्टिकरेण तु ९
कुर्याद्धनुग्रहेणैव नद्याध्वानं विशेषतः

मानांगुलेन हस्ताभ्यां लक्षणं परिकीर्तितम् १०
मध्यमस्य करे दक्षे मध्यांगुल्यास्तु मध्यमम्
पर्वदीर्घन्तु यत्तुल्यं मात्रांगुलमिति स्मृतम् ११
यागोपकरणं सर्वं कुर्यान्मात्रांगुलेन तु
गृहीतप्रतिमायामा तत्तालांगुलिसंख्यया १२
भजेत्तेष्वेकभागन्तु देहलब्धांगुलं स्मृतम्
कन्यसं मद्धमं श्रेष्ठं त्रिविधं भवनं स्मृतम् १३
त्रिहस्तन्तु समारभ्य षट् तालान्तं क्रमेण तु
एकत्रिंशतिहस्ताच्च द्विद्विहस्तविवर्द्धनात् १४
सप्तभूमिं समारभ्य क्रमादर्कतलान्तकम्
उत्तमं त्विति विख्यातं कारयेल्लक्षणान्वितम् १५
विस्तारद्विगुणोत्सेधं कन्नयसस्य प्रकीर्तितम्
विस्तारं सप्तधा कृत्वा रव्यंशं मध्यमोच्छ्रयम् १६
विस्तारं पूर्ववत्कृत्वा रुद्रांशं उत्तमोच्छ्रयम्
प्रासादस्य तु विस्तारं त्रिभिरंशैर्विभाजयेत् १७
एकांशं गर्भगेहन्तु शेषं भित्तिरिति स्मृतम्
विस्तारं पञ्चधा कृत्वा गुणांशं वाथ गर्भितम् १८
विस्तारं सप्तधा कृत्वा गर्भं वेदांशकेन वा
विस्तारं दशधा कृत्वा गर्भमृत्वंशमेव वा १९
लक्षणेनालयं कुर्याल्लिंगमानवशादपि
लिंगत्रितारकं पीठं गर्भपीठं त्रितारकम् २०
तद्बाह्ये पीठतारेण भित्तिं कुर्यात्समाहृतम्
अथवा गर्भविस्तारं पीठतारचतुर्गुणम् २१
पीठतारात् द्विगुणितं गर्भार्द्धं भित्तिविस्तृतम्
समं त्रिपादमर्द्धं वा हर्म्यस्य वक्त्रमष्टपम् २२
अधोना संप्रवक्ष्यामि एकभूमेः प्रमाणकम्

षड्वर्गसहितं कुर्यात् लक्षणेन समन्वितम् २३
विस्तारयुगभागैकं वस्वाधारस्य चोच्छ्रयम्
पादवर्गसमं तस्य द्विगुणञ्चेति कीर्तितम् २४
प्रस्तरञ्चरणार्द्धन्तु तत्समं ग्रीवमुच्यते
शिखरञ्चरणायामं स्थूप्युत्सेधं तदर्द्धकम् २५
समन्तारचतुर्विंशत् भागैकं पादतारकम्
पञ्चविंशतिभागैकं वैकं षड्विंशदंशके २६
पादविष्कंभकं यत्तद्दण्डञ्चेति प्रकीर्तितम्
दण्डाष्टांशैकहीनं यदग्रपादस्य तारकम् २७
धरातलोपरिष्टात्तु पादवर्गन्तु कारयेत्
स्तंभस्थूणञ्च पादञ्च स्थाणुर्दारुतलांघ्रयः २८
जंघा च चरणेनैव पर्याय वचनानि च
व्योमाग्निवर्तिभिर्वापि भूताब्धिपतिभिस्तु वा २९
समतारेंघ्रिवर्गे तु एकभूमेस्तु कारयेत्
कृत्वा वेदिं द्विदण्डेन वस्वाधारस्य चोपरि ३०
तस्यायामन्तु नवधा भ्र–त्वैकांशेन पट्टिका
कन्धरन्तु युगांशेन भ्रंशेनाधारपट्टिका ३१
पक्षांशा वेदिकाप्रोक्ता व्योमांशाचोर्ध्वपट्टिका
उत्तराधस्त्रिपादेन दण्डछ्रयपरिग्रहेत् ३२
तत्स्थाने ताटिकोत्सेधं दण्डार्द्धञ्चेति कीर्तितम्
तद्दैर्घ्यं रसधाभज्य एकेन गिरिकाद्वयम् ३३
गिरिकायान्तु विस्तारमग्रपादसमं भवेत्
एकेन वृत्तकं कुर्यात् पक्षांशेन सरोरुहम् ३४
द्विभागेनास्यकन्तस्य द्वारमद्ध्यर्द्धदण्डकम्
तस्योर्ध्वे दण्डमानन्ता रसभागेन भाजयेत् ३५
एकांशां गुळमित्युक्तं तत्तारञ्चग्रपातवत्

कुंभोच्चन्तु युगांशेन द्विदराडं तस्य विस्तरम्  ३६
वृत्तमेकेन कर्तव्यं उत्तारमग्रपातवत्
तस्योर्ध्वेचैव पादेन द्विदराडं नवधाभवेत्  ३७
पद्मं कुर्यात्द्विभागेन व्योमांशं फलकं भवेत्
फलकस्य तु विस्तारं दराडत्रयमिति स्मृतम्  ३८
वीरकाराडं गुणांशेन उत्तारं चाग्रवद्भवेत्
पोतिकायां गुणांशेन तत्तारं पञ्चदराडकम्  ३९
उत्तमं तारमेवस्याद्यु-दराडन्तु मद्धयमम्
त्रिदराडमधमं प्रोक्तं पोतिकायाः प्रकीर्तितम्  ४०
उत्सेधं पोतिकायान्तु एकदराडमिति स्मृतम्
पोतिकाबन्धनिर्यूहं दराडं वा तत्त्रिपादकम्  ४१
युगाश्रं वाथ वृत्तं वा वस्वश्रं वा कलाश्रकम्
चरणाकृतिरेवं स्यात् भित्तेः पादस्य निर्गमम्  ४२
तस्य चैव तु भागैस्तु चतुरश्रस्य निर्गमम्
दराडत्रिभागभागैकं वृत्तस्याष्टकलाग्रहा  ४३
वृत्ताष्टाश्रकलाश्राणां वेद्यूर्ध्वे चांघ्रिमूलके
कर्णविस्तारमानेन चतुरश्रन्तु कारयेत्  ४४
पादगर्भं समाख्यातं ततः प्रस्तरवर्गकम्
यल्लब्धोत्सेधमानन्तु भजेद्विंशतिभागकः  ४५
उत्तरोच्चं गुणांशेन तदुच्चमष्टधा भजेत्
एकांशेनैव निर्यूहं पोतिकायास्तु बाह्यके  ४६
एकेन वाजनोच्चन्तु तत्समं नीव्रमुच्यते
वसन्तकोच्चं त्र्यंशेन तस्योर्ध्वं नीव्रमुच्यते  ४७
तस्योर्ध्वपट्टिकांशेन युगभागैकनीव्रकम्
अब्ध्यंशन्तु कपोतोच्चं दंडार्द्धं लंबमानकम्  ४८
तन्नीव्रन्तु त्रिदंडं स्यात् मार्जनन्तस्य नीव्रकम्

कपोतेनासिकायुक्तं कर्णे वल्लिसमायुतम्  ४९
नासितारं द्विदंडं वा सार्द्धद्विदंडमेव वा
उत्सेधं तत्समं ज्ञेयं तद्भूतांशगुणांशकम्  ५०
तन्मद्ध्यमेव गाढन्तु तत् गुहादंडमानतः
वाजिनोर्ध्वसमं प्रोक्तं नासिकायाश्शिरस्तथा  ५१
एकांशेनोर्ध्वपट्टिन्तु पादसूत्रसमं कुरु
एकेनान्तरितं कुर्यात् तत्तारमग्रपादवत्  ५२
अग्रपादार्द्धमानेन तन्नीव्रं परिकीर्तितम्
प्रतिमुखोच्च द्विभागेन तत्तुल्यं कर्णनिर्गमम्  ५३
प्रतिवाजनमेकांशं स्थाणुसूत्रसमन्तु तत्
सिंहव्याळगजैः पुष्पैः कुर्यादन्तरितं तथा  ५४
एवं प्रस्तरवर्गन्तु ग्रीववर्गमतः परम्
तस्योर्ध्वे वेदिकायाममद्ध्यर्द्धं दंडमुच्यते  ५५
वेशनं वेदिकायान्तु द्विदंडञ्चेति कीर्तितम्
वेदिकोत्सेधमानन्तु सप्तभागेन भाजयेत्  ५६
कर्णोत्सेधगुणांशेन एकांशेनैव पट्टिका
तस्योर्ध्वनिर्गमन्तस्याः पद्मांशं वेदिकोच्छ्रयम्  ५७
तन्नीव्रन्तु तदर्द्धं स्यादेकांशेनोर्ध्वपट्टिका
अधः पट्टिसमञ्चैव तत्पट्टीं कुरु बुद्धिमान्  ५८
वेदिविस्तारबाणांशं वेदांशं कर्णविस्तरम्
चतुर्दिक्षु विशेषेण नासिकांघ्रिं प्रकल्पयेत्  ५९
वेदितारसांशैकं मद्ध्यांशैकमथापि वा
ग्रीवामूलात्मनिर्यूहं नासिकास्थूणकस्य तत्  ६०
तन्निर्यूहसमं वापि युगदण्डमथापि वा
अर्द्धेन वेददंडं वा उभयोः पादमद्ध्यमम्  ६१
त्रिदंडं वा चतुर्दंडं गुहावेशं प्रकीर्तितम्

तत्पादस्य समायामं हंसमालावसानकम् ६२
दंडत्रिभागपञ्चांशं तत्स्तंभस्य तु तारकम्
शेषं तु पूर्ववत्कुर्यादुत्तरं वाजनं तथा ६३
ग्रीवाग्रे वार्द्धदंडेन उत्तरन्तु प्रकल्पयेत्
तत्समन्तु गळान्नीव्रं तत्र भागैकवाजनम् ६४
तत्समन्तस्य नीव्रन्तु हंसमालार्द्धदंडकम्
तस्यार्द्धं तस्य नीव्रन्तु पट्टिवाजनवद्भवेत् ६५
चतुर्भागन्तु भागैकं नीव्रं तस्य प्रकीर्तितम्
ग्रीववर्गसमाख्यातमूर्ध्वे शिखरवर्गकम् ६६
शिखरस्य तु विस्तारं वेद्यास्तारसमं भवेत्
वेद्यास्तारं त्रिभागैकं महानास्या तु विस्तरम् ६७
विस्तारस्य त्रिभागन्तु उत्सेधं तस्य कीर्तितम्
तस्याः परिधिविस्तारं ध्रुवपादसमं भवेत् ६८
शेषं स्यादवभागन्तु गुहावेशं द्विदंडकम्
विस्तारार्द्धं शिरोमानं किन्नरीवक्त्रवत्कुरु ६९
नानावल्लीसमायुक्तं सिंहव्याळमृगैर्युतम्
भूतरूपैस्समायुक्तं परिधिः कारयेत्ततः ७०
शिखरं कारयेद्धीमान् घराटायामा कृतिस्तथा
वेद्यास्तारस्य पञ्चांशं गुणांशं बलिविस्तरम् ७१
बलितारस्य बाणांशं गुणांशं पद्मविस्तरम्
पद्मतारगुणांशैकं कुंभतारमिति स्मृतम् ७२
कुंभतारशरांशैकं कंधरस्य तु तारकम्
कुंभतारं त्रिभागैकं पाल्यतारस्य विस्तरम् ७३
पालितारत्रिभागैकं कर्णतारमिति स्मृतम्
मुकुळस्य तु विस्तारं कर्णतारसमं भवेत् ७४
शिखरोदिततुंगेषु रसांशं वज्रतुंगकम्

स्थूपिकोत्सेधमानन्तु द्वात्रिंशत् भागतो भजेत् ७५
पद्मोत्सेधन्नवांशन्तु द्विभागं गळमुच्यते
व्योमांशेनोर्ध्वपद्मन्तु अर्द्धांशेन घटं भवेत् ७६
अधः पद्मन्तु भागेन अर्द्धांशेनोर्ध्वकंपकम्
गळान्ते च द्विभागन्तु अर्द्धांशेनैव पट्टिका ७७
अर्द्धांशेनोर्ध्वपद्मन्तु फलकैकेन कारयेत्
अर्द्धभागमधः पद्मं मुकुळोच्चं शरांशकम् ७८
स्थूपिरेवं समाख्यातं द्वारलक्षणमुच्यते
व्रतेरुत्तरसीमान्तं द्वारोत्सेधमिति स्मृतम् ७९
विस्तारन्तु तदर्द्धं स्यात् सर्वेषु भवनेषु च
द्वारलक्षणमाख्यातमलंकारमथ श्रुणु ८०
कपोतनाळिका चाष्ट मंटपे तु तथैव च
पार्श्वयोश्चैव पृष्ठे तु तोरणाद्यंघ्रिवर्गके ८१
त्रिदंडं वा चतुर्दंडं सार्द्धत्रिदंडमेव वा
तोरणस्य तु विस्तारं पादयोरन्तरं स्मृतम् ८२
पादायामाष्टभागस्य पञ्चांशं पादमैर्घ्यकम्
त्रिभागेन झषांशन्तु वल्लीचित्रन्तु चित्रितम् ८३
पादन्तु पूर्ववत्कुर्यादुत्तरं वाजनं तथा
अन्तराळसमायुक्तं कारयेत्सममण्टपम् ८४
हर्म्यस्य पङ्क्तिमानेन अन्तराळस्य विस्तरम्
एकहस्तं द्विहस्तं वा अन्तराळस्य तारकम् ८५
द्विदण्डं वाथ दण्डं वा चान्तराळस्य वेशनम्
त्रिपादमण्टपस्यैव अर्द्धमण्टपकस्य तु ८६
दण्डं वाप्यर्द्धदंडं वा द्विदंडं वा द्विपार्श्वयोः
सार्द्धदंडद्वयं वाथ त्रिदंडं वा विशेषतः ८७
वेशनं पादबाह्यन्तु कारयेत्तु विचक्षणः

प्रस्तरोपरि कोणेषु भूतं वा वृषभं कुरु ८८
भूतञ्चेदासनं कुर्यात् कृतांजलिपुटान्वितम्
वृषभं शयनं कुर्यात् सर्वलक्षणसंयुतम् ८९
कुमारं पूर्वदिक् भागे दक्षिणामूर्तिकं यमे
वारुणे तु नृसिह्मं वा केशवं वापि कारयेत् ९०
ब्रह्माणमुत्तरे देशे स्कन्धरे तु विशेषतः
पश्चिमद्वारहर्म्ये तु स्कन्दं पश्चिमके कुरु ९१
केशवं पूर्वभागे तु कल्पयेत् कल्पवित्तमः
एतत् लक्षणसंयुक्तं श्रीकान्तभवनं स्मृतम् ९२
देवालंकारमेवोक्तं विस्तारं पञ्चधा भवेत्
त्रिभागं तस्य मद्ध्ये तु अर्द्धयर्द्धं दंडनिर्गमम् ९३
वसुनासिकयायुक्तं कपोतन्तु प्रकल्पयेत्
मंटपे नासिकां कुर्यात् पादं प्रत्यंघ्रिकोपरि ९४
शिखरे नासिकां कुर्याच्चतसृषु विदिक्षु च
एभिस्तु लक्षणैर्युक्तं कैलासं कान्तकं स्मृतम् ९५
देवालंकारसंयुक्तं कर्णकूटञ्चतस्त्रकम्
कोणं प्रतिविशेषेण कारयेद्वृषभद्वयम् ९६
प्रत्यूर्ध्वं ग्रीववर्गान्तं मानन्तुरसधा भजेत्
एकेनैव तु भागेन वेदिकां कारयेत्ततः ९७
अर्द्धयर्द्धांशगळोत्सेधं शिखरं सार्द्धद्व्यंशकम्
शेषं स्थूपिरिति ख्यातं षट्भागेन विभाजयेत् ९८
वेद्यास्तारं चतुर्दंडं तत्तारं पञ्चधा भवेत्
ग्रीवस्यैव तु विस्तारं वेदांशमिति कीर्तितम् ९९
वेद्यां चैव च संप्रोक्तं शिखरस्य तु विस्तरम्
कर्णकूटमिति प्रोक्तमेतत्स्यात्स्थूपिशालकम् १००
मन्दिरस्य तु विस्तारं षट्भागेन तु भाजयेत्

पञ्चांशं मद्ध्यमे चैव कोणेष्वेकांशमेव तु १०१
अद्ध्यर्द्धदंडमानेन बाह्ये चैव तु निर्गमम्
कारयेत्कर्णकूटानि प्रस्तरोपरि पूर्ववत् १०२
चतुर्विंशन्नासिकाभिः कपोतं कारयेत्ततः
शिखरोपेतकाष्ठानि चतुर्दिक्षु प्रकल्पयेत् १०३
यदुच्चन्तु महानास्यः कोष्ठस्योत्सेधमुच्यते
महानास्याच्च निर्यूहं शमनिर्यूहमुच्यते १०४
शालायाञ्चैव विस्तारं कूटस्य द्विगुणं भवेत्
शालायामं त्रिधा कृत्वा द्विभागं शिखरं भवेत् १०५
शेषं स्थूपिरिति ख्यातं कुक्षिनासिविचित्रितम्
पार्श्वयोः पृष्ठदेशे तु तोरणानि प्रकल्पयेत् १०६
सर्वतो मुखमेवं स्यात्सर्वदेवार्हकं भवेत्
देवालंकारसंयुक्तं कोष्ठकूटस्य मद्ध्यमम् १०७
कपोते चाष्टभिश्चैव नासिकापंजरैर्युतम्
महानासिश्च कर्तव्यमूर्ध्वशालाञ्च वर्जयेत् १०८
अनुनासि चतुर्भिश्च नन्द्यावर्तमिति स्मृतम्
देवालंकारसंयुक्तं पंजरैरष्टभिर्युतम् १०९
भौमाद्युत्तरकान्तन्तु अष्टभागैर्विभाजयेत्
मसूकरमथांशेन पञ्चांशंपाददैर्घ्यकम् ११०
त्रिपादं प्रस्तरं प्रोक्तं अर्द्धांशं वेदिकोच्छ्रयम्
कन्धरन्तु त्रिभागेन शालाकारं द्विभागिकम् १११
एकांशं स्थूपिकोत्सेधं स्थूपित्रयसमायुतम्
कुक्षिनासिसमायुक्तं प्रासादं सप्तधा भजेत् ११२
पंजरस्य तु विस्तारं एकभागं प्रकीर्तितम्
पूर्ववत्तु मसूरादीन् वृत्तपादं प्रकल्पयेत् ११३
एतत्पञ्चालमित्युक्तं देवालंकारसंयुतम्

अधिष्ठानस्य मद्ध्यन्तु अन्नन्याधिष्ठानकं कुरु  ११४
चरणस्य तु वर्गे तु नानापदयुतं कुरु
विष्णुकान्तमिति प्रोक्तं सर्वदेवेषु योग्यकम्  ११५
नागरद्राविडञ्चैव वेसरञ्च त्रिधा भवेत्
भौमादिस्थूपिपर्यन्तं युगाश्रं नागरं भवेत्  ११६
वेदिप्रभृति चाष्टाश्रं द्राविडञ्चेति कीर्तितम्
कर्णप्रभृतिवृत्तं यद्वेसरं परिकल्पयेत्  ११७
इति कारणे प्रतिष्ठातन्त्रे प्रासादलक्षणविधिपटलस्सप्तमः

प्राकारलक्षणविधिपटलप्रारंभः

अथातः संप्रवक्ष्यामि प्राकाराणान्तु लक्षणम्
अन्तर्मंटपमाद्यं स्यादन्तर्द्वारं द्वितीयकम्  १
मध्यहारं तृतीयन्तु पश्चान्मर्यादिभित्तिकम्
महामर्यादिभित्तिस्तु पञ्चमः परिकीर्तितः  २
प्रासादस्य तु विस्तारं यत्तद्दंडमिहोच्यते
अर्द्धदण्डप्रमाणेन अन्तर्मण्टपकं कुरु  ३
अन्तर्हारन्तु दंडेन मद्ध्यहारं द्विदण्डतः
मर्यादिभित्तिकं कुर्याच्चतुर्दण्डेन बुद्धिमान्  ४
महामर्यादिभित्तिञ्च सप्तदण्डेन कल्पयेत्
दण्डमानमिति प्रोक्तं हस्तमानं ततश्शृणु  ५
चतुर्हस्तप्रविस्तारमन्तर्मंटपमादिशेत्
अन्तर्हाराष्टहस्तेन भवेत् द्वादशहस्तके  ६
मद्ध्यहारन्तु कर्तव्यं ततष्षोडशभिः करैः
मर्यादिभित्तिकं कुर्यात् विंशद्धस्तविशालकम्  ७
महामर्यादिभित्तिस्स्यात्प्राकारं पञ्चधा विदुः
समन्तादेवमावृत्य तद्बहिर्वदनात्पदम्  ८

प्रासादाग्रे विशेषेण वक्त्रायामं प्रकल्पयेत्
पादं वार्द्धत्रिपादं वा अधिकं द्विगुणन्तु वा  ९
द्विगुणादधिकार्द्धन्तु त्रिगुणं वा चतुर्गुणम्
मुखायाममिति ख्यातमुपानात्तस्य निर्गमम्  १०
उत्तमं त्वितिविख्यातं कुमुदं मद्ध्यमं स्मृतम्
पात् बाह्ये निर्गमञ्चैव कन्नयसं परिकीर्तितम्  ११
उपानकुमुदस्तंभबाह्यदंडत्रयं स्मृतम्
तत्तल्लोकस्य कार्याणि तत्तद्दंडेन कल्पयेत्  १२
मानसूत्रस्य बाह्ये तु भित्तिरभ्यन्तरेऽपि वा
मानसूत्रन्तु यद्भित्तिर्मद्ध्यमं वापि कारयेत्  १३
महामर्यादिभित्तेस्तु तारं षट्त्रिंशदंगुलम्
अग्न्यंगुलद्वयेणैव गायत्रीयांगुलान्तकम्  १४
प्राकारभित्तिविस्तारं चतुर्णां परिकीर्तितम्
पद्मपादसमोत्तुंगं प्रस्तारन्तु समन्तु वा  १५
चतुष्करं त्रिहस्तोच्चं द्विहस्तोत्तुंगमेव च
द्विहस्तञ्च द्विहस्तार्द्धं त्रिहस्तञ्च त्रिहस्तकम्  १६
प्रोक्तं महावृतं हर्म्यं विस्तारन्तु चतुर्विधम्
पञ्चप्राकारयुक्तं वा त्रिप्राकारयुतन्तु वा  १७
एकप्राकारसंयुक्तं कल्पयेत्कल्पवित्तमः
मर्यादिभित्तिकर्णोक्त्या अन्तर्मंटपकं तथा  १८
शेषप्राकारकैर्युक्तं त्रिःप्राकारमिति स्मृतम्
अथ चैवं प्रकारेण त्रिप्राकारमिहोच्यते  १९
अन्तर्मंडलकं चैव मर्यादिर्मद्ध्यहारकम्
त्यक्त्वैवान्यच्च शेषन्तु त्रिप्राकारमिति स्मृतम्  २०
एकप्राकारकञ्चेत्तु अन्तर्द्वारयुतं कुरु
भित्यूर्ध्वे सुदृढं कुर्याच्छत्राकारं शिरस्तथा  २१

अथवा बद्धहर्म्ये तु कूटशालायुतन्तु वा
प्राकारे तु द्वितीये वा मौळिका कृतिरेव वा २२
सभाकृतिर्वा कर्तव्या त्रितलं वा द्विभूमिकम्
कारयेत्तु विशेषेण प्राकारं प्रतिगो पुरम् २३
शरादिनवहस्तं वा एकादशकरन्तु वा
त्रयोदशकरं वापि गोपुराणान्तु विस्तरम् २४
पादादिकमथाद्धयर्द्धं पादोन द्विगुणायतम्
प्राकारशिखरान्तं वा स्थूप्यन्तं वा समुच्छ्रयम् २५
हर्म्यगोपुरकंयापि शालाकृतिरथापि वा
मौळिकाकृतिकंवापी कुर्यादेव तु गोपुरम् २६
गोपुरद्वारतुंगं स्यादुपानादुत्तरान्तकम्
द्वारस्यैव चतुर्दिक्षु प्राकारेषु प्रकल्पयेत् २७
प्राकारे तु द्वितीये वा तृतीये पावके दिशि
पवनालयं तु कर्तव्यं चतुश्शालासमन्वितम् २८
द्वितीय्य प्राकारैशान्ये कूपस्थानं प्रकीर्तितम्
शक्रशांकरयोर्मद्धये वार्यस्थानं प्रकीर्तितम् २९
आग्नेयशक्रयोर्मद्धये धनस्थानमुदाहृतम्
याम्यपावकयोर्मद्धये पुष्पमंटपमुच्यते ३०
कुर्यात्स्नानांबुजालन्तु याम्यनैर्ऋतिमद्धयमे
वारुणे नैर्ऋतेर्मद्धये धर्मश्रवणमंटपम् ३१
वारुणानिलयोर्मद्धये कुर्यादायुधमंटपम्
वायव्य सोमयोर्मद्धये शयनस्थानमुच्यते ३२
ईशानसोमयोर्मद्धये यागमंटपमुच्यते
सौम्ये तु मध्यहारायां कुर्यादास्थानमंटपम् ३३
अधुनादेशिकादीनामावासन्तु विधीयते
बाह्यप्राकारबाह्ये च द्विदण्डं वार्द्धमेव वा ३४

व्यपोह्यसौम्यके देशे देशिका वा समुच्यते
कर्तव्यं मौळिकाकारं चतुश्शालाग्रकन्तु वा ३५
पश्चिमे परिचाराणामावासं परिकीर्तितम्
भिषजान्तु गृहं याम्ये दैवज्ञानां तथैव हि ३६
अंबष्ठानां तु तत्रैव वाद्यकानामथैंद्रके
शैवानाञ्चैव सर्वेषां प्राच्यामावासमुच्यते ३७
महाप्रतीनां वह्नौ तु याम्ये पाशुपतालयम्
निर्ऋतौ काळमुखानान्तु बौद्धानां वारुणे तथा ३८
वायव्ये चार्हतानान्तु सौम्ये भूसुरसत्रकम्
ज्ञानाभ्यासाय शालान्तु ऐशान्ये संप्रकल्पयेत् ३९
इंद्र आग्नेययोर्मद्ध्ये कार्यं खातजलाशयम्
याम्यपावकयोर्मद्ध्ये जलदानप्रपां कुरु ४०
याम्यनैर्ऋतयोर्मद्ध्ये गोशालां संप्रकल्पयेत्
निर्ऋतिवारुणयोर्मद्ध्ये कर्तव्यं सूतिकागृहम् ४१
वारुणानिलयोर्मद्ध्ये रोगार्तानां निवेशनम्
कुर्यादक्षरशिक्षार्थं कुबेरानिलमद्ध्यमे ४२
उत्तरेशानयोर्मद्ध्ये धान्यस्थानमुदाहृतम्
ईशानशक्रयोर्मद्ध्ये वेदाद्ध्ययनमंटपम् ४३
तत्बाह्ये कल्पयेद्विद्वान् स्त्रीणां रागोपजीविनाम्
क्रयविक्रयकानाञ्च पुष्पतैलोपजीविनाम् ४४
कुलालतन्तुवायानां मत्स्यमांसोपजीविनाम्
नापितश्मश्रुकाराणां गोपालानान्तु कारुभिः ४५
रक्षकाणामथावासमापणस्थानमेव च
बाह्ये त्वैशान्यदेशे तु श्मशानस्थानमुच्यते ४६
बाह्योत्तरे तु कर्तव्यं तक्षकादिनिवासनम्
आवासं तत्बहिः कुर्यात् रजकानां तथैव च ४७

चगडाळानां कुटीराणि तद्बाह्ये तु प्रकल्पयेत्
एवं स्वतः प्रधानस्य कल्पयेद्देशिकोत्तमः ४८
वास्त्वंगं कल्पयेद्धीमान् ग्रामे पैशाचिके पदे
ग्रामतारशरांशैकं ग्रामबाह्ये विनिक्षिपेत् ४९
तत्पैशाचमिति ज्ञेयं ग्रामं पैशाचसंयुतम्
शतं चतुश्चत्वारिंशदधिकं कारयेत् पदम् ५०
कर्णसूत्रं ततः कृत्वा ऐशद्वयांशकेऽपि च
इंद्र ईशानयोर्मद्ध्ये सोमशांकरमद्ध्यमे ५१
यथेष्टं कारयेद्धीमान् प्रासादतोरणस्य तु
तत्स्थाने स्थापयेल्लिंगं वास्त्वंगं विधिना तथा ५२
अन्यथा पुरदुर्गादौ शिवस्थानमिहोच्यते
अष्टासु दिक्षु मद्ध्ये च शिवस्थानं प्रकल्पयेत् ५३
पूर्वपश्चिमदिक् द्वारं पुरप्रवरपूर्वकम्
ग्रामे च सर्वदिक्ष्वे च पैशाचात् बहिरिष्यते ५४
महेशं कारयेंभोधिं सद्योवास्तु समीष्यते
तत्सभ्रमाद्विमर्यादि कुदृष्टिरहितश्शिवः ५५
वास्त्वंगस्थापनाच्चापि स्वप्रधाने शिवस्थितः
तत्फलं कोटिगुणितं साधयेत् विधिना ततः ५६
ग्रामन्यासोक्तमार्गेण सर्वेषान्तु निवासनं ५७

इति कारणागमे प्रतिष्ठातन्त्रे
प्राकारलक्षणविधिपटलोष्टमः

लिंगलक्षणविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि लिंगलक्षणमुत्तमम्
स्थावरं जंगमञ्चैव द्विविधं लिंगमुच्यते १
शैलजं रत्नलोहैश्च मृन्मयेनैव कारयेत्

शिलामयन्तु यद्रूपं अजविष्णुहरैर्युतम्  २
त्रिसूत्रं मुकुळैर्युक्तं स्थावरं लिंगमुच्यते
शेषाण्यन्यानि सर्वाणि जंगमं लिंगमुच्यते  ३
स्थावरं जंगमाच्छ्रेष्ठं स्थावरं त्वधुनोच्यते
सुमुहूर्ते सुनक्षत्रे शिलाग्रहणमारभेत्  ४
मधुमाधवशुक्लेषु नभस्यकतपस्ययोः
तपस्यन्तेषु मासेषु शुक्लपक्षे शुभे दिने  ५
अन्येषु सर्वमासेषु शिलारंभं न कारयेत्
कृतञ्चेत् कर्तृनाशस्स्यात् स्थाननाशं धनक्षयम्  ६
प्राजापत्येमखेत्वाष्ट्रे वैष्णवे मृगशीर्षके
सावित्रे चैव रेवत्यां अनिले चोत्तरेषु च  ७
मैत्रभेषु शुभेष्वेव शिलाग्रहणमारभेत्
आदिशैवकुले जातः पञ्चगोचरसंस्थितः  ८
मन्त्रागमज्ञश्शास्त्रज्ञस्सर्वलक्षणसंयुतः
दिव्यन्तरिक्षभौमानि निमित्तान्युपलक्षयेत्  ९
देवाग्निगुरुभक्तश्च देशिकस्समुदाहृतः
सुलेखासु गुणो धीमांश्छास्त्रज्ञः कर्मयोग्यकः  १०
वास्तुविद्याकृताभ्यासः शल्योद्धारविशारदः
मानानि रसमानज्ञः शिलादोषपरीक्षकः  ११
सर्वलक्षणसंयुक्तः स्थपतिस्स उदाहृतः
शिवं संपूज्य विधिवत् ज्ञापयेद्देशिकोत्तमः  १२
सितवस्त्रपरीधानौ गंधमाल्यैरलंकृतौ
प्राच्यां वै चोत्तरायां वा गच्छेतां गुरुशिल्पिनौ  १३
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम्
नानाभक्तजनैस्सार्द्धं ततो मंगलवाचकैः  १४
शुभाशुभनिमित्तानि तस्मिन्काले परीक्षयेत्

वृषभं पूर्णकुंभञ्च शंखं मांसं गजं ध्वजम्  १५
कन्याञ्च पद्मपुष्पञ्च दीपगोभेरिकादिभिः
सितपुष्पं क्षितीशञ्च वेश्याञ्च छत्रपल्लवौ  १६
ब्राह्मणं शुभवाक्यञ्च दीप्ताग्निं तुरभं फलम्
शुभान्येतानि सर्वाणि गन्तव्यपथिदर्शने  १७
काकस्य रोदनञ्चैव शिवारावक्षुतं तथा
शुभप्रदानि वामे तु सर्वसिद्धिकराणि च  १८
कुररश्चशशश्चैव डुंडुभश्चवराहकः
श्येनश्च कौशिकश्चैव दक्षिणा द्वामगाश्शुभाः  १९
जरांगीरक्तनेत्री च जंबुकोनकुलः खरः
शुभान्येतानि सर्वाणि वामाद्दक्षिणगानि वै  २०
अमंगली प्रेतरूपः पतितः क्षुत्प्रपीडितः
विकर्णकेशो मुण्डश्च शाक्योदिग्वस्त्रकस्तथा  २१
एतानि चाशुभान्येव सर्वदोषकराणि च
भौमान्येतानि चोक्तानि चान्तरिक्षमथोच्यते  २२
निपातं च फलं पुष्पं शब्दो वा यदि जायते
अन्तरिक्षाणि चैतानि दिव्यानि तु वदाम्यहम्  २३
विद्युत्स्तनितघोषैश्च सादित्यं वृष्टिपातनम्
शुभान्येतानि विज्ञेयान्यशुभानि निबोधमे  २४
उल्कापातदिशोदाहं महावातप्रवर्तनम्
परिवेषमसृक्पातस्तारापातेंद्रचापकौ  २५
सुनिमित्तं भवेद्गच्छेद्दुर्निमित्तमधोस्थितः
हिमवान् हेमकूटश्च निषधो नील एव च  २६
ऋक्षश्च माल्यवांश्चैव श्रीशैलश्च तथैव च
गंधमादनशैलश्च मेरुस्तु नवमः स्मृतः  २७
एते पर्वतराजानो महाशैलाः प्रकीर्तिताः

महेंद्रोमलयश्चैव सह्योविंध्यस्तथैव च  २८
अंबुदोभ्युदयश्चैव पारियात्रस्तथैव च
श्रीपर्वतश्च विख्यातो देवपर्वत एव च  २९
एतेषां चैव सामीप्यं वनेषूपवनेषु च
भूमिश्चतुर्विधाज्ञेया शुभदा चाशुभंकरी  ३०
यत्र गुल्मयुता स्निग्धा फलपुष्पसमन्विता
तत्र गृह्णीत यत्नेन शिलायां वारुणी स्मृता  ३१
तयायत् त्रियते लिंगं तत्सर्वार्त्थप्रसाधनम्
यस्मात्तु सौम्यकेतोयं व्रीहिक्षेत्रन्तु दक्षिणे  ३२
फलिनः क्षीरवृक्षा वा पूर्वे वा पश्चिमेऽपि वा
तत्रस्थायाशिलारम्या माहेंद्री साशिला स्मृता  ३३
धनधान्यविवृद्ध्यर्त्थं लिंगं स्यात्तु प्रजापतेः
पलाशखदिरानिंबा काश्मर्याशक्रसंयुता  ३४
तित्तिरा च कपोता च गृध्राश्चैव शवायनाः
मयूरभ्रमराकीर्णा स्वल्पतोयसमन्विताः  ३५
अनिलासाविजानीयात् शिला तत्रानिलास्मृता
सदाशुभा बुधैर्ग्राह्या आभिचारायकल्पिता  ३६
पीलुश्लेष्मातकाकीर्णा खादिरस्नुहि संकुला
विभीतकाकबहुला कलिनाशर्करान्विता  ३७
तृणोदकविहीना तु तरक्षुकुलसेविता
जंबुका यत्र दृश्यन्ते तथैव मृगतृष्णया  ३८
तत्र स्थायाशिलासा तु आग्नेयीति प्रकीर्तिता
तयालिंगं नकुर्वीत पंडितश्शुभकर्मणि  ३९
विपरीते तु कर्तव्या शत्रुनाशाय नान्यधा
एवं परीक्ष्यभूमिन्तु शिलां गृह्णीत देशिकः  ४०
सरित्सलिलनिर्धूतां पवित्रान्तर्जलेस्थिताम्

द्रुमच्छायोपगूढाञ्च तीर्थाश्रमनिषेविताम् ४१
आयामपरिणाहाढ्यां सर्वदोषविवर्जिताम्
ग्राह्यञ्च दृश्यं ह्युपलं शेषादृश्यन्तु वर्जयेत् ४२
यदनेन च तद्दृश्यं गृहीते धननाशनम्
पुत्रनाशञ्च सौभाग्यपुष्टीकरमदृश्यकम् ४३
यस्मिन् देशे शिलांशे ते प्राङ्मुखस्थपतिस्थितः
प्रदक्षिणं ततः कृत्वा शिर आदीनि लक्षयेत् ४४
पूर्वपश्चिममायामं तथा वै दक्षिणोत्तरम्
पूर्वमग्रमिति प्रोक्तं पश्चिमं मूलमुच्यते ४५
दक्षिणं मूलमित्युक्तमुत्तरं चाग्रमुच्यते
शिरोभागमुखं ज्ञेयमधोभागो विशेषतः ४६
दृश्यभागन्तु पृष्ठं स्यात्पार्श्वे पार्श्व इति स्मृताः
निर्ऋत्यांशकमायामं नीलानिलगतन्तथा ४७
ऐशाग्नेयौ शिरः प्रोक्तौ पृष्ठगावितरौ स्मृतौ
लाञ्छयित्वा कथं तत्र ततस्तत्लक्षणमाचरेत् ४८
आचार्यशिशल्पिभिस्सार्द्धं शिलामुद्धारयेत्क्रमात्
कुन्देन्दुहेमधवळा शंखशुक्तिजातनिभा ४९
दधिसमासितवस्त्राभा विप्रशिला शेषशुक्लसमा
बालार्कपंकजाभारोहितबंधूकपुष्पसंकाशा ५०
भुजगेंद्रकोपसदृशाक्षत्रशिलाशेषरक्तसमा
कनकहरिद्रभासा हरितारनिभा सुकर्णिकारा ५१
चणकादिपीतवर्णा शुभशैलावैश्यजातसमा
नीलयुगराजवक्त्रांबरनीलनीरदराशिनिभा ५२
बहिर्गळांगाराभां यश्चेच्छिलां शूद्रजातीनाम्
मरतकशैलनिभा दूर्वाश्यामाभिवेणुकाभासा ५३
हरितश्चेतयुतायासा शिला च सर्वजातीनाम्

अनुलोमक्रमात् ग्राह्यं प्रतिलोमक्रमान्नहि  ५४
स्त्रीपुन्नपुंसकाशैला बालावृद्धा च मद्ध्यमा
अष्टाश्रा चतुरश्रा वा स्त्रीशिला चेति निश्चिता  ५५
वृत्तं नपुंसकं शैलं द्वादशं दशकोणकम्
आयताश्रञ्च पुल्लिंगं वृत्तायतन्तथैव च  ५६
घण्टा शब्दस्तु पुल्लिंगं स्वरहीनं नपुंसकम्
ताळशबदशिलाया तु साशिला युवती स्मृता  ५७
दीर्घशब्दातुयावृत्ता ह्रस्वाबालेति कीर्तिता
एवं स्वरन्तु संलक्ष्य प्रहरेच्छिल्पिवित्तमाः   ५८
बालवृद्धशिलायास्तु वर्जयेत्तु प्रयत्नतः
सकळं निष्कळं बेरं पुंसां पुंशिलया विदुः  ५९
योजास्त्रीशिलया सम्यक् नारीबेरञ्च पींडिका
नपुंसकोपलेनैव ब्रह्मकूर्मशिले स्मृते  ६०
प्रासादशिलकुडयादौ नपुंसकशिलां नयेत्
पुल्लिंगैः कल्पितापिण्डी राजराष्ट्रभयंकरी  ६१
युवत्याकलितं लिंगं सर्वप्राणिभयं करम्
नपुंसकेन लिंगं वा कृतञ्चेत् पिण्डिकाथवा  ६२
दुर्भिक्षन्तु भवेत् भूमौ यजमानो विनश्यति
रेखाबिन्दुकळंकानि विमलं परिवर्जयेत्  ६३
पृष्ठपादवदाकारा सूत्रपादवदायता
सूर्यरश्मिवदाकारा रेखा वै त्रिविधा स्मृता  ६४
स्तनचूचुकसंकाशो जंबूफलसमप्रभः
बिन्दुरेवं समाख्यातः द्विविधेन प्रजापतेः  ६५
बर्हिपिंछसमाकारं कृष्णामृगसमप्रभम्
कृष्णलोहवदाकारं कळंकं त्रिविधं भवेत्  ६६
त्रासस्फटिकसंकाशं शुक्त्यभ्यन्तरसन्निभम्

त्रासोपि द्विविधो ज्ञेयो विमलं त्रिविधं भवेत् ६७
शातकुंभनिभञ्चैव दरीकृतसमप्रभम्
कांस्याभं विमलं ज्ञेयं सर्वदोषकरं भवेत् ६८
वेणवंकुरवदाकारा लूतापातसमप्रभा
खर्जूरपत्रसदृशा दूर्वास्तंभकसन्निभा ६९
इक्षोरग्रसमाकारा गिरिका पञ्चधा स्मृता
कृष्णशैलसितारेखा साप्रशस्तेति कीर्तिता ७०
कृष्णाकृत्स्नविनाशं स्यात् सितकृष्णासुगर्हिता
गिरिकाकृष्णशैले तु सितवर्णेन देशिकः ७१
खर्जूरपत्रसदृशा दूर्वास्तंभा कृतिश्शुभा
अन्याकृतिर्न गृह्णीयाद्धान्यगो नाशनाय च ७२
कळंकं रोगदं ज्ञेयं त्रासं राष्ट्रविनाशनम्
बिन्दुः पुत्रविनाशस्स्याद्विमलं दुःखदं भवेत् ७३
श्वेतशैलन्तु मोक्षार्थी रक्तशैलं जयप्रदम्
पीतवर्णं संपत्करं कृष्णं स्यात्सर्वकामदम् ७४
श्यामञ्चैवाभिचारार्थं विधिलक्षणपूर्वकम्
बाह्यलक्षणमुद्दिष्टं श्रुणुष्वाभ्यन्तरं ततः ७५
चतुरश्रां शिलां सम्यक् फेदयेत्तु विचक्षणः
तक्षकश्छेदने चैव मंडलं यत्र दृश्यते ७६
सगर्भान्तान्यबीजानि रत्नेन तु परीक्षयेत्
मंजिष्ठवर्णे मंडूकं कर्कटो हरितालके ७७
पीते गोधासिते सर्पः खद्योतो मधुवर्णके
कपिले मूषिकं विद्यात्कृकलासमथारुणे ७८
गुळवर्णे तु पाषाणे कपोतौ ग्रहदौळिका
भस्माभेसिकतां विद्यात् स्फटिकाभे जलं स्मृतम् ७९
रक्तमण्डलके चित्रं चित्रवर्णे तु वृश्चिकम्

शफरं कृष्णचित्रे च किंशुकाभेंद्रकोपकम्  ८०
एवं गर्भास्तु विज्ञेया बाह्यलक्षणलक्षिता
लक्षणन्नास्ति चेत् बाह्ये तेषां लोपानि लेपयेत्  ८१
ब्रह्माणं वज्रपाणिञ्च शूलपाणिञ्च वैष्णवम्
अजाक्षीरेण संयोज्य उपलं लेपयेत्ततः  ८२
लेपिते यदि क्लिन्नं स्यादेकरात्रोषितं तथा
सगर्भं तं विजानीयादभिगोधा च वृश्चिकम्  ८३
कासीसंपीतलोध्रञ्च गोक्षीरेण तु पेषयेत्
लेपितेन शिलान्तेन रुधिराभं यदा भवेत्  ८४
दिवसैस्तु दिशैश्चैव एकरात्रोषितोऽपि वा
दर्दूरस्तत्र विज्ञेयः कूर्मो वाथ न संशयः  ८५
पृथ्वीं त्रिशूलिनं ब्रांह्यं महिषीक्षीरवेष्टितम्
लेपिते तु शिलान्तेन रुधिराभा यथा भवेत्  ८६
कृष्णमीनो भवेत्तत्र कृकलासमथापि वा
मुस्तकं करवीरञ्च कुष्ठं मासिफलत्रयम्  ८७
एतानि पेषयित्वा तु स्त्रीस्तन्नत्येन तु पेषयेत्
अश्मानं लेपयेत्तेन यदि स्याच्चिलिशिलेनकैः  ८८
काळकूटविषन्तत्र न तु हस्तेन संस्पृशेत्
गर्भाणां लक्षणं ह्येवं शिलाग्रहणमारभेत्  ८९
शोधयित्वा भुवं पश्चात्तत्समीपप्रदेशकम्
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयेत्  ९०
गंधं पुष्पं तथा धूपं दीपं नैवेद्यमेव च
सद्यादिब्रह्मभिर्दत्वा शिलां वस्त्रेण वेष्टयेत्  ९१
तस्यैव पूर्वभागे तु होमकर्मसमारभेत्
समिदाज्येन चरुणा प्रत्येकन्तु शताहुतिः  ९२
हृदयेन समिद्धोमं सर्पिरीशानमन्त्रतः

अघोरेण चरुं हुत्वा प्रत्येकं व्याहृतिर्हुनेत् ९३
ततस्त्विष्टकृतं हुत्वा परिषेचान्तमाचरेत्
शिलां प्रदक्षिणं कृत्वा दिग्देवानां बलिन्ददेत् ९४
एकरात्रं वसेत्तत्र स्वप्नेमाणवकं जपेत्
ओन्नमश्शंभवे त्रिणेत्राय पिंगलाय महात्मने ९५
वामाय विश्वरूपाय स्वप्नाधिपतये नमः
आचक्ष्महे महादेव प्रसन्नोसितवान्तिकम् ९६
स्वप्नजातानि सर्वाणि हृदिस्थानि भवान्तु मे
ओं हिलिहिलि शूलपाणये स्वाहा ९७
दृष्टं स्वप्नं द्विजश्रेष्ठो ब्रांहणेभ्यो निवेदयेत्
दुस्वप्नञ्चेज्जपेद्धीमान् पाशुपतं सहस्रकम् ९८
वस्त्रांगुलीयकैश्चैव तोषयेत् गुरुशिल्पिनौ
शिलां सम्यक् गृहीत्वा तु लिंगं कुर्यात्तु बुद्धिमान् ९९
गर्भं विंशतिभागैश्च भजेद्दशाधमं भवेत्
रुद्रांशं मद्ध्यमं ज्ञेयं रव्यंशं चोत्तमं भवेत् १००
ज्येष्ठं कन्नयसयोर्मद्ध्ये एतत् गर्भमिति स्मृतम्
विभजेदष्टधा गर्भं समं सूत्रविचक्षणः १०१
एवं कृते भवेद्यत्र न च लिंगानि सुव्रत
गर्भमानमिति प्रोक्तं हस्तमानमथ शृणु १०२
एकादि नवहस्तान्तं षडंगुलविवर्द्धनात्
आयामास्तु त्रयस्त्रिंशत् संख्यायाः परिकीर्तिताः १०३
एकहस्तप्रमाणन्तु हीनलिंगन्न कारयेत्
पञ्चहस्तं समारभ्य हर्म्यमानं विशेषतः १०४
हस्तमानेन लिंगन्तु कारयेद्देशिकोत्तमः
एवं लिंगोच्छ्र्यं प्रोक्तं वक्ष्ये लिंगस्य विस्तरम् १०५
लिंगस्योत्सेधमानार्थं अष्टधा विभजेत्ततः

विष्कंभः पञ्चभागस्स्यादधस्ताच्चतुरश्रकम् १०६
अधस्ताच्चतुरश्रन्तु ब्रह्मभागं तदुच्यते
अष्टाश्रं मद्ध्यमं ज्ञेयं विष्णुभागं तदुच्यते १०७
ऊर्ध्वे सुवृत्तभागन्तु रुद्रांशमिति कीर्तितम्
नपुंसकन्तु ब्रंहांशो विष्णवंशस्त्रयविद्यते १०८
तत्पुमानूर्ध्वभागस्स्यादेवं संकल्पितं त्रिधा
अर्द्धं कर्णस्य कर्णाभ्यामष्टमष्टाश्रमांकितम् १०९
अथवान्यप्रकारेण वक्ष्ये वस्वश्रकस्य तु
व्यासप्तांशदश त्र्यंशमद्ध्यपट्टमथापि वा ११०
अष्टाश्रन्तु भवेत्सिद्धं षोडशाश्रमतः परम्
द्विचतुर्भागमद्ध्ये तु बिन्दुरेखादि कल्पितम् १११
अष्टाश्रस्यैकभागोर्ध्वं कोणात्तुलाञ्छयेत्ततः
षोडशाश्रं भवेत्सिद्धमश्रच्छेदेन वर्तुळम् ११२
यत्तु लिंगस्य चायामं नाहं तत्सममुच्यते
ज्येष्ठोत्तमन्तु लिंगस्य रुद्रभागस्य नाहकम् ११३
नाहार्द्धमष्टधा कृत्वा विष्कंभं भूतभागिकम्
ज्येष्ठोत्तमस्य लिंगस्य विस्तारं हि विधीयते ११४
यत्तारं पञ्चभागैकं विभजेद्वसुभागिकम्
विस्तारमष्टलिंगानां एकैकन्तु विहीनकम् ११५
त्रिगुणीकृत्य विष्कंभं भजेत्तारन्तु पञ्चधा
भागन्तेन समायोज्य सर्वेषां नाहमुच्यते ११६
समखण्डं वर्द्धमानं शैवाधिक्यं त्रिराशिकम्
लिंगं चतुर्विधं प्रोक्तं द्विजातीनामनुक्रमात् ११७
वर्द्धमानं शिवाधिक्ये सर्वजात्यर्हके स्मृता
चतुः पञ्चषडंगन्तु पञ्चषट्सप्तभागिकम् ११८
वर्द्धमानमिति प्रोक्तं विप्रादीनामनुक्रमात्

सप्तसप्ताष्टभागन्तु पञ्चपञ्चषडंगकम् ११९
वेदवेदशरांशन्तु गुणानलयुगांशकम्
एवं शिवाधिकं प्रोक्तं द्विजातीनां क्रमात्गृहे १२०
किञ्चिदस्मिन् विशेषोस्ति समखंडस्य तं श्रुणु
लिंगस्योत्सेधमानन्तु चतुर्भागेन भाजयेत् १२१
आयामार्द्धं भजेदष्टविष्कंभन्तु शरांशकम्
पद्मतारं भवेद्विष्णुस्तस्मात्तद्विगुणो हरः १२२
अग्रे मूले च मद्ध्ये च प्रमाणं सर्वतस्समम्
आयामन्नवधाकृत्वा वृत्तं षट्भागमुच्यते १२३
सप्तभागमथाष्टाश्रं तुर्यश्रं वसुभागिकम्
त्रैराशिकमिति ज्ञेयं धनधान्य सुखावहम् १२४
धारालिंगमथो वक्ष्ये श्रूयतान्तु प्रजापतेः
पादादूर्ध्वकपर्यन्तं धारालिंगं प्रशस्तकम् १२५
अधोवेदाश्रकं कुर्यात्तदूर्ध्वे त्वष्टधारया
एतत् द्विजमहाप्राज्ञ सर्वकामप्रसाधनम् १२६
ऊर्ध्वे षोडशधाराञ्च भोगार्थी लभते सुखम्
एवं क्रमेण संयुक्तं धारालिंगमिति स्मृतम् १२७
शिरसो वर्तनं कुर्यात् तच्चतुर्विधमुच्यते
छत्राकारन्तु विप्राणां नृपाणां कुक्कुटाण्डकम् १२८
वैश्यानाञ्चैव खण्डेन्दु शूद्राणां तृपुषाकृतिः
कृत्वा लिंगं शिरस्तारं षट्भागेन समं बुधः १२९
सार्द्धेनैव द्विभागेन चित्रितं तृपुषाकृतिं
विस्तारन्तु त्रिधाकृत्वा त्रिभागेन तु वर्तितुम् १३०
अर्द्धचंद्र इति प्रोक्तं सर्वकामफलप्रदम्
कुक्कुटाण्डं भवेत्तत्र विस्तारार्द्धेन वर्तनम् १३१
अष्टधाविभजेत्तारमद्ध्यर्द्धेन तु वर्तितम्

चंद्रशीर्षकमित्युक्तं सर्ववर्णेषु योग्यकम् १३२
मानहीने महाव्याधिरधिके शत्रुवर्द्धनम्
नाहहीने तु दारिद्र्यं शिरोहीने धनक्षयम् १३३
मूलहीने विनाशं स्यात्सूत्रहीने कुलक्षयम्
तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम् १३४
मुखलिंगं ततो वक्ष्ये सर्वकामार्थसाधनम्
पूजाभागं समस्तन्तु द्विषष्ट्यंशं भजेत्क्रमात् १३५
त्रयोदशांगुलार्द्धन्तु मुखमेकं प्रकीर्तितम्
शराननञ्चतुर्वक्त्रं त्रिवक्त्रं चैकवक्त्रकम् १३६
चतुर्दिक्षु चतुर्वक्त्रं त्रिवक्त्रं पृष्ठहीनकम्
कुर्वेकवक्त्रमूर्ध्वे तु मुखमानेन बुद्धिमान् १३७
मकुटेनोर्ध्ववक्त्रन्तु त्रयोदशार्द्धांगुलेन तु
ग्रीवामूलात्स्तनान्तं स्यादर्द्धाधिकं त्रयोदश १३८
स्तनसूत्रविधिर्यावत्कारयेत् द्विभुजान्वितम्
प्रतिमालक्षणोक्तेन मार्गेणैव समाचरेत् १३९
शेषं लिंगवदाकारं कारयेल्लक्षणान्वितम्
वक्त्रलिंगप्रमाणन्तु प्रोक्तं पीठमथ श्रुणु १४०
स्त्रीशिलां तु परिग्राह्य पीठं कुर्याद्विशेषतः
लिंगविस्तारमानेन त्रिगुणं पीठविस्तृतम् १४१
कर्णा द्विगुणमेवं वा त्रिगुणं पीठविस्तृतम्
कर्णस्य द्विगुणार्द्धं वा लिंगदैर्घ्य समन्तु वा १४२
गर्भगेहं त्रिधाभज्य भागैकं पीठविस्तृतम्
लिंगमानेन हर्म्यं स्यात् लिंगमानेन पिण्डिका १४३
पूर्वाकृतिर्यथापीठं तथाकुर्यात्पुनःपुनः
अन्याकृतिर्न कर्तव्या कृता चेत् कर्तृनाशिनी १४४
वेदाश्राष्टाश्रमानन्तु विभजेदष्टधा पुनः

गुणभागमधस्त्यक्त्वा बाणांशं पीठकोच्छ्र्यम्  १४५
ब्राह्मच वैष्णवमानन्तु षोडशांशेन भाजयेत्
सप्तभागमधो मुक्त्वाग्रहांशं पिण्डकोच्छ्र्यम्  १४६
पीठोत्सेधन्तु यन्मानं विकारांशेन भाजयेत्
पञ्चांशं पट्टिका प्रोक्ता बाणांशं पद्मपिण्डकम्  १४७
अंशद्वयेन वृत्तं स्यात् वेदांशं ऊर्ध्वपद्मकम्
तस्योर्ध्वे पट्टिका द्वाभ्यामंशेन घृतवारिणी  १४८
पीठतारं त्रिभागैकं नाळनिर्गममुच्यते
तत्समं मूलविस्तारं तत्त्रिभागैकमग्रतः  १४९
उत्तरे जलमार्गं स्यात् सोमस्याभिमुखं भवेत्
मद्ध्ये खातं त्रिभागैकं क्रमेण कृशता भवेत्  १५०
एवं तु पद्मपीठं स्यात् भद्रपीठमथोच्यते
पूर्ववत् षोडशांशेन पीठोत्सेधं भजेत्ततः  १५१
व्योमांशं पादुकोत्सेधं वेदांशं जगती भवेत्
अन्यांशं वृत्तमित्युक्तं भागैकेन तु पट्टिका  १५२
गुणांशं कर्णमित्युक्तं भागैकेन तु पट्टिका
महापट्टिद्वयांशेन घृतवारितथांशकम्  १५३
एवं स्यात् भद्रपीठन्तु सर्वलिंगेषु योग्यकम्
एकविंशति भागेन पीठोत्सेधं विभाजयेत्  १५४
अंशेन पादुकां कुर्याच्चतुर्द्धा जगतीं कुरु
कर्णमेकेन कर्तव्यं पद्ममेकांशमेव च  १५५
तत्कुंभं त्रिभिरंशैश्च पद्ममेकांशमेव च
कुर्यादेकेन कंपन्तु पञ्चांशेनैव कर्णकम्  १५६
कंपमेकेन कर्तव्यं पद्ममेकेन कारयेत्
महापट्टिद्विभागाभ्यां पद्ममेकांशकेन तु  १५७
तस्योर्ध्वे पट्टिकैकेन घृतवारितथांशकम्

विजयन्नामपीठन्तु सर्वशान्तिकरं परम् १५८
विभजेत्पिंडिकोत्सेधं अष्टादशविभागतः
एकेन पादुकां कुर्यादद्धयर्द्धं कंपपद्मयोः १५९
जगती चतुरंशं स्यात् गुणांशेनैव वप्रकम्
तदूर्ध्वे कंपमेकांशं द्वाभ्यां वै पट्टिका भवेत् १६०
पद्ममेकेन कर्तव्यमर्द्धेन घृतवारिणा
स्वायंभुवमिति प्रोक्तं सर्वदेवेषु योग्यकम् १६१
विकारांशेन विभजेत् भागेनोपानमुच्यते
पद्मतुंडद्विभागेन कंपमेकेन कारयेत् १६२
सप्तांशं कर्णमित्युक्तं द्वाभ्यां वै कंपपद्मकौ
अद्धयर्द्धेन महापट्टी पद्ममर्द्धेन कारयेत् १६३
कंपमर्द्धेन कर्तव्यमर्द्धेन घृतवारिणा
स्थंडिलं स्यादिदं पीठं सर्वदेवेषु पूजितम् १६४
भागार्द्धं तत्त्रिपादं वा समं वा शेषनिर्गमम्
मूलादष्टांशमग्रे तु हीनं स्यात् पद्मपीठके १६५
सर्वेषामेव पीठानां उपानात् पीठविस्तरम्
पीठिकालक्षणं प्रोक्तं पादशैलविधिं श्रृणु १६६
नपुंसकशिलां ग्राह्य पादाधारञ्च कल्पयेत्
ज्येष्ठमद्धयमकानिष्ठं त्रिविधं पादशैलकम् १६७
लिंगायामसमं शैलं उत्तमं परिकीर्तितम्
यस्य लिंगस्य विस्तारं द्विगुणं पादशैलकम् १६८
मद्धयमं त्विति विज्ञेयं अद्धयर्द्धं कन्नयसं भवेत्
समं वै चतुरश्रन्तु तदर्द्धं बहुलं भवेत् १६९
प्रासादमध्यसूत्रात्तु किञ्चिद्वामेति योजयेत्
मद्धयेमेत्ववटं कुर्याल्लिंगविस्तारमानतः १७०
अथवाश्वभ्रविस्तारं गर्भद्मार्द्धार्द्धमुच्यते

ब्रंहभागप्रवेशं हि ज्ञात्वा ब्रह्मशिलोच्छ्रयम् १७१
श्वभ्रावकाशं सन्त्यज्य ब्रंहभागान्तमेव च
नन्द्यावर्तशिलां योज्य चत्वारियुगदिक्षु च १७२
पूर्वपश्चिममायामं तथा वै दक्षिणोत्तरम्
पश्चात्पश्चिमपूर्वन्तु तत्पश्चादक्षिणोत्तरम् १७३
लिंगस्याद्धयर्द्धतारेण दैर्घ्यं तस्यार्द्धं विस्तृतम्
तदूर्ध्वे पिंडिकां योज्य बंधयेदष्टबंधनैः १७४
पादाधारपदे मद्ध्ये स्थापयेल्लिंगमुत्तमम्
ताश्च तां पुंशिलां सक्तां शैलचूर्णोऽपि बन्धयेत् १७५
प्रदक्षिणक्रमेणैव योजयेत्तु विशेषतः
शैललिंगमिति प्रोक्तं रत्नलिंगविधिं श्रुणु १७६
द्विविधं तत्समाख्यातं चलञ्चैवाचलन्तथा
स्थिरं प्रासादलिंगन्तु चलं सर्वत्र पूज्यते १७७
मरतकं पुष्टिदं ज्ञेयं पद्मरागं धनार्त्थकम्
आयुष्यवृद्धिवैडूर्यं स्फटिकं पुत्रवर्द्धनम् १७८
स्तंबनं पुष्यरागस्स्यात् दृष्टवश्यं प्रवाळकम्
आकर्षणं स्यात् विद्व्राख्यं माणिक्कं सर्वसिद्धिदम् १७९
इन्द्रनीलन्तु मोक्षार्थं रत्नजानां फलं भवेत्
अंगुल्यादिवितस्त्यन्तं कुर्याल्लिंगन्तु रत्नजम् १८०
आयामसदृशन्नाहं शिरोवर्तनसंयुतम्
स्वप्रमाणेन कर्तव्या रत्नलिंगस्य पिण्डिका १८१
पिण्डिकास्वस्वयोनिस्स्यात् तदभावे हिरण्मयम्
रजतं ताम्रकञ्चैव अधमञ्चेति कीर्तितम् १८२
चतुरश्राथ वृत्ता वा चललिंगस्य पिण्डिका
आयामद्विगुणार्द्धं वा द्विगुणं त्रिगुणन्तु वा १८३
विस्तारं तत्समं ज्ञेयं शेषं पूर्वोक्तवत् कुरु

लिंगायामं त्रिभागैकं पीठमद्ध्ये निवेशयेत्  १८४
सर्वत्र वृत्तकं लिंगं त्रिभागं सूत्रवर्जितम्
रत्नलिंगं समाख्यातं लोहजं लिङ्गमुच्यते  १८५
सौवर्णेन कृतं लिङ्गं भुक्तिमुक्तिफलप्रदम्
ताम्रजं पुत्रदं प्रोक्तं राजतं श्रीकरं भवेत्  १८६
सुखदं कांस्यमित्युक्तं पैत्तळं रोगनाशनम्
आयसंपुत्रनाशन्तु त्रिलोहं मारणं भवेत्  १८७
तथा चत्रपुसीसन्तु कल्पयेत्कल्पवित्तमः
रत्नजस्योक्तमार्गेण सर्वकर्मसमाचरेत्  १८८
पञ्चवार्षिककां कन्यामलंकृत्यविशेषतः
तया संस्पर्शितं लिङ्गं तन्मुखञ्चेति कीर्तितम्  १८९
लोहलिङ्गमिति प्रोक्तं पार्त्थिवं लिंगमुच्यते
अपक्वञ्चैव पक्वञ्च पार्त्थिवं लिङ्गमुच्यते  १९०
पार्त्थिवस्य तु लिंगस्य शैलवन्मानमिष्यते
यावदुत्सेधमानन्तु तावद्वृत्तमिहोच्यते  १९१
तालनिम्नगमेकांशं एकांशं पीठबन्धनम्
त्रिसूत्रेण विना कुर्याच्चतुरष्टाश्रवर्जितम्  १९२
पर्वताग्रेन दीतीरे पुण्यक्षेत्रे मनोरमे
लिङ्गार्त्थं मृत्तिकाग्राह्या प्रशस्ता सर्वकामदा  १९३
श्वेतरक्ता तथापीता कृष्णा चैव मनोरमा
श्लक्ष्णञ्चूर्णं ततः कृत्वा पञ्चगव्येन मर्दयेत्  १९४
कपिलन्तु घृतं क्षीरं दधिवा तैलमेव च
यवगोधूमजं चूर्णं माषचूर्णं तथासमम्  १९५
आहृत्य सर्वचूर्णानि मृत्तिका सहितानि च
मर्दयेत्तु विशेषेण श्यामलाक्षाञ्च कुन्दुरुम्  १९६
श्रीवेष्टं गुग्गुलुञ्चैव सर्जगंधरसं तथा

बिल्वोद्भवं रसं ग्राह्यमेकीकृत्य विमर्दयेत् १९७
पञ्चनिर्यासससंयुक्तं मासपत्तोषितन्तथा
ततो लिंगं प्रकुर्वीत श्रेष्ठमद्धयमकन्नयसम् १९८
पार्त्थिवं लिंगमाख्यातं पिरिडकां तस्य मृरमयीम्
लिंगविस्तारमानेन त्रिगुणं पीठविस्तरम् १९९
पूजयेत्तु प्रयत्नेन धर्मकामार्त्थमोत्तदम्
शान्तिपुष्टिकरं नित्यं पृथिवी राज्यसिद्धिदम् २००
एवं यः कुरुते मर्त्यस्स पुरयाङ्गतिमाप्नुयात् २०१
इति कारणागमे प्रतिष्ठा तन्त्रे लिंगलत्तणविधिपटलो नवमः

मूर्द्ध्नीष्टकाविधिपटलप्रारंभः

अथातस्संप्रवत्त्यामि मूर्द्धशैलेष्टकाक्रमम्
यत्काले यत्समाप्तन्तु विमानं लत्तणान्वितम् १
महानस्यान्तकं वापि शक्तिध्वजसमन्तु तत्
मूर्द्ध्नीष्टकानां तत्काले विन्नयसेद्विधिपूर्वकम् २
नपुंसकोपलेनैव कारयेल्लत्तणान्वितम्
विकारांगुलमायामं तस्यार्द्धञ्च हलाश्शुभाः ३
तस्यार्द्धं नीव्रसंयुक्तं चतस्रस्त्वैकभूमिका
द्विभूमेरंगुलं वृद्ध्या रविभूम्यन्तकं क्रमात् ४
उपलंशैलके योज्यमिष्टकाधाममिष्टका
आदित्यांगुलमायामष्षडंगुलसुविस्तृता ५
नीव्रं युगांगुलेनैव शेषं पूर्ववदाचरेत्
एवं मूर्ध्येष्टकां कुर्यात्स्तूपिदराडन्तु कारयेत्
असनं खादिरं वापि मधुकं पद्मतुंडकम्
तिलकं त्रीणिसारञ्च चन्दनं चंपकं तथा ६
एतैर्वृत्तैः प्रकर्तव्यं स्तूपिदंडं विशेषतः

पादायामसमं दीर्घं पादविष्कंभविस्तृतम्  ७
स्तंभायामं त्रिधाकृत्वा मूलांशं चतुरश्रकम्
तस्योर्ध्वे वृत्तकं कुर्याद्विभागेन विशेषतः  ८
अग्रमंगुलविस्तारमानुपूर्वात्कृशन्तथा
शिखिपादं ततः कुर्याद्विस्तारं त्रिगुणायतम्  ९
विस्तारसमविस्तारं योजयेत्तद्वयं समम्
दंडमूले शिखीपादं सुस्निग्धं सुदृढं कुरु  १०
ताम्रेण सायसेनाथ वेष्टयदंडाग्रमूलकौ
पूर्वे वा चोत्तरे वापि मंटपञ्चाष्टहस्तकम्  ११
विकारांघ्रि समायुक्तं युगद्वारसमायुतम्
मंटपं तत्त्रिभागैकं मद्ध्यमे वेदिकां कुरु  १२
तालमात्रं तलोत्सेधं दर्पणोदरसन्निभम्
दर्भमालासमायुक्तं वितानध्वजसंयुतम्  १३
मुक्तादाम्नास्वलंकृत्य तरंगेणैव वेष्टयेत्
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः  १४
वेदिकायाश्च तन्मद्ध्ये चाष्टद्रोणैश्चशालिभिः
तदर्द्धैस्तंडुलैश्चैव तदर्द्धैश्च तिलैरपि  १५
स्थण्डिलं कारयेधीमान् तन्मद्ध्ये नळिनं लिखेत्
लाजपुष्पकुशैश्चैव विकिरेत्तु विशेषतः  १६
प्रोक्षयेत्पञ्चगव्येन शिलाचेष्टकयापि वा
प्रोक्षयेद्धृदयेनैव शुद्धतोयेन देशिकः  १७
गैरिकेन लिखेद्धीमानक्षराणि विशेषतः
शकारं पूर्वभागे तु षकारं दक्षिणे लिखेत्  १८
सकारं पश्चिमे लिख्य हकारञ्चोत्तरे लिखेत्
बिन्दुनादसमायुक्तमादौ प्रणवसंयुतम्  १९
सौवर्णमौर्णसूत्रं वा अथ कार्पासकन्तु वा

कौतुकं बंधयेद्धीमान् प्रत्येकं वस्त्रवेष्टितम् २०
गंधपूष्पादिभिः पूज्य स्वस्वबीजेन देशिकः
वेदिकोपरि संस्थाप्य ऐन्द्रादिसौम्यकान्तकम् २१
नैवेद्यं दापयेत्तासां तांबूलञ्च निवेदयेत्
स्नापयेत्पञ्चगव्येन स्थाप्यदंडं विशेषतः २२
शिवांभसा तु संस्नाप्य यजेदीशानमन्त्रतः
कौतुकं बंन्धयित्वा तु वस्त्रेणैव तु वेष्टयेत् २३
स्थण्डिलस्योत्तरे देशे स्तूपिदंडन्तु विन्यसेत्
तन्तुना चित्रितान् कुंभान् गन्धतोयेन पूरितान् २४
सकूर्चान्सापिधानांश्च सवस्त्रान् हेमसंयुतान्
लोकपालाधिपां स्थाप्य चाष्टौ वै वेदिकोपरि २५
गंधपुष्पादिभिः पूज्य पूर्वादिक्रमयोगतः
वालुकाभिश्चतुर्दिक्षु कुर्यात्स्थण्डिलमुत्तमम् २६
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमाचरेत्
सद्येनसमिधा हुत्वा आज्यं मूलेन होमयेत् २७
अघोरेण चरुं हुत्वा लाजं वै हृदयेन तु
तिलं हुत्वा तु शिखया सर्षपं कवचेन तु २८
बीजमुख्येन माषन्तु प्रत्येकं पञ्चविंशतिः
होमं कृत्वा विशेषेण द्रव्यान्ते व्याहृतिं हुनेत् २९
जयादिरभ्याधानञ्च राष्ट्रभृच्चक्रमाद्धुनेत्
स्विष्टमग्नेति मन्त्रेण जुहुयात् तदनन्तरम् ३०
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः
नववस्त्रोद्धृतोष्णीषश्शुक्लमाल्यैर्विभूषितः ३१
हेमांगुलीयकटकैः कुंडलाद्यैरलंकृतम्
मुहूर्ते समनुप्राप्ते स्थापनन्तु समारभेत् ३२
आचार्यं पूजयेत्तत्र वस्त्रांगुलीयकादिभिः

सर्वातोद्य समायुक्तं स्वस्तिमंगळवाचकैः ३३
ब्रह्मघोषैस्समायुक्तं सर्वालंकारसंयुतम्
अनन्यमानसो भूत्वा स्थापयेत्स्थपतिस्सह ३४
सर्वाश्च बंधयेत्तासामग्रं प्रतिदिशिस्थितः
न्यस्त्वापूर्वादिषूर्ध्वे तु प्रागग्रविधिना क्रमात् ३५
तन्मद्ध्ये विन्यसेद्रत्नमिंद्रनीलमथेंद्रके
मरतकं याम्यदेशे तु स्फटिकं वारुणे तथा ३६
वज्रं सौम्ये तु विन्यस्य पद्मरागन्तु पावके
वैडूर्यं नैर्ऋते देशे मुक्तां वायुप्रगोचरे ३७
प्रवाळमैशे विन्यस्य माणिक्कं मद्ध्यमे न्यसेत्
ईशानेन तु मन्त्रेण स्तूपीदंडं ततोपरि ३८
तन्मूले प्रोक्षयेन्मंत्री कुंभोदेन विशेषतः
पूजयेत् गंधपुष्पाद्यैस्सुस्निग्धं बंधयेत्ततः ३९
स्तूपीदंडं त्रिभागैकं द्विभागेन तु बंधयेत् ४०
इति कारणे प्रतिष्ठातन्त्रे मूर्ध्नीष्टकाविधिपटलो दशमः

प्रतिमालक्षणविधिपटलप्रारंभः

ततः परं प्रवक्ष्यामि प्रतिमालक्षणं श्रुणु
त्रिविधं व्यक्तमव्यक्तं व्यक्ताव्यक्तं तथैव च १
व्यक्तन्तु सकळाकारं अव्यक्तं लिंगमुच्यते
मुखलिंगमिति प्रोक्तं व्यक्ताव्यक्तं प्रजायते २
अधुनाप्रोच्यते सर्वं सकळानान्तु लक्षणम्
चलं चलाचलञ्चैव अचलञ्च त्रिधाभवेत् ३
चलं धातुमयं ज्ञेयं शैलं चलाचलं स्मृतम्
अचलं मृण्मयं ज्ञेयं भित्तिचित्र पटन्तथा ४
चित्रहीनं चलं शैलमचलं चित्रयुक्सदा

गर्भद्वारे च हस्ते च हर्म्ये स्तंभे च लिङ्गके ५
अंगुले चैव तुंगानि जनयेत्तु विशेषतः
गर्भमानवशान्मानं द्विविधेन प्रकीर्तितम् ६
गर्भगेहं त्रिधाभज्य एकैकन्तु त्रिधा भजेत्
उत्तमत्रयमग्रे तु मद्ध्यमे मद्ध्यमत्रयम् ७
अधमत्रयमधस्तान्नवमानमुदीरितम्
अथवान्यप्रकारेण गर्भमानं वदाम्यहम् ८
गर्भाद्विंशतिभागेन दशहस्तन्तु कन्नयसम्
रुद्रांशं मद्ध्यमं ज्ञेयं रत्थ्यंशं चोत्तमं भवेत् ९
द्वारोस्त्ये सममानन्तु उत्तमं तत्प्रकीर्तितम्
ग्रहभागैकहीनन्तु मद्ध्यमं प्रतिमोच्छ्रयम् १०
अष्टभागैकहीनं स्यात् अधमं प्रतिमादयः
त्र्यहस्तमधमं ज्ञेयं पञ्चहस्तन्तु मद्ध्यमम् ११
उत्तमं नवहस्तन्तु हस्तमानमुदीरितम्
एकादिनवहस्तान्तमधमाद्युत्तमान्तकम् १२
नवधामानमित्युक्तं हस्तमानं विशेषतः
त्रयोदश करादूर्ध्वमेकत्र्यंशकरान्तकम् १३
हस्तमानेन कर्तव्यं क्षुद्रहर्म्येन कारयेत्
आदिप्रासादविस्तारं पात्बाह्यं सूत्रनिश्चितम् १४
तदर्द्धमुत्तमोत्सेधं तस्मादर्द्धन्तु मद्ध्यमम्
तदर्द्धमधमं ज्ञेयं प्रतिमा हर्म्यमानतः १५
प्राचीरुत्तरसीमान्तं स्तंभमानमथोत्तमम्
रंध्रभागैकहीनं यत्मद्ध्यमं समुदाहृतम् १६
अष्टांशहीनमधमं स्तंभमानं प्रकीर्तितम्
पूजाभागसमं मानं कन्नयसं प्रतिमोदयम् १७
द्विगुणं मद्ध्यमं ज्ञेयं नाहमानमथोत्तमम्

लिंगनाहं कनिष्ठन्तु द्विगुणं मद्ध्यमं भवेत्  १८
द्विगुणं मध्यमं प्रोक्तं लिंगनाहवशात्कुरु
तिथ्यंगुलं कनिष्ठन्तु पञ्चविंशति मद्ध्यमम्  १९
पञ्चत्रिंशति मात्रन्तु उत्तमञ्चेति कीर्तितम्
लब्धमानेन जात्यंशं योजयेत्तु विचक्षणः  २०
चतुराशीति षष्टी च चतुर्विंशच्च षोडशः
भजैकांशं समायोज्य गणयेद्वसुभिः क्रमात्  २१
सप्तविंशतिभिर्भक्ते शिष्टं श्वेतादिभिर्भजेत्
तेनैवांशेन संयुक्तं मानं जात्याहकं भवेत्  २२
आयव्ययर्क्षवाराष्ट योन्यंशकानि लक्षयेत्
शतात्त्रिंशदंशादि बेरमानं भजेत्क्रमात्  २३
व्योमांशन्तु समायोज्य यावत्तत्सुशुभोदयम्
वसुभिर्गणिते त्वेकं हृदेत्वायं विनिर्दिशेत्  २४
रसैस्तु गुणिते दिग्भिर्भाजिते व्ययमादिशेत्
वसुभिर्गुणिते सप्तविंशत् भक्ते तु संभवेत्  २५
शिष्टमाश्वयुगाद्यन्तु नक्षत्रं गणयेत्क्रमात्
रंध्रैस्सगुणिते सप्त हृतेस्सूत्रादिवाकरः  २६
गुणैस्संगुणयवसुभिर्भूतयोनिरुदाहृतम्
शिष्टन्तु गणयेन्मंत्री अष्टयोनिध्वजादिकम्  २७
वेदैर्गुणहृते रंध्रैस्तस्कराद्यंशकं क्रमात्
आयाधिक्ये धनादिस्स्याद्व्ययाधिक्ये धनक्षयम्  २८
आयाधिक्यं व्ययं हीनं तन्मानं शुभदं स्मृतम्
गणयेत्तु द्विभाक्कर्ता नृपवास्तुदिनान्तकम्  २९
शुभानिजन्मसंपत्तिक्षेमं साधकमैत्रके
तथापरममैत्रञ्च वर्जितान्यन्यभानि वै  ३०
वारेषु सितसोमज्ञ गुरवश्शुभदा स्मृताः

अशुभारविसौरारा शुभयोगे शुभप्रदाः ३१
योनिषु ध्वजसिह्माख्यो वृषो हस्ती शुभा स्मृता
धूमश्च खरकाकांश्च वर्जयेत्तु प्रयत्नतः ३२
ध्वजश्चेदर्थसिद्धिस्स्यात् धूमश्चेदग्निनाभयम्
सिंहोपिविजयः प्रोक्तः कुकुरः कलहो भवेत् ३३
वृषभं पुत्रवृद्धिस्स्यात् स्थानभ्रंशन्तु गर्दभः
गजस्तुराष्टवृद्धिस्स्यात् काकोदुर्भिक्षसंभवः ३४
अंशकेषु च भुक्तिश्च शक्तिश्चैव विशेषतः
तथाविज्ञावनीनाथो निहितस्तु समृद्धिकम् ३५
शुभान्येतानि चान्यानि वर्जयेत्तु प्रयत्नतः
तस्करो नाशनं भुक्तिभोगदं शक्तिरिष्टदम् ३६
जयं वित्तावनीताथो रोगवृद्धि नपुंसकम्
निर्भीतश्रीप्रदं ज्ञेयं दरिद्रो धननाशनम् ३७
समृद्धिस्सर्वसिद्धिस्स्यात् पापं राष्ट्रविनाशनम्
एवं परीक्ष्यबहुधा कारयेल्लक्षणान्वितम् ३८
आयांशञ्चैव जात्यंशं तेन मानेन योजयेत्
भक्त्वामानांगुलेनाथ षट् शुभानि परीक्षयेत् ३९
ज्ञात्वा युक्तांगुलोच्छेदं वृद्धयाहान्नया प्रयोगवित्
आयादिसंपदर्थन्तु गृह्णीयात्तु विचक्षणः ४०
लोहजत्वेमधूच्चिष्टमग्निनार्द्री कृतन्तु यत्
वस्त्रेण शोधयेत् सर्वं दोषन्त्यक्त्वा तु शिल्पिना ४१
सर्वालंकारसंयुक्तं मण्टपे लक्षणान्विते
स्थण्डिलं कारयेत्तत्र अष्टद्रोणैश्चशालिभिः ४२
तन्मद्धये नळिनं लिख्यसाष्टपत्रं सकर्णिकम्
कुशैः पुष्पैः परिस्तीर्य तस्योर्ध्वे फलकोपरि ४३
मुहूर्ते समनुप्राप्ते गृहीता याममात्रतः

सिद्धेन प्रतिमाकारं शिल्पिना कारयेद्बुधः ४४
तस्य दक्षिणभागे तु शान्तिमन्त्रं जपेत् गुरुः
बिंबं संपूजयेत् पश्चात् गन्धपुष्पादिभिर्हृदा ४५
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः
शिल्पिनं पूजयेत्पश्चाद्धेमांगुलीयवस्त्रकैः ४६
बेरायामं परिग्राह्य तालं संख्या क्रमाद्भजेत्
दशतालन्नवतालं वा वसुतालर्षितालकैः ४७
रसतालेषु सहिता युगतालं त्रितालकम्
एवं तालक्रमं प्रोक्तमेकैकं त्रित्रिभेदकम् ४८
उत्तमं मद्ध्यमञ्चेति कन्यसं तालकं प्रति
दशतालोत्तमं वृद्धि चतुर्विंशच्च तालकम् ४९
एतस्य मध्यभेदश्च त्रितालस्यार्द्धमात्रकम्
त्रयोविंशति विख्याता भेदं प्रतियुगांगुलम् ५०
क्रमाद्धीनं प्रकर्तव्यमेवं तालक्रमं भवेत्
कोष्ठेन दशतालेन ब्रह्मविष्णुमहेश्वरान् ५१
उमां सरस्वतीं दुर्गां सप्तमातृ उषाम्महीम्
ज्येष्ठां लक्ष्मीञ्च कर्तव्यं दशतालस्य मद्ध्यतः ५२
ऋषीणाञ्चाश्विनी चैव आदित्येन्दुर्गुरुस्तथा
आर्यं शतमखञ्चैव चण्डेशं क्षेत्रपालकम् ५३
दशतालकनिष्ठेन कारयेत्तु विचक्षणः
विद्येशान् लोकपालांश्च अष्टमूर्तीन् वसूंस्तथा ५४
नवतालोत्तमेनैव कारयेल्लक्षणान्वितम्
अन्यांश्च सर्वदेवांश्च नवतालोत्तमेन तु ५५
यक्षानप्सरसश्चैव अस्त्रमूर्तीमरुद्गणान्
नवतालस्य मद्ध्येन विद्याधरांस्तथा कुरु ५६
राक्षसान्यातुधानांश्च गन्धर्वान् सिद्धचारणान्

असुरांश्च पितॄंश्चैव नवतालाधमेन तु ५७
अष्टतालेन मर्त्यांश्च पिशाचास्सप्ततालतः
कुब्जकान्रसतालेन शरतालोत्तमेन च ५८
विघ्नेशं कारयेत्तस्य मध्यमेनाधमेन च
भूतरूपाणि कर्तव्यं युगतालेन बालकान् ५९
किन्नरान् किंपुरुषांश्चैव त्रितालेनैव कारयेत्
यल्लब्धोत्सेधमानन्तु चतुर्विंशच्छतं कुरु ६०
अंगुलं तेषु भागैकं वस्वंशैकं ततो यवम्
तस्याष्टैकांशकं यूकं एकैकन्तं नवांशकान् ६१
लद्मायास्वष्टभागैकन्तद्रोमाग्रमिति स्मृतम्
अंगुलं मात्रमित्युक्तं द्व्यंगुलं कोलकं भवेत् ६२
त्रिमात्रन्तु कलाज्ञेया भागं स्याच्चतुरंगुलम्
तद्द्वयं यवकञ्चैव रव्यंगुलमुखं भवेत् ६३
मुखतालं मुखञ्चैव पर्याय वचनानि च
मानञ्चैव प्रमाणञ्च उन्मानं ह्युपमानकम् ६४
परिमाणं लंबमानं षड्विधं मानमिष्यते
मानं यत्प्रतिमायामं तिर्यङ्गानं प्रमाणकम् ६५
इध्मानं तत्प्रदेशाच्च द्व्यन्तरं ह्युपमानकम्
परिमाणं नाहमानं लंबमानञ्च सूत्रकम् ६६
मानहीने महाव्याधिरधिकेशत्रुवर्द्धनम्
नाहं हीने विनाशं स्यात्तद्वृद्धिस्स्यात्द्मयं करम् ६७
प्रमाणहीने दारिद्र्यमधिकेदारनाशनम्
लंबमानविहीने तु राजाराष्ट्रस्य दोषकृत् ६८
उपमानाधिके हीने शिल्पिनं हन्तिदेशिकम्
सर्वलद्मणयुक्तञ्चेत्सर्वसिद्धिप्रदायकम् ६९
चतुर्विंशच्च तन्मात्रं मूर्द्धाद्यंघ्रि तलान्तकम्

उष्णीषमंगुलं प्रोक्तं केशान्तन्तु कलाभवेत् ७०
सार्द्धत्रयोदशमात्रं मुखमानं विधीयते
केशान्तादक्षिसूत्रान्तं भागञ्चतुर्यवाधिकम् ७१
अक्षिसूत्रात्पुटान्तन्तु तत्समञ्चैव कारयेत्
पुटान्ताद्धनुपर्यन्तं भागञ्चतुर्यवाधिकम् ७२
गळमर्द्धांगुलञ्चैव कर्णं भागसमुच्छ्रयम्
हिक्कादिहृदयान्तञ्च सार्द्धत्रयोदशांगुलम् ७३
हृदादिनाभिपर्यन्तन्तत्समञ्चेति कीर्तितम्
नाभ्यादिमेढ्रमूलान्तन्त्रयोदशांगुलं भवेत् ७४
मेढ्रमूलात्तु जान्वन्तं सप्तविंशतिमात्रकम्
द्विकोलकन्तु जानुस्स्यात् जंघाचाप्यूरुतत्समम् ७५
तलोत्सेधन्तु भागं स्यात्कायमानमिति स्मृतम्
उष्णीषात् पूर्वकेशान्तन्नवमात्रमिति स्मृतम् ७६
उष्णीषात्पृष्ठकेशान्तं सार्द्धत्रयोदशांगुलम्
उष्णीषात्पार्श्वकेशान्तं द्वादशांगुलमुच्यते ७७
द्वयोः कर्णान्तरं पूर्वे एकविंशतिमात्रकम्
कोलकं कर्णविस्तारमायामं यवकं भवेत् ७८
भ्रूसूत्रस्य समञ्चैव श्रोत्रोद्धर्वं परिकीर्तितम्
तत्पृष्ठकर्णयोर्मद्धये त्रयोदशांगुलं भवेत् ७९
पिप्पल्यन्तादधः कुर्यात् भागन्नाळावलंबितम्
नाळात्तनोद्धर्वमात्रञ्च तत्घनं त्रियवं भवेत् ८०
पिप्पली चार्द्धमात्रञ्च सुषिरन्तस्य मानकम्
यस्य कुण्डलसंयुक्तं शेषं मात्रावलंबितम् ८१
कर्णिकाकारवत्कर्णन्नाळात्तु त्रिविशेषतः
द्वियवं कर्णपाली च तत्समं कर्णपट्टिका ८२
मात्रार्द्धकर्णपाली स्यात् अंगुलं कर्णताळकम्

लकारावर्तयोर्मद्धये पिञ्चळी कर्णचूळिका ८३
आपादात्कर्णमूलान्तं सप्तमात्रेण कल्पयेत्
द्विमात्रद्वियवाधिक्य नेत्रायामं विधीयते ८४
षडयवन्नेत्रविस्तारमायामन्तु त्रिधा भवेत्
कृष्णमण्डलमेकन्तत् मद्धयमे सितमण्डलम् ८५
कृष्णमण्डलमद्धये तु दृष्टिर्यूकप्रमाणतः
करवीरो यवं रक्तन्नयनत्रयमूलके ८६
कनीयकायवादीर्घा त्रिवर्णैर्लोचनं युतम्
ऊद्ध्र्वं वर्मस्य मानन्तु यवञ्चार्द्धमधो भवेत् ८७
नवतिः पद्मरोमस्यात् कृष्णाञ्जनसमप्रभम्
भूरेखाचन्नुरेखा च कोलद्वययवाधिकम् ८८
भूरेखामूद्ध्र्वकेशान्तन्तत्समञ्चेति कीर्तितम्
भूदीर्घं रसमात्रन्तु विस्तारं यवमेव च ८९
आरूढचापकृतिवन्मूलाग्रन्तु क्रमात्कृशम्
द्वयंगुलं त्रियवं प्रोक्तं द्वयोर्नेत्रान्तरं स्मृतम् ९०
मूलनासार्द्धमात्रञ्च अर्द्धनासायवांगुलम्
पुटमर्द्धांगुलन्तारन्तत्तुंगं पञ्चभिर्यवैः ९१
सुषिरं त्रियवं तिर्यक् बाह्ये चार्द्धयवं घनम्
पुटान्तात् त्रियवञ्चैव गोजिमानञ्चतुर्यवम् ९२
गोज्याश्च नासिकोत्सेधं कोलकञ्च यवाधिकम्
वंशस्यैवकविस्तारमंगुलञ्चेति कीर्तितम् ९३
पुष्करन्तु यवोत्सेधं पुरस्तात् षडयवन्ततः
द्वियवञ्चार्द्धमेकन्तु पुष्करस्य विधीयते ९४
तिलपुष्पसमाकारं नासाग्रस्य पुटद्वयोः
पुटान्तादधरोष्ठान्तं कोलकं द्वियवाधिकम् ९५
दशनोदृश्यादृश्यं हि द्वात्रिंशत्परिकीर्तितम्

द्वियवन्दन्तविस्तारमुत्सेधन्तत्समं भवेत् ९६
दंष्ट्रायामं यवाधिक्यं सदंशमुकुळाकृतिम्
ऊर्द्ध्वे षोडशदन्तं स्यादधस्तादपितावकी ९७
अधोदशनविस्तारं यवार्द्धन्तारमुच्छ्रयम्
जिह्वायामन्तु षरामात्रं विस्तारं स्यात्तदर्द्धकम् ९८
अधरोष्ठस्य विस्तारमंगुलं स्याद्यवाधिकम्
मुनीयवं रक्ततारमायामं स्याद्विमात्रकम् ९९
भागञ्च त्रियवाधिक्यमास्यतारमिति स्मृतम्
त्रिवक्त्रचोत्तरापाली यवार्द्धञ्चोत्तमं मतम् १००
उत्तरोष्ठस्य विस्तारं त्रियवं परिकीर्तितम्
अनुस्याद्व्यंगुलायामन्तदूर्द्ध्वे तु यवंशुभम् १०१
सप्तायवोच्चमधरं त्रिमात्रं हनुवर्द्धनम्
त्रियवञ्चोन्नतं विद्धितालार्द्धञ्चाम्बुनिर्गमम् १०२
नासाग्रात्कर्णपाल्यञ्च त्रयोदशांगुलं भवेत्
गळप्रदेशविस्तारं कोलकञ्चेति कीर्तितम् १०३
ग्रीवाग्रस्य तु विस्तारं सार्द्धयावकमुच्यते
ग्रीवामूलस्य विस्तारन्नवमात्रञ्चषडयवम् १०४
ग्रीवात्तु गळपर्यन्तं कला च द्वियवाधिकम्
तत् गळाद्धनुपर्यन्तमंगुलञ्चेति कीर्तितम् १०५
ग्रीवासुवृत्तमित्युक्तं द्विरेखापरिवेष्टितम्
हिक्कासूत्रात्क्रमेणोच्चं भागं कोलकमंगुलम् १०६
अर्द्धांगुलं क्रमात् क्षीणं बाहुपर्यन्तमेव वा
वक्षस्थलस्य चायामं दशभागञ्चतुर्यवम् १०७
हिक्कासूत्रादधोबाहुस्सप्तविंशतिमात्रकम्
गोपुरं कोलकायाममेकविंशत्प्रकोष्ठकम् १०८
मद्ध्यांगुलाग्रात्तस्याग्रात् सार्द्धत्रयोदशांगुलम्

सप्तांगुलन्तु चायामं शेषं मद्ध्यांगुलायतम् १०९
पाणेस्तलस्य विस्तारं सप्तमात्रमिति स्मृतम्
तत्तारस्याष्टभागैकहीनमग्रस्य तारकम् ११०
सार्द्धकोलकमात्रेण तालमूले घनं भवेत्
षडयवेनैकमात्रन्तु तस्याग्रस्य घनं भवेत् १११
अनामिकांगुलायाम तन्मानानामिका भवेत्
द्वियवोपेतभागेन अंगुष्ठस्य तु दैर्घ्यकम् ११२
यवाधिकेन भागेन दैर्घ्यं कानिष्ठकस्य तु
रसाब्धिरन्ध्रवस्वर्कयवतारं कनिष्ठिका ११३
अंगुष्ठान्तं तथाग्रे तु अष्टभागैकहीनकम्
अंगुल्यग्रं त्रिधा कृत्वा द्विभागन्नखविस्तरम् ११४
तत्तारेण यवोपेतन्नखायामं प्रकीर्तितम्
अंगुष्ठन्तु द्विपर्वं स्यादन्याङ्गुल्यास्त्रिपर्वकं ११५
तलाग्रे त्वंगुलं नीत्वा द्विरेखामन्तरं कुरु
तलमूलादेकरेखा मद्ध्यमांगुलिमूलका ११६
मणिबन्धस्य विस्तारं भागमेकं प्रकीर्तितम्
प्रकोष्ठं मद्ध्यविस्तारं त्रियवेन शरांगुलम् ११७
प्रकोष्ठं मूलतारन्तु कौशिकांगुलमुच्यते
कूर्परस्य तु विस्तारं सार्द्धसप्तांगुलं भवेत् ११८
बाहुमद्ध्यमविस्तारं सार्द्धायावकमुच्यते
बाहुमूलस्य विस्तारन्नवमर्द्धार्द्धमिष्यते ११९
हिक्कासूत्रात्तु कक्षान्तन्नवमात्रार्द्धमुच्यते
कारयेदुपबाहू च मूलतारं गुणांगुलम् १२०
अद्ध्यंगुलेन मद्ध्ये तु शेषं पूर्ववदाचरेत्
कक्षयोरन्तरन्तिर्यक् चतुर्विंशतिमात्रकम् १२१
हिक्काचबुकयोर्मद्ध्ये सार्द्धत्रयोदशांगुलम्

स्तनयोरन्तरं यद्वच्चूचुकन्तु यवान्तकम् १२२
द्वियवन्तस्यविस्तारं मण्डलन्तु द्विमात्रकम्
हृत्प्रदेशस्य विस्तारं सार्द्धं त्रिस्त्र्यंगुलं भवेत् १२३
जठरस्य तु विस्तारं सार्द्धत्रयोदशांगुलम्
यवद्वयन्तु निम्नं स्यात् विस्तारं षड्यवं भवेत् १२४
नाभिप्रदक्षिणावर्त्त विस्तारं सममायतम्
श्रोणिप्रदेशविस्तारं सार्द्धसप्तदशांगुलम् १२५
कट्यग्रस्य तु विस्तारं विंशत्यंगुलमुच्यते
कटिमूलस्य विस्तारं द्वात्रिंशत्यंगुलं भवेत् १२६
शरीरं गोमुखाकारं कट्या ऊर्ध्वं प्रशस्यते
शरमात्रयवोपेतं मेढ्रायामं विधीयते १२७
वेदांगुलमिति प्रोक्तं मुष्कविस्तारदीर्घके
पक्षांगुलप्रमाणेन एकैकवृषणं स्मृतम् १२८
शेफं शीर्षाङ्गुलायामं तारं दशयवं भवेत्
क्षयमग्रेष्टभागैकं मुकुळोत्पलवत् भवेत् १२९
ऊरुमूलस्य विस्तारं सार्द्धत्रयोदशाङ्गुलम्
तन्मद्ध्ये मत्स्यविस्तारं यवमद्ध्यांगुलाधिकम् १३०
ऊर्वग्रस्य तु विस्तारं सार्द्धरंध्राङ्गुलं भवेत्
जानुमण्डलविस्तारं वसुमात्रार्द्धमिष्यते १३१
यवेनाष्टांगुलं प्रोक्तं जंघामूलस्य विस्तरम्
तन्मद्ध्ये मत्स्यविस्तारं सप्तमात्रयवाधिकम् १३२
नळकस्य तु विस्तारं सार्द्धवेदाङ्गुलं भवेत्
अक्षगुल्फद्वयोर्मद्ध्ये विस्तारन्तु शरांगुलम् १३३
तलमद्ध्यमविस्तारं सार्द्धभूतांगुलं भवेत्
तलाग्रस्य तु विस्तारं रसांगुलमिति स्मृतम् १३४
अक्षात्पार्ष्ण्यन्तरं भागं पार्ष्ण्युत्सेधन्तु तत्समम्

अन्नादंगुष्ठमूलन्तु नवमात्रार्द्धमिष्यते १३५
पादांगुष्ठायतं भागं तत्तारं तु षडंगुलम्
त्रियवेन चतुर्मात्रं प्रदेशन्नत्रायमिष्यते १३६
यवेन मात्रविस्तारं देशिकस्य विधीयते
अंगुष्ठतर्जनी मद्ध्ये रंध्रन्तु त्रियवं भवेत् १३७
माल्यायामं त्रिमात्रार्द्धं विस्तारांगुलकं स्मृतम्
मात्रार्द्धानामिका दैर्घ्यं तत्तारमंगुलं भवेत् १३८
कनिष्ठाद्यंगुलायामं तत्तारमंगुलं स्मृतम्
दशयवञ्च पञ्चार्द्धं चतुरर्द्धञ्चतुर्यवम् १३९
त्रियवार्द्धं यवन्तारमंगुष्ठादि नखा स्मृता
विस्तारं सममायामं नखानां परिकीर्तितम् १४०
षट्सप्तत्यंगुलेनैव उरोनाहं प्रकीर्तितम्
नाभिदेशस्य नाहन्तु त्रिचत्वारिंशदंगुलम् १४१
श्रोणिदेशस्य नाहन्तु पञ्चदशांगुलं भवेत्
अन्येषाञ्चैव देवानामथनाहं विधीयते १४२
तत्तारं त्रिगुणी कृत्य तित्थ्यंशं विभजेत्तथा
त्रिगुणी कृततारेण एकांशं संप्रयोजयेत् १४३
तन्नाहञ्चैव सर्वेषां नाहमित्यभिधीयते
उष्णीषात्पृष्ठकेशान्तं सार्द्धत्रयोदशांगुलम् १४४
ग्रीवायामन्तु भागं स्यात्तत्समन्तु ककुद्भवेत्
ककुदः कटिसन्धिश्च सप्तविंशतिमात्रतम् १४५
गन्थप्रदेशं तस्याधस्सार्द्धत्रयोदशांगुलम्
तस्यायं पृष्ठकायामं सार्द्धवेदांगुलं भवेत् १४६
ऊर्वायामन्तु तस्याधस्सार्द्धद्वाविंशदंगुलम्
जान्वायामं तु भागं स्यात् जंघांघ्रिनवमात्रकम् १४७
पाष्र्ण्यायामन्तु भागं स्यात् पृष्ठायामं प्रकीर्तितम्

कर्णयोरंध्रपृष्ठे च द्वादशांगुलमुच्यते  १४८
कत्त्वयोरन्तरं पृष्ठे सप्तविंशतिमात्रकम्
पृष्ठावधिं समारभ्य तस्योर्ध्वे दशमात्रतः  १४९
स्फिक्पिराडे कारयेदूर्ध्वे मूलात् भागस्तदुन्नतम्
पूर्वं लिंगोद्भवं बिंबं द्वितीयं चंद्रशेखरम्  १५०
तृतीयं दक्षिणामूर्तिं चतुर्थं कामनिग्रहम्
पञ्चमन्तु विवाहं स्यादुमयासहितन्तु षट्  १५१
सप्तमन्तु वृषारूढमष्टमं त्रिपुरान्तकम्
नवमञ्चार्द्धनारीशं कंकाळं दशमं भवेत्  १५२
नृत्तमूर्तिं ततः प्रोक्तं भिक्षाटनमतः परम्
त्रयोदशन्तु कालारिर्हरिरर्द्धञ्चतुर्दश  १५३
सुखासनं ततः प्रोक्तं गंगाधरन्तु षोडशम्
चराडेशानुग्रहं पश्चात् मुखलिङ्गमतः परम्  १५४
अष्टादशानामेतेषां बिंबरूपं वदाम्यहम्
अयामं यत्तु लिंगस्य भूतांशं विभजेत्ततः  १५५
ऊर्ध्वे व्योमांशकन्त्यक्त्वा मूले चैव तथाभवेत्
तन्मद्ध्ये कारयेद्धीमान् चंद्रशेखरमूर्तिताम्  १५६
अजविष्णू द्विपार्श्वे द्वौ नमस्कृत्वा तु कूलकौ
धर्मांशं विभजेल्लिंगं शरांशमुदयान्तयोः  १५७
लिंगोर्ध्वे कारयेद्धंसमधस्तात्सूकराननम्
विष्णुं संकल्पयेदुर्वी मानेनैव च कर्षितम्  १५८
बिंबस्य द्विमुखेनैव हंसरूपन्तु कारयेत्
अधुनालंबमानन्तु प्रवक्ष्यामि समासतः  १५९
ललाटघ्राणहृन्मद्ध्ये श्रोणी तु स्पृश्यमद्ध्यमे
मेढ्रमूलस्य मद्ध्यन्तु पादद्वयोश्च मद्ध्यमे  १६०
द्व्यंगुष्ठमूलयोर्मद्ध्ये स्थितं यच्छिवसूत्रकम्

उष्णीषात्तु ककुद्वंश खराडस्फिक्पार्ष्णिमद्ध्यगम् १६१
ऋजुस्थितिरिति ख्यातं पृष्ठसूत्रन्तु लंबयेत्
वक्त्रान्तात् पिप्पलीमूलात् गळपार्श्वात्क्रमेण तु १६२
स्तनमराडलमद्ध्याच्च श्रोणिकट्याश्च पार्श्वकान्
नळिकादंगुलं नीत्वा तलमद्ध्ये विलंबयेत् १६३
लंबमानमिति प्रोक्तं उपानस्य विधिं श्रुणु
ऊरुमूलान्तरं मात्र जानुमद्ध्ये कलार्द्धकम् १६४
सार्द्धपद्मांगुलेनैव जंघान्तरमिति स्मृतम्
नाळकान्तं शरांगुल्यं भागं पार्ष्णर्यन्तरं भवेत् १६५
अंगुष्ठाग्र द्वयोर्मद्ध्ये यवकञ्चेति कीर्तितम्
सार्द्धपञ्चांगुलं मद्ध्ये श्रोणिप्रकोष्ठमूलयोः १६६
पार्श्वमद्ध्यमबाहौ च मद्ध्यमे कौशिकांगुलम्
कर्तरी नामिकाबाह्वोरन्तरं दशमात्रकम् १६७
मणिबन्धकबाह्वोश्च द्व्यन्तरन्तु यवंभजेत्
कर्तरी नामिकायास्तु हिक्कामद्ध्यात्तदन्तरम् १६८
एकत्रिंशतिमात्रं स्यात् कर्तव्यार्द्धन्तु दोस्फमम्
पादाग्राङ्गुष्ठमूलात्तु नाभे सत्वेऽङ्गुलं भवेत् १६९
पादाग्राग्रं स्तनान्तं स्यात् तयोर्मद्ध्यन्तरं यवम्
वरदञ्चेत्तु तत्पृष्ठं नाभेस्तु सममुच्यते १७०
कटिकाधः प्रदेशन्तु मेढ्रमूलं समं भवेत्
ऋज्वागतिस्थितिं वामा द्वरदाभयहस्तकम् १७१
कृष्णापरशुसंयुक्तं कारयेदिन्दुशेखरम्
अधोभागे तु भागेन जान्वन्तन्तु न दृश्यकम् १७२
एवं लिङ्गोद्भवं कुर्यात् चंद्रशेखरमुच्यते
लिंगञ्च विष्णुरूपञ्च विनाकुर्विन्दुशेखरम् १७३
इन्दुशेखरमाख्यातं दक्षिणामूर्तिरुच्यते

द्विविधं दक्षिणामूर्तिं व्याख्यानं मूर्तिकन्तथा १७४
गेयमूर्तिं तयोश्चैव लक्षणन्तु विधीयते
चतुर्भुजं त्रिणेत्रञ्च द्वीपिचर्मांबरान्वितम् १७५
आवृतालंकृताभंगी शश्यर्ककुसुमान्वितम्
सदशन्दक्षिणं हस्तं पुस्तकं वामहस्तके १७६
सव्यके चाक्षमालाञ्च व्याळं वै वामहस्तके
पादाग्रे दृष्टिपातन्तु किञ्चित् भंगसमायुतम् १७७
लंबितं दक्षिणं पादं तस्योर्वग्रस्य चोपरि
वामपादस्य नळकं संयुतं कारयेत्सुधीः १७८
नासाग्रे मेढ्रमूलस्य वामे भागेन्तरास्थितम्
वामे हृन्मद्ध्यमात्सूत्रादन्तरञ्चांगुलं भवेत् १७९
नाभेर्वामे तु सूत्रन्तु द्व्यन्तरं कोलकं भवेत्
एवं वै शिवसूत्रन्तु तत्पातालंबयेत्क्रमात् १८०
सूत्रादक्षांघ्रिपार्ष्णिश्च मद्ध्ये सार्द्धमयन्तु वा
यमन्तु कारयेद्धीमान् सदशं हस्तकोच्चकम् १८१
चूचुकोच्च समन्तस्य अंगुष्ठं मूलकान्ततः
नाभेस्तु त्र्यंगुलञ्चैव द्व्यन्तरं परिकीर्तितम् १८२
वामे तु वरदं हस्तं ऊर्ध्वे तु तलपृष्ठयोः
द्व्यन्तरं भावमित्युक्तं नाभेस्तु मणिबन्धकात् १८३
द्व्यन्तरं त्वितिविख्यातमेकोनविंशदंगुलम्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरन्तु षडंगुलम् १८४
परहस्तमणेश्चैव बाहुमद्ध्याद्यमान्तकं
मद्ध्यांगुलाच्च दोर्मूलात् द्व्यन्तरन्दशमात्रकं १८५
हिक्कासूत्राद्विमात्राथ समं हस्तस्य चोच्छ्रयं
हिक्कामद्ध्यं समारभ्य कटके मणिबन्धकान् १८६
द्व्यन्तरं त्रियमं प्रोक्तं दृष्टिसंघैस्समावृतं

अगस्त्यश्च पुलस्त्यश्च विश्वामित्रोङ्गिरास्तथा १८७
एव व्याख्यानमूर्तिन्तु गेयमूर्तिं श्रुणुष्वथ
कटकं दक्षिणं हस्तमधोमुखन्तदुच्यते १८८
वामहस्तन्तु कटकमूद्ध्र्ववक्त्रन्तदुच्यते
तंत्रिनिवेशयेदूरुकराग्रे दक्षिणपादके १८९
वामहस्तस्य कटके सव्यहस्तन्तथोपरि
हिक्कामद्धयं समारभ्य कटके मणिबन्धनात् १९०
त्रिंशन्मात्रमिति प्रोक्तं दक्षिणे कटके तथा
नाभ्यादिमणिबन्धान्तं द्व्यन्तरं यवमुच्यते १९१
ऊरुबाह्यं त्रिमात्रन्तु कटाकोद्ध्र्वे युगांगुलं
दण्डायाममिति प्रोक्तं विस्तारन्तु द्विमात्रकम् १९२
वापुवक्त्रन्तु षण्मात्रमुत्सेधन्तु तदर्द्धकम्
एतदेवविशेषन्तु शेषं पूर्वोक्तवत् भवेत् १९३
दक्षिणामूर्तिमेवं स्यात् श्रुणुमन्मथनिग्रहं
त्रिणेत्रञ्चतुर्भुजं देवञ्जटामकुटमण्डितं १९४
उग्रदृष्टिसमायुक्तमक्षमालोरगन्धरं
दक्षिणे तु पताकाच वामहस्तन्तु सूचिका १९५
एतदेवविशेषन्तु शेषं व्याख्यानमूर्तिवत्
बेरायामरसांशाच्च त्रिभागं मन्मथायतम् १९६
पीठस्थोवारथस्थोवा कामः काञ्चनसन्निभः
सर्वभूषणभूष्यञ्च दिव्यरूपसमन्वितम् १९७
पुष्पैश्चैव शरैर्युक्तमिक्षुचापञ्च षद्धवजम्
मदरागवसन्तैश्च हेमबान्धवसंयुतम् १९८
तापनीदहनीविश्वमोहिनी विश्वमर्दनी
मादिनी नामनिर्दिष्टास्तस्य पञ्चशरा इमे १९९
कार्मुकं वामहस्ते तु बाणन्तु सव्यहस्तके

देवस्याभिमुखं कुर्यात् कामरूपं प्रपादितम् २००
कामनिग्रहमेवं स्याच्छृणु वैवाह्यमूर्तिनम्
सचंद्रार्द्धञ्जटामौली सौम्यं प्रथमयौवनम् २०१
चतुर्भुजं त्रिणेत्रञ्च हारकेयूरभूषितम्
मेखलोदरबन्धश्चक्षौमवस्त्रधरं शुभम् २०२
वासुकी कुण्डलं काञ्ची तक्षको हारपुष्करं
किञ्चित्त्रिभंगिकंकायं दक्षपादन्तु कुञ्चितम् २०३
वरदं वामहस्तन्तु कृष्णापरशुहस्तकम्
देवस्य दक्षहस्ते तु देवी हस्तन्तु संयुतम् २०४
नास्यन्तं वापि चास्यान्तं हिक्कासूत्रसमन्तु वा
पीनोरः पीतगन्धाञ्च पीनस्तनसमन्विताम् २०५
द्विबाहुकां द्विनेत्राञ्च सर्वाभरणभूषिताम्
दुकूलवसनां देवीं कुर्याद्देवस्य सव्यके २०६
देवस्यायाममानन्तु विभजेद्वा दशांगुलम्
रुद्रांशं वानवांशं वा वस्वंशं वैकहीनकम् २०७
आयामन्तद्धरेः प्रोक्तन्तस्य बाहु समन्वितम्
चिबुकान्तं वाथ कक्षान्तं लक्ष्यायामं प्रकीर्तितम् २०८
विष्णुबिंबसमं वापि तद्वस्त्वंशैकहीनकम्
सप्तभागैकहीनं वा रसांशैकविहीनकम् २०९
अजायाममिदन्तस्य चतुर्भागैकभागता
अग्निज्वालोच्छ्रयं प्रोक्तन्तस्यार्द्धं विस्तृतं भवेत् २१०
देवमानांगसंयुक्तं कारयेत्तु विचक्षणः
ललाटनासिका मद्ध्याद्वामपादस्य गुल्फकान् २११
व्यपोह्याभ्यंतरे मात्रं तत्रस्थं शिवसूत्रकम्
तत्सूत्रात् स्तनमद्ध्याच्च दक्षिणे चांगुलांतरम् २१२
सत्सूत्रान्नाभिमद्ध्याच्च वामे व्योमांगुलांतरम्

एवं स्याच्छिवसूत्रं तु द्व्यंतरन्त्वधुनाश्रुणु २१३
वरदस्य तलं पृष्ठन्नाभिसूत्रसमं भवेत्
नाभेस्तु मणिबन्धांतादेकोनं विंशदंगुलम् २१४
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरं कौशिकांगुलम्
मेढ्रमूलसमं कुर्यात् कटकं लळितन्तथा २१५
नाभेस्तु मणिबन्धान्तात् द्व्यन्तरं स्मृतिमात्रकम्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरन्तु शरांगुलम् २१६
द्व्यन्तरं दीपबाह्वोश्च चंद्रशेखरवत्कुरु
पादांगुष्ठद्वयोर्मद्ध्ये सार्द्धत्रयोदशांगुलम् २१७
तत्रिभागैकभागन्तु पाष्र्ण्योर्द्वन्तरकं भवेत्
एतत्कुञ्चितपादन्तु द्विमात्रं वक्त्रमुच्यते २१८
देवस्य सूत्रवत्सूत्रं देव्याञ्चैव तु लंबयेत्
देव्यादक्षिणहस्तस्य तलमद्ध्यं हरस्य तु २१९
हस्तेन संगृहीतं तु कारयेत्तु विचक्षणः
नाभेः प्रकोष्ठमूलांतान् द्व्यंतरञ्चाब्धिमात्रकम् २२०
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं तु द्विमात्रकम्
लंबितं वामहस्तं तु मद्ध्यबाहुकपार्श्वयोः २२१
द्व्यंतरं शरमात्रं तु ऊरोस्तु मणिबन्धकात्
भागं तु द्व्यंतरं प्रोक्तमूर्वग्रं मद्ध्यमांगुलात् २२२
द्व्यंतरं तद्विमात्रं स्यात् पादांतरं तु पूर्ववत्
देविलक्षणमेवं स्यात् लक्ष्म्याश्च लक्षणं शृणु २२३
नागहस्तसमौ बाहू केयूरकटकोज्वलौ
शोभनांबरसंपन्ना श्रोणी च विपुला तथा २२४
मेखला कक्षिसूत्रांगा उमापार्श्वेवगार्त्थता
ललाटनासिकामद्ध्यात् वामाद्यंगुष्ठकाग्रतः २२५
मद्ध्यमे तु स्थितं सूत्रं शिवसूत्रमिति स्मृतम्

तत्सूत्राद्योनिमूलाश्च द्व्यंतरं तु यवं भवेत्  २२६
तत्सूत्रन्दक्षिणे नाभे द्व्यंतरवसुमात्रकम्
हस्तो भयाभ्यान्देव्याश्च कटिदेशं स्पृशां कुरु  २२७
दक्षिणे ह्युदरस्यैव मद्धये बाह्वोश्च मद्धयमे
द्व्यंतरं तु द्विमात्रं स्यात् वामबाहुकपार्श्वयोः  २२८
द्व्यंतरं भागमित्युक्तं पादांगुष्ठकयोस्ततः
अष्टादशाङ्गुलेनैव द्व्यन्तरं परिकीर्तितम्  २२९
पाष्ण्योश्च द्व्यंतरं तत्र षडंगुलमुदीरितम्
एवं लक्ष्मी समाख्याता विष्णुरूपमथोच्यते  २३०
किरीटमकुटोपेतं कटिसूत्रोदरबन्धनम्
केयूरकटकञ्चैव यज्ञसूत्रसमन्वितम्  २३१
लंबसूत्रसमायुक्तं पीतांबरसमायुतम्
मकरं कुण्डलोपेतं श्रीवत्सं वक्षसि स्थितम्  २३२
शंखचक्रधरं कुण्डं हस्तद्वयेन धारिणम्
जलधारोन्मुखः किञ्चित् वक्रेणैव समायुतम्  २३३
ललाटनासिका मद्धयान्मद्धयमे पादयोस्ततः
अंगुष्ठाग्रसमं सूत्रं लंबयेच्छिवसूत्रकम्  २३४
तत्सूत्राद्व्यंतरन्नाभेर्वेदांगुलमिति स्मृतम्
कुण्डिकायास्तु चोत्सेधं त्रयोदशांगुलं भवेत्  २३५
नवांगुलं तु विस्तारं ग्रीवं वक्षांगुलं भवेत्
कुण्डिकाननदेशे तु सव्यहस्तसमायुतम्  २३६
कुण्डिकाननदेशेन वामहस्ततलद्वयम्
वामहस्ताग्रपृष्ठं तु नाभेस्तु सममुच्यते  २३७
नाभेस्तु मणिबन्धाच्च द्व्यंतरं सप्तमात्रकम्
विष्णुरूपं समाख्यातं ब्रह्मरूपमथ शृणु  २३८
चतुर्भुजञ्चतुर्बाहुं कमण्डल्वक्षधारिणम्

यज्ञसूत्रोत्तरीयन्तु जटामकुटसंयुतम् २३९
सव्यहस्ते ह्यमालाञ्च वामहस्ते कमण्डलम्
स्रुवन्दक्षिणहस्ते तु पताकावामहस्तके २४०
अंबुजासनकासीनं ब्रह्माणं होमसम्मुखम्
ललाटनासिकामध्यान्नाभेर्गुल्फस्य मध्यमात् २४१
तत्सूत्रान्मद्धयमान्नाभेद्ध्यंतरं तु शरांगुलम्
पताकांगुष्ठमूलांतान्नाभेरष्टादशांगुलम् २४२
चूचुकोद्ध्वें समं कुर्यात्पताकाग्रं विचक्षणः
हतं तु मणिबन्धायास्तन्नाभेस्तु समं भवेत् २४३
नाभेस्तुमणिबन्धाच्च त्रयोदशांगुलं भवेत्
पार्श्वमद्धयमबाह्वोश्च द्व्यंतरं तु षडंगुलम् २४४
उभयोर्जानुसीमान्तमूर्ध्वकायसमं भवेत्
एवं स्यात्बहुरूपन्तु अग्निरूपमथश्रुणु २४५
देवस्यांगुलमानेन चतुर्विंशतिमात्रकम्
अग्निकुण्डन्तु विस्तारं मेखलात्रयसंयुतम् २४६
अग्न्यंगुलं तदुत्सेधं मेखलातारमंगुलम्
तन्मद्धये कल्पयेदग्निं पञ्चपात्रिशिखान्वितम् २४७
एवं वैवाह्यमुद्दिष्टं उमयासहितं श्रुणु
चतुर्भुजं त्रिणेत्रञ्च जटामकुटसंयुतम् २४८
सर्वाभरणसंयुक्तं वरदाभयहस्तकम्
कृष्णापरशुसंयुक्तं दक्षिणे वामकेऽपि च २४९
पत्रन्तु वामकर्णे तु दक्षिणे कुण्डलं भवेत्
उपपीतधरञ्चैव शयनं वामपादकम् २५०
लंबितं दक्षिणं पादं वामे गौरी समायुतम्
तयोर्मद्धये स्थितं स्कन्दस्सर्वलक्षणसंयुतम् २५१
ब्रह्मविष्णूद्विपार्श्वाभ्यां देवीभ्यां युक्तभोगदम्

ललाटनासिकामद्ध्यान्नाभेश्च मद्ध्यमं क्रमात्  २५२
लिंगमद्ध्यात्तु पादस्य गुल्फमद्ध्यं स्थितं तथा
श्रोणीसंस्पर्शनं सूत्रं शिवसूत्रमिति स्मृतम्  २५३
मुखान्तात्पिप्पलीमूलात् ग्रीवापार्श्वं तथैव च
चूचुकस्य तु मद्ध्यात्तु श्रोणीकत्याश्च पार्श्वकान्  २५४
उष्णीकात्तु ककुद्वंशखण्डस्फिक्मद्ध्यमात् गतम्
पृष्ठसूत्रमिदं पार्श्वसूत्रात्तु सार्द्धमात्रकम्  २५५
हित्वापार्श्वद्वयोश्चैव ऊर्वायाममतःपरम्
जानुपत्तांगुलञ्चैव त्तयमाजानुसीमकान्  २५६
दक्षिणं लंबजानुश्च आयश्चैव गुणांशकम्
वामजान्वन्तरात्सूत्रादूर्ध्वकायाच्च मानतः  २५७
षण्मात्रं द्वयन्तरं प्रोक्तं नाळका मेढ्रमूलयोः
तलाग्रे ऊरुमद्ध्याच्च द्वयंतरं तु गुणांगुलम्  २५८
सूत्राद्गुल्फांघ्रिपार्ष्णयंतं सार्द्धत्रयोदशाङ्गुलम्
कटके मणिबन्धाधः कटयग्रस्य समं भवेत्  २५९
नाभेस्तु मणिबन्धात्तु द्वयंतरं षोडशांगुलम्
हस्तद्वयंतरकं सर्वं चंद्रशेखरवत्कुरु  २६०
देवस्य बाहुसीमांतं देव्यास्त्वायाममुच्यते
द्विबाहुकात् द्विनेत्री च करण्डमकुटान्विता  २६१
सर्वाभरणसंयुक्तादुकूलवसनान्विता
शयनं दक्षिणे पादं वामपादं तु लंबितम्  २६२
कटकं दक्षिणे हस्तं वरदं वामहस्तकम्
ललाटनासिका मद्ध्याद्दक्षिणे च गुणांगुलम्  २६३
हित्वा त्रैवन्नयसेत्सूत्रं शिवसूत्रमिति स्मृतम्
तत्सूत्राद्धृदयांताश्च वामे गुणांगुलांतरम्  २६४
तत्सूत्राद्दक्षिणे नाभेद्वयंतरञ्चांगुलं भवेत्

कारयेत्कटकस्याग्रं चूचुकोर्ध्वसमं तथा २६५
अंगुष्ठमूलनाभेस्तु सार्द्धत्रयोदशांगुलम्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं पञ्चमात्रकम् २६६
वरदस्य तलस्याधो नाभेस्तु सममुच्यते
नाभेस्तु मणिबन्धाच्च द्व्यंतरं षोडशांगुलम् २६७
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरं तु षडंगुलम्
अन्नयानि सर्वकार्याणि देवस्योक्तवदाचरेत् २६८
बेरायामं तु विभजेत् अष्टया चैव भागिकम्
द्विभागं वा गुहायामं बाहुरूपेण कल्पयेत् २६९
द्विभुजश्च द्विनेत्रश्च सर्वाभरणभूषितम्
कटकं दक्षिणे हस्ते वामहस्तं प्रलंबितम् २७०
असीनो वा स्थितो वापि कारयेत्तु गुहं ततः
पद्मपीठोद्ध्र्वको वापि केवलं पीठकोपरि २७१
भवानीसहितं ह्येवं वृषवाहनमुच्यते
गौरीश्वरौ स्थितौ पीठे वृषभं पृष्ठतस्थितम् २७२
त्रिणेत्रञ्चतुर्भुजञ्चैव जटामकुटसंयुतम्
दिव्यांबरधरो देवस्सर्वाभरणभूषितः २७३
परशुं दक्षिणे हस्ते वामे कृष्णसमन्वितम्
कटकं दक्षिणे हस्तं वृषभस्यैवमस्तके २७४
वामहस्ते प्रकोष्ठन्तु स्थापितं कुरुबुद्धिमान्
ललाटनासिकामद्ध्याद्दक्षिणे स्थितपादके २७५
गुल्फमद्ध्यात्स्थितं सूत्रं शिवसूत्रमिति स्मृतम्
तत्सूत्राद्धृत्प्रदेशाच्च वामे चैव गुणांगुलम् २७६
तत्सूत्रादंगुलं नाभेर्दक्षिणे चांगुलान्तरम्
तत्सूत्रान्मेढ्रमूलान्तं दक्षिणे चतुरंगुलम् २७७
तत्सूत्राद्दक्षिणांघ्रिश्च जान्वोश्चैव गुणांगुलम्

मेढ्रमूलसमं कुर्यात् कटकं लळितन्ततः  २७८
नाभेस्तु मणिबन्धान्तादेकोनविंशदंगुलम्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरञ्चाब्धिमात्रकम्  २७९
बाहुकूर्परमद्ध्योर्ध्वे स्तनसूत्रं न्यसेद्बुधः
पताकाधोमुखो वाथ हंसपक्षमथापि वा  २८०
तन्मद्ध्यमांगुलाग्रन्तु नाभिसूत्रसमं भवेत्
प्रकोष्ठमूलाद्धृदयात् पञ्चविंशतिमात्रकम्  २८१
पार्श्वकान्मणिबन्धाच्च त्रयोदशांगुलान्तरम्
तन्मद्ध्यमांगुलं नाभेद्व्यन्तरं तिथिमात्रकम्  २८२
सभंगस्थानकं कृत्वा पादांगुष्ठद्वयोस्तथा
द्व्यंतरं तिथिमात्रं स्यात् पाष्णर्योर्मद्ध्ये शरांगुलम्  २८३
वामपादस्य चक्रं तु कोलकञ्चेति कीर्तितम्
इन्दुशेखरवत्कुर्यात्परहस्तौ विशेषतः  २८४
तस्यैव वामभागे तु देवीं कुर्याद्विचक्षणः
वृषारूढमिदं प्रोक्तं त्रिपुरारिं श्रुणुष्वथ  २८५
चतुर्भुजं त्रिणेत्रञ्च जटामकुटसंयुतम्
सर्वाभरणसंयुक्तं दिव्यांबरसमायुतम्  २८६
पत्रं तु वामकर्णे तु दक्षिणे कुण्डलान्वितम्
धनुर्बाणसमायुक्तं कृष्णापरशुसंयुतम्  २८७
उपपीतसमायुक्तं सभंगस्थानकं कुरु
वामे कटकहस्तोर्ध्वं हिक्कासूत्रसमं भवेत्  २८८
मणिबन्धं समारभ्य हिक्कासूत्रस्य मद्ध्यमात्
षट्त्रिंशदंगुलञ्चैव द्व्यंतरं परिकीर्तितम्  २८९
वृषवाहनवच्छेषं कारयेत्तु विचक्षणः
त्रिपुरांतकमेवं स्यादर्द्धनारिं श्रुणुष्वथ  २९०
सबालेन्दुजटाभारमैशमर्द्धं तु दक्षिणम्

उमार्द्धं वामभागे तु सीमंततिलकाळकम्  २९१
नयनार्द्धं ललाटे तु संयुक्तं दक्षिणांशके
दक्षिणे कुंडलं कर्णे वामकर्णे तु पत्रकम्  २९२
कुटिलं पालिकां वामे टंकाभयौ च दक्षिणे
उत्पलं वामहस्ते तु केयूरकटकान्वितम्  २९३
उमांशे तु स्तनं कुर्यात् वहकारधरं तु वा
श्रोण्यार्द्धदक्षिणे शंभोर्व्याघ्रचर्मकृतांबरम्  २९४
उमार्द्धं कटिसूत्रांतं चित्रवस्त्रपरिच्छदम्
नूपुरालंकृतं वामे सव्यपादं तु कुञ्चितम्  २९५
आभगेन तथाकुर्यात् सार्द्धनारीश्वरं वपुः
ललाटनासिकामद्ध्याद्वामांघ्रे गुल्फमद्ध्यमात्  २९६
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं तु षडंगुलम्
पादांकुष्ठद्वयोर्मद्ध्ये द्व्यंतरं तिथिमात्रकम्  २९७
पार्ष्णिद्वयोश्च मद्ध्ये तु भूतांगुलमिति स्मृतम्
तत्सूत्राद्धृत्प्रदेशाच्च दक्षिणे भ्यंगुलांतरम्  २९८
तत्सूत्राद्वामके नाभेर्द्व्यंतरं चाङ्गुलं भवेत्
तत्सूत्रान्मेढ्रमूलाच्च द्व्यंतरं तु युगांगुलम्  २९९
वामके कटकस्याग्रे चूचुकोद्ध्वर्वसमं भवेत्
नाभेस्तु मणिबन्धांतात् सार्द्धत्रयोदशांगुलम्  ३००
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं तु षडंगुलम्
पादांगुष्ठद्वयोर्मद्ध्ये द्व्यंतरं तिथिमात्रकम्  ३०१
पादद्वयोश्च मद्ध्ये तु भूतांगुलमिति स्मृतम्
शेषमन्यच्च सर्वं तु चंद्रशेखरवत् भवेत्  ३०२
अर्द्धनारीश्वरं ह्येवं कंकाळं त्वधुना शृणु
चतुर्भुजं त्रिणेत्रञ्च कपर्दमकुटान्वितम्  ३०३
पादे पादुकसंयुक्तं किञ्चिद्वै गमनोन्मुखम्

सर्वाभरणसंयुक्तं यज्ञसूत्रोपशोभितम्  ३०४
शंखं तु वामकर्णे तु दक्षिणेन च कुण्डलम्
क्षौमवस्त्रधरं कुर्यात् दक्षिणे क्षुरिकायुधम्  ३०५
डमरुं वामहस्ते तु प्रहरं दक्षिणे करे
कंकाळं दण्डमूलं तु पिञ्चदंडस्य मूलकम्  ३०६
वामे त्वपरहस्तेन संगृहीतं तु कल्पयेत्
उभयोर्दण्डकाग्रं तु कंसकोपरिविन्नयसेत्  ३०७
कृष्णामुखं गतं हस्तं दक्षिणे परहस्तकम्
नानानागसमायुक्तं किञ्चित्प्रहसिताननम्  ३०८
बलिपात्रधरं भूतदेवं वामे तु कारयेत्
भिक्षादानोन्मुखास्त्रीभिर्मोहिताभिस्समाकुलम्  ३०९
नानाभूतसमायुक्तं नानालीला समन्वितम्
ललाटमद्ध्यदक्षे तु मात्रं हित्वा तु सूत्रकम्  ३१०
दक्षप्राणपुटात्पार्श्वस्थितांघ्र्यंगुष्ठमूलकात्
दक्षभागांगुलं हित्वा तत्स्थानं लंबयेत् बुधः  ३११
तत्सूत्राद्धृदयाद्दक्षे द्व्यंतरं तु गुणांगुलम्
पूर्वकुंडलदृष्टाग्रं त्वष्टादशाङ्गुलं भवेत्  ३१२
तत्सूत्राद्वामके नाभेर्द्व्यंतरं तु युगांगुलम्
तत्सूत्रान्मेढ्रमूलांताद्वामोच्चं द्व्यंगुलं भवेत्  ३१३
पादांगुष्ठद्वयोर्मद्ध्ये त्वष्टादशांगुलं भवेत्
पाष्ण्योश्चैवोभयोर्मद्ध्ये सप्तांगुलमुदीरितम्  ३१४
उभयोर्जानुमद्ध्ये तु मुखम्वं प्रकीर्तितम्
अधोमुखं तु कटकं तस्याग्रन्नाभितत्समम्  ३१५
नाभ्यास्समं प्रदेशं तु उदरान्मणिबन्धकात्
द्व्यंतरं भागमित्युक्तं पार्श्वमद्ध्यमबाहुकान्  ३१६
द्व्यंतरं भागमित्युक्तं कटकं कोणसंयुतम्

ढक्कासंयुक्तहस्तं तु वरदञ्चेति कीर्तितम् ३१७
वरदे मणिबन्धाधः कुक्षिमद्ध्यसमं भवेत्
नाभेस्तु मणिबन्धाच्च द्व्यंतरं स्मृतिमात्रकम् ३१८
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं तु शरांगुलम्
हरिणयास्य गताहस्तमूरुमूलादधस्तथा ३१९
एकविंशति मात्रांतं समं तस्याग्रमुच्यते
तद्धस्तकटकं प्रोक्तं कुर्यादधोमुखं तु तत् ३२०
ऊरोश्च मणिबन्धाच्च द्व्यंतरं तु यमं भवेत्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यंतरं सप्तमात्रकम् ३२१
हरिणीजिह्वयाहस्तस्याग्रमालेपितं कुरु
कंकाळधारिणं हस्तकटकञ्चेति कीर्तितम् ३२२
कक्षतुल्यं तु तस्याग्रं यमन्दोर्मणिबन्धयोः
बिंबस्य त्रिमुखं वापि सार्द्धत्रिमुखमेव वा ३२३
कारयेत् भूतरूपाणि पञ्चतालेन बुद्धिमान्
देवस्तनसमोच्चं वा कक्षोच्चं वा विशेषतः ३२४
नारी संकल्पयेद्धीमानुभयोः पार्श्वयोरपि
एवं कंकाळमाख्यातं नृत्तरूपमथ श्रुणु ३२५
चतुर्भुजं त्रिणेत्रञ्च सुविकीर्णजटान्वितम्
कुररी वक्षसंयुक्तं बहिः पिञ्चसमन्वितम् ३२६
मौलेर्दक्षे तु धुत्तूरमर्द्धचंद्रसमन्वितम्
दक्षिणे तु जटाग्रे तु जाह्नवीमभिवन्दिताम् ३२७
पत्रं तु वामकर्णे तु दक्षिणे नक्रकुण्डल्
सर्वाभरणसंयुक्तमुपपीतसमन्वितम् ३२८
व्याघ्राजिनां बरोपेतं पादकिंकिणि शोभितम्
जगत्प्रसारितं वामे दक्षिणे भयहस्तकम् ३२९
डमरुं सव्यहस्ते तु वह्निर्वै वामहस्तके

वक्रं तु दक्षिणं पादं अपस्मारोपरिस्थितम्  ३३०
उद्धृतं वामपादं तु पादाग्रं दक्षिणानुगम्
ललाटमद्ध्यदक्षे तु हित्वा सार्द्धाष्टकं यवम्  ३३१
तस्मात्तु लंबयेत् सूत्रं दक्षनासापुटांतकात्
दक्षिणांघ्रेस्तु गुल्फस्य मद्ध्यमादेव पादितम्  ३३२
तत्सूत्रकक्षयोर्मद्ध्ये उरःस्मृत्यं गुलं भवेत्
तत्सूत्रकक्षयोरंतर्वामोर्वोर्वसुमात्रकम्  ३३३
तत्सूत्राद्दक्षिणे ग्रीवा षडंगुलमिति स्मृतम्
तत्सूत्राद्वामकेशीं वा गुणांगुलमुदाहृतम्  ३३४
तत्सूत्राद्दक्षिणे नाभेद्व्यंतरञ्चांगुलं भवेत्
तत्सूत्रान्मेढ्रमूलांताद्वामभागमिति स्मृतम्  ३३५
वामास्फिक्पिण्डकात् सूत्रात्सप्तानामंगुलं भवेत्
तत्सूत्राद्वक्रपादस्य जानुकात्तु दशांगुलम्  ३३६
दक्षिणे बाहुसीमंताद्धिक्कासूत्रस्य मद्ध्यमात्
यवद्वयाधिकं विंशदंगुलञ्चेति कीर्तितम्  ३३७
हिक्कामद्ध्यं समारभ्य दोस्सीमांतं तु वामके
यवद्वयसमायुक्तं सप्तादशांगुलं भवेत्  ३३८
नाभेर्दक्षिणके कुक्षितारं भागमिति स्मृतम्
नाभेर्वामे तु कुक्षौ च तारन्त्रयो दशांगुलम्  ३३९
वरदाग्निधरं हस्तं दोस्समञ्चेति कीर्तितम्
शरमात्रं पावकोत्सेधं विस्तारं तु गुणांगुलम्  ३४०
त्रिशिखाभिस्समायुक्तं कल्पयेत्तलमद्ध्यमे
बाह्वोश्च मणिबन्धाच्च चतुस्त्रिंशदंगुलं भवेत्  ३४१
डमरुकोपेतहस्तं तु सूचिहस्तमिति स्मृतम्
तत्सूचिहस्तकस्योद्ध्र्वं कर्णोद्ध्र्वसममुच्यते  ३४२
बाह्वोश्च मणिबन्धाच्च चतुर्विंशदंगुलं भवेत्

वामांघ्रेश्चैव जानूद्ध्र्वन्नाभेस्तु सममुच्यते ३४३
वामांघ्रेः पार्ष्णिकाधश्च वक्त्रांघ्रेर्जानुकोपरि
तत्समं त्विति विज्ञेयं तत् पार्ष्णे जानुकां ततः ३४४
चतुस्त्रिंशतिमात्रं तु द्व्यंतरञ्चेति कीर्तितम्
मणिबन्धकजान्वोश्च द्व्यंतरं तु यवं भवेत् ३४५
दोर्मूलांतसमञ्चैव अभयाग्रं प्रकीर्तितम्
मणिबन्धकबाह्वोश्च द्व्यंतरं तु यमं भवेत् ३४६
तस्य कूर्परमद्ध्ये तु व्याळं तत्रैव विन्न्यसेत्
चूचुकन्नाभिकामूलात् द्व्यंतरं तु यमं भवेत् ३४७
सव्यस्य वामसूत्रस्य मद्ध्याद्वै पार्श्वयोस्तयोः
वामबाहुद्व्योर्मद्ध्ये शार्दूलाजिनकन्न्यसेत् ३४८
त्रिवक्रायाममानेन अपस्मारं ततः कुरु
चतुस्तालप्रमाणेन भूतरूपेण कारयेत् ३४९
तस्यैव वामपार्श्वे तु देवीं कुर्यात्सलक्षणाम्
भुजंगत्रासमेवं तु भिक्षाटनमथ श्रुणु ३५०
त्रिणेत्रञ्चतुर्भुजन्नग्नं रूपं किञ्चित्स्मिताननम्
आवृतालं कृताभंगी पादे पादुकसंयुतम् ३५१
दक्षिणे तु कराग्रं तु हरीणास्यानुगं भवेत्
दक्षिणावरहस्तं तु डमरुकयुतं भवेत् ३५२
वामे कपालहस्तं तु अपरं पिञ्चधारिणम्
कुञ्चितं दक्षिणं पादं वामपादं तु स्वस्तिकम् ३५३
सभंगस्थानकं कुर्यात् गमनोन्मुखरूपकम्
कपालोपेत हस्तस्य पृष्ठन्नाभिसमं भवेत् ३५४
मणिबन्धाच्च नाभेस्तु द्व्यंतरं षोडशांगुलम्
शेषं सर्वविशेषेण कांकाळस्योक्तवत् भवेत् ३५५
एवं भिक्षाटनं प्रोक्तं कालनाशनमुच्यते

चतुर्भुजं त्रिणेत्रञ्च जटामकुटसंयुतम्  ३५६
उद्धृतं दक्षिणं पादं वामपादं तु कुञ्चितम्
व्याघ्रचर्मांबरोपेतन्तीक्ष्णनासोग्रदंष्ट्रकम्  ३५७
दक्षिणे तु करेशूलं सूचिहस्तं तु वामके
परशुं दक्षिणे हस्ते नागपाशं तु वामके  ३५८
अधोमुखं भवेच्छूलं दृष्टिवै कालदेहके
ललाटमद्ध्याद्दक्षे तु हित्वा साद्ध्याष्टकं यवम्  ३५९
तस्मात्तु लंबयेत् सूत्राद्दक्षनासा पुटांतकान्
दक्षिणांघ्रेश्च पाष्णर्याग्रात्पक्षांगुलांतरं स्थितम्  ३६०
तत्सूत्राद्वामकेनाभेरंगुल्यद्व्यंतरं स्मृतम्
तत्सूत्रान्मेढ्रमूलांताद्दक्षोभागमथांतरम्  ३६१
सूत्रजान्वोश्च मद्ध्ये तु रंध्रांगुलमिति स्मृतम्
उच्छ्रृतांघ्रेश्च जानुश्च कटचग्रस्य समं भवेत्  ३६२
उद्धृतांघ्रेः स्थलाग्रांता जंघायामस्तु मात्रकम्
सूचिहस्ताग्रकं नाभेस्समित्यभिधीयते  ३६३
मणिबन्धाच्च मद्ध्याच्च द्व्यंतरं षोडशांगुलम्
शूलोपेतदराग्रं तु कर्णस्योर्ध्वसमं भवेत्  ३६४
कर्णाग्रान्मणिबन्धाच्च द्व्यन्तरं द्वियवं भवेत्
अपरे तु द्विहस्तौ तु कटकाविति कीर्तितौ  ३६५
दोस्समं कटकाग्रन्तु द्व्यन्तरन्तु यवं भवेत्
कालनाशनमेवञ्च हरिरर्द्धमथ श्रुणु  ३६६
ईशार्द्धं पूर्ववत्प्रोक्तं विष्णवर्द्धे मकुटन्नयेत्
वामे तु द्विभुजोपेतं केयूरकटकोज्वलम्  ३६७
स्यान्नक्रकुण्डलं कर्णे कटकं शंखहस्तकम्
अर्द्धपीतांबरोपेतं भूषणैर्भूषणाह्वकैः  ३६८
ऋृज्वागतन्तथा सर्वञ्चंद्रशेखरवत्कुरु

हरिरर्द्धमिदं प्रोक्तं सुखासनमथ श्रुणु ३६९
चतुर्भुजं त्रिणेत्रञ्च जटामकुटसंयुतम्
अभयं दक्षिणं हस्तं वरदं वामहस्तकम् ३७०
कृष्णापरशुसंयुक्तं वामदक्षिणहस्तयोः
शयनन्दक्षिणं पादं वामपादन्तु लंबितम् ३७१
उमयासहितवत्सर्वं स्कन्दगौरीविवर्जितम्
सुखासनमिति प्रोक्तं गंगाधरमथ श्रुणु ३७२
चतुर्भुजं त्रिणेत्रञ्च कपर्दमकुटान्वितम्
अभयं दक्षिणं हस्तं कटकं वामहस्तकम् ३७३
कपर्दमकुटन्तेन गृहीतं जाह्नवी युतम्
वामदक्षिणहस्तौ तु कृष्णापरशुसंयुतम् ३७४
अभयं पूर्ववत्प्रोक्तं कपर्दोपेतहस्तकम्
कर्णोर्ध्वस्य समं ज्ञेयं कर्णान्तं मणिबन्धयोः ३७५
द्व्यन्तरं द्वियवं प्रोक्तं शेषन्तु त्रिपुरारिवत्
तस्य वामे भवानी तु कारयेल्लक्षणान्वितम् ३७६
जान्वन्तं वापि नाभ्यन्तं भागीरथ्यास्तु मानकम्
प्रलंबकजटोपेतमुष्णीषं जलहस्तकम् ३७७
द्विभुजञ्च त्रिनेत्रञ्च वल्कलांबरसंयुतम्
एवं गंगाधरं प्रोक्तं चण्डेशानुग्रहं श्रुणु ३७८
उमासहितवत्सर्वं स्कन्देनैव विना कुरु
किञ्चिदस्मिन्विशेषोस्ति तंविशेषं श्रुणु द्विजाः ३७९
कटकं दक्षिणे हस्तं वरदं वामहस्तके
देवस्य पुरभागन्तु चण्डेशन्तु प्रकल्पयेत् ३८०
देवस्य बाहुमात्रेण चण्डेशायाममुच्यते
कृताञ्जलिपुटोपेतं चासीनं प्रतिवक्त्रकम् ३८१
देवश्शिरसिचण्डस्य मालया परिभूषयन्

चराडेशानुग्रहं प्रोक्तं मुखलिङ्गं पुरोक्तवत्  ३८२
आभंगसमभंगञ्च अतिभंगं त्रिधा भवेत्
आभंगन्त्र्यंगुलं प्रोक्तं समभंगं युगांगुलम्  ३८३
अतिभंगं शरांगुल्यं मानेन्यूनन्तु कारयेत्
देवस्य वक्त्रमानेन मौल्यायामं विधीयते  ३८४
अद्धयर्द्धद्विगुणं वापि पादोनद्विगुणन्तु वा
त्रयोदशांगुलं तारमग्रेष्टांशैकहीनकम्  ३८५
भिन्नाटने च कंकाळे हर्यर्द्धे चार्द्धनारिके
सुखासने च कामारौ दन्निणामूर्तिविग्रहे  ३८६
न योजयेदुमादेवीं शेषाणान्तु सुयोजयेत्
कर्णान्तमुत्तमं ज्ञेयं हरस्यान्तौ तु मद्धयमौ  ३८७
बाह्वन्तमधमं ज्ञेयं देव्यायामं विधीयते
मन्वंगुलप्रमाणेन सर्वायुधानि कारयेत्  ३८८
तन्मानेन शिरश्चक्रं शीर्षदेशे तु विन्यसेत्
नृत्तमूर्तिश्च कंकाळं दन्निणामूर्तिविग्रहम्  ३८९
कुन्देन्दुस्फटिकाभासमन्यो विद्रुमसन्निभम्
देवस्य मुखमानेन पद्मोत्सेधमिति स्मृतम्  ३९०
पादाधिकमथाद्धयर्द्धं समं वाब्जस्य चायतम्
उत्सेधं द्विगुणं तारमग्रेष्टांशैकहीनकम्  ३९१
बेरायामं त्रिभागैकमासने पीठकुंगकम्
बिंबायामयुगांशैकमुत्सेधं स्थानकस्य तत्  ३९२
उत्सेधसममायामं पादाधिकमथापि वा
अद्धयर्द्धं वा प्रकर्तव्यं चतुरश्रं समन्ततः  ३९३
उत्सेधद्विगुणं वापि सार्द्धद्विगुणमेव वा
पादोनद्विगुणं वापि विस्तारं पूर्ववत्भवेत्  ३९४
आयताश्रमिति प्रोक्तं निर्गमेन युतन्तु वा

आयामन्तु त्रिधा कृत्वा भागं निर्गमनं भवेत्  ३९५
सप्तभागचतुर्भागमथवा निर्गमं भवेत्
पीठोत्सेधं परिग्राह्य तित्थ्यंशं विभजेत् क्रमात्  ३९६
जन्ममेकांशमित्युक्तं युगांशं जगतिर्भवेत्
वेदांशं कुमुदोत्सेधं व्योमांशं पट्टिका भवेत्  ३९७
पञ्चांशं कराठमित्युक्तं पट्टिकांशैवमुच्यते
महापट्टी द्विभागेन कुर्वे तत् भद्रपीठकम्  ३९८
उत्सेधं पूर्ववत् भज्य व्योमांशं जन्म उच्यते
जगती चतुरंशेन वप्रमन्यांशकं भवेत्  ३९९
व्योमांशं पट्टिकाज्ञेया कन्धरन्तु द्विभागया
एकोनपट्टिकां कुर्यात् महापट्टिव्ययांशकम्  ४००
व्योमांशमूर्ध्वपट्टी च श्रीकरं त्विति कीर्तितम्
स्मृत्यंशाविभजेद्दैर्घ्यमुपानं त्वेकमुच्यते  ४०१
एकांशेनैव कंपन्तु पद्ममेकेन कारयेत्
कंपमेकेन कर्तव्यं जगती च युगांशकम्  ४०२
रुद्राद्यांशन्तु वप्रं स्यात् पट्टमेकेन कारयेत्
पञ्चांशेनैव कर्णन्तु कंपमेकेन कारयेत्  ४०३
ऊर्ध्वपद्ममथांशेन महापट्टिस्तुर्यंशकम्
एतत्सौन्दरमाख्यातं दैर्घ्यमन्वंशकं भवेत्  ४०४
जन्ममेकांशमन्यांशं पद्ममंशेन पट्टिका
चतुरंशेन कर्णन्तु व्योमांशेनैव कंपकम्  ४०५
उर्ध्वपद्ममथांशेन महापट्टिद्व्यांशकम्
व्योमांशेनोर्ध्वपट्टी च पद्मपीठमिति स्मृतम्  ४०६
चतुर्विंशत्पञ्चविंशत् षड्विंशद्भागसंयुतम्
पीठकारं भजेत्तेषु एकांशं वेशनिर्गमम्  ४०७
विस्तारं जगती बाह्य दशांशेनोर्ध्वपट्टिका

पङ्क्तित्रययुतं वापि भूतपङ्क्तियुतन्तु वा ४०८
मुनिपङ्क्तियुतं वापि कर्णभागन्तु कारयेत् ४०९
इति पूर्वकारणे प्रतिमालक्षणविधिपटल एकादशः

## स्त्रीमानदशतालपटलप्रारंभः

स्त्रीमानं संप्रवक्ष्यामि यथावदनुपूर्वशः
उमां सरस्वतीं दुर्गां सप्तमातृनुषां महीम् १
ज्येष्ठां लक्ष्मीञ्च मद्धयेन दशतालेन कारयेत्
यावदुत्सेधमानन्तु भजेद्विंशच्छतांगुलम् २
उष्णीषात्केशपर्यन्तं चतुर्मात्रमिति स्मृतम्
केशार्द्धान्तार्द्धपर्यन्तं त्रयोदशांगुलं भवेत् ३
केशान्तादक्षिसूत्रान्तं तत्त्रिभागैकमुच्यते
अक्षिसूत्रात्पुटान्तञ्च तत्समञ्चेति कीर्तितम् ४
तत्पुटाद्धनुपर्यन्तं तत्समं त्वभिधीयते
ग्रीवायामं चतुर्भागं हिक्कासूत्रात्स्तनान्तकम् ५
त्रयोदशांगुलं प्रोक्तं तस्मान्नाभेस्तु तत्समम्
नाभेस्तु योनिपर्यन्तं त्रयोदशांगुलं भवेत् ६
योन्यर्वागग्रकान्तञ्च षड्विंशति च मात्रकम्
जान्वायामन्तु भागं स्यात् जंघाचाप्यूरुतत्समम् ७
तलोत्सेधञ्चतुर्मात्रं कायमानमिति स्मृतम्
मूर्द्धादिपृष्ठकेशान्तं त्रयोदशांगुलं भवेत् ८
मूर्द्धादिपूर्वकेशान्तं सप्तांगुलमिति स्मृतम्
मूर्द्धादिपार्श्वकेशान्तं रंध्रमात्रमिति स्मृतम् ९
भूतांगुलं भ्रुवायामं तन्मद्धये तारकं यवम्
उभयोः पार्श्वयोश्चैव आनुपूर्वात् कृशन्तथा १०
भ्रूमद्धयमूर्ध्वकेशांतं द्विमात्रञ्चेति कीर्तितम्

आरूढकार्मुकाकारं भ्रुवोर्लक्षणसंयुतौ ११
भ्रूसूत्रनासिकामूलादंगुलञ्चेति कीर्तितम्
मध्ये सप्तयवं प्रोक्तं नासिमूलात् भ्रेवाग्रयोः १२
दृगंतरप्रमाणञ्च द्विमात्रं द्वियवं भवेत्
तत्समं स्याद्दृगायामं तद्विस्तारं तु मात्रकम् १३
द्वियवं तूर्ध्ववर्मं तु अधोवर्मं यवार्द्धकम्
कनीनिकायवादीर्घा विस्तारं तत्समं भवेत् १४
दृगायामं त्रिधा कृत्वा मद्ध्येकं कृष्णमंडलम्
ज्योतिर्मण्डलकं तस्य मद्ध्यमे तु यवं भवेत् १५
ज्योतिर्मंडलमद्ध्ये तु दृष्टिर्यूकप्रमाणतः
श्वेतरक्तककृष्णैश्च वर्णैर्युक्तन्तु लोचनम् १६
भ्रूसूत्रस्य समं कुर्याच्छ्रोत्रस्योर्ध्वं विशेषतः
अपांगात् कर्णमूलान्तं यवहीनं सप्तमात्रकम् १७
कोलकं कर्णविस्तारमुत्सेधन्तु युगांगुलम्
नळायामन्ततः कुर्यात् रन्ध्रञ्चतुर्यवं भवेत् १८
अपरन्नाळविस्तारं यवक्षीणांगुलं भवेत्
पूर्वन्नाळार्द्धमात्रञ्च विस्तारार्द्धं घनन्तयोः १९
पिप्पलीचार्धमात्रञ्च सुषिरन्तत्समं भवेत्
त्रियवं कर्णपट्टी च श्रोत्रावटन्तु मात्रकम् २०
कर्णयोरन्तरं पूर्वे विंशदंगुलमेव च
प्राणमूलाग्रतारन्तु अर्द्धमात्रमिति स्मृतम् २१
अग्रनासस्तु विस्तारं यवोपेतस्तु मात्रकम्
नासिकापुटविस्तारमेकैकन्तु चतुर्यवम् २२
चतुर्यवं पुटोत्सेधं बाह्ये चार्द्धयवं घनम्
सुषिरं त्रियवं प्रोक्तं वंशविस्तारमंगुलम् २३
अधस्तात्तस्य विस्तारमर्द्धं यवमिति स्मृतम्

पुटसूत्रादधस्तात्तु अग्रनासियवं भवेत् २४
द्वियवं गोजिकातारं गोज्योत्सेधञ्चतुर्यवम्
गोज्यादिनासिकाग्रान्तमश्वन्नत्र्यंगुलमुच्यते २५
उत्तरोष्ठस्य विस्तारं त्रियवञ्चेति कीर्तितम्
आस्यायामञ्चतुर्मात्रं वक्त्रत्रयसमन्वितम् २६
यवप्रमाणमेवोक्तमुत्तरोष्ठस्य पालिका
अधरोष्ठस्य विस्तारमंगुलं स्याद्यवाधिकम् २७
द्व्यंगुलं स्यात्तदायामं यवस्यात्तस्य पालिका
अर्द्धे त्वाकृतिवत्प्रोक्तं पक्वबिंबफलं भवेत् २८
ऊर्ध्वे षोडशदन्तं स्यादधस्तात्तावदेव तु
ऊर्ध्वदन्तस्य विस्तारं द्वियवन्तत्समासतः २९
अधोदन्तन्तु तस्यार्द्धं कारयेत्तु विचक्षणः
चिबुकञ्चार्द्धमात्रञ्च तन्निम्नन्तु यवं भवेत् ३०
चिबुकात् षडयवं ज्ञेयमधरोष्ठस्य निर्गमम्
अनुचक्रत्रिमात्रन्तु ग्रीवं सुवृत्तकं भवेत् ३१
ग्रीवाग्रस्य तु विस्तारं सप्तमात्रं यवाधिकम्
ग्रीवामूलस्य विस्तारमष्टांगुलयवाधिकम् ३२
बाह्वोश्चैवान्तरन्तिर्यक् द्वात्रिंशदंगुलं भवेत्
पक्षयोरन्तरन्तिर्यगष्टादशांगुलं भवेत् ३३
बाहुमूलस्य विस्तारं सप्तमात्रमिति स्मृतम्
हिक्कासूत्रं तयोर्बाहु षड्विंशदंगुलायतम् ३४
दशकोलंप्रकोष्ठं तु तस्मान्मद्ध्यांगुलाग्रकात्
त्रयोदशांगुलायामं तस्यार्द्धं तालमुच्यते ३५
शेषं मद्ध्यांगुलायामं भागं पञ्चयवाधिकम्
देशिन्नयायाममित्युक्तं भागं तु षडयवाधिकम् ३६
एतत्त्वनामिकादैर्घ्यं भागमंगुष्ठकायतम्

तत्समं तु कनिष्ठं स्याद्दशसप्तार्धकाष्टच ३७
सप्तार्द्धं षडयवञ्चैव ग्रंगुष्ठान्तरमुच्यते
विस्तारस्याष्टभागैकमग्रे चैव विहीनकम् ३८
सप्तार्द्धञ्चतुरर्द्धञ्च पञ्चार्द्धञ्चतुरर्द्धकम्
त्रियवञ्चनखानां तु तारमंगुष्ठकात्क्रमात् ३९
विस्तारं द्वियवाधिक्यं तखकायाममुच्यते
द्विपर्वोपेतमंगुष्ठं शेषास्त्रिपर्वसंयुताः ४०
तलमद्ध्यं त्रिरेखाभिस्संयुक्तं तु प्रकल्पयेत्
पद्मांगुलप्रमाणं तु तलमूलघनं भवेत् ४१
तत्घनस्याष्टभागैकमग्रे चैव विहीनकम्
मणिबन्धस्य विस्तारं त्र्यंगुलं द्वियवाधिकम् ४२
प्रकोष्ठमूलविस्तारं द्वियवं पञ्चमात्रकम्
बाहुकाग्रस्य विस्तारं कौशिकांगुलमुच्यते ४३
बाहुमद्ध्यमविस्तारं सार्द्धकौशिकमात्रकम्
हृदयावधिविस्तारं मन्वंगुलमिति स्मृतम् ४४
हिक्कामद्ध्यात्स्तनाद्मान्तं रव्यंगुलमिति स्मृतम्
स्तनयोरग्रमद्ध्यन्तु तत्समञ्चेति कीर्तितम् ४५
कुचमराडलविस्तारं सार्द्धरन्ध्रांगुलं भवेत्
उन्नतन्दशमात्रन्तु तन्मद्ध्ये चाद्मिमराडलम् ४६
पद्मांगुलन्तु विस्तारन्तन्मद्ध्ये तु स्तनाद्मकम्
द्वियवन्तस्यविस्तारं वृत्तन्दैर्घ्यन्तु तत्समम् ४७
जठरस्य तु विस्तारं रुद्रांगुलमिति स्मृतम्
नाभिप्रदद्मिणावर्त्तनिम्नं कुर्यात् सलद्मणम् ४८
निम्नं यवद्वयन्तस्य विस्तारं षडयवं भवेत्
ग्रोणिप्रदेशविस्तारं विंशदंगुलमुच्यते ४९
कटिप्रदेशविस्तारं षड्विंशदंगुलं भवेत्

योनिमूलस्य विस्तारं शरांगुलमिति स्मृतम्  ५०
अग्रे त्वंगुलविस्तारमानुपूर्वात्कृशन्तथा
योनिरेवं प्रकर्तव्यं पिप्पलस्यैव पत्रवत्  ५१
ऊरुमूलस्य विस्तारं आदित्यांगुलमुच्यते
तस्य मद्ध्यमविस्तारमेकादशांगुलं भवेत्  ५२
ऊर्वग्रस्य तु विस्तारन्नवमात्रमिति स्मृतम्
जानुमद्ध्यमविस्तारं वस्वंगुलमुदाहृतम्  ५३
जंघामूलस्य विस्तारमर्द्धेन सप्तमात्रकम्
जंघामद्ध्यमविस्तारं षण्मात्रं समुदीरितम्  ५४
नाळकस्य तु विस्तारञ्चतुरंगुलमुच्यते
अद्मंगुल्फद्वयोर्मद्ध्ये विस्तारन्तु शरांगुलम्  ५५
अंगुष्ठाग्रात्तु मद्ध्याद्मं चतुर्यवसमं भवेत्
अग्रे तलाग्रविस्तारं कौशिकांगुलमुच्यते  ५६
तलमद्ध्यमविस्तारं शरांगुलमुदाहृतम्
तलाग्रस्य घनन्तत्र पद्मांगुलमुदाहृतम्  ५७
बाह्ये घनन्तथाग्रन्तु मूलेद्ध्यर्द्धं द्विमात्रकम्
पादांगुष्ठायतं भागन्तत्समन्तु प्रदेशिनी  ५८
त्रिमात्रमद्ध्यमायामन्नामिकार्द्धं द्विमात्रकम्
कनिष्ठांगुलस्य दैर्घ्यन्तु कोलकञ्चेति कीर्तितम्  ५९
द्वादशञ्चनवाष्टौ च सप्तार्धं षडयवन्तथा
अंगुष्ठादिकनिष्ठान्तं पादांगुलसुतारकम्  ६०
तत्तदंगुलविस्तारादर्द्धं स्यान्नाळविस्तरम्
कद्मात्पाष्णर्यायतं भागमुत्सेधञ्चतुरंगुलम्  ६१
स्फिक्पिण्डस्य तु विस्तारं सप्तांगुलमिति स्मृतम्
ऊरूमूलं समारभ्य तस्योन्नतं गुणांगुलम्  ६२
ककुदः कटिसन्धिश्च षड्विंशन्मात्रमुच्यते

कटिसन्धेर्वस्तिदेशस्त्रयोदशांगुलं भवेत् ६३
अपरेकत्तयोर्मद्ध्ये एकोनविंशदंगुलम्
ककुद्दीर्घं भागमुक्तं विस्तारन्तालमेव तु ६४
हिक्कासूत्रोपरिस्कन्धमानञ्चैव द्विकोलकम्
तन्मद्धयमे चतस्याग्रे द्विमात्रञ्चार्द्धमात्रकम् ६५
अपरे कर्णयोर्मद्ध्ये अर्द्धेनैकादशांगुलम्
सामान्नयलत्तणञ्चैव विशेषमधुनोच्यते ६६
द्विभुजाञ्च द्विनेत्राञ्च किञ्चित्प्रहसिताननम्
करगडमकुटोपेता सर्वाभरणभूषिता ६७
दुकूलवसनोपेता सर्वावयवसुन्दरी
दत्तिणे कटकं हस्तं वामहस्तं प्रलंबितम् ६८
आभागन्तु वशात्कुर्यात्सूत्रञ्चैव तु लंबयेत्
नासाग्राल्लंबयेत्सूत्रं दत्तिणे स्थितपादके ६९
गुल्फमद्धयस्थितं सूत्रं शिवसूत्रमिति स्मृतम्
तत्सूत्रात्स्तनमद्ध्याञ्च वामे स्यात्तु गुणांगुलम् ७०
तत्सूत्राद्दत्तिणेनाभेरंगुलञ्चेति कीर्तितम्
तत्सूत्राद्योनिमद्ध्याञ्च दत्तिणे चतुरंगुलम् ७१
तत्सूत्राद्दत्तिणे जानुर्मद्ध्याञ्चैवगुणांगुलम्
अंगुष्ठयोर्द्वयोर्मद्ध्ये सार्द्धत्रयोदशांगुलम् ७२
तत्रिभागैकभागन्तु पाष्णर्योरंध्रमिति स्मृतम्
कटकाग्रस्य चोत्सेधं स्तनकत्तसमं भवेत् ७३
नाभेस्तु मणिबन्धाञ्च सार्द्धत्रयोदशांगुलम्
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरं सप्तमात्रकम् ७४
प्रलंबितकरस्याग्रादूरुकोञ्चं द्विमात्रकम्
ऊरुकान्मणिबन्धाञ्च द्व्यन्तरञ्चतुरंगुलम् ७५
पार्श्वमद्ध्यमबाह्वोश्च द्व्यन्तरन्तुरसांगुलम्

पीनोरुः पीनगन्धा च पीनस्तरसमन्विता ७६
द्विबाहुकाद्विनेत्राच श्यामाभाकमलेक्षणा
दक्षिणे चोत्पलं हस्ते वामहस्तं प्रलंबितम् ७७
भवान्याकृतिन्दवं स्यात् वागीश्याकृतिरुच्यते
श्वेतपद्मासनासीनां शुक्लवर्णाञ्चतुर्भुजाम् ७८
जटामकुटसंयुक्तां मुक्ताकुण्डलमण्डिताम्
यज्ञोपवीतिनीं हारमुक्ताभरणभूषिताम् ७९
दुकूलवसनां देवीं नेत्रत्रयसमन्विताम्
सदशन्दक्षिणे हस्ते वामहस्ते तु पुस्तकम् ८०
दक्षिणे चाक्षमाला च करकं वामके करे
वागीश्याकृतिराख्यातादुर्गायाकृतिरुच्यते ८१
ललाटलोचनन्तस्यास्तिलकञ्च शिखामणिः
शशिखण्डकिरीटं वा मकुटं सकरण्डकम् ८२
सनक्रकुण्डलं रत्नमण्डनं कर्णमण्डनम्
कर्णावतं सकाकर्ण चूळिकापाळिकान्वितम् ८३
चतुर्भुजसमायुक्तामष्टाभिर्दोर्भिरन्विताम्
शूलं खड्गं शरञ्चक्रं दक्षिणेषु करेषु च ८४
पाशखेटकशार्ङ्गांश्च शंखं वामकरेषु च
चतुर्भुजे च वामे तु शंखं वामकरेषु च ८५
चक्रञ्चाभयहस्तञ्च दक्षिणे तु समायुता
द्विनेत्रासौम्यवदनामहिषस्य शिरस्थिता ८६
दुर्गायास्वाकृतिर्ह्येवं ब्रह्माण्याकृतिरुच्यते
चतुर्भुजाविशालाक्षी तप्तकाञ्चनसन्निभा ८७
वरदाभयहस्ता च कमण्डल्वक्षमालिका
हंसद्ध्वजाहंसरूढा जटामकुटधारिणी ८८
रक्तपद्मासनासीना ब्रह्माणी ब्रह्मरूपिणी

त्रिणेत्रीशुक्लवर्णाच शूलपाणीवृषद्ध्वजा ८९
वरदाभयहस्ता च साद्मालाकरान्विता
जटामकुटिनीशंभोर्भूषणीसामहेश्वरी ९०
कुमारसदृशाकन्नयावर्णवाहनकेतुभिः
वासिकाबद्धमकुटा शक्तिकांकुशधारिणी ९१
रक्तवस्त्रामहावीर्या हारकेयूरभूषणी
वरदाभयहस्ता च कौमारी कुंकुमप्रभा ९२
पद्मपत्रविशालाद्मी श्यामवर्णामहाबला
शंखचक्रगदापद्मधराबाहुचतुष्टयी ९३
गरुडध्वजसंयुक्ता वैष्णवी विष्णुभूषणी
कृष्णपीतांबराशार्ङ्गी सर्वसंपत्करी नृणाम् ९४
पवित्रालंकृतोरस्का पादनूपुरसंयुता
सव्ये भयहलञ्चैव मुसलं वरदन्नयके ९५
वराहवक्त्रीवाराही यमभूषणभूषणी
वज्रहस्तागजारूढा लोचनद्वयसंयुता ९६
वस्त्रालंकारसंपन्नागजेंद्रध्वजवाहना
वरदाभयशक्त्याप्त बाहुकेन्दुप्रकीर्तिता ९७
दीर्घजिह्वोर्ध्वकेशा च कृष्णाकाकृष्णदंष्ट्रिका
निर्मांसाव्यावृतमुखी चण्डीखण्डेन्दुमण्डिता ९८
काळीकपालमाला च शवारूढा कृशोदरी
कौशिकारोहिणी वासौ चामुण्डयागृध्रकेतुका ९९
मांसखण्डसुसंपूर्णं कपालं वामपाणिभाक्
शूलाही दद्मिणे चैव वह्निर्वामकरस्थिके १००
व्याघ्रचर्मांबरा काळी त्रिणेत्री शंखकुंडली
लोकानां मातरस्सप्तमातरः अधिका इमे १०१
मातृणामाकृतिः प्रोक्ता उषायाश्चाकृतिं श्रुणु

गोक्षीरधवळप्रख्याद्विभुजा च द्विनेत्रिका १०२
सुस्त्रनाचारुवदना उषानीलाळकान्विता
उषायाश्चाकृतिः प्रोक्ता धरण्याकृतिरुच्यते १०३
चंद्रपुष्करणीतीरे चंद्रमास्सहतारकैः
स्वकरे स्थापितं लिंगं पूजयामासभक्तितः १०४
सुराणां पूजितानाञ्च गीतनृत्तमनोहरैः
सन्निधानप्रदं लिंगं कावेरीमद्ध्यमे शुभे १०५
श्रीमद्दीर्घपुराधीशं सहस्रकिरणं सदा
संपूज्य लोकवन्द्यत्वं पदमव्ययमाप्तवान् १०६
भद्रकाळी स्वयं पश्चात् भक्तियुक्ता महेश्वरी
संपूज्यविधिवल्लिंगं सायुज्यं पदमाप्नुयात् १०७
स्कान्दे - इंद्रपुष्करणी तीरे स्नात्वा नियतमानसाः
क्षाळयन्ति समस्तानि पापानि विविधानि च १०८
यक्षैश्च किन्नरैश्चैव कालेन वरुणेन च
कृशानुनाचमरुता भास्करेण हिमांशुना १०९
व्याघ्रपादहनूमद्भ्यां पातञ्जलिपुरस्सरैः
वसुभिश्चमरुद्भिश्च दानवैश्च युगेयुगे ११०
दिव्यैस्तपोधनैश्चैव पूजितं लिंगमद्भुतम्
करञ्जमूलसंस्थानं शिवलोकेश्वरं शिवम् १११
श्यामवर्णनिभा भास्वद्राजीवसमलोचना
हेमयज्ञोपवीता च द्विभुजा च द्विनेत्रका ११२
सर्वाभरणसंयुक्ता करण्डमकुटान्विता
रक्तांबरधरा चैव दक्षहस्तोत्पलान्विता ११३
धरण्याकृतिरेवं स्यात् ज्येष्ठायाकृतिरुच्यते
पीनोर्वी पीनगण्डा च पीनस्तनभरोदरी ११४
नीलकाळकसीमान्ता समं धम्मिल्लशिरोरुहा

स्निग्धाञ्जननिभा रक्ता बिंबोष्ठी तुंगनासिका  ११५
द्विभुजा च द्विनेत्री च कुमुदं दक्षिणे करे
तन्नयापुत्रान्विता देवी दक्षिणे दक्षिणेऽपि च  ११६
देव्याबाहुसमं कुर्यात् कन्नयका पुत्रकौ क्रमात्
पुत्रो वृषभवक्त्रस्तु द्विभुजौ च द्विनेत्रकौ  ११७
ज्येष्ठाया आकृतिर्ह्येवं पद्मजा कृतिरुच्यते
पद्मपत्रासनासीना पद्माभापद्महस्तिनी  ११८
हैमरत्नो ज्वलन्नक्र कुंडलं कर्णमण्डलम्
कमण्डलामलमुखी कर्णपूर्णाय तेक्षिणी  ११९
सुयौवना सुरम्यांगा कुञ्चितभ्रूसविभ्रमा
रक्तोष्ठी वीतगन्धाच कञ्चुकाच्छादितस्तनी  १२०
शिरसो मण्डनं शंखं चक्रं सीमान्तपादजम्
नागहस्तसमौ बाहू केयूरकटकोज्वलौ  १२१
पङ्कजं श्रीफलञ्चैव वामके दक्षिणेऽपि च
शोभनांबरसंपन्ना श्रोणी च विपुलामता  १२२
मेखला कटिसूत्रांगलक्ष्मीलक्ष्मीविवर्द्धनी  १२३
इति पूर्वकारणे प्रतिष्ठातन्त्रे स्त्रीमानदशतालविधिपटलो द्वादशः

## कनिष्ठदशतालविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण कनिष्ठदशतालकम्
ऋषयश्चाश्विनी चैव आदित्येन्दुगुहास्तथा  १
आर्यं शतमखञ्चैव चण्डेशं क्षेत्रपालकम्
कनिष्ठदशतालेन कारयेत्तु विचक्षणः  २
बेरायामन्तु विभजेत् हिक्काराधिशतांशकम्
उष्णीषमंगुलं प्रोक्तं केशमानं गुणांगुलम्  ३
केशान्ताद्धनुपर्यन्तं मद्धयेन द्वादशांगुलम्

गळवृद्ध्यर्द्धमात्रेण भागं कर्णमिति स्मृतम् ४
हिक्कासूत्रात्स्तनान्तन्तु अर्द्धेन द्वादशांशकम्
स्तनान्तान्नाभिपर्यन्तं तत्समञ्चैव कीर्तितम् ५
नाभेस्तु मेढ्रमूलांतमर्द्धेन द्वादशांगुलम्
तन्मेढ्रमूलपूर्वाग्रात् पञ्चविंशतिमात्रकम् ६
जानुमानं तु भागं स्यात् जंघोर्वोरुसमं भवेत्
भागं तु चरणोत्सेधं कायमानमिति स्मृतम् ७
उष्णीषात् पृष्ठदेशांतमर्द्धेन द्वादशांगुलम्
उष्णीषात्पार्श्वकेशांतमष्टांगुलमिति स्मृतम् ८
उष्णीषात्पार्श्वकेशान्तं भूतमात्रमिति स्मृतम्
केशान्ताद्धनुपर्यन्तं मानञ्चैव त्रिधा भवेत् ९
केशान्तादक्षिसूत्रान्तमेकांसमिति कीर्तितम्
अक्षिसूत्रात्पुटान्तञ्च तत्समन्तु विधीयते १०
पुटान्ताद्धनुपर्यंतमेकांशेन प्रकल्पयेत्
यवोपेतं त्रिमात्रं तु दृगंतरं प्रकल्पयेत् ११
वस्त्रालंकारसंपन्ना गजेंद्रध्वजवाहिनी
तत्समन्नयनायामं भूतमात्रं भ्रुवायतम् १२
भ्रूमद्ध्यादूर्द्ध्वकेशांतं यवोपेतं द्विमात्रकम्
भ्रूमद्ध्यमे यवं तारमानुपूर्वात्कृशाग्रकम् १३
षड्यवन्नेत्रविस्तारमूर्द्ध्ववर्मं यवार्द्धकम्
अर्द्धं यवं त्वधोवर्मं करवीरो यवो भवेत् १४
नेत्रायामं त्रिधा कृत्वा मद्ध्यैकं कृष्णमण्डलम्
कृष्णमण्डलमद्ध्ये तु ज्योतिर्मण्डलकं यवम् १५
दृष्टियूकप्रमाणेन तन्मद्ध्ये परिकल्पयेत्
तारं भ्रुवाग्रयोर्मद्ध्ये यवञ्चेति प्रकीर्तितम् १६
भूसूत्रांतं तु तस्योद्ध्वें दैर्घ्यञ्चार्द्धयवं भवेत्

अपांगात् कर्णमूलांतं षरामात्रञ्चैव षडचवम्  १७
कर्णोर्द्ध्वं भ्रुवसूत्रस्य समञ्चेति प्रकीर्तितम्
द्विमात्रं कर्णविस्तारमायामं तु द्विमात्रकम्  १८
पिप्पली चार्द्धमात्रन्तु तत्समं सुषिरं भवेत्
पिप्पल्यानां तु नाळाग्रं मात्राद्वयमिति स्मृतम्  १९
अपाङ्गान्नाळविस्तारं यवाद्घाणांगुलं भवेत्
पूर्वन्नाळार्द्धमात्रञ्च तत्तारार्द्धं घनं भवेत्  २०
अंतराळं तु मात्रेण कर्णपट्टीयवद्वयम्
द्वयोः कर्णांतरं पूर्वे द्वात्रिंशच्च त्रिमात्रकम्  २१
पृष्ठे द्विकर्णयोर्मद्ध्ये द्वादशांगुलमुच्यते
घ्राणमूलस्य विस्तारं त्रियवं समुदाहृतम्  २२
नासिकाग्रस्य विस्तारमंगुलञ्चेति कीर्तितम्
पुटांतरार्द्धमात्रञ्च तुंगं तत्सममुच्यते  २३
वंशाग्रतारमर्द्धांशमूलं तारं यवं भवेत्
परितो नासिकापाल्या घनमर्द्धयवं भवेत्  २४
त्रियवं गोजिकायामं तारमर्द्धाधिकं यवम्
घ्राणांतात् गोजिकायाश्च यवहीनं द्विमात्रकम्  २५
उत्तरोष्ठस्य विस्तारं त्रियवञ्चेति कीर्तितम्
तस्यायामञ्चतुर्मात्रं वक्त्रत्रयसमन्वितम्  २६
अधरोष्ठस्य चायामं मात्रद्वयमुदाहृतम्
तस्यार्द्धं तस्य विस्तारं चुबुकं तु यवद्वयम्  २७
विस्तारं तत्समं ज्ञेयन्निम्नमर्द्धयवं भवेत्
यवहीनांगुलं तस्मादधरोष्ठस्य निर्गमम्  २८
ऊर्द्ध्वपालीमधःपालीं कुर्यादर्द्धयवेन तु
शिवमूलस्य विस्तारं वस्वंगुलमिति स्मृतम्  २९
शिवाग्रस्य तु विस्तारं सार्द्धसप्तांगुलं भवेत्

वक्षस्थलस्य विस्तारं सप्तविंशति मात्रकम्  ३०
पञ्चविंशतिमात्रं तु बाहुयामं प्रकीर्तितम्
आयामं तु प्रकोष्ठस्य एकोनविंशदंगुलम्  ३१
मद्ध्यांगुलाग्रात्तस्याग्रादर्द्धेन द्वादशांगुलम्
तस्यार्द्धं तु कलायामं शेषं मद्ध्यांगुलायतम्  ३२
द्व्यंगुलद्वयवाधिक्यमंगुष्ठायाममिष्यते
सार्द्धं वेदांगुलं प्रोक्तन्नामिकायास्तु दैर्घ्यकम्  ३३
तथैव नामिकायास्तु भागं कनिष्ठिकायतम्
धर्माब्धिवसुषट्भूतं यवमंगुष्ठकान् क्रमात्  ३४
कनिष्ठांगुलमंतं तु विस्तारं तु विधीयते
विस्तारस्याष्टभागैकमग्रतारविहीनकम्  ३५
विस्तारं तु त्रिधा कृत्वा द्विभागन्नखविस्तरम्
तत्तारात्तु यवाधिक्यं नखायामं प्रकीर्तितम्  ३६
अष्टांगुलं द्विपर्वं स्यादन्नयेषां तु त्रिपर्वकम्
तलमद्ध्यत्रिरेखाभिस्संयुक्तं परिकल्पयेत्  ३७
तलमूलप्रदेशस्य घनं कोलकमुच्यते
अष्टांशहीनमग्रे तु तत् घनं परिकीर्तितम्  ३८
तलायामसमं ज्ञेयं तलस्यैव तु तारकम्
मणिबन्धस्य विस्तारं मात्रं तु द्वियवाधिकम्  ३९
प्रकोष्ठमूलविस्तारं शरमात्रञ्चतुर्यवम्
बाहुमूलस्य विस्तारं षरामात्रं तु चतुर्यवम्  ४०
बाहुमद्ध्यमविस्तारं सप्तांगुलमुदाहृतम्
बाहूमूलस्य विस्तारं वस्वंगुलमुदाहृतम्  ४१
हिक्कासूत्रात्तु कक्षांतं वस्वंगुलमुदाहृतम्
द्वात्रिंशदंगुलं प्रोक्तं कक्षयोरंतरं ततः  ४२
हृदयावधिविस्तारं अष्टादशांगुलं भवेत्

उदरस्य तु विस्तारं सप्तदशांगुलं स्मृतम् ४३
श्रोणिप्रदेशविस्तारं स्मृत्यंगुलमुदाहृतम्
षडयवं नाभिविस्तारं निम्नमर्द्धयवं भवेत् ४४
स्तनमण्डलविस्तारमर्द्धांगुलमुदाहृतम्
चूचुकं द्वियवं प्रोक्तमुत्सेधं तत्समं भवेत् ४५
हिक्कामद्ध्यात्स्तनांताच्च अर्द्धेन द्वादशांगुलम्
उभयोस्तनाद्वयोर्मद्ध्ये अर्द्धेन द्वादशांगुलम् ४६
मुक्तायामं तु भागं स्यात् विस्तारं तत्समं भवेत्
शेफं पञ्चांगुलं दैर्घ्यं मुकुळोत्पलवद्भवेत् ४७
कटिप्रदेशविस्तारं स्मृत्यंगुलं त्रिपादकम्
ऊरुमूलस्य विस्तारमर्द्धेन द्वादशांगुलम् ४८
ऊर्वग्रस्य तु विस्तारं सार्द्धरंध्रांगुलं भवेत्
जानुमद्ध्यस्य विस्तारमर्द्धेनाष्टांगुलं भवेत् ४९
जंघामूलस्य विस्तारमर्द्धेन कौशिकांगुलम्
नाळकस्य तु विस्तारमर्द्धेन चतुरंगुलम् ५०
अंघ्रेस्तालाग्रविस्तारं कौशिकांगुलमुच्यते
तलमद्ध्यमविस्तारं भूतांगुलमुदाहृतम् ५१
अंगुष्ठस्य तु दैर्घ्यं तु चतुरंगुलमुच्यते
तस्याग्रात् गुल्फमद्ध्याच्च अर्द्धेन द्वादशांगुलम् ५२
नामिकायास्समायामं भागञ्चैव यवाधिकम्
मद्ध्यांगुलं ततः प्रोक्तं भागं त्वनामिकायतम् ५३
कनिष्ठांगुलिकायाममर्द्धेनैव गुणांगुलम्
मुन्नद्यद्रिनवनाड्याख्य त्रयोदशयवं क्रमात् ५४
कनिष्ठाद्यंगुलीनाञ्च विस्तारं तु विधीयते
अग्रे मूले समं प्रोक्तं विस्तारं तु त्रिधा भवेत् ५५
द्विभागं नखविस्तारमायामं तत्समं भवेत्

तलाग्रांगुष्ठमूले तु द्विमात्रं तु घनं भवेत् ५६
कनिष्ठमूले तस्याग्रे घनन्नवयवं भवेत्
अग्रचपाष्णर्यांतकं भागं पाष्णर्योत्सेधं तु तत्समम् ५७
पृष्ठमण्डलविस्तारं नवमात्रमुदाहृतम्
पक्षो दण्डाच्च वस्तौ तु पञ्चविंशतिमात्रकम् ५८
ककुद्भागमिति प्रोक्तं भागितम्मूल तारकम्
हिक्कायाः स्कन्धमूलांताश्चतुरंगुलमुच्यते ५९
मद्धये चाग्रे क्रमेणैव कोलकञ्चैकमात्रकम्
कक्षयोरंतरं पृष्ठे चतुर्विंशति मात्रकम् ६०
एवं लक्षणमाख्यातं तेषामाकृतिरुच्यते
अगस्त्यश्च पुलस्त्यश्च विश्वामित्रः पराशरः ६१
जमदग्निश्च वाल्मीकी सनत्कुमारश्च सप्त च
शुक्लवस्त्रधरास्सर्वे शुक्लयज्ञोपवीतकाः ६२
शुक्लवस्त्रोत्तरीयाश्च जटावल्कलसंयुताः
कमण्डल्वक्षहस्ताश्च दीर्घश्मश्रूसमन्विताः ६३
ऋषीणामाकृतिः प्रोक्ता अश्विन्नयाकृतिरुच्यते
उभयोस्सोपवीतौ तौ चूडामकुटधारिणौ ६४
फुल्लरक्तोत्पलाक्षौ च पीतस्त्रक् शुक्लवस्तकौ
अश्विन्याकृतिरेवं तु सूर्याकृतिं श्रुणुष्वथ ६५
एकचक्रस्ससप्ताश्वस्ससारथिमहारथम्
कृत्वा तु स्थापयेत्सूर्यं पुरुषाकृतिरूपिणम् ६६
तदर्द्धं वामतश्श्यामं नारीरूपसमन्वितम्
कृत्वा तु स्थापयेत्सम्यक्सर्वाभरणभूषितम् ६७
आकुञ्चितसुकेशं च प्रभामण्डलसयुतम्
मकुटं वा विधातव्यमन्यत्सर्वं सुमण्डलम् ६८
हस्तद्वयलसत्पद्मं कञ्चुकाञ्चितविग्रहम्

एकवस्त्रं द्विदोर्दण्डं स्कन्धेसक्तकरांबुजम् ६९
रथोपेतं विनावाथ केवलं पद्मसंस्थितम्
पादौ सखेटकौ तस्य स्थिरं पद्मासने स्थितम् ७०
जातिहिंगुल्य वर्णस्थासंस्थाप्यं सूर्यमण्डलम्
वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः ७१
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः
आदित्यश्च तथा सूर्य अंशुमांश्च दिवाकरः ७२
एते वै द्वादशादित्या एषामाकृतिरुच्यते
द्विभुजाश्च द्विनेत्राश्च पद्मस्थाः पद्महस्तकाः ७३
रक्तांबरसुवर्णाश्च प्रभामण्डलमण्डिताः
उपवीतसमायुक्तास्सर्वाभरणभूषिताः ७४
आदित्याकृतिरेवन्तु चंद्राकृतिरथोच्यते
चित्रसिंहासनासीनः कुन्दस्फटिकसन्निभः ७५
प्रभामण्डलसंयुक्तो द्विबाहुश्च द्विनेत्रकः
आसीनोवास्थितो वापि कुमुदप्रज्वलत्करः ७६
तस्य दक्षिणभागे तु रोहिणी द्विभुजान्विता
सस्यांकुरनिभासाभ्याद्राजी वसमलोचना ७७
चंद्राकृतिस्समाख्याता स्कन्दस्याकृतिरुच्यते
रक्तांबरसदृक् स्तोकबालोबालार्कसन्निभः ७८
शिखण्डमणिकोग्रीवमांसलः प्रियदर्शनः
शक्तिस्तु विलसत्खट्ग चक्रपाशप्रसारितः ७९
दक्षिणे दक्षिणे रक्तजूटखेटककार्मुकः
पताकापिञ्चिकामुष्टिस्तर्जनी च प्रसारिता ८०
गुहोद्वादशबाहुस्स्यात् पुरीखेटकपत्तने
चतुर्दोर्भिर्वाथ षड्दोर्भिस्संयुक्तः परिकल्पयेत् ८१
सशक्तिस्सहयस्सासिस्साक्षमालस्सकुक्कुटः

सखेटश्च सषट्बाहुश्चतुर्दोस्वस्तिखेटकः ८२
सशक्तिः कुक्कुटश्चैकवक्त्रकः कुंकुमच्छविः
मयूरारोहसर्वत्र भ्रामराह्य द्विबाहुकः ८३
वासिकाबद्धमकुटस्सुब्रह्मरायस्सुसुन्दरः
स्कन्दस्याकृतिरेवन्तु आर्यस्याकृतिरुच्यते ८४
मोहिनी तनयश्शान्तो द्विबाहुश्श्यामसन्निभः
पीठालंबितशायीतो वामदक्षिणपादकौ ८५
वामांघ्रिजानुकोद्धर्वे तु वामहस्तस्थितां कुरु
मराडली भूतदराडाग्रो वज्रदराडधरो युवा ८६
स्निग्धनीलाञ्जनाकीर्णः कुन्दळी भूतभूद्धवजः
गजवाहनकेतुस्स्याद्विलासीसविलासिनी ८७
नीलश्वेतश्च वृषभ वाहनोवा चतुर्भुजः
रक्तचूडद्धवजो वापि सर्वत्र परिकीर्तितः ८८
ज्ञानीयोगासनासीनो वेदाद्ध्यायी पवित्रकः
सोभयांसोपवीतस्स्यान्नचूनावीरासने स्थितः ८९
लीलाविभीतभावी स्यात् सुरभावी सुखासनः
वामोरूपरिविन्नचस्तवामपादतले क्षणः ९०
आर्यस्याकृतिरेवन्तु शक्रस्याकृतिरुच्यते
वज्रपाणिर्महावीरस्सिंहस्कन्दोवलीलधृक् ९१
ललाटोरस्थलायाम पीवरोरुर्म्महोदरः
प्रसन्नवदनश्चयाम वर्णोरक्तांबरस्सुखी ९२
किरीटकुराडलीहार केयूरादिविभूषितः
पृथुशीर्षो गजारूढो देवराजश्शचीपतिः ९३
शक्रस्याकृतिरेवन्तु चराडेशस्याकृतिं शृणु
चराडीचराडेश्वरो रक्तश्वेतमिश्रश्च विस्तरः ९४
द्विबाहुस्सजटाचूढ शेखरः कर्णकुराडलः

धृतयज्ञोपवीतश्च शुक्लांबरधरश्शुचिः ९५
सर्वभूषणसंभूष्यष्टं कपाणिरथापि वा
अर्द्धचंद्रासनासीनः पुष्पमालावलंबितः ९६
चण्डेशस्याकृतिर्ह्येवं क्षेत्रपालाकृतिं शृणु
रक्तोग्रेक्षणः काळमेघवर्णो वापि महाबली ९७
द्विबाहुर्वा चतुर्बाहुरष्टबाहुरथापि वा
कपालशूलो द्विभुजो घण्टापाशसमायुतः ९८
चतुर्बाहुः क्रमात्क्षेत्र पालो वामे च दक्षिणे
अग्निटंकौ चखट्वांगा भयमष्टभुजे क्रमात् ९९
रक्तपद्मासनारूढः श्यामवर्णोग्ररूपकः
विसृतोर्द्धवो रक्तकेशः कुंचितभ्रूसविभ्रमः १००
नग्नरूपशिरोमाला भूषितस्तीक्ष्णदंष्ट्रकः १०१
इति पूर्वकारणे प्रतिष्ठातन्त्रे कनिष्ठदशतालविधिपटलो त्रयोदशः

नवतालोत्तमपटलप्रारंभः

अथातस्संप्रवक्ष्यामि नवतालोत्तमं भवेत्
मुखद्वादशमात्रं स्यात् भागन्तु चतुरंगुलम् १
चतुर्भागाष्टवक्त्रैश्च कारयेल्लक्षणान्वितम्
विद्येशालोकपालाश्च अष्टमूर्तिवसूंस्तथा २
कारयेदन्नयदेवांश्च नवतालोत्तमेन तु
अनन्तेशस्तथासूक्ष्मशिवोत्तमश्चैकनेत्रकः ३
एकरुद्रस्त्रिमूर्तिश्च श्रीखण्डश्च शिखण्डिनः
अष्टविद्येश्वरा ह्येते त्रिणेत्राश्च चतुर्भुजाः ४
अभयं वरदोपेता टंकशूलधरास्तथा
रक्तकुन्दस्तथा नीलं पीतं कृष्णञ्चकुंकुमम् ५
अरुणं भिन्नाञ्जनप्रख्यं क्रमाद्विद्येशवर्णकम्

जटामकुटसंयुक्ता उपवीतसमन्विताः ६
विद्येशा कृतिरेवं स्यात् दिक्पाला कृतिरुच्यते ७
पूर्वमेव मया प्रोक्ता चाकृतिर्वज्रपाणिनः
अर्द्धचंद्रासनासीनो ब्रह्मरूपो हुताशनः ८
प्रज्वलत्काञ्चनज्योतिः पिंगलः पिंगलोचनः
हेमकूर्च्चाग्रसदृशः स्वरूपञ्च शिरोरुहम् ९
तरुणादित्यसंकाशन्तद्वस्त्रमुपवीतकम्
अक्षमाला च शक्तिश्च दक्षिणे दक्षिणेऽपि च १०
ज्वालामाला कुलन्तीव्रं पार्श्वस्थान्नयंशुमण्डलम्
मेषारूढञ्च कुण्डस्थो योगपट्टेन वेष्टितम् ११
दक्षिणे तु स्थिता स्वाहा रक्तकुण्डलमण्डिता
अग्नेराकृतिरेवं स्याच्छृणुवैवस्वताकृतिम् १२
दण्डपाणिर्महादीप्तः कालाञ्जनसमच्छविः
महामहिषिकारूढो दीप्ताग्निसमलोचनः १३
यमस्याकृतिरेवन्तु राक्षसेशाकृतिं श्रुणु
राक्षसेशो विशालाक्षः पीतवस्त्रश्शवासनः १४
निर्ऋतिस्सुस्थितासीनः खड्गहस्तो महाज्वलः
निर्ऋतेराकृतिर्ह्येवं वरुणस्याकृतिं श्रुणु १५
शंखकुन्देन्दुधवळः पाशहस्तो महाबलः
केयूरकुण्डली हारी पीतवासास्सुशोभनः १६
आसीनोवास्थितो वापि मकरे वरुणस्मृतः
कुञ्चितभ्रूयुवावायुस्ताम्रदृक् धूम्रसन्निभः १७
अंकुशेन करोवीरश्शंबरांबरसंयुतः
मृगारूढो विधातव्या सर्वभूषणभूषितः १८
एवं सदागतिस्सर्वव्यापकोयं समीरणः
मकुटीकुण्डली हारी केयूरी नरवाहनः १९

यक्षराजः कुबेरोयन्तप्तकाञ्चनसन्निभः
शंखपद्मनिधी युक्तो गदाहस्तो निधीश्वरः २०
वृषारूढो महाराजो धवळः पिंगलेक्षणः
त्रिशूलपाणिरीशानस्त्रिणेत्रो लोकशंकरः २१
दिक्पालाकृतिरेवं स्यादष्टमूर्त्याकृतिं श्रुणु
भवश्शर्वस्तथेशानः पशुपत्युग्रकस्तथा २२
रुद्रो भीमो महादेवः कीर्तितास्त्वष्टमूर्तयः
चतुर्भुजास्त्रिणेत्राश्च जटामकुटधारिणः २३
अभयं वरदोपेताष्टंकं कृष्णधरा स्मृताः
सर्वाभरणसंयुक्ता रक्तक्षौमधरा इमे २४
शुक्लं श्यामञ्च रक्तञ्च कृष्णं गोक्षीरसन्निभम्
काश्मीरं विद्रुमन्नीलं भवादीनान्तु वर्णकम् २५
अष्टमूर्त्याकृतिर्ह्येवं वसूनामाकृतिं श्रुणु
धरो धूम्रश्च होमश्च आपश्चैवानिलोनलः २६
प्रत्यूषश्च प्रभासश्च वसवश्चाष्ट एव च
द्विभुजाश्च द्विनेत्राश्च असिखेटक संयुताः २७
रक्तवर्णा इमे सर्वे पीतवस्त्रसमन्विताः
सर्वाभरणसंयुक्ताः स्निन्धकुन्तळमूर्द्धजाः २८
वसूनामाकृतिर्ह्येवमस्त्रमूर्त्या कृतिं श्रुणु
वज्रं शक्तिञ्च दण्डञ्च खट्गं पाशं तथांकुशम् २९
गदात्रिशूलञ्चित्रञ्च पद्मञ्चेति दशायुधम्
द्विभुजाश्च द्विनेत्राश्च सर्वाभरणसंयुताः ३०
कृताञ्जलिपुटोपेताः करण्डमकुटान्विताः
तत्तद्वक्रप्रमाणेन अस्त्रमूर्तिसमन्विताः ३१
नानावर्णसमायुक्ता नीलजीमूतवर्णकम्
नीलकं पद्मरागञ्च तुषारञ्चेंद्रनीलकम् ३२

शारदाभ्रञ्च रक्तञ्च वज्रादीनान्तु वर्णकम्
जायाशक्तिगताविद्या पाशपद्मेन पुंसके ३३
शेषाः पुमानिति ख्याताः कीर्तिता त्वस्त्रमूर्त्तयः ३४
इति पूर्वकारणे प्रतिष्ठातन्त्रे नवतालोत्तमविधिपटलश्चतुर्दशः

नित्याग्निविधिपटलप्रारंभः

अतःपरं प्रवक्ष्यामि नित्याग्नियजनक्रमम्
आग्नेय्यां स्थापयेदग्निं विधिनादेशिकोत्तमः १
चतुरश्रं वाथ वृत्तं वा मेखलात्रयसंयुतम्
अरत्निमात्रविस्तारं तन्मानं बिलमुच्यते २
पश्चिमे दक्षिणे वापि योनिरश्वत्थपत्रवत्
कुण्डे तु स्थापयेदग्निमवच्छिन्नन्तु कारयेत् ३
यावन्मूलोपचारन्तु तावदग्निं सुपूजयेत्
त्रिकालमेककालं वा द्विकालं वा यजेद्गुरुः ४
उत्तमन्तु त्रिकालं स्यात् मद्ध्यमन्तु द्विकालकम्
अधमं त्वेककालं स्यात् नित्याग्निर्यजनन्तथा ५
शिवाग्रे वाथ कर्तव्यं सर्वशान्तिकरं परम्
मार्जनं प्रोक्षणं तत्र गोमयेनोपलेपयेत् ६
अघोरास्त्रेण मंत्रेण शोधयेत्तु विशेषतः
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत् ७
परिस्तरेत् द्विदर्भैश्च परिषेकमथाचरेत्
कृत्वा चैवाज्यसंस्कारं पश्चादाघारमेव च ८
आज्यं हुत्वा हृदामंत्री हविश्चैवाक्षमात्रतः
अग्नआयाहि मंत्रेण शोधयेत्तु विशेषतः ९
प्रत्येकं षोडशं वारं द्वात्रिंशद्वा समाचरेत्
प्रणवेनैव हुत्वा तु पश्चादिद्ध्माहुतिञ्चरेत् १०

चरुं हुत्वा तदन्ते तु व्याहृतिं जुहुयात्ततः
ब्रह्मांगानि ततो हुत्वा स्विष्टान्तं हि न कारयेत्  ११
प्रणीताघारसमिधौ ब्रह्मकूर्चं विनाचरेत्
कुर्याद्धीमान् प्रतिपत्तं स्थालीपाकं तदादितः  १२
समिदाज्यचरूंश्चैव अष्टाविंशतिसंख्यया
होमयेत्तु विशेषेण स्थालीपाकं समाचरेत्  १३
आज्यस्थालीं प्रणीताञ्च प्रोक्षणीञ्चैव कल्पयेत्
ब्रह्माणं दक्षिणेभ्यर्च्य वामे तस्य जनार्दनम्  १४
प्रणवेनैव होतव्यं वेदादींश्चैव होमयेत्
कूश्माण्डाहुतिभिर्हुत्वा स्विष्टान्तं नाचरेद्बुधः  १५
तत्पुरुषेण मंत्रेण चरुहोमं समाचरेत्
चरुभागं त्रिधाभज्य गव्याज्येनाभिघारयेत्  १६
एकभागं निवेद्यं स्यात् एकभागं हुतं भवेत्
शेषभागार्द्धं बल्यर्त्थं शेषमाचार्यभोजनम्  १७
अन्येषां भोजने दोषो भुक्तश्चेत् कृच्छ्रमाचरेत्

इति पूर्वकारणे प्रतिष्ठातंत्रे
नित्याग्निविधिपटलः पञ्चदशः

बलिकर्मविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण बलिकर्मसु योजयेत्
बकारं बलवर्द्धन्यां लिकारं धान्यसंग्रहम्  १
बकारलिकारसंयुक्तं बलिशब्दाः प्रकीर्तिताः
वृषादिबलिपीठान्तं बलिं कृत्वाविशेषतः  २
अक्षद्वयप्रमाणेन बलिकारेऽत्र कीर्तितम्
पतंगञ्च भुजंगञ्च ऊर्ध्वाधस्संप्रपूजयेत्  ३
द्विभुजौ च द्विनेत्रौ च सर्वाभरणभूषितौ

रक्ताक्षो रक्तवर्णश्च तद्वर्णांबरभूषितौ ४
दक्षिणे तु शिरोन्यस्त्वा पादौचैवोत्तरे तथा
द्विनेत्रौ पीतवर्णौ च भद्रकायौ भयं करौ ५
कृतांजलिपुटोपेतौ शोधयेत्तत्प्रजापतेः
नित्यं दक्षिणपादे च अपदानादपादतः ६
ग्रामे च द्विभुजं विद्यान्नागरादौ चतुर्भुजाः
स्वायंभुवे च दैव्ये च आर्षे गाणे तथैव च ७
द्विभुजे च द्विनेत्रे च श्वेतोभौ चोग्ररूपकौ
नित्योत्पादानकौ चैव व्याळाभरणभूषितौ ८
द्विबाहू भद्रकायस्तु मातुलुंगसमप्रभौ
पूजयेत् द्वारपार्श्वे तु ग्रामादिषु च पूर्ववत् ९
द्वारस्य मद्ध्यमे चैव दक्षिणे तु तथोत्तरे
स्थानशुद्धिं ततः कृत्वा तस्योर्ध्वे वक्त्रं कल्पयेत् १०
तस्योर्ध्वे बलिदानन्तु द्वारदेवान् सुवृद्धये
नाळिकेरप्रमाणन्तु उत्तमस्य विधीयते ११
कपित्थस्य फलं कृत्वा मद्ध्यमन्तु प्रमाणकः
कुक्कुटाण्डप्रमाणं स्यात् बलिं सर्वत्र दापयेत् १२
स्वयंभूर्दैविकञ्चैव देव्यमार्षकमानुषम्
राक्षसं बाणलिंगञ्च सप्तधा लिंगमुच्यते १३
दैविकन्तु भवादीनां मित्रादीनान्तु मानुषम्
भूतादीनां स्वयंभूतमार्षकं परिवारकैः १४
वसूनां बाणलिंगन्तु विद्येशानान्तु देविकम्
यक्षादिरक्षसां लिंगं बलिदेवाः प्रकीर्तिताः १५
भवश्शर्वस्तथेशानः पशुपतिर्नील एव च
उग्रो भीमो महादेव इत्यष्टौ मूर्तयस्तथा १६
पीतञ्च कुंकुमं कृष्णं नृणां भिन्नाञ्जनप्रभम्

नीलं श्वेतं तथा रक्तं त्वष्टमूर्तेश्च वर्णकम् १७
अभयावरदास्सर्वे पाशांकुश चतुर्भुजाः
त्रिणेत्रं मेघवर्णञ्च द्विपादञ्चैव नूपुरम् १८
जटामकुटसंयुक्तमष्टमूर्तिस्वरूपकम्
देविकाख्यञ्च लिंगन्तु बलिदेवाः प्रकीर्तिताः १९
इंद्राग्नी च यमश्चैव निर्ऋतिर्वरुणस्तथा
वायुस्सोमस्तथैशान्यो ब्रह्मविष्णुश्च लोकपाः २०
मानुषे लिंगवत्कृत्य लोकपालबलिस्तथा
संवर्तं पूर्वतो न्यस्य चोन्मत्तमग्निगोचरे २१
कुण्डोदरं दक्षभागेनैर्ऋतौ दीर्घकायकौ
वारुण्यां ह्रस्वपादन्तु वायव्यांसिंहरूपकम् २२
सोमे गजमुखं प्रोक्तं ऐशान्यान्तु प्रियम्मुखम्
श्वेतं पीतं तथा कृष्णं रक्तं श्यामञ्च धूम्रकम् २३
अतिरक्तं तथा नीलं भूतवर्णमिति स्मृतम्
उग्ररूपसमायुक्तं द्विभुजञ्च द्विपादकम् २४
दण्डहस्तन्तथा सर्वे भूतरूपमिति स्मृतम्
अष्टभूतमिदं प्रोक्तं स्वायंभुवबलिं ददेत् २५
मद्धयहारञ्च हारायां वृषभादिप्रदक्षिणम्
वृषभं पूर्वतस्स्थाप्य आग्नेय्यां पावकस्तथा २६
मातृणां दक्षिणे भागे वीरविघ्नसमन्वितम्
विघ्नेशं नैर्ऋते भागे सुब्रह्मण्यन्तु पश्चिमे २७
ज्येष्ठायां वायुदिग्भागे दुर्गास्थानं तथोत्तरे
चण्डेशमीशदिग्भागे भास्करं पूर्वतो दिशि २८
कूपस्थानं तथैशान्यामाग्नेय्यां पचनालयम्
परिवारालयं सर्वं बाह्ये बाह्यान्तरे तथा २९
भूतपीठस्य पार्श्वे तु इंद्रं संपूजयेत्ततः

आग्नेय्यां दिशि पर्यन्तं स्वस्वस्थाने विशेषतः ३०
द्वारस्योत्तरपार्श्वे तु ब्रंहाणन्तु प्रकीर्तितम्
पितामहेशयोर्मद्ध्ये आदित्या द्वादशोच्यते ३१
भास्करं क्षेत्रपालौ च शांकरे वा विशेषतः
शक्रपावकयोर्मद्ध्ये अश्विन्यौ द्वौ तु विन्यसेत् ३२
आग्नेययमयोर्मद्ध्ये संस्थाप्य सप्तरोहिणीम्
याम्यनैर्ऋतयोर्मद्ध्ये पितृस्थानं विधीयते ३३
निर्ऋतिवारुणयोर्मद्ध्ये अप्सरोगण एव च
वरुणवायव्ययोर्मद्ध्ये मुनीनां स्थानमुत्तमम् ३४
वायव्यसोमयोर्मद्ध्ये अष्टौ वसुधरास्तथा
सोमईशानयोर्मद्ध्ये रुद्रैकादश एव हि ३५
प्रतिमे वापि पीठे वा इष्टिके वा प्रपूजयेत्
बलिपीठन्ततः कृत्वा चतुर्दिक्षु विशेषतः ३६
बाह्याभ्यन्तरयोः पीठौ पूर्वद्वारे तु विन्यसेत्
अन्तस्थसर्वदेवास्तु पिशाचात् बाह्यपीठके ३७
यक्षाणां दक्षिणे पीठे राक्षसानान्तु पश्चिमे
गन्धर्वाणान्तु सौम्ये तु भूतानां पूर्वमेव च ३८
तदूर्ध्वेपद्ममित्युक्तमष्टशक्तीर्दळे न्यसेत्
सर्वदेवमयं पीठमग्रपीठं प्रकल्पयेत् ३९
ततः पुरस्थितं पीठं बलिं दद्याद्विशेषतः
आमोदश्च प्रमोदश्च प्रमुखो दुर्मुखस्तथा ४०
अविघ्नो विघ्नकर्ता च बलिपीठादिदेवताः
अविघ्नं कर्णिकामद्ध्ये आमोदं पूर्वदिग्दळे ४१
याम्ये चैव प्रमोदन्तु प्रमुखे पश्चिमे दळे
दुर्मुखन्तु दळं सौम्ये विघ्नकर्तारमीशके ४२
आमोदं श्यामवर्णन्तु प्रमोदं कृष्णवर्णकम्

प्रमुखं स्फटिकाभासं दुर्मुखं कुंकुमप्रभम् ४३
अविघ्नो विद्रुमाभासो विघ्नकर्ताञ्जनप्रभः
द्विभुजाश्च द्विनेत्राश्च टंकपाशधरास्तथा ४४
उग्रदृष्टिसमायुक्ता भीमरूपा महाबलाः
सर्वाभरणसंयुक्ता नागयज्ञोपवीतकाः ४५
प्रसादाभिमुखास्सर्वे दीर्घदंष्ट्रोत्कटाननाः
पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे तथा ४६
गर्भगेहस्य पश्चाच्च चतुष्कं चोत्तमोन्नतम्
त्रिभागं मद्ध्यमं प्रोक्तं द्विभागमधमं भवेत् ४७
द्वारोत्सेधं समं श्रेष्ठं सत्रिपादन्तु मद्ध्यमम्
द्वारार्द्धधमं विद्धिविस्तारोत्सेध तत्समम् ४८
विस्तारं सुविभज्याथ हाटकेन तु विंशतिः
भागेनोपानमेकेन चतुर्भिर्जगती तथा ४९
कंपं कृत्वा तु केतूर्ध्वे तदूर्ध्वे केन पट्टिका
कण्ठं कुर्याच्चतुर्भागे केनैवोद्येन पट्टिका ५०
महापट्टी तु द्व्यंशेन द्व्यंशाब्जदळकोन्नतम्
कर्णिकामेकभागेन प्रोक्तमुत्सेधमुत्तमम् ५१
बलिपीठमिति ख्यातं सर्वेषां बलितृप्तये
यक्षराक्षसपैशाचभूतगन्धर्वकिन्नराः ५२
सर्वदेव ऋषीणान्तु बलिं सर्वत्र तृप्तये
आर्षं तु परिवाराख्यं बलिन्दद्यात् प्रकीर्तिताः ५३
सरोध्रुवश्च ह्लोमश आपश्चैवानिलोनलः
प्रत्यूषश्च प्रभावश्च वसवश्चाष्ट एव च ५४
बाणलिंगं तथायोग्यं बलिन्दद्यात्प्रकीर्तिताः
अनन्तेशस्तथासूक्ष्मश्चैकनेत्रश्शिवोत्तमः ५५
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिनः

अष्टविद्येश्वराश्चैव दिव्यलिंगबलिन्तथा ५६
पूर्वे यक्षगणाश्चैव राक्षसा गणगाणवाः
पिशाचगणदाक्षिणया गाणवं गणनैर्-ऋते ५७
किन्नरोगणं वारुणये पितृणां गणं वायवे
दानवानां गणे सौम्म्ये ऐशान्यांगगणास्मृताः ५८
अष्टानां गणमेवोक्तं बलिदानन्तु रक्षसाम्
नित्यानां वसवानान्तु प्रथमद्वारिपूजयेत् ५९
नन्दीशैवमहाकाळो द्वितीयद्वारिपूजयेत्
आमोदश्च प्रमोदश्च चतुर्त्थे द्वारिकल्पयेत् ६०
गणेशं गुहमेवोक्तं पञ्चप्रासादके न्यसेत्
द्वारदेशं समाख्यातं बलिन्तत्र प्रकल्पयेत् ६१
प्रस्थपादं बलिः प्रोक्तं तण्डुलस्य प्रमाणतः
नित्यनैमित्यकञ्चैव बलिंकृत्वा विशेषतः ६२
त्रिसंध्यायां बलिंकृत्वा अन्यकालेन कारयेत्
अथवान्यप्रकारेण काम्यार्त्थे तु बलिन्ददेत् ६३
महाहविर्निवेद्यान्ते बलिन्दद्याद्विशेषतः
नैमित्तिकोपसन्ध्यास्तु हविष्यञ्च बलिन्ददेत् ६४
इति पूर्वकारणे प्रतिष्ठातन्त्रे बलिकर्मविधिपटलष्षोडशः

पञ्चामृतक्षीराभिषेकविधिपटलप्रारंभः

इक्षुसारञ्च रूपं स्यात् मधुनाविजयन्तथा
घृतानां पुण्यमेवन्तु पयसायुर्विवर्द्धनम् १
आरोग्यं दधिसंयुक्तं पञ्चामृतफलन्तथा
यावन्निश्चिन्त्यममृतं तत्समन्तु प्रकल्पयेत् २
पञ्चप्रस्थाधमं प्रोक्तं द्विगुणं मद्ध्यमं भवेत्
त्रिगुणं उत्तमं प्रोक्तं पञ्चामृतन्तु कल्पयेत् ३

इक्षुर्मधुघृतञ्चैव पयोदधिक्रमेण तु
प्रस्थं प्रस्थं प्रमाणं स्यात् पञ्चामृतमिति स्मृतम् ४
इक्षुसारञ्च मद्ध्ये तु मधूनां पूर्वमेव च
घृतं वै दक्षिणे स्थाप्य पश्चिमे तु पयस्तथा ५
दध्युत्तरे च कृत्वा वै पञ्चामृतन्तु कल्पयेत्
सद्यादीशानमन्त्रं स्यात् मद्ध्यादीनि कृतस्य तु ६
गन्धपुष्पं तथाकूर्चं धूपदीपं तथा भवेत्
मूलमन्त्रेण सहजं शिवमन्त्रं तथोच्चरेत् ७
पञ्चगव्यान्तके पूज्य पञ्चामृतस्य कल्पयेत्
सर्वव्याधिविनिर्मुक्तं सर्वपापक्षयं भवेत् ८
अष्टोत्तरशतप्रस्थैः पूजयेत्क्षीरमेव च
द्विगुणं मद्ध्यमं प्रोक्तं उत्तमं त्रिगुणं भवेत् ९
घृताभिषेकसंयुक्तं सर्वशान्तिकरं शुभम्
क्षीराभिषेकसंयुक्तं जिह्वासहस्रं भोजयेत् १०
फलाभिषेकसंयुक्तं सत्फलं पापनाशनम्
द्वादशानान्तु भारं स्यात् उत्तमं परिकीर्तितम् ११
तदर्द्धं मद्ध्यमं प्रोक्तं तदर्द्धमधमं तथा
यथेष्टं काम्यमित्युक्तं कुर्यात्क्षीराभिषेचनम् १२
अनावृष्टौ ज्वरोग्रस्य सर्वव्याधिनिवारणम्
अर्कवारादिसंयुक्तं सोमवारादिसंयुतम् १३
जन्मनक्षत्रकर्तव्यं पूजयेत्परमेश्वरम्
मासं वाप्यर्द्धमासं वा सप्तवारमथापि वा १४
पञ्चाहं वा त्रिरात्रं वा एकाहं संप्रपूजयेत् १५
इति पूर्वकारणे प्रतिष्ठातन्त्रे पञ्चामृतक्षीराभिषेकविधिपटलस्सप्तदशः

## करणाधिकारविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि करणानान्तु लक्षणम्
यागांगाश्च तथा सर्वे करणञ्चेति कीर्तितम् १
अरणीलक्षणञ्चैव स्रुक्स्रुवस्य च लक्षणम्
लक्षणन्तोरणानाञ्च अष्टमं गळलक्षणम् २
आयुधानां प्रमाणञ्च कूर्मासनस्य लक्षणम्
खड्वायालक्षणञ्चैवोलूखलस्य तु लक्षणम् ३
शिबिकालक्षणञ्चैव डोळायालक्षणन्ततः
लक्षणन्दीपमालायाः पुष्पाधारस्य लक्षणम् ४
भेरिकालक्षणञ्चैव कर्त्तृकाफलकाविधम्
समिधो लक्षणञ्चैव परिधीनान्तु लक्षणम् ५
दर्भाणां लक्षणञ्चैव कूर्च्चानां लक्षणन्ततः
लक्षणं विष्टरस्याग्रं लंबकूर्च्चस्य लक्षणम् ६
परिस्तरणदर्भाणान्दर्भमालाप्रमाणकम्
प्रोक्षणीलक्षणञ्चैव पवित्रस्य तु लक्षणम् ७
पाद्यपात्रस्य मानस्य पात्रस्याचमनस्य च
लक्षणञ्चार्घ्यपात्रस्य पात्रयोर्गन्धपुष्पयोः ८
लक्षणं घृतपात्रस्य प्रणीतालक्षणन्तथा
प्रोक्षणी लक्षणञ्चैव शिवकुंभस्य लक्षणम् ९
वर्द्धनीलक्षणञ्चैव सामान्यं कुंभलक्षणम्
लक्षणं कलशस्यैव शरावस्य तु लक्षणम् १०
कुण्डिकालक्षणञ्चैव हविः पात्रस्य लक्षणम्
लक्षणञ्चरुपात्रस्य विधानस्य तु लक्षणम् ११
पात्रस्य चोपदंशानाञ्जलाधारस्य लक्षणम्
तरंगलक्षणञ्चैव गात्रवेष्टनलक्षणम् १२
वितानलक्षणञ्चैव ध्वजानां लक्षणन्ततः
उष्णीषञ्चोत्तरीयस्य वस्त्राणाञ्चैव लक्षणम् १३

पर्यंकानां विधिञ्चैव उपधानस्य लक्षणम्
कक्ष्यायालक्षणञ्चैव प्रच्छन्नपटलक्षणम्  १४
छत्रस्य लक्षणञ्चैव पिंछचामरयोस्तथा
मयूरव्यजनञ्चैव दुकूलव्यजनस्य च  १५
लक्षणन्धूपपात्रस्य घराटायाश्चैव लक्षणम्
लक्षणन्दीपपात्रस्य दीपाधारस्य लक्षणम्  १६
नीराजनस्य पात्रस्य महाघराटासुलक्षणम्
स्थलिकालक्षणञ्चैव दद्धास्तुलक्षणन्ततः  १७
दीपादिलक्षणञ्चैव पाद्याधारस्य लक्षणम्
तथाचाचमनाधार पात्रस्यैव तु लक्षणम्  १८
लक्षणं दर्प्पणस्याथ पादुकायाश्च लक्षणम्
पात्रस्य लक्षणञ्चैव जलद्रोरायाश्च लक्षणम्  १९
यंत्रिकालक्षणञ्चैव उल्कालक्षणमेव च
गोळकापट्टपुष्पाणां मकुटस्य च लक्षणम्  २०
हुतप्रमाणं सर्वेषां द्रव्यानाञ्च प्रजापते
शमी वा पिप्पलं वापि गृह्यारगयतरुं पुनः  २१
अब्ध्यंगुलन्तु विस्तारं तिथ्यंगुलन्तु दैर्घ्यकम्
रसांगुलघनाप्रोक्ता दैर्घ्याग्रासुदृढासमा  २२
प्रथमस्य परीणाहं भूतांगुलमिति स्मृतम्
द्वाविंशदंगुलं दैर्घ्यं कीलंक्रव्यायसाग्रके  २३
युगांगुलेन मूले तु कीलंस्वेनैव कारयेत्
प्रथमस्याग्रके मूले त्वधः पट्टेन वेष्टयेत्  २४
सप्तांगुलन्तु विस्तारं तदर्द्धं घनमुच्यते
उभयोः पार्श्वयोश्चैव मुष्टिरष्टांगुलं भवेत्  २५
भूतांगुलपरीणाहं सर्वत्रैव सुवृत्तकम्
पञ्चादशांगुलायामं त्रिवृत् गोपालरज्जुकम्  २६

तन्तुना वाथ कर्त्तव्यं कनिष्ठांगुलिनाहकम्
अरणीलक्षणं प्रोक्तं स्रुक्लक्षणमथ श्रुणु २७
स्रुक्स्रुवौ खदिरेणैव शम्यावैकंकतेन वा
अथवायाज्ञिकैर्वृक्षैः कर्त्तव्यौ लक्षणान्वितौ २८
संगृह्यमद्ध्यसारन्तु द्विधाकृत्वा तरुं पुनः
तत्पार्श्वे बिलमाख्यातमवक्रन्निर्व्रणन्दृढम् २९
द्वात्रिंशदंगुलायामं सप्तांगुलसुविस्तृतम्
तत् घनन्तु चतुर्मात्रमेवं पादञ्च तत्र वै ३०
मद्ध्ये सूत्रं प्रसार्यादौ मुखायामं षडंगुलम्
अग्रभागं त्रिभागैकं मुखविस्तारमुच्यते ३१
यवत्रयप्रमाणेन पट्टिकामुखपार्श्वयोः
यवमानेन निम्नं स्यात् मुखं सर्वमशेषकम् ३२
पञ्चांगुलं गळायामं विस्तारन्तु शरांगुलम्
सप्तांगुलायतावेदी विस्तारन्तत्समं भवेत् ३३
बिलं सुवृत्तं मद्ध्ये तु चांगुलद्वयमानतः
तद्विस्तारसमं गर्त्तं सुवृत्तं बिलमुच्यते ३४
पट्टिकाबिलबाह्ये तु यवमानघनान्वितम्
तत्बाह्येष्टदळं पत्रं यवनिम्नं विचित्रितम् ३५
वेदिकायास्तु परितः पट्टिकात्रियवा घनाः
बिलादूर्द्ध्वमुखात्खात्वा कनिष्ठांगुलमानतः ३६
तारेण वाथ ताम्रेण नाळं कृत्वा तु योजयेत्
पञ्चांगुलप्रमाणेन पद्माकारन्तु गण्डिका ३७
दण्डकैकांगुलावृत्ता तन्नाहञ्चाब्धिमात्रकम्
रव्यंगुलन्तु दण्डोच्चन्तस्यार्द्धन्नाहमुच्यते ३८
तन्मूले कलशाकारमंगुलद्वयमानतः
धर्मांगुलन्तु नाहं स्यात् तस्याधस्ताच्च पादयुक् ३९

वेदिकायास्त्वधः पद्मं पृष्ठाकारं सकर्णिकम्
गजोष्ठपृष्ठसदृशमास्यं पृष्ठा कृतिर्भवेत् ४०
एवं संग्राह्य तच्छेषं परित्यज्य दृढं यथा
एवं स्रुक्लक्षणं प्रोक्तं स्रुवलक्षणमुच्यते ४१
द्वाविंशदंगुलायामं दण्डनाहं रसांगुलम्
मूलात् ग्रीवान्तरं यावत् त्र्यंगुलं ग्रीवनाहकम् ४२
मूलवच्चाग्रनाहं स्याद्द्विबिलन्नासिका कृतिः
पूरितं करिषार्द्धेन बिलमानं प्रकीर्तितम् ४३
पुष्कराधः प्रकर्त्तव्या गण्डिका द्वियवोन्नता
दक्षिणेन करेणैवा नामिकान्तु सुवक्रकाम् ४४
अंगुष्ठाञ्च सुपर्वं स्यात्तर्जनी मद्धमांगुली
संयुक्तौ चोच्छ्रितौ द्वौ च उच्छ्रिता च कनिष्ठिका ४५
करणे तेन मन्त्रज्ञस्स्रुवेणैव तु होमयेत्
स्रुग्बिलन्तु घृतेनैव पूरयित्वा बिलोपरि ४६
स्रुवाग्रेणैव तन्त्रेण पुटं स्यात्तु विधाय च
उत्तानौ तु करौ कृत्वा वेणिबन्धन्तु कारयेत् ४७
उच्छृतौ द्वौ तु तर्जन्यौ तथा चैव कनिष्ठिकौ
वक्रांगुष्ठौ स्रुवौ ग्राह्य द्वाभ्यां पूर्णाहुतिं हुनेत् ४८
एवं स्रुक्स्रुवयोः प्रोक्तञ्चोरणानान्ततश्शृणु
भूतहस्तसमुत्सेधं विस्तारस्स्यात्तदर्द्धकम् ४९
करप्रमाणं शूलं स्यादंघ्रिनाहं रसांगुलम्
कन्नयसाय समे तद्धि वक्ष्यतेतः परं क्रमात् ५०
भूतहस्तं समारभ्य नवहस्तान्तकं क्रमात्
दीर्घन्तालाधिकं कुर्यात्तेषामर्द्धन्तु विस्तृतम् ५१
तस्मात्पक्षांगुलाधिक्यन्नाहं प्रत्येकमाचरेत्
तोरणानाञ्च सर्वेषां शूलं वै हस्तमानकम् ५२

नवधातोरणं प्रोक्तं श्रुणुष्वाथाष्टमं गलम्
याज्ञिकं वृक्षमादाय कारयेल्लक्षणान्वितम्  ५३
कलांगुलसमायामं विस्तारन्तु तदर्द्धतः
पद्मासनमधस्तात्तु विस्तारार्द्धेन कारयेत्  ५४
श्रीवत्सादीनि तस्योद्ध्र्वे लेखयेत्तु विशेषतः
श्रीवत्सम्मत्स्ययुग्मञ्च स्वस्तिकन्दर्पणं गजम्  ५५
पूर्णकुंभञ्च वृषभन्दीपं स्यादष्टमं गलम्
अष्टमं गलमेवं स्यादस्त्राणां लक्षणं श्रुणु  ५६
हैमराजतताम्रैर्वा अयसापादपेन वा
एतेष्वेकतमेनैव कारयेल्लक्षणान्वितम्  ५७
षोडशांगुलमायामं षडंगुलन्तु विस्तृतम्
तदर्द्धन्तु घनं प्रोक्तं सुदृढन्त्वव्रणं ऋजुम्  ५८
चतुरंगुलमानेन मद्ध्यमे गण्डिकात्रयम्
गण्डिकानान्तु नाहन्तु प्रत्येकं द्वादशांगुलम्  ५९
कृतांगुलप्रमाणेन शूलं कुर्यात्तदग्रके
अर्द्धांगुलप्रमाणेन पत्रतारं प्रकीर्त्तितम्  ६०
पक्षपत्रद्वयं कृत्वा अर्द्धचंद्राकृतिर्भवेत्
मद्ध्यपत्रमृजुं प्रोक्तं पत्रतारं यवद्वयम्  ६१
पत्रतारेण मूले तु पादायामं प्रकीर्तितम्
द्विगुणम्मद्ध्यपत्रस्य पादायामं प्रकीर्तितम्  ६२
अर्द्धांगुलप्रमाणेन पत्राणान्तु घनं भवेत्
शेषं दण्डमिति प्रोक्तं नाहञ्चैव नवांगुलम्  ६३
एवम्मूले तु कर्तव्यं त्रिशूलं लक्षणान्वितम्
वज्रस्य लक्षणं प्रोक्तं शक्तिलक्षणमुच्यते  ६४
विकारांगुलमायामं विस्तारन्तु युगांगुलम्
तस्यार्द्धन्तु घनम्मद्ध्ये गण्डिका चतुरंगुलम्  ६५

तदूर्द्ध्वे तदधः कृत्वा त्रिशूलं मद्ध्यपत्रवत्
शक्तिलक्षणमेवन्तु दण्डलक्षणमुच्यते ६६
कल्पांगुलसमायामं मूलं वेदाङ्गुलेन तु
गण्डकाकारयेद्वृत्तं विस्तारञ्चतुरंगुलम् ६७
कृतांगुलं भवेन्मुष्टिस्तन्नाहं कौशिकांगुलम्
कृत्वांगुलन्तु विस्तारन्तस्योर्द्ध्वे गण्डकांगुलम् ६८
ऊर्द्ध्वे रसांगुलन्तारमधस्तात्तु युगांगुलम्
क्रमेण कृशतां कुर्यात् विस्तारार्द्धेन वर्द्धितम् ६९
नाहन्तु दण्डमेवं स्यादसिलक्षणमुच्यते
षोडशांगुलमायाममश्विन्यंगुलविस्तृतम् ७०
मद्ध्यमे नवतन्मद्ध्ये पृष्ठे त्वश्रन्तु कारयेत्
कञ्चुकन्तु षडंगुल्यं तद्विस्तारं यवद्वयम् ७१
युगांगुलेन कण्ठन्तु तस्यनाहं गुणांगुलम्
अर्द्धांगुलन्तु फलका विस्तारं त्रियवं घनम् ७२
पुष्पमर्द्धांगुलं ज्ञेयं शेषं युक्त्याप्रकल्पयेत्
असिलक्षणमेवं स्यात् पाशलक्षणमुच्यते ७३
आयामं पूर्ववत्कृत्वा फलद्वयकृतांगुलम्
रसांगुलन्तु विस्तारं परस्परनिरीक्षकौ ७४
वेदांगुलन्तु नाहन्तु तदूर्द्ध्वे द्वादशांगुलम्
द्वयमर्द्धन्तु नाहं स्यात् कृशतः कृशमूलतः ७५
पाशस्य लक्षणं प्रोक्तं शृणुष्वंकुशलक्षणम्
कलांगुलसमायामं तन्नाहन्तु षडंगुलम् ७६
अर्द्धांगुलेन मुकुळमग्न्यंगुलप्रमाणतः
तरुणेंदुसमाकारं मुकुळाधस्तु योजयेत् ७७
अंकुशञ्चैवमाख्यातं गदालक्षणमुच्यते
गण्डकैकांगुलम्मूलं मुष्टिस्तु चतुरंगुलम् ७८

तदूद्ध्र्वे गण्डिकांगुल्यं गदाशेषं प्रकीर्तितम्
षोडशांगुलनाहं स्यादष्टाग्रन्तु गदाकृतिः ७९
गदायालक्षणं प्रोक्तं शूलस्य लक्षणं श्रुणु
षोडशांगुलमायामं विस्तारन्तु षडंगुलम् ८०
वेदांगुलघनं प्रोक्तं शूलवत्कारयेत् बुधः
शूललक्षणमेवं स्याच्चक्रलक्षणमुच्यते ८१
आयामं पूर्ववत्प्रोक्तमष्टांगुलन्तु विस्तृतम्
मद्ध्येनाभिसमायुक्तं षोडशारसमायुतम् ८२
एकांगुलन्तु विस्तारं परितः पत्रमुच्यते
मूद्ध्निर्नपार्श्वे तु कर्त्तव्यं ज्वलनान्तं विशेषतः ८३
दण्डन्तु शूलवत्कुर्यात्प्रोक्तञ्चक्रस्य लक्षणम्
चक्रलक्षणमेवोक्त श्रुणु पद्मस्य लक्षणम् ८४
अर्द्धांगुलन्तु मुकुळं नाहं स्मृत्यंगुलं भवेत्
दळाष्टकसमायुक्तन्नाळायामं दशांगुलम् ८५
रसांगुलन्तु तन्नाहं कुर्यात्पद्मं सलक्षणम्
एवं दशायुधं प्रोक्तं कूर्मासनविधिं श्रुणु ८६
रुद्रांगुलन्नु विस्तारस्तदर्द्धन्नैववर्द्धयेत्
श्रुत्यंगुलं घनं प्रोक्तं मुष्टिं भूतांगुलं भवेत् ८७
सप्तांगुलेन तन्नाहं मानांगुलेन कारयेत्
कच्छपासनमेवं स्यात् खट्वायालक्षणं श्रुणु ८८
चतुर्विंशांगुलं पद्मं ज्येष्ठम्मानांगुलेन तु
मद्ध्यमन्तु कलांगुल्यमधमं द्वादशांगुलम् ८९
विंशत्यंगुलमानेन ज्येष्ठं पादस्य नाहकम्
मद्ध्यमस्याधमस्यैव विद्यांगुलविहीनकम् ९०
मूलपादस्य विस्तारं शेषं युक्त्या प्रकल्पयेत्
महांघ्रिखरपादं वा मृगेंद्रांघ्रिसमन्तु वा ९१

षट् त्रिंशदंगुलन्तारं द्विगुणन्तत्समायुतम्
कौशिकांगुलविस्तारमीळिकाग्न्यंगुलं घनम् ९२
ईळिकारन्तथा कृत्वा मद्ध्यभागेन पट्टिका
कुर्यात्कपोतकं बाह्ये पट्टिका द्वयमेव तु ९३
अधमं कल्पतारैर्वा रत्नहेमेन वेष्टयेत्
ईळिकाभ्यन्तरे चैव विन्नयस्त्वाधातुनागळात् ९४
सुषिरेष्वर्गळानान्तु नाराचं योजयेत्सुधीः
नाराचैश्च समायुक्तं रज्वासं वेष्टये ततः ९५
खट्वायालक्षणं प्रोक्तं प्रोच्यते लूखलस्य तु
विंशत्यंगुलमायाममुत्तमं संप्रकीर्तितम् ९६
स्मृत्यंगुलं भवेन्मद्ध्यं कन्नयसन्तु कलांगुलम्
आयामं त्रिगुणी कृत्य तन्नाहन्तु विधीयते ९७
चतुर्त्थाविभजेदायं त्रिभागं गर्त्तमुच्यते
उत्सेधस्यार्द्धमानेन ग्रीवामूलस्य नाहकम् ९८
ओष्ठं पक्षांगुलं प्रोक्तमुत्तमस्य विशेषतः
पादं पादांगुलं हीनं मद्ध्यमस्याधमस्य तु ९९
लूखलस्यैवमाख्यातं मुसलस्य विधिं श्रुणु
सार्द्धत्रितालमधमं युगतालन्तु मद्ध्यमम् १००
उत्तमं भूततालं तु मुन्नयद्रिरन्ध्रकांगुलम्
कन्नयसादिपरीणाहं वृत्तन्तु सर्वतस्समम् १०१
आयसार्द्धांगुलेनैव वेष्टयेन्मूलके दृढम्
एवन्तु मुसलं प्रोक्तं शिबिकालक्षणं श्रुणु १०२
सारदारुमयेनैव मानांगुलेन कारयेत्
षट्त्रिंशदंगुलन्तारं कन्नयसस्य प्रकीर्तितम् १०३
मद्ध्यमञ्चाष्टचत्वारि षष्ट्यंगुलमथोत्तमम्
विस्तारं द्विगुणायामं पादोनद्विगुणन्तु वा १०४

ईळिकायास्तु विस्तारं श्रेष्ठस्याब्ध्यंगुलं भवेत्
अंगुलांगुलहीनन्तु मद्ध्यमस्याधमस्य च १०५
तस्यार्द्धन्तु घनं प्रोक्तमीळिकायाः प्रजापते
ईळितारं त्रिधा कृत्वा मद्ध्यभागेन पट्टिका १०६
भागेनैकेन तत् बाह्ये कारयेत्तु कपोतकम्
आयाममष्टधा कृत्वा भागेन भित्तिपादकम् १०७
कुंभञ्च वलयञ्चैव वृत्तकञ्चारुहीनकम्
ईळिकामद्ध्ययोर्मद्ध्ये चतुरश्रीकृतन्तथा १०८
एकैकशांशेन चोद्ध्र्वाधः पट्टिका द्वयमेव हि
मद्ध्यमे तु विभागेन फलका चक्रमेण तु १०९
ईळिकैर्जालकैश्चैव फलकैर्गळकैरपि
नानावल्ली समायुक्तां नानाक्रीडा समायुताम् ११०
तत्पूर्वभित्तेरुत्सेधमष्टांगुलमिति स्मृतम्
सिंहद्वयसमायुक्तन्तदूद्ध्र्वे मकरास्यकम् १११
पालिकासदृशं पादं तत्र सप्तांगुलोन्नतम्
अयः पट्टैश्च नाराचैर्दृढं कुर्याद्विशेषतः ११२
वेणिकावेष्टनं वापि फलकाबन्धनं कुरु
शिबिकालक्षणं प्रोक्तं डोळाया लक्षनं श्रुणु ११३
पादोर्ध्वे कल्पयेद्धीमान् मण्टपाकृतिकन्तथा
अश्वश्च वृषभश्चैव गजं सारम्म्यकर्मणि ११४
विनाचान्नयानि सर्वाणि रथवत्कारयेत्क्रमात्
डोळाया लक्षणं प्रोक्तं दीपमालाविधिं श्रुणु ११५
अयसावाथ ताम्रेण दारुभिर्दीपमालिका
द्वारेषु द्वारवत्कुर्यात् लिंगपृष्ठे प्रभाकृतिः ११६
द्वारमानप्रमाणेन कारयेदन्यदेशके
सुस्निग्धं कारयेद्धीमान् स्कन्धान् वेदांगुलायतान् ११७

त्रिभागैकन्नयसेद्दण्डे भूतांगुलमथान्तरम्
दीपमालाविधिः प्रोक्तः पुष्पाधारविधिं श्रुणु ११८
अशोकार्जुनको निंबं मधूकं पनेसासनः
खादिरं शिंशुपाचाम्रं चन्दनं चंपकाशुभा ११९
अष्टतालप्रमाणेन विस्तारं द्विगुणायतम्
देवपादसमायुक्तं द्वादशांगुलदैर्घ्यकम् १२०
घनमष्टांगुलं प्रोक्तं भित्युत्सेधं गुणांगुलम्
दर्पणोदरसंकाशं कुर्यान्मानांगुलेन तु १२१
पुष्पाधारविधिप्रोक्तं भेरिकालक्षणं श्रुणु
युगतालसमायामं नागभूतयमं भवेत् १२२
द्वादशांगुलमानेन मुखतारं विधीयते
आमुखान्तं सुवृत्तं स्यात् घनमर्द्धांगुलं भवेत् १२३
उभयोः पार्श्वयोर्मद्ध्ये त्वयः पट्टेन वेष्टयेत्
सप्तकीलसमायुक्तं मानांगुलेन कारयेत् १२४
भेरिकालक्षणं प्रोक्तं कत्रिकालक्षणं श्रुणु
षड्विंशत्यंगुलायामं तिथ्यंगुलन्तु विस्तृतम् १२५
पार्श्वे युगांगुलं हित्वा वर्तयेच्च शिखण्डवत्
षडंगुलप्रमाणेन तन्मद्ध्ये वर्तयेत्क्रमात् १२६
युगांगुलप्रमाणेन भित्युत्सेधं प्रकीर्तितम्
द्वियवन्तु घनन्तस्य मद्ध्ये गर्भन्तु कारयेत् १२७
परितः पट्टिकां कुर्यात् द्वयंगुलन्तु घनं भवेत्
द्वादशांगुलमायामं द्विवक्रं खरपादवत् १२८
नाहमर्द्धांगुलं तस्य एकपादन्तु योजयेत्
कत्रिकालक्षणं प्रोक्तं समिधो लक्षणं श्रुणु १२९
अदित्यांगुलमायामं कनिष्ठांगुलनाहकम्
पादेन पादसंयुक्तं अग्रेणाग्रसमायुतम् १३०

कवक्रं निर्वृणञ्चैव शुष्काश्चैव शुभप्रदाः
समिधो लक्षणं प्रोक्तमेवमिद्ध्मस्य लक्षणम्  १३१
आयामं परिधीनाञ्च वेदयुक्तं दशांगुलम्
मद्ध्यांगुलपरीणाहमवक्रानिर्वृणासमा  १३२
प्रोक्ता तु यत्समित्तेन परिधिध्वनि संग्रहेत्
एवं स्यात्परिधीनान्तु दर्भाणां लक्षणं श्रुणु  १३३
स्त्रीपुन्नपुंसकाः काशास्त्रिविधास्समुदाहृताः
मृदुश्यामाचजायाचजायाकर्मसु योजयेत्  १३४
ईषत्पक्षसमायुक्तं स्थिरः पुल्लिंगकाशकः
पुंस्त्रियायास्तु पुल्लिंगान् ग्राहयेत्तु विशेषतः  १३५
नपुंसकं तु संग्राह्यं स्थिरं कोमळवर्जितम्
मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम्  १३६
मूलाग्रन्तु समञ्चैव पुमान्दर्भस्य लक्षणम्
विच्छिन्नाग्रासुभिन्नाग्रा अग्रास्याखण्डितास्तथा  १३७
दर्भाणां लक्षणं ह्येवं कूर्चानां लक्षणं श्रुणु
नवकाशैश्चोत्तमं स्यात्सप्तकाशैस्तु मद्ध्यमम्  १३८
कन्यसं भूतकाशैस्तु ग्रंधिव्योमांगुलं भवेत्
दक्षिणावर्तकं ग्रन्धिकूर्चाग्रं चतुरंगुलम्  १३९
ग्रन्धिमूलात्समारभ्य रुद्रधर्मग्रहायतम्
कूर्चानां लक्षणं प्रोक्तं विष्टरस्य विधिं श्रुणु  १४०
धातुकाशसमायुक्तं ग्रन्धितं सव्यमार्गतः
रव्यंगुलन्तु मूलाग्रं ग्रन्धिव्योमांगुलं भवेत्  १४१
विष्टरस्य विधिः प्रोक्तो लंबकूर्चविधिं श्रुणु
एकविंशतिदर्भैश्च ग्रंधिरेकांगुलं भवेत्  १४२
ग्रन्धिस्तुद्दक्षिणावर्तः कूर्चाग्रञ्चतुरंगुलम्
मूर्द्धादिपादपर्यन्तं लंबितं तत्तदायतम्  १४३

लंबकूर्चविधिः प्रोक्तः परिस्तरणमुच्यते
धर्मकाशसमायुक्तं ग्रन्धिपक्षांगुलं भवेत् १४४
वेदांगुलं भवेदग्रं षट्त्रिंशदंगुलायतम्
परिस्तरणमेवं स्यात् दर्भमालाविधिं श्रुणु १४५
भूतवेदाग्निदर्भैर्वा व्योमहस्तं प्रलंबितम्
कनिष्ठांगुलनाहन्तु रज्जुं कुर्यान्मनोरमम् १४६
दर्भमालाविधिः प्रोक्तः प्रोक्षणी लक्षणं श्रुणु
सप्तविंशतिभिर्दर्भैः कलांगुलसमायतम् १४७
व्योमांगुलं भवेत् ग्रन्धिवेदांगुलं तथाग्रकम्
वेणिकाविष्टरावाथ प्रोच्यते प्रोक्षणी तथा १४८
कुशं काशसुवर्णैर्वा द्वाभ्यां वा त्रिभिरेव वा
एकी कृत्याग्रकान्तैश्च एकमूलन्तु योजयेत् १४९
षोडशांगुलमायामं वर्तयित्वा समन्ततः
द्विगुणी कृत्य तद्रज्जुं ग्रंधिरेकांगुलं भवेत् १५०
दक्षिणावर्तकं तस्य तदग्रञ्चतुरंगुलम्
अनामिकाया योक्तव्यमुभयोर्हस्तयोरपि १५१
सत्पवित्रकरेणैव सर्वकार्यं समाचरेत्
सपवित्र करेणैव कुर्यादाचमनक्रियाम् १५२
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्
सौवर्णञ्चेत् पवित्रन्तु कुञ्जेनागफणेन तु १५३
नाहेनानामिकायास्तु कुर्याद्वृत्तं समं यथा
पवित्रविधिमाख्यातं पात्राणां लक्षणं श्रुणु १५४
मृण्मयं कन्यसं तारं ताम्रजं मद्ध्यमं भवेत्
सौवर्णेन कृतं पात्रमुत्तमञ्चेति कीर्तितम् १५५
तारं रसांगुलं ज्ञेयमुत्सेधन्तु युगांगुलम्
तत्पृष्ठांघ्रिसमायुक्तं चतुरंगुलमानतः १५६

आस्येन नासिकायुक्तं वेदांगुलसमायुतम्
पाद्यपात्रं समाख्यातं शृणवाचमनपात्रकम् १५७
आदित्यांगुलमानेन कुक्षिविस्तारमुच्यते
अष्टत्रिंशति मात्रेण नाहं कुक्षेस्तु मद्ध्यमम् १५८
अग्न्यंगुलगळोत्सेधमोष्ठं व्योमांगुलं भवेत्
आस्यतारं त्रिमात्रन्तु पार्श्वे घ्राणसमायुतम् १५९
पक्षांगुलसमायामं रंध्रं कानिष्ठिकं समम्
अद्धयर्द्धांगुलमानेन पादं कुर्यात्तु पृष्ठके १६०
एवमाचमनं पात्रमर्घ्यपात्रमथ श्रुणु
वस्वंगुलन्तु विस्तारमुत्सेधञ्चतुरंगुलम् १६१
अर्घ्यपात्रमिदं प्रोक्तं गंधपात्रमिदं श्रुणु
एवमेवं विशेषेण कल्पयेत् गन्धपात्रकम् १६२
गन्धपात्रं समाख्यातं पुष्पपात्रमथ श्रुणु
अष्टांगुलसमुत्सेधं विस्तारं विंशदंगुलम् १६३
नाहं भूतांगुलं ज्ञेयं उभयोः पार्श्वयोरपि
तन्मानं पादविस्तारं विधानकसमन्वितम् १६४
एवमेवन्तथा कुर्यात् वेत्रेणैवाथवा कुरु
पुष्पपात्रविधिः प्रोक्तमाज्यपात्रविधिं श्रुणु १६५
वेदांगुलं समुत्सेधं विस्तारन्तु षडंगुलम्
अष्टांगुलेन तस्योद्ध्वर्मेतद्धि घृतपात्रकम् १६६
सार्द्धभूतांगुलन्तारं सार्द्धांगुलसमुच्छ्रयम्
प्रणीतालक्षणं प्रोक्तं प्रोक्षणी लक्षणं शृणु १६७
बाह्वंगुलन्तु विस्तारमुत्सेधन्तु गुणांगुलम्
पात्राणामप्यलाभे तु शंखं वा शुक्तिकन्तु वा १६८
प्रोक्षणी पात्रमेवं हि शिवकुंभविधिं श्रुणु
तिथ्यंगुलप्रविस्तारन्निम्नं रुद्रांगुलायतम् १६९

ग्रास्यं वेदांगुलं ज्ञेयं कराठायामन्तथांगुलम्
ग्रोष्ठमेकांगुलं ज्ञेयमर्द्धांगुलन्तु निर्गमम् १७०
गळादधस्त्रिरेखायुक् पक्वबिंबफलप्रभम्
ग्रळंकरहितं स्निग्धं दाडिमी कुसुमप्रभम् १७१
शिवकुंभविधिः प्रोक्तो वर्द्धनी लक्षणं श्रुणु
रंध्रांगुलं प्रविस्तारं वर्द्धनीजठरस्य तु १७२
ग्रग्न्यंगुलन्तदुत्सेधं वक्त्रमर्द्धांगुलं भवेत्
ग्रग्न्यंगुलमधोष्ठन्तु पार्श्वे तु नासिकायुतम् १७३
सार्द्धांगुलप्रमाणेन उत्पलाकृतिवत्कुरु
सार्द्धांगुलं गळोत्सेधं त्रियवञ्चाष्टनिर्गतः १७४
वर्द्धनी लक्षणं प्रोक्तं कुंभानां लक्षणं श्रुणु
रुद्रांगुलन्तु विस्तारमुत्सेधं पर्वतांगुलम् १७५
त्र्यंगुलञ्चोष्ठविस्तारमुत्सेधं व्योममात्रकः
सार्द्धांगुलं गळोत्सेधं त्रियवञ्चोष्ठनिर्गमम् १७६
कुंभानां लक्षणं प्रोक्तं कलशानां श्रुणुष्वथ
वस्वंगुलप्रविस्तारमुत्सेधन्तु रसांगुलम् १७७
ग्रीवमर्द्धांगुलोत्सेधमोष्ठन्तत्सममेव तु
त्र्यंगुलञ्चोष्ठविस्तारं यवमोष्ठस्य निर्गतः १७८
पक्वबिंबफलोपेतं शेषं युक्त्याप्रकल्पयेत्
कलशस्य विधिः प्रोक्तं शरावलक्षणं श्रुणु १७९
पक्षांगुलसमुत्सेधं विस्तारन्तु गुणांगुलम्
शरावमेवमाख्यातं कुरिडकालक्षणं श्रुणु १८०
वेदांगुलन्तु विस्तारमग्न्यंगुलन्तु दैर्घ्यकम्
सार्द्धांगुलेन तारन्तु चोष्ठमर्द्धाङ्गुलं भवेत् १८१
पक्षांगुलं गळोत्सेधं पार्श्वे घ्राणसमायुतम्
व्योमांगुलप्रमाणेन पदं पृष्ठे नियोजयेत् १८२

कुण्डकालक्षणं प्रोक्तं हविः पात्रविधिं श्रुणु
तस्य कुक्षेस्तु विस्तारं दशांगुलमिति स्मृतम्  १८३
अर्द्धांगुलसमुत्सेधं कर्णोत्सेधमथांगुलम्
कण्ठं व्योमांगुलं ज्ञेयमास्य तारं कृतांगुलम्  १८४
शेषं बुद्ध्याप्रकर्त्तव्यं पचेत्पात्रार्द्धकेशिवम्
द्रोणन्तु तण्डुलं यावत्तावत्ब्रह्मणमाचरेत्  १८५
हविःपात्रविधिः प्रोक्तश्चरुपात्रविधिं श्रुणु
उदरस्य तु विस्तारन्धर्मांगुलमिति स्मृतम्  १८६
कृतांगुलन्तदुत्सेधं कर्णमेकांगुलोच्छ्रयम्
आस्यमेकांगुलं प्रोक्तमोष्ठमेकांगुलं भवेत्  १८७
चरुपात्रविधिः प्रोक्तः विधानस्य विधिं श्रुणु
पात्रस्य तारं यावत्तु तावत्कुर्याद्विधानकम्  १८८
ईषन्निमग्नं तन्मद्ध्ये वलयन्तत्र विन्नयसेत्
विधानस्य विधिः प्रोक्तमुपदंशविधिं श्रुणु  १८९
उदरस्य तु विस्तारमष्टांगुलमिति स्मृतम्
युगांगुलसमुत्सेधं कण्ठमेकांगुलं भवेत्  १९०
षडंगुलेनास्य तारं ओष्ठमेकांगुलं भवेत्
पात्रं स्यादुपदंशाय जलाधारविधिं श्रुणु  १९१
चतुर्विंशतिमात्रन्तु विस्तारमुदरस्य तु
विंशदंगुलमुत्सेधमास्य तारं कलांगुलम्  १९२
ओष्ठं पक्षांगुलं ज्ञेयं तस्याधस्तात्त्रिरेखया
यवत्रयप्रमाणेन कुर्यादुदरबन्धनम्  १९३
विस्तारमुदितं यत्र तस्योद्ध्र्वेनैववर्द्धयेत्
पात्राणामपि सर्वेषां तन्नाहविधिरुच्यते  १९४
पाद्यपात्रादिपात्राणि कुर्यान्नानांगुलेन तु
जलाधारमिति प्रोक्तं तरंगस्य विधिं श्रुणु  १९५

क्षौमपट्टदुकूलैर्वा कुर्यात्कार्प्पासशालिना
तिथिवस्त्रयुतं वापि चार्कवस्त्रयुतन्तु वा १९६
रन्ध्रवस्त्रयुतं वापि चास्येरज्जुसमायुतम्
नानावर्णसमायुक्तन्नानारूपसमन्वितम् १९७
एवन्तरंगमाख्यातं स्तंभवेष्टनमुच्यते
गात्रायामसमं वस्त्रन्निच्छिद्रन्तेन वेष्टयेत् १९८
स्तंभवेष्टनमेवन्तु वितानमधुनोच्यते
दैर्घ्यं वै पङ्क्तिमानं स्याद्विस्तारमपि तत्समम् १९९
दुकूलपट्टदेवांगैः कार्पासेनैव कारयेत्
वितानलक्षणं प्रोक्तं केतूनां लक्षणं श्रुणु २००
विंशदंगुलविस्तारमायामं त्रिंशदंगुलम्
विस्तारेण समं पुच्छन्तस्योद्ध्र्वे शिखरं भवेत् २०१
चतुःपुच्छं त्रिपुच्छं वा पुच्छद्वयमथापि वा
पार्श्वे कदलिकायुक्तं वेत्रद्वयसमायुतम् २०२
केतुलक्षणमेवोक्तं पताकालक्षणं श्रुणु
नवहस्तमष्टहस्तं वा सप्तहस्तमथापि वा २०३
ध्वजवत्कारयेच्छेषन्नानावस्त्रैश्च कारयेत्
पताकालक्षणं ह्येवं क्षुद्रद्ध्वजविधिं श्रुणु २०४
बाणांगुलन्तु विस्तारं द्वादशांगुलदैर्घ्यकम्
वेत्रद्वयसमायुक्तं शेषन्तु केतुवत्कुरु २०५
क्षुद्रद्ध्वजविधिः प्रोक्तं शिखरे रज्जुसंयुतम्
ध्वजानां लक्षणं प्रोक्तं उष्णीषस्य विधिं श्रुणु २०६
षट् हस्तं पञ्चहस्तं वा पञ्चभागेन विस्तृतः
सुश्लक्ष्णं सदशं सूक्ष्मं सितं रोमविवर्जितम् २०७
शिरसञ्चिबुकेनैव कर्णाभ्याञ्चैव वेष्टयेत्
पुच्छं वै वामकर्णन्तु वेष्टयेत्तु प्रदक्षिणम् २०८

वेष्टयित्वेवमेकन्तु शेषं शिरसिवेष्टयेत्
उष्णीषलक्षणं प्रोक्तमुत्तरीयविधिं श्रुणु २०९
बाणहस्तायतं वापि वेदहस्तायतन्तु वा
तालमात्रप्रविस्तारं बन्धयेत्तु द्विपुच्छकौ २१०
यज्ञोपवीतवद्धार्यमुत्तरीयं विशेषतः
यजने स्थापने चाग्नि कार्ये चैवोत्सवे जपे २११
उष्णीषञ्चोत्तरीयञ्च धारयेत् देशिकोत्तमः
उत्तरीयविधिः प्रोक्तं वस्त्रलक्षणमुच्यते २१२
देवांगं क्षौमकं वापि नेत्रं कार्पाससंभवम्
उत्तमन्नवहस्तं स्यात् मद्ध्यमं रसहस्तकम् २१३
अधमं बाणहस्तं स्यात् चतुर्भागैकविस्तृतम्
सामान्नयवस्त्रमेवन्तु सर्वकार्यन्तु संग्रहेत् २१४
पीठोत्सेधस्य चाद्ध्यर्द्धं वस्त्रविस्तारमुच्यते
तस्याष्टांगुलमायामं सदशन्तु सलक्षणम् २१५
जीर्णितञ्चाग्निदग्धञ्च आखुदष्टञ्च वर्जयेत्
वस्त्रस्य लक्षणं प्रोक्तं पर्यंकानां विधिं श्रुणु २१६
अण्डजम्मुण्डजञ्चैव रोमजञ्चर्मजन्तथा
वामजञ्चैव पञ्चैते शयनं संप्रकल्पयेत् २१७
खत्वायामसमायाममायामार्द्धन्तु विस्तृतम्
उत्सेधं हस्तमानन्तु प्रहिणं व्याघ्रद्बर्मणाम् २१८
पूरितञ्चानिलेनैव चर्मजञ्चेति कीर्तितम्
आधारं पूर्ववत्कृत्वा रोमैः कृष्णमृगोद्भवैः २१९
संपूर्णकञ्च यत्तल्पं रोमजञ्चेति कीर्तितम्
पूर्वोक्तलक्षणोपेतं वस्त्रेण प्रहणं कुरु २२०
शाल्मली तूलसंपूर्णम्मुण्डजञ्चेति कीर्तितम्
प्रागुक्तलक्षणोपेतं देवांगैः पञ्जरं कुरु २२१

हंसरोमेण संपूर्णमण्डजं चेतिकीर्तितम्
सुसितं सूक्ष्मसुश्लक्ष्णं कार्पासेनैव संभवम्  २२२
उपरिपूरणं यत्तु वामजं चेतिकीर्तितम्
उपर्युपरिकल्प्येवं पर्यंकञ्चैव पञ्चधा  २२३
पर्यंकानां विधिः प्रोक्तश्चोपधानविधिं श्रुणु
षट्त्रिंशदंगुलायामं तन्नाहत्रिगुणं भवेत्  २२४
हंसरोमसुसंपूर्णं देवांगेनैव पञ्जरम्
कार्पासपंजरेणैव कारयेदुपवेष्टनम्  २२५
उपधानं हस्तपादानां युक्त्या तु परिकल्पयेत्
उपधानविधिः प्रोक्तं कक्ष्यायालक्षणं श्रुणु  २२६
अग्न्यंगुलन्तु विस्तारमश्विन्नयंगुलमेव च
कार्पासेन तथा कुर्याद्यावत्खट्वाप्रवेष्टनम्  २२७
कक्षायालक्षणं प्रोक्तं प्रच्छन्नपटमुच्यते
द्वारायामसमं दीर्घं विस्तारस्यार्द्धविस्तृतम्  २२८
बाणहस्तसमायामं पटस्याधारदण्डकम्
प्रच्छन्नपटमेवन्तु छत्रलक्षणमुच्यते  २२९
चतुर्मुखप्रविस्तारं समवृत्तमधोमुखम्
आधारं वैणवेनैव तन्तुनाबन्धयेत्क्रमात्  २३०
वस्त्रेण वेष्टयेत्सर्वं मुक्तादामैश्च रत्नकैः
मकुटं हेमपट्टैश्च भूषयेत् भूषणार्हकैः  २३१
वस्त्रेण मद्ध्यमं कुर्यात्तालपत्रैश्च कन्नयसम्
बाणानिरसतालैर्वा नाळायामं प्रकीर्तितम्  २३२
छत्रलक्षणमेवोक्तं पिंछालक्षणमुच्यते
बर्हिपिंछं प्रकर्तव्यं विस्तारं त्रियवं भवेत्  २३३
वस्त्रेण वेष्टयेत्सर्वं पुनः पिंच्छैश्च वेष्टयेत्
आधारमयसा कृत्वा हैमेन मकुटं कुरु  २३४

शेषं बुद्ध्याप्रकर्तव्यं नाळस्य च्छत्रनाळवत्
पिंच्छलक्षणमेवन्तु चामरस्य विधिं श्रुणु  २३५
दर्भेण दारुजेनैव शुल्बेन रजतेन वा
सौवर्णेनैव रत्नेतदण्डं कुर्याद्विचक्षणः  २३६
चतुर्विंशांगुलायामं दण्डनाहं शरांगुलम्
नानागण्डिकयायुक्तन्नाना कुंभलतान्वितम्  २३७
नानाकर्णसमायुक्तन्नानामण्डलसमायुतम्
संयुक्तञ्चमरीवालैर्यथाशोभन्तु कारयेत्  २३८
चामरस्य विधिः प्रोक्तं मयूरव्यजनं श्रुणु
दण्डन्तु पूर्ववत्प्रोक्तं शिखिनो भिन्नपिंच्छकैः  २३९
क्रमेणैव तु संयोज्य शेषं युक्त्याप्रकल्पयेत्
मयूरव्यञ्जनं ह्येवं दुकूलव्यञ्जनं श्रुणु  २४०
षोडशांगुलविस्तारं वैणवेनैव वर्तुळम्
क्षौमदेवांगपट्टैर्वा दुकूलेनैव वेष्टयेत्  २४१
त्र्यंगुलन्दण्डनाहन्तु षट्त्रिंशदंगुलायतम्
नानातन्तुसमायुक्तं दण्डमात्रं विचित्रयेत्  २४२
दण्डाग्रन्तु त्रिधा कृत्वा शेषं युक्त्या प्रकल्पयेत्
पर्यंकादीनि सर्वाणि कुर्यान्मानांगुलेन गु  २४३
दूकूलव्यञ्जनं ह्येवन्धूपपात्रविधिं श्रुणु
हेमेन रजतेनैव ताम्रेण पैत्तळेन वा  २४४
वेदांगुलन्तु विस्तारं पत्रोत्सेधन्तदर्द्धकम्
ओष्ठमर्द्धांगुलं प्रोक्तं बाह्ये पद्मदळान्वितम्  २४५
ग्रीवस्याधो द्विपादन्तु पादायामद्विमात्रकम्
अब्ध्यंगुलसमायामन्नाहं पक्षांगुलं भवेत्  २४६
दण्डपुच्छेन पादन्तु कारयेद्गजपादवत्
पञ्चांगुलन्तु विस्तारन्नानावल्लिसमायुतम्  २४७

अग्न्यंगुलं विधानोच्चमनेकसुषिरान्वितम्
कारयेन्मुकुळाकारं शेषं बुद्ध्याप्रकल्पयेत् २४८
धूपपात्रविधिः प्रोक्तं धूपघराटाविधिं श्रुणु
बाणांगुलं तु विस्तारमुत्सेधं तत्समं भवेत् २४९
त्रियवञ्चोष्ठविस्तारं तन्नाहं तु चतुर्यवम्
उपपट्टिकयायुक्तं मात्रेण शिखरान्वितम् २५०
चतुर्यवं गळोत्सेधं जिह्लावेदांगुलायतम्
घराटायाञ्चैव तन्नाहं विस्तारार्द्धेन विस्तृतम् २५१
अग्न्यंगुलेन दराडोच्चं नाहं तत्सममेव तु
दराडस्याग्रे वृषं वापि नळिनं शूलमेव च २५२
शेषं युक्त्या प्रकर्तव्यं शुद्धकंसेनसुव्रतम्
कृत्वा तु विधिना धीमान् धूपदाने तु घोषयेत् २५३
धूपघंटाविधिः प्रोक्तं दीपपात्रविधिं श्रुणु
धूपपात्रवदाकारं विशेषं किञ्चिदस्ति हि २५४
अग्न्यंगुलं तु विस्तारमायामं तु शरांगुलम्
अश्वत्थपत्रवत्कुर्यादोष्ठस्य च द्वयं भवेत् २५५
मद्ध्येनाभिसमायुक्तं मुकुळेनैव वर्जितम्
नवशक्तिनवदीपं स्यात्सप्तदीपेषु मातरः २५६
पञ्चदीपे निवृत्यादिरेकदीपे सरस्वती
दीपपात्रविधिः प्रोक्तं दीपाधारविधिं श्रुणु २५७
एकहस्तं समारभ्य नवहस्तांतमेव च
शरांशं पादविस्तारमाज्याधारं तु तत्समम् २५८
तस्योर्ध्वे मुकुळाकारं धर्मांशेन प्रकल्पयेत्
नानापट्टिकयायुक्तं नानाकुंभसमायुतम् २५९
एकदराडेन कर्तव्यमनुरूपक्रमेण तु
शुद्धकांस्यकतारैर्वा पैत्तळेनैव कारयेत् २६०

दीपाधारमिदं वद्दये नीरांजनाय पात्रकम्
सौवर्णं रजतं ताम्रं ज्येष्ठादीनि क्रमेण तु  २६१
षट्त्रिंशदंगुलायाममुत्तमं तु प्रकीर्तितम्
तस्मात्षडंगुलं हीनं मद्ध्यमं परिकल्पयेत्  २६२
हस्तमात्रप्रविस्तारं कन्यसं पात्रमुच्यते
कर्णिका तत्त्रिभागैकं तत्पञ्चांशैकमुच्छ्रयम्  २६३
यवद्वयविशालेन पट्टिकां परितः कुरु
उत्सेधं तत्समं ज्ञेयं तद्वाह्येष्टदळं भवेत्  २६४
ओष्ठं तु परितः कुर्यात् कर्णिकोच्छ्रायमानतः
एवं कुर्याद्विशेषेण पूर्णचंद्रसमं यथा  २६५
युगांगुलसमायामं दीपाधारघटोपमम्
अश्विन्यंगुळविस्तारं घटवक्त्रं प्रकीर्तितम्  २६६
प्रोक्तं पद्मांगुलं रंध्रं कर्णिकामद्ध्यमे युतम्
दीपाधाराण्यधिष्ठात्रा योजयेत्तु दळं प्रति  २६७
रंध्राधारं शराधारं एकाधारमथापि वा
मद्ध्ये चैव महाशासु पञ्चधाराणि कल्पयेत्  २६८
अग्न्यंगुलोच्चमानेन पृष्ठपादं प्रकल्पयेत्
पात्रं नीराजनायेदं महाघण्टाविधिं श्रुणु  २६९
शुद्धकांस्येन कर्तव्यं विस्तारं पर्वतांगुलम्
अब्ध्यंगुलं तदुत्सेधं गळोत्सेधं गुणांगुलम्  २७०
नाहं रसांगुलं तस्य पट्टिकाद्वयसंयुतम्
शिखरोच्चं द्विमात्रेण तन्नाहं भूधरांगुलम्  २७१
सुषिरेण समायुक्तं चतुर्नासिसमायुतम्
ताराद्धाद्विद्धितं नाहं जिह्वारंध्रांगुलायतम्  २७२
शिखरावलयोपेतं शेषं युक्त्याप्रकल्पयेत्
महाघण्टाविधिः प्रोक्तः स्थलिका लद्मणं श्रुणु  २७३

कन्यसं कांस्यसंभूतं रजतं मद्ध्यमं भवेत्
हेमन्तु चोत्तमं प्रोक्तं स्थलिका नवधोदिता २७४
द्वादशांगुलविस्तारमधमाधममुच्यते
अग्न्यंगुलविवृद्ध्या तु षट्त्रिंशदंगुलान्तकम् २७५
अष्टधातारमेवन्तु कन्नयसादित्रयंत्रयम्
द्वियवञ्चोष्ठविस्तारं उत्सेधं तत्समं भवेत् २७६
वेत्रं युगांगुलेनैव अधमस्याधमस्य तु
यवेनैकेन वृद्ध्या तु यावन्नवयवांतकम् २७७
स्थलिका नामथाष्टानां वेत्रेष्टौ संप्रकल्पयेत्
स्थलिकालक्षणं प्रोक्तं दर्व्याश्च लक्षणं श्रुणु २७८
द्वादशांगुलमायामं तद्दैर्घ्यं पञ्चधा भवेत्
अद्ध्यर्द्धांशेन पुच्छं स्यात्पक्षांशमग्रमुच्यते २७९
त्रियवं पुच्छतारं तु वक्त्रतारं शरांगुलम्
व्योमांगुलप्रमाणेन मद्ध्यतारं विधीयते २८०
अर्द्धांगुलं तु हीनं स्यात् मद्ध्यमस्याधमस्य तु
दर्व्याश्च लक्षणं प्रोक्तं त्रिपादलक्षणं श्रुणु २८१
चतुर्थांशं खपादी च बकपादत्रिपादिका
कर्तव्यं स्थालिकापादं लक्षणेन विशेषतः २८२
उच्चं युगांगुलं ज्ञेयं मुखतारं तु तत्समम्
अग्निपादसमायुक्तं त्रिवक्रांशं खपादिका २८३
तारं षडंगुलं ज्ञेयं तच्चतुर्गुणमायतम्
ईषत्त्रिभागिकापादं पक्षांगुलं तु नाहकम् २८४
मृगराट्पादवन्मूले बकपादिप्रकीर्तितम्
शरांगुलं तु विस्तारमुत्सेधं पर्वतांगुलु २८५
अग्निपादसमायुक्तं त्रिवक्रांगुष्ठनाहकम्
शरावाकृतिवन्मूले शेषं बुद्ध्या प्रकल्पयेत् २८६

एवं त्रिपादिका प्रोक्ता स्थालिकापादमुच्यते
पिण्डकोत्सेधमानं यदुत्सेधं तत्समं भवेत्  २८७
शेषं पूर्वोक्तवत्कुर्यात् द्विगुणं पादनाहकम्
पादाग्रेषु खुरं कुर्यात् शेषं युक्त्या तु कारयेत्  २८८
स्थलिकापादमेवोक्तं पाद्याधारविधिं श्रुणु
कलांगुलं तु विस्तारमुत्सेधं पर्वतांगुलम्  २८९
सोमांगुलं भवेदोष्ठमाकृतिस्स्याच्छराववान्
उभयोः पार्श्वयोश्चैव वलयेन समन्वितम्  २९०
पृष्ठे त्रिपादसंयुक्तं चतुरंगुलमायतम्
वक्रद्वयसमायुक्तं तस्याधस्सिंहपादवत्  २९१
पाद्योदकं तथा तस्मिन्पात्रे तु परिवर्जयेत्
पाद्याधारमिदञ्चैवाचमनाधारमुच्यते  २९२
कलांगुलसमायामं मुखतारं यवं भवेत्
ओष्ठमेकांगुलं प्रोक्तं धुत्तूरकुसुमोपमम्  २९३
ऊर्ध्वकायमिदं कृत्वा दण्डायामं नवांगुलम्
अग्न्यंगुलं तु विस्तारं द्विगुणं पादविस्तरम्  २९४
गंडिकात्रयसंयुक्तं दण्डं कुर्याद्विशेषतः
वर्जयेत्तु तथैतस्मिन्पात्रेत्वाचमनोदकम्  २९५
प्रोक्तमाचमनाधारं दर्पणस्य विधिं श्रुणु
स्मृत्यंगुलं तु विस्तारं पूर्णचंद्राकृतिर्यथा  २९६
नाळं वस्वंगुलं ज्ञेयं पादं वेदांगुलं भवेत्
नानापट्टिकयायुक्तं शुद्धकांस्येन कारयेत्  २९७
विस्तारमुदितं पूर्वमेषामर्द्धेन वर्तयेत्
तन्नाहञ्चैव सर्वेषां नाहमित्यभिधीयते  २९८
एवं तु दर्पणं प्रोक्तं पादुकस्य विधिं श्रुणु
नित्योत्सवस्य यात्रांते पूजनार्त्थं तु पादुका  २९९

ताम्रतारसुवर्णैर्वा कारयेल्लक्षणान्विता
त्रिमात्रार्द्धं तु मात्रांतं अर्द्धेनार्द्धेन वर्द्धयेत् ३००
रंध्रायामानि चोक्तानि कन्यसादित्रयंत्रयम्
आयामस्यार्द्धमेवं तु अग्रपादस्य विस्तृतम् ३०१
षष्ठांशेन तु मद्ध्यांतमायामं युगभागिकम्
एकभागं भवेदुच्चं गुणांशे द्व्यंशकं खुरम् ३०२
शेषमूर्ध्वदलं प्रोक्तं हले युक्त्या प्रकल्पयेत्
अङ्गुष्ठोच्चं तलोच्चस्य चतुर्भागत्रिभागिकम् ३०३
तच्छरांशे युगांशं तु नालशेषं तु पुष्करम्
अङ्गुष्ठोच्चसमं पुष्पं विस्तारं मुकुलान्वितम् ३०४
पुष्पोन्नते त्रिभागैकं मुकुलं कारये द्विज
एवं सलक्षणं कृत्वा प्रोक्षणं विधिना कुरु ३०५
मण्टपस्य तु मध्येऽस्मिन् स्थण्डिलं शालिना कुरु
परिस्तीर्य ततो दर्भैर्हृदा गन्धादिनार्चयेत् ३०६
नववस्त्रमथास्तीर्य पञ्चगव्यैस्तु पादुकम्
क्षालयेदष्टमृद्भिस्तु शुद्धतोयेन सेचयेत् ३०७
वस्त्रोपरिन्यसेद्धीमान् पादुकं वर्मणा ततः
वस्त्रेणोपरि संछाद्य स्थापयेत्कलशाष्टकान् ३०८
मध्ये च पादुकाग्रे तु वृषकुम्भं निधापयेत्
सकूर्चान् सापिधानां च वस्त्रान् दिक्पालात्मकात् ३०९
मध्यमे वृषकुम्भे तु वृषबीजन्यसेत्ततः
धेनुमुद्रां प्रदृश्याथ हैमं तत्र विनिक्षिपेत् ३१०
पुण्याहं वाचयेत्तत्र स्थण्डिलं सिकतेन तु
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ३११
समिधाज्य चरुं लाजान् तिलान् सद्यादिमन्त्रतः
होमयेत्तु विशेषेण प्रत्येकं पञ्चविंशतिः ३१२

घृतेन वृषमन्त्रेण हुनेदष्टोत्तरं शतम्
प्रभाते सुमुहूर्ते तु मन्त्रन्यासमथाचरेत्  ३१३
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्
स्विष्टमग्नेति मन्त्रेण होमं परिसमापयेत्  ३१४
आचार्यः पूजयेत्तत्र वस्त्रनिष्कादिभिः क्रमात्
वृषबीजं समादाय कुम्भान् तत्पादुकद्वये  ३१५
तज्जलं चाभिषेकं तु कुम्भान्यादाय देशिकः
तत्पादुकस्योपरिष्टास्तु तत्तद्बीजानि विन्यसेत्  ३१६
तत्कुम्भस्तज्जलेनैव अभिषिच्य स्वबीजकैः
अर्चयेद्वृषमन्त्रेण मुद्गान्नं तु निवेदयेत्  ३१७
सर्वालङ्कारसंयुक्तं प्रासादाभ्रमणं कुरु
एवं कृत्वा विधानाच्च अर्चयेत्प्रतिसन्धिषु  ३१८
पादुकास्थापनं प्रोक्तं श्रुणु गात्रस्य लक्षणम्
षोडशाङ्गुलमायामं विस्तारं तु द्विमात्रकम्  ३१९
मध्यचक्रसमायुक्तं द्वियवं घनमुच्यते
वेदाङ्गुलं भवेन्मुष्टिर्दारुणा परिकल्पयेत्  ३२०
भूताङ्गुलपरीणाहमधः पट्टेन वेष्टयेत्
गात्रस्य लक्षणं प्रोक्तं जलद्रोणिविधिं श्रुणु  ३२१
वेदभारजलैः पूर्णं श्रुत्यर्थं वाथ वर्तुलम्
वलयैर्युग्मपार्श्वे तु संयुक्तं ग्रीववर्जितम्  ३२२
लक्षणं च जलद्रोण्यां लोहजं मृण्मयेत्तु वा
एवं कृत्वा विधानेन यन्त्रिकालक्षणं श्रुणु  ३२३
मध्याङ्गुलपरीणाहं तन्मूले च यवद्वये
वक्त्रद्वयसमायुक्तं गर्गलस्यार्हकं कुरु  ३२४
यन्त्रिकालक्षणं प्रोक्तमुल्कलस्य विधिं श्रुणु
हस्तमात्रसमायामं कनिष्ठाङ्गुलिनाहकम्  ३२५

दीपस्य धारमग्रे तु कुर्याद्धूर्धूरपुष्पवत्
त्रियङ्गुलेनास्य तारं गर्तायामं गुणाङ्गुलम्  ३२६
कारयेदधसाधस्ता मुष्टिं तु दारुणा कुरु
उल्कलस्य लक्षणं प्रोक्तं गोलकालक्षणं श्रुणु  ३२७
अर्धाङ्गुलसमायुक्तं पूजभागसमायुतम्
नाहं चैव परिग्राह्य कुर्याद्धैमेन गोलकाम्  ३२८
पार्श्वलक्षणमुद्धृत्य सूत्राग्रे सुषिरत्रयम्
नानारत्नसमायुक्तं लिङ्गवत्कारयेत्ततः  ३२९
गोलकालक्षणं प्रोक्तं पट्टलक्षणमुच्यते
रुद्राक्षाङ्गुलम---  पट्टतारं प्रकीर्तितम्  ३३०
लिङ्गनाहं तु नाहं स्यात्पट्टं हैमेन कारयेत्
पट्टलक्षणमेवं स्यात्पुष्पलक्षणमुच्यते  ३३१
अग्नयङ्गुलं तु विस्तारं मध्यमे कर्णिकायुतम्
दलाष्टकसमायुक्तं सरत्नं काञ्चनेन तु  ३३२
सुवर्णकुङ्कमं ह्येवं मकुटस्य विधिं श्रुणु
कपर्दमकुटं चैव किरीटमकुटं तथा  ३३३
करण्डमकुटं चैव केयूरं मकुटं तथा
ईशानात्कण्ठपूरं च कुक्षिबन्धनमेव च  ३३४
कटिसूत्रं नूपुरं च चिह्नवीरं तथैव च
कण्ठमालाय यज्ञं च प्रतिमाणां यथार्हकम्  ३३५
नानारत्नसमायुक्तं सर्वहेमेन कारयेत्
धूपपात्रोदिकान्सर्वान्मानाङ्गुलेन कारयेत्  ३३६
प्रोक्षयेत्पञ्चगव्येन पुरुषेण विशेषतः
प्रासादस्याग्रतः कुर्यात् मण्टपं चतुरश्रकम्  ३३७
संप्रोक्ष्य हृदयेनैव पात्रेऽन्यैव तु विन्यसेत्
शिवाग्निं कारयेद्धीमान् पूर्वोक्तविधिना सह  ३३८

समिधाज्यचरुं चैव सद्यास्त्रहृदये हुनेत्
प्रत्येकं तु शतं हुत्वा कृत्वान्ते स्पर्शनं कुरु ३३९
आदावन्ते च कर्तव्यमग्निकार्योक्तमार्गतः
हृदयेनैव संग्राह्यमीशानेन तु पूजयेत् ३४०
एवमाभरणं प्रोक्तमाहुतीनां विधिं श्रुणु
कषार्धगोघृतेनैव एकाहुतिसमाचरेत् ३४१
द्विपर्वस्त्राव तर्जन्या बिन्दुरित्यभिधीयते
बिन्दुषट्कं तु कर्षार्धमद्वयं कर्षकं भवेत् ३४२
कर्षद्वयं तु मुष्टिं स्यात् तद्वयं प्रसृतिर्भवेत्
तद्वयं कुसुमं प्रोक्तं तद्वयं धारणं भवेत् ३४३
धारणाष्टपलं प्रोक्तं प्रस्थं विंशत्पलं भवेत्
दुग्धस्य मधुनो दध्नस्स्रुवपूर्णाहुतिर्भवेत् ३४४
शुक्तिमात्रेण जुहुयात्तिलं चैव तु सर्षपम्
ओदनं चाकृमात्रेण शुक्तिर्धेनकुलर्थकम् ३४५
निष्पापं नवभिः प्रोक्तं यवा वेणुकुलस्थवत्
शक्तिमात्रेण शालीं तु विंशद्भिर्माषमुद्गकौ ३४६
पृथुकं धानकं सत्तु मुष्टिमात्रेण होमयेत्
प्रियङ्गु कोद्रवं चैव अल्पं तु तिलवद्भवेत् ३४७
फलानि स्वमाणेन पत्राणि शरसंख्यया
त्रिंशदंशेन भागेन भित्वा तु पनसं हुनेत् ३४८
विभीती फलमात्रेण कन्दं भित्वा तु होमयेत्
--- गुलं प्रोक्तमपूपस्त्वत्प्रमाणतः ३४९
क्षीरान्नं कृसरान्नं च गुलान्नं शुक्तिमात्रतः
करेण जुहुयाद्रव्यं द्रवद्रव्यं स्रुवेण च ३५०
स्थाल्यान्नं च विनिक्षिप्य हुनेद्यत्तत्प्रमाणतः
पूर्णाहुतिं स्रुवां कुर्यात्सुपुष्पोपरिविन्यसेत् ३५१

स्रुक्स्रुवं मङ्गलतोरणभेरिमराटपकुराडसमित्कलशानाम्
मानविहीनततोधिकमानं दारधनक्षयकृत्कलह स्यात् ३५२
इति कारणे प्रतिष्ठातन्त्रे क्रियापादे करणाधिकारः पटलः

अंकुरार्पणविधिपटलप्रारंभः

अतःपरं प्रवक्ष्यामि अंकुरार्पणमुत्तमम्
उत्सवे स्नपने चैव प्रोक्षणे स्थापने तथा १
अन्यस्मिन्मंगले कार्ये मंगलांकुरमुच्यते
द्विविधं तत्समाख्यातं भद्रं क्षुद्रन्तथैव च २
सर्वेषु यागपूर्वेषु नवमे सप्तमे हनि
पञ्चमे वा शिवं पूज्य कारयेदंकुरार्पणम् ३
अधिवासनानि रात्रौ तु तद्दिनात्पूर्वरात्रके
अंकुरार्पणकार्ये तु निश्चित्यदिवसं तथा ४
नवाहे चैवसप्ताहे पञ्चाहे त्र्यहेपि वा
सद्योंकुरार्पणं वापि कारयेदंकुरार्पणम् ५
बीजानामधिपश्चंद्रः तस्मात्तु निशि निर्वपेत्
अनंकुरन्तु यत्कर्म तत्कर्मनिष्फलं भवेत् ६
अंकुरादङ्कुरं नास्ति तत्कर्माणयन्तरं विना
दिवाकालेन कर्तव्या कृतश्चेत्सस्यनाशनम् ७
चंद्रदृष्टौ पराह्ने वा ततस्सद्यांकुरार्पपेत्
सद्यांकुरार्पणञ्चेत्तु दिवौ वा निशिनिर्वपेत् ८
पालिकाघटिका चैव शरावाच त्रिधा भवेत्
सौवर्णं राजतं वापि ताम्रं वा मृणमयन्तु वा ९
पालिकाष्टादशांगुल्यामुच्चम्मात्रांगुलेन तु
पालिकामूलविस्तारं षोडशांगुलमुच्यते १०
तदर्द्धं पादविस्तारं तत्षड्भागैकमोष्ठकम्

विस्तारस्य त्रिभागैकं वर्तितं बिलमुच्यते  ११
एवं पादक्रमं प्रोक्तं शेषदण्डं प्रकल्पयेत्
विस्तारस्य त्रिभागैकं दण्डविस्तारमुच्यते  १२
पालिकालक्षणं प्रोक्तं घटिकालक्षणं श्रुणु
घटिकाघटविस्तारमष्टांगुलमुदाहृतम्  १३
पालिकापादवत्कुर्यात् दण्डं वै चतुरंगुलम्
पञ्चवक्त्रसमायुक्तं घटिकाकरयेत् बुधः  १४
घटिकालक्षणं प्रोक्तं शरावमधुनोच्यते
शरावमुखविस्तारमष्टांगुलमुदाहृतम्  १५
तदर्द्धं पादविस्तारमुत्सेधाष्टांगुलोच्छ्रयम्
नाहं स्यात्पलिकादीनां विस्तारार्द्धेन वर्तितम्  १६
काळं भिन्नञ्च सुषिरं भेदञ्चैव तु लीनकम्
वर्जयेत्तु प्रयत्नेन कारयेल्लक्षणान्वितम्  १७
ईशोविष्णुर्विरिञ्चिश्च पालिकाद्यधिदेवताः
प्रत्येकमष्टकं ग्राह्यं ततस्स्थापनमारभेत्  १८
भवं शर्वन्तथेशानं पशुपत्युग्रकौ तथा
रुद्रं भीमं महादेवं पालिकाद्यष्टविन्यसेत्  १९
केशवं माधवञ्चैव नारायणं त्रिविक्रमम्
वामनं श्रीधरं विष्णुं पद्मनाभं घटेन्न्यसेत्  २०
त्रयीमयं त्रिमूर्तिञ्च पद्माक्षं पद्मयोनिकम्
चतुर्म्मुखञ्च धातारं पितामहं जयन्तथा  २१
ब्रह्माष्टकमिदं ज्ञेयं शरावे क्रमशोन्न्यसेत्
पूजयित्वा यथान्न्यायं कारयेत्पालिकादिषु  २२
चतुर्विंशतिसंख्याभिस्स्थापयेत्तु विशेषतः
षोडशद्वादशञ्चैव वसुचैव चतुर्त्थकम्  २३
प्रासादस्याग्रके वापि दक्षिणे चोत्तरेऽपिवा

गोमयालेपिते शुद्धे मगटपे समलंकृते २४
प्राक्सूत्रं वसुभिः कुर्यादुदक्सूत्रन्तथैव च
मद्ध्ये व्योमपदाग्राह्य लेपयेदभिकोष्ठकम् २५
त्रीणि चाभ्यन्तरे त्यक्त्वा चतुर्दिन्नु क्रमाद्बुधः
द्वारार्द्धञ्च महाशासु पदमेकं परित्यजेत् २६
स्थरिडलं कारयेद्धीमानष्टद्रोणैश्च शालिभिः
तस्य मद्ध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् २७
स्थापयेत्कर्णिका मद्ध्ये चंद्रकुंभं नवं शुभम्
सौवर्णं राजतं वापि पंकजं त्वर्द्धचंद्रवत् २८
कुंभमद्ध्ये तु तोयं स्यात्तोयमद्ध्ये तु पंकजम्
पंकजस्यैव मद्ध्ये तु चंद्ररूपं प्रशस्यते २९
ससूत्रं सापिधानञ्च सवस्त्रं वारिपूरितम्
पूजयित्वा यथान्यायं वारुणं मन्त्रमुच्चरन् ३०
पायसान्नं ददेत्पश्चात्तांबूलन्तु निवेदयेत्
पालिकादौ न्यसेद्धीमान् द्वाराणां पार्श्वयोर्द्वयोः ३१
विन्यसेत् घटिकादौ तु कोणेषु च पदद्वयोः
शेषेषु च शरावाणि स्थापयेद्धृदयेन तु ३२
दर्भाग्रैश्च कुशाग्रैर्वा निच्छिद्रं सुषिरैः कुरु
अश्वत्थपत्रपूर्वेण तन्तुना वेष्टयेत्पृथक् ३३
वालुकैर्गोमयैर्मृद्भिः पालिकादीनि पूरयेत्
पूजयित्वा यथान्यायं पुगयाहं तत्र कारयेत् ३४
ततोजनेभ्यस्तांबूलं दापयेत्तु विशेषतः
बीजानि वापयेत्पश्चात्पयसिप्लावितानि वै ३५
मुद्गमाषकुळत्थाश्च निष्पावं शिंबमाढकम्
तिलसर्षपशालिश्च सिद्धार्थं नवबीजकम् ३६
उत्तमं नवबीजानि षड्बीजं मद्ध्यमं भवेत्

अधमं त्रीणि बीजानि यथालाभं प्रकल्पयेत् ३७
पयसैव तु संक्षाळ्य विन्यसेत्तु क्रमेण तु
बीजमुख्यं विशेषेण विन्यसेद्बीजमद्ध्यमे ३८
शकृत् मृद्भिस्तदापूर्यसेचयेत्तु जलेन तु
तिलसर्षपमुद्गानि माषशिंबाढकानि तु ३९
कुळुत्थं सप्तबीजानि हृदयेन विशेषतः
आचार्योवार्पयेत्तत्र प्राङ्मुखोदङ्मुखोऽथवा ४०
सोमकुंभस्थतोयेन पालिकादीनि सेचयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ४१
भद्रमेतत्समाख्यातं क्षुद्रं वै तत् श्रुणुष्वथ
प्राङ्मुखं पञ्चसूत्राणि तथैव च उदङ्मुखम् ४२
मद्ध्ये चतुष्पदन्त्यक्त्वा स्थंडिलं कारयेद्बुधः
मद्ध्यमे सोमकुंभन्तु पूजयेत्पूर्ववत्क्रमात् ४३
हृदयेन तु मन्त्रेण पालिकादीनि विन्यसेत्
शरावं पालिका चैव घटिका च यथाक्रमम् ४४
ईशानादिसमारभ्य प्रत्येकं युगसंख्यया
पूर्वोक्तविधिना सर्वं कारयेद्देशिकोत्तमः ४५
विधानैस्सर्वपात्राणि त्वनुगुप्तं निधापयेत्
आपूर्णानि च कृष्णानि श्यामळानि तथैव च ४६
सधूम्राणि च कुब्जानि तथा तिर्यग्गनानि च
अंकुराण्यशुभान्यत्र तद्दोषशमनाय च ४७
अस्त्रमन्त्रं समुच्चार्य जुहुयाच्छतसंख्यया
शूलं प्रदक्षिणं कुर्यात् तीर्त्थांकुरस्य सुव्रत ४८
अन्येषाञ्चैव सर्वेषां वर्जयेत्तु प्रदक्षिणम्
प्राङ्मुखोदङ्मुखो वाथ निर्व्रजेद्देशिकोत्तमः ४९
सर्वदेवमयं शूलं अलंकृत्य विशेषतः

नदीतीरे तटाके वा उद्याने वा विशेषतह् ५०
सुक्षेत्रे पर्वते चैव मृत्संग्रहणमारभेत्
शुद्धस्थानमनुप्राप्य शुद्धिं कृत्वा महीं ततः ५१
मृत्तिकाग्रहणार्त्थाय पुण्याहस्वस्तिवाचकैः
गन्धादिनासमारभ्य हृदयेन तु देशिकः ५२
अस्त्रमभ्यर्च्यविधिना गन्धपुष्पादिनाबुधः
घातयेदस्त्रमन्त्रेण मृदं संगृह्यवामतः ५३
मृदमभ्यर्च्य विधिना प्रदक्षिणमथाचरेत्
प्रविशेदालयं पश्चात् बीजनिर्वापमारभेत् ५४
सौवर्णं राजतं वापि पंकजञ्चार्द्धचंद्रकम्
कुंभमद्ध्ये तु तोयं स्यात् तोयमद्ध्ये तु पङ्कजम् ५५
पंकजस्य तु मद्ध्ये तु चंद्ररूपं प्रशस्यते
श्वेतवर्णं द्विनेत्रञ्च श्वेतपद्मोपरिस्थितम् ५६
द्विभुजं कुमुदोपेतं श्वेतवस्त्रेण वेष्टितम्
सर्वैराभरणैर्भूष्यैर्मुक्ताभरणभूषितैः ५७
किरीटमकुटोपेतं प्रभामण्डलमद्ध्यगम्
कृत्तिकां दक्षिणे भागे रोहिणीं वामपार्श्वके ५८
दुकूलवसनोपेतां सर्वाभरनभूषिताम्
एवं ध्यात्वा विशेषेण पालिकावृतमद्ध्यमे ५९
द्विभुजमखिललोकद्वंद्वनासं द्विनेत्रं कुमुदयुगळहस्तं कोमळं बीजपार्श्वे
गगनसहितलोकं सर्वबीजाधिपत्यं सकलभुवननाथं विन्यसेत्कुंभमद्ध्ये ६०
अंकुरादंकुरं नास्ति पूर्वे निर्दिष्टमुच्यते
शीतळा ऋृजवोदीर्घास्फुटाश्च बहुदीर्घकाः ६१
ह्रस्वाश्चकुटिलाकारा अप्लनास्सुखयां कुरु

अंकुरोर्ध्वमुखञ्चैव पूर्वोत्तरद्वयोत्तमम् ६२
वह्निर्यमश्च निर्ऋतिर्वारुणो वायुरुत्तरः
ज्वरं व्याधिमनो दुःखं रिपुनाशञ्च वर्द्धते ६३
चंद्रोंकुराणामधिपो नव्रणादीनि वा व्रतम्
चंद्रदृष्टौ पराह्णे वा तथासद्वांकुराधिपः ६४
चंद्रदृष्टौ विहीनं स्यात्प्रातः काले समर्चयेत्
नाळिकेरप्रसूनैश्चाप्यक्षतैर्लाजसंयुतैः ६५
अंकुराण्यर्पणं कृत्वा सर्वकर्मसमाचरेत्
सद्योंकुरार्पणञ्चेत्तु दिवाकाले समर्चयेत् ६६
तद्वयोरर्पणं नेष्टं क्षपायामेवमिष्यते
दिवाकाले कृतञ्चेत्तु कर्तृनाशं धनक्षयम् ६७
अतः कार्यं प्रयत्नेन रजन्यामंकुरार्पणम्
भास्करास्तमनात्पश्चात्पञ्चनाड्यास्ततोपरि ६८
सुयोगे सुमुहूर्ते च सुनक्षत्रे तिथौ दिने
अंकुरार्पणकार्यन्तु प्रागुक्तविधिनाचरेत् ६९
शुभं पीतेषु शुक्लेषु रक्तेषु कलहो भवेत्
तिर्यग्गतेषु रोगं स्यात् अग्र ऊर्ध्वे वृतं भवेत् ७०
सर्वेषामेव देवानां बलिभोज्य क्रमं श्रुणु
वैकर्त्तनस्य शुद्धान्नं यवोदनं विवस्वतः ७१
मार्ताण्डस्य गुळान्नं स्यात् भास्करस्य घृतोदनम्
मुद्गोदनं रवेस्साज्यं रंभाशर्करयान्वितम् ७२
लोकप्रकाशकस्यैव पायसं गुळदुग्धयुक्
तिलोदनं लोकसाक्षी नैवेद्यं पनसान्वितम् ७३
त्रिविक्रमस्य दद्ध्यन्नमादित्यस्य पयोदनम्
शाल्यन्नं सूर्यमूर्तेस्तु तिलचूर्णघृतान्वितम् ७४
हरिद्रान्नं सूपयुक्तं सघृतञ्चाशुमालिनः

दिवाकरस्य दुग्धान्न तेषान्नैवेद्यमुच्यते ७५
यराद्यष्टवसूनान्तु घृतोदनबलिं क्षिपेत्
गगनाद्यष्टवायूनां शुद्धान्नेन बलिं क्षिपेत् ७६
कदळीनाळिकेराज्य गुळयुक्तं बलिं क्षिपेत्
सर्वेषामेव शुद्धान्नमुक्तोदनविहीनके ७७
अथवा क्षीरमिश्रेण तण्डुलेनाज्य मिश्रतः
सर्वेषामेव देवानां बलिन्दद्याद्विशेषतः ७८
उत्तमं करपूर्णेन मद्ध्यमं लिकुचोपमः
अथवाप्यक्षमात्रं वा बलं सर्वत्र दापयेत् ७९
तत्तत्पदस्य रेखायां प्रक्षिपेत् बलिमुत्तमम्
अथवापूर्वदिक् भागे मण्डलो विशेषतः ८०
पृथक्पृथक् बलिन्दद्यात्कर्मसाफल्य हेतवे
श्रीकरं विजयं पुण्यमायुरारोग्यवर्द्धनम् ८१
अंकुरार्पणकन्त्वादौ कृत्वा कर्म समाचरेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ८२
इति पूर्वकारणे प्रतिष्ठातन्त्रे अंकुरार्पणपटलो विंशतिः

कुण्डलक्षणविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण कुण्डानां लक्षणं श्रुणु
सर्वलोकहितं पुण्यं सर्वदेवप्रियार्त्थकम् १
श्रुत्यश्रं योनिचापाश्रमग्न्यश्रं वतुळाकृतिम्
भूताश्रं पंकजाश्रञ्च वस्वश्रञ्च विधीयते २
कोटयाहुत्याष्टहस्तं स्यात् लक्षहोमन्तु षट्करम्
अयुतस्य चतुर्हस्तन्तथैवाष्टसहस्रकम् ३
द्विहस्तं पञ्चसाहस्रे हस्तं साहस्रहोमके
रक्तिमात्रं शताहुत्यामुष्टिमात्रं शतार्द्धके ४

मुष्टिमात्रमधोमानमष्टहस्तात्परन्नहि
मात्रांगुलेन कर्त्तव्यमन्नयमानेन कारयेत् ५
कुराडविस्तारमानेन कुर्यादवटकन्ततः
कुराडं त्रिमेखलोपेतमेकमेखलमेव वा ६
त्रिमेखलोद्धर्वमानन्तु श्रुत्यग्न्यश्विनिकांगुलैः
षडंगुलोच्चविस्तारं कर्तव्यं ह्येकमेखला ७
एवं हस्तप्रमाणस्य कुराडस्य परिकीर्तितम्
द्विहस्ते ऋतुभूतांशौ मेखलांगुलयः क्रमात् ८
चतुष्करे तु वस्वब्धिकौशिकांगुलयः क्रमात्
षडस्ते दशरन्ध्राष्टमेखलांगुलयः क्रमात् ९
अष्टहस्तं तथा कुर्यात् भानुरुद्रदशांगुलम्
यदा काराणि कुराडानि तदाकारा च मेखला १०
अग्न्यंगुलन्तु विस्तारं भूतांगुलन्तु दैर्घ्यकम्
क्रमेण कृशतां योनिः कुर्यात्पिप्पलपत्रवत् ११
योनिलक्षणमेवोक्तं कुराडास्यै करस्य तु
विस्तारस्य त्रिभागैकमुत्सेधं परिकीर्तितम् १२
द्विहस्तादि समारभ्य यावदष्टकरान्वितम्
विस्तारे त्वंगुलाधिक्यं दैर्घ्याश्विन्नयंगुलाधिकम् १३
योनिलक्षणमेवं स्यान्मेखले परिकल्पयेत्
पक्षांगुलं समुत्सेधं च लतांगुलन्तु विस्तरम् १४
पद्माकारन्तथा नाभिं कुर्यात्कुराडस्य मद्धयमे
द्विभागदळमानं स्यात् एकभागन्तु कर्णिका १५
द्विहस्तादिसमारभ्य वसलस्तान्तकं क्रमात्
विस्तारे चांगुलाधिक्य -त्सेसधार्द्धांगुलाधिकम् १६
नाभिलक्षणमेवं स्याद् कर्णमानं प्रकल्पयेत्
कुराडस्य परितश्चाश्वांगुलेनैव हस्तकम् १७

हस्तद्वयं समारभ्य यावद्वसुकरान्तकम्
अर्द्धांगुलवि--या तु विष्टरं संप्रकल्पयेत् १८
योन्नयाष्टनाभिनेमीनामुक्तमुच्छ्रायविस्तरम्
योनौ योनिर्न कर्त्तव्या पद्मेनाभिन्नकारयेत् १९
सुधापक्तेष्टकाभिर्वा मृदा चैव तु कारयेत्
सन्निकृष्टदिने चैव स्थण्डिलं कारयेत् बुधः २०
कुण्डानां वर्द्धनात्र्थाय चतुरश्रं तु साधयेत्
प्राक्सूत्रं तु न्नयसेत्पूर्वं मत्स्यन्तु दक्षिणोत्तरम् २१
कुर्यात्पश्चिमपूर्वन्तु यावत्कुण्डस्य विस्तरम्
पूर्वापरायतं सूत्रं मद्ध्यात्प्रागायतं समम् २२
पूर्वापरसमानेन सूत्रेणोत्तरदक्षिणे
अंकयेदपरानेकान् पूर्वानपि तथैव च २३
तत्तत्क्षेमार्धमानेन मत्स्यं कोणेषु साधयेत्
तत्र सूत्रप्रधानेन चतुरश्रं भवेदिह २४
चतुरश्रं पुनः कृत्वा चतुष्कोष्ठसमन्वितम्
कुण्डानामपिसर्वेषां वेदाश्रं योनिरुच्यते २५
श्रोत्रार्द्धार्द्धांशमानेन क्षेत्रात्र्थं पार्श्वयोस्ततः
क्षेत्रार्द्धावधिकं भ-म्यात्क्षेत्रपञ्चैकभागिकम् २६
तत्पुरस्तात् बहिन-स्त्वा तस्मात्तद्वयपार्श्वयोः
सूत्रे संयोजिते क-णं भवेत्पिप्पलपत्रवत् २७
श्रोत्रार्द्धन्तु परिग्राह्य क्षेत्रार्द्धे तु विनिक्षिपेत्
द्विधाकृत्वाधिकन्तत्र याम्योनिरप्रदेशयोः २८
एकैकांशन्नयसेत् बाहो सूत्रादभ्यन्तरे ततः
तन्मानेन भ्रमेद्विद्वान् चापाभ--चोत्तरे क्रमात् २९
क्षेत्रे तु भूतभागे तु --केकांशन्तु पार्श्वयोः
विन्नयस्येच्छफरन्तत्र नैर्ऋते व--देशके ३०

त्रिकोणाभ्यन्तरे सत्रं कृत्वा वै --यपुच्छके
संयोज्य त्रिगुणानेव त्रिकोणाय --स्मृतम् ३१
श्रोत्रार्द्धन्तु परिग्राह्य क्षेत्रार्द्धन्तु विनिक्षिपेत्
द्विधाकृत्वाधिकन्तत्र व्योमांशो बाह्यतो न्यसेत् ३२
वर्त्तयेत्तेन मानेन वर्त्तुळं कुण्डमुत्तमम्
तत् षट् भागैकभागेन क्षेत्रार्द्धेनैव वर्त्तुळम् ३३
तद्वृत्ताकारमादाय रव्यंशं विभजेत्ततः
धात्वंशेन भुजं कुर्यात् भूताश्रन्तु भवेत्स्फुटम् ३४
तत्क्षेत्रमष्टधा कृत्वा भागैकं पार्श्वयोर्बहिः
तयोर्मद्ध्यं गृहीत्वार्धं सूत्रेणैव भुजं तथा ३५
षट्सूत्रं परितः कृत्वा षट्कोणं तद्भवेदिह
अष्टभागकृतक्षेत्रे दिक्षु चैकांशकं न्यसेत् ३६
तत्पुरस्तात्बहिर्न्यस्त्वा तस्मात्तु द्वयपार्श्वयोः
सूत्रे संयोजिते कुण्डं भवेत् पिप्पलपत्रवत् ३७
चतुर्भागकृतं क्षेत्रमेकैकांशं न्यसेत्ततः
क्षेत्रार्द्धन्तेन मानेन मत्स्यं कृत्वा विचक्षणः ३८
तन्मद्ध्यमाच्चतुर्दिक्षु चतुष्पत्रन्तु वर्तुळे
बिसिनी कुण्डमेवन्तु क्षेत्रे गायत्रिभाजिते ३९
तदेकांशं बहिर्न्यस्त्वा परितश्चतुरश्रकम्
कर्णार्त्थं सूत्रमानेन कोणात्कोणन्तु लाञ्छयेत् ४०
चतुर्दिक्ष्वष्टकोणाख्यं कुण्डं कुर्यात्सलक्षणम्
सप्तभागैकभागेन क्षेत्रार्द्धेनैव वर्तुळम् ४१
क्षेत्रं षोडशभागैकं क्षेत्रार्द्धेनैव योजयेत्
वर्त्तयेत्तेन मानेन धात्वश्रं भवति स्फुटम् ४२
मानहीने महाव्याधिरधिके शत्रुवर्द्धनम्
भग्ने चैव त्वनावृष्टिः स्फुटिते सस्यनाशनम् ४३

इति पूर्वकारणे प्रतिष्ठा तन्त्रे कुण्डलक्षणविधिपटल एकविंशतिः

त्रिभक्तचतुरश्रन्तु षोडशस्तं भसं युतम्
नासिकाभिर्द्विरष्टाभिर्युक्तम्मद्ध्येकणान्वितम् १
मद्ध्योद्ध्र्वकूटयुक्तं वा प्रभावादविधानतः
कृत्वैकाशीतिभागान्निशितविपुलधीमण्टपाभ्यन्तरन्तस्तन्मद्ध्ये
वेदिर्नवांशा भवति ततस्त्रीणि भागानि मद्ध्ये । अश्रं योन्नयर्द्धचंद्रं
गुणभुजमपरं वै सुवृत्तं षडश्रं पद्मं वस्वश्रकुण्डं सुरपति
भवनादिक्क्रमेणैव कुर्यात् ॥ २
नवनव केनकेन तु वेदि नवनव मद्ध्यपदेकपदेकः ।
नवनवकुण्डमधाष्टमादधाना नवनव देवता होममिदं स्यात् ॥ ३
अस्त्रविस्मृतिघातवत् चतुष्कोटिकन्दिशिदिशित्रिसूत्रकम् ।
सतिमेखलमथ द्विकन्तुवा धातुभूतगणमात्रकोन्नतम् ॥ ४
व्यासमन्ध्यनलपक्षमात्रकैर्योनिमूद्ध्र्व इहेष्टवत्कुरु । ५
तारदैर्घ्यकसमुद्गमञ्चतुष्षण्णवांगुलिभिरग्निसंमुखः ।
देवं नयनांगुलोन्नतं मेघयुतन्तु वा पुनः ॥ ६
तालं गाढमथवैकमेखलं सर्वकुण्डकं कर्णयोनिकम् ।
वृत्तसन्निभमधोतदा कृतिर्वायुकेषु रसमात्रवै पुनः ॥ ७
व्यासवेदगुणतुंगकनाभिमब्जमिवकुण्डमद्ध्यमे ।
न्यस्यैकांशपञ्चभागैः पुरस्तात् कोणस्यार्द्धार्द्धं गृहीत्वातस्तत् ॥ ८
कोणं यावत् भ्रामयेत्तद्वदन्यं योन्नयाकारं स्याद्विसूत्रप्रयोगात् ।
व्यासेधर्म्मां शशमूद्ध्र्वादधस्तात् नीत्वैवर्जा पातयित्वा च सूत्र ९
तन्मानेन भ्रामयेदर्द्धचंद्रं कुण्डं युक्त्या वास्तुविद्वा विधिज्ञैः ।
क्षेत्रव्यासो षट्कृते चाष्टभागे मानेनानेन त्रिसूत्रप्रयोगात् ॥ १०
त्र्यश्रं प्रोक्त्यब्धिन्नवांशेशकन्तत् बाह्ये न्नयस्यभ्रामयेद्वृत्तकुण्डम् ।
व्यासे बुद्धिकांशं चांशकं पुच्छयोस्तत् बाह्येन्नयस्यानेन मद्ध्यात् ॥

११
मत्स्यं कृत्वा युग्यदद्विपश्चात् षट्कोणं स्यात्पातयेत्सूत्रषट्कम् ।
वृत्तं कृत्वा पूर्ववत् तस्य मद्ध्ये वृत्तं ग्राम्ये द्वयं मद्ध्यतस्तत् ॥ १२
पद्मस्याकारं यथा कर्णिकादीन् विद्यान्नयापद्मे येन योग्यान् ।
द्मेत्रव्यासे षट्चतुर्भागिकेस्मिन् भागं बाह्ये न्यस्यसूत्रं समन्तात् ॥
१३
कोणस्यार्द्धं कोणकाख्यानलिख्येदष्टाश्रं स्यादष्टसूत्रप्रयोगात् ।
सैक्यत्वेदाष्टांशकैः पट्टदैर्घ्यं सप्तसप्तसूत्रप्रयोगात् १४
तत्तर्द्धेलोपात्तभागेषु तत्तत् भागं कृत्वा प्राग्निपैकैकभागे ।
न्यूनाधिक्ये नाश्रनाहस्य तुल्यं युक्त्याधीमान् योजयेत्सर्वकुण्डम् १५
अथवान्नयप्रकारेण कुण्डलद्मणमुच्यते
रत्निमात्रसमं कृत्वा मुष्टिमात्रन्तदर्द्धकम् १६
त्रिमेखलसमायुक्तमथवा एकमेखलम्
षडंगुलप्रमाणेन विस्तारोत्सेधमेखलः १७
ऊर्द्ध्वमेखलसंयुक्तञ्चतुरंगुलविस्तृतम्
मद्ध्ये त्रियंगुलञ्चैव आधारे द्वयंगुलस्य तु १८
उत्सेधन्तु समं ज्ञेयं विस्तारन्तत्समं भवेत्
चतुरश्रं त्रियश्रञ्च षडश्रञ्च पुमान् भवेत् १९
योन्नयाकारन्धनुः पद्मं स्त्रीरूपं प्रतिकीर्तितम्
सुवृत्तमष्टकोणञ्च नपुंसकं हुताशनः २०
पर्वस्यांसृष्टिबहुलं कन्नयालाभन्तु पावके
शत्रुद्मयं स्याद्याम्ये तु नैर्ऋत्यांरोगनाशनम् २१
पश्चिमे सस्यवृद्धिस्स्याद्वायौ वायुप्रदं भवेत्
उत्तरे धनवृद्धिस्स्यादीशाने भुक्तिमुक्तिदम् २२
इन्द्र ईशानयोर्मद्ध्ये सर्वप्राणिसुखावहम्
मद्ध्ये ब्रह्मपदे वेदी दैविके मंगलायुतौ २३

मानुषे च पदे कुराडं पैशाचे तोरणन्नयसेत्
वह्नौ तु दक्षिणे पूर्वे चोत्तराभिमुखस्ततः २४
अन्नयेषु प्राङ्मुखो भूत्वा होमं कुर्याद्विचक्षणः
भवश्शर्वस्तथेशानः पशुवतिर्नील एव च २५
उग्रो भीमो महादेवो विद्ध्यष्टमूर्त्तयस्मृताः
पूर्वादीशानपर्यन्तं कुराडानामधिदेवताः २६
पञ्चाग्न्यायतनञ्चेत्तु ब्रह्मादिपञ्चमूर्त्तयः
एकाग्न्यायतनञ्चेत्तु यथा कुराडे सदाशिवः २७
स्थरिडलं भूमिदैवत्यं कुराडन्तु विष्णुदैवतम्
वर्द्धनी ब्रह्मदैवत्यं प्रोक्षणी देवपुष्करम् २८
प्रणीतावरुणदैवत्यं परिधी भव देवता
परिस्तरो ऋषिदैवत्यं समिधश्चैंद्रदेवताः २९
अक्षतन्नागदैवत्यं गन्धमश्विनिदेवता
पुष्पं गन्धर्वदैवत्यं व्याघ्रं श्रीदेविरुच्यते ३०
दीपं प्रजापतिर्देवं प्रोक्षणी भृगुदैवतम्
लाजानक्षत्रदैवत्यमित्येते अधिदेवताः ३१
प्राक् भूतकुंभन्तदेकाग्निकुंभं दाक्षिरायवेदैन्नैर्ऋत्यदाग्निम् ।
वारुरायषट्कन्ततश्चाग्निवायौ सोमे युगस्यात्त्रयकुंभमीशे ३२
इति विशेषकुराडलक्षणविधिरेकविंशतिपटलः

अग्निकार्यविधिपटलप्रारंभः

अग्निकार्यविधिं वक्ष्ये सर्वलोकहिताय च
कुराडं वा स्थरिडलं वापि अग्निरायतनं द्विधा १
चतुरश्रा कृतिं विप्र सर्वकामार्त्थसाधनम्
प्रजावृद्धिकरं योनौ चार्द्धचंद्रेरिपुक्षयम् २
गुणाश्रे शान्तिदं प्रोक्तं पर्जन्यार्द्धन्तु वर्तुळे

पञ्चाश्रे रोगनाशार्त्थञ्जयार्त्थञ्चैव पद्मके ३
वस्वश्रे पुष्टिदं प्रोक्तं सप्ताश्रे सस्य वर्द्धनम्
कुराडानाञ्च फलं ह्येवं स्थरिाडलञ्चाधुनोच्यते ४
गोमयालेपितां भूमिमभिसम्मृज्य वै हृदा
निकुडयोत्तरमादाय प्रोन्दयसौम्ये विवर्जयेत् ५
शुद्धदेशोद्धर्वसिकतैरनाद्यैरस्तविस्तृतम्
अंगुलत्रयमानोच्चं समन्निम्नोन्नतं तथा ६
प्रागग्रास्तिस्त्रेरेखास्तु तद्वत्सौम्याग्ररेखया
ब्रह्मावैवस्वतस्सोमो मद्धये दन्तिरावामयोः ७
तिसृणां प्रागग्राणामधिदेवाः प्रकीर्तताः
रुद्रोविष्णुश्च शक्रश्च मद्धये पश्चिमपूर्वयोः ८
तिसृणामुदगग्राणामधिदेवाः प्रकीर्तिताः
कुराडञ्चेत् शोधनञ्चैव न्ताळनं शोषणन्तथा ९
पावनं प्रोन्तराञ्चैव सद्यादि ब्रह्मपञ्चकैः
सूर्यकान्तोद्धवं श्रेष्ठं काष्ठजं मद्धयमं भवेत् १०
श्रोत्रियागारजं वह्निः कन्नयसञ्चेति कीर्तितम्
शरावेताम्रपात्रे वा पावकन्तु समानयेत् ११
होतुरग्रे तु विन्नयस्य संप्रोन्दय बहुरूपिणा
गन्धादिभिस्समभ्यर्च्य वर्मणाचावकुराठयेत् १२
प्रन्तिप्येन्धनमग्नौ तु वह्निरायतनान्तरे
स्थरािडले चैव षड्रेखान् ब्रह्मादीनां प्रपूजयेत् १३
नाभिमद्धये तु वागीशीन्नीलोत्पलसमप्रभाम्
ऋतुस्नातां सकूर्चस्थान्ध्यात्वा तन्मूलमन्त्रतः १४
संपूज्याग्निं समादाय संभ्राम्यायतनंत्रिधा
योनिमार्गेण निन्तिप्य वह्निबीजमनुस्मरन् १५
उपस्थानञ्च कृत्वा तु मन्त्रजुष्टोतदूनकम्

सदर्भैरिन्धनं क्षिप्त्वा दर्भाग्रैर्हृदयेन तु १६
गर्भाधानमिदं प्रोक्तं कुर्यात्पुंसवनन्तथा
हृदयेन जपेदीशमेतत्पुंसवनं स्मृतम् १७
अघोरेण यजेदर्घ्यं सीमन्तस्यादिकन्तथा
अग्निं प्रज्वाल्यवक्त्रेण पुष्पाक्षतसमायुतम् १८
निक्षिप्य शिरसा मंत्री जातकर्मविधिं श्रुणु
द्विमुखञ्चैकहृदयञ्चतुश्रोत्रं द्विनाहिकम् १९
आस्यद्वयञ्च षण्णेत्रं पिंगलं सप्तहस्तकम्
त्रिमेखलं त्रिपादञ्च सप्तजिह्वा समायुतम् २०
चतुश्शृंगं वृषारूडं बालादित्यसमप्रभम्
उपवीतसमायुक्तञ्जटामकुटमण्डितम् २१
सव्यभागे चतुर्हस्तं त्रिहस्तमपसव्यके
स्रुक्स्रुवौ चाक्षमाला च सशक्तिर्दक्षिणे करे २२
चामरं व्यजनञ्चैव घृतपात्रन्तु वामके
सव्यवक्त्रे चतुर्जिह्वा वामवक्त्रे त्रयस्तथा २३
हिरण्याकनकारक्ता कृष्णा चैव तु सुप्रभा
अतिरक्ताबहुरूपा सप्तजिह्वाः प्रकीर्तिताः २४
हिरण्यादिचतस्रस्तु जिह्वादक्षिणवक्त्रके
तिस्रस्तु सुप्रभादिस्स्याज्जिह्वा वै वामवक्त्रके २५
हिरण्यावारुणे जिह्वा कनका मद्ध्यमस्थिता
रक्ताचोत्तरजिह्वा स्यात्कृष्णायाम्यदिशिस्तथा २६
सुप्रभापूर्वजिह्वा स्यादतिरक्तग्नौ व्यवस्थिता
बहुरूपेशजिह्वा स्यात् जिह्वास्थानं प्रकीर्तितम् २७
सर्वसिद्धिप्रदं ह्येतत् वह्निरूपं प्रजापते
अग्निमद्ध्ये स्थितन्ध्यात्वा सासीनं पश्चिमाननम् २८
संप्रोक्ष्यैशानमन्त्रेण दत्वार्घ्यं पुष्पमिश्रितम्

तन्नामकरणं प्रोक्तमेवं संस्कारपञ्चयुक् २९
दर्भेणेन्धनमग्नौ तु उपस्थानं हृदा क्षिपेत्
दर्भैश्चैव परिस्तीर्य प्रतिदिग्दशभिस्ततः ३०
दक्षिणाश्चोत्तराश्चैव उत्तराश्चाधरास्तथा
पूर्वाग्राश्चोत्तराग्राश्च प्रागादीनि क्रमात्क्षिपेत् ३१
देवस्य त्वेतिमन्त्रेण पूर्वे चैव परिस्तरेत्
स्रुक्स्रुवौ च घृतस्थालीं प्रणीता प्रोक्षणी तथा ३२
समित्कूर्चञ्चरुन्दर्वीं विहरञ्च कमण्डलम्
द्रव्यपात्राणि सर्वाणि वामे काशोपरिन्यसेत् ३३
अधोमुखानि पात्राणि द्वंद्वपात्राणि साधयेत्
प्रोक्षणी पात्रमादाय जलेनैव प्रपूरयेत् ३४
वितस्तिमात्रमायामं तन्मद्ध्ये ग्रन्धिसंयुतम्
अंगुष्ठानामिकाभ्यान्तु उदकोत्प्लवनं कुरु ३५
संस्कृत्य तेन तोयेन प्रोक्ष्य पात्राणि वर्मणा
स्रुक्स्रुवौ चेन्धनादीनि सर्वद्रव्याणि दक्षिणे ३६
संस्थाप्य तेन तोयेन प्रोक्षयेत्स्नानशेषकान्
द्रव्यान्होमार्हकान्विद्धि पात्राण्यूद्ध्वाननं कुरु ३७
बद्ध्वा तु सप्तभिर्दर्भैः कूर्चं होतुश्च दक्षिणे
निधायार्घ्यं विरिञ्चिन्तु ब्रह्मबीजेन बुद्धिमान् ३८
प्रणीतान्तोयसंपूर्णान् कूर्चपुष्पाक्षतान्वितान्
होतुर्वामे न्नयसेदूद्ध्वे मेखलोपरिमद्ध्यमे ३९
गन्धपुष्पादिभिश्चैव विष्णुबीजेन पूजयेत्
वह्नौ तु दक्षिणे पूर्वे चओत्तराभिमुखस्थितः ४०
अन्नयेषु प्राङ्मुखो भूत्वा होमं कुर्याद्विचक्षणः
घृतेन पात्रमापूर्य नीत्वांगाराणि पश्चिमे ४१
तस्योद्ध्वे तु न्यसेत्पात्रे द्विकुशाग्रं विनिक्षिपेत्

पर्यग्निञ्च कुशाग्रञ्च कृत्वाग्नौ तु विनिक्षिपेत् ४२
प्रादेशमात्रकूर्च्चेन मद्धग्रन्धियुतेन च
हृदयेन तु मन्त्रेण त्रिस्संप्लवनमाचरेत् ४३
ग्रन्धिं विसृज्य संप्रोक्ष्य वह्निमद्धये विनिक्षिपेत्
घृतं प्रदक्षिणं नीत्वा योन्यूर्द्ध्वे तु निधापयेत् ४४
स्रुवं प्रक्षाळ्य तोयैश्च दर्भाग्रैर्हृदयेन तु
सम्मृज्यमद्धयमं मद्धये मूलं मूलैश्च शोधयेत् ४५
अग्रमग्रेण संस्पृश्य प्रन्तप्याधोमुखं स्रुवम्
क्षिप्त्वा परिधयस्तत्र पाशभृद्याम्यसौम्ययोः ४६
वर्मनेत्रास्त्रमन्त्रैश्च प्रक्षिपेत्तु यथाक्रमम्
पलाशोदुम्बराश्वत्थप्लक्षन्यग्रोधजास्त्विह ४७
शमीखादिरबिल्वार्क अपामार्गं यथाविधि
द्वादशांगुलमात्रेण इध्मञ्चाष्टादशांगुलम् ४८
तेष्वपि द्वंद्वसमिधौ संयोज्यानीलानलयोः
क्षिपेदग्नौ तथैशान्यां हृदा च शिरसा कुरु ४९
अनुयाज्ञं समित्तत्र प्रणीतोर्ध्वे न्यसेद्धृदा
पावकं गन्धपुष्पाद्यैः पूजयेत्तु विशेषतः ५०
लोकपालान्नयथास्थाने पूजयेद्देशिकोत्तमः
परिषेचनं ततः कृत्वा कदितेन्वादिमन्त्रकैः ५१
प्रागग्रां प्रथमं याम्ये ततोदीच्यान्तु पश्चिमे
त्रित्रीयमुत्तरे प्राच्यां चतुर्थञ्च समन्त्रकम् ५२
आज्याभिघारं तत्रैव नेत्रेणास्त्रेण बुद्धिमान्
क्षुरेणोद्धाटयेदास्य मस्त्रेणैव तु निष्कृतिः ५३
गृह्यपञ्चदशेध्मानि सकृन्मूलेन होमयेत्
सद्योजातेन मन्त्रेण वायव्याग्नेयमाहुतिम् ५४
हृदयेन तु मन्त्रेण नैर्ऋतेशानमाहुतिम्

अघोराहुतिरेवं स्यादाज्यभागमतः परम् ५५
सौम्म्ये तत्पुरुषं हुत्वा बहुरूपन्तु याम्यके
शिखामन्त्रं तथैंद्रे तु जुहुयान्नेत्रपश्चिमे ५६
मद्धयमे तु शिखामन्त्रं जुहुयाद्देशिकोत्तमः
अग्निबीजमनुस्मृत्य हुत्वा वै पञ्चविंशतिः ५७
अन्नप्राशनमेवं स्यात् चौळोपनयनं स्मृतम्
समावर्तनमेवं स्यात्सद्यादिब्रह्मपञ्चकैः ५८
यथाक्रमेण जुहुयात्सप्तसंख्या पृथक्पृथक्
अग्निमद्धये विशेषेण आसनं परिकल्पयेत् ५९
ध्यात्वा सदाशिवं देवं पञ्चमावरणान्वितम्
गंधपुष्पादिभिश्चैव पूजयेत्तु विशेषतः ६०
शिवे दशाहुतिः प्रोक्तमन्येषामाहुतिर्भवेत्
शिवाग्निजनितो ह्येवं होमकुर्याद्विचक्षणः ६१
अग्निकर्णे हुतं द्रव्यं कुर्याद्व्याधिञ्च पीडनम्
अन्धतां नेत्रयोर्हुत्वा कण्ठे तु गुरुनाशनम् ६२
लिंगे तु स्थाननाशाय जानुरुच्चाटनं भवेत्
मरणं पादमूले तु जिह्वायां सर्वकामदम् ६३
तस्मादग्नौ विशेषेण जिह्वायां होममाचरेत्
हिरण्यायां हुनेदिध्मं कनकायां घृतञ्चरुम् ६४
जुहुयाल्लाजञ्च कृष्णायां रक्तायाञ्च यवं हुनेत्
सुप्रभायां हुनेत्सक्तुमतिरक्तौ तिलाहुतिम् ६५
सिद्धार्त्थं बहुरूपायां सर्वासु व्याहृतिं हुनेत्
द्रव्याण्येतानि सर्वाणि कनकायां हुनेत्क्रमात् ६६
वह्नेस्तु रक्तजिह्वानि ज्ञात्वाकर्मसमाचरेत्
शब्दं वर्णञ्च गंधञ्च शिखाधूम्रन्तथैव च ६७
भेर्याश्च गजनादाश्च शब्दास्त्वेति शुभास्मृताः

खरस्वरो महानादो वयश्शब्दस्त्वशोभनम् ६८
शातकुंभमयञ्चैव वैढूर्यादित्य सन्निभम्
सिन्दूरमिन्दुकोपाभं पिंगलञ्चंद्रमंडलम् ६९
रौप्यं वज्रं हरीताळं नीलाभं कृष्णवर्णकम्
रौप्यनीलहरीताळं कृष्णाभान्यशुभानि वै ७०
अन्नयानि सर्ववर्णानि सर्वसिद्धिकराणि हि
उशीरपाटले चैव पुन्नागं चंपकन्तथा ७१
आज्यगुग्गुलुगन्धानि सर्वसिद्धिकराणि च
स्विन्नगन्धं तथा मूत्रं विष्ठा च खरपूतिकम् ७२
एतान्यशुभगन्धानि सर्वदोषकराणि हि
शिखाशिखाप्रतीकाशाश्छत्राकारस्तु कंपकम् ७३
एताश्च शुभदाःप्रोक्ताः कुररावर्तुळाशुभा
कुन्दकाशनिभं धूम्रं सर्वसिद्धिप्रदं स्मृतम् ७४
कपोतशुकपिंछाभं धूम्रं तदशुभं भवेत्
अप्रदक्षिणमावर्तं सस्फुलिंगञ्च दर्शनम् ७५
तथापसव्यगमनमपशब्दञ्च मक्षिकम्
करणानि तथैतानि सर्वदोषकराणि तु ७६
तिर्यक्प्रदक्षिणञ्चैव मद्ध्यभागमधो गतिः
पुनरावर्तकञ्चैव घानाञ्च शुभानि वै ७७
अशुभैर्लक्षणैर्युक्तं प्रायश्चित्तन्तु कारयेत्
अस्त्रेणैव तु मन्त्रेण हुनेदष्टशतं क्रमात् ७८
दशाहुतिञ्च कर्तव्यं व्याहृतिञ्च विशेषतः
तदूर्ध्वे समिधौ चैव वर्मणापरिधिः क्रमात् ७९
तन्मन्त्रेण क्षिपेदग्नौ आघारसमिधौ तथा
प्राग्गुप्तब्रह्मकूर्चस्य ग्रन्धिं मुक्त्वाविसर्जयेत् ८०
अनुयाजिं समादाय वह्निमायोप्य रक्षयेत्

आरोपणस्य मन्त्रन्तु योन्ते योनिर्नृत्विय: ८१
अथवाग्नौ विनिक्षिप्य अनुयाजत्रियां द्विज
प्रणीतापात्रमादाय प्रोक्षणयाद्भिस्तु सेचयेत् ८२
प्रणीतातोयं प्राच्यादिप्रणीताद्भिः स्पृशेद्बुधः
प्रणीताधोमुखं कृत्वा तेनैव प्रोक्ष्यसर्वतः ८३
आज्यशेषं समादाय नैर्ऋत्यांस्रावयेत् भुवि
राक्षसेंद्रश्च तेनैव तृप्तिमाप्नोति नित्यशः ८४
दर्भास्तरणमानीय साग्रमेकं विहाय वै
ततश्चाभ्युज्यदर्भांश्चक्रमादग्रादहेत्ततः ८५
तदेकं प्रोक्ष्य वह्नौ तु क्षिपेदग्रं दहेत्ततः
तद्भस्मसंगृहीत्वा तु त्रिपुंड्रं पापनाशनम् ८६
श्रीकरं विजयं पुण्यमायुरारोग्यवर्द्धनम् ८७
इति पूर्वकारणे प्रतिष्ठातन्त्रे अग्निकार्यविधिपटलाद्वाविंशतिः

## वह्निरूपविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि वह्निरूपं प्रजापते
वकारो वर्धते ज्ञानं ह्निकारेण मलक्षयः १
प्रज्ञोत्पन्नोमलच्छेदात् वह्निरित्यभिधीयते
वागीशी अग्निमाता च पितावागीश्वरस्तथा २
वागीशी संभवा गौरी वागीशस्तु महेश्वरः
अर्षणाप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम् ३
प्रायश्चित्ते तथान्यस्मिन् मंगळे शान्तिकर्मणि
कर्मारंभेषु सर्वेषु वह्निरूपो महेश्वरः ४
पूजनीयो विशेषेण रूपद्ध्यानपुरस्सरम्
सर्वदेवमयोवह्नि सर्वमन्त्रमयस्तथा ५
सर्वविद्यात्मकश्चासौ सर्वज्ञानातकस्तथा

तस्मात्सर्वेषु कार्येषु ध्यातव्यो विधिमार्गतः ६
अग्निपूजाविनायत्र तत्र वै निष्फलं भवेत्
बिन्दुस्थानात्परेशाख्य क्षोभात्सञ्जायते नलः ७
अतस्तद्रूपममलं मार्ताण्डकोटिसन्निभम्
ज्वलदग्निसमप्रख्यमेवमेवं विचिन्तयेत् ८
सदाशिवस्य हृदये शक्तिश्शिवहृदि शिवा
उभयोरन्तरं नास्ति वायुरंबरयोरपि ९
शिवशक्तिसमायोगाच्छिवाग्निस्तु समुद्भवः
शिवाग्नेस्तु सहस्रांशात् गार्हपत्य समुद्भवः १०
गार्हपत्यसहस्रांशात् दक्षिणाग्निसमुद्भवः
दक्षिणाग्निसहस्रांशादाहवनीयमुद्भवः ११
तस्मात्सर्वप्रयत्नेन अग्निरुद्भवमुच्यते
अग्नित्रयमिदं प्रोक्तं बालयौवनवृद्धकाः १२
दीक्षाशान्तिस्तु बालाग्निः प्रोक्षणोत्सवयौवनम्
प्रतिष्ठानित्यवृद्धाग्निरग्निभेदं त्रिधाभवेत् १३
नामान्तं बालमग्निस्स्यादावृतान्तं तु यौवनम्
विवाहान्तन्तु वृद्धाग्निरग्नित्रयमिति स्मृतम् १४
शिवाग्निः प्रथमं विद्यात् द्वयञ्चाहवनीयकम्
वृद्धाग्निश्च तृतीयं स्यात् दक्षिणाग्निश्चतुर्थकम् १५
पञ्चमं यौवनाग्निश्च गार्हपत्यञ्च षष्ठकम्
बालाग्निं सप्तमञ्चैव अष्टमं केवलाग्निकम् १६
सामान्याग्निश्च नवममग्निभेदं प्रकीर्तितम्
अग्निभेदं तथावक्त्रं जिह्वाभेदानुरूपकम् १७
बीजभेदं त्रियाद्रव्यं ज्ञात्वासर्वं समाचरेत्
पूर्वतो वसतो वह्निः पूर्वतस्तच्छिवद्विजः १८
अग्निमन्त्रं शतं जप्त्वा प्रीतिप्रत्यङ्मुखो भवेत्

पाशमद्ध्ये च सौम्ये च याम्ये राक्षसके भवेत्  १९
पूर्वाग्नौ रुद्रदिग्भागे सुरस्यादीनि योजयेत्
पूर्ववद्रूपसंयुक्ता स्वाहादेवी च भावयेत्  २०
प्रतिष्ठोत्सवकाले तु दीक्षाकाले तथैव च
वृद्धरूपं प्रतिष्ठाग्नि उत्सवादीनि यौवनम्  २१
दीक्षाग्निं बालरूपन्तु अग्नित्रयमिति स्मृतम्
नित्याग्नौ वृद्धयः प्रोक्ता यौवनाग्नौ च उत्सवः  २२
बालाग्नौ तु प्रतिष्ठा च अग्निरूपमिहोच्यते
बालाचवृद्धा च सुयौवना च त्रेताग्निरूपं कथितं प्रशस्तम्  ।
बालाग्निरूपं कथितं प्रतिष्ठा नित्याग्निवृद्धोत्सवयौवनाग्निः  ॥  २३
गार्हपत्याहवनीयदक्षिणान् बालयौवनवृद्धस्वरूपकान्  ।
स्थापनोत्सवनित्यविधौ सदा पूजयेत्तु शिवाग्निस्वरूपकान्  २४
अनलशतसहस्त्रं रूपभूतञ्च वक्त्रं स्त्रुवमभयपरशुं खड्गघण्टाञ्चसव्ये
।
वरदमनलखेटञ्चांकुशञ्चान्यहस्तं दधतिजनितरूपं
शैवमाहुश्शिवाग्निम्  २५
पञ्चवक्त्रयुतं रक्तं पञ्चजिह्वासमायुतम्  २६
अजवाहनसंरूढं सृष्टिसंहारकारणम्
दशहस्तसमायुक्तं शैवमग्निस्वरूपकम्  २७
वृद्धरूपत्रियक्षचतुर्भुजमक्षपिंगमथो वृषवाहनम्
दीप्तमग्निसमुज्वलितावरश्शक्तिपाणिश्शिवाग्निमथाचरेत्  २८
सर्वत्राहवनीयाग्निमावाह्याभ्यर्च्य हूयते
यदि भेदेन किंकार्यं ब्रूहिचंद्रार्द्धशेखर  २९
विवाहादिशुभे कार्ये गार्हस्थ्यं समुदाहृतम्
पितृयुक्तेषु कार्येषु दक्षिणाग्निं प्रकल्पयेत्  ३०
देवकार्येषु सर्वेष्वाहवनीयं तथैव च

रक्तवर्णं द्विनेत्रञ्च एकवक्त्रं चतुर्भुजम्  ३१
शुक्लवस्त्रसमायुक्तं शुक्लयज्ञोपवीतिनम्
जटामकुटसंयुक्तं सर्वाभरणभूषितम्  ३२
त्रिपादयुक्तञ्चैष्वेकं कुंचितोर्ध्वे व्यवस्थितम्
दक्षिणे भयहस्तञ्च वामे वरदसंयुतम्  ३३
स्रुक्स्रुवौ तु द्विहस्ते च धारणन्तु प्रशस्यते
मेषारूढोग्ररूपं स्यात्सशक्तिसहितस्तथा  ३४
एवञ्च गार्हपत्याग्नौ दक्षिणाग्निरथोच्यते
रक्तारूपांगनेत्रं श्रुतिकरवदनं पक्षशृङ्गन्तु चैवं
रक्तावस्त्रावृतं स्यादभयवरदके स्रुक्स्रुवोर्ध्वेवहन्तम् ।
हारंकेयूरमालागुणचरणजटालंकृतं सत्रिपादं
अश्वारूढं सशक्तिं रथगजध्वजयुतं गार्हपत्याग्निरूपम्  ३५
द्विमुखं षट्भुजं सूत्रं सितं हसितवर्णकम्  ३६
जटामकुटसंयुक्तं षण्णेत्रं पिंगलप्रभम्
रौद्रदंष्ट्रं महाकायं किञ्चित्प्रहसिताननम्  ३७
सर्वे भयं स्रुवं खट्गन्धारीतञ्चाभयं करम्
वरदं कूर्च्चकं फालं वामांशे धारितं पुनः  ३८
उक्षारूढं त्रिपादन्तु स्वाहासञ्चिभरूपकम्
दक्षिणाग्निस्वरूपन्तु विस्पष्टं गद्यते मया  ३९
वक्ष्ये चाहवनीयाग्निरूपमुद्भवपूर्वकम्
दक्षिणाग्नेस्सहस्रं स्यादुत्भूतस्य चतुर्मुखम्  ४०
द्विमुखञ्च त्रिपादञ्च नासिकाद्वयसंयुतम्
त्रिमेखलसमायुक्तं षण्णेत्रं पिंगलप्रभम्  ४१
चतुश्शृंगोवृषारूढो बालार्कसमकेशधृक्
सप्तजिह्वासमायुक्तन्तेषु त्रीणि च वामके  ४२
सव्यवक्त्रे चतुर्जिह्वा वामवक्त्रे त्रयन्तथा

सव्यभागे वेदहस्तमग्निहस्तमपसव्यके ४३
स्रुक्स्रुवौ चाक्षमाला च सशक्तिस्सव्यहस्तके
चामरव्यञ्जनञ्चैव घृतपात्रन्तु वामके ४४
हिरण्याकनकारक्ता कृष्णा चैव तु सुप्रभा
अतिरक्ताबहुरूपा सप्तजिह्वाः प्रकीर्तिताः ४५
एवमावाहनीयाग्निस्वरूपञ्चाधुनोच्यते
एकवक्त्रं द्विनेत्रञ्च द्विभुजञ्च द्विपादकम् ४६
रक्तवर्णनिभञ्चैव अजारूढं स्मिताननम्
ब्राह्मणानां विशेषेण वैदिकाग्निस्वरूपकम् ४७
दिक्पतेश्च सहस्रांशात् केवलाग्निसमुद्भवः
द्विनेत्रो द्विभुजश्चण्डो वरदाभयसंयुतः ४८
शुक्लवस्त्रपरीधानश्चेतवर्णस्मरद्युतिः
केवलाग्निरिति ख्यातो महासनमिहोच्यते ४९
केवलाग्नेस्सहस्रांशादुद्भवश्च महासनम्
एकवक्त्रो द्विबाहुश्च मेषारूढो वृषासनः ५०
रक्तांबरसमायुक्तस्त्रिशिखश्च ज्वलत्कचः
चतुश्शृंगं त्रिणेत्रञ्च स्रुवं स्याद्दक्षिणे करे ५१
प्रसार्य च करोपेतो हितांगो वृषरूढधृत्
महासनमिति ख्यातो व्यक्तरूपं पितामहः ५२
रक्तनिभषण्णयनयुग्ममुखजिह्वासप्तगुणपादकरसप्तकरयुग्मम्
दक्षकरशक्तिस्रुवस्रुक्नयनमालाञ्चामरव्यजनं घृतपात्रकरमन्नये ५३
तेषु वत्स्या कृतिं विप्र प्रथमं प्रोच्यतेधुना
द्विभुजञ्च द्विपादञ्च रक्तकुञ्चितमूर्द्धजः ५४
रक्तवस्त्रपरीधानो रक्तमाल्यानुलेपनम्
शुक्लयज्ञापवीतञ्च शुक्लवस्त्रोत्तरीयकम् ५५
स्रुवं सव्ये वहन्वामे स्रुक्सन्धाय वै तथा

दिव्याभरणसंयुक्ता शान्तरूपस्थितानना ५६
एवं वह्न्याकृतिः ख्यातमरूपमधुनोच्यते
त्रिणेत्रञ्चतुर्भुजञ्चैव ज्वालामालाभिशोभितम् ५७
खट्गखेटकहस्तञ्च शरचापधरं प्रभुम्
कालाग्निरुद्रदेवानां रूपञ्चैव ततोच्यते ५८
अग्निश्चैव विवाहाग्निः कालाग्निश्चामलाग्निकः
यागाग्निश्चैव बालाग्निस्सर्वपापहराग्निकः ५९
पूर्वाद्यैशानपर्यन्तं वह्न्यावृतन्ततोच्यते
पूर्वतो वसतो वह्निं पूर्वतस्थः द्विजस्थिताः ६०
अग्निमन्त्रशतञ्जप्त्वा ततः प्रत्यङ्मुखो भवेत्
अग्निकर्णे हुतं कुर्याद्व्याधिभिः परिभूयते ६१
नासिकायां हुतन्दुःखन्नेत्रे होतुर्विनाशनम्
शिखास्थाने हुतञ्चैव राजराष्ट्रं विनश्यति ६२
तस्मात्सर्वप्रयत्नेन जिह्वायां होममाचरेत्
यत्र काष्ठन्तु तत्श्रोत्रं यत्र धूमन्तु नासिकम् ६३
यत्राल्पज्वलितन्नेत्रं यत्र भस्म तु तच्छिरः
यत्र ज्वलितजिह्वायां तथा होमं समाचरेत् ६४
अश्वत्थो दुंबरप्लक्षवटाः पूर्वादिदिक्षु च
शमीखदिरबिल्वार्क्का विदिक्षुक्रमशस्तथा ६५
प्रधानस्य पलाशन्तु समिधस्संप्रकीर्तिताः
द्वादशांगुलमायामं कनिष्ठांगुलनाहकम् ६६
समिधं षोडशं हुत्वा हुनेदिध्मं पृथक्पृथक्
समिदाज्य चरुं लाजान् सर्षपम्माषमुद्गकौ ६७
तिलवेणुयवाश्चैव ततो हूयात्क्रमेण तु
शतद्वयं शतं वापि अर्द्धं वा जुहुयात्तथा ६८
सद्येन समिधं हुत्वा घृतं वामेन मन्त्रतः

हृदयेन चरुं हुत्वा लाजं हुत्वा शिरेण तु  ६९
सर्षपं कवचेनैव माषमीशेन मन्त्रतः
मुद्गन्तु घोरमन्त्रेण तिलं तत्पुरुषेण तु  ७०
वेणुं वै बीजमुख्येन यवमस्त्रेण हूयते
उक्तानुक्तन्तु यत्सर्वं मूलमन्त्रेण होमयेत्  ७१
प्रत्येकं व्याहृतिं हुत्वा शेषाहुतिमथाचरेत्
आज्याहुतिस्तु प्रथमं द्वितीयं समिधा हुतिः  ७२
तृतीयन्तु चरुं हुत्वा चतुर्थन्तिलमेव च
पञ्चमं सर्षपञ्चैव षष्ठ--माषमेव च  ७३
सप्तमं लाजमेवन्तु अष्टमं सक्तुरुच्यते
नवमं क्षीरमित्युक्तन्दशमन्दधिरुच्यते  ७४
द्रव्याहुतिर्द्वादशपर्वपूरितं पक्वाहुतिर्बादरिकं प्रमाणम्  ।
आज्याहुतिर्माषनिमग्नमात्रं हुताशनस्योपरिषोडशांगुलम्  ७५
स्थण्डिलं भूमिदैवत्यं कुण्डन्तु विष्णुदैवतम्
वर्द्धनी ब्रह्मदैवत्यं प्रोक्षणी देवपुष्करम्  ७६
प्रणीतावरुणन्देवं परिधिर्भव दैवतम्
परिस्तरे ऋषिः प्रोक्तं समिधञ्चेंद्रदैवतम्  ७७
अंगारे गुरुदैवत्यमाज्यस्थाल्यां वसुस्तथा
आज्यंकालाग्निदैवत्यमिद्धमं सर्वाधिदैवतम्  ७८
मन्त्रं सारस्वतं प्रोक्तं स्वरं सवितृदैवतम्
पुष्पपात्रे श्रियं विद्यात् चरुस्थाल्यां कलानिधिः  ७९
अक्षतं योगदैवत्यं गन्धं च क्षितिदैवतम्
पुष्पं गन्धर्वदैवत्यमर्घ्यं श्रीदेविरुच्यते  ८०
दीपं प्रजापतिन्देवं धूपं वै भृगुदैवतम्
लाजन्नक्षत्रदैवत्यमित्येतास्त्वधिदेवताः  ८१
कुंभस्य वदने रुद्रो मद्धये विष्णुः प्रकीर्तितः

मूले हिरगयगर्भस्तु जले गंगाप्रकीर्तिता ८२
रत्ने चंद्रमसन्ध्यायेत्कूर्चे वाक् देवतां स्मरेत्
अपादाने महालक्ष्मीमपान्ते वरुणं स्मरेत् ८३
शालीनां वृषभो देवस्तगढुलानान्तु षगमुखः
तिले चकाममूर्त्तिस्तु पार्वती च परिस्तरे ८४
रेखायामष्टदिक्पालो लेपिते भूमिदेवता
वेद्यान्तु वेदिकामूर्त्तिरुपवेद्यां सरित्पतिः ८५
आसने नृत्तमूर्त्तिस्तु सुन्दरीमंगळाष्टके
अंकुरेषु च सोमस्स्याद्दीपे ज्वलनदेवता ८६
वर्द्धन्यां वदने गौरीत्येवं धीमान्प्रकल्पयेत्
होमारंभस्य पूर्वे तु स्त्रुक्स्त्रुवञ्चेन्धनन्तिलम् ८७
परिधिश्चैव दर्भांश्च समिदाज्य चरुन्तथा
गन्धाक्षतञ्च पुष्पञ्च विष्टरं घृतपात्रकम् ८८
दीपं वै द्रव्यपात्राणि प्रोक्षणीं वर्द्धनीन्तथा
प्रणीतां पुष्पपात्रञ्च चरुपात्रन्तथैव च ८९
आहृत्यहोमसंभारान् कुगडं प्रतिविशेषतः
प्रथमं कुगडसंस्कारं द्वितीयं ज्वलनोज्वलम् ९०
तृतीयं परिस्तरणञ्चतुर्थं पात्रसादनम्
पञ्चमन्तु पवित्रञ्च षष्ठं वै प्रोक्षणन्तथा ९१
सप्तमं संग्रहेद्द्रव्यमष्टमं घृतसंग्रहः
नवमं परिधिन्यासन्दशमं परिषेचनम् ९२
एकादशञ्चोद्ध्र्वहोमं द्वादशं होममाचरेत्
समिदाज्यान्नशालिस्तु यवगोधूमवैणवम् ९३
नीवारलाजसक्तुश्च माषमुद्गकुलुत्थकम्
निष्पावतरळञ्चैव लाजमाषाढकन्तिलम् ९४
प्रियंगुसर्षपञ्चैव मधुदधिपयोघृतम्

फलापूपन्तु तांबूलं षड्विंशद्रव्यमुच्यते ९५
हिरण्याहेमवर्णाभा कनकाश्यामळाकृतिः
रक्ता च रक्तवर्णाभा कृष्णा चैव हरित्प्रभा ९६
सुप्रभापीतवर्णा चातिरिक्ताश्वेतवर्णिका
बहुरूपाग्निवर्णा च जिह्वावर्णं प्रकीर्तितम् ९७
हिरण्याकनकाशान्ता रक्तावश्यकरी भवेत्
कृष्णा च मारणी प्रोक्ता सुप्रभा मोक्षकारिणी ९८
बहुरूपातिरक्ता च सर्वाभीष्टप्रदा भवेत्
सद्यो जातेन पूर्वायां समिद्धोमं समाचरेत् ९९
आग्नेय्यां हृदयेनैव याम्यायां गुह्यमन्त्रतः
नैर्ऋत्यां शिखया हुत्वा वारुण्यां वाममन्त्रतः १००
वायव्यां कवचेनैव सौम्यायां पुरुषेण तु
ऐशान्यां शिरसा हुत्वा मद्ध्यमे मूलमन्त्रतः १०१
विवाहे पश्चिमे जिह्वां जातकर्मे च मद्ध्यमे
चौळोपवीतयोस्सौम्ये पितृकार्येषु दक्षिणे १०२
आग्नेय्यां शान्तिहोमं स्यादीशाने चोग्रकर्मणि
पूर्वे पुंसवनं प्रोक्तमेतद्धोमस्य लक्षणम् १०३
ईशाने मुक्तये होमः पुरुषे चाणिमादिकम्
प्रायश्चित्तादिकं घोरे तथास्येक्रूरकर्म च १०४
वश्याकर्षणमोहार्त्थं वामदेवे तु होमयेत्
नित्यकर्मविधानन्तु वक्त्रेस्मिन्पश्चिमे हितः १०५
वश्याकर्षणयोराद्या कनकास्तंभने हिता
विद्वेषमोहयो रक्ता कृष्णामारणकर्मणि १०६
सुप्रभाशान्तिके प्रोक्ता सुरक्तोच्चाटने मता
एकैवबहुरूपा च सर्वकामफलप्रदा १०७
मूलं कर्मविनाशाय मद्ध्येन पुत्रनाशनम्

अग्रतो व्याधिदश्चैवाप्येकहस्तेन निर्धनम् १०८
मूलमद्ध्याग्रतश्चैवाप्युपहस्तात्समिद्धनेत्
स्वकारो सूतकं विद्यादाकारो रिपुवर्द्धनम् १०९
हकारो ब्रह्महत्यानामाहुतिः कुत्रदीयते
नादान्ते चाहुतिं कुर्यात्सर्वसिद्धिकरं भवेत् ११०
आज्यहोमे नशयनं शेषमासीन एव वा
तथेंद्रे मेखलापादं द्विभुजौ दक्षिणोत्तरे १११
पश्चिमे तु शिरोविद्यात् शिखा तद्योनिरुच्यते
तत् ज्वाला ---- यस्य तन्नाळन्नाभिरुच्यते ११२
अनलं प्राणमित्युक्तं कुंडमूर्तिरुदाहृता ११३
इति वह्निरूपविधिपटलस्त्रयोविंशतिः

स्रुक्स्रुवलक्षणपटलप्रारंभः

अतस्स्रुक्स्रुवयोर्वक्ष्ये लक्षणन्तु प्रजापते
यज्ञोक्तलक्षणैर्वृक्षैः कारयेत्स्रुक्स्रुवौ बुधः १
वैकंकतशमीबिल्वचूतन्यग्रोधखादिराः
अश्वत्थोदुंबरप्लक्षपनसंश्च शिरीषकाः २
यज्ञवृक्षास्समाख्याताः प्रागुक्तलक्षणान्विताः
मूलाग्रन्तु विनिश्चित्य वृक्षसंग्रहकालके ३
मूलाग्रेण च तेनैव कार्यं मूलाग्रकं तयोः
स्रुक्स्रुवावेकवृक्षाद्धात् मद्ध्ये सारं प्रगृह्य च ४
द्विधा विभज्य तद्वृक्षं त्वक्पार्श्वे बिलमाचरेत्
मूलं स्रुक्स्रुवयोर्दण्डे तरोरग्रे तु पंकजम् ५
कृत्वा सलक्षणं ह्येवं सर्वदोषविवर्जितम्
मानहीने भवेद्रोगं भिन्ने प्राणिकुलक्षयम् ६
अधिके शत्रुवृद्धिस्स्यात्स्फुटिते मूर्तिनाशनम्

विलक्षणे त्रियानाशं खाताधिक्ये धनक्षयम्  ७
तस्मात्सर्वप्रयत्नेन यथोक्तं सम्यगाचरेत्
उत्तमं मद्ध्यमञ्चैव कन्नयसं त्रिविधं मतम्  ८
वस्वंगुलैस्त्रिगुणितैः स्रुवदैर्घ्यमुक्तमृक्षांगुलैर्भवति तस्य तुमूलनाहम्
।
अ्रास्याग्रनाहमपि मूलवदेव कुर्यात्कर्णस्य नाहमिदमद्ध्यममुक्तमेव
९
नासापुटप्रतिमपुष्करमास्यकार्यं कर्षाज्य पूरमनलांगुलदैर्घ्यमुक्तम्  ।
मूलात्क्रमेण कृशतानपि तद्गळान्तं कुर्वीतसर्वभवनेषु मनोज्ञरूपम्
१०
त्रितालायामसंपन्नविस्तारे कलशद्वयोः
कालोत्सेधसमोपेता स्रुग्भवस्तस्य कर्मणा  ११
सप्तांगुलं भवेदास्यं विस्तारायामतोबहिः
त्रिभागादेकमग्रं स्यात्कराठायामं कलार्द्धतः  १२
वेदिकां सम्यगाकल्प्य तन्मुखौ चतुरी कृताः
तन्मद्ध्ये तु बिलं कुर्याद्वर्तुळं श्वभ्रशोभनम्  १३
पार्श्वेष्टपत्रसंयुक्तं प्रान्तरेखाविभूषितम्
तत्परं पट्टिकां कुर्यात्तस्याः कर्णप्रमाणतः  १४
परितः पवमानन्तु तत्परं पत्रचित्रितम्
बाह्ये वेदिकयायुक्तं दराडाग्रे गरिडकात्रयम्  १५
मुखमेवं प्रकल्प्यैव मग्रे स्यात्तु तदर्द्धकम्
गंडिकां पद्मचित्रं वा दराडमूले स्रुवे भवेत्  १६
स्रुवमायाममानेन तथारत्नमिदं भवेत्
षडंगुलपरीणाहमग्रे स्यात्तत्तदर्द्धकम्  १७
गोपादसदृशाकारं भद्रे स्यात्तु पुटद्वयम्
कर्षप्रमाणपूर्णन्तत्स्रुवमेवं विधीयते  १८

इति लक्षणसंयुक्तौ न्यस्त्वातौ होमसाधनैः ।
वेदभानुयुगनागतुंगकमन्यमेतदृषिभिः पुरातनैः ।
कुंभदण्ड उपदेशका तथा वेदिका गळकृतं मुखं क्रमात् १९
तस्य दण्डपरीणाह षट्पुनः गर्तमस्य चतुरं गुलं बुधैः ।
खातव्योमा अग्निपरितोत्रवेत्रयुक्पद्मपुष्पमथ पृष्ठदेशके २०
कनिष्ठताराकृतवर्द्धनीस्त्रुवं गर्तगंडिपरितो इदं स्त्रुवम् २१
त्रित्रिहस्तं समारभ्य यावद्रुद्रकरान्तकम्
तोरणस्योच्छ्रयं विद्यादधमादित्रयंत्रयम् २२
भित्यूर्ध्वोत्सेधकार्द्धन्तु तस्याकारमिति स्मृतम्
तद्विस्तारं त्रिधाभज्य एकभागप्रमाणतः २३
मद्ध्ये शूलं प्रकर्तव्यं पाताग्रेऽपि तथैव च
तद्विस्तारद्वयांगुल्यं खनमेकांगुलं भवेत् २४
रसांगुलं समारभ्य यावन्मन्वंगुलान्तकम्
द्वारोत्सेधस्तथोत्सेधद्वारविस्तारविस्तृतम् २५
तोरणाग्रे तु शूलं स्यात्त्रिःत्रिःकीलसमावृतम्
सप्तांगुलस्य विस्तारं युगाङ्गुलघनं भवेत् २६
तोरणस्येवमाख्यातमष्टमंगळमुच्यते
देवाष्टमं गलञ्चैव द्विजानामष्टमंगळम् २७
नृपाष्टमंगलञ्चैव वैश्यानामष्टमंगळम्
देवानाञ्च विशेषेण अष्टमंगळमुच्यते २८
दर्पणं पूर्णकुंभञ्च वृषभं युग्मचामरम्
श्रीवत्सं स्वस्तिकं शंखं दीपो देवाष्टमंगळम् २९
देवाष्टमंगळं प्रोक्तं द्विजाष्टमंगळं श्रुणु
पताकाशं खचक्रञ्च पूर्णकुंभं सपत्रकम् ३०
छत्रं लक्ष्मीप्रदीपञ्च द्विजानामष्टमंगळम्
द्विजाष्टमंगळं प्रोक्तं नृपाष्टमंगळं श्रुणु ३१

भेरीवृषो गजश्चैव चामरी केसरी झषः
पताका च प्रदीपञ्च भूभुजामष्टमंगळम् ३२
नृपाष्टमं दळं प्रोक्तं वैश्याष्टमंगळं श्रुणु
सवस्त्रस्ये तु पतका भेरी कुंभञ्च दीपिका ३३
नन्द्यावर्तञ्च देवानां वैश्यानामष्टमंगळम्
वैश्याष्टमंगळं प्रोक्तं शूद्राष्टमंगळं श्रुणु ३४
दर्पणं पूर्णकुंभञ्च पताकाछत्रभेरिका
श्रीवत्सं स्वस्तिकं पद्मं शूद्राणामष्टमंगलम् ३५
एवं पञ्चविधं ज्ञेयं लक्षणं वक्ष्यते श्रुणु
याज्ञिकं वृक्षमादाय कारयेत्सप्रमाणतः ३६
उत्सेधं षोडशांगुल्यं विस्तारन्तु तदर्द्धकम्
तद्विंशांशं घनं प्रोक्तं ग्राहयेत्फलकाष्टकम् ३७
एतदन्यत्प्रकारेण विस्तारोत्सेधमुच्यते
विस्तारं पूर्ववत्ग्राह्यमर्ध्यांगुलविहीनकम् ३८
उत्तमोत्तममारभ्य तन्नयसस्याधमान्तकम्
उत्सेधञ्चैवमाख्यातं विस्तारं तद्वयं क्षयेत् ३९
नवधामानमित्युक्तं फलकानां प्रजापते
अथवान्यप्रकारेण विस्तारोत्सेधमुच्यते ४०
षोडशांगुलमायामं विस्तारन्तु तदर्द्धकम्
अधस्तात्पद्मपीठन्तु चतुरंगुलमानतः ४१
तदूर्ध्वे दर्पणादीनि लेखयेदथ कारयेत्
दर्पणं दर्शनञ्चैव पूर्णकुंभन्तु कुंभकम् ४२
वृषभे वृषभञ्चैव सव्यानो युग्मचामरैः
श्रीवत्से चैव श्रीदेवी स्वसिकेतुसरस्वती ४३
शंखे च विमलं प्रोक्तो दीपे तु ज्वलनं स्मृतः
स्वस्वनाम्नासमभ्यर्च्य सूत्रपातन्तु कारयेत् ४४

दर्पणस्यह्युमादेवी पूर्णकुंभस्य जाह्नवी
वृषभस्य स्वधादेवी करवी युग्मचामरे ४५
श्रीवत्सस्य तु श्रीदेवी स्वस्तिके तु सरस्वती
शंखस्य शशिनीदेवी दीपस्य स्कन्ददेवता ४६
ऊर्वशी मेनका चैव रंभा चैव तिलोत्तमा
सुमुखी दुर्मुखी चैव कामुकी कामवर्द्धनी ४७
एताश्चाप्सरसः प्रोक्तास्त्वष्टमं गळधारिकाः
अष्टमंगळमाख्यातमायुधानान्ततश्श्रुणु ४८
वज्रं शक्तिञ्च दण्डञ्च खट्गं पाशांकुशन्तथा
गदात्रिशूलं चक्रञ्च पद्मञ्चैव दशायुधम् ४९
द्वारतारप्रमाणं वा तस्यार्द्धं वा तदर्द्धकम्
युक्तीनाञ्चैव सर्वेषां शिल्पिनाञ्जनसाथवित् ५०
वज्रवृत्तेण कर्त्तव्यं पूर्ववद्रूपमेव च
इंद्रानलयमाश्चैव राक्षसो वरुणस्तथा ५१
वायुस्सोमस्तथैशानो ब्रह्माविष्णुश्च देवताः
वज्रादिपद्मपर्यन्तं खट्गानान्त्वधिदेवताः ५२
विलासिनी रूपिणी चाथ धारिणी विमुखी तथा
निर्मुखी दुर्मुखी चैवमतिभ्रंगी सुमालिनी ५३
सरस्वती च लक्ष्मी च शक्तयः परिकीर्तिताः
विपुला च शचीदेवी स्वधास्वाहा च पार्श्वयोः ५४
नीली च काळकर्णी च जालकेशी सुकेशिनी
हर्षणी च हृदार्दी च मंगरीमांसिषी तथा ५५
ऋद्धिश्चैव निवृत्तिश्च स्वरूपी च निवृत्तिका
सावित्री भारती चैव श्रीदेवी पृथिवी तथा ५६
इत्येवं लोकपालानां शक्तिद्वयमुदाहृतम्
भेदिनी मोहिनी माया ह्लादिनी लोकमातरी ५७

क्षेत्रभर्वी च वीरेशी मालिनी भूतमातरी
सुप्रिया च सुकेशी च जृंभिणी वैरवी तथा ५८
इत्येवं द्वारपालानां शक्तिद्वयमुदाहृतम्
मंगळं शक्तिकुंभञ्च कटकञ्च सरोरुहम् ५९
चामरं मुकुरञ्चैव दीपोदेव्याष्टमंगळम्
नाराचञ्चत्रिशूलञ्च घण्टां खट्वांगमेव च ६०
कपालं डमरूञ्चैव ध्वजपादन्तथैव च
वेताळसूरिपाशञ्च देवीनान्तु दशायुधम् ६१
इति स्रुक्स्रुवलक्षणपटलश्चतुर्विंशतिः

यागशालालक्षणपटलप्रारंभः

समानतो यागशाला लक्षणं वक्ष्यतेऽधुना
मण्टपं कुण्डवेदीञ्च स्रुक्स्रुवावष्टमंगळम् १
दशायुधवितानञ्च दर्भमाला च दिक् ध्वजम्
कदळीपूगदामानि दुकूलकबरीकचम् २
नारंगलिकुचंस्त्रक्च गात्रवेष्टनदर्पणम्
तोरणं पुष्पमाला च कुंभं तस्य च वर्द्धनम् ३
घटं वा कलशं वापि नाळिकेरं तिलाक्षतम्
गन्धपुष्पगुळञ्चैव द्रव्याण्यन्यानि यानि च ४
होमद्रव्याणि सर्वाणि समापाद्य विधानवित्
उत्सवे च प्रतिष्ठायां दीक्षायां प्रोक्षणेऽपि च ५
स्नपनादिषु कार्येषु यागमण्टपमुच्यते
प्रासादस्याग्रतो वापि पूर्वे याम्ये च वारुणे ६
सौम्ये दिशीशके वापि पावके वा विधीयते
त्रिपञ्चरससप्ताष्ट नवपङ्क्तिश्च रुद्रयुक् ७
भानुत्रयोदशं विंशत् द्वात्रिंशत् हस्तमानकम्

एतैर्मानैः क्रमात्कुर्यान्मण्टपञ्चतुरश्रकम् ८
आशोद्ध्यवसुधां सम्यक् जानुपर्यन्तमेव च
समीकृत्वौ पलिप्याथ तस्मिन्वास्तु समर्चयेत् ९
मण्टपं कारयेद्धीमान्मात्रांगुलवशात्क्रमात्
मण्टपेषु च सर्वेषु पूर्वे वाष्टादशक्रियाम् १०
गुप्तशल्यनिवृत्यर्थं प्रकुर्यात्तु विचक्षणः
उत्तमत्रयलिंगेषु द्वात्रिंशद्धस्तमिष्यते ११
विंशतिर्मद्ध्यमेषूक्तो कन्यसेष्टादशंकरम्
रसाष्टद्वादशं हस्तः पवित्रादिषु कर्मसु १२
बाणसप्तत्रिहस्तं वा चललिंगेंकुरेऽपि वा
मानमादौ विनिश्चित्य मण्टपं कारयेत्सुधीः १३
लिंगस्य स्थापने चैव सकळस्थापने तथा
उत्सवे प्रोक्षणे चैव दीक्षायां बाणलिंगके १४
प्रकर्त्तव्यं विधानेन पदे भुवनसंज्ञके
विमानस्थापने चैव त्रिशूलस्थापने तथा १५
विमानप्रोक्षणे चैव तत्पवित्राधिवासने
कार्यं रुद्रपदे चैव गेहद्वादशसूत्रकैः १६
चललिंगप्रतिष्ठायामष्टबन्धनकर्मणि
प्रायश्चित्तादिके कार्ये सकळप्रोक्षणेऽपि च १७
कार्यन्नन्दपदे धीमान् शेषं युक्त्या प्रकल्पयेत्
सूत्रपातं प्रकुर्वीत प्रागग्रञ्चोत्तराग्रम् १८
शालिपिष्टार्द्धसूत्रेण पङ्क्तिसूत्रमथाचरेत्
मण्टपाभ्यन्तरं सर्वमेकाशीति पदं कुरु १९
ब्राह्मयन्नवात्मकं प्रोक्तं दैविकं षोडशं क्रमात्
चतुर्विंशतिसंख्यञ्च मानुषं पदमीरितम् २०
द्वात्रिंशदात्मकं ज्ञेयं पैशाचं यागवेश्मनि

मानुषञ्च पदन्तत्र देशिकस्थानमुच्यते २१
मद्ध्ये ब्रह्मपदे वेदी देविके मंगळाष्टकम्
मानुषे च पदे कुण्डं पैशाचे तोरणं भवेत् २२
मद्ध्ये त्वेकपदे कुंभं प्रधानं वर्द्धनीमुमाम्
अभितः पदविद्येशान्देविकेषोडशाह्वये २३
अष्टमंगळमित्युक्तञ्चतुर्विंशतिसंज्ञके
मानुषे कुण्डमित्युक्तं द्वात्रिंशत्पदसंज्ञके २४
पैशाचे तोरणञ्चैव कलशश्च यथाक्रमम्
वृक्षञ्च खादिरञ्जातिक्रमुकन्नाळिकेरकम् २५
न्यग्रोधं वेणुदण्डञ्च पङ्क्तिमानमथोच्छ्रयम्
नाहं विंशतिरंगुल्यं क्रिमिकाटरवर्जितम् २६
मण्टपं वापि कूटं वा प्रपां वापि प्रकल्पयेत्
नाळिकेरदळेनैव तालपूगदळेन वा २७
ऊद्ध्र्वमाच्छादयेत् मंत्री नीरन्ध्रन्तु सलक्षणम्
द्वादशस्तंभसंयुक्तं षोडशस्तंबसंयुतम् २८
षट्त्रिंशत्स्तंभसंयुक्तञ्चतुष्षष्ट्यंघ्रिसंयुतम्
दशाष्टषट्करोत्सेधैश्श्रेष्ठादीनामनुक्रमात् २९
षड्विंशद्धस्तदीर्घं स्यादष्टतालसु विस्तरः
वितानमद्ध्ययोर्मद्ध्ये यागसद्मनिदेशिकः ३०
कलातालोत्तमं विद्धि मद्ध्यमं रवितालकम्
कन्यसं वसुतालं स्यात् तोरणञ्चार्द्धविस्तरम् ३१
षडंगुलं समारभ्य यावन्मन्वंगुलान्तकम्
तोरणांघ्रिं प्रकुर्वीत याज्ञिकैः पादपैस्तथा ३२
तद्विस्तारं त्रिधाभज्य तेषु शूलत्रयसेद्बुधः
शूलं रसांगुलायामं नेत्रांगुलसुविस्तरम् ३३
व्योमांगुलघनन्तत्र कल्पयेद्देशिकोत्तमः

ऋषिबाणाग्निदर्भाग्रैर्विंशत्यंगुललंबनम् ३४
सप्तद्वित्र्यंगुलं योज्यं कारयेद्दर्भमालिकाः
नेत्रांगुलमिदं रज्जु बन्धयेत्तोरणाग्रके ३५
अष्टदिक्षुद्ध्वजानष्टौ लंबयेत्तु प्रदक्षिणम्
पूर्वस्यां पीतवर्णन्तु पावके रक्तवर्णकम् ३६
नीलांबुजनिभं याम्ये धूमाभं राक्षसे ध्वजम्
क्षीराभं वारुणे देशे शबळाभन्तु मारुते ३७
तप्तहेमनिभं सौम्ये स्फटिकाभन्तुशांकरे
गायत्र्यंगुलविस्तारं द्विकलांगुलमायतम् ३८
विस्तारेण समं पुच्छं पुच्छार्द्धं शिखरं भवेत्
ध्वजमद्ध्ये लिखेद्धीमान् दिग्गजांश्च विशेषतः ३९
चतुःपुच्छं त्रिपुच्छं वा पुच्छद्वयमथापि वा
पूर्वद्वारोत्तरे कुंभे नन्दिशान्ति द्विकुंभकौ ४०
तद्याम्ये त्रिषु कुंभेषु शककाळरविं यजेत्
अग्निश्चानलदिक् भागे कुंभमेकं प्रपूजयेत् ४१
याम्यस्य पूर्वदिक्भागे भृंगिविद्या द्विकुंभकौ
तत्पश्चाद्यमविघ्नेशौ कुंभयुग्मं प्रपूजयेत् ४२
नैर्ऋत्यां त्रिषु कुंभेषु ब्रह्मानिर्ऋतिकेशवम्
प्रतीच्यान्दक्षिणे भागे वृषभञ्च निवृत्तिकम् ४३
तस्योत्तरत्रिकुंभेषु स्कन्दोमावरुणान्यजेत्
वायौ च वायुविघ्नेशौ कुंभयुग्मं प्रपूजयेत् ४४
उदीच्यां पश्चिमे भागे द्विकुंभे संयजेत् गुरुः
गौरीप्रतिष्ठा तत्पूर्वे तथा सोमञ्च चण्डकम् ४५
ईशाने त्रिषु कुंभेषु गुरुमीशविधिं यजेत्
वास्तुपन्निर्ऋतिं विष्णुं द्विपदे तु प्रकल्पयेत् ४६
तथा च वरुणस्कन्दौ श्रियञ्च द्विपदे क्रमात्

गुरुमीशविधिञ्चैव द्विपदे तु प्रशस्यते ४७
अन्येषां सर्वदेवानां तत्तत्स्थानेषु पूजयेत्
दिव्यन्तरिक्षभूमिष्ठ विघ्नानुद्वास्य बुद्धिमान् ४८
दक्षजंघासमुत्क्षिप्य वामजंघां विवर्जयेत्
दक्षिणाग्रे पार्ष्णिदेशं चतुरंगुलमुन्नतम् ४९
भूमौ त्रिताडनं कृत्वा पार्ष्णिघातं विधीयते
शान्तिभूतिबलारोग्य तोरणेषु प्रकल्पयेत् ५०
उत्तमं त्रिंशदंगुल्यं मद्ध्यमं षोडशांगुलम्
अधमं द्वादशांगुल्यं वेदिकोत्सेधमुच्यते ५१
कुंडं सलक्षणं कुर्यात् मानांगुलवशेन तु
उत्तमन्तु शिलाधानं मद्ध्यमं त्विष्टिका तथा ५२
कन्नयसं मृण्मयं प्रोक्तं त्रिविधं कारयेत्क्रमात्
कुण्डं हस्तप्रविस्तारं त्रिमेखलसमायुतम् ५३
त्रिमेखलं त्रितत्वञ्च ब्रह्मविष्णवीशरूपकम्
मूले चैव विधातारं मद्ध्यमे विष्णुदैवतम् ५४
अग्रे शिवमयं कृत्वा त्रिमेखलाधिदैवतम्
शिवमेखलविस्तारं उत्सेधन्तु यथांगुलम् ५५
अग्न्यंगुलन्तु विस्तारमुत्सेधं विष्णुमेखला
अंगुलद्वयविस्तारमुत्सेधं शिवमेखला ५६
चतुरश्रं त्रयश्रञ्च षडश्रञ्च पुमान्भवेत्
योन्याकारं धनुः पद्मं स्त्रीरूपं संप्रकीर्तितम् ५७
सुवृत्तमष्टकोणञ्च नपुंसकं हुताशन
अष्टाश्रं चतुरश्रञ्च वृत्तञ्चेति षडश्रकम् ५८
पुमान्कुण्डमिति प्रोक्तं स्थितं वा कुण्डमुच्यते
योन्याकारं त्रिकोणञ्च वर्तुळं पद्मकुंडकम् ५९
आसीनन्तु प्रकर्तव्यं स्त्रीरूपमिह चोदितम्

अर्द्धचंद्रञ्च पञ्चाश्रमष्टाश्रं शयनं भवेत् ६०
नपुंसकमिति ज्ञेयं त्रिविधन्तु प्रजापते
ब्रंहणाञ्चतुरश्रन्तु राज्ञां वर्तुळमिष्यते ६१
वैश्यानामर्द्धचंद्राभं शूद्राणां त्रयमीरितम्
चतुरश्रन्तु सर्वेषामष्टमे सर्वतां त्रिकम् ६२
कुंडस्वरूपं जानीयात् परमं प्रकृतेर्वपुः
वृत्तपीठस्य लिंगस्य वृत्तमेवमुदाहृतम् ६३
पद्मपीठस्य पद्मं स्यात् चतुरश्रयुतस्य च
पीठस्य तु युगाश्रं स्यात्कुण्डं मानांगुलेन तु ६४
मेखलात्रितयं कुण्डे पादत्रयमिहोच्यते
योनौ योनिं विजानीयात्खातं कुक्षिं विचिन्तयेत् ६५
परिधित्रितयं बाहु नाभौ नाभिञ्च भावयेत्
एकज्योतित्रिपादञ्च चतुश्शृंगं द्विधाशिराः ६६
सप्तजिह्वा सप्तहस्ता सप्त-----
ऊर्ध्वास्यस्सुमुखो भूत्वा सुखासनसमन्वितः ६७
स्वाहास्वधा च तत्पत्नी दक्षिणे वामके तथा
------ चतुरंगुल्यमविच्छिन्नं घृताहुतिः ६८
पञ्चाननं शिरोग्रीवं पञ्चादश सुलोचनम्
दशहस्तं वृषारूढं त्रिपदाग्निसदाशिवम् ६९
पूर्वे चाहवनीयाग्निर्दक्षिणे वैदिकं यजेत्
पश्चिमे केवलाग्निश्च गार्हपत्यमुदक् दिशि ७०
ईशाने च प्रधानन्तु वह्निरूपं विशेषतः
हिरण्यायां समिद्धूयात्कनकायां घृतं हुनेत् ७१
रक्तायान्तु यवं प्रोक्तं कृष्णायामन्नकं हुनेत्
सुप्रभायां हुनेत्सक्तुमतिरिक्ता तिलन्तथा ७२
सिद्धार्थं बहुरूपायां सर्वासु व्याहृतिं हुनेत्

द्रव्याण्येतानिसर्वाणि कनकायां हुनेत्ततः ७३
यो जिह्वा तु न जानाति तद्धुतन्निष्फलं भवेत्
तस्मात्सर्वप्रयत्नेन कनकायां हुनेत्क्रमात् ७४
समिधायां शिवं प्रोक्तमाज्ये च परमेश्वरी
चरोस्तु परमो विष्णुर्लालानामृषिरेव च ७५
सर्षपञ्चाग्निदैवत्यं सक्तूनां सूर्यदेवता
मधूनां सोमदैवत्यमिक्षूणां वायुरेव च ७६
तिलस्य पितरः प्रोक्ता मुद्गस्य वरुणस्तथा
माषमीश्वरदैवत्यं नीवारं वृषभेश्वरम् ७७
आढकीशुकदैवत्यं शालीनां सोमदेवतम्
दधिनां माधवं प्रोक्तं क्षीरस्य श्रुतिरेव च ७८
अपूपस्य गणेशन्तु गुळस्य स्कन्ददैवतम्
होमद्रव्यादि सर्वेषामधिदेवाः प्रकीर्तिताः ७९
सूकरी च मृगीहंसी होममुद्रास्त्रयस्मृताः
तर्जनी मद्ध्यमांगुष्ठैश्शान्तिकर्मणि हंसिका ८०
मद्ध्यमानामिकांगुष्ठैः काम्यार्त्थे च मृगीस्मृता
सर्वैरंगुलिभिश्चोग्रकार्येषु सूकरीस्मृता ८१
मुद्राहीनन्तु यद्धोमं तद्धोमं निष्फलं भवेत्
घृतं कर्षार्द्धहोमं स्यात् क्षीरस्य मधुनस्तथा ८२
शक्तिमात्रं हुनेद्दध्ना ----- पायसस्य तु
कर्षार्धं सर्वभक्ष्याणां लाजानां मुष्टिरेव च ८३
खण्डत्रयन्तु मूलानां स्वप्रमाणविमिश्रितम्
ग्रासार्द्धञ्चैवमन्नानां ------ ८४
इक्षोरापर्विकम्मानं भूतानामंगुलद्वयम्
पत्रं पुष्पं स्वमानेन समिधो द्वादशांगुलम् ८५
चंद्रचन्दनकाश्मीर कस्तूरी यक्षकर्दमान्

कला ----- गुग्गुलं बदरास्थि ८६
कन्दानामष्टभागन्तु अपूपं सप्रमाणतः
नाळिकेरं तथाभिद्यदशांशं होमयेत्ततः ८७
फलानि स्वप्रमाणेनाप्यन्नमन्नप्रमाणतः
तिलञ्च सर्षपं शुक्त्या होमयेत्तु यथाविधि ८८
इति यागशाला लक्षणपटलः पञ्चविंशतिः

आचार्यलक्षणपटलप्रारंभः

आचार्यलक्षणं वक्ष्ये लिंगसंस्थापनाय च
पञ्चशैवास्समाख्यातास्सिद्धान्ते तु प्रजापते १
प्रथमो नादिशैवस्तु सशैवस्तु सदाशिवः
आदिशैवोद्वितीयस्तु सशिवब्राह्मणस्मृतः २
आदौ सदाशिवेनैव दीक्षितस्त्वादिशैवकः
कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः ३
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः
कौशिकश्शिवमूर्त्या तु दीक्षितश्शिवगोचरः ४
काश्यपस्त्वीश्वरेणैव शिखागोचरसंस्थितः
ईशानेन भरद्वाजो दीक्षितो ज्योतिगोचरः ५
गौतमो ब्रह्ममूर्त्त्या तु सावित्री गोचरस्थितः
अगस्यश्चोद्ध्र्ववक्त्रेण दीक्षितो व्योमगोचरः ६
ऋषीणामेव पञ्चानां गोचरास्संप्रकीर्तिताः
आदिशैवा इमे ख्याताः गोचरं कुलमुच्यते ७
कुलेष्वे तेषु सञ्जाता स्थापनादिक्रियार्हकाः
सदाप्रवर्त्तकास्त्वेते ह्यादिशैवा इति स्मृताः ८
तृतीयन्तु महाशैवस्सशैवो विप्र उच्यते
चतुर्थश्चानुशैवोक्तो नृपश्चैव तथास्मृतः ९

पञ्चमोऽन्तरशैवस्तु शूद्रश्चेति तथामतः
बिंद्वर्द्धेनाश्रितः प्रोक्तस्त्वादिशैव इति स्मृतः १०
आदिशैवा इति प्रोक्ता महाशैवस्तु कथ्यते
महाशैवाश्रितः प्रोक्तश्चानुशैव इति स्मृतः ११
अनुशैवाश्रितः प्रोक्तश्चानुशैवोऽपि कथ्यते
महाशैवानुशैवाश्च तथा चान्तरशैवकाः १२
आत्मार्थयजनं कुर्यान्नकुर्यात्तु परार्थकम्
तेषु मन्त्रेण शूद्रस्तु ज्ञात्वा सम्पूजयेच्छिवम् १३
आदिशैवस्य कर्त्तव्यं आत्मार्थञ्च परार्थकम्
स्थापनं यजनं सर्वञ्चादिशैवार्हको विदुः १४
कृतञ्चेदन्यथा स्यातामभिचाराय चैव हि
यथागोरन्नयवत्सव्यन्नदु ऋत्येव तद्रसम् १५
तस्मात्सर्वप्रयत्नेन आदिशैवेन कारयेत्
कुमारी हिमवन्मद्ध्यं पूतं कृष्णामृगोद्भवम् १६
जातश्चात्रादिशैवश्च आचार्याः परमस्मृताः
अद्ध्यापकञ्चाद्ध्ययनं याजनं यजनन्तथा १७
दानप्रतिग्रहञ्चैव षट्कर्मनिरतस्सदा
जातस्तत्रादिशैवस्तु तथा चार्यवरस्त्रयः १८
शैवसिद्धान्ततत्वज्ञो देवाग्निगुरुभक्तिमान्
सर्वाचारसमायुक्तस्तपस्वी जनवत्सलः १९
सहिजिष्णुर्जितश्रीमान् जितेंद्रियो विगतस्पृहः
हेयोवेदार्थतत्वज्ञस्तत्वार्थे तु व्यवस्थितः २०
धर्मत्रियादिनिपुणो वीतरागोविमत्सरः
परापवादहीनश्च रन्ध्रान्वेषिणहीनकः २१
परतत्वे सदाद्ध्यायी शिवशासनतत्परः
सर्वशास्त्रार्थकुशलस्समयाचारपालकः २२

ग्रहस्थस्सरसो वाग्मी सुशीलः प्रियदर्शनः
शिखी च बद्धकेशो वाश्मश्रु रोमादिवर्जितः २३
अरोगीदीक्षितश्शैव मन्त्रमुद्राक्रियान्वितः
पदवाक्यप्रमाणज्ञः पशुशास्त्रपराङ्मुखः २४
शिवतन्त्रैकचित्तात्मा सर्वप्राणि हितेरतः
वास्तुविद्या कृताभ्यासश्शल्योद्धारविशारदः २५
सर्वावयवसंपूर्णस्सर्वलक्षणलक्षितः
ईदृक् लक्षणसंपन्नस्थापकश्रेष्ठ उच्यते २६
पिंगाक्षोडांभिकः कुब्जो वामनः कुनखी कृशः
व्यसनी निर्दयस्तब्धः चपलः पारदारिकः २७
व्रतच्युतश्शठः क्लीबो दीनोनैपुण्यवर्जितः
सन्यासी तार्किकश्शुद्धः शिवशास्त्रच्युतो वरः २८
पण्यांगनोपजीवी च कृतघ्नो नास्तिकः खलः
गुरुदेवद्विजातीनां निन्दकोदन्तुरो भिषक् २९
खल्वटश्श्यावदन्तश्च कुसुमाक्षी च पातकः
शिपिविष्टोधिकांगश्च नास्तिकश्चातिदीर्घकः ३०
हीनांगः विशुनश्चैव दुश्शीलो दन्तहीनकः
बालो बहुगुणोपेतो वृद्धो विकटदन्तकः ३१
परापवादो व्यसनी बधिरश्चिबुकस्तथा
अतिस्थूलश्च काणश्च धूर्तो वै रक्तकेशकः ३२
गायकोनर्तकश्चैव खञ्जोनग्नो व्रतच्युतः
दुराचारी जडः पंगुः पतितः पापकर्मभुक् ३३
आलस्यो विकटांगश्च रोमशस्त्वतिभोजकः
एभिस्सलक्षणैर्युक्तो गर्हितस्सर्वकर्मसु ३४
आदिशैवकुले जातास्तादृशास्थापकास्मृताः
देशिकारब्धतन्त्रे तु निपुणावीतसंशयाः ३५

स्थापकाश्चानुकूलास्ते त्वभिप्रायविदस्तथा
मूर्त्तिज्ञामूर्त्तिपास्सर्वे सर्वकर्मसुपेशलाः ३६
आचार्यस्साधकश्चैव पुत्रकस्समयस्तथा
दीक्षिताश्च प्रतिष्ठाश्च आचार्यस्यैव योग्यकः ३७
व्याख्याता शिवशास्त्राणामुत्सवे स्नपनेऽपि च
पवित्रारोपणञ्चैव शान्तिके पौष्टिके तथा ३८
अन्येष्वपि च सर्वेषु मन्त्रकर्मसुयोग्यकः
तस्यैव साधकस्यापि दीक्षास्थापनवर्जितः ३९
त्रियासर्वास्त्वयोग्यास्स्युः पुत्रकस्तु विशेषतः
व्याख्यानं वर्जयेत्ताभ्यां समयीनामनन्तरम् ४०
कुर्यादात्मार्त्थमर्चाञ्च शुश्रूषा देशिकादिषु
अन्यकर्मविशेषेण वर्जयेत्तु विचक्षणः ४१
पञ्चानां कौशिकादीनां गुरुस्थापनमुच्यते
कौशिकस्य महच्छत्रं काश्यपस्य उपानहम् ४२
भरद्वाजमुनेश्चैव नाभोद्भवं प्रकीर्तितम्
नातिगीरिकञ्चतुर्त्थस्य चण्डोमं पञ्चमस्य तु ४३
ऋषीणाञ्चैव पञ्चानां गुरुस्थानं प्रकीर्तितम्
शिवगोचराविज्ञेया गुह्यमन्त्रेण संयुताः ४४
शिखागोचरविख्यातो वाममन्त्रेण संयुतः
ज्योतिर्गोचरसंज्ञेयो घोरमन्त्रेण संयुतः ४५
सावित्री गोचरो यस्तु बहुरूपेण संयुतः
व्योमगोचरगो यस्तु चैशमन्त्रेण संयुतः ४६
गोचरस्त्विति विख्यातो वर्गिणश्च ततश्शृणु
कौशिको नन्दको दक्षो विश्वामित्रस्सुनन्दनः ४७
वाल्मीकी च मुनिस्सत्यं पुलस्त्यो विपुलस्तथा
अतिदीर्घश्च वक्रांगो बोधायनस्सनातनः ४८

सनत्कुमारो मेधावी वाल्मीको मद्ध्यमस्तथा
आश्लायनश्चाङ्गिश्च शिवगोचरवर्गिणः ४९
काश्यपोंगिरसस्थूलः कर्दपश्चयवनोदकः
नाटचायनश्च शाण्डिल्यश्शंकुकर्णः पुरान्तनः ५०
शंखस्थूलशिखिश्चैव मुख्यो वै रोमहर्षणः
आपस्तंभा इमे सर्वे शिखा गोचरवर्गिणः ५१
भारद्वाजस्त्रिशंकुश्च मार्क्कण्डेयो शनोरजः
सुमहादेवलोजंखः पिंगळोवरुणस्तथा ५२
विश्वसृड्व्याघ्रपादश्च रोमश्चान्तरवाजसः
कृष्णश्चैव इमे सर्वे ज्योतिर्गोचरवर्गिणः ५३
गौतमोगलपश्चैव मुद्गलोवयवस्तथा
गव्यश्च विजयश्चैव बिन्दुश्चोपन्तवस्तथा ५४
ऋग्यश्चांगो वसिष्ठश्च कात्यायनो बृहस्पतिः
सावित्रिगोचराश्चैव पुनस्ते व्योमगोचराः ५५
भूधरोगौ तमश्चैव श्वेतःकौत्सोविभावसुः
पराशरश्च बिलशश्शंबरो नीललोहितः ५६
पलवश्च इमे सर्वे व्योमगोचरवर्गिणः
कुलेष्वे तेषु सञ्जातास्त्वादिशैवा इति स्मृताः ५७
एतेषां संकरं ज्ञात्वा वैवाह्यंकुरुदेशिक
शैवञ्चतुर्विधं ज्ञेयं शैवं पाशुपतन्तथा ५८
सोमं लागुळमित्येते चतुर्भेदाः प्रकीर्तिताः
एतेषु शैवभेदेषु यदातेनैव देशिकः ५९
तत्तन्मन्त्रेण कर्त्तव्या स्थापनादिक्रियान्विताः
एतेषु दीक्षितेष्वेषु सर्वान्वै स्थापनादिकान् ६०
यः करोत्यन्यतन्त्रेण तन्त्रसंकरमुच्यते
तेन दोषेण तद्वास्तु राजाराष्ट्रञ्च नश्यति ६१

तस्मात्सर्वप्रयत्नेन वर्जयेत्तन्त्रसंकरम्
वामदक्षिणसिद्धान्तस्त्रिविधं शुद्धशैवकम् ६२
मूलावतारतन्त्रादि शास्त्रं यद्वामशैवकम्
तत्भेदानि च सर्वाणि प्रोक्तं द्विजमयापुरा ६३
स्वच्छन्दादीनि शास्त्राणि दक्षिणं शैवमुच्यते
आचार्येण समायुक्तं मया प्रोक्तं पुरा तथा ६४
कामिकादीनि तन्त्राणि सिद्धान्ता इति कीर्तिताः
संकरन्दोषमेतेषां वर्जयेत्तु प्रयत्नतः ६५
कामिकं योगजं चिन्त्यं कारणं त्वजितन्तथा
दीप्तं सूक्ष्मं सहस्त्रञ्च अंशुमान्सुप्रभेदकम् ६६
विजयञ्चैव निश्वासं स्वायंभुवमथानिलम्
वीरञ्च रौरवञ्चैव मकुटं विमलन्तथा ६७
चंद्रज्ञानञ्च बिंबञ्च प्रोद्गीतं लळितन्तथा
सिद्धं सन्तानसर्वोक्तं पारमेश्वरमेव च ६८
किरणं वातुळं त्वेतास्त्वष्टाविंशतिसंहिताः
वातुळान्ताः कामिकाद्याः प्रादुरासन् शिवास्यतः ६९
एतेषामेकभेदत्वान्न दोषन्न तु संकरम्
कश्चिदेषविशेषोऽस्ति तं विशेषं श्रुणु द्विज ७०
प्रारब्धं येन तन्त्रेण तत्तन्त्रेण समापयेत्
नोक्तञ्चेदन्यतन्त्रेण तत्सर्वन्तु समाचरेत् ७१
समापयेद्यागकार्यं यागार्त्थञ्च व्रतञ्चरेत्
संभवे सूतकप्रेते चाशौ चन्नतुसंस्पृशेत् ७२
येनैव वर्तमानायाः त्रियायाः कारणं विना
साचान्येन कृता चेत्तु तत्स्यादाचार्यसंकरः ७३
गुरुणाकरणस्यैव विरोधे सति यत्र तु
सात्रिया तस्य शिष्येण कर्तव्या तेन शास्त्रतः ७४

अन्यधासा कृता चेत्तु कर्तृनाशं न संशयः
ज्ञात्वाचार्यस्य सद्भावं त्रिया करणकौशलम्  ७५
ज्ञात्वा सिद्धान्नवैदूष्यं पाठकर्मबलन्तथा
एवमादीन् परीक्ष्याथ कारकं संग्रहेद्गुरुः  ७६
अज्ञात्वा तस्य वृत्तान्तं गुरुसंग्रहणं कृतम्
तत्कृतं विफलं प्राहुः कर्तृनाशं धनक्षयम्  ७७
अज्ञेनस्थापितं बिंबं पुनः संस्थापयेद्बुधः
स्थापनादावभावे तु राज्ञां मरणमादिशेत्  ७८
अतस्संस्थापनं दक्षैः करणीयं विशेषतः  ७९
इति आचार्यलक्षणपटलषड्विंशतिः

कलान्यासविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण कलान्यासविधिक्रमम्
कूटब्रह्मकलां वक्ष्ये कलाशक्तिसमन्विता  १
कलाः पुमांस इत्युक्तास्तत्कलाशक्तयस्त्रियः
निष्कळाश्चेति विख्याता तत्कलाशक्तयः कलाः  २
ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कला
अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश  ३
अष्टौ सद्यकलाश्चैव मकुटादिक्रमान्नचसेत्
ईशानश्चेश्वरो ब्रह्मा शिवश्चेति सदाशिवः  ४
तत्पुरुषश्च महादेवो रुद्रश्चेति प्रचोदयात्
अघोरश्चाप्यघोरश्च घोरघोरतरस्तथा  ५
सर्वतस्सर्वशर्वश्च रुद्रस्य घोरकस्य तु
वामो ज्येष्ठश्च रुद्रश्च कलाश्चैव कलास्तथा  ६
विकरीणो बलश्चैव विकरेणौ बलस्तथा
बलप्रमथनस्सर्वभूतश्चात्मन एव च  ७

सद्योजातश्च सद्यश्च भवश्च भव एव च
तथानादिभवश्चैव भवस्त्वेति भवोद्भवः ८
कलास्त्वेतास्समाख्याताः कलाशक्तिरथोच्यते
शशिनी चांगदा चेष्टा मरीची ज्वालिनी तथा ९
पञ्चैताश्शक्तयः प्रोक्ताः कलानां पञ्चमस्य तु
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च १०
चतस्त्रश्शक्तयः प्रोक्ताः कलानां पुरुषस्य तु
तमो मेधाक्षया निष्ठाधृः तिक्षान्तिः स्मृतिः क्षितिः ११
अघोरस्य कलानान्तु चाष्टौ वैशक्तयः स्मृताः
रजोरक्षारतिः पाल्या वामासंयमनीक्रिया १२
तृष्णामोहाक्षुधापीताग्रामणीभ्रामणी तथा
वामदेवकलानान्तु शक्तयस्तु त्रयोदश १३
ऋद्धिवृष्टिर्द्युतिर्लक्ष्मीर्मेधाकान्तिर्बुधाः प्रजाः
सद्यमन्त्रकलानान्तु ह्यष्टौ वै शक्तयस्मृताः १४
ईशानस्य कलाः पञ्च न्यसेदीशानमूर्द्धसु
पूर्वे च पश्चिमे याम्ये सौम्ये चैव क्रमेण तु १५
चतुष्टयेषु वक्त्रेषु पुरुषस्य कलान्न्यसेत्
हृदये कण्ठदेशे चाप्यंसयोरुदरेऽपि च १६
नाभौ पृष्ठौ रसश्चैव घोरस्यैव कलान्यसेत्
गुह्ये गुदे च मेढ्रे चाप्यूर्वोर्जान्वोश्च जंघयोः १७
स्फिक् द्वयोश्चैव कटयाश्च वामदेवकलान्न्यसेत्
पादयोरुभयोश्चैव हस्तद्वितलयोरपि १८
बाह्वोरास्ये शिरश्चैव सद्योजातकलां न्यसेत्
उक्तस्थाने कलाश्चैव विन्यसेच्छक्तिसंयुतः १९
गौरी कलास्त्वहं वक्ष्ये गौरी बीजसमुद्भवाः
ताराचेशकला ज्ञेया विद्यावक्त्रकलास्मृताः २०

मृत्युः श्रद्धारजो मेधा स्वधा स्वस्तिश्च वर्मणा
पालिनी ज्वालिनी तृष्णा धृतिः क्षामा मतिः प्रजा २१
चिन्ताभूतिः क्रियाक्षान्तिर्वामदेवकला इमे
शान्तिर्दान्तिर्दयासूतिर्द्युतिस्सिद्धा तु सद्यजा २२
पञ्चविंशत्कला ह्येते गौरीदेहे तु विन्यसेत्
तारञ्च विन्यसेन्मूर्ध्नि वक्त्रे विद्याञ्च विन्नयसेत् २३
हृदये च गळे चांसौ जठरे नाभिदेशके
अघोरस्य कलान्नयस्त्वा योनौ गुह्यप्रदेशके २४
ऊर्वोर्जानुद्वयोश्चैव जंघयोश्च प्रकोष्ठके
उभयोः पार्श्वयोश्चैव वामदेवकलान्नयसेत् २५
पादयोरुभयोश्चैव हस्तयोरुभयोरपि
स्तनयोरुभयोश्चैव सद्योजातकलान्नयसेत् २६
उक्तस्थाने कला चैव विन्नयसेच्छक्तिसंयुतम्
कलावर्णञ्च तत्वञ्च पदमन्त्रञ्च भौवनम् २७
एवं षडध्वमार्गेण मन्त्रेन्यासं समारभेत्
पञ्चब्रह्मकलाब्रह्मपञ्चपूर्वोक्तवन्नयसेत् २८
एवमक्षमतो वापि केवलन्तु कलान्यसेत्
एवं लिंगप्रतिष्ठान्तं न्यासं कुर्वति देशिकः २९
महेशप्रतिमानान्तु ऊर्द्ध्ववक्त्रप्रदेशके
ईशानस्सर्वविद्यानां शशिन्याद्याश्चमूर्ध्निषु ३०
तत्पुरुषाय विद्महे भूते चेति वक्त्रके
समानञ्चैव सर्वेषामघोरादि क्रमेण तु ३१
अघोरस्य कलाश्चैव वामदेवकलास्तथा
सद्योजातकलाश्चैव वामदेवकलास्तथा ३२
सद्योजातकलाश्चैव प्येकविंशत्कलान्यसेत्
एकविंशत्कलाह्येते गौरीदेवीन्तु विन्यसेत् ३३

अन्यासां देवतानाञ्च प्रतिष्ठायां तथाक्षरान्
अक्षराणान्तु विन्यासं प्रवक्ष्यामि प्रजापते ३४
आदौ नादस्समुत्पन्नो नादात् बिन्दुः प्रजायते
बिन्दोश्शक्त्या कृतिर्जाता शक्तेराद्यः स्वरो भवेत् ३५
तस्मात्स्वरद्वये जातास्तेषां भेदास्त्रयोदश
स्वराष्षोडशका जीवा कादयोऽपि च संस्मृताः ३६
प्राणोपाधिविभेदेन पञ्चाशन्मातृका स्मृताः
तैरेव चार्चिता देवास्सर्वशास्त्रे प्रजापते ३७
अकारादिक्षकारान्तं मातृकां विन्यसेत्क्रमात्
शिरोललाटनेत्रेषु कर्णयोस्तु द्विगण्डयोः ३८
नासिकोष्ठद्वयोश्चैव दन्तपंङ्क्तिद्वयोरपि
जिह्वायां तालुमूले च स्वराष्षोडशविन्यसेत् ३९
कवर्गं सव्यहस्ते तु चवर्गं वामहस्तके
टवर्गं दक्षिणे पादे तवर्गं वामपादके ४०
पफौ दक्षिणपार्श्वे तु बभौ वै वामपार्श्वके
कण्ठदेशे मकारन्तु कुक्षौ पृष्ठे तथान्यसेत् ४१
रसत्वग्रक्तमेदोऽस्थिमज्ञाशुक्रधातुषु
यकारादिसकारान्तं क्रमेणैव तु विन्नयसेत् ४२
हकारं हृदिविन्यस्य ळकारं वृषणे तथा
क्षकारं मेढ्रदेशे तु प्रणवेन समन्वितम् ४३
बिन्दुनादसमायुक्तं नमस्कारयुतन्नयसेत् ४४
इति कलान्यासविधिपटलस्सप्तविंशतिः

मुद्रालक्षणपटलप्रारंभः

अथ वक्ष्ये विशेषेण मुद्राणां लक्षणं परम्
मुदं करोति देवानां द्रावयत्यसुरांस्तथा १

मोदनाद्रावणाच्चैव मुद्रेयं संप्रकीर्तिता
लिङ्गमुद्रा नमस्कारा ताळाख्या शंखमुद्रिका २
सुरभी मुकुळी चैव वाराही चैव निष्ठुरा
बीजाख्या पञ्च वक्त्री च द्रव्यमुद्राशिखाख्यका ३
संहारमुद्रिका चैव सादाख्या चैव मुद्रिका
आसनी च महेशाख्या वज्राख्या शक्तिमुद्रिका ४
दण्डमुद्रा तथा खट्गा पाशमुद्रांकुशाख्यका
गदामुद्रा च शूलाख्या पद्ममुद्रा तथैव च ५
चक्रमुद्रा तथा टंका महामुद्रा तथैव च
घण्टामुद्रास्त्रमुद्रा च शरमुद्राधनुस्तथा ६
मुद्राणामुच्यते चैव द्वात्रिंशल्लक्षणं परम्
अंगुष्ठश्चोद्ध्वगम्मुष्टिं कृत्वा वामेन वेष्टयेत् ७
लिंगमुद्रा तु विख्याता प्रच्छन्नेति प्रदर्शयेत्
मणिबन्धौ तु संयोज्य चांगुल्यश्चोद्ध्वगाः क्रमात् ८
सन्निवेश्य हृदिस्थाने नमस्कारेति चोच्यते
हस्ताभ्यान्तडयेत्ताळमुद्रां कुर्यात्तु शोथने ९
तर्जनीमूलपर्वस्थावगुष्ठावञ्जली कृतौ
एषा हि शंखमुद्रा स्यात्स्नानकाले प्रदर्शयेत् १०
मणिबन्धन्ततः कृत्वा चांगुष्ठौ तलमद्ध्यगौ
तर्जनी मद्ध्यमे लग्नौ कनिष्ठाभ्यामनामिके ११
मुद्रे यं सुरभिख्याता द्रव्यशुद्ध्यर्त्थकारिणी
संयोज्यं तेन हस्ते तु चान्तरे सुषिरन्तयोः १२
बिसिनी मुकुळा कारा स्नानान्ते तु प्रदर्शयेत्
कृत्वा करतलेंगुष्ठौ श्लिष्टोद्ध्वाशेषतः क्रमात् १३
कृते च वराहनीख्याता कुर्यादावाहने तथा
मुष्टिं कृत्वा तु हस्तौ च करपृष्ठौ च योजयेत् १४

कनिष्ठौ प्रसृतौ दीर्घौ निष्ठुरौ सन्निरोधने
अंगुष्ठौ प्रक्षिपेन्मद्ध्ये कनिष्ठौ प्रसृतौ युतौ १५
बीजमुद्रे यमाख्याता दर्शयेच्छक्तिकल्पने
द्वौ हस्ततलिकौ योज्य मद्ध्यांगुल्यग्रसंयुतौ १६
तर्जन्न्यानामिकौ योज्या चांगुष्ठाभ्यां कनिष्ठके
इयं पञ्चमुखीख्याता दर्शयेद्वक्त्रकर्मणि १७
कराभ्यामञ्जलिं कृत्वा सवक्त्रो स्यादनामिके
तयोरग्रौ तु संलग्नौ शेषाश्च प्रसृतास्तथा १८
द्रव्यमुद्राभवेदेषा द्रव्याभावे प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा वेणीबन्धन्तु कारयेत् १९
प्रसार्यमद्ध्यमे ज्ञेयौ शिखाख्यस्थापने तथा
वामांगुलयःप्रसृता चांगुष्ठद्वयसंस्थितम् २०
दक्षिणे मुष्टिबन्धस्थमंगुष्ठञ्चोद्ध्र्वसंस्थितम्
तन्मुष्टिमूद्ध्र्वकं कृत्वा सामुद्रासंहृतावरा २१
उत्तानौ तु करौ कृत्वा वेणिबन्धन्तु कारयेत्
तर्जन्यौ च कनिष्ठौ च प्रसृतौ संयुतौ तथा २२
मुद्रासदाशिवाख्याता वाहनान्ते प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा वेणिबन्धं तथा कुरु २३
प्रसार्य मद्ध्यमांगुष्ठौ तर्जन्यांगुष्ठसंयुतौ
निधायांगुष्ठशिरसा तर्जन्यग्रे विशेषतः २४
अनामिकाग्रौ संलग्नौ वक्रेणैव समायुतौ
कनिष्ठौ चोद्धृतौ युक्तौ मद्ध्यमन्तु तथा भवेत् २५
आसनाख्या तथा कुर्यात् सिंहासनं प्रकल्पयेत्
उत्तानौ तु करौ कृत्वा वेणिबन्धन्ततः कुरु २६
प्रसार्य मद्ध्यमांगुष्ठौ कनिष्ठौ च समायुतौ
महेशाख्या तु सामुद्रा प्रतिष्ठान्ते प्रदर्शयेत् २७

उत्तानौ तु करौ कृत्वा कनिष्ठांगुष्ठसंयुतम्
तर्जन्यनामिका मद्ध्यमा प्रसृता च तथा भवेत् २८
सव्योपरिस्थिताया च वज्रमुद्रा प्रकीर्तिता
उत्तानौ तु करौ कृत्वा चांगुष्ठौ तलमद्ध्यगौ २९
शेषाः परस्परं प्रोद्ध्य तर्जनी प्रसृतौ युतौ
शक्तिमुद्रेति विख्याता मुष्टिं कृत्वा तु दक्षिणम् ३०
तर्जनी प्रसृतौ दीर्घौ दण्डेयं परिकीर्तिता
पताकादक्षिणं कृत्वा बाह्योच्छचलनन्तथा ३१
खट्गमुद्रेति विख्याता पूजादौ तु प्रदर्शयेत्
उत्तानौ तु करौ कृत्वा मुष्टिं बद्ध्वा विशेषतः ३२
प्रसार्य चांगुष्ठतर्जन्यावधश्चोद्ध्वं प्रयोजयेत्
उत्तरांगुष्ठतर्जन्न्यामुत्तरांगुष्ठयोगतः ३३
पाशमुद्रा भवेदेषा पाशच्छेदनहेतुका
उत्तानौ तु करौ कृत्वा कुञ्चितावामतर्जनी ३४
प्रसार्य तर्जनी सव्यान्यस्त्वामुष्टियथांकुशा
उत्तानौ तु करौ कृत्वा मद्ध्यमौ प्रसृतौ युतौ ३५
अन्यावक्रास्समायुक्ता गदाख्येयं प्रकीर्तिता
द्विहस्तांगुलयश्चोद्ध्वमद्ध्यतर्जन्यनामिकाः ३६
कनिष्ठांगुष्ठकालग्नौ मुद्रेयं शूलसंज्ञका
उत्तानौ तु करौ कृत्वा वेणिबन्धन्तु कारयेत् ३७
मद्ध्यमे कुंचितांगुष्ठौ शेषाः प्रविरळास्तथा
पद्ममुद्राभवेदेषा तलोपरितलन्न्यसेत् ३८
कनिष्ठांगुष्ठसुव्यक्तौ चक्रमुद्रा प्रकीर्तिता
उत्तानौ तु करौ कृत्वा मणिबन्धन्तु कारयेत् ३९
प्रसार्य मद्ध्यमा युक्तौ तर्जनी कुञ्चितावुभौ
टंकमुद्रा भवेदेषा सर्वशत्रुविनाशिनी ४०

हस्ताभ्यां संस्पृशेद्धीमान् कादिपादान्तकं यथा
एषामुद्रामहामुद्रा करसंस्कारकर्मणि ४१
उत्तानौ तु करौ कृत्वा वेणिबन्धन्तु कारयेत्
प्रसार्य मद्धयमौ द्वौ तु शेषामुष्टिस्तु कुण्डलौ ४२
घण्टामुद्राभवेदेषा भूतपैशाच नाशिनी
उत्तानौ तु करौ कृत्वा हस्तयोस्तत्परस्परम् ४३
अंगुष्ठतर्जनीभ्यान्तु स्फोटनञ्चास्त्रमुद्रिका
उत्तानौ तु करौ कृत्वा सव्यमूद्ध्र्वे तु दक्षिणम् ४४
प्रसार्य मद्धयमौ द्वौ च त्वधश्चोद्ध्र्वं विचक्षणः
शरमुद्रा भवेदेषा सर्वायुधजिता भवेत् ४५
उत्तानौ तु करौ कृत्वा मुष्टिबन्धद्विहस्तयोः
दक्षिणं कर्णमूले वा कर्षयेद्वामहस्तकम् ४६
धनुर्मुद्रा भवेदेषा सर्वशत्रुविनाशिनी ४७
इति मुद्रालक्षणपटल अष्टाविंशतिः

स्नानविधिपटलप्रारंभः

अथ स्नानविधिं वक्ष्ये शौचाचमनपूर्वकम्
हिताय देशिकादीनां शिवस्य यजनाय च १
प्राणिनां नित्यकर्मत्वादावश्यकरणात्पुरा
ब्राह्मे मुहूर्ते चोत्थाय सञ्चिन्त्यगुरुपादुकाम् २
शिवसंस्मरणञ्चैव स्तोत्रं बहुविधं वदेत्
गुरूपदिष्टमार्गेण शिवं सञ्चिन्तयेद्धृदि ३
ब्राह्मे मुहूर्ते यो विप्रश्शयनं भार्यया सह
कुरुते यदि मूढात्मा सवैकर्मबहिष्कृतः ४
ब्राह्मे मुहूर्ते दंपत्यौ शयाते यत्र मन्दिरे
तत्गृहं पापभूयिष्ठं सदेशः प्रेतमेदिनी ५

अतोद्ध्यानं प्रकर्तव्यं निद्रां हित्वा समाहितः
उत्थाय च बहिर्ग्रामात् छौमूर्द्धा च दण्डधृत् ६
वामयज्ञोपवीतिश्चाप्येकाकीवाग्यमस्सुधीः
पूर्वापराह्णयोर्भानोर्मण्डलं दक्षिणं यथा ७
दक्षिणाभिमुखो रात्रौ तृणमादाय भूतले
मूत्री कृत्वा तु तस्योद्ध्र्वे न शीघ्रं विसृजेन्मलम् ८
अनावृत्य शिरोमोहाद्योविप्रो मलमूत्रयोः
उत्सर्गं कुरुते पापी सतुवैब्रह्महा भवेत् ९
गोवासे जलतीरे वा नद्यास्तीरे श्मशानके
कूपे चैव द्रुमच्छायां चत्वरे च समुद्रगे १०
शैत्यवृक्षे च वल्मीके हलाकृष्टस्थलेऽपि वा
देवागारे भूधरे च दृषदादौ च शाड्वले ११
स्त्रीणां गोविप्रलिंगानां सम्म--न्द्र---ः
विण्मूत्रौ च न कर्तव्यौ ग्रहे वा वश्यकक्रियाम् १२
स्नानमाचमनञ्चैव सन्ध्योपासनमेव च
सर्वमन्त्रात्मकत्वाच्च कूपस्नानन्न दोषभाक् १३
तृणलोड्योपलेनाथ मृत्पिण्डेनैव वागुदम्
प्रमृजेद्वामहस्तेन शेफं संगृह्य बुद्धिमान् १४
दक्षिणेन मृदं ग्राह्य संप्रविश्य जलाशयम्
तीरं प्रक्षाळ्य तद्देशे मृदं क्षिप्त्वाथशर्कराम् १५
तृणमूल्यादिकान्त्यक्त्वा जलेनार्द्री कृतान्तुताम्
आमलीफलमात्रेण सव्येनादाय वामके १६
निक्षिप्य वामहस्तेन घर्षयेत्तु पुनःपुनः
जलन्नीत्वा तु सव्येन सप्तापाने करेनव १७
मृदाशोद्ध्य गृहस्थस्य द्विगुणं ब्रह्मचारिणाम्
गृहस्थत्रिगुणं ज्ञेयं यतीनान्तु चतुर्गुणम् १८

यावन्मात्रं मनश्शुद्धिस्तावच्छौचं विधीयते
वामे तराणां यज्ञन्तु कृत्वा चैवोत्तराननम्  १९
दन्तानन्तर्बहिश्शोद्ध्य दन्तकाष्ठैस्तु घर्षयेत्
करञ्जरी च बिल्वात्थं खादिरञ्चार्जुनन्तथा  २०
अपामार्गञ्च  बुत्बूरं वटप्लक्षञ्च केशरम्
अम्रैर्जंबुपलाशैर्वा निंबेन दन्तधावनम्  २१
संगृह्य दन्तकाष्ठन्तु कनिष्ठांगुलिनाहकम्
वस्वंगुलन्तु दैर्घ्यं स्याद्दन्तधावनमाचरेत्  २२
प्राङ्मुखो वाथ पादौ च हस्तौ प्रक्षाळ्य तन्मुखम्
वामपादञ्जले स्थित्वा स्थले दक्षिणपादकम्  २३
जानुमद्ध्यकरोभूत्वा हस्ते गोकर्णवत्कृते
माषमग्नजलं ग्राह्य निर्दोषं त्रिःपिबेत् बुधः  २४
आस्यं द्विःप्रमृजेदस्त्रं सकृत्मृज्यमुखं शनैः
पादावभ्युक्ष्यमूर्द्धानमंगुष्ठानामिकेन तु  २५
चक्षुषिसंस्पृशेद्विद्वान् तर्जन्यंगुष्ठकेन तु
नासिद्वारपुटौ स्पृष्ट्वा कनिष्ठांगुष्ठकेन तु  २६
श्रोत्रौ स्पृष्ट्वा जलोपेतम्मद्ध्यांगुष्ठेन बाहुकौ
नाभिमंगुष्ठकेनैव सर्वांगुल्यग्रपिण्डितम्  २७
हृत्प्रदेशन्तु संस्पृश्य सर्वांगुल्यग्रमूर्द्धनि
ऋग्यजुस्सामवेदानां त्रिःपानं तृप्तिरिष्यते  २८
आस्यद्विमार्जनादत्राप्यथर्वेदेतिहासयोः
सकृन्मार्जनाद्वक्त्रस्य गणेशस्य प्रियं भवेत्  २९
पाच्छिरोभ्युक्षणेनैव ऋषीणान्तु प्रियं भवेत्
नयनस्पर्शनेनैव प्रियं स्यात्सोमसूर्ययोः  ३०
नासिका स्पर्शनेनैवाप्यश्विन्योस्तु प्रियं भवेत्
श्रोत्रसंस्पर्शनेनैव दिशाप्रीतिकरं भवेत्  ३१

इन्द्रविरावनलानाञ्च बाहुनाभिहृदस्पृशात्
मूर्ध्निसंस्पर्शनेनैव शिवप्रीतिकरं भवेत् ३२
ज्ञुधे च कफजाते च सद्यश्चाचमनं कुरु
स्पर्शयित्वा ततश्श्रोत्रमंगुष्ठेनास्यकम्मृजेत् ३३
स्राचम्येवंविधानेन स्नानार्थाय मृदं पुनः
शुद्धिं संग्राह्यतीरे तु त्रिधा कृत्वा तु शोधिताम् ३४
प्राक्पिराडम्मूलमन्त्रेरा याम्यपिराडं हृदा तथा
स्रघोरेरौव मन्त्रेरााप्युत्तरञ्चाभिमन्त्रयेत् ३५
स्रस्त्रेरा प्रज्ञिपेद्दिज्ञु दशस्वपि यथाक्रमम्
याम्यपिराडं समादाय स्वांगमालिप्य मन्त्रवित् ३६
मूर्द्धानं वक्त्रहृदये गुह्यं पादौ तु भागशः
हृदयेनास्त्रमन्त्रेरा सर्वांगानि स्पृशेत्क्रमात् ३७
सौम्यपिराडं ज्ञिपेदप्सु बाहुभ्रमराकान्तरे
स्रवगाह्य जले तत्र मूलमन्त्रमनुस्मृरन् ३८
स्नायाद्राजोपचारैस्तु रजन्यामलकादिभिः
स्वसूत्रोदितमार्गेरा सन्ध्योपस्थानमाचरेत् ३९
जप्त्वा ब्रह्मषडंगानि तीर्त्थं संग्राह्य चात्मनि
जलादुत्तीर्य तद्वस्त्रमात्रं त्यक्त्वा समाहितः ४०
देवानृषीन्पितृंश्चैव वामाघोरकसद्यकैः
कनिष्ठांगुष्ठमूलाभ्यां देवांस्तर्प्योदपुष्पयुक् ४१
कंगुळ्यग्रेरा हस्ताभ्यां मुनीन्तर्प्यकुशैस्तथा
कनिष्ठांगुलिमूलाभ्यां मनुष्याराां तथैव च ४२
यज्ञं कृत्वापसव्यन्तु जलैस्तु तिलमिश्रकैः
दज्ञिरांगुष्ठतर्जन्योर्मूलेनैव पितृनपि ४३
प्रत्येकमेकविंशद्भिस्संख्याभिस्तर्पयेद्गुरुम्
स्राचम्म्यपुनराचम्म्यपुष्पहस्तो विशेत् गृहम् ४४

वारुणं स्नानमाख्यातं भस्मस्नानमथ श्रुणु
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ४५
तत्फलं कोटिगुणितं भस्मस्नानाच्च सिद्ध्यति
श्रीकरञ्च पवित्रञ्च हारमाभरणं तथा ४६
लोकवश्यकरं पुण्यं भस्मस्नानं दिनेदिने
ज्वरापस्मारपैशाचब्रह्मराक्षसनाशकृत् ४७
भुक्तिदम्मुक्तिदं दिव्यं साक्षात्कैवल्यदायकम्
गंगास्नानसहस्रन्तु मन्त्रस्नानं सदक्षिणम् ४८
विभूतेरणुमात्रेण सर्वस्नानफलं भवेत्
निष्कद्वयन्तथानिष्कं निष्कार्द्धकमथापि वा ४९
भस्मस्नानार्थमुद्दिष्टं पापनिर्हरणक्षमम्
भस्मदेवाकृतिं वक्ष्ये विशेषेण महेश्वरम् ५०
त्रिणेत्रं त्रिशिरं रौद्रं त्रिहस्तं गुणवक्त्रकम्
त्रिपादं वह्निनयनं भस्मकुण्ठतविग्रहम् ५१
ताण्डवाडंबरं भीमं रक्तपुष्पोपशोभितम्
रक्षामन्त्रेश्वरं देवं ध्यात्वाशान्तिं लभेन्नरः ५२
कपिलागोमयं ग्राह्यमथवासितगोमयम्
भूमौ वा पतितं तेन पिण्डम्मूलेन कारयेत् ५३
संशोद्ध्य सद्यमन्त्रेण वामदेवेन पाचयेत्
अघोरेणैव मन्त्रेणाप्यग्निहोत्रेऽथवा पुनः ५४
मृत्पात्रे लाबुपात्रे वा नीत्वा तु बहुरूपिणा
प्रक्षाळ्यपाणिपादौ चाप्याचम्य पुनराचरेत् ५५
सकृत् जप्त्वा तु मन्त्राणि भस्मोद्धूळनकं कुरु
उद्धूळने त्वशक्तश्चेत्त्रिपुंड्रं सर्वसन्धिषु ५६
त्रिपुंड्रं भस्मना कृत्वा सार्द्रेण धवळेन च
यथा गंगाजलं शुद्धं तथा भस्मापि पावनम् ५७

भासयत्यखिलं ज्ञानं नित्यं भासयते च यत्
भक्षणात्सर्वपापघ्नं भस्मेति परिगीयते ५८
भस्मस्नानविहीनस्तु शिवपूजान्न कारयेत्
भस्मस्नानं पुरा कृत्वा शिवपूजां समाचरेत् ५९
विप्राणां क्षत्रियाणाञ्च मूलादिचरणान्तकम्
विशान्तु शूद्रजातीनां नाभ्यन्तं परिकीर्तितम् ६०
अन्येषां सर्वजातीनां भस्मस्नानं विनाचरेत्
उद्धूळने त्वशक्तश्चेत्त्रिपुंड्रादीनि धारयेत् ६१
षडंगुलप्रमाणेन ब्रांहणानां त्रिपुंड्रकम्
नृपाणां चतुरंगुल्यं वैश्यानान्तु त्रयंगुलम् ६२
शूद्राणां द्विरंगुलं प्रोक्तं स्त्रीणामेकाङ्गुलं भवेत्
अनुलोमादिसर्वेषां त्रिपुंड्रं पितृवत् ६३
त्रिपुंड्रञ्चैव विप्राणां वर्तुळं नृपवैश्ययोः
अर्द्धचंद्रन्तु शूद्राणामन्येषामूर्ध्वपुंड्रकम् ६४
भस्मवामकरे स्थाप्य दक्षिणेनाभिमन्त्रयेत्
मद्ध्यांगुलिजलैर्युक्तमपरे जलवर्जितम् ६५
त्रिपुंड्रं विधिनाधार्यं सर्वदोषनिकृन्तनम्
ब्रह्माविष्णुर्महेशश्च रेखात्रयमिति स्मृताः ६६
अधोब्रह्मा ततो विष्णुस्कन्धोर्ध्वे तु महेश्वरः
द्वात्रिंशत् सन्धिदेशेषु ह्यथवा षोडशेष्वपि ६७
अष्टसन्धिषु वा मंत्री त्रिपुंड्रं विधिना कुरु
मूर्द्धाललाटकर्णौ च चक्षुषीघ्राणकस्तथा ६८
आस्यंग्रीवा तथाप्यंसौ बाहुकूर्परके तथा
मणिबन्धौ च हृन्नाभि मेढ्रं पायुस्तथैव च ६९
ऊरू च जानुकौ चैव जंघे स्फिजौ तथैव च
पादद्वयं तथैव स्युः द्वात्रिंशत्सन्धयः क्रमात् ७०

प्रियं वै चाष्टमूर्तीनां विद्येशानां भवादिनाम्
दिक्पालानां वसूनाञ्च मूर्द्धादिपरिकल्पयेत् ७१
ग्रीवाललाटमंसौ च बाहू च कूर्परे तथा
हृदयं जठरञ्चैव पार्श्वे च मणिबन्धकौ ७२
नाभिपृष्ठञ्च विज्ञेयास्सन्धयः षोडशक्रमात्
शिरोललाटकर्णञ्च बाहू च हृदयन्तथा ७३
नाभिः पृष्ठमिति ज्ञेयास्त्वष्टौ वै सन्धयः क्रमात्
शिरोललाटहृन्नाभि पादानि पञ्चसन्धयः ७४
शिरईशानमन्त्रेण पुरुषेण मुखन्तथा
हृत्प्रदेशमघोरेण गुह्यं वै वाममन्त्रतः ७५
सद्यो जातं न्यसेत्पादे सर्वांगं प्रणवेन तु
शिवादिपञ्चमूर्तीनां वामादीनां तथैव च ७६
अश्विन्योस्तु प्रियं ज्ञेयं मूर्द्धादिपरिकल्पयेत्
क्रमेण ब्रांहणानाञ्च देवतानां प्रियं भवेत् ७७
पञ्चांगुलेन मूर्ध्नि स्यात्प्रासादेन तु मन्त्रतः
ललाटे तु त्रयंगुल्यं शिरोमन्त्रेण देशिकः ७८
सद्येन दक्षकर्णौ तु वामदेवेन वामतः
अघोरेण तु कर्णौ च मद्ध्यांगुल्येन संस्पृशेत् ७९
हृदये हृदयेनैवाप्यंगुल्यैस्त्रिभिरेव च
विन्यस्य दक्षिणे बाहौ शिखामंत्रेण देशिकः ८०
वामबाहौ न्यसेद्धीमान् कवचेन त्रयंगुलम्
संस्पृश्य नाभावीशेन कारयेत्तु विचक्षणः ८१
शिरस्थाने स्वयं ब्रह्मा ललाटेस्कन्द एव च
कर्णे भुजंग एवोक्तं बाहुयुग्मे च केशवम् ८२
हृदये चैश्वरः प्रोक्तो नाभौ चैव प्रजापतिः
जानुनोरश्वनीदेवौ पादाभ्यां पन्नगस्तथा ८३

भस्मालेपनमात्रेण स्वस्था मद्भ्या भवन्ति हि
भस्मस्नानं जलस्नानात्पुण्यं कोटिगुणाधिकम् ८४
निक्षिपेन्मूलमन्त्रेण सर्वज्ञानार्हको भवेत्
भस्मस्नानं समाख्यातम्माहेंद्रस्नानमुच्यते ८५
आदित्यरश्मिसंबन्धं वृष्टीनां यत्र संभवेत्
पदसप्तोत्तरे गम्य मूलमन्त्रमनुस्मरन् ८६
वर्तमानेर्करश्मिश्च वृष्टौ सततमिष्यते
प्राङ्मुखश्चोद्धर्वबाहुश्च वामे सव्येतरे स्थिता ८७
वामपादाग्रविन्यस्य सव्यपादैकमूलके
मूलमन्त्रं जपित्वाथ यावद्वै पदसप्तकम् ८८
आदित्याभिमुखःपश्चात्तन्नमस्कृत्य बुद्धिमान्
एवं कृते महापापान्मुच्यते नात्र संशयः ८९
स्नानम्माहेंद्रमित्युक्तं मारुतं त्वधुना श्रुणु
पूर्वाह्ने वा पराह्ने वा रजसागोद्धृते न तु ९०
अभिषिक्तस्तदा मंत्री मूलमन्त्रमनुस्मरन्
मारुतस्नानमित्युक्तं मंत्रस्नानं ततः श्रुणु ९१
मंत्रस्नानन्तदेतेषां सर्वपापनिकृन्तनम्
मारुतस्नानमन्त्रे तु प्रक्षाळ्यजानुपादयोः ९२
प्रक्षाळ्यपादावाचाम्य पात्रे क्षिप्त्वा जलन्तथा
व्योमव्यापि पदैश्चैव षडंगैर्ब्रह्मपञ्चकैः ९३
मूलेनैव तु तत्तोयमभिमंत्र्य सकृत्सकृत्
संस्पृशेत्तेन तोयेन मूलमंत्रेण वर्मणा ९४
मूर्द्धादिपादपर्यन्तं त्रिधा संस्पर्शयेत्ततः
मंत्रस्नानं समाख्यातं सर्वपापक्षयो भवेत् ९५
सर्वव्याधिविनिर्मुक्तिस्सर्वसिद्धिकरं परम्
वारुणं भस्ममाहेंद्रम्मारुतम्मंत्रसंज्ञकम् ९६

एवं पञ्चविधं स्नानं सर्वकार्येषु पूजितम्  ९७
इति स्नानविधिपटल एकोनत्रिंशतिः

नित्यार्चनविधिपटलप्रारंभः

वक्ष्ये नित्यार्चनं पुण्यं शुभदं पापनाशनम्
महापातकदोषघ्नं सर्वयज्ञफलप्रदम्  १
आत्मार्थञ्च परार्थञ्च पूजा द्विविधमुच्यते
दत्ते च गुरुणा लिंगे स्थण्डिले स्वयमात्मनि  २
क्षणिके मण्डले तोयेऽप्यात्मार्थयजनं स्मृतम्
मण्डले तु शतं पुण्यं स्थण्डिले तु सहस्रकम्  ३
अयुतं कौतुके लिंगे कोटिकोटिगुणं भवेत्
शैलजं रत्नजञ्चैव लोहजन्दारुजन्तथा  ४
मृण्मयं क्षणिकञ्चैव षड्विधं लिंगमुच्यते
सिकतन्तण्डुलञ्चान्नन्नदीमृत्गोमयन्तथा  ५
नवनीतञ्चरुद्राक्षं भस्मचन्दनकूर्चकम्
पुष्पमालागुळञ्चैव क्षणिकं द्वादशं भवेत्  ६
मानसान्मण्डलं श्रेष्ठम्मण्डलात्क्षणिकं परम्
क्षणिकात्फलमुत्कृष्टं पटञ्चैव ततः परम्  ७
पटादाभासमुत्कृष्टमाभासात् बिंबमुच्यते
बिंबाद्वै लिंगमुत्कृष्टं लिंगाद्वै निष्कळं परम्  ८
सर्वयज्ञतपोदानतीर्थदेशेषु यत्फलम्
तत्फलं कोटिगुणितं शिवलिंगार्चनात्फलम्  ९
सर्वेषां रक्षणार्थाय ग्रामादिषु विशेषतः
स्थापितं विधिना लिंगं सुरैर्वा मुनिभिर्नरैः  १०
स्वयमुद्भूतलिंगञ्च प्रतिमाञ्चेश्वरात्मकम्
तत्परार्थं समाख्यातं सर्वेषामात्मनः फलम्  ११

सर्वेषामात्मरक्षार्थमिष्टलिंगार्चनं गृहे
आत्मार्थमिति विख्यातं परार्थञ्च ततश्शृणु १२
स्वयंभूर्दैविकञ्चैव दिव्यमानुषमार्षकम्
राक्षसं बाणलिंगञ्च सप्तैते लिंगमुच्यते १३
स्वयंभूः स्वयमुत्पन्नं देव्यर्चनन्तु दैविकम्
दिव्यं देवार्चनञ्चैव ऋषिपूजितमार्षकम् १४
मानुषैः स्थापितं लिंगं मानुषं परिकीर्तितम्
असुरैः राक्षसैः पूज्यमासुरं राक्षसं भवेत् १५
बाणनामजलं प्रोक्तं तज्जातं बाणलिंगकम्
बाणेन पूजितं लिंगं बाणलिंगमिहोच्यते १६
विप्रक्षत्रियविट्शूद्रादीक्षिताश्च प्रवेशताः
आत्मार्थयजनं कुर्यात् न कुर्याच्छपरार्थकम् १७
आत्मार्थञ्च परार्थञ्च स्वादिशैवेन पूजितम्
आदिशैव इति प्राक्तस्सशिवब्राह्मणो गुरुः १८
शिवोद्भवन्तु शैवं स्याच्छैवोद्भवस्सदाशिवः
सदाशिवात्तु संभूता शिवसृष्टिरुदाहृता १९
शिवेनस्थापितं शैवं शैवेन स्थापितं शिवम्
शिवशैवविशुद्धात्मा शिवब्राह्मण इष्यते २०
चतुर्वेदाधिकारित्वाच्छवसिद्धान्तपारगः
चातुर्वर्णाधिकारत्वादादिशैव इति स्मृतः २१
आदिशैवश्शिवो रुद्रो शुद्धात्मा शुद्धशैवकः
तस्माच्छैवः प्रकर्तव्यं प्रतिष्ठामुत्सवान्तकम् २२
उत्सवादिप्रायश्चित्तमादिशैवेन कारयेत्
आगमोक्तप्रकारेण प्रतिष्ठालिंगपूजनम् २३
आदिशैवस्य पूजा च सर्वसिद्धिकरी स्मृता
अन्यविप्रस्पृशेनैव सर्वैर्देवलको भवेत् २४

यदि मोहेन कुर्वीत राज्ञो राष्ट्रस्य दुस्थितिः
कोपी मलिनधारी तु शिवं स्पृशति यो द्विजः  २५
स एकविंशति कुलं सोद्धयन्नरकं व्रजेत्
कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः  २६
अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः
तेषां वंशेषुसञ्जाताश्शिवब्राह्मणनामकाः  २७
विन्ध्याद्रेर्दक्षिणे देशे शैवोत्पत्तिः प्रकीर्तिता
कौशिकाद्याश्च ऋषयो प्यादिशैवाः प्रकीर्तिताः  २८
शुद्धैश्शिवद्विजैर्मुख्यैस्सदाचारसमन्वितैः
क्षुद्रभद्रसमायुक्तैर्वेदवेदांगपारगैः  २९
एतैरधिष्ठितं विन्ध्यगिरेर्दक्षिणभूमिका
शैवन्तु द्विविधं ज्ञेयं कलाकलविभेदतः  ३०
कलं वै शिवगर्भं स्यादकलं ऋषिगर्भकम्
प्रतिष्ठास्थापनन्नित्यपूजनं प्रोक्षणन्तथा  ३१
उत्सवादीनिसर्वाणि काम्यकर्माणि यानि च
तानि सर्वाणि कार्याणि कलेन तु विशेषतः  ३२
शास्त्रार्चनं क्षुद्रबिंबपूजनञ्चान्यपूजनम्
स्वेष्टलिंगार्चनं ग्रामदेवताराधनन्तथा  ३३
अकलेन प्रकर्तव्यं शैवतन्त्रानुसारिणा
नित्यन्नैमित्तिकं काम्यं वर्जनीयं परार्त्थके  ३४
कर्षणादिप्रतिष्ठान्तमादिशैवेन कारयेत्
------------------------  ३५
सदाशिवाख्यस्य शिवस्य वक्त्रे ये दीक्षिताः कौशिककाश्यपाद्याः
तेषाम्मुनीनां विधिवत्क्रमेण जाताश्शिवब्राह्मणनामधेयाः  ३६
अनादिशैवस्सशिवस्त्वादिशैवश्शिवद्विजः
महाशैवन्तु विप्राणामनुशैवन्तु भूभुजाम्  ३७

अवान्तरन्तु शूद्राणां पञ्चशैवोद्भवं क्रमात्
सर्वेषां भस्मधारीणां शैवं सर्वसमुच्चयम्  ३८
आदौ येन शिवेनैव नियुक्तोऽपि शिवाद्ध्वरे
आदावनादिशैवेन दीक्षितस्त्वादिशैवकः  ३९
शिवमुत्पद्यशैवं हि शैवेनोत्पद्यते शिवः
शिवशैवैक्यरूपत्वाच्छिवब्राह्मण उच्यते  ४०
इति नित्यं षडाधारन्ततः पूज्योदिवाकरः
विनासूर्यार्चनं कर्म ततो निष्फलतां व्रजेत्  ४१
सौवर्णेन कृतं लिंगं भुक्तिमुक्तिप्रदं भवेत्
ताम्रजंपुत्रदं प्रोक्तं रंजताश्रीकरं भवेत्  ४२
सुखदं कांसमित्युक्तं पैत्तळं रोगनाशनम्
आयसं पुत्रनाशन्तु त्रिलोहम्मरणं भवेत्  ४३
तस्माद्वै सर्वजातीनां बाणमेवोत्तमोत्तमम्
क्षुद्रं भद्रं द्विधा प्रोक्तं क्षुद्रमात्मार्द्धपूजनम्  ४४
भद्रं परार्थमित्युक्तं ग्रामादौ स्थापनं हितम्
आत्मशुद्धिस्तु पूर्वं स्यात्स्थानशुद्धिर्द्वितीयकम्  ४५
तृतीयं द्रव्यशुद्धिस्स्यात् चतुर्थं लिंगशोधनम्
पञ्चमं मन्त्रशुद्धिस्स्यादित्येताः पञ्चशुद्धयः  ४६
विधिना स्नानकं कृत्वा देहशुद्धिरतः परम्
पादप्रक्षाळनं कृत्वा समाचम्यविधानतः  ४७
द्वाराग्रमंटपं गत्वा पूजकस्तु सुखासनः
शास्त्रोक्तदहनं भस्मदेशिको धारयेत्क्रमात्  ४८
अद्धूळने त्वशक्तश्चेत्त्रिपुंड्रं सर्वसन्धिषु
द्वात्रिंशत्सन्थिदेशेवाप्यथवा षोडशेष्वपि  ४९
अष्टसंधिषु वापञ्च स्थाने धार्यं त्रिपुंड्रकम्
संध्यग्रे च निशीथे च शय्यापूर्वा वसानयोः  ५०

हुत्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिभिः
स्त्रीपुन्नपुंसकं शूद्रं बिडालं बकमूषिकम्  ५१
स्पृष्ट्वा यथा विधावन्ते चाग्नेयस्नानमाचरेत्
देवाग्निगुरुविद्यानां समीपे यदि दर्शने  ५२
अशुद्धभूतले मार्गे कुर्यान्नोद्धूळनं व्रती
भस्मवामकरे स्थाप्य दक्षिणेनाभिमन्त्रयेत्  ५३
मद्ध्यांगुल्याजलैर्युक्तमपरैर्जलवर्जितम्
हस्तौ संशोद्ध्य चास्त्रेण सर्वांगं धारयेत्क्रमात्  ५४
मूर्ध्नि चैव ललाटे च हृदये गुह्यपादयोः
कर्णे चांसद्वये बाहौ कूर्परे मणिबन्धके  ५५
पृष्ठे च पार्श्वयोश्चैव सर्वांगं धारयेत्क्रमात्
पञ्चांगुलेन मूर्ध्नि स्यात् प्रासादेन तु मन्त्रितः  ५६
ललाटे च त्रयंगुल्यात्वीशतत्पुरुषेण तु
वक्षस्य घोरमन्त्रेण वाममंत्रेण गुह्यके  ५७
सद्योजातेन पादाभ्यां हृदये हृदयं भवेत्
शिरोमंत्रेण कण्ठे च शिखामन्त्रेण हस्तयोः  ५८
कूर्परे कवचेनैव मणिबन्धे च नेत्रतः
सर्वांगमस्त्रमंत्रेण धृत्वा संप्रोक्षयेत्ततः  ५९
ब्रह्माविष्णुर्महेशश्च त्रयोरेखा इति स्मृताः
अधो ब्रह्मा ततो विष्णुस्तदूर्ध्वे तु महेश्वरः  ६०
त्रिपुंड्र द्वयरंध्रेषु मद्ध्ये च्छिद्रं प्रयत्नतः
षण्मुखश्च गणेशश्च द्विरेखा त्वधिदेवताः  ६१
ललाटे हृदिबाह्वोश्च दैर्घ्यकन्तु षडंगुलम्
शेषमेकांगुलं प्रोक्तं त्रिपुंड्रं धारयेत्क्रमात्  ६२
ऊर्ध्वपुंड्रमनायुष्यं दीर्घपुंड्रं तपः क्षयम्
नेत्रयुग्मान्तमानेन धारयेत् भसितं क्रमात्  ६३

द्विकालं जलसम्मिश्रं त्रिपुंड्रं धारयेत् द्विजः
विधूयसर्वपापानि सर्वकर्मार्हको भवेत् ६४
द्विकालमेककालं वा भसितं जलमिश्रकम्
त्रिपुंड्रधारणं कुर्यात्सर्वपापच्युतो भवेत् ६५
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
पद्मञ्च स्वस्तिकञ्चैव गोमुखं विशदन्तथा ६६
सूचितञ्चैकपादन्तु कुक्कुटं वीरमेव च
भद्रासनं तथाज्ञेयं कूर्मं विमलमेव च ६७
दण्डपिण्डञ्च गोकर्णं सिंहासनमतः परम्
वृत्तञ्च घटिकञ्चैव गजास्य गजकर्णिकम् ६८
आसनं विंशतिः प्रोक्तं श्रेष्ठं स्थिरसुखासनम्
ऊरुजानुद्वयञ्चैव पादाग्रञ्चैव संपुटम् ६९
ईषन्नासाग्रदृष्टिस्तु देहदीर्घन्तु तम्मृजुः
रुचिरासनमाख्यातं सर्वकार्येषु पूजितम् ७०
गोमुखं स्वस्तिकञ्चैव पद्मञ्चैवार्द्धचंद्रकम्
वीरं योगासनञ्चैव षड्विधञ्चासनोत्तमम् ७१
वामजानूपरिन्यस्त्वा दक्षिणञ्जानुमण्डलम्
द्वयोः पादतले चैव विन्यसेत्पार्श्वपृष्ठयोः ७२
एवं कृत्वा तु सुस्निग्धं गोमुखं विशदं स्मृतम्
ऊरुपार्श्वतले न्यस्त्वा जंघामग्रन्तु स्वस्तिकम् ७३
ऊरुपार्श्वतले न्यस्त्वा पद्मासनमिहोच्यते
ऊरुपरितले न्यस्त्वा द्वयोः पादतलेषु च ७४
गुल्फद्वयसमं कृत्वा तलौ जंघेन विन्यसेत्
अर्द्धचंद्रं समाख्यातं वीरासनमथ श्रुणु ७५
लंबितन्दक्षिणं पादं वामन्दक्षिणतोपरि
ततो वीरासनं प्रोक्तं योगासनमथ श्रुणु ७६

शरीरं जानुसंबन्धं योगपट्टिकयावृतम्
कूर्परौ चैव विन्यस्तौ योगासनमिहोच्यते ७७
दशदिग्ध्वास्त्रमंत्रेण दिशिरेचनमारभेत्
कूर्मन्दर्भन्तथाचर्मकंबळं पीठमेव च ७८
आविकं त्वक्जसूत्रोत्थं रुचिरञ्चासनन्तथा
सर्वकर्मार्हकं प्रोक्तं पवित्रमिदमासनम् ७९
प्राणायामत्रयं कृत्वा प्रत्येकन्दशमात्रकम्
अपाने जिह्वति प्राणं प्राणात्प्राणमयन्ततः ८०
प्राणापानसमायोगात्प्राणायामेति चोच्यते
रेचकं पूरकञ्चैव कुंभकन्तु तृतीयकम् ८१
रेचनात् रेचकं प्रोक्तं पूरणात्पूरकन्तथा
कुंभकन्तु निरोधेन प्रणवेन न्यसेत्त्रयम् ८२
रेचकं ब्रह्मदैवत्यं पूरकं विष्णुदैवतम्
कुंभकं रुद्रदैवत्यमधिदेवाः प्रकीर्तिताः ८३
अकारश्च उकारश्च मकारो बिन्दुरेव च
संयोगं बिन्दुनादाभ्यां प्राणायाममिदं विदुः ८४
उकारं सोमरूपन्तु पूरकादित्यसंख्यया
मकारस्यार्करूपन्तु कलासंज्ञस्य कुंभकम् ८५
अकारस्याग्निरूपन्तु वायुसंख्यस्य रेचकम्
प्रथमं वामनास्येन द्वितीयं सव्यनासिका ८६
पुनस्तृतीयं वामेन प्राणायामकृतन्तथा
औदरं वायुमंगुल्या नासिकां पीड्यरेचयेत् ८७
दृतिवत्पूरयेत्सम्यक् जठरे बाह्यवायुना
पूरकन्तु समाख्यातं पश्चात्कुंभकमुच्यते ८८
अन्तर्बहिस्थितं वायुन्नगृह्णातिनमुञ्चति
पूर्णकुंभसमं यस्मात्तस्मात्कुंभकमुच्यते ८९

प्राणायामात्परं पुरायन्न भूतन्न भविविष्यति
रेचकादित्रयं प्रोक्तं सर्वदोषनिकृन्तनम् ९०
गुरुप्रसादात्संलभ्यमन्यधानोपलभ्यते
पूरकं कर्मविच्छेदं कुंभकञ्चात्मबन्धनम् ९१
रेचकं कर्मनाशं स्यात्प्राणायामकृतन्तथा
अनामिकाकनिष्ठे द्वे प्यंगुष्ठञ्च तृतीयकम् ९२
नासापुटन्ततो बद्ध्वा प्राणायामस्य लक्षणम्
गंगा च दक्षिणे कर्णे नासिकाग्रे हुताशनम् ९३
उभयोः स्पृर्शनादेव सर्वपापैः प्रमुच्यते
पादादिजानुपर्यन्तं पृथिवी स्थानमुच्यते ९४
अंभस्थानन्तु नाभ्यन्तं वह्निस्थानं गळान्तकम्
वायुस्थानं ललाटान्तन्तदूर्द्ध्वे द्वादशांगुलम् ९५
आकाशस्थानमित्युक्तं मूर्द्धादिस्थानमुच्यते
तालमात्रं ललाटोर्द्ध्वे वितस्ति द्वादशांगुलम् ९६
शिवस्थानमिदं गुह्यं प्रमाणं गदितं मया
तालमात्रादधस्तात्तु भ्रूमद्ध्ये ज्योतिरूपकम् ९७
विशुद्धं व्योमनिलयं बिन्दुस्थानमुदाहृतम्
बिन्दुस्थानं समाख्यातमूर्वादिस्थानपञ्चकम् ९८
चतुरश्रार्द्धचंद्रञ्च त्रिकोणञ्च षडश्रकम्
सुवृत्तञ्च पृथिव्यादिमण्डलाकृतयः क्रमात् ९९
सुखदुःखस्य चरितं विसर्जनञ्च मैथुनम्
अन्येषु भूतवर्गस्स्यात् भूतात्मागुणतावहम् १००
इत्थमात्मन इत्युकं पूजाकालेषु दुर्लभम्
अकारमात्मासंप्रोक्तमन्तरात्मात्विकारकम् १०१
ओंकारं परमात्मा तु तत्वात्मा वै ह्युकारकम्
एकारं सर्वभूतात्मा तेषां वर्णं प्रकीर्तितम् १०२

भूतात्मा योजयेद्विद्वानन्तरात्मा दहेत्पुनः
तत्वा त्मात्वमृतं पूर्यशुद्धात्माप्यानयेत्पुनः १०३
शिखाग्रे व्योमगे शुद्धे शिवतत्वे नियोजयेत्
कृत्वा कायन्दहेत्पश्चात्यान्तेनैव त्रिकोणके १०४
पादांगुष्ठात्समारभ्य दहेद्यावच्छिरोन्तकम्
ज्वालामालासमाक्रान्तं शरीरन्दग्धरज्जुवत् १०५
प्रक्रियान्तस्थममृतं स्रवन्तञ्चिन्तयेत्सदा
प्रणवं श्वेतकमलं योगपीठमथो मुखम् १०६
चिन्तयेदमृतन्तस्मिन्सुषुम्नाभिन्नमस्तकम्
आपूर्यान्तस्ततो द्ध्यायेदात्मानममृतेन च १०७
आत्मानमानयेद्धीमानेषा शिवतनुः क्रमात्
शिखाग्रेद्वादशांगुल्य वीणादण्डस्य पार्श्वयोः १०८
सुषुम्ना मद्ध्यगः प्राणमद्ध्येषु सुषिरन्तथा
जीवप्राणसमायुक्तं तेषु मद्ध्येषु सञ्चरेत् १०९
सञ्चारे त्रिषु तत्काले आधारेषु च संस्थिताः
आधेयवान्प्रयुक्तञ्च समाधिक्लेशमाश्रितम् ११०
इडा च पिंगळा चैव वीणादण्डस्य पार्श्वयोः
मूलाधारे स्मरेदग्निं चंद्रसूर्यसमन्वितम् १११
कुण्डल्यन्तु विधातारन्नाभौ विष्णुरुदाहृतम्
हृदये केवलं रुद्रं कण्ठमूले महेश्वरम् ११२
जिह्वामूले च नादाख्यन्नासाग्रे बिन्दुरेव च
नादाख्यन्तु भ्रुवोर्मद्ध्ये ललाटे शक्तिसंज्ञिकम् ११३
ब्रह्मरन्ध्रे शिवं विद्यादूर्द्ध्वे नृत्तं विचिन्तयेत्
द्वादशान्तात्परो यस्मादतिसूक्ष्मस्थितो विदुः ११४
आनन्दनृत्तकस्साक्षात् देवदेवो जगद्गुरुः
शुक्लशोणितयोर्मद्ध्ये बिन्दुरूपं परात्परम् ११५

तस्य मद्ध्ये गतं प्राणो बिन्दुनादात्मकं शिवम्
एवं कृत्वा विधानेनाप्यथवान्यक्रमं श्रुणु ११६
गुदस्य पृष्ठभागे तु तदूद्ध्वे तु द्वयांगुलम्
वीणादण्डस्य संबन्धात्कदंबदळपद्मकम् ११७
मूलाधारे स्मरेच्चैव चंद्रसूर्यसमन्वितम्
तस्य मद्ध्ये तु संबन्धाच्छिवाग्निं परमाणुकम् ११८
रूपमद्ध्ये स्थितो वायुर्वायुमद्ध्ये स्थितं मनः
मनो मद्ध्ये स्थितो नादं नादमद्ध्यस्थितोद्ध्वनिः ११९
ध्वनिमद्ध्ये स्थितो नादो नादमद्ध्ये स्थितश्शिवः
शिवमद्ध्ये गतं शान्तं शान्यतीतात्परात्परम् १२०
परात्परपरन्देवमित्येते शिवभावना
प्रथमन्तु करन्यासमंगन्यासमतः परम् १२१
शोधयेदस्त्रमंत्रेण तलिकौ हस्तपृष्ठकौ
अस्त्रेण हुंफडन्तेन द्विर्वामं शोधयेत्करम् १२२
तेन मंत्रेण सव्यन्तु ऊद्ध्वाधश्शोधयेत्त्रिधा
गन्धलिप्तकरौ कृत्वा शिवहस्तप्रकल्पनम् १२३
वामहस्ते जलं स्थाप्य वह्निहस्तन्तु दक्षिणम्
अग्निर्मलस्थशोधेन करन्यासं समाचरेत् १२४
अंगुल्यष्टदळंबद्मंगुष्ठद्वयकर्णिकम्
द्ध्यायेत्तत्रासनम्मूर्त्तिं शंभुन्तद्व्यापकन्नयसेत् १२५
अंगुष्ठादिकनिष्ठान्तं सृष्टिन्यासमुदाहृतम्
कनिष्ठाद्यंगुष्ठकान्तं यत्संहारन्नयासमुच्यते १२६
ईशादिसद्यमंत्रान्तं सृष्टिन्यासमुदाहृतम्
सद्यादीशानपर्यन्तं संहारन्यासमुच्यते १२७
दक्षिणांगुष्ठमादि स्यात्कनिष्ठादीतरे ततः
दशबीजन्नयसेद्धीमान्स्थितिन्यासमतः परम् १२८

तर्ज्जन्यान्तन्तु मद्ध्यादि क्रमादंगानि विन्यसेत्
न्यसेद्धस्ततले नेत्रे तर्जन्यास्त्रन्नयसेत्क्रमात्  १२९
शिवांगान्येवमेवं स्याच्छिवं पर्वणिपर्वणि
गृहस्थस्सृष्टिमार्गेण करन्यसन्तु कारयेत्  १३०
वानप्रस्थयतीनान्तु संहारक्रममेव हि
अपत्नीकवनस्थानां संहारन्यासमुच्यते  १३१
नैष्ठिके तु स्थितिन्यासं सर्वकार्येषु पूजितम्
करन्यासं समाख्यातमंगन्यासं ततश्शृणु  १३२
मूर्द्धादिसृष्टिरत्रोक्तं पादादिस्संहृतिर्भवेत्
स्वमूर्ध्निविन्यसेदीशं वक्त्रेवक्त्रन्तु विन्यसेत्  १३३
न्यस्त्वाघोरं हृदिस्थाने वामंगुह्ये तु विन्यसेत्
सद्यमंत्रौ न्यसेत्पादे ततस्त्वंगानि विन्यसेत्  १३४
हृदयं हृदयेन्यस्य शिरश्शिरसि विन्यसेत्
शिखायान्तु शिखान्नयस्य कवचं स्तनमद्ध्यतः  १३५
लोचने तु न्यसेन्नेत्रमस्त्रं अस्त्रप्रदेशके
अष्टत्रिंशत्कलान्यासं विधिनाकारयेत्ततः  १३६
उत्सृज्य प्राकृतं भावं शिवोऽहमिति भावयेत्
एवं कृत्वा विशेषेणाप्यन्तर्यागं समाचरेत्  १३७
नाभिचक्रं समाश्रित्य कारयेद्वह्निमण्डलम्
हृदये धारयेत्सोमं भ्रूमद्ध्येरविमण्डलम्  १३८
हृदये यजनं कुर्याद्धोमन्नाभौ प्रकल्पयेत्
तथेश्वरन्तु भ्रूमद्ध्ये द्ध्यायेत्सर्वगतं प्रभुम्  १३९
पञ्चावरणमार्गेण पूजयित्वाधिशेषतः
हृत्पद्मे चार्चयेन्नित्यं त्रिकालं वा द्विकालकम्  १४०
अथवाप्येककालं वा संयजेनानसेन तु
आत्मशुद्धिरिति प्रोक्ता स्थानशुद्धिमतश्शृणु  १४१

शिवाग्रे स्थण्डिलं कृत्वा हस्तमात्रन्तु देशिकः
आवाहयेत्ततो भूमिं सर्वाभरणभूषिताम् १४२
द्विभुजाञ्च द्विनेत्राञ्च करण्डमकुटान्विताम्
हेमयज्ञोपवीताढ्यां पीतनेत्रां सुयौवनाम् १४३
पीताभां पीतवस्त्राञ्च पुण्डरीकदळेक्षणाम्
कृताञ्जलिपुटोपेतां सनाळोत्पलधारिणीम् १४४
सुप्रसन्नां भूमिदेवीं सर्वावयवसुन्दरीम्
गन्धादिभिस्समभ्यर्च्य हृदयेनैव मन्त्रतः १४५
अस्त्रेणैव तु मन्त्रेण दिग्विरेचनमारभेत्
स्थानशुद्धिरिति प्रोक्ता द्रव्यशुद्धिन्ततश्शृणु १४६
शरावं पाद्यपात्रञ्च शंखमाचमनीयकम्
जलभाण्डं वर्द्धनीञ्च पुष्पपात्रार्घ्यपात्रकौ १४७
अस्त्रेण क्षाळयेद्धीमान्निरीक्ष्य हृदयेन तु
कवचेनावकुण्ठ्याथ तेनैवोन्मीलनं कुरु १४८
वर्द्धनीं शंखकेनैव पूरयेत्तु शिवांभसा
पञ्चब्रह्मषडंगानि तोयमद्ध्ये तु विन्यसेत् १४९
पिधायदक्षहस्तेन दशबीजन्नयसेत्ततः
दर्शयेल्लिंगमुद्रान्तु पद्ममुद्रां प्रदर्शयेत् १५०
पात्राणि च हृदाप्रोक्ष्य शंखतोयेन सर्वशः
क्षीरन्दधिघृतादींश्च गन्धं पुष्पञ्च धूपकम् १५१
वर्द्धनीतोयमादाय प्रोक्षयेत्पुरुषेण तु
द्रव्यशुद्धिर्भवेदेवं लिंगशुद्धिन्ततश्शृणु १५२
देवदेवन्नमस्कृत्य द्वारदेवान्प्रपूजयेत्
पतंगञ्च भुवंगञ्चाप्यूद्ध्वार्धस्संप्रपूजयेत् १५३
पतंगोर्ध्वे गणेशञ्च तस्य वामे सरस्वतीम्
पतंगस्योद्ध्वर्मद्ध्ये तु महालक्ष्मीं यजेत् बुधः १५४

दक्षिणे तु भुवंगस्य गंगान्नंदीशमेव च
यमुनाञ्च महाकाळन्तस्य वामे तु पूजयेत्  १५५
द्विभुजञ्च द्विनेत्रञ्च सर्वाभरणभूषितम्
रक्ताक्षं रक्तवर्णञ्च तद्वर्णांबरभूषितम्  १५६
दक्षिणे तु शिरोन्यस्य पादमुत्तरतो दिशि
हृदिविन्यस्तहस्तञ्च पतंगद्वारिपूजयेत्  १५७
पीतवर्णं द्विनेत्रञ्च भद्रकायं भयं करम्
पीतवस्त्रदधानञ्च करण्डमकुटोज्वलम्  १५८
कृताञ्जलिपुटोपेतं भुवंगं भावयेदधः
भुवंगदक्षिणे पार्श्वे गणेशं विधिना यजेत्  १५९
गजाननं त्रिणेत्रन्तु श्यामवर्णञ्चतुर्भुजम्
लड्डुकं परशुं वामे सव्ये दन्ताक्षमालिकाः  १६०
नागयज्ञोपवीतञ्च लंबोष्ठन्तु गणाधिपम्
पतंगवामपार्श्वे तु पूजयेत्तु सरस्वनीम्  १६१
चतुर्भुजां द्विनेत्राञ्च श्वेतवर्णां सलक्षणाम्
अक्षमालाञ्च सव्ये तु पुस्तकं वामहस्तके  १६२
अभयं वरदोपेतामथवा वामहस्तके
गण्डिकां सव्यहस्ते तु पंकजं वापि धारयेत्  १६३
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम्
पतंगस्योर्ध्वमद्ध्ये तु पद्ममद्ध्ये च संस्थिताम्  १६४
द्विभुजाञ्च द्विनेत्राञ्च सरत्नमकुटान्विताम्
पीतवर्णसमायुक्तां सर्वावयवसुन्दरीम्  १६५
पंकजं दक्षिणे हस्ते श्रीफलं वामहस्तके
हस्तद्वयं द्विपार्श्वे तु सोर्ध्वहस्तयुतैर्वरैः  १६६
घटैस्तस्यान्तु संयोज्याप्यभिषेकं समाचरेत्
दक्षिणे तु भुवंगस्य नन्दिनं रक्तवर्णकम्  १६७

त्र्यद्मञ्चतुर्भुजोपेतमभयं वरदान्वितम्
उग्रतोमरशूलञ्चाप्यद्मालासमन्वितम् १६८
तस्यैव वामपार्श्वे तु द्विनेत्रं द्विभुजन्तथा
गंगायाश्शुक्लवर्णन्तु मकरासनसंस्थितम् १६९
नीलोत्पलं सव्यहस्ते पूर्णकुंभन्तु वामके
चित्रवस्त्रसमायुक्तं सर्वाभरणभूषितम् १७०
द्वारस्य दक्षिणे गंगां नन्दिनं पूजयेद्बुधः
भुवंगवामपार्श्वे तु महाकाळं घनद्युतिम् १७१
चतुर्भुजं त्रिणेत्रञ्च कपालं शूलमेव च
दक्षिणे भयटंकञ्च वामे पाशसमावहम् १७२
जटामकुटसम्युक्तं नागयज्ञोपवीतकम्
तस्यैव दक्षिणे पार्श्वे यमुनाञ्चैव कल्पयेत् १७३
द्विभुजञ्च द्विनेत्रञ्च श्यामवर्णसमन्वितम्
कूर्मासनसमारूढं सर्वाभरणभूषितम् १७४
पूर्णकुंभन्तु वामे तु उत्पलं सव्यहस्तके
यमुनायास्वरूपन्तु सर्वावयवसंयुतम् १७५
विमलञ्च सुबाहुञ्च पूजयेत्तु कवाटयोः
पट्टिकास्कन्दमभ्यर्च्य वलये चंद्रभास्करौ १७६
सुषिरे नवशक्तिन्तु पूजयेद्देशिकोत्तमः
वृषभं पूजयेदग्रे गन्धपुष्पादिभिः क्रमात् १७७
अन्तर्मण्डलकञ्चैव प्रथमन्तु प्रकल्पयेत्
अन्तर्हारं द्वितीयन्तु मद्ध्यमर्या तृतीयकम् १७८
चतुर्त्थमद्ध्यमर्यादि महामर्यादि पञ्चकम्
पञ्चप्राकारमेवोक्तं प्राकारे बलिमाचरेत् १७९
गर्भग्रहस्य द्वारे वाप्यर्द्धमण्टपकेऽथवा
अथवा मण्टपस्येव उत्तमं मद्ध्यमाधमौ १८०

तद्वारे द्वारपालांस्तु आसीनो वा स्थितोऽथवा
डिंडीनां सव्यपार्श्वे तु मुंडीनां वामपार्श्वके १८१
रक्तवर्णं द्विनेत्रञ्च नागयज्ञोपवीतकम्
भीमरूपं सुदंष्ट्रञ्च द्विभुजञ्चैकवक्त्रकम् १८२
विस्मयाविष्टवक्त्राढ्यं दंडायुधसमन्वितम्
सव्यपार्श्वे स्थितन्देवं डिंडीनां रूपमुच्यते १८३
कृष्णवर्णं चतुर्हस्तमेकास्यं भीमरूपकम्
दंष्ट्राकराळवदनं दण्डन्यस्तैकपादकम् १८४
किंकिणीमालयाभूष्यं दण्डाग्रन्यस्तपाणिनम्
कुन्नळालंकृतास्यञ्च डिंडीनान्तु स्वरूपकम् १८५
द्वारेषु देवतास्सर्वाः परस्परनिरीक्षणाः
प्रत्यङ्मुखास्तथाकुर्युः पूजाकाले विशेषतः १८६
पूजान्ते पूर्ववत्कृत्वा द्वारपालांस्तथैव च
घण्टान्तु ताडयेद्धीमानस्त्रमन्त्रं समुच्चरन् १८७
पूजाकाले तु घण्टान्तु ताडनात्किं प्रयोजनम्
यक्षराक्षसपैशाच दानवाब्रंहराक्षसाः १८८
देवसान्निद्ध्यपूजार्थं गच्छन्ति मणिशब्दतः
आवाहने च पूजान्ते पूजारंभे विसर्जने १८९
अर्घ्ये विलेपने स्नाने दीपे गन्धाभिषेचने
अभिषेके च धूपे च नैवेद्ये बलिकर्मणि १९०
अन्येषु सर्वकार्येषु महाघण्टां प्रताडयेत्
अर्चनादित्रियाकाले प्रच्छन्नपटमुत्तमम् १९१
पापरोगीपरिभ्रष्टो नास्तिकश्शिवनिन्दकः
वेदविक्रयकश्चैव ग्रन्थविक्रयकस्तथा १९२
दुर्मुखश्च दुराचारो मूर्खश्च गुरुनिन्दकः
पाषंडः प्रतिलोमश्च शिवद्रव्यापहारकः १९३

लिंगच्छेदीबृहद्बीजी सुरापायी च हेममुक्
मातृहापितृहास्तेयी गुरुद्रव्यापहारकः १९४
------------------------
प्रविश्यदर्शनं कृत्वा पूजाया निष्फलं भवेत् १९५
प्रच्छन्नपटलं कल्प्य सर्वदोषनिकृन्तनम्
द्वाराधिक्यन्तु विस्तारमायामद्विगुणं भवेत् १९६
वस्त्रमेवं समाख्यातं प्रच्छन्नपटमुत्तमम्
यवनिकां परित्यज्य हृदयम्मन्त्रमुच्चरन् १९७
गर्भगेहं ततः प्राप्य लिंगशुद्धिं समाचरेत्
स्वयंभूर्दैविकं बाणं गाणवञ्चार्षकन्तथा १९८
शिष्टलिंगमिति ख्यातं पूजां पूर्ववदाचरेत्
शिष्टलिंगे विशेषेणावाहनोद्वाहनन्नहि १९९
सर्वत्र व्यापिनं देवं परमेशं सदाशिवम्
अभीमुखीकरणं यच्च तदावाहनमुच्यते २००
विमुखीकरणं यच्च तदुद्वासनमुच्यते
पूजापरिसमाप्तौ तु विमुखन्तु विसर्जनम् २०१
यथा कुंडगतस्याग्नेर्वायुनाज्वनं भवेत्
तथा च लिंगमन्त्रेण जायते भगवान् शिवः २०२
देवैश्च मुनिभिश्चैव पशुभिः पक्षिजालकैः
मृगादिगणपैश्चैव स्वायंभुवं प्रतिष्ठितम् २०३
रक्षरक्षो गणैश्चैव यल्लिंगन्तु प्रतिष्ठितम्
तच्छिष्टलिंगमित्युक्तं शिवसान्निद्ध्यकारणम् २०४
तस्मादावाहनं नास्ति न चैवोद्वासनक्रिया
आवाहनं कुतोदेवकुतोदेवासनं ततः २०५
सुराणां देवतानाञ्च विस्मरन्ति विसर्जनम्
लिंगमावाहनञ्चैव लिंगमूर्तिरिति स्मृता २०६

आचार्यं सन्निधौ कृत्वा दर्पणश्च तथैव हि
दीपात्दीपसहस्राणि मूलदीपन्न लिप्यते २०७
यस्य देवार्चनं लिंगं मूललिंगन्नयेत् बुधः
गो इत्यनेकवर्णानि क्षीरमेकं समुद्भवम् २०८
मन्त्रमेकं समुत्पन्नं तन्त्रञ्च बहुरूपकम्
कुलालचक्रमृद्भिस्तु नानारूपेण दृश्यते २०९
आचार्यं मनसा ध्यात्वा दृक्छायापरमेश्वरम्
शिलामृद्दारुचित्रेषु देवता यत्र कल्पिते २१०
आकल्पितस्वयञ्ज्योतिरात्मनो देवता हि सा
काष्ठादग्निघटे चंद्रः स्वयमावाहयेत्ततः
यद्देवमर्चयित्वा तु तद्देवमात्मभावनम् २११
कृत्वा हृद्गतमञ्जलिञ्च कुसुमं प्रासादमन्त्रं पठन्
भक्त्यानिष्कळगोचरस्समरसीभावं गतस्साधकः ।
ध्यायेद्विक्रमतस्तु शक्तिभवने नादे तथा बिन्दुके
निष्क्रान्तः क्रमतस्तु शक्तिभवने स्यादेवमावाहनम् २१२
पीतं शुक्लं तथारक्तं कृष्णाभं धूम्रवर्णकम्
तथोर्व्यादीनि बीजानि लवरयहकारकाः २१३
प्रथिव्यादीनि भूतानि ब्रह्माद्याः पञ्चमूर्तयः
ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः २१४
अधिदेवास्त्विति ख्याताश्चोर्व्यादीनां यथाक्रमम्
हृच्छिरश्शूळिकामन्त्रैर्वर्मणास्त्रेण बुद्धिमान्
पृथिव्यादीनि बीजानि योजयेत्तु क्रमेण तु २१६
पञ्चोद्धातश्चतस्रश्च त्रयञ्च द्वयमेककम्
पाशुपतेन चास्त्रेण पञ्चग्रंधिस्तु च्छेदयेत् २१७
पञ्चग्रंधिं ततः कृत्वा तस्मात्प्रकृतिनिश्चयः
पञ्चग्रंथितथाच्छेद्य प्रारभेदात्मयोजनम् २१८

जानुग्रन्थिस्तु प्रथमन्नाभिग्रन्थिर्द्वितीयकम्
गळग्रन्थिस्तृतीयन्तु ललाटे तु चतुर्थकम् २१९
पञ्चमन्तु शिरोग्रन्थि च्छेदयेत्तु हृदा पुरा
मूर्तिमन्त्रेण संग्राह्य जीवं हुंकारमूर्द्धनि २२०
कुंभकेन समोपेतं वायुमूर्द्ध्वगतन्नयेत्
तेनैव द्वादशान्तस्थ शिवेन सह योजयेत् २२१
आत्मयोजनमेतत्स्यात्ततो भूतानि शोधयेत्
पृथिव्यादौ पयोवह्नि द्वौ द्वौ शोद्धयपरस्परम् २२२
आकाशञ्च विशोधेन यथाशोद्धयन्तदुच्यते
निवृत्यादीनि भूतानि ता---द्धव---कम् २२३
व्याप्यव्यवस्थितादीनि मत्वातानि विशोधयेत्
दहनं वाथ भूतानां परस्परविशोधनम् २२४
मराडलादिसमायुक्तं भूतशुद्धिरिहोदिता
शोद्धयापरागरहितं कलामात्रव्यवस्थितम् २२५
विचिन्त्य दिव्यदेहार्त्थमत्र चाल्पावनन्नयेत्
ध्यात्वा कुराडलिनीं शक्तिं मन्त्रतैकस्वरूपिणीम् २२६
तदुत्भूता मृतस्त्रावैस्सिक्तादेवकलां स्मरेत्
भुजंगाकृतिमत्युग्रां प्रबोधैकस्वरूपिणीम् २२७
सप्ताख्यकुराडलाकारवलयां होमसन्निभाम्
भ्रूमद्धयात्तालमात्रस्थ ब्रह्मरन्ध्रे विचिन्तयेत् २२८
तदुत्पन्नैकपीयूषैरार्द्रं शुद्धं विभावयेत्
ग्रन्धिपञ्चकमुच्छेद्य शुद्धात्मानं विभावयेत् २२९
कृत्वा हृद्यासनन्तस्मिन् मूर्त्यात्मानं समानयेत्
पुनराप्लवनं कृत्वा करन्यासं समाचरेत् २३०
नाभेस्तु चतुरंगुल्यमधस्थादग्निमराडलम्
कदंबपुष्पसंकाशमष्टपत्रं त्रिकोणकम् २३१

मूलाधारमधःप्रोक्तं द्वितीयन्नाभिमूलके
भुजंगवलयाकाराप्यष्टवर्त्तुळसंयुता २३२
कुण्डलाख्यामहानाडी भानुमण्डलमुच्यते
आत्मानं गृह्यसंहारमुद्रयाविग्रहाश्रितम् २३३
पञ्चात्मनविधानेन देहादीन्तत्प्रमाणतः
आत्मानमन्तरात्मानं परमात्मानमेव हि २३४
तत्वात्मानन्तथापूतपूर्वात्मानन्तु पञ्चकम्
आत्मा तु दण्डमद्ध्यस्थमन्तरात्मा तदन्तरम् २३५
परमात्माब्जमद्ध्यस्थन्तत्त्वात्मापार्श्वदक्षिणम्
भुतात्मावामपार्श्वे तु पञ्चात्मास्थानमुच्यते २३६
इडा च पिंगळा चैव सुषुम्नात्रिविधा मता
स्थितोद्धृतानम्रमुखास्त्रिविधास्तत्गुणामताः २३७
पञ्चात्मस्थानमेवोक्तं पार्श्वमद्ध्ये तु ऊहितम्
आत्मानं सात्विकं प्रोक्तमन्तरात्मा च तामसम् २३८
परमात्मा परन्ध्यात्वा तत्वात्मा रजतो मुखम्
भूतकामत्रियाहारविकार ----- च २३९
राजावर्तनिभास्सर्वे प्रागादिषु प्रकल्पयेत्
गुणत्रयेण संछाद्य सिंहासनं प्रकल्पयेत् २४०
भुतरूपेषु कोणेषु पादाः कृतयुगादयः
श्वेतं रक्तन्तथा कृष्णं पीतन्त्रेधादिवर्णकम् २४१
अव्यक्तो नियतिः कालो कला चेति चतुष्टयम्
अव्यक्तः स्फटिकाभासो नियतिश्चाञ्जनद्युतिः २४२
कालोदाडिमपुष्पाभः कलाभिन्नाञ्जनप्रभा
प्रागादिष्वेळकाप्रोक्ता मद्ध्यपादस्तु केशवः २४३
एवं योगासनं प्रोक्तं पद्मासनन्ततोपरि
मायातत्वं बृहत्गन्धिश्शुद्धविद्यात्मशोभितम् २४४

विद्येश्वरदळच्छन्नं शक्तिकेसरसंयुतम्
विद्यातत्वमयन्तत्र कर्णकायां प्रपूजयेत्  २४५
बीजं प्रवाळवर्णाभमंकुरा रजतप्रभम्
तस्य नाळन्तुवैडूर्यं कर्णिकारक्तपिंगळम्  २४६
शंखवर्णादळाग्राश्च रक्ताश्वेतदळास्मृताः
किञ्चिल्लोहितपीतानि मद्ध्ये स्यात्केसराणि च  २४७
तन्मद्ध्ये कल्पयेद्धीमान् कर्णिकांकनकप्रभाम्
नवबीजानि तन्मद्ध्ये हेमाभानि प्रकल्पयेत्  २४८
वामादिशक्तयश्चाष्टौ केसरेषु प्रकल्पयेत्
इंद्रादीशानपर्यन्तन्न्यसेन्मद्ध्ये मनोन्मनीम्  २४९
आत्मतत्वन्न्यसेत्सव्ये विद्यातत्वन्तु वामके
मद्ध्यमे शिवतत्वन्तु कल्पयेत्कल्पवित्तमः  २५०
एवं पद्मासनं प्रोक्तं तस्योद्ध्र्वे विमलासनम्
मण्डलत्रयमत्रैव कल्पयेद्विपुलासनम्  २५१
सिंहासनञ्चतुष्कोणमनन्तञ्च त्रिकोणकम्
पद्मञ्च वर्तुळाकारं षट्कोणं विमलासनम्  २५२
योगासनञ्चाष्टकोणमासनं परिकल्पयेत्
आवाहनासनं योगे स्नाने सिंहासनं भवेत्  २५३
अर्चनायाम्महापद्मं विमलाख्यन्तु भोजने
स्तोत्रसंगीतनृत्तेष्वनन्तासनमिहोच्यते  २५४
चतुरश्रस्य पीठस्य स्थित्वा लिंगमिहोच्यते
सुवृत्तम्मासनं प्रोक्तमष्टाश्रं यनं भवेत्  २५५
उपानं पादुका चैव जगती जंघमेव च
कुक्षिन्तत्कुमुदं ज्ञेयं बाहुस्स्यात्कंपमेव च  २५६
कण्ठं कण्ठमिति ज्ञेयमधरे त्वधरं भवेत्
महापट्टिललाटन्तं केशान्तं घृतवारिणा  १५७

आसीनं वासुनृत्तं वा स्थितं वाशयनन्तु वा
पूजाकाले सुखासीनमन्यकालेषु पूर्ववत् २५८
आसनम्मूर्तिमावाह्याप्येतत्त्रितयमद्ध्वनि
व्याप्तिव्यापकभावेन ज्ञात्वा यजनमारभेत् २५९
आसनं शुद्धविद्यान्तमूर्त्तिशक्त्यन्तगोचरम्
आवाह्यास्य शिरोमूर्त्तिमूर्त्तिमानुपरिस्थितः २६०
देहस्थस्सकळो ज्ञेयो निष्कळोदेहवर्जितः
आप्तौ वादेशग ------- स्थितः २६१
हंसहंसेति यो ब्रूयाद्धंसोदेवस्सदाशिवः
गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतोमुखम् २६२
तिलेषु च यथा तैलं पुष्पे गन्धस्सदाश्रितम्
पुरुषस्य शरीरेऽस्मिन् बाह्याभ्यन्तरसंस्थितम् २६३
उल्काहस्तो यथा कश्चिद्द्रव्यमालोक्यतान्त्यजेत्
ज्ञानेन ज्ञेयमालोक्य तथाज्ञानं परित्यजेत् २६४
सकळं पुष्पवत्तत्र गन्धस्यैव तु निष्कळम्
वृक्षस्तु सकळं विद्याच्छाया तस्य तु निष्कळम् २६५
सकळन्निष्कळाभावे सर्वत्रैव व्यवस्थितम्
लिंगं त --- संज्ञात्वा कल्पयेदासनन्तथा २६६
स्वयंभौ देविके बाणे कल्पयेदेकमासनम्
आर्षे च गाणपेवत्सकल्पयेदासनत्रयम् २६७
मानुषे चैव कर्त्तव्यं पञ्चासनमिति स्मृतम्
आवाहनादियत्कर्म पूर्ववत्परिकल्पयेत् २६८
पूर्वाह्ने सितवस्त्रन्तु मद्ध्याह्ने रक्तवस्त्रकम्
पीतवस्त्रन्तु सायाह्ने सार्द्धयामे तु सर्वशः २६९
आवाहयेत्ततो देवं सद्योजातेन मन्त्रतः
स्थापयेद्वाममन्त्रेणाप्यघोरेण तु सन्निधिः २७०

पुरुषेण निरोधञ्चेशानेन स्वागतं भवेत्
आगतस्य शिवस्यात्र पादौ पाद्यं हृदाददेत्  २७१
मुखेष्वाचामनन्दद्यादर्घ्यं शिरसि निक्षिपेत्
अष्टत्रिंशत्कलान्यासम्मकुटादिक्रमेण तु  २७२
पञ्चब्रह्मषडंगैश्च व्योमव्यापिं समुच्चरन्
जलेनस्नापयेत्पश्चाद्दधिक्षीरघृतैरपि  २७३
नाळिकेरोदकेनैव मधुनाब्रह्मपञ्चकैः
हृदा वै शालिपिष्टेन घर्षयेल्लिंगमादरात्  २७४
शिवांभसा तु संस्नाप्य घर्षयेदामलेन तु
लेपयेद्रजनीं पश्चात् स्नापयेत् गन्धवारिणा  २७५
आचमनन्ददेत्पश्चात्पञ्चवक्त्रेषु बुद्धिमान्
वस्त्रेण लिंगपीठे तु कारयेत् लंबनं बुधः  २७६
हृदयेन तु मन्त्रेण पुष्पम्मूर्द्धनिदापयेत्
घण्टान्तु ताडयेत्तत्र क्षिपेद्यवनिकान्ततः  २७८
वस्त्रोपवीतगन्धञ्च मकुटं कुण्डलन्तथा
हारकेयूरमालाञ्च हृदयेन प्रदापयेत्  २७९
धूपदीपं हृदादत्वा पञ्चमावरणान्न्यसेत्
कर्णिकायान्तथैशानं पूजयेत्तु विशेषतः  २८०
पूर्वे तत्पुरुषञ्चैव कफोरन्दक्षिणे यजेत्
पश्चिमे तु यजेद्वामं सद्योजातन्तु सौम्यके  २८१
ईशानं मद्ध्यमे पूज्य पञ्चवक्त्रे तथार्चयेत्
शुद्धस्फटिकमीशानं पुरुषं कुम्कुमाकृतिम्  २८२
सद्योजातन्तु गोक्षीरं पञ्चवक्त्रेषु भावयेत्  २८३
सद्योजातं स्थितं देवं वामदेवं सुखासनम्
अघोरन्धनुराकारं पुरुषं वामरूपकम्  २८४
ईशानन्नृत्तरूपन्तु पञ्चमन्त्रात्मकं परम्

शूलं पाशन्तथा सद्यं वामं परशुमंकुशम्  २८५
अघोरं खट्गबाणञ्च पुरुषं वज्रनागकम्
अभयं वरदञ्चैव त्वीशानाकृतिरुच्यते  २८६
हृदयं पावके पूज्य निर्ऋतौ तु शिखां यजेत्
कवचं वायुदेशे तु शिरोवैशानगोचरे  २८७
अस्त्रन्तु दक्षिणे पूज्य ईशाने नयनं भवेत्
शुक्लपीतारुणञ्चैव रक्तं श्यामञ्च कृष्णकम्  २८८
वर्णानि च षडंगानि त्रिणेत्राश्च चतुर्भुजाः
सव्ये शूलाभयञ्चैव वामे वरकपालकम्  २८९
षडंगस्यैव वर्णन्तु प्रथमावरणे यजेत्
गर्भावरणमेवन्तु दळमूले तु संयजेत्  २९०
अनन्तेशस्तथा सूक्ष्मश्शिवोत्तमश्चेकनेत्रकः
एकरुद्रस्त्रिमूर्त्तिश्च श्रीकण्ठश्च शिखण्डिनः  २९१
अष्टविद्येश्वरा ह्येते त्रिणेत्राश्च चतुर्भुजाः
अभयं वरदोपेतां टंकशूलसमन्विताम्  २९२
रक्तं श्वेतन्तथा नीलं पीतं कृष्णञ्च कुंकुमम्
शोणं भिन्नाञ्जनप्रख्यं क्रमाद्विद्येशवर्णकम्  २९३
अनन्तादिशिखण्डयन्तान् प्राक्दळेषु प्रकल्पयेत्
द्वितीयावरणं प्रोक्तं तृतीयावरणं श्रुणु  २९४
उत्तरे तु यजेत् गौरीं पूर्वेषु वृषभं यजेत्
गणेशं याम्यदेशे तु गुहं वै वारुणे यजेत्  २९५
नन्दिनन्दिमहाकाळौ भृंगीशञ्चण्डमूर्तिनम्
आग्नेयादिषु कोणेषु पूजयित्वा यथा विधि  २९६
द्विनेत्राद्विभुजाश्यामा करण्डमकुटान्विता
किरीटमकुटोपेता केशबन्धयुता तथा  २९७
सर्वाभरणसंयुक्ता पादजालसमन्विता

दुकूलवसनोपेता चित्रवस्त्रेण वेष्टिता २९८
सर्वावयवसं पूर्णा सर्वलक्षणसंयुता
दक्षिणे कटकं वापि वामहस्तं प्रलंबितम् २९९
आभंगस्यवशात्तत्र लंबयेत्सूत्रमादरात्
--- पुष्पेण तेनैव किंप्रयोजनम् ३००
भक्तानां सर्वजन्तूनां लोकोपकृतिकारणम्
तस्मात् गौरीकरस्थञ्चाप्युत्पलं ज्ञानहेतुकम् ३०१
गौर्याकृतिस्समुद्दिष्टा सौम्म्यदेशे समर्चयेत्
चतुष्पादं वेदरूपमग्निरूपन्तु शृंगकम् ३०२
ब्रह्मविष्णोश्च रुद्रस्य रूपं वृषभमुच्यते
एकवक्त्रश्चतुष्पादोऽप्युदरेण खुराकृतिः ३०३
वृषभः श्वेतवर्णस्तु तीक्ष्णशृंगो महाबलः
प्रासादस्य वृषाणीमांगोशृंगं मराटपाकृतिः ३०४
प्राकारे नन्दने चैव शुभानि वृषभालयम् ३०५
केशान्तरे मूर्द्धनि नेत्रमद्ध्ये मुखान्तरे ग्रीवहृदन्तरे च
नाभेश्च मद्ध्ये नळकस्य मद्ध्ये वदन्ति संतो वृषभस्य सूत्रम् ३०६
उक्षञ्च गोपतिञ्चैव शंखुकर्णन्तथैव च
तीक्ष्णशृंगं तथैव ---------------- ३०७
महोदरं त्वष्टमञ्च गोमातारञ्च मद्ध्यमे
स्थितं वा शयनं वापि युगपादं खुरान्वितम् ३०८
संपुटत्रयपादन्तु एकपादं बहिस्थितम्
धर्मदेवाकृतिं द्ध्यात्वा वामनं वृषभं तथा ३०९
चणकं मुद्गमाषञ्च तराडुलं तिलमेव च
प्रत्येकं मुष्टिमात्रं स्यान्नाळिकेरगुळान्वितम् ३१०
मुष्टिप्रीहिस्तु मुख्यं वा वृषभं पूजयेत्ततः ३१०
एवं प्रतिदिनं कुर्यात् ग्रामशान्तिकरं शुभम्

वृषभस्यार्चनं कुर्यात्पूर्वे चैव विशेषतः ३११
मंटपे दक्षिणे पार्श्वे सौम्याभिमुखमास्थितम्
रक्तवर्णसमायुक्तं रुचिरासनसंस्थितम् ३१२
चतुर्भुजं त्रिणेत्रञ्च नागयज्ञोपवीतकम्
महोदरं बृहत्कायं गजकर्णं गजाननम् ३१३
लंबोष्ठं गजहस्तं स्यात्कपित्थलाजधारिणम्
लड्डुकं केतकीपुष्पं सव्यपार्श्वे तु हस्तयोः ३१४
आम्रदन्तं दधानञ्च वामपार्श्वे तथैव च
करण्डमकुटोपेतं पञ्चतालप्रमाणकम् ३१५
गणेशं पद्मपीठस्थं दक्षिणे तु समर्चयेत्
पश्चिमे सव्यपार्श्वे तु गुहेशं सम्यगर्चयेत् ३१६
चतुर्भुजं द्विनेत्रञ्च द्विपादं मकुटोज्वलम्
श्यामवर्णसमायुक्तं मयूरासनसंस्थितम् ३१७
नानारत्नप्रभामौलिमुष्णीषमुत्तरीयकम्
कर्णयोः पत्रपिण्डन्नु नक्रकुण्डलमेव वा ३१८
वज्रशक्तिसमोपेतं वरदाभयहस्तकम्
नानादीप्तांबरोपेतं सर्वाभरणभूषितम् ३१९
योगिनीं वामपार्श्वे तु भोगिनीं सव्यपार्श्वके
कुंकुमाभाञ्च रक्ताभां तत्तद्वर्णां बरान्विताम् ३२०
उत्पलं पंकजं कृत्वा धारयंतीं क्रमेण तु
आसीनो वा स्थितो वापि प्रभामण्डलसंयुतः ३२१
गुहस्य लक्षणं प्रोक्तं पश्चिमे चैव पूजयेत्
नन्दिनं पावके पूज्य द्विनेत्रं द्विभुजन्तथा ३२२
श्यामवर्णसमायुक्तमुग्रतोमरशूलकम्
जटामकुटसंयुक्तं पूजयेत्तु विशेषतः ३२३
नैर्ऋते तु महाकाळं कृष्णवर्णं द्विनेत्रकम्

द्विभुजं शुक्लवस्त्राढ्यं द्विपादं भीमरूपकम्  ३२४
पाशदराडसमायुक्तं सर्वाभरनभूषितम्
वायुदेशे समभ्यर्च्य भृंगिराञ्च द्विनेत्रकम्  ३२५
द्विपादं रक्तवस्त्रञ्च द्विभुजं टंकविस्मयम्
सर्वाभरनसंयुक्तं जटामकुटमंडितम्  ३२६
चराडेशमीशदेशे तु द्विनेत्रं द्विभुजान्वितम्
कर्णस्थपत्रपिंडाढ्यं श्यामाभंटंकधारिणम्  ३२७
द्विपादं श्यामवसनं सर्वाभरणभूषितम्
स्वर्णमकुटसंयुक्तं चराडरूपमिति स्मृतम्  ३२८
तृतीयावरणं प्रोक्तं चतुर्थावरणं श्रुणु
इंद्रादिलोकपालादीनैंद्रदिक्षुप्रकल्पयेत्  ३२९
अनन्तं निर्ऋतौ पूज्य --- मीशगोचरे
द्विभुजा च द्विनेत्रा च श्यामवर्णसमायुता  ३३०
सव्यहस्ते वज्रधरा वामहस्ते भयन्तथा
रक्तांबरसमायुक्ता सर्वाभरणभूषिता  ३३१
हस्तिवाहनसंयुक्ता चेंद्रस्याकृतिरुच्यते
द्विभुजा च द्विनेत्रा च रक्तवर्णसमन्विता  ३३२
त्रिपादेन समारक्ता शलाकान्तोर्ध्वकेशका
पीतवस्त्रसमायुक्तसर्वपुष्पैरलंकृता  ३३३
शुक्लयज्ञोपवीता च शुक्लस्त्रोत्तरीयका
स्रुवं सव्यकरे -------------  ३३४
अजवाहनसंयुक्ता वह्नेराकृतिरुच्यते
काळाञ्जननिभाकारा विद्युत्सदृशदंष्ट्रिका  ३३५
द्विभुजारक्तकेशा च कुञ्चितभ्रूसविभ्रमा
दराडायुधसमायुक्ता महिषासनसंस्थिता  ३३६
द्विनेत्रा द्विपदा सौम्या सर्वाभरणभूषिता

यमस्याकृतिराख्याता भीमरूपं प्रजापते  ३३७
द्विभुजञ्च द्विनेत्रञ्च कृष्णवर्णसमन्वितम्
हेमवस्त्रपरीधानं खड्गखेटकसंयुतम्  ३३८
नरवाहनसंयुक्तं दंष्ट्राकराळलोचनम्
सर्वाभरणसंयुक्तं राक्षसं रूपमुच्यते  ३३९
शंखकुन्देन्दुधवळा द्विभुजा च द्विनेत्रका
सर्वाभरणसंयुक्ता कुण्डलाभ्यं विराजिता  ३४०
सव्ये ----------------------
सर्वलक्षनसंयुक्ता वरुणाकृतिरुच्यते  ३४१
कृष्णवर्णं द्विनेत्रञ्च कुञ्चितभ्रूसविभ्रमम्
द्विपादं शुक्लवस्त्रञ्च द्विहस्तं शुक्लभूषणम्  ३४२
सव्येंकुशं वहन्वामे प्रलंबकटकं महत्
मिश्रवर्णांबरधरं मृगारूढं सुयौवनम्  ३४३
वायुरूपमिति ख्यातं सर्वलक्षणलक्षितम्
द्विभुजा च द्विनेत्रा च श्वेतवर्णसमायुता  ३४४
शुक्लवस्त्रपरीधाना सुरत्नमकुटोज्वला
गदाञ्च सव्यहस्ते तु ----------  ३४५
अश्ववाहनसंयुक्ता कुबेराकृतिरुच्यते
चतुर्भुजा त्रिणेत्रा च शुक्लवर्णा सुयौवना  ३४६
शुक्लयज्ञोपवीता च वृषारूढा सुशान्तका
शूलञ्चाभयहस्तञ्च मृगीटंकं तथैव च  ३४७
---------- व्याघ्रचर्मांबरान्विता
ऐशानाकृतिराख्याता द्विभुजं वापि कारयेत्  ३४८
ब्रह्मा चतुर्मुखा पीतश्चतुर्दोर्दण्डसंयुतः
स्रक्दण्डाक्षकुशाग्रश्च किरीटी हंसवाहनः  ३४९
विष्णुश्चतुर्भुजो मौली शंखचक्रगदाब्जधृक्

नीलांबुजप्रतीकाशो गरुडासनसंस्थितः ३५०
चतुर्थावरणं ह्येवं पञ्चमावरणं श्रुणु
वज्रादिपद्मवर्यन्तं पूर्वादिषु यथाक्रमम् ३५१
वज्रं शक्तिञ्च दण्डञ्च खड्गं पाशांकुशं तथा
गदात्रिशूलं चक्रञ्च पद्मञ्चैव दशायुधम् ३५२
मद्ध्ये च सप्तमं तारमाशाधिपगणेशयोः
याम्ये तु वीरभद्रेण विघ्नेश्वरसमन्वितम् ३५३
ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा
वाराही चैव माहेंद्री चामुण्डासप्तमातरः ३५४
दक्षिणे दक्षिणे चैव वीरभद्रविनायकौ
ब्राह्मी तु पीतवर्णा स्याद्धंसवाहनसंस्थिता ३५५
चतुर्भुजयुताब्रांही माहेश्वरी महेश्वरः
कौमारी षण्मुखश्चैव वैष्णवी विष्णुरेव च ३५६
वाराही च यमश्चंद्रो माहेंद्रीमसृजस्तथा
काळरात्री उमा चैव रूपवाहनचिह्नकैः ३५७
वक्त्रं प्रतिविशेषेण प्रतिवक्त्रं द्विलोचनम्
अभयं वरदञ्चैवाप्यक्षमालाञ्च कुंडिकाम् ३५८
सर्वाभरणसंयुक्तं जटामकुटसंयुतम्
ब्रांही लक्षणमाख्यातं माहेश्वरीं ततश्श्रुणु ३५९
त्र्यक्षञ्चतुर्भुजं शान्तं शुक्लवर्णसमायुतम्
जटामकुटसंयुक्तामेकवक्त्रसमन्विताम् ३६०
अभयं वरदोपेतां मृगं टंकञ्च धारिणीम्
वाहनं वृषभं धन्वा माहेश्वरीं तथैव च ३६१
ईश्वरी लक्षणं प्रोक्तं कौमारी लक्षणं श्रुणु
एकवक्त्रं द्विनेत्रञ्च नीलवर्णस्वरूपकम् ३६२
चतुर्भुजसमायुक्तं द्विपादेन समन्वितम्

मयूरं वाहनं कृत्वा जटामकुटमंडितम् ३६३
अपरे वज्रशक्तिञ्च वराभयकरान्वितम्
कौमारी रूपमाख्यातं वैष्णवीरूपमुच्यते ३६४
त्र्यक्षाचतुर्भुजाशान्ताश्यामवर्णासुयौवना
शंखचक्रधरां सौम्यां वराभीतिकरान्विताम् ३६५
वाहनं गरुडं कृत्वा सर्वाभरणभूषिताम्
वैष्णव्याकृतिराख्याता वाराही रूपमुच्यते ३६६
द्विनेत्रा च चतुर्हस्ता मेघवर्णासुमद्ध्यमा
हलञ्च मुसलञ्चैव वरदाभयसंयुताम् ३६७
वाहनम्महिषं कृत्वा सर्वावयवसुन्दरीम्
वाराह्याकृतिराख्याता माहेंद्राकृतिरुच्यते ३६८
चतुर्भुजा त्रिणेत्रा च तप्तकाञ्चनसन्निभा
वज्रशक्तिसमोपेता वरदाभयहस्तका ३६९
वाहनं वारणं कृत्वा जटामकुटमण्डिता
पीतांशुकसमायुक्ता सर्वाभरणभूषिता ३७०
माहेंद्र्याकृतिराख्याता चामुण्डाकृतिरुच्यते
चतुर्भुजात्रिणेत्रा च काळाञ्जनसमद्युतिम् ३७१
कटकं शूलहस्तञ्च कपालञ्च धरं करे
काळांशुकसमायुक्ता दरत्स्मेरमुखांबुजा ३७२
वाहनं स्यन्दनं कृत्वा दंष्ट्राघोरमुखांबुजम्
सर्वाभरणसंपूर्णं चामुण्डारूपमिष्यते ३७३
पुष्पादिभिश्च ------ सुमनादेस्ततोत्तमः
तत्ताडयेत् पटन्तत्र ------- नीय च ३७४
धूपदीपसमायुक्तन्दर्पण -------
नैवेद्यं दापयेत्पश्चादुपदंशसमन्वितम् ३७५
गुळखण्डसमायुक्तमाज्ययुक्तन्दधिप्लुतम्

मन्त्रान्नन्तु कथन्देव ब्रूहि मे त्रपुरान्तक ३७६
मन्त्रं रहस्यमित्युक्तम्मथनादन्नमुच्यते
रहस्यत्वोदनं यत्तु मन्त्रान्नमिति कथ्यते ३७७
त्रिपाद्युपरिविन्यस्य स्थालिकादि गतं हविम्
पेयं लेह्यञ्च चोष्यञ्च युक्तियुक्तन्तु विन्यसेत् ३७८
संप्रोन्द्य हृदयेनैव शोषयित्वा तु हेतिना
अमृतीकृत्यगोस्तन्या ----- न्यसेत् ३७९
नैवेद्यं दक्षिणे हस्ते दद्यात्पानीयमुत्तमम्
मिश्रतोयञ्च हंसानां पानं लवायसमुत्तमम् ३७९
देवानां भुक्तिमात्रेण नैवेद्यमपि तत्समम्
कपित्थस्य फलं सारं यावत्कुञ्जरभक्षणम् ३८०
तथैव देवताभुक्तिर्मन्त्रेणैव निवेदयेत्
ईशानस्याभिषेकन्तु नैवेद्यं पुरुषानने ३८१
अघोरस्यार्चनाप्रीतिर्वामस्य प्रार्थनाप्रिया
सं ---------- पञ्चवक्त्राणि चिन्तयेत् ३८२
गन्धं वाममुखे चैव पुष्पमीशानगोचरे
धूपन्तु सद्यवक्त्रे च दीपं घोरानने स्मृतम् ३८३
नैवेद्यं पुरुषे चैव भावयेत् देशिकोत्तमः
पेयं लेह्यस्य शुद्धान्नं पुरुषे गौळमोदनम् ३८४
अघोरे कृसरान्नञ्च वामे हारिद्रमोरनम्
मुद्गान्नं सद्यवक्त्रे तु कारयेत्तु विशेषतः ३८५
बहुनाळघटञ्चैव जलमेकेन पूरितम्
समनाळं तृप्तियोरं पुधुषे च निवेदयेत् ३८६
शुद्धान्नं पायसम्मुद्गं गुळान्नं कृसरान्नकम्
हरिद्रान्नन्तिलान्नञ्च घृतान्नन्तु यवोदनम् ३८७
दिनेदिने निवेद्यार्थं कल्पयेद्देरिकोत्तमः

नैवेद्यं पुरतोन्यस्त्वा चतुस्संस्कारसंस्कृतम्  ३८८
कृत्वा सुरभिमुद्राञ्च अन्नमुद्रां प्रदर्शयेत्
परिषेचनन्ततः कृत्वा मेरुमुद्रां प्रदर्शयेत्  ३८९
दधिमुद्रां क्षीरमुद्रां घृतमुद्रान्तथैव च
माक्षिकाख्याञ्च मुद्राञ्च मुष्टिमुद्रां प्रदर्शयेत्  ३९०
द्रव्याभावे तु नैवेद्ये दर्शयेत् द्रव्यमुद्रिकाम्
अन्नस्योष्णोपशान्त्यर्थं शंखमुद्रां प्रदर्शयेत्  ३९१
पूजाकाले तु नैवेद्यं सर्वलोकस्य शान्तये
दापयेद्विधिनानेनाप्यहमस्मीति मन्त्रतः  ३९२
तदाभावे च नैवेद्ये लोकस्थान्भक्षयेद्धरम्
तस्मात्सर्वप्रयत्नेनाप्यर्चनान्ते निवेदयेत्  ३९३
पञ्चवक्त्रेषु नैवेद्यन्दद्यात्वरदमुद्रया
अथवाप्यूर्द्ध्ववक्त्रे च नैवेद्यमपि कारयेत्  ३९४
हविः प्रदानकाले तु दत्वा चाचमनीयकम्
पाययस्वेति पञ्चानामास्ये तर्पणमाचरेत्  ३९५
तत्परं लिंगनैवेद्यं सप्तपञ्चत्रिवारकम्
अथवाप्येकवारं वा नैवेद्यन्दापयेत्क्रमात्  ३९६
आचार्यो हस्तमुद्धृत्य गौरीहस्ते निवेदयेत्
गौरी हस्तं समुद्धृत्य शिवहस्ते निवेदयेत्  ३९७
गौरी हस्तं समुद्धृत्य पुत्रोच्छिष्टन्तु
तस्माच्छिवस्य नैवेद्यं भक्तानान्तु निवेदयेत्  ३९८
जलेनाचमनन्दत्वा दिक्बन्धञ्च ततः कुरु
पुनराचमनन्दत्वा चण्डेशाय निवेदयेत्  ३९९
द्वारस्य दक्षिणे पार्श्वे नन्दिने बलिमाचरेत्
महाकाळायवामे तु वृषभाय तदग्रतः  ४००
तांबूलन्दापयेत्पश्चात्सद्येन तु विशेषतः

परिवारबलिन्दत्वा नित्याग्निं कारयेत्बुधः ४०१
सर्वलोकहितार्त्थन्तु नित्योत्सवमतः परम्
नीराञ्जनन्ततः कुर्यात्पुष्पार्घ्यै पात्रके क्षिपेत् ४०२
तन्मद्ध्यमे यजेदस्त्रं गन्धपुष्पादिभिर्बुधः
अघोरेण तथा तिस्रो भ्रामयेल्लिंगमूर्द्धनि ४०३
जलेन निक्षिपेदर्घ्यं हृदासं प्रोक्षयेच्छिवम्
दर्शयेल्लिंगमुद्रान्तु मन्त्रेण नयनेन च ४०४
सौख्यं कुर्यात्तदन्ते तु शास्त्रदृष्टेन कर्मणा
अर्चनानवधासम्यक् पूजयेत्तु विशेषतः ४०५
दीपाद्यन्तं निवेद्यान्तं बल्यन्तं कन्यसत्रयम्
होमान्तमुत्सवान्तन्तु स्तोत्रान्तं मद्ध्यमत्रयम् ४०६
सौख्यान्तं चुळिकोदान्तं प्राणाग्निहोत्रमेव च
उत्तमत्रयमाख्यातं सापूजाफलदायका ४०७
दीपान्तमर्चनं प्रोक्तन्निवेद्यान्तन्तु पूजनम्
बल्यन्तं शान्तिदं प्रोक्तं फलं वै कन्यसत्रयम् ४०८
होमान्तं विजयं प्रोक्तमुत्सवान्तन्तु शान्तिकम्
स्तोत्रान्तं पौष्टिकं प्रोक्तं फलं वै मद्ध्यमत्रयम् ४०९
सौख्यान्तमुत्तमं विद्धि चुळिकान्तं श्रियावहम्
प्राणाग्निहोत्रं सफलं त्रिविधं परिभाषते ४१०
सांगोपांगञ्च प्रत्यंगं पूजयेत्त्रिविधं स्मृतम्
स्नानतोयञ्च पाद्यञ्च तथा चाचमनीयकम् ४११
वस्त्रमाभरणञ्चैव सुगन्धं लेपनन्तथा
अर्घ्यञ्च मन्त्रपुष्पञ्च सांगञ्चेति प्रकीर्तितम् ४१२
उपांगन्धूपदीपं स्यात्सायरक्षा तु भस्मना
छत्रचामरकञ्चैव दर्पणं दर्शयेत्ततः ४१३
नृत्तगेयसमायुक्तमुपांगञ्चेति कीर्तितम्

नैवेद्यं बलिदानञ्च होमन्नित्योत्सवन्तथा ४१४
चुळिकोदञ्च प्रत्यंगं त्रिविधं समुदाहृतम्
पाद्यं पादतले न्यस्त्वा आचमनन्तु हस्तयोः ४१५
अर्घ्यं शिरसिविन्यस्य गन्धं कायानुलेपनम्
पुष्पम्मूर्द्धनिविन्यस्य धूपन्नासापुटद्वये ४१६
दीपन्नेत्रेषु विन्यस्याप्यन्नादिविन्यसेत्करे
गन्धतैलन्तथाभ्यंगं गव्यपञ्चामृतं फलम् ४१७
गन्धोदकञ्च काषायं वस्त्रमाभरणन्तथा
पाद्यमाचमनञ्चार्घ्यं गन्धपुष्पञ्च धूपकम् ४१८
दीपाथारञ्च दीपञ्च हविश्चैवोपदंशकम्
तांबूलम्मुखवासञ्च नीराजनञ्च दर्पणम् ४१९
चामरन्तालवृत्तञ्च छत्रं वै पादुकान्तथा
स्वर्णपात्रञ्चरुस्थालीमुदभाण्डञ्च वर्द्धनीम् ४२०
शंखपात्राणि पत्राणि स्नपनार्त्थघटन्तथा
जलद्रोणीञ्च घण्टाञ्च त्रिपादीं शोधयेद्बुदा ४२१
तत्तद्द्रव्याणि पात्राणि प्रत्यहं शोधयेद्बुधः
आवाहनन्तु प्रथमं स्थापनन्तु द्वितीयकम् ४२२
तृतीयं पाद्यतोयं स्यादाचमनञ्चतुर्त्थकम्
पञ्चमञ्चार्घ्यविन्यासं षष्ठञ्चैवाभिषेचनम् ४२३
सप्तमं वस्त्रगन्धञ्चाप्यष्टमं पुष्पपूजनम्
नवमन्धूपदीपं स्याद्दशमन्तु निवेद्यकम् ४२४
एकादशं बलिं कुर्यात् द्वादशं होमकर्म च
त्रयोदशं श्रीबलिञ्च गेयवाद्यञ्चतुर्दशम् ४२५
नृत्तं पञ्चदशञ्चैवाप्युद्वासनन्तु षोडशम्
आवाहनं स्थापनञ्च गन्धपुष्पञ्च धूपकम् ४२६
दीपन्नैवेद्यमेवञ्चाचमनञ्च विसर्जनम्

दशोपचारं विज्ञेयं सर्वकर्मार्त्थसाधनम् ४२७
पाद्यमाचमनञ्चार्घ्यं स्नानं वस्त्रविलेपनम्
पुष्पञ्च धूपदीपञ्च नैवेद्यञ्च ततः परम् ४२८
मुद्राबन्धनमस्कारं मन्त्राणाञ्जपमेव च
एवं द्वादशभेदं स्यादुपचारं प्रजापते ४२९
आवाहनासनन्तस्य द्वादशम्मात्रमुच्यते
पाद्यन्तु पञ्चमात्रं स्यात्त्रिमात्रमाचमनीयकम् ४३०
एकमात्रं भवेदर्घ्यं षाणमात्रं गन्धलेपनम्
पुष्पं द्वादशमात्रं स्यात् धूपं पञ्चदशं भवेत् ४३१
दीपन्तु --- मात्रं नीराजनन्तु षोडशम्
भस्मानि दापयेत्पश्चात्सप्तमात्रन्तु कारयेत् ४३२
नीराजनं त्रिमात्रं स्यात् चामरं द्वादशं भवेत्
छत्रन्तु पञ्चमात्रं स्यात् मुनिमात्रन्तु दर्पणम् ४३३
चुळुकोदं त्रिमात्रं स्यात् नैवेद्यं दशपञ्चकम्
बलिदानं तथाकुर्यात् मात्रालक्षणमुच्यते ४३४
घण्टान्तु वामहस्तेन देशिकस्ताडयेत्क्रमात्
गंधहीने भयोत्पत्तिः पुष्पहीने तु संकटम् ४३५
धूपहीने ध्रुवं रोगं दीपहीने धनक्षयम्
नैवेद्यहीने दुर्भिक्षमग्निहीने तु संकटम् ४३६
बलिहीने ग्रामनाशं नृत्तहीने तु दुःखदम्
मन्त्रहीने तु मरणं क्रियाहीने तु व्याधयः ४३७
सावश्यं धूपदीपं स्यात्सौभाग्यं हविषान्तकम्
बल्यन्तं शान्तिकं प्रोक्तं नृत्तान्तं पौष्टिकं तथा ४३८
सावश्यन्तु त्रिपादान्तं सौभाग्यं पञ्चनाडिका
सौख्यं धामान्तकं प्रोक्तं पादमेकादशं भवेत् ४३९
शान्तिके पौष्टिके चैव नाडिकाक्रममुच्यते

दशोपचारदीपान्तं हविष्यन्तन्तु षोडशम्  ४४०
बल्यन्तं पञ्चविंशच्च षट्त्रिंशत्तांडवान्तकम्
मन्त्रहीनं त्रियाहीनं द्रव्यहीनन्तु यत्कृतम्  ४४१
तत्सर्वं कृपयादेव क्षमस्वपरश्वेर
घटिकाद्वौ भवेत्स्नानं घटिकैकार्चनं भवेत्  ४४२
घटिकार्द्धन्तु नैवेद्यं बलिदानन्तु तत्समम्
नित्याग्निकार्यमर्द्धन्तु नित्योत्सवं त्रिनाडिका  ४४३
स्तोत्रसगीतनृत्तेषु सप्तार्द्धञ्चुळकोदकम्
पश्चिमद्वारहर्म्ये तु किञ्चित्भेदं शिवार्चने  ४४४
उपचाराणि सर्वाणि सद्यवक्त्रे प्रदापयेत्
आसनावरणादीनि पूर्ववत्परिकल्पयेत्  ४४५
शिवमन्त्रं जपेत्पश्चाद्यथाशक्तिविशेषतः
प्रदक्षिणनमस्कारमात्मनोर्पणमेव च  ४४६
पूजाफलञ्च तत्सर्वमुदकेन प्रदापयेत्
अञ्जलिन्दक्षिणं हस्तं कुञ्चितं चतुरंगुलम्  ४४७
पुष्पवारिगृहीत्वाथ पादमूले प्रदापयेत्
चुळकोदमिति ख्यातं पूजयेत्तु प्रजापते  ४४८
संहिताञ्च ततः पूज्य गन्धपुष्पादिभिर्बुधः
एवं क्रमेण विधिवत् यजनं चोत्तमं भवेत्  ४४९
हविष्यान्तमशक्तश्चेत् दीपान्तं वापि पूजयेत्
एवं यः कुरुते नित्यं सपुण्यांगतिमाप्नुयात्  ४५०
इति अर्चनाविधिपटलस्त्रिंशत्तमः

पूर्वसन्ध्यार्च्चितं पुष्पं ईशानेन विसर्जयेत्
कनिष्ठा नामिका मद्ध्ये नवपुष्पं विनिर्गतम्  १
अंगुष्ठतर्जनीभ्यान्तु पर्युषितं विसर्जयेत्

विसर्जने तु तत्काले पुष्पं मूर्ध्नि निधापयेत् २
पूजापर्युषितं सर्वञ्चण्डेशाय प्रदापयेत्
क्षाळयेल्लिंगमस्त्रेण दक्षपाणितलेन वै ३
पीठं पाशुपतेनैव क्षाळयेत्परितः क्रमात्
लिंगशुद्धिर्भवेदेवं मन्त्रशुद्धिन्ततश्शृणु ४
ओंकारादिनमोन्तश्च मन्त्रास्सर्वे विशेषतः
यजने तु प्रयोक्तव्यामन्त्रशुद्धिरुदाहृता ५
योवेत्तिपञ्चशुद्धिञ्च सपूजां कर्त्तुमर्हसि
यजनेर्केन्दुसञ्चारे निष्फलन्तदवाप्नुयात् ६
चंद्रार्कनाशयजनं सर्वसिद्धिकरं शुभम्
संक्रान्ते विषुवेपूजानकर्तव्या कदाचन ७
अग्नौ वा निर्रृतौ वापि स्थित्वादेवं प्रपूजयेत्
आसनं कल्पयेदत्र शास्त्रदृष्टेन कर्मणा ८
आधारमासनं प्रोक्तमाधेयः परमश्शिवः
नादं लिंगमिति प्रोक्तं बिंदुः पीठमिति स्मृतम् ९
नशिवेन विनाशक्तिर्नशक्तिरहितश्शिवः
पुष्पेषु गन्धवत् ज्ञेया तिलेषु तैलवत्तथा १०
देहे च प्राणवच्छक्तिं तस्माद्युक्तं प्रपूजयेत्
शक्तिरेवासनं प्रोक्तं पञ्चनन्दादयः क्रमात् ११
पार्थिवाण्डमधः स्कन्दनाळं वात्यन्तमेव च
ततो नन्दासनं पूर्वं सिंहासनद्वितीयकम् १२
योगासनं तृतीयन्तु चतुर्त्थं पद्मासनं भवेत्
पञ्चमं विमलाख्यन्तु पञ्चभूतादिकास्त्विमे १३
वृत्ताकारमनन्तन्तु सूर्यकोटिप्रभावृतम्
अधस्तात्कल्पयेदूद्ध्वे सिंहासनं प्रकल्पयेत् १४
धर्मज्ञानञ्च वैराग्यमैश्वर्यञ्च चतुष्टयम्

शुक्लाभं पद्मरागञ्च हैमं मरतकप्रभम् १५
धर्मादीनान्तु वर्णं स्यादाग्नेयादिक्रमेण तु
पादाश्चतुष्ककोणेषु सिंहरूपेण कल्पयेत् १६
दंष्ट्राकराळवदना त्रिणेत्रा भीमरूपिणा
कोटिसिंहैर्विशेषेण प्रत्येकं परिवारका १७
अधर्माज्ञानवैराग्या अनैश्वर्यस्तथैळिका १८

अर्चनांगविधिपटलप्रारंभः

अर्चनांगविधिं वक्ष्ये संध्यालक्षणपूर्वकम्
कालाश्च द्विविधो ज्ञेयः स्थूलसूक्ष्मोपलक्षितः १
स्थूलश्च लौकिको ज्ञेयस्सूक्ष्मश्चाद्ध्यात्मकस्मृतः
सर्वं स्थूलेन कर्तव्यं तत्कालं प्रोच्यतेधुना २
स्वस्थं नराक्षिनिमिषं चतुर्भागं क्षणं स्मृतम्
तत् द्वयं तु लवं प्रोक्तं निमिषं तत् द्वयं भवेत् ३
निमिषैश्च त्रिभिः काष्ठा तिथिकाष्ठा कलास्मृता
त्रिंशत्कलामुहूर्तञ्च तदेवघटिकाद्वयम् ४
सार्द्धेन नाडिकासप्तयामन्तत्सन्धिरुच्यते
संधिरष्टौ समाख्याता त्वहोरात्रं प्रजापते ५
यजनं प्रतियामन्तु उत्तमं त्वितिकीर्तितम्
उदये चैव मद्ध्याह्ने प्रदोषे चार्द्धयामके ६
यजनम्मद्ध्यमम्मद्ध्ये उदये स्तमने धमम्
परार्थेष्वेषु कालेषु पूजयेत्तु विशेषतः ७
द्विकालमेककालं वा आत्मार्थयजनं स्मृतम्
द्वारपूजादिबल्यन्तं यावत्संध्याबलिं कुरु ८
ब्रह्मप्रीतिकरं पौष्टि द्विजानां प्रथमार्चनम्
शिवप्रीतिकरं राज्ञां द्वितीयार्चनशान्तिदा ९

रत्नाकरी च वैश्यानां तृतीयार्चाशुभप्रदा
शूद्राणां कामदञ्चैव गौरीप्रियतमं सुखम् १०
अर्द्धरात्रे विशेषेणाप्यर्चनन्तु विधीयते
सन्ध्यातिक्रमणाद्दोषः कृतञ्चेत्तु न दोषभाक् ११
पूर्वाह्ने चैव मद्ध्याह्ने प्रदोषे बलिमाचरेत्
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् १२
अर्द्धयामे बलिं कुर्यात् काम्यार्त्ती च विधानतः
नित्योत्सवेन युक्तञ्चेत्तस्मिन्संवत्सरोत्सवम् १३
शास्त्रातिक्रमणेनैव पूजावृद्धिर्न्नयच्छति
कारयेत्तद्विधानेनाप्यन्यथा च न कारयेत् १४
भास्करोदयमारभ्य यावत्तु दशनाडिका
प्रातः कालमिति प्रोक्तं पूर्वाह्नमिति कीर्तितम् १५
तत्कालन्तु समारभ्य यावत्तु दशनाडिका
मद्ध्याह्नमिति विज्ञेयं सायं कालमथोच्यते १६
मद्ध्याह्नान्तं समारभ्याप्याभूतदशनाडिका
सायं कालमिति प्रोक्तं प्रदोषमधुना श्रुणु १७
भास्करास्तमनात्पश्चात्सार्द्धेन सप्तनाडिका
प्रदोषमिति विख्यातमर्द्धयामन्ततश्श्रुणु १८
प्रदोषान्तं समारभ्यत्रिपादेन त्रिनाडिका
अर्द्धयाममिति प्रोक्तं मद्ध्यरात्रमिहोच्यते १९
अर्द्धयामं समारभ्य यावत्तु दशनाडिका
मद्ध्यरात्रमिति प्रोक्तं रात्रान्तकमथोच्यते २०
भास्करस्योदयात्पूर्वे त्रिपादेन त्रिनाडिका
रात्रान्तकमिति प्रोक्तं ज्ञात्वेवं सर्वमाचरेत् २१
जलसंग्रहणं पुष्पसंग्रहं यजनन्तथा
उदयादेवकर्तव्यं रात्रान्तेवाजलंग्रहेत् २२

वर्णगन्धरसैर्जुष्टं क्रिमिकेशादिसंयुतम्
तद्वारिवर्जयेत्तत्र दूषितं पल्वलोदकम्  २३
अशुचिस्थानसंयुक्तं सूर्यरश्मिविवर्जितम्
वर्जयेत्तु प्रयत्नेन संग्रहेत्तु मनोरमम्  २४
नद्यास्तटाके कूपे वा संभवन्तु जलं ग्रहेत्
वस्त्रपूतविहीनं यत्तज्जलं नोपयुज्यते  २५
उत्तमन्तु नदीतोयं तटाकम्मद्ध्यमं भवेत्
अधमं कूपतोयं स्यात्जलभेदं प्रशस्यते  २६
तीर्थञ्च स्थापनञ्चैव प्रोक्ततोयं ग्रहेत्पुनः
अस्तमानं समारभ्य यावत्सूर्योदयान्तकम्  २७
न ग्राह्यं स्थानवारि स्यात्पानवारि तथैव च
मिहिरोदयमारभ्य यावदस्तमनान्तकम्  २८
जलसंग्रहणञ्चैव चेष्टमे तत्प्रकीर्तितम्
रात्रौ तु न गृहे द्वारि चान्यधास्वर्णदीपकम्  २९
देवतास्थापनं तीर्थं प्रातः काले समाचरेत्
प्रातःकालं समारभ्य यावत्कौशिकनाडिका  ३०
तावद्वापि प्रकर्तव्यं तीर्थकार्यं प्रजापते
अंकुरार्पणकार्यञ्चाप्युत्सवस्याधिवासनम्  ३१
सायञ्च प्रारभेद्धीमान् रक्षासूत्रप्रबन्धनम्
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च  ३२
अधिवासनानि सर्वाणि मद्ध्यरात्रौ तु कारयेत्
वारणादिषु कर्माणि अर्द्धरात्रौ प्रजापते  ३३
रात्रान्तके विशेषेण सर्वदैवप्रियार्त्थकम्
कुर्यात्पञ्चमहाशब्दं तथाशुभनिवृत्तये  ३४
दारुजं पृथिवीजातं शंखजं चाब्जमुच्यते
आग्नेयं लोहजं प्रोक्तं वायव्यं वंशजं भवेत्  ३५

गेयं गगनजातिस्स्यात्पञ्चैते शब्दमुच्यते
सुषिरं गाननञ्चैव चर्मबंधन्तथैव च  ३६
तंत्रीवाद्यसमायुक्तं शब्दं पञ्चमहान्तकम्
संध्यालत्तणमाख्यातं पाद्यादीनां विधिं श्रुणु  ३७
कुंकुमञ्चन्दनं दूर्वा सिद्धार्त्थौ शीरकन्तथा
जलेनैव समायुक्तं पाद्यमुत्तममुच्यते  ३८
उशीरञ्चन्दनञ्चैव दूर्वासिद्धार्त्थकन्तथा
उदकेन समायुक्तं मद्धयमं पाद्यमुच्यते  ३९
चन्दनोशीरसंयुक्तं कन्नयसं पाद्यमुच्यते
प्रत्येकं धारणं श्रेष्ठं तस्यार्द्धं मद्धयमं भवेत्  ४०
तस्यार्द्धं कन्नयसं ज्ञेयं पाद्यद्रव्यं त्रिधोदितम्
द्विगुञ्जं माषकञ्चैव धारणं माषविंशतिम्  ४१
धारणाष्टफलञ्चैव फलमुष्टिरिहोच्यते
उशीरं जातिकर्पूरं त्रुटितंतुलवंगकम्  ४२
मुरेण सलिलोपेतं श्रेष्ठमाचमनीयकम्
एलालवंगकर्पूर उशीरं जातिसंयुतम्  ४३
जलेनैव समायुक्तं मद्धयमाचमनीयकम्
एलालवंगकर्पूरं जलैस्सार्द्धन्तु कन्नयसम्  ४४
एतेषान्तु प्रमाणन्तु पूर्ववत्समुदाहृतम्
अष्टद्रोणैरथाद्भिस्तु स्नानं कन्यसमुच्यते  ४५
द्विगुणं मद्धयमं ज्ञेयमुत्तमं त्रिगुणं भवेत्
आपत्तीरकुशाग्रैश्चाप्यत्ततैर्यवतण्डुलैः  ४६
तिलैस्सिद्धार्त्थकैश्चैव अर्घ्यमुत्तममुच्यते
लवसर्षपशाल्यद्भिस्तंडुलर्मद्धयमार्घ्यकम्  ४७
यवतण्डुलशाल्यद्भिर्भवेदर्घ्यन्तु कन्नयसम्
अर्घ्यद्रव्यप्रमाणन्तु पूर्ववत्परिकीर्तितम्  ४८

स्थापने चैव पूजान्ते विसर्जने तु प्रदापयेत्
त्रिप्रकारं ददेदर्घ्यं द्वितीयाचमनं तथा ४६
पाद्यं तथैकमाख्यातं नैवेद्यान्ते तथैव च
द्विधाचाचमनीयन्तु एकैकं पाद्यमुच्यते ५०
कर्पूरं कुंकुमं पत्रं खड्गञ्चैव पलत्रयम्
चन्दनोशीरलोहञ्च गन्धमुत्तममुच्यते ५१
उशीरं चन्दनञ्चैव कर्पूरञ्च फलत्रयम्
घनं खड्गसमायुक्तं मद्ध्यमं गंधमुच्यते ५२
हिमं घनञ्च कर्पूरं कन्नयसं गन्धमुच्यते
द्रव्यं प्रतिपलं श्रेष्ठं तस्यार्द्धं मद्ध्यमं भवेत् ५३
यदर्द्धमधमं ज्ञेयं गंधद्रव्यं त्रिधोदितम्
स्नाने चार्घ्ये विलेपे च त्रिषु गन्धन्तु दापयेत् ५४
गंधमेवं समाख्यातं पुष्पाणां विधिरुच्यते
श्वेतं रक्तं तथापीतं कृष्णञ्चेति चतुर्विधम् ५५
श्वेतपद्मञ्च पुन्नागं शंखपुष्पञ्च मल्लिका
नन्द्यावर्तं श्रियावर्तं मन्दारं बहुकर्णिका ५६
द्विकर्णी कुरवञ्जाति लक्ष्मी च वकुळन्तथा
श्वेतार्कम्मालती द्रोणमतसीश्वेतलोध्रकम् ५७
विषंगासीसकुसुमं भद्रञ्चैव महा तथा
एकानिश्वेतपुष्पाणि सात्विकानि विनिर्दिशेत् ५८
रक्तपद्मं पलाशञ्च रक्तोत्पलञ्च पाटली
मौसली चैव धुत्तूरं बृहतीकरवीरकम् ५९
व्याघ्री च रक्तमन्दारं पट्टिका वैजिका तथा
रक्तान्येतानि पुष्पाणि राजसानि विनिर्दिशेत् ६०
शौनक्यं कर्णिकारञ्च चंपकं हेमधुर्द्धुरम्
आरग्वधञ्चकोरण्डं शैर्यागिरिकर्णिका ६१

एतानि मिश्रपुष्पाणि कृष्णानि तामसानि वै
मोक्षदं सात्विकञ्चैव पौष्टिकं राजसन्तथा ६२
मिश्रपुष्पाणि सिद्धार्त्थं पत्रं पुत्रवियर्द्धनम्
बिल्वपत्रन्तपस्वी च सह पत्री च धातकी ६३
अपामार्गं कुशं दूर्वा पञ्चबिल्वं शमी तथा
तुळसी चंपकञ्चैव जंबुकन्नागनन्दिकौ ६४
एकपत्रारविन्दञ्च विष्णुक्रान्तिन्तथैव च
ततो नीलोत्पलञ्चैव तामसानि विनिर्दिशेत् ६५
नीलोत्पलसमं पुष्पन्न भूतन्न भविष्यति
पत्रजातिषु सर्वेषु बिल्वपत्रं विशिष्यते ६६
पुष्पजातिषु सर्वेषु करवीरं विशिष्यते
तत्पुष्पं हेमपुष्पञ्च निर्माल्यन्न भवेत्सदा ६७
कुंदाख्यं सुखबिल्वञ्च निजीवितकपित्थकम्
एतानि शूलपत्राणि पञ्चबिल्वमिति स्मृतम् ६८
यावत् शोभान्तथा कल्प्य तावदीशं प्रपूजयेत्
नन्द्यावर्त्तं श्रियावर्त्तं श्वेतार्कं श्वेतपंकजम् ६९
पुन्नागं पट्टिकाषाढमालतीमुदये ददेत्
पंकजं बृहतीव्याघ्री व्याघातं करवीरयुक् ७०
उत्पलं पाटली द्रोणं मद्ध्याह्ने तु प्रदापयेत्
चंपकं वैजिकापत्री धुत्तूरं बहुकर्णिका ७१
मालती मल्लिका चैव दापयेत्तु प्रदोषके
जाती नीलोत्पलञ्चैव बिल्वपत्रं कदंबकम् ७२
द्विकर्णी चैव भद्रञ्च अर्द्धयामे प्रदापयेत्
अन्यपुष्पाणि सर्वाणि अन्यसन्ध्यासु दापयेत् ७३
अतिपक्वमपक्वञ्च मुकुळञ्च विसर्जयेत्
केशकीटोपविद्धञ्च लूतासूत्रवृतानि च ७४

स्वयंपतितपुष्पाणि पञ्चितान्यपिवस्त्रके
एरण्डपत्रकानीतं करानीतमथापि वा  ७५
अशुचिस्थानकानीतं रोगार्तापहृतान्यपि
एकाहोषितपुष्पाणि वर्जयेत्तु विशेषतः  ७६
आवाहने तथार्घ्येषु पाद्ये स्नानेषु धूपके
विलेपने च नैवेद्ये विसर्गान्ते तथैव च   ७७
अष्टकालेषु पुष्पन्तु दापयेत्तु यथोदितम्
अर्कपङ्कजबिल्वञ्च नन्द्यावर्तञ्च पाटली  ७८
करवीरञ्चंपकञ्च नीलोत्पलमथाष्टकम्
पद्मञ्चैवार्कपुष्पञ्च नन्द्यावर्तञ्च पाटली  ७९
द्रोणपुष्पञ्च मन्दारं करवीरमथोत्पलम्
अष्टपुष्पमिति ख्यातं सर्वदेवात्मकं विदुः  ८०
करवीरद्वयञ्चैव नन्द्यावर्तन्तथैव च
महाद्रोणन्तथार्कञ्च मल्लिकाचंपकन्तथा  ८१
नीलोत्पलन्तथा श्रेष्ठमष्टपुष्पं सुयोजयेत्
मकुटे मूर्ध्निकर्णे च हृदयेनाभिगुह्यके  ८२
जानुपादद्वये चैव अष्टपुष्पं सुयोजयेत्
अर्कपुष्पञ्च बिल्वञ्चापामार्गकरवीरकम्  ८३
पंकजन्नागनन्दी च नन्द्यावर्त्तञ्च मल्लिका
अष्टपुष्पन्तथावत्सप्रातस्सन्ध्यासु पुष्पकम्  ८४
द्रोणपुष्पन्तथा चैव मन्दारं शंखपुष्पकम्
श्वेतं पलाशधुत्तूरं व्याख्यातं व्याघ्रपुष्पकम्  ८५
शमी चैव तु मद्ध्याह्नेऽप्यष्टपुष्पं सुयोजयेत्
अपराह्णार्चना पुष्पं भूमूलञ्चंपकन्तथा  ८६
वकुळं कृष्णवल्ली च मल्लिका द्वयमेव च
जाती च छान्दसंयुक्तं साये चैवार्द्धयामके  ८७

पुष्पाभावे तु पत्रैश्च पत्राभावे तथैव च
सर्वबीजांकुरैः पत्रैरर्चयेत्तु महादरात् ८८
पत्रच्छेदेन संपूज्य राक्षसानान्तु नाशनम्
पुष्पच्छेदो न कर्तव्यस्सर्वसंपत्समृद्धये ८९
पुष्पलक्षणमाख्यातं श्रुणु धूपस्य लक्षणम्
चन्दनञ्चैव निर्यासं कुन्दुरूक्षञ्च कुंकुमम् ९०
मेघञ्च कृष्णलोहञ्च कर्पूरञ्च क्रमेण तु
सप्तषट्भूतवेदांश्च अग्न्यश्विन्यंबरांशकान् ९१
आहृत्यचूर्णधित्वा तु मधूना च परिप्लुतम्
एतच्छीतारिधूपन्तु शिवप्रीतिकरं शुभम् ९२
कृष्णलोहञ्च निर्यासं चन्दनञ्च क्रमेण तु
व्योमपक्षाश्विनी भागमीषत्कर्पूरमिश्रितम् ९३
उत्तमं धूपमाख्यातं मधुना च परिप्लुतम्
चन्दनोशीरसंयुक्तं लघुयुक्तं मधुप्लुतम् ९४
भागन्तु पूर्ववत्प्रोक्तं मद्धयमं धूपमुच्यते
गुग्गुलुं घृतसंयुक्तमधमं धूपमुच्यते ९५
दीप्तांगारकसंयुक्तं घराटां वामकरेण तु
धूपपात्रं समादाय दापयेद्विधिवत्बुधः ९६
अपिलाघृतेन दीपं स्यात्सितरक्तासितासु वा
अजाघृतमलाभे तु शुद्धतैलेन वा पुनः ९७
अपिलायाघृतं श्रेष्ठमन्यासां मद्धयमं भवेत्
अधमं स्यादजासर्पिश्शुद्धतैलन्तु कन्नयसम् ९८
सात्विकं राजसञ्चैव तामसञ्च क्रमेण तु
कर्पूरावर्तितं दीपं दापयेत्सर्वसिद्धिदम् ९९
श्रेष्ठं युगांगुलज्वाला मद्धयमन्तु गुणांगुलम्
अधमं द्व्यंगुलज्वाला दीपमेवं प्रकीर्तितम् १००

वृक्षबीजोद्भवैः स्नेहैश्शिवदीपन्तु वर्जयेत्
माहिष्येन घृतेनैव शिवदीपन्न कारयेत्  १०१
हीनवित्ते तथाश्रेष्ठं निर्गन्धं वासुगन्धयुक्
पूर्वसंधिषु गान्धारम्माळवञ्च ततः परम्  १०२
मद्ध्याह्ने तर्करागं स्यात्कौशिकञ्च ततः परम्
सायाह्नेचैन्दळं प्रोक्तमर्द्धरात्रे तु पञ्चमम्  १०३
भरतोक्तं तथानृत्तं संध्यायां प्रतिकारयेत्
एलालवंगकर्पूरं जातितक्कोलचूर्णकम्  १०४
मधूषट्खरडसम्मिश्रं मुखवासमिहोच्यते
पनसोनाळिकेरञ्च मातुळंगद्वयं तथा  १०५
नारंगद्वयरंभाम्रलिकुचं तिंत्रिणीफलम्
फलोदकमिति प्रोक्तं गंधोदकं ततश्श्रुणु  १०६
चन्दनञ्चैव कुष्ठञ्च तक्कोलञ्चैव कुंकुमम्
कर्पूरं पिप्पली चैला कस्तूरी चागरुं तथा  १०७
लवंगञ्च तथोशीरं चंपकञ्चैव मौकुळम्
इत्थं गन्धोदकं प्रोक्तं पुष्पोदकविधिं श्रुणु  १०८
कुसुमञ्च स्वकारञ्च मल्लिका चैव पाटली
केतकी करवीरञ्च पुन्नागं कुन्दपुष्पकम्  १०९
नन्द्यावर्तं श्रियावर्तं मन्दारं करवीरकम्
जातिनीलोत्पलं पद्मं हरिबेरादिमिश्रितम्  ११०
इत्थं पुष्पादकं प्रोक्तं पत्रोदकं ततश्श्रुणु
गोक्षुरा सहदेवी च विष्णुक्रान्तिकृताञ्जली  १११
शिरीषेंदीवरं रौद्री रेभिर्मार्जनमुच्यते
दूर्वांकुरञ्च पद्मञ्च कुशाग्रं गौरसर्षपम्  ११२
भद्राकृतांजली युक्तं परिमार्जनमुच्यते
तुळसी बिल्वपत्रञ्च तमालञ्च तपस्विनी  ११३

अपामार्गं शमीयुक्तं पत्रतोयमिहोच्यते
पलाशोदुंबराश्वत्थमधूकं प्लक्षपाटली ११४
जंबूत्वक्भिस्समायुक्तं कषायोदकमुच्यते
पर्वते च नदीतीरे वल्मीके कर्कटावटे ११५
वृषशृंगे च सुक्षेत्रे समुद्रे गजदन्तके
अष्टमृद्भिस्समायुक्तम्मृदंभः परिकीर्तितम् ११६
यवनीवारमुद्गञ्च सिद्धार्थं गुळव्रीहिणी
सुगन्धं हैमशालिन्तु बीजोदकमिदं शुभम् ११७
आवाहनार्घ्यपाद्येषु स्नाने चाचमने तथा
नैवेद्ये च विसर्गान्ते वारिसप्तसु योजयेत् ११८
माणिक्यञ्चेंद्रनीलञ्च वैडूर्यञ्च प्रवाळकम्
मुक्तावज्रन्ततः पुष्यरागं स्फटिकखण्डकम् ११९
रत्नम्मरतकञ्चैव नव तत्रादिपञ्चकम्
पञ्चरत्नमिति ज्ञेयमाद्याभावे द्वितीयकम् १२०
रत्नोदकमिति प्रोक्तं लोहोदकमतः परम्
स्वर्णं रजतताम्रं वा आयसन्त्रपुसीसकम् १२१
आरकूटन्ततः कांस्य युक्तं लोहोदकं स्मृतम्
सौराष्ट्रमञ्जनं श्यामा हरितालम्मनश्शिला १२२
गैरिकारोचनाचान्ते धात्वोदकमिति स्मृतम्
शूलं कपालहरिणी पिनाकं परशुस्तथा १२३
पाशाक्षमालं हेमाश्च तैरेवास्त्रोदकं भवेत्
उशीरो हरिबेरञ्च विपरी पुष्करस्तथा १२४
श्रीकण्ठश्चेति पञ्चैतैर्युक्तम्मूलोदकं स्मृतम्
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् १२५
एभिर्द्रव्यैस्समायुक्तं ब्रह्मकूर्चमिति स्मृतम्
कुशकाशास्तथा दूर्वा व्रीहयो मौञ्जयस्तथा १२६

विश्वामित्रयवाश्चैव सप्तदर्भाः प्रकीर्तिताः
कूर्चं कृत्वा तु सर्वेषां कुशोदकमिति स्मृतम् १२७
ओदनान्नाभिषेकन्तु आयुरारोग्यवर्द्धनम्
अन्नं प्राणात्मकं श्रेष्ठं सर्वजन्तु प्रतिष्ठितम् १२८
तस्मादन्नाभिषेकन्तु मम प्रीति प्रदायकम्
अन्नरूपं विशेषेण मम रूपं द्विधा स्मृतम् १२९
अन्नपूजापरं श्रेष्ठन्न भूतन्न भविष्यति
तस्मात्सर्वप्रयत्नेनाप्यन्नैरन्नाभिषेचनम् १३०
अन्नपूजाविधि प्रोक्तमुदकादभिषेचनम्
पूर्ववत्संस्कृतन्तोयं हेमपात्रे सुपूरितम् १३१
अथवारजते वापि ताम्रे वायज्ञवृक्षके
तज्जलस्य तु मद्ध्यस्थं स्थापयेद्दक्षिणेश्वरम् १३२
दूर्वातिलाक्षतं पुष्पं महेशाय प्रदापयेत्
गन्धं पुष्पञ्च धूपञ्च दीपञ्चैव निवेदयेत् १३३
सजलं सफलं साज्यं गुळान्नञ्च निवेदयेत्
जलपूजार्चनन्नित्यं राजराष्ट्राभिवृद्धिदम् १३४
जलार्चनञ्जपात् गुह्यं स्थितिकारं सुशोभनम्
सर्वसिद्धिकरं शुद्धं सर्वरोगविनाशनम् १३५
त्रियंबकमुमारुद्रामापोहिष्ठेतिमन्त्रकम्
उमारुद्रायकद्रुद्रमिळेशञ्जुहुयोदकम् १३६
श्रीरुद्रञ्चमकञ्चैव त्र्यक्षरं पञ्चशान्तिकम्
हिरण्यं पुरुषं सूक्तं जातवेदं त्रियक्षरम् १३७
पृथक्पृथक्सकृत् जप्त्वा अभिषेकं शनैश्शनैः
जलार्चनमिदं प्रोक्तं सर्वशान्तिकरं शुभम् १३८
चण्डरुद्रो महामेढ्रो विबुधः पिंगळोत्तमः
विश्वरूपोविशालाक्षो भूतेशश्चाखुवाहनः १३९

एतद्विमानबालांश्च पूर्वादीनि क्रमान्न्यसेत्
वृक्षस्य मूलसेचेन यथाशाखोपशाखिनी १४०
तथाशास्त्रोक्तमार्गेण सृष्टिस्थितिविधानतः
आसनं पूर्वमुद्दिष्टमावाहनमनन्तरम् १४१
तृतीयं स्थापनं प्रोक्तञ्चतुर्थं सन्निधानकम्
पञ्चमं सन्निरोधञ्च षष्ठं स्यात्पाद्यमेव च १४२
सप्तमं स्यादाचमनमर्घ्यमष्टममुच्यते
नवमं स्थानकर्म स्याद्दशमं वस्त्रवेष्टनम् १४३
एकादशन्तु गन्धं स्याद्द्वादशन्त्वंगभूषणम्
त्रयोदशन्तु पुष्पं स्याद्धूपदीपञ्चतुर्दशम् १४४
नैवेद्यं पञ्चदशकं षोडशं बलिरेव च
अग्निकार्यं सप्तदशं गेयमष्टादशं भवेत् १४५
एकोनविंशतिं विद्यान्नित्योत्सवविधिं परम्
पादुकाराधनं विंशदेकविंशत्प्रदक्षिणम् १४६
द्वाविंशतिर्नमस्कारन्त्रयोविंशत् जपं भवेत्
चुळुकोदञ्चतुर्विंशदुपचाराः प्रकीर्तिताः १४७

इति अर्चनांगविधिपटल एकत्रिंशत्तमः

## सायरक्षाविधिपटलप्रारंभः

सायरक्षाविधिं वक्ष्ये सर्वप्राणिहितावहम्
सर्वरोगनिवृत्यर्थं सर्वदासस्य वर्द्धनम् १
लोकस्य नयनोच्छिष्टनिवृत्यर्थं प्रदोषके
कर्तव्यासायरक्षा तु पूजाद्रव्यसमन्विता २
लिंगे चोत्सवबेरे वा नटेशोत्सवयेत्सुधीः
सायं कालेर्चयेदेवं देवस्यावरणेन च ३
परिवारन्न कर्तव्यमर्चयेत्तु चतुर्मुखम्

रवेरस्तमयात्पूर्वे सायरक्षा त्रिनाडिका ४
दीपार्चनार्द्धनाडी च लंबपूर्वात्रिपादकम्
दीपोपचारार्द्धनाडी मद्दळञ्चैव ताळकम् ५
गीतञ्च शुद्धनृत्तञ्च एकनाडी प्रशस्यते
परिवेषं पदानाडी सायरक्षा विधिक्रमम् ६
महाप्रदोषे संप्राप्ते पूजासर्वं त्रिनाडिका
त्रिपादे सायरक्षान्तु दिवान्ते तु प्रजापते ७
मराटपस्येशदिग्भागे मंटपञ्चतुरश्रकम्
कृत्वा तु भूतपात्राणि संगृह्यात्रैव विन्यसेत् ८
सौवर्णं राजतन्ताम्रम्मृरामयं कांस्यमेव च
विंशत्यंगुलविस्तारं श्रोष्ठमेकाङ्गुलं भवेत् ९
प्रोक्षयेत्पुरुषेणैव धेनुमुद्रां प्रदर्शयेत्
दीपाधारं ततः कुर्यात् शालिपिष्टमयेन तु १०
चतुरंगुलविस्तारमुत्सेधञ्चांगुलं भवेत्
श्रोष्टमद्ध्यांगुलं प्रोक्तं पूर्णचंद्रवदाकृतिः ११
पञ्चदीपसमायुक्तमथवा चैकदीपकम्
तन्मद्ध्ये निक्षिपेद्दीपं गोघृतेन समायुतम् १२
विन्यसेद्दीपमेकन्तु तिलमेकन्तु निक्षिपेत्
सर्षपञ्चैकपात्रे तु राजिकालवरणन्तथा १३
कार्पासबीजमेकन्तु निक्षिपेद्धृदयेन तु
दीपं संपूज्य विधिवदग्निबीजेन बुद्धिमान् १४
शंखदुन्दुभिनिर्घोषैस्ततो मंगळवाचकैः
स्तोत्रध्वनिसमायुक्तं वेदध्वनिसमन्वितम् १५
पाद्यं दद्यात्पुरास्त्रेण नेत्रेणाचमनन्ददेत्
द्रव्याराययथाक्रमेणैवाप्यावृत्या वृतलिंगके १६
दीपेनैव त्रिधाभ्राम्यशिखामन्त्रेण बुद्धिमान्

नीराजनन्तु कर्तव्यं क्रमेण देशिकोत्तमः १७
भस्मानि दापयेच्छंभोर्दिग्बंधं चास्त्रमन्त्रतः
ललाटनयनस्योर्ध्वे रक्षया किंप्रयोजनम् १८
सर्वद्रव्यं हुतं वह्नि न दोषाय प्रकल्पयेत्
ललाटनयनस्योर्ध्वे उष्णीषं पट्टबन्धके १९
वर्तुळञ्चोर्ध्ववक्त्रे च त्रिपुंड्रं पूर्ववक्त्रके
त्रिशूलं दक्षिणे वक्त्रे पश्चिमे चतुरश्रकम् २०
उत्तरे दीपमेवन्तु सर्वांगोद्धूळनं कुरु
मूर्ध्नि चैव ललाटे च कर्णे च हृदये तथा २१
बाहुद्वयौ च नाभौ च पादद्वयौ च वादयेत्
गंगाचंद्रमपस्मारं नागकूर्मन्तु दापयेत् २२
सर्वांगं लेपयित्वा तु बृहत्सामेति मन्त्रतः
दर्पणं दर्शयेदन्ते तदन्ते छत्रदर्शनम् २३
तदन्ते चामरञ्चैव तदन्ते व्रजनं तथा
व्यञ्जनञ्चाष्टपुष्पञ्च स्तोत्रञ्चैव निवेदयेत् २४
अथवा द्रव्यवर्ज्यन्तु दीपमेकं प्रयोजयेत्
तत्भस्म च समादाय स्वल्पञ्चण्डेश्वरस्य तु २५
ततो भक्तजनेभ्यश्च दद्यात्देशिकपूर्वकम्
रात्रौ च परिवेषे तु कर्तव्यं बिंबकेग्रतः २६
दीपकाले न कर्तव्यं कर्तव्यं बिंबनाशकृत्
वाहयित्वा तु नारीभिः पात्राणि भूसुरैस्तु वा २७
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्
आलयं तु परिभ्राम्य परिवेषक्रमेण तु २८
पीठाग्रे वाध्वजाग्रे वा प्राकाराणान्तु बाह्यके
निक्षिपेत्तत्र दीपन्तु तिलञ्चैव तु सर्षपम् २९
राजिकालवणञ्चैव कार्पासबीजसंयुतम्

दीपाग्निनादहेत्तत्राप्यग्निबीजेन बुद्धिमान् ३०
लोकोत्पतिस्थितिकरं सर्वसंपत्करं वरम्
पादप्रक्षाळनं कृत्वा प्रविशेदालयं प्रति ३१
नागदीपं समारभ्य घटदीपवशानकम्
दीपानाराधनं कुर्यात् नमस्सर्पादिमन्त्रतः ३२
प्रथमे षोडशकला द्वितीये पक्षवासरः
रुद्रं तृतीये निर्दिष्टं चतुर्थे सप्तमातरः ३३
निवृत्यादिकला पञ्च ततो मध्ये सरस्वती
प्रथमं लोकरक्षार्थं द्वितीयं ग्रामरक्षकम् ३४
तृतीयं भूतरक्षार्थं त्रिवारं त्रिःप्रदक्षिणम्
प्रथमं दक्षिणे नेत्रे द्वितीयमपसव्यके ३५
तृतीयं फालदेशे तु गळे चैव चतुर्थकम्
पादादिमस्तकान्तं वा त्रिवारं भ्रामयेद्बुधः ३६
मस्तके च ललाटे च कण्ठे वक्षसि पादयोः
प्रत्येकं प्रणवाकारं दीपं संवेदयेत् बुधः ३७
नीराञ्जनस्य पात्रे तु वृत्ते स्यात्सूर्यमण्डलम्
मध्ये च वह्निदैवत्यमारात्रिके तथैव च ३८
नवदीपे नवशक्तिस्सप्तदीपे च मातरः
पञ्चमे पञ्चभूतं स्यात्तत्वत्रयं त्रिदीपके ३९
स्वाहादेव्येकदीपे च पूजयेत्तु स्वनामतः
पात्रेण दीपमादाय देवस्य शिरसोपरि ४०
परिभ्राम्य तथामंत्री शिखामन्त्रेण बुद्धिमान्
एवं यः कुरुते मर्त्यस्सोन्ते रुद्रपदं व्रजेत् ४१
इति सायरक्षाविधिपटलो द्वात्रिंशत्तमः

## नैवेद्यविधिपटलप्रारंभः

श्रुणु वद्त्येऽथ नैवेद्यविधानन्तत्समासतः
आत्मनो हितमन्विच्छेत्तत् द्रव्यं प्राक्सुपक्वकम् १
दापयेत्परमेशाय तत्द्रव्यं सर्वसिद्धिदम्
अत्भुक्तश्चेत्तदान्ने तु तद्द्रव्यं त्तीयते धनम् २
हेमशाली महाशाली रक्तशाली तथैव च
सितशाली कृष्णशाली सौगंधिकमथोत्तमम् ३
वैणवञ्च यवं चैव ईषत् शाली च माधुरी
कुस्तुंबुरी च नीवारं मद्ध्यमञ्चेति कीर्तितम् ४
विलाळी सारिणी व्रीहि रीषत्कृष्णञ्च षष्ठिकम्
तथा वैसूकरी व्रीहिः ह्रस्ववक्त्री च कन्यसः ५
एतेषां तण्डुलं श्रेष्ठं नैवेद्याय शिवस्य तु
निधाय भूतले शुद्धे सन्तप्तं रविरश्मिना ६
चातुर्वर्णोद्भवस्त्रीभिस्सम्यगभ्युद्त्यलूखले
प्रहृत्यमुसलेनैव कणकंबूश्च वर्जयेत् ७
द्विशतैः पञ्चविंशत्या व्रीहिभिश्शुक्तिरुच्यते
तलं प्रकुञ्चः प्रसृतिः कुडवञ्च तथाञ्जलिः ८
प्रस्थं पात्राढकौ शैवं द्रोणं खारिक्रमेण तु
शुक्त्या च गणयेन्मंत्री द्विगुणं तु पृथक्पृथक् ९
खारित्रः यन्तु भारं स्यादेवं हि परिमाणकम्
नित्यं नैमित्तिकं काम्यं नैवेद्यं त्रिविधं भवेत् १०
नित्यं नवविधं प्रोक्तं तथा नैमित्तिकन्नव
यथेष्टं काम्यमित्युक्तं तेषां भेदस्तथोच्यते ११
आढकेनैव नैवेद्यमधमाधममुच्यते
कनिष्ठमद्ध्यमं शैवं द्रोणं स्यादधमोत्तमम् १२
खारिमद्ध्याधमञ्चैव सार्द्धार्धमथमद्ध्यमम्

मद्ध्यमोत्तममित्युक्तं चतुर्द्रोणैः कृतं हविः १३
उत्तमाधममित्युक्तं पञ्चद्रोणैः कृतं हविः
षट् द्रोणैस्तंडुलैस्सिद्धं भवेदुत्तममद्ध्यमम् १४
उत्तमोत्तममित्युक्तमष्टद्रोणैस्तु तण्डुलैः
एवं विशेषतः प्रोक्तं नित्यं नवविधन्तथा १५
अष्टद्रोणमथारभ्य यावद्वृद्ध्या नवोदिताः
यावत्द्वादशभारान्तमधमादित्रयं त्रयम् १६
नैमित्तिके तु नैवेद्यं नवधा समुदाहृतम्
प्रार्थितं यत्प्रमाणेन तत्प्रमाणन्तु काम्यकम् १७
ततः कुडवयुक्प्रस्थं पैशाचासनमुच्यते
पात्रन्तु चरुरित्युक्तमाढकं हविरुच्यते १८
नकल्पयेत्तु नैवेद्यमाढकार्द्धन्न तंडुलैः
प्रागुक्तविधिनापूर्वं स्नात्वा तु परिचारकाः १९
शुक्लवस्त्रधराश्चैव शुक्लयज्ञोपवीतकाः
पवित्रपाणिनस्सर्वे पच्यन्ते हविषं क्रमात् २०
पूरयेत्तु जलद्रोणीं वस्त्रपूतैर्जलेस्तथा
पात्रशुद्धिं हृदा कृत्वा त्ताळयेयुश्च तंडुलान् २१
जलेनैव तु षट्कृत्वः त्ताळयेयुः पुनःपुनः
तंडुलस्य प्रमाणस्याप्यर्द्धाधिकसमञ्जलम् २२
शोधयेत् बीजमुख्यैश्च पात्रस्थजलतंडुलान्
तंडुलैरर्चयेच्चुल्लीं सद्योजातेन देशिकः २३
पात्राण्यारोप्य शिरसा वह्निमन्त्रेण निक्षिपेत्
विस्फुलिंगयुतैश्चैव पिपीलिकायुतैस्तु वा २४
कृमिजुष्टैश्च काष्ठैश्च पावकञ्च नदीपयेत्
केशकीटोपविद्धञ्च शर्करा तुषकंबुयुक् २५
अतिपक्वमपक्वञ्च नैवेद्यं परिवर्जयेत्

भेद्यन्तु वर्णगंधाद्यैश्शीतळान्नं निवेदयेत्  २६
केशेन मरणं विद्धिकीटेन रिपुवर्द्धनम्
शर्करासस्य हानिस्स्यात् तुषेण ग्रामनाशनम्  २७
कंबुनाज्वरपीडा च अतिपक्वैर्दरिद्रता
अपक्वेन प्रजानाशं शीतळेन धनक्षयम्  २८
अत्युष्णेन भवेद्दुःखं भिस्सटासर्वनाशनम्
अत्युष्णानष्टहीनं यत्तदन्नं परिकल्पयेत्  २९
शुद्धोदनक्रमं ह्येवं पायसान्नन्ततश्श्रुणु
तण्डुलत्रिगुणं क्षीरं क्षीरार्द्धन्तोयमाहरेत्  ३०
तोयार्द्धं मुद्गभिन्नं हि घृतयुक्पायसान्नकम्
तण्डुलार्द्धं समाख्यातं मुद्गसारन्तु निर्मलम्  ३१
पक्वान्ने लवणोपेतं मरीचस्य तु चूर्णयुक्
तिलचूर्णकमिश्रन्तत् कृसरान्नमिति स्मृतम्  ३२
तण्डुलस्य त्रिभागैकं मुद्गसारविमिश्रितम्
मुद्गान्नं पक्वमित्युक्तं प्रागुक्तपयसान्वितम्  ३३
क्षीरार्द्धंगुळखण्डन्तु गुळार्द्धं घृतमिश्रकम्
कदळी फलमत्रैव सम्मिश्रन्तद्गुळोदनम्  ३४
एवं पञ्चहविः प्रोक्तन्नैवेद्याय प्रजापते
कृसरान्नं सद्यवक्त्रे वामवक्त्रे गुळोदनम्  ३५
पायसमघोरवक्त्रे तु शुद्धान्नं पुरुषास्यके
मुद्गान्नमीशवक्त्रे तु पञ्चवक्त्रे निवेदयेत्  ३६
यद्वक्त्रं द्वारसंबन्धं तद्वक्त्रन्तु निवेदयेत्
वासुकी पञ्चवक्त्रेषु चैकवक्त्रे तु भुक्तिदम्  ३७
तस्मान्नैवेद्यकन्दत्वा सदाशिवैकवक्त्रके
अग्रेविन्यस्य नैवेद्यं नेत्रेण च निरीक्ष्य च  ३८
रसानाचार्य जिह्वाग्रात् भक्षायामि प्रजापते

यजनान्ते प्रदातव्यन्नैवेद्यं सोपदंशकम् ३९
तेनैव प्रीतिमतुलां प्राप्तोऽस्मि च न संशयः
अन्यथा सकलान्जीवान् दहेयमविचारतः ४०
मुद्गमाषकुळत्थञ्च निष्पावं शिंबमाढकम्
तथा वैराजमाषञ्च तेषां भिन्नविमिश्रितम् ४१
कूश्माराडपनसालाबुकालिंगं बृहतीद्वयम्
त्रपुषं कर्करी चैव सतुषं विदुळन्तथा ४२
कदळीकारवी व्याघ्री आम्रमुर्वारुकन्तथा
विल्लिमूलन्तथा कन्दमूलमन्यद्रसैर्युतम् ४३
नारिकेळामृताकाळी चूतके सरकीद्वयम्
बिलाळकारवल्ली च सिसुकन्दञ्च पिरिडका ४४
पटोलञ्चैव बिंबञ्च अळिकं ह्रस्वशूलिका
कारवल्ली च पत्रञ्च लाकुपत्रञ्च बाष्पदम् ४५
औदुंबरस्य माषाढकराटकार्कोटसर्वशम्
प्रस्थस्येकपलं प्रोक्तम्माद्भवं वा पक्वमेव वा ४६
यथालाभोपदंशैश्च पाचयेत्तु विशेषतः
सर्वोपदंशकान्युक्तान्मरीचिलवणान्वितान् ४७
जीरकाम्ररसोपेतान्यथायोगं पचेत्पृथक्
कुलत्थचूर्णसिद्धार्त्थम्मरीचीजीरकान्वितम् ४८
सिता च लवणञ्चैव आम्रं तक्रे सुयोजयेत्
एवं पचेद्वैसूपन्तु कदळी पनसे क्षिपेत् ४९
गवांघृतं निवेद्यानाञ्च तु षष्ट्यंशमुच्यते
गुळमाषं कलांशं स्यादष्टांशन्दधिकीर्तितम् ५०
वस्वंशं सूपमित्युक्तमेवं संकल्पयेत् बुधः
पक्वान्ने तु बहिस्तोयैश्शुद्धिं कृत्वा विशेषतः ५१
त्रिपुराडं कारयेद्धीमान् अस्त्रेणैव तु मन्त्रतः

परिचारकान् समाहूय मार्गान्नयाशोद्धय भूतलम्  ५२
संप्रोन्दय शुद्धतोयेन शंखकाहळनादयुक्
हुंकारेण तु मन्त्रेण सर्वमुत्थापयेत्ततः  ५३
नैवेद्योत्थापने काले लंघने च नरे द्विजाः
सस्यानान्नाशनं प्रोक्तं निम्माल्यन्तदुदाहृतम्  ५४
तत्द्रव्यं यर्जयित्वा तु मूलमन्त्रं शतञ्जपेत्
पश्चात्पक्वामृतन्धीमान् शिवाय विनिवेदयेत्  ५५
मगटपे दन्हिणे भागे न्नयसेन्मंत्री यथाक्रमम्
द्रव्यलन्हणयुक्ताभे न्यसेन्मंत्री यथाक्रमम्  ५६
ओदनेषूपदंशेषु घृतेनैवाभिघारयेत्
सौवर्णे राजते ताम्रे ह्यथवा कदळीदळे  ५७
शुद्धकांस्ये न वा कुर्यात्पात्रमादाय बुद्धिमान्
त्रिपाद्यूर्द्ध्वे स्थले वाथ स्थलिकां स्थापयेत्ततः  ५८
दर्व्यायुक्तन्न वा कुर्यात्पात्रमन्नेन पूरयेत्
हविं कृत्वा चतुर्भागं चतुर्त्थांशं निवेदयेत्  ५९
उपदंशैस्समायुक्तं गोघृतेन समन्वितम्
कदळीपनसाम्राणां स्वयंपक्वफलैर्युतम्  ६०
सूपेनदधिसंयुक्तन्तरुणाम्रफलैर्युतम्
आम्रकेन समायुक्तं हृदयेन निवेदयेत्  ६१
एकेनैव तु भागेन परिवारबलिर्भवेत्
एकेन चाग्निकार्यार्त्थं पात्रशेषन्तु शेषितम्  ६२
तच्छेषं परिचाराणां भोजनायेति कीर्तितम्
ताम्रेकांस्येऽथवा शुद्धे मृत्भाराडे पूरयेज्जलम्  ६३
नद्यांसरसिकूपे वा पानीयमुत्तमं स्मृतम्
वस्त्रपूतं सुशीतं स्यादेलादिपरिसेवितम्  ६४
अनेन विधिनायुक्तं पानीयन्दापयेत्प्रभाः

आचमनन्ततः कृत्वा चण्डेशाय निवेदयेत् ६५
ततो वै भूतबल्यर्त्थमन्नं गन्धादिकन्तथा
गृहीत्वा द्वारपालानान्दापयेत्तु बलिं पुनः ६६
अथवा नन्दिमहाकाळौ अस्त्रेणैव बलिं पुनः
मन्त्रोदनावसाने च बलिकर्म सुयोजयेत् ६७
बकारंबलदंविद्धि लिकारं ध्यानसंभवम्
बकारलिकारसंयुक्तं बलिशब्दः प्रकीर्तितः ६८
आदानध्यानसंबन्धात् बलिशब्दं प्रकीर्तितम्
वृषादिबलिपीठान्तं बलिं कृत्वा विशेषतः ६९
पूर्वे तु वृषभे चैव अगस्त्यञ्चाग्निगोचरे
याम्ये कात्यायनी प्रोक्ता नैर्ऋत्यान्तु गणेश्वरम् ७०
ब्रह्माणं पश्चिमे चैव अनिलेषु गुहन्तथा
उत्तरे केशवश्चैव भास्करं शाङ्करे पदे ७१
बाह्ये पीठं प्रविश्याथ उत्तराभिमुखे स्थितः
आमोदश्च प्रमोदश्च प्रमुखो दुर्मुखस्तथा ७२
अविघ्नो विघ्नकर्ता च बलिपीठाधिदेवताः
इंद्रादिलोकपालांश्च पीठस्थस्वस्वदिग् स्थितान् ७३
अक्षद्वयप्रमाणेन बलिरेवं प्रकीर्तितम्
पतंगञ्च भुवंगञ्च ऊर्ध्वाधस्संप्रकल्पयेत् ७४
द्विभुजौ च द्विनेत्रौ च सर्वाभरणभूषितौ
रक्ताद्घोरविवर्णश्च तद्वर्णांबरभूषितौ ७५
दक्षिणे तु शिरोन्यस्त्वा पादौ चैवोत्तरे तथा
द्विनेत्रौ पीतवर्णौ च भद्रकायौ भयं करौ ७६
कृताञ्जलिपुटोपेतौ शोधयेत्तत्प्रजापते
प्रागुक्तलक्षणोपेतौ ध्यायेतेतौ प्रजापते ७७
नित्ये दक्षिणपादे च बाह्यपादांस्तु वामतः

ग्रामे च द्विभुजं विद्यात् नगरादौ चतुर्भुजम् ७८
पत्तने षट्भुजं विद्यात् यथालाभं प्रकल्पयेत्
स्वायंभुवे दैविके च गाणवे चार्षके तथा ७९
द्विभुजौ च त्रिणेत्रौ च ईळि स्यादधिदैवतम्
चतुर्भुजयुतौ चैव खट्गखेटकधारिणौ ८०
एवन्ध्यानत्वाविशेषेण पूजयेत्तु समासतः
नित्योपादानकौ चैव द्वारपार्श्वद्वयेन्यसेत् ८१
द्विभुजौ च द्विनेत्रौ च श्वेताभौ चोग्ररूपिणौ
किंकिणी मालया भूष्यौ व्याळाभरणभूषितौ ८२
अथवा न्यप्रकारेण लक्षणं श्रुणुपद्मज
चतुर्भुजौ भद्रकायौ मातुलुंगसमप्रभौ ८३
पूजयेत् द्वारपार्श्वे तु ग्रामादिषु च पूर्ववत्
द्विनेत्रौ द्विभुजौ सौम्यौ नीलशोणप्रभान्वितौ ८४
दंष्ट्राकराळवदनौ किंकिणी मालयान्वितौ
तद्वर्णांबरदीप्तांगौ किरीटमकुटान्वितौ ८५
षट्भुजौ भीमकायौ वा पक्वबिंबफलाकृती
दण्डन्यास्तैकपादौ च दण्डविन्यस्तकूर्परौ ८६
सव्ये वामे च तर्जन्या युक्तौ दोर्दण्डमण्डितौ
सव्येंकुशं तथाखट्गं वामे पाशञ्च खेटकम् ८७
द्वारपार्श्वे यजेद्धीमान् पत्तने च विशेषतः
द्वारस्य मद्ध्यमे वापि दक्षिणे वा तथोत्तरे ८८
स्थानशुद्धिन्ततः कृत्वा तस्योद्ध्वे तु प्रकल्पयेत्
तस्योद्ध्वे बलिदानन्तु द्वारदेवादितृप्तये ८९
नाळिकेरप्रमाणञ्चाप्युत्तमस्य विधीयते
कपित्थफलमात्रेण मद्ध्यमस्य प्रमाणकम् ९०
कुक्कुटाण्डप्रमाणेन कन्यसं बलिदानकम्

अक्षद्वयप्रमाणं वा हस्तमुष्टिप्रमाणकम् ९१
शुक्तिमात्रप्रमाणं वा बलिं सर्वत्र दापयेत्
स्वयंभूर्दैविकञ्चैव दिव्यम्मानुषमार्षकम् ९२
राक्षसं बाणलिंगञ्च सप्तधालिंगमुच्यते
दैविकन्तु भवादीनामिंद्रादीनान्तु चार्षकम् ९३
भूतादीनां स्वयंभूतं मानुषं परिवारकम्
वसूनां बाणलिंगञ्च विद्येशानान्तु दिव्यकम् ९४
यक्षादीनां राक्षसन्तु बलिदेवाः प्रकीर्तिताः
भवश्शर्वस्तथेशानः नीलः पशुपतिस्तथा ९५
उग्रोभीमो महादेव इत्यष्टौ मूर्त्तयः स्मृताः
पीतकुंकुमकृष्णञ्चारुणं भिन्नाञ्जनप्रभम् ९६
नीलं श्वेतन्तथारक्तमष्टमूर्त्तेस्तु वर्णकम्
अभयं वरदस्सर्वे पाशांकुशञ्चतुर्भुजम् ९७
त्रिणेत्रमेकवक्त्रञ्च द्विपादञ्चैव नूपुरम्
जटामकुटसंयुक्तमष्टमूर्त्तिस्वरूपकम् ९८
देविकाख्यस्य लिंगस्य बलिदेवाः प्रकीर्तिताः
पुरन्दरोनलः कालो निर्ऋृतिर्वरुणस्तथा ९९
वायुस्सोमस्तथैशानो ब्रह्माविष्णुश्च लोकपाः
मानुषाख्यस्य लिंगस्य बलिदेवाश्च लोकपाः १००
सम्वर्त्तं पूर्वतोऽन्यस्य श्यामार्त्तं वह्निगोचरे
कुण्डोदरं याम्यभागे नैर्ऋृते दीर्घकायकम् १०१
वारुणयां ह्रस्वपादन्तु वायव्यां सिंहरूपकम्
सोमे गजमुखं प्रोक्तमीशे प्रियमुखन्तथा १०२
श्वेतपीतप्रभं कृष्णं रक्तं श्यामञ्च धूम्रकम्
कुंकुमाभन्तथा नीलं भूतवर्णमुदीरितम् १०३
उग्ररूपन्तु दंष्ट्रास्यं द्विभुजञ्च द्विपादकम्

दराडहस्तं वर्तुलाद्त्तं भूतरूपमिति स्मृतम् १०४
अ्रष्टभूतमिति प्रोक्तं स्वायंभुवबलिन्ददेत्
मद्धयहारञ्च हाराय वृषभादिप्रदद्दिणम् १०५
वृषभं पूर्वतः स्थाप्य वह्निमाग्नेय गोचरे
मातरो दद्दिणे देशे वीरविघ्नसमन्विताः १०६
विघ्नेशन्नैर्ऋृते भागे सुब्रह्मरायन्तु पश्चिमे
ज्येष्ठास्थानन्तु वायव्यां दुर्गास्थानन्तथोत्तरे १०७
चराडेशमीशदिग्भागे भास्करं पूर्वतो दिशि
कूपस्थानन्तथैशान्यामाग्नेय्यां पचनालयम् १०८
परिवारालयं सर्वं बाह्ये बाह्यान्तरे तथा
भूतपीठस्य पार्श्वे तु शक्रं संपूजयेत्ततः १०९
अ्रग्न्यादीशानपर्यन्तं स्वस्वस्थाने विचद्मणः
द्वारस्योत्तरपार्श्वे तु ब्रह्माणं परिकल्पयेत् ११०
पितामहेशयोर्मद्धये द्वादशादित्यपूजनम्
भास्करं द्मेत्रपालञ्च शांकरे वा समर्चयेत् १११
शक्रपावकयोर्मद्धये द्वावश्विन्यौ प्रकल्पयेत्
अ्राग्नेययमयोर्मद्धये संस्थाप्य सप्तरोहिणीम् ११२
याम्यनैर्ऋृतयोर्मद्धये पितृस्थानं विधीयते
निर्ऋृतिश्च जलेशस्य मद्धयतश्चाप्सरोगणान् ११३
वरुणानिलयोर्मद्धये मुनीनां स्थानमुत्तमम्
मरुत्कुबेरयोर्मद्धये प्यष्टौ वसुधरा स्मृताः ११४
कुबेरेशानयोर्मद्धये रुद्रास्त्वेकादशस्मृताः
प्रतिमायाञ्च पीठे वा इष्टिकायां प्रपूजयेत् ११५
बलिपीठन्ततः कृत्वा चतुर्दिद्मु विशेषतः
बाह्याभ्यन्तरयोः पीठौ पूर्वद्वारे तु विन्यसेत् ११६
अ्रन्तरे सर्वदेवांस्तु पिशाचान्बाह्यपीठके

यक्षाणान्दक्षिणे पीठे राक्षसानान्तु पश्चिमे  ११७
गन्धर्वाणान्तु सौम्ये तु भूतानां पूर्वदेशके
तदूर्द्ध्वे पद्ममित्युक्तमष्टशक्तिन्दळे न्यसेत्  ११८
सर्वदेवमयं पीठमग्रपीठं प्रकल्पयेत्
ततः पुरस्थिते पीठे बलिन्दद्याद्विशेषतः  ११९
आमोदश्च प्रमोदश्च सुमुखोदुर्मुखस्तथा
अविघ्नो विघ्नकर्त्ता च बलिपीठाधिदेवताः  १२०
आमोदम्मद्ध्यमे न्यस्य प्रमोदं पूर्वतो दिशि
मुमुखं दक्षिणे न्यस्य दुर्मुखं पश्चिमे यजेत्  १२१
अविघ्नमुत्तरे स्थाप्य विघ्नकर्त्तारमीशके
आमोदश्श्यामवर्णस्तु प्रमोदः कृष्णवर्णकः  १२२
सुमुखः स्फटिकप्रख्यो दुर्मुखः कुंकुमप्रभः
अविघ्नोविद्रुमाभश्च विघ्नकर्त्ता च धूम्रयुक्  १२३
द्विभुजाश्च द्विनेत्राश्च टंकशूलसमन्विताः
उग्रदंष्ट्रसमायुक्ता भीमरूपामहाबलाः  १२४
सर्वाभरणसंयुक्ता नागयज्ञोपवीतकाः
प्रासादाभिमुखास्सर्वे तीक्ष्णदंष्ट्रोत्कटाननाः  १२५
पूर्वे च दक्षिणे चैव पश्चिमे चोत्तरे तथा
गर्भगेहस्य पञ्चांशञ्चतुष्कञ्चोत्तमोत्तमम्  १२६
त्रिभागम्मद्ध्यमं प्रोक्तं द्विभागमधमं भवेत्
द्वारोत्सेधसमं श्रेष्ठं त्रिपादन्तु च मद्ध्यमम्  १२७
द्वारार्द्धमधमं विद्धि विस्तारोत्सेधतत्समम्
विस्तारं संविभज्याथ भागेनैकेन विंशतिम्  १२८
भागेनोपानमेकेन चतुर्भिर्जगतिस्तथा
कंपं कृत्वा तु भागेन तदूर्द्ध्वैकेन पट्टिका  १२९
कण्ठं कुर्याच्चतुर्भागैरेकेनैवात्र पट्टिका

महापट्टि द्वयांशेन द्वयांशाब्जदळोन्नतम् १३०
कर्णिका त्वेकभागेन प्रोक्तमुत्सेधमुत्तमम्
बलिपीठमिति ख्यातं सर्वेषां परितृप्तये १३१
यक्षराक्षसपैशाचभूतगन्धर्वकिन्नराः
सर्वदेव ऋषीणान्तु बलिं सर्वत्र तृप्तये १३२
आर्षकाख्यस्य लिंगस्य परिवारबलिन्ददेत्
सरो ध्रुवश्च सोमश्च आपश्चैवानिलोनलः १३३
प्रत्यूषश्च प्रभावश्च वसवश्चाष्ट एव च
बाणलिंगं तथायोग्यं बलिन्दद्यात्प्रकीर्तितम् १३४
अनन्तेशस्तथाभूक्ष्मश्शिवोत्तमश्चैकनेत्रकः
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिनः १३५
अष्टविद्येश्वराश्चैते दिव्यलिंगबलिस्तथा
पूर्वे यक्षगणाश्चैव राक्षसागणबाणवाः १३६
विश्वा च गणदाक्षिण्यां गा--गणैर्ऋते
किन्नरोगणवारुण्यां पितृणां गणवायवे १३७
दानवानां गणे सौम्ये ऐशेनागगणाः स्मृताः
अष्टानां गणदेवानां बलिदानन्तु राक्षसे १३८
नित्यास्योपादानकस्य प्रथमद्वारिपूजनम्
नन्दी चैव महाकाळे द्वितीयद्वारिपूजनम् १३९
दण्डिनो मुण्डिनश्चैव तृतीयद्वारिपूजयेत्
आमोदस्य प्रमोदस्य चतुर्थद्वारकल्पनम् १४०
गणेशस्य गुहस्यैव पञ्चप्राकारकल्पनम्
द्वारदेशं समाख्यातं बलिन्तेषां प्रकल्पयेत् १४१
तण्डुलं प्रस्थपादं स्यात् बलिदाने प्रमाणकम्
नित्येनैमित्तिके चैव बलिं कुर्याद्विशेषतः १४२
त्रिसन्ध्यायां बलिं कुर्यादन्यकालेन कारयेत्

अथवान्यपकारेण काम्यार्त्थे च बलिन्ददेत् १४३
महाहविर्निवेद्यान्ते बलिन्दद्याद्विशेषतः
नैमित्तिकोपसन्ध्यायां हविषा च बलिन्ददेत् १४४
अभावे बलिदाने च ग्रामनाशन्धनक्षयम्
अतः कार्यं प्रयत्नेन बलिं सर्वत्र कल्पयेत् १४५
तांबूलन्दापयेच्छंभोः प्रत्येकं प्रस्थसंख्यया
फलाच्चतुर्गुणं पत्रं जिह्वाघ्राणविवर्जितम् १४६
अश्मचूर्णसमायुक्तं क्रमुकस्य फलद्वयम्
तत्भिन्नतैलसम्मिश्रन्दापयेत्तु शिवाय च १४७
नित्यमेवं समाख्यातं काम्यन्नैमित्तिकं श्रुणु
भूमिशुद्धिन्ततः कृत्वा प्रोक्षयेद्धृदयेन तु १४८
व्रीहीन्सम्यक्परिस्तीर्य वस्त्रेणोपरिसंस्तरेत्
तस्योद्ध्र्वे कदळीपत्रं पूर्वाग्रञ्चोत्तराग्रकम् १४९
परिस्तरे द्विशेषेण घृतेनैवाभिघारयेत्
हविष्यन्तु त्रिधाकृत्वा द्विभागन्तु निवेदयेत् १५०
एकन्तु पात्रशेषं स्यादुपदंशाज्यसूपयुक्
दधितांबूलपूगञ्च प्रभूतन्तु परिग्रहेत् १५१
अस्त्रं दिशासु विन्यस्य अस्त्रमुद्रां प्रदर्शयेत्
दापयेदेवदेवाय हृदयेन च देशिकः १५२
आचमनन्ततः कृत्वा तांबूलन्तु निवेदयेत्
देवसंकल्पितं वत्सनैवेद्यमष्टभागिकम् १५३
द्विभागं देवभागं स्यादेकभागन्तु शक्तिकम्
गणेशस्येकभागन्तु कुमारस्येकभागकम् १५४
बल्यर्त्थमग्निकार्यार्त्थमेकभागमिति स्मृतम्
देशिकस्येकभागं स्यात् पात्रशेषन्तु शेषकम् १५५
तच्छेषं परिवाराणां भोजनायेति कीर्तितम्

देवस्वं देवताद्रव्यं नैवेद्यं तं निवेद्यकम् १५६
चण्डद्रव्यञ्च निर्माल्यं षड्विधञ्चैव कीर्तितम्
ग्रामादीशस्वदैवस्वो देवद्रव्यं पटादिकम् १५७
नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं न संशयः
चण्डद्रव्यञ्च तद्दत्तं निर्माल्यं प्रेरितं बहिः १५८
तैलचूर्णञ्च भस्मानि तांबूलं स्नानतोयकम्
वस्त्रमाभरणञ्चैव गंधतैलञ्च पुष्पकम् १५९
चन्दनञ्चैव शुद्धयर्त्थं निर्माल्यं न प्रकीर्तितम्
शिष्टलिंगार्चनञ्चेत्तु किञ्चित्पूजाविधीयते १६०
स्वयंभुर्दैविकं बाणं गाणवञ्चार्षकन्तथा
शिष्टलिंगमिति ख्यातं पूजां पूर्ववदाचरेत् १६१
शिष्टलिंगन्तु वाचेत्तु विशेषं किञ्चिदस्ति हि
तं निवेदितनिर्माल्यं शैवानां भोजनं हितम् १६२
शुभदं चित्तसंस्कारमायुष्यं बलवर्द्धनम्
स्फटिकं बाणलिंगञ्च स्थापितञ्चलमेव वा १६३
तन्निवेदितनिर्माल्यं न निर्माल्यं प्रकीर्तितम्
बालानां युवतीनाञ्च भोजयेत् बलवर्द्धनम् १६४
आत्मार्त्थकस्य लिंगस्य न निर्माल्यन्तु कत्थ्यते
लिंगञ्च द्विविधं विद्धि मानुषं शिष्टलिंगकम् १६५
तयोर्मानुषलिंगस्य निर्माल्यं भवति ध्रुवम्
शिष्टलिंगस्य निर्माल्यं न निर्माल्यमुदीरितम् १६६
गुरुपुस्तकनागानां भक्तानां हि गणस्य च
पार्वती यक्षमातृणां निर्माल्यञ्च शिवाय च १६७
गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणम्
विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् १६८
निर्माल्यं निर्मलं शुद्धं निर्मलात्मापरिग्रहेत्

मलबन्धशरीरेऽस्मिन् निर्माल्यन्तु न भोजयेत्  १६९
निर्माल्यं निर्मलो भुङ्क्ते निर्मलत्वादनिन्दितम्
तस्माच्छिवस्य नैवेद्यं शुद्धद्रव्यमिति स्मृतम्  १७०
मलबन्धशरीरस्स्यात् भोक्तुं तस्य न योग्यकम्
तिलार्द्धं शिवनिर्माल्यं नाश्नीयान्न परिग्रहेत्  १७१
भक्षयन्नरकं याति यावच्चंद्रार्कमेदिनी
परिग्रहे च स्वीकारे पश्यन्गांश्चमनुं स्मरेत्  १७२
शिवेन दीक्षितत्वाच्च शिवब्रांहण उच्यते
तस्माच्छिवद्विजं विप्र शुद्धब्राह्मणमुच्यते  १७३
निर्माल्यं तस्य योग्यन्तु अन्येषान्तु न योग्यकम्
संगृहीतं तथाचान्ये अतिकृच्छ्रं समाचरेत्  १७४
स्पशने पाणिपादौ च प्रक्षाळ्याचम्म्य वारिणा
हरेत्प्रक्षाळनं हस्तं प्राणायामत्रयं कुरु  १७५
प्रमादात् भोजनं कृत्वा पञ्चगव्यं कुशाग्रकम्
भक्षयेद्दोषशान्त्यर्त्थं हृन्मन्त्रन्तु शतं जपेत्  १७६
निर्माल्य लंघनं दानं भक्षणान्नरकं व्रजेत्
तिलादन्नस्य निर्माल्यन्नरकं चंद्रदिवाकरौ  १७७
जले वा पशुपूगे वा भूमौ वाग्नौ प्रदापयेत्
विघ्नेशस्य तु नैवेद्यं विप्रादीनान्तु भोजनम्  १७८
उमादेव्याश्च नैवेद्यं सर्वेषां भोजनं हितम्
शुद्धं विष्णोश्च नैवेद्यं ब्राह्मणादिषु भोजनम्  १७९
सकळादिनिवेद्यं स्यात् सर्वेषां भोजनम्मतम्
सुब्रह्मण्यस्य नैवेद्यं भोजनञ्च जयार्थिनाम्  १८०
भास्करस्य तु नैवेद्यं भुक्तं व्याधिक्षयं भवेत्
शीतभानोश्च नैवेद्यं भुक्तं शीतज्वरापहम्  १८१
परिवारादिदेवानां नैवेद्यं मुक्तिहेतुकम्

दक्षिणं वर्षद्धञ्च उच्छिष्टं जलशुद्धये १८२
अग्नीनां जिह्वया शुद्धं गोपृष्ठञ्चैव शुद्धये
उच्छिष्टं शिवनिर्माल्यं वामनं प्रेतचर्मजम् १८३
काकदृष्टिसमुद्भूतं पञ्चैतानि पवित्रकम् १८४
अमृतकदळी सुगन्धपैशाचं गात्रकदळी अभिषेकविशेषः
यातुकदळी पर्वतसिह्ममिक्षुकदळी नैवेद्य विशेषः १८५
इति नैवेद्यविधानविधिपटलस्त्रयस्त्रिंशत्तमः

पुण्याहविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि पुण्याहस्य विधिक्रमम्
पुकारं पापनाशं स्यात् ण्याकारन्देहशुद्धिदम् १
हकारं स्थानशुद्धिस्स्यात् पुण्याहन्तु विधीयते
सर्वपापहरञ्चैव सर्वसिद्धिप्रदायकम् २
सर्वमंगळकार्यादौ पुण्याहप्रोक्षणं शुभम्
सर्वेषामुपरिष्टाच्च क्रियमाणस्य कर्मणः ३
पुण्याहं पूर्वमुद्दिष्टं क्रियासाफल्यहेतवे
अन्यथाशिवतुल्योऽपि विघ्नैरेवाभिभूयते ४
पुण्याहजलसंकीर्णं यस्मिन्कर्मणि नास्ति हि
तत्कर्म्मविफलं प्राहुः भूतप्रेतैः प्रबाद्ध्यते ५
प्रासादे मण्टपाग्रे वा मनोरम्य स्थले शुभे
गोमया लेपनं कृत्वा पिष्टचूर्णैरलंकृतम् ६
वितानदर्भमालाद्यैरलंकृत्य विशेषतः
सर्वकर्मकृतेः पूर्वं पुण्याहं तत्प्रवेशके ७
आचार्यस्सुप्रसन्नात्मा शुक्लवस्त्रोत्तरीयकः
भस्मोद्धूळितसर्वांगो रुद्राक्षमालयान्वितः ८
मन्त्रतन्त्रत्रियामुद्रा भावनाद्ध्यनगर्भितः

नक्रकुण्डलधृक्वाग्मी सकळीकृतविग्रहः ९
पूर्वास्योदङ्मुखो वाथ कच्छपासनसंस्थितः
सामान्यार्घ्यन्तु संकल्प्य स्थण्डिलं शालिभिः कुरु १०
उत्तमं द्रोणमेवोक्तम्मद्ध्यमन्तु तदर्द्धकम्
कन्यसञ्चाढकं विद्धि त्रिविधं परिभाषते ११
तन्मद्ध्ये पद्ममालिख्य दर्भैः पुष्पैः परिस्तरेत्
सौवर्णं राजतन्ताम्रं कांस्यं वा मृण्मयन्तु वा १२
षोडशांगुलमायामन्नाहं द्वाविंशदंगुलम्
ओष्ठमेकांगुलं प्रोक्तं कण्ठन्तु चतुरंगुलम् १३
कुक्ष्योत्सेधन्दशांगुल्यं पादमेकांगुलं भवेत्
अष्टांगुलमिदं वक्त्रन्तदर्द्धं पादविस्तृतम् १४
मूलादग्रं क्रमात्क्षीणादष्टषट्चतुरंगुलैः
एतैश्च लक्षणैर्युक्तं मृण्मये बिंबसन्निभम् १५
शिवतोयेन संपूर्य षट्बाणप्रस्थकैस्तु वा
तन्तुनावेष्टयित्वा तु सहेमं कूर्चसंयुतम् १६
स्थण्डिले कर्णिका मद्ध्येरमांसं पूज्यदेशिकः
तस्योद्ध्र्वे विन्यसेत्पात्रं पूजयेद्धृदयेन तु १७
पृष्ठे प्रजापतिञ्चैव मद्ध्यमे विष्णुदैवतम्
अग्रं वै रुद्रदैवत्यं ओष्ठं वै स्कन्ददैवतम् १८
घ्राणं विघ्नेशमित्युक्तं कण्ठं वै वसुदैवतम्
कुक्षौ वरुणदैवत्यं पादं भास्करदैवतम् १९
वक्त्रं वै चंद्रदैवत्यं पार्श्वयोर्न्नन्दिकाळकौ
मद्ध्यमे सप्ततीर्त्थं स्यात्कलशे च यथाक्रमम् २०
गंगे च यमुने चैव गोदावरिसरस्वति
निर्मगे सिन्धुकावेरिजलेऽस्मिन्सन्निधिं कुरु २१
हेमवस्त्रविधानञ्च कारयेद्वर्जयेत्तु वा

स्वर्णरौप्यादिपात्रे वा तंडुलैरुडुसन्निभैः २२
द्विप्रस्थमधमं प्रोक्तं द्विगुणं मद्ध्यमं भवेत्
शिवतंडुलमित्युक्तमुत्तमन्तु प्रशस्यते २३
अभ्यर्च्यगंधपुष्पाद्यैर्धूपदीपं हृदाददेत्
नागवल्लीदळैर्युक्तं पूगीफलसमायुतम् २४
नारंगलिकुचरंभा नाळिकेरफलान्वितम्
नित्ये नैमित्तिके चैव काम्ये चैव तु कल्पयेत् २५
कर्मारंभस्य तत्काले पूर्वं संकल्प्य बुद्धिमान्
दर्भाणाञ्च द्वयं ग्राह्यं द्वादशांगुलमायतम् २६
आचार्यो दक्षिणे हस्ते नामिकायां सुयोज्य च
प्राणायामत्रयं कृत्वा कर्णं संस्पृश्य दक्षिणम् २७
जानौ विन्यस्तापसव्यकरे सव्यं सुयोजयेत्
यावत्कर्मकरिष्यामि दर्भोद्वासनमुत्तरे २८
भूसुराणां द्वयं दत्वा देशिको दर्भयुग्मयुक्
आपः प्रयोगमाचार्ये शिवा आपश्च ऋत्विजः २९
गंधप्रयोगमाचार्यस्सुगन्धाः प्रतिवाचकः
देशिकस्सुमनाश्चैव सौमनस्यञ्च ऋत्विजः ३०
अक्षतं देशिको ब्रूयादन्येक्षतमरिष्टकम्
अन्वाहार्यस्तथाब्रूयात्सुमन्वाहार्य इत्यपि ३१
देशिको दक्षिणास्वस्ति दक्षिणाः प्रतिवाचकः
बहुदेयमस्त्वाचार्यो वदेयुर्भूसुरास्तथा ३२
देशिकस्तु जपं कृत्वा भूसुरेण समन्वितः
कुंभमुद्धृत्य सहसा सापिधानं सकूर्चकम् ३३
उत्थायसमपादस्तु देशिकश्शान्तिसंयुतः
स्वस्तिमद्ध्ये तु यत्कर्म तत्कर्म स्वस्तिवाचकम् ३४
पदन्तेस्त्रावयेत्तोयं राक्षसानान्तु तृप्तये

पश्चादासीन एवाशु प्रजपेत्ब्रांहणैस्सह ३५
दधिक्राविरणेतिमन्त्रं हिरण्यं पवमानकम्
शान्तिमन्त्रं जपेद्धीमान्दर्भैस्पृष्ट्वाविधानवित् ३६
एवं क्रमेण पुण्याहं कारयेत् भूसुरोत्तमैः
आचार्यमनसस्तृप्तिर्देवसां निद्धयकारणम् ३७
निष्कादिदशनिष्कान्नमाचार्यस्य तु दक्षिणा
द्रव्यशुद्धिनिमित्ताय शुद्धिपुण्याहमाचरेत् ३८
पञ्चब्रह्मं रुद्रसूक्तं श्रीरुद्रञ्चमकं तथा
पुंसूक्तं त्रिसुपर्णञ्च श्रीसूक्तं शान्तिपञ्चकम् ३९
जप्त्वासंस्नाप्य देवेशं पूजयेत्तु विचक्षणः
अघोरदक्षिणामूर्तिं शिवास्त्रं क्षुरिकास्त्रकम् ४०
रुद्रास्त्रन्तु समुच्चार्य पूजयेत्तु शनैश्शनैः
पूर्वाह्ने चाभिषेकन्तु ब्रंहवर्गविवर्द्धनम् ४१
मद्ध्याह्ने चाभिषेकन्तु क्षत्रवर्गविवर्द्धनम्
सायाह्ने चाभिषेकन्तु वैश्यवर्गविवर्द्धनम् ४२
अर्द्धरात्रे तथाप्रोक्तं शूद्रवर्गविवर्द्धनम्
सर्वपापहरं पुण्यं सर्वसस्यादिवर्द्धनम् ४३
पुत्रपौत्राभिवृद्ध्यर्थं धनधान्यसुखप्रदम्
पुण्याहप्रोक्षणं यस्यां क्रियायां न करोति हि ४४
साक्रियाविफला प्रोक्ता क्रव्यादैः परिभूयते
तस्माद्विद्ध्युक्तमार्गेण पुण्याहप्रोक्षणं हितम् ४५
पुण्याहप्रोक्षणं हित्वाप्यन्यकर्मकरोतियः
वृधापरिश्रमन्तस्य सांनिद्ध्यं नापि तत्र वै ४६
तस्मात्पाशुपतं घोरं अष्टोत्तरशतं पृथक्
जप्त्वा पुनश्च पुण्याहं कर्म वैकल्यशुद्धये ४७
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्

इति पुरयाहविधिपटलश्चतुस्त्रिंशत्तमः

पञ्चगव्यविधिपटलप्रारंभः
अथ वद्त्ये विशेषेण पञ्चगव्यविधिं श्रुणु
शिवाग्रे भूतले रम्ये गोमयालेपनं कुरु १
तन्मद्धयतः परिस्तीर्य ताराभैर्द्रोणतरडुलैः
प्राक्सूत्रं युगसूत्रं स्यादुदक्सूत्रन्तथैव च २
सूत्रात्सूत्रान्तरन्तालन्नवकोष्ठन्तु लेखयेत्
लाजैर्दर्भैरद्मतैश्च तिलैः पुष्पैः परिस्तरेत् ३
दिक्दळञ्च चतुर्वेदं विदिक्दळं कृतादयः
पुरयाहप्रोद्मणं कृत्वा शोधयेन्नवकोष्ठकम् ४
मद्धयमे शिवतत्वन्तु पूर्वे तत्वं सदाशिवम्
विद्यातत्वं दद्मिणतस्सौम्ये पुरुषतत्वकम् ५
पश्चिमे कालतत्वन्तु वह्नौ नियतितत्वकम्
अप्तत्वं राद्मसे देशे मायातत्वन्तथानिले ६
ईशे प्रकृतितत्वन्तु कोष्ठपूजाविधीयते
तन्मद्धये सुप्रतिष्ठञ्च पूर्वपात्रे सुशान्तकम् ७
तेजोरूपं दद्मिणतो रद्मोदकन्तथोत्तरे
अमृतोदं प्रतीच्यान्तु सुवृत्तमीशकोणके ८
पूर्वादीशानपर्यन्तं ज्योतिरूपन्तु पात्रकम्
एवमेव क्रमेणैव पात्रपूजाविधीयते ९
आप्यायस्वेतिमन्त्रेण मद्धये द्मीरन्तु विन्यसेत्
दधिक्राविरणेतिमन्त्रेण तत्पूर्वे विन्यसेद्दधि १०
शुक्रमसीतिमन्त्रेण दद्मिणे विन्यसेत्घृतम्
गोमूत्रमुत्तरे देशे गायत्र्या विन्यसेत्क्रमात् ११
गन्धद्वारेति मन्त्रेण गोमयं पश्चिमे न्यसेत्

देवस्यत्वेतिमन्त्रेण कुशोदं शांकरे न्यसेत् १२
पावके विन्यसेत्पिष्टं कपित्थफलमात्रकम्
कदळीफलमात्रेण रजनीं राक्षसे न्यसेत् १३
-----------------------
न्यसेदामलकं वायौ ----------- १४
शिखासिकवचैर्मन्त्रैर्विदिक्षु विन्यसेत्क्रमात्
ईशानेन तु दुग्धं स्यात् बाणसंख्याभिमंत्रितम् १५
पुरुषेण तु मन्त्रेण दधिवैवसुसंख्यया
अघोरेण घृतं धातु सख्ययाचाभिमन्त्रयेत् १६
वामदेवेन गोमूत्रं वसुसंख्याभिमंत्रितम्
सद्येन गोमयं रत्नसंख्यया चाभिमन्त्रयेत् १७
पावके पिष्टमेवोक्तं व्याहृत्याचैव षट्जपेत्
हृदयेनामलकं सप्तवारैश्चैवाभिमन्त्रयेत् १८
शिरोमन्त्रेण रजनीं वसुसंख्याभिमंत्रितम्
अस्त्रमन्त्रञ्जपेद्धीमान्दोषनिर्हरणार्थकम् १९
एवं संपूज्यविधिवत् धूपदीपं हृदाददेत्
क्षीरं वै रुद्रदैवत्यं दधि वै सोमदैवतम् २०
घृतमीश्वरदैवत्यं गोमूत्रं वायुदैवतम्
गोमयं वह्निदैवत्यं कुशोदं ब्रह्मदैवतम् २१
पिष्टं वै विष्णुदैवत्यं रजनी चंद्रदैवतम्
श्रियमामलके विद्यादधिदेवाः प्रकीर्तिताः २२
उत्तमं त्रिचतुः प्रस्थं मद्ध्यमन्तु तदर्द्धकम्
कन्यसन्तु चतुः प्रस्थं त्रिविधं परिकीर्तितम् २३
प्रस्थमाज्यं समाख्यातं दधिद्विप्रस्थमुच्यते
त्रिप्रस्थञ्चैव गोक्षीरञ्चतुः प्रस्थन्तु गोमयम् २४
षत्प्रस्थञ्चैव गोमूत्रं पलमात्रं कुशोदकम्

द्विपादं घृतसंयुक्तं दधिप्रस्थमिहोच्यते २५
प्रस्थार्द्धं क्षीरसंयुक्तं द्विप्रस्थं गोमयं भवेत्
त्रिप्रस्थञ्चैव गोमूत्रं पञ्चगव्यन्तु मद्ध्यमम् २६
एकपादघृतञ्चैव दधिपादद्वयं भवेत्
त्रिपादं क्षीरमित्युक्तं चतुष्पादन्तु गोमयम् २७
षत्पादञ्चैव गोमूत्रं पलमात्रं कुशोदकम्
एवमेव क्रमेणैव त्रिविधं पञ्चगव्यकम् २८
उत्तमं स्वर्णपात्रं स्यात् मद्ध्यमं कांस्यपात्रकम्
अधमं मृण्मयञ्चैव पात्रमेवमुदाहृतम् २९
काळं भिन्नञ्च सुषिरं कृष्णं छेदन्तु वर्जयेत्
धर्मांगुलोन्नतञ्चैव मात्रांगुलन्तु कल्पयेत् ३०
त्रिंशत्देवांगुलञ्चैव नाहं स्यात्परिमाणकम्
कण्ठं त्रियंगुलोपेतमोष्ठमेकांगुलं भवेत् ३१
उत्तमं पात्रमित्युक्तम्मद्ध्यमन्तु प्रजापते
पञ्चांगुलोन्नतञ्चैव नाहं सप्तदशांगुलम् ३२
दळन्तु द्व्यंगुलं प्रोक्तमोष्ठमेकांगुलं भवेत्
मद्ध्यमं पात्रमित्युक्तं कन्यसं पात्रमुच्यते ३३
देवांगुलन्तथैवोच्चन्नाहं प्रोक्तन्नवांगुलम्
कण्ठं त्रियंगुलोपेतं युगांगुलसुविस्तरम् ३४
एवमेव क्रमेणैव त्रिविधं पात्रमुच्यते
गोमयं कृष्णवर्णायान्नीलायां गोजलं स्मृतम् ३५
कपिलायां घृतं विद्धि शुक्लायां दधिचेष्यते
पयश्च रक्तवर्णायां गवां वर्णं प्रकीर्त्तितम् ३६
अलाभे कपिलायास्तु सर्वं संगाहयेद्बुधः
गोमूत्रं श्रीप्रदं विद्धि गोमयं रोगनाशनम् ३७
पयश्शत्रुविनाशं स्यात् दधिपुत्रविवर्द्धनम्

घृतम्मोक्षप्रदञ्चैव पञ्चगव्यफलं क्रमात्  ३८
पंकारं पापनाशं स्यात् चकारमात्मशुद्धिदम्
गकारं जन्मनाशं स्यात् व्यकारम्मोक्षहेतुकम्  ३९
पञ्चगव्यस्य शब्दस्य प्रोक्तन्निर्वचनाक्षरम्
नित्ये नैमित्तिके काम्ये दृष्टदोषे महाभये  ४०
ज्वररोगादिपीडायां परराष्टभयेऽपिवा
दुर्न्निमित्ते दिशान्दाहे महामारिप्रकोपने  ४१
क्षामक्षोभसमुत्पन्ने महावातप्रभेदने
भूमिकम्पेऽप्यनावृष्टौ संक्रान्तिग्रहणादिके  ४२
अन्यत्पुरायदिने वापि संस्थाप्यपञ्चगव्यकम्
अभिषेकं प्रकुवीतशास्त्रदृष्टेन कर्मणा  ४३
समानशिखयायुक्ताः कुशाश्चाष्टादशस्मृताः
वेराया वेष्टिकया वापि तालमात्रन्तु दैर्घ्यकम्  ४४
प्रोक्षणी कूर्चमुद्दिष्टं शान्तिकर्मसुसर्वदा
प्रातः कालेऽभिषेकन्तु ब्रह्मवर्गस्य वर्द्धनम्  ४५
मद्धयाह्ने त्वभिषेकन्तु नृपवर्गस्य वर्द्धनम्
सायंकालेऽभिषेकन्तु वैश्यवर्गविवर्द्धनम्  ४६
सार्द्धयामेऽभिषेकन्तु शूद्रवर्गविवर्द्धनम्
उषःकाले विशेषेण सर्वसिद्धिकरं भवेत्  ४७
मातृहा पितृहा चैव गोघ्नश्चैव कृतघ्नकः
भ्रूणहा च गुरुद्रोही पातको गुरुतल्पगः  ४८
मुच्यते तत्क्षणेनैव पञ्चगव्याभिषेचनात्
पञ्चगव्यविहीनञ्च पूजनं क्रियते यदि  ४९
न देवतायास्सांनिद्धयमित्थन्तत्र प्रजापते
एवं क्रमेण विधिवत्पञ्चगव्यपुरस्सरम्  ५०
अभिषेकः प्रकर्त्तव्यं यथाविभवविस्तरम्

इहैव धनवान्श्रीमान् सोन्ते रुद्रपदं लभेत् ५१
इति पञ्चगव्यविधिपटलपञ्चत्रिंशत्तमः

अतःपरं पवक्ष्यामि पञ्चगव्यविधिक्रमम्
शिवाग्रे स्थण्डिलं कृत्वा आढकेनैव शालिभिः १
पदे तु शिवसाविद्या कलाश्च मणिबन्धनम्
पुरुषं कलशस्यान्ते तेजश्शान्तिप्रतिष्ठितौ २
करणमणिबुधश्चार्द्धं कृतचित्रकोष्ठम्
शुचिकरसुरभिबन्धाग्निक्रमेण कुर्यात् ३
नवपात्रन्तु संगृह्य क्षाळयेत् गन्धवारिणा
प्रोक्षयेत्पुरुषेणैव कवचेनावकुण्ठयेत् ४
षट्गव्यं पञ्चगव्यञ्च षडंगं पञ्चामृतन्तथा
षट्गव्यः पञ्चगव्यैर्वा प्रथमं जुहुमेव च ५
षडंगञ्चामृते चैव साये चैवार्द्धयामके
गोमूत्रं गोमयं क्षीरं दधिसर्प्पिश्च रोचना ६
षड्गव्यमिति विज्ञेयं षडंगेनाभिषेचयेत्
क्षीरन्दधिघृतञ्चैव गोमूत्रं गोमयन्तथा ७
पञ्चगव्यमिति प्रोक्तं पूजयेत्ब्रह्मपञ्चकैः
गोमूत्रं गोमयं क्षीरं दधिसर्पिकुशोदकम् ८
एतत्षडंगमाख्यातं पूजयेत्प्रणवेन तु
क्षीरन्दधिघृतञ्चैव मधुशर्क्करसंयुतम् ९
पञ्चामृतमिदं ब्रह्मपूजयेत्सूक्तमन्त्रतः
पूर्वाग्रन्तु चतुस्सूत्रमुत्तराग्रन्तथैव च १०
तालमात्रप्रमाणेन कारयेद्देशिकोत्तमः
तिललाजैरलंकृत्य दर्भानुपरिसंस्तरेत् ११
एवन्तु पदसंकल्प्य पूजयेत्पूर्ववद्बुधः

गव्यं पापविनाशार्थं सर्वारिष्टविनाशनम्  १२
सवपापविनाशार्थं सर्वशान्त्यर्थमुच्यते
कृष्णवर्णन्तु गोमूत्रं संग्राह्यन्तु विचक्षणः  १३
काश्यपं घृतमेवन्तु कौशिकन्दधिरुच्यते
क्षीरन्तु भारद्वाजस्य गौतमो गोमयन्तथा  १४
अगस्त्यश्चैव गोमूत्रं ऋषयः पञ्चकीर्त्तताः
घृतं वै रुद्रदैवत्यं दधि वै सोमदेवता  १५
क्षीरन्तु शुक्रदैवत्यं गोमयञ्चार्कदेवता
गंगायाञ्चैव गोमूत्रं पञ्चगव्याधिदेवताः  १६
उत्तमं द्रोणमेवन्तु मद्ध्यमन्तु तदर्द्धकम्
तदर्द्धमधमं ज्ञेयं त्रिविधं परिकल्पयेत्  १७
घृतं वै प्रस्थमेवन्तु दधिद्विप्रस्थमेव च
क्षीरं त्रिप्रस्थमित्युक्तं चतुःप्रस्थन्तु गोमयम्  १८
षट्प्रस्थञ्चैव गोमूत्रं उत्तमन्तु प्रशस्यते
प्रस्थार्द्धन्तु घृतञ्चैव प्रस्थन्तु दधिरुच्यते  १९
प्रस्थं प्रस्थार्द्धकं क्षीरं द्विप्रस्थं गोमयं भवेत्
त्रिप्रस्थञ्चैव गोमूत्रं मद्ध्यमन्तु प्रशस्यते  २०
कुडवञ्च घृतञ्चैव दधि स्यात्कुडवद्वयम्
क्षीरञ्चैव त्रिपादन्तु प्रस्थं गोमयमुच्यते  २१
प्रस्थं प्रस्थार्द्धगोमूत्रमधमन्तु प्रशस्यते
नित्यमेव समाख्यातं नैमित्तिकमथोच्यते  २२
प्रत्येकं द्रोणसंपूर्णान् कुंभान्बिंबसमप्रभान्
उत्तमं त्विति विख्यातं प्रत्येकं शिवपूरितम्  २३
मद्ध्यमं त्विति विख्यातं प्रत्येकञ्चाढकन्तथा
कन्नयसं त्विति विख्यातं पञ्चगव्यं त्रिधाभवेत्  २४
ससूत्रान्सापिधानांश्च सकूर्चान्हेमसंयुतान्

सवस्त्रान्पल्लवोपेतान्स्थापयेन्नवकुंभकान्  २५
क्षीरन्तु मद्ध्यमे स्थाप्य पूर्वे तु दधिरुच्यते
दक्षिणे तु घृतं स्थाप्य पश्चिमे गोजलन्ततः  २६
उत्तरे गोमयं स्थाप्य शालिपिष्टन्तु चाग्निके
आमली निर्ॠतौ चैव वायव्यां रजनी तथा  २७
गोरोचनान्तु ऐशान्यां षडंगन्तु विधीयते
गोरोचनां विना चैव पञ्चगव्यं विधीयते  २८
कुशोदकयुतञ्चैव षडंगमिति कीर्तितम्
आप्यायस्वेति चक्षीरं दधिक्राविष्णेति वै दधि  २९
शुक्रमसीति मन्त्रेण घृतञ्चैवाभिमन्त्रयेत्
गायत्रिया तु गोमूत्रं गन्थद्वारेति गोमयम्  ३०
कुशोदकन्तु गायत्र्या रोचना ब्रह्मपञ्चकम्
पिष्टञ्च हृदयेनैव आमलं शिरसेन तु  ३१
रजनी कवचमन्त्रेण अभिमन्त्र्यसकृत्गुरुः
पुण्याहं वाचयेद्धीमान्प्रोक्षयेत्पुरुषेण तु  ३२
पूजयेत्गन्धपुष्पाद्यैर्देशिकेन विचक्षणैः
गोमयं गोजले क्षिप्य गोजलं घृतमेव च  ३३
घृतन्दद्ध्नौ तु संक्षिप्य दधिं क्षीरे तु निक्षिपेत्
गोरोचनञ्च संयुक्तं कुशोदकसमन्वितम्  ३४
षट्गव्यं पञ्चगव्यञ्च षडंगञ्च इहोच्यते
मद्ध्ये क्षीरन्तु संस्थाप्य पूर्वे दधि च विन्न्यसेत्  ३५
दक्षिणे तु घृतं स्थाप्य उत्तरे गुळमेव च
पश्चिमे तु मधुस्थाप्य देवस्य त्वेगुळन्तथा  ३६
मधुवातेति मन्त्रेण मधुश्चैवाभिमन्त्रयेत्
अन्यत्पूर्वोक्तवत्स्थाप्य देशिकेन विचक्षणः  ३७
यथासंस्थापितास्सर्वे तथाचोत्तरणं गुरुः

अभिषेकं प्रकुर्वीत लिंगे वाकौतुकेऽपि वा ३८
प्रविश्य तु महादेवं गृहं गृहपतिर्यथा
ग्रहणे विषुवे चैव अयने युद्धसंकुले ३९
नृपाभिषेककाले तु मांगल्ये मन्त्रसाधने
अन्यादाने विवाहान्ते अतिवृष्टाववृष्टिके ४०
दुर्भिक्षे दुर्निमित्ते च शत्रूणाञ्च प्रमर्दने
भूमिकं पेदिशादाहे दुःस्वप्ने दर्शने तथा ४१
प्रतिसूर्यप्रदृष्टे तु दुर्दिने शलभप्लवे
महामारिप्रकोपे च शिरो रोगादिसंभवे ४२
अक्षिरोगसमुत्पन्ने ज्वरव्याधिस्तु जायते
एषान्दोषनिवृत्यर्त्थं स्नापयेत्पञ्चगव्यकैः ४३
इहैव धनवान्श्रीमान् सोन्ते सायुज्यमाप्नुयात्
इत्यन्यत्पञ्चगव्यविधिः

पञ्चामृतविधिपटलप्रारंभः

पञ्चामृतमथोवक्ष्ये सर्वसंपत्करन्नृणाम्
देवस्य पूर्वदिग्भागे स्थण्डिलं शालिना कुरु १
द्वात्रिंशत्प्रस्थसंपूर्णान्व्रीहीनास्तीर्य देशिकः
प्रागग्रञ्च चतुस्सूत्रमुदक्सूत्रन्तथैव च २
सूत्रात्सूत्रान्तरन्तालन्नवकोष्ठमिति स्मृतम्
धर्मादिकञ्च दिक्पत्रमधर्माद्यं विदिक्षु च ३
अक्षतैस्तिललाजैर्वा पुष्पैः काशैः परिस्तरेत्
कोष्ठपूजादिकं सर्वं प्रागुक्तवत्प्रकल्पयेत् ४
क्षीरं दधिघृतक्षौद्रं सितञ्चैव तु पञ्चमम्
पञ्चामृतमिति ख्यातं प्रतिदिक्स्थं पृथक्न्यसेत् ५
उत्तमं प्रस्थसंपूर्णं मद्ध्यमन्तु तदर्द्धकम्

तदर्द्धमधमं ज्ञेयं त्रिविधं परिकल्पयेत् ६
दुगन्तु मद्ध्यमे साप्यं पूर्वस्यां स्थापयेद्दधि
------------------------ ७
सितमुत्तरदिक्देशे गन्धोदंशांकरे न्यसेत्
रंभापनसचूतानामग्निनैर्ऋतिवायुषु ८
संस्थाप्याभ्यर्चयेदीशपुङ्घोरवामसद्यकैः
एकद्वित्रिचतुःपञ्चवारमे वाभिमन्त्रय च ९
हृदयञ्च शिरश्चैव शिखामिश्रन्तु विन्यसेत्
कवचेनावकुराठ्याथ धेनुमुद्रां प्रदर्शयेत् १०
खराडाभावे तु संग्राह्यमभावे त्तुरसन्तथा
खराडञ्चाप्यभिषेके तु जलेन लोळितं भवेत् ११
अभिषेकं पृथक्प्रोक्तं तोयस्नानान्तरान्तकम्
मद्ध्ये मद्ध्ये च धूपञ्च दीपञ्चैव प्रदापयेत् १२
पयसासर्वसौभाग्यं दधिपुत्रसमृद्धिदम्
घृतं रोगहरं प्रोक्तं त्तौद्रमायुष्करं भवेत् १३
सितं ज्ञानप्रदं विद्धि पञ्चामृतफलं भवेत्
देवं यः कुरुते मर्त्यस्सपुरायांगतिमाप्नुयात् १४
इति पञ्चामृतविधिपटलष्षट्त्रिंशत्तमः

पञ्चविंशतिस्नपनविधिपटलप्रारंभः
अथ वत्त्ये विशेषेण स्नपनं पञ्चविंशतिम्
सर्वसिद्धिकरं पुरायसर्वपापनिकृन्तनम् १
आलयस्याग्रतः कुर्यात् मराटपञ्चाष्टहस्तकम्
षोडशस्तंभसंयुक्तं द्वादशस्तंभसंयुतम् २
स्थलोच्चञ्चतुरंगुल्यं चतुरश्रसमं शुभम्
युगद्वारसमायुक्तं चतुस्तोरणभूषितम् ३

मंगलांकुरसंयुक्तं पूर्णकुंभैरलंकृतम्
मुक्तासृग्दामविविधैः ध्वजैश्चित्रैश्च शोभितम् ४
वितानदर्भमालाभ्यां दीपैश्च विविधैर्युतम्
गोमयालेपनं कृत्वा प्रोक्षयेद्धृदयेन तु ५
प्राक्सूत्रं वसुभिः कुर्यादुदक्सूत्रं तथैव च
सूत्रात्सूत्रान्तरं तालं मध्ये नवपदं लिखेत् ६
अभितस्तस्य बाह्ये तु पदमेकं परित्यजेत्
वसुद्वारसमायुक्तं त्यजेत्गोमयवारिणा ७
शालिभिस्थंडिलं कृत्वा प्रोक्षयेद्धृदयेन तु
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ८
तदर्द्धैस्तंडुलैर्भूष्य तदर्द्धैश्च तिलैरपि
लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः ९
पुण्याहं वाचयित्वा तु पश्चात्स्थापनमारभेत्
मण्टपस्योत्तरे भागे कलशान्स्थापयेत्ततः १०
तन्तुनावेष्टयेत्कुंभान् गवाक्षसदृशान्तरम्
प्रक्षाळ्य सद्यमन्त्रेण कुंभान्सर्वानधोमुखान् ११
दर्भोपरिन्यसेत्तत्र प्रोक्षयेत्पुरुषेण तु
शिवाख्यं कलशं मद्ध्ये स्थापयेत्तंडुलोपरि १२
वर्द्धनीञ्चोत्तरे तस्य स्थापयेत्तु विचक्षणः
शिवाख्यं पञ्चरत्नांबु वर्द्धनी हेमसंयुतम् १३
सकूर्चौ सापिधानौ च वस्त्रयुग्मेन वेष्टितौ
सदाशिवं यजेत्कुंभे वर्द्धन्यान्तु मनोन्मनीम् १४
पूजयित्वा विशेषेण गन्धपुष्पादिभिः क्रमात्
पाद्यन्तु पूर्वतः स्थाप्याचमनं दक्षिणे न्यसेत् १५
अर्घ्यन्तु पश्चिमे स्थाप्य पञ्चगव्यं तथोत्तरे
आग्नेयादिषु कोणेषु गन्धोदकं न्यसेत्ततः १६

वस्त्रेण वेष्टयेत्सर्वान्सकूर्चान्सापिधानकान्
वामादिशक्तयश्चाष्टौ शक्रादिषु क्रमान्नयसेत् १७
मधूकुष्ठं गुळञ्चैव ज्ञीरञ्च सर्षपन्तथा
लवंगञ्चैव कक्कोलं दधिमेघं तिलन्तथा १८
उशीरञ्च घृतञ्चैव शकृच्चूर्णन्तु सक्तुकम्
नाळिकेरञ्च हारिद्रं पूर्वादिषु क्रमान्नयसेत् १९
सकूर्चं सापिधानञ्च प्रत्येकं वस्त्रवेष्टितम्
लोकपालांस्तथादिन्नु विद्येशानष्टदिन्नु वै २०
पूजयेत्गन्धपुष्पाद्यैः स्वनाम्ना देशिकोत्तमः
गर्भगेहं ततः प्राप्य निर्माल्यन्तु विसर्जयेत् २१
लिंगशुद्ध्यादिकं सर्वमर्चनोक्तं समाचरेत्
शिवकुंभं ततोद्धृत्य स्नापयेत्परमेश्वरम् २२
वर्द्धनीन्तु ततोद्दृत्य पिरिडकामभिषेचयेत्
व्योमव्यापि समुच्चार्य पञ्चब्रह्मषडंगकैः २३
संस्नाप्यकलशाद्भिस्तु पूजयेत्तु सदाशिवम्
प्रभूतं हविषं दत्वा निर्माल्यन्तु विसर्जयेत् २४
निवेदयेत्तु तांबूलं मुखवाससमन्वितम्
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः २५
भक्तानां परिचाराणां यथाशक्त्या तु दक्षिणाः २६
इति पञ्चविंशतिस्नपनविधिपटलः षट्त्रिंशत्तमः

एकोनपञ्चाशत्स्नपनविधिपटलप्रारंभः

वक्ष्ये ह्येकोनपञ्चाशत्स्नपनस्य विधिक्रमम्
मन्दिरस्याग्रतः कुर्यान्मराटपञ्चतुरश्रकम् १
नवहस्तञ्चाष्टहस्तं सप्तहस्तमथापि वा
चतुर्द्वारसमायुक्तञ्चतुस्तोरणभूषितम् २

वितानदर्भमालाभ्याम्मुक्तादामविभूषितम्
अष्टमं गळसंयुक्तम्मंगळांकुरशोभितम्  ३
गोमयालेपनं कृत्वा निम्नोन्नतविवर्जितम्
सद्येन प्रोक्ष्य तन्मद्ध्ये सूत्रपातन्तु कारयेत्  ४
प्रागग्रन्दशसूत्रं स्यादुदगग्रन्तथैव च
मद्ध्ये नवपदं ग्राह्य लेपयेत्परितः पदम्  ५
द्वाराष्टकसमायुक्तन्तालमात्रपदं भवेत्
स्थण्डिलं शालिभिः कुर्यात्तन्मद्ध्येऽब्जं समालिखेत्  ६
लाजपुष्पतिलैर्दर्भैर्विकिरेत्तु विशेषतः
कलशान्लक्षणोपेतान् चतुःप्रस्थेन पूरितान्  ७
सूत्रेण वेष्टयेत्सर्वान् गवाक्षसदृशान्तरान्
कलशान् क्षालयेत्पश्चात् अस्त्रमन्त्रेण सुव्रता  ८
पुण्याहं वाचयेद्धीमान्स्थापनन्तु समारभेत्
मद्ध्यमे शिवकुंभन्तु गंधतोयेन पूरितम्  ९
पञ्चरत्नसमायुक्तं सकूर्चं सापिधानकम्
वस्त्रयुग्मेन संवेष्ट्य पूजयेत्तु सदाशिवम्  १०
वर्द्धनीञ्चोत्तरे स्थाप्य स्थण्डिलोपरिविन्यसेत्
सकूर्चां सपिधानाञ्च वस्त्रहेमांबुपूरिताम्  ११
मनोन्मनीं यजेत्तत्र गंधपुष्पादिभिः क्रमात्
स्थापयेत्कलशान्पश्चात्द्रव्येण समपूरयेत्  १२
पाद्यमाचमनञ्चार्घ्यं गव्यं पूर्वादिदिक्षु वै
क्षीरं दधिघृतञ्चैव मध्वन्नादिविदिक्षु च  १३
तक्कोलं भस्मनिर्यासं गिरिबेरञ्च मञ्जरीम्
नाळिकेरञ्च बिल्वञ्च जंबूकच्छोलमेव च  १४
पाटली चैव पुन्नागं शंखपुष्पन्तथैव च
लक्ष्मीव्याघ्री नखीसिंही धुत्तूरञ्चैव षोडश  १५

द्रव्याण्येतानि सर्वाणि द्वितीयावरणे न्यसेत्
दूर्वा च सर्षपं त्वाम्रं नारंगं पनसं तथा १६
कदळी शतपत्रञ्च धातकी श्वेतपद्मकम्
इक्षुसारञ्च लाजञ्च चंपकं गंधतैलकम् १७
नीवारं कुंकुमञ्चैव तिलमांजिमुरन्तथा
सक्तुवैमातुळुंगञ्च चन्दनञ्चागरुं तथा १८
उशीरञ्च निशाचूर्णं तृतीयावरणस्य तु
इंद्राद्यानष्टविद्येशान्प्रथमावरणे न्यसेत् १९
तत्तत्स्वनाममन्त्रैश्च गंधपुष्पादिभिर्यजेत्
लोकपालान्वसूंश्चैव द्वितीयावरणे न्यसेत् २०
विघ्नेशं द्वादशादित्यान्तथैकादशरुद्रकान्
पूर्वादिषु क्रमेणैव तृतीयावरणेन्न्यसेत् २१
तत्तत्स्वनाममन्त्रैश्च गंधपुष्पादिभिः क्रमात्
पूजयेत्तु विशेषेण पदं प्रतिपदं प्रति २२
प्रविश्य गर्भगेहन्तु लिंगपीठस्थलं क्रमात्
शुद्धिं कृत्वा विशेषेण पश्चात्स्नपनमारभेत् २३
शिवकुंभं ततोद्धृत्य लिंगमद्ध्ये शिवं यजेत्
तत्तुंभस्योदकैरेव स्नापयेत्परमेश्वरम् २४
वर्द्धनीञ्च ततोद्धृत्य पिंडिकायां मनोन्मनीम्
विन्यस्य स्नापयेत्तस्यां कलशैश्च शिवं तथा २५
शिवकुंभांभसालिंगं पिंडिकायां मनोन्मनीम्
विद्येशकलशाद्भिस्तु स्नापयेदभितः क्रमात् २६
स्नापयेत्पूजयेद्धीमानर्चनोक्तं विशेषतः
प्रभूतहविषन्दत्वा तांबूलन्तु निवेदयेत् २७
आचार्यं पूजयेदन्ते वस्त्रहेमांगुलीयकैः
एवं यः कुरुते मर्त्यस्सपुण्यांगतिमाप्नुयात् २८

इति एकोनपंचाशत्स्नपनविधिपटलस्सप्तत्रिंशत्तमः

अष्टोत्तरशतस्नपनविधिपटलप्रारंभः

अष्टोत्तरशतं वक्ष्ये स्नपनं भुक्तिमुक्तिदम्
अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः १
प्रोक्षणान्ते प्रतिष्ठान्ते चोत्सवान्ते विशेषतः
संक्रान्तौ वाप्यमावास्यां षडशीति मुखेऽपिवा २
सिनीवाल्यांकुहौ चैव ह्याद्यायान्तु विशेषतः
राजाभिषेकसमये तस्य जन्मदिनेऽपि च ३
अन्यस्मिन्मंगळे कार्ये प्रायश्चित्ते विशेषतः
स्नपनं कारयेद्धीमान्सर्वपापनिकृन्तनम् ४
भवनस्याग्रतः कुर्यात्मण्टपञ्चतुरश्रकम्
द्वादशन्दशहस्तं वा नवहस्ताष्टहस्तकौ ५
विप्रादीनां क्रमात्ग्राह्यं षोडशस्तंभसंयुतम्
पङ्क्तित्रयसमायुक्तं पङ्क्तिमानमथोच्छ्रयम् ६
तलोत्सेधं युगांगुल्यन्दर्पणोदरसन्निभम्
युगद्वारसमायुक्तं वेदतोरणभूषितम् ७
वितानदर्भमालाभिः स्नपनैर्विविधैर्युतम्
वितानद्ध्वजसंयुक्तम्मुक्तादामविराजितम् ८
अष्टमंगळसंयुक्तं मंगळांकुरशोभितम्
गोमयालेपितं कृत्वा तरंगेणैव वेष्टयेत् ९
शिवांभसा तु संप्रोक्ष्य सूत्रपातन्तु कारयेत्
पूर्वाग्रञ्चुकलासूत्रं शालिपिष्टोक्तरज्जुना १०
उदगग्रं तथैव स्याद्रंध्रतालप्रमाणतः
पञ्चपञ्चपदं मद्ध्ये परितोऽपि पदं त्यजेत् ११
एकविंशतिकोणेषु द्वारायान्नयानि वर्जयेत्

मद्ध्यमे तु शिवव्यूहमाग्नेयादिविदिक्षु च १२
व्यूहञ्चैव तु चत्वारो धर्मज्ञानादयः क्रमात्
तन्मद्ध्ये शालिभिश्चैव स्थंडिलं कारयेत्ततः १३
शालीनामाढकं श्रेष्ठं त्रिप्रस्थं मद्ध्यमं भवेत्
द्विप्रस्थमधमं प्रोक्तं कलशानां पृथक्पृथक् १४
शिवं वै शिवकुंभस्य षट्प्रस्थं वर्द्धनी स्मृतम्
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि १५
लाजपुष्पतिलैर्दर्भैर्विकिरेत्तु विशेषतः
प्रागग्रञ्चोत्तराग्रैश्च व्यूहेषु च परिस्तरेत् १६
पुण्याहं वाचयेत्तत्र स्थापयेत्कलशांस्थितान्
काळं भिन्नञ्च सुषिरं भेदञ्छेदञ्च लीनकम् १७
दुर्गन्धञ्च पुराणञ्च वर्जयेद्देशिकोत्तमः
काळञ्चकलहं विद्यात् भिन्नञ्चैव कुलक्षयम् १८
महावातप्रकोपञ्च सुषिरञ्च विशेषतः
छेदं विच्छेदनं कुर्यात् भेदं भेदाय वै तथा १९
लीनं व्याधिकरञ्चैव दुर्गन्धं बालनाशनम्
स्त्रीनाशं स्यात्पुराणन्तु संग्रहेत् बिंबसन्निभम् २०
तस्मात्सर्वप्रयत्नेन दोषयुक्तं विवर्जयेत्
कलशान्वेष्टयेद्विद्यानेकद्वित्रिकतन्तुभिः २१
एकद्वित्रियवान्तं स्याच्छिवकुंभञ्च वर्द्धनीम्
अन्यांश्चकलशांश्चैव गवाक्षसदृशान्तरान् २२
मण्टपस्योत्तरे विद्यान्दर्भैश्चैव परिस्तरेत्
क्षाळयेत्कलशांस्तत्र प्रोक्षयेत्पुरुषेण तु २३
अधोमुखांश्च कलशान्स्थापयेत्तु कुशोपरि
कलशानां स्वरूपाणां पादपृष्ठे मुखोद्भवम् २४
दन्तोष्ठरसजिह्वानि अस्थिमांसरुधिरस्तथा

स्त्रीपुन्नपुंसकं दाय जातिच्छन्दविकल्पनम्  २५
ब्राह्मयं दैविकमानुष्यं पैशाचं कलशं स्मृतम्
अत्यन्तरक्तवर्णानि कांस्यध्वनिसमन्वितम्  २६
एवं लक्षणसंयुक्तं दैविकं कलशं स्मृतम्
श्वेतं रक्तं तथामिश्रं भिन्नं कांस्यध्वनिर्युतम्  २७
पूर्वशब्दसमायुक्तं ब्रांहिकं कलशं स्मृतम्
कृष्णं रक्तं तथाश्वेतं धूम्रवर्णसमन्वितम्  २८
दिशेदिशे शब्दभिन्नं मानुष्यं कलशं स्मृतम्
सर्ववर्णसमायुक्तमेकवर्णेन भूषितम्  २९
मृत्तिकाशब्दसंयुक्तं पैशाचं कलशं स्मृतम्
स्त्रीणां ब्रंहादरञ्चैव पुल्लिंगं वाग्भवं बृहत्  ३०
आमूलाग्रसमञ्चैव नपुंसकघटानि च
भार्गवं मुखमित्याहुरोष्ठान्तं ग्रीवमुच्यते  ३१
स्वरूपं रूपमित्याहुस्थरिडलं पादमेव च
भूयस्थापृष्ठमोवोक्तं पुष्पमाला च बाहुकौ  ३२
सूत्रमाभरणं यच्च कूर्चं जिह्वाविशेषतः
दन्तच्छिन्नञ्च पुष्पाणि जलेन प्राणमेव च  ३३
अस्थिराधरे प्रोक्तं चर्मालंकृतवस्त्रकम्
शोणितं रक्तमृत्तेन शब्दं वै जलशब्दवत्  ३४
प्रोक्षयेद्धृदयेनैव कलशोन्मीलनं कुरु
जलद्रोणया जलञ्चैव वस्त्रेणैव तु शोधयेत्  ३५
मद्धयमे शिवकुंभन्तु पञ्चरत्नांबुसंयुतम्
मद्धयव्यूहस्य सौम्ये तु वर्द्धनीं स्थापयेद्धृदा  ३६
हेमतोयसमायुक्तं कल्पयेत्कल्पवित्तमः
स्थापयेत्कलशान्सर्वान् पश्चात् द्रव्याणि विन्यसेत्  ३७
पाद्यमाचमनञ्चार्घ्यं गव्यं पूर्वादिदिक्षु च

दधिसर्पिर्मधुक्षीरमाग्नेयादि विदिक्षु वै ३८
तिलञ्च बिल्वपत्रञ्च चन्दनं मेघमेव च
चणकं हरिबेरञ्च सर्षपं नागकेसरम् ३९
तक्कोलञ्च फलं कुष्ठं कञ्चोलञ्चैव लोहकम्
लवंगं पत्रकर्पूरं विन्यसेत्तु क्रमेण तु ४०
द्रव्याणि षोडशैतानि पूर्वदिक्षु क्रमान्न्यसेत्
तृतीयावरणे सक्तूनाग्नेयादिषु पञ्चसु ४१
नैर्ऋत्यांविन्यसेत् भस्महारिद्रं वायवे न्यसेत्
ऐशान्यान्तु शकृच्चूर्णं क्रमेणैव तु विन्यसेत् ४२
धात्रीमग्नौ न्यसेत्तत्र नैर्ऋत्यां पदसप्तसु
नाळिकेरन्न्यसेत्तत्र वायव्ये लिकुचन्न्यसेत् ४३
मातुळंगं न्यसेदीशे कलशेषु च सप्तसु
पञ्चमावरणे लक्ष्मीं कलशेषु नवस्वपि ४४
कलशेषु च नैर्ऋत्यां सह देवीञ्च विन्न्यसेत्
विष्णुक्रान्तं न्यसेद्वायौ कलशेषु यथाक्रमम् ४५
रुद्रवर्णी न्यसेदैशे कलशेषु नवस्वपि
उत्तमं नवकाशैस्तु सप्तकाशैस्तु मद्ध्यमम् ४६
अधमं पञ्चकाशैस्तु रुद्रधर्मग्रहायुतम्
ग्रंथिरेकांगुलं प्रोक्तमग्रन्तु चतुरंगुलम् ४७
ग्रन्धिं तद्दक्षिणावर्तं कूर्चानां लक्षणं त्विदम्
ऊर्ध्वाग्रं पुष्टिदं प्रोक्तमधोग्रं शान्तिकं भवेत् ४८
सुसितं सूक्ष्मसुश्लक्ष्णमहतं सदशं भवेत्
उत्तमं सप्तहस्तं स्यात् षड् हस्तं मद्ध्यमं भवेत् ४९
अधमं पञ्चहस्तं स्यात् वस्त्रलक्षणमुच्यते
असितं स्थाननाशं स्यादसूक्ष्मं निधनं भवेत् ५०
अश्लक्ष्णं ग्रामनाशं स्याद्राष्ट्रनाशमलक्षणम्

सदाशिवं यजेत्कुंभे वर्द्धन्यान्तु मनोन्मनीम्  ५१
सकूर्चौ सापिधानौ च वस्त्रयुग्मसमावृतौ
पूजयेत्तु विशेषेण गंधपुष्पादिभिः क्रमात्  ५२
प्रथमावरणे यद्वा वामादिनवशक्तयः
द्वितीयावरणे चाष्टलोकपालांश्च दिक्षु वै  ५३
अन्तराळे तथाचाष्ट विद्येशांश्च प्रपूजयेत्
तृतीया वरणे चैव विघ्नेशं चैव पञ्चसु  ५४
निर्ऋत्यां च तथा स्कन्दं वायौ नन्दीशमेव च
तथैशेपि महाकाळं पूजयेत्तु विशेषतः  ५५
चतुर्थावरणे चाग्नौ गंगां सप्तपदेषु च
निर्ऋत्यां च तथालक्ष्मीं वायौ सरस्वतीन्तथा  ५६
दुर्गामीशानदिग्भागे पदेष्वेव हि सप्तसु
पञ्चमावरणे चाग्नौ सूर्यरंध्रपदेषु च  ५७
निर्ऋतौ चैव भृंगीशं पदेषु च नवस्वपि
वायौ नवपदेष्वेव तथैशे तु पदेषु च  ५८
यथाक्रमेण गन्धाद्यैरश्विनीं संप्रपूजयेत्
सकूर्चान्सापिधानांश्च सवस्त्रां कलशांस्तथा  ५९
ईशस्याभिमुखान्देवान्सर्वान्कलशहस्तकान्
संपूज्यगन्धपुष्पाद्यैः पदंप्रतिपदंप्रति  ६०
द्वारपूजां ततः कृत्वा पूर्वोक्तविधिना सह
गर्भगेहं प्रविश्याथ निर्माल्यं तु विसर्जयेत्  ६१
घण्टान्तु ताडयेत्तत्र यवनीमपनीय च
लिंगशुद्धादिकं सर्वं प्रागुक्तविधिना ततः  ६२
हृदयेन तु मन्त्रेण शिवकुंभं तथोद्धरेत्
शिवमन्त्रं न्यसेल्लिंगे तत्तोयेनाभिषेचयेत्  ६३
वर्द्धनीन्तु ततोद्धृत्य न्यसेच्छक्तिन्तु पिण्डके

वर्द्धनीसलिलेनैव पिरिडकामभिषेचयेत् ६४
यथासंस्थापितास्सर्वे तथाचोद्धारणं कुरु
पञ्चब्रह्मषडंगैश्च व्योमव्यापि पदैस्तथा ६५
न्नुरिका बीजमुख्याभ्यां स्नापयेदादिशैवकः
अर्चनोक्तं समारभ्य प्रभूतहविषन्ददेत् ६६
सव्यापसव्यमार्गेण त्रिः कृत्वस्तु प्रदक्षिणम्
प्रणम्य परिवाराणि क्षमस्वेति वदेद्गुरुः ६७
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
सुवर्णं शालिवस्त्राणि चान्योपकरणानि च ६८
देशिकाय प्रदातव्यं भक्तांश्च परिचारकान्
दीनाननाधान्तत्काले पूजयेत्तु विशेषतः ६९
महेशस्नपनञ्चेत्तु विशेषं किञ्चिदस्ति हि
कुंभे यजेन्महेशन्तु वर्द्धन्यान्तु गणांबिकाम् ७०
अन्येषां सर्वकर्माणामविशेषं प्रजापते
नैमित्तिके तथायागे वर्तमाने च बुद्धिमान् ७१
काले च त्वयने प्राप्ते तत्कर्मेण सहैव तु
विशेषस्नपनञ्चैव कारयेत्तु विशेषतः ७२
नित्यकर्माणि सर्वाणि प्रकुर्वीत विशेषतः
एवं यः कुरुते मर्त्यः स्नपनं विधिपूर्वकम् ७३
इहैव धनवान्श्रीमान्सोन्ते सायुज्यमाप्नुयात्
इत्यष्टोत्तरशतस्नपनविधिपटल अष्टत्रिंशत्तमः

महास्नपनविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण महास्नपनमुत्तमम्
सर्वविघ्नविनाशार्थं सर्वशान्तिकरं परम् १
प्रासादस्याग्रके वापि मराटपं कारयेत्ततः

दक्षिणे चोत्तरे वापि सकुथाम्मन्त्रवित्तमः २
क्षेत्रं परिग्रहेत्पूर्वमस्त्रमन्त्रेण मन्त्रवित्
विंशद्धस्तप्रमाणेन कल्पयेच्चतुरश्रकम् ३
षट्त्रिंशत्गात्रसंयुक्तम्मद्ध्ये वेदांघ्रिकान्न्यसेत्
श्रुतिद्वारसमायुक्तं चतुस्तोरणसंयुतम् ४
विताने नोद्ध्र्वमाच्छाद्य गात्रं वस्त्रेण वेष्टयेत्
दर्भमालासमायुक्तं दिक् द्ध्वजैश्च प्रलंबितम् ५
मुक्तास्त्रक् दामविविधैस्तरंगेणावृतं बहिः
प्रथमं शोधयेत् भूमिमालेपेन द्वितीयकम् ६
तृतीयं सूत्रविन्यासञ्चतुर्त्थं स्थण्डिलं भवेत्
पञ्चमं कलशन्यासं कूर्चन्यासन्तु षष्ठकम् ७
सप्तमं द्रव्यविन्यासं देवतान्यासमष्टमम्
शरावन्नवमञ्चैव दशमं सूत्रवेष्टनम् ८
एकादशं गन्धपुष्पं द्वादशन्धूपदीपकम्
मुद्रात्रयोदशं प्रोक्तं प्रोक्षणन्तु चतुर्दशम् ९
पञ्चदश्यं घटोद्धारं षोडशं स्नपनं भवेत्
अस्त्रेण शोधयेत् भूमिं वामदेवेन लेपयेत् १०
सूत्रन्यासमघोरेण स्थण्डिलं पुरुषेण तु
हृदयेन न्यसेत्कुंभमीशानेन न्यसेत् कुशान् ११
मूलेन विन्यसेत् द्रव्यं सद्येन देवतान्न्यसेत्
शरावं बीजमुख्येन वस्त्राणि हृदयेन तु १२
ईशानेनैव गन्धादीन्धूपादीन्कवचेन तु
अघोरेणास्त्रमुद्रान्तु वाचयेत्पवमानकम् १३
प्रोक्षयेत्तु विशेषेण पुण्याहन्तु यथार्हकम्
प्रणवेन घटोद्धारम्महाव्योमेतिमन्त्रतः १४
पञ्चब्रह्मषडंगैश्च पूजयेत्परमेश्वरम्

मगटपस्य तु तन्मद्धये हस्तं सूत्रान्तरन्ततः १५
पूर्वापरेण मार्गेण युग्मसूत्रन्तु कारयेत्
दक्षिणोत्तरमार्गेण सूत्रपातन्तथाचरेत् १६
तस्य मद्धये न्यसेत्शंकुं समन्त्रान्भ्रामयेत्बुधः
एकविंशति सूत्राणि वृत्तवत्कारयेत् बुधः १७
तालं सूत्रान्तरं प्रोक्तं विंशत्यावरणे क्रमात्
द्वारार्द्धकम्महाशासु भ्रमन्सूत्राणि सन्त्यजेत् १८
स्थगिडलं कारयेन्मद्धये प्यष्टद्रोणैश्च शालिभिः
तन्मद्धये विलिखेत्पद्मं साष्टपत्रं सकर्णिकम् १९
तदर्द्धैस्तगडुलैर्भूष्य तदर्द्धैश्च तिलैरपि
लाजपुष्पकुशैस्तीर्य पूजयेद्धृदयेन तु २०
स्थगिडलं शालिभिश्चैव कारयेत्कलशं प्रति
लाजपुष्पतिलैर्दर्भैर्विकिरेत्समलंकृतम् २१
मगटपस्योत्तरे भागे दर्भोपरिविशेषतः
तन्तुना चित्रितान् कुंभान् सदायेद्विधिपूर्वकम् २२
जलधारीं समादाय शुद्धिं कृत्वा तु विन्यसेत्
वस्त्रेणाच्छाद्य वक्त्रञ्चाप्युदकन्तत्र पूरयेत् २३
शिवकुंभन्नयसेन्मद्धये गन्धोदकं प्रपूरयेत्
सकूर्चं सापिधानञ्च वस्त्रयुग्मेन वेष्टितम् २४
पद्ममुद्रांप्रदर्श्याथ प्यर्चयेत्तु सदाशिवम्
तस्योत्तरे तु विन्यस्य वर्द्धनीं हेमतोयकाम् २५
सकूर्चां सापिधानाञ्च वस्त्रयुग्मेन वेष्टिताम्
गन्धपुष्पादिभिश्चैव पूजयेत्तु मनोन्मनीम् २६
प्रथमावरणे चाष्टकलशेषु विशेषतः
आग्नेयादिषु कोणेषु नवरत्नानि विन्यसेत् २७
द्वितीयावरणे चैव षोडशान्कलशान्नयसेत्

चतुर्विंशतिकं प्रोक्तं तृतीयावरणे तथा  २८
द्वात्रिंशत्कलशान्सम्यक्चतुर्थावरणे न्यसेत्
पञ्चमावरणे चैव षत्पञ्चाशद्विधीयते  २९
षष्ठमावरणे चैव चतुष्षष्टिघटान्नयसेत्
सप्तमावरणे चैव द्विसप्ततिः क्रमेण तु  ३०
चतुराशीति कलशानष्टमावरणे न्यसेत्
घटान्षरणवतीन् चैव नवमावरणे तथा  ३१
दशमावरणे चैव शतमेवं प्रकीर्त्तितम्
रुद्रावरणके चैव कलशांश्च चतुश्शतम्  ३२
द्वादशावरणे तत्राप्यष्टोत्तरशतं भवेत्
त्रयोदशावरणे तु षट्भिर्दशशतं क्रमात्  ३३
बाह्यकावरणे चैव न्यसेद्विंशच्छतन्तथा
प्रदक्षिणक्रमेणैव यजेदावरणं प्रति  ३४
द्व्यन्तरे द्व्यन्तरे चैव वीधिषट्कं प्रकल्पयेत्
पाद्यादिभिस्सहस्रन्तु स्थापयेदीशमन्त्रतः  ३५
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरन्दधिघृतञ्चैव प्रथमावरणे न्यसेत्  ३६
द्वितीयावरणे चैव सुवर्णं प्रक्षिपेत्ततः
तृतीयावरणे न्यस्त्वा नाळिकेरफलं क्रमात्  ३७
चतुर्थावरणे चैव न्यसेदिक्षुरसन्तथा
पञ्चमावरणे चैव मधुविन्यस्य देशिकः  ३८
नानाकुसुमसंयुक्तं षष्ठे तु विन्यसेत्क्रमात्
सप्तमावरणे चैव सर्वबीजानि विन्यसेत्  ३९
अष्टमावरणे चैव विन्यसेत्कदळीफलम्
गोमयं शोषयित्वा तु शुद्धदेशे दहेत्पुनः  ४०
तत्भस्मना ततोद्धृत्य निक्षिपेन्नवमं क्रमात्

पञ्चगव्येन संयुक्तन्दशमावरणे क्रमात् ४१
एकादशे विशेषेन कषायन्तत्र विन्यसेत्
द्वादशावरणे सम्यक् धातुलोहानि विन्यसेत् ४२
विन्यसेत्तु क्रमेणैव ग्रक्षतन्तु त्रयोदशे
वल्मीकादिमृदंग्राह्य बाह्यकावरणे न्यसेत् ४३
सर्वगन्धं समाहृत्य सर्वकुंभेषु निक्षिपेत्
पूजिताकलशा ह्येतैः यथालाभमथापि वा ४४
कलशेषु जलैः पूर्य यथालाभन्तु निक्षिपेत्
एतेषामप्यलाभे तु यद्द्रव्यं तु स्मरेद्बुधः ४५
तत्तत्द्रव्यञ्चसंकल्प्य पुष्पैर्वापि विनिक्षिपेत्
विधिनावस्त्रकूर्चाभ्यां प्रत्येकं कलशान्क्रमात् ४६
ग्रनन्तादिशिखराडयन्तान् प्रथमावरणे यजेत्
द्वितीये चैव चराडेशं नन्दीशञ्च तृतीयके ४७
महाकाळञ्चतुर्थे तु विघ्नेशं पञ्चमे यजेत्
षष्ठे तु वृषभं पूज्य भृंगीशं सप्तमे यजेत् ४८
ग्रष्टमावरणे स्कन्दमनन्तन्नवमे यजेत्
पिनाकपाणिन्दशमे बाह्ये तु जयभद्रकम् ४९
द्वादशावरणे चैव विरूपाक्षं प्रपूजयेत्
त्रयोदशे यजेत्सूक्ष्मं तद्बाह्ये पिंगलेक्षणम् ५०
गन्धपुष्पादिभिश्चैव स्वनामाद्यैर्विशेषतः
घटं प्रतियजेदेतान् तत्तदावरणेषु च ५१
वालुकैश्च महाशासु स्थरिडलन्तु प्रकल्पयेत्
ग्रग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ५२
समिदाज्य चरुञ्चैव सद्यवामास्त्रमन्त्रकैः
प्रत्येकन्तु शतं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ५३
पञ्चब्रह्मषडंगैश्च मूलेनैव दशाक्षरैः

प्रत्येकञ्जुहुयाद्धीमान्पञ्चविंशतिसंख्यया ५४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिन्तु शिरसा यदस्येति तदन्तके ५५
उक्तानुक्तन्तु यत्किञ्चित्तत्सर्वं हृदयेन तु
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ५६
कन्यसं पञ्चनिष्कन्तु द्विगुणं मद्ध्यमं भवेत्
त्रिगुणञ्चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा ५७
दक्षिणान्दापयित्वा तु मूर्त्तिपानथ पूजयेत्
द्वारपूजादिकं सर्वमर्चनोक्तन्तु कारयेत् ५८
शिवकुंभन्ततोद्धृत्य मन्त्रलिंगे तु विन्यसेत्
तत्कुंभस्थजलेनैव स्नापयेत्परमेश्वरम् ५९
वर्द्धन्यां बीजमादाय न्यसेल्लिंगस्य वामके
पिण्डिकायां जलैश्चैव स्नापयेत्तु विशेषतः ६०
यथासंस्थापितान् कुंभान् तथा चोद्धारणं कुरु
संस्नाप्य देवदेवेशमर्चनोक्तं समाचरेत् ६१
प्रभूतहविषन्दत्वा तांबूलन्तु निवेदयेत्
भक्तांश्च परिचारांश्च दीनानन्धान्प्रपूजयेत् ६२
स्नपनांगानि वस्त्राणि देशिकाय प्रदापयेत्
एवं यः कुरुते मर्त्यस्सपुण्यांगतिमाप्नुयात् ६३
स्नकारं सर्वसिद्धिस्स्यात्पकारं स्थितिरुच्यते
नकारं पापनाशं स्यात्तस्मात्स्नपनमुच्यते ६४
इति महास्नपनविधिपटल एकोनचत्वारिंशत्तमः

दण्डितविधानविधिपटलप्रारंभः

ॐ सप्तसप्तपदकोष्ठमद्ध्यमे नन्दकोष्ठ सहितन्तुतद्बहिः ।
वीधिरेकपदमावृतन्त्यजेद्दिग्विदिक्षुगुणचंद्रकोष्ठकम् ॥

इति पञ्चविंशतिस्नपनम्
नवनवेषु नवेषु च मद्ध्यमे नवतु पंकजमद्ध्यमभूतले ।
तद्बहिःपदके तु विवर्जिते दिग्विदिक्षुरसवेदपदं क्रमात् ॥
इति एकोनपञ्चाशत्स्नपनम्
भुवनसूत्रनिबद्धितभूतले भवतु पञ्चकपञ्चकमद्ध्यमे ।
वीधिरेकपदमावृतन्त्यजेत् भानुदिक्षुविदिक्षुनवग्रहान् ॥
इति अष्टोत्तरशतस्नपनम्
अथ वक्ष्ये विशेषेण चण्डितस्य विधिक्रमम्
एकविंशतिसूत्राणि वृत्तवत्कारयेत् बुधः १
तालं सूत्रान्तरं प्रोक्तं विंशत्यावरणं क्रमात्
द्वारार्द्धञ्च महाशासु भ्रमन्सूत्राणि सन्नयसेत् २
सकळं पदमेकं स्यात्पैशाचन्तु चतुष्पदम्
चत्वारिंशद्रसरन्ध्रैश्च सार्द्धपञ्चशतैर्युतम् ३
एतद्विशालमाख्यातं विप्रगर्भमथ श्रुणु
पीठं नवपदं प्रोक्तं महापीठन्तु षोडश ४
पञ्चपञ्चपदैस्सार्द्धमुपपीठमिति स्मृतम्
षट्षट्पदसमायुक्तमुग्रपीठमिति स्मृतम् ५
स्थण्डिलैकोनपञ्चाशन्मण्डूकञ्चाष्टचाष्टकम्
एकाशीति पदैर्युक्तमिंद्रकान्तन्तु चण्डितम् ६
शतकोष्ठसमायुक्तमासनन्तस्य नामकम्
शताष्टपदकैस्सार्द्धं परमशायि पदं स्मृतम् ७
सप्तद्वयगुणैर्वेद सार्द्धं स्थानीयनायकम्
शतोद्ध्र्वेष्टाष्टरन्ध्रैश्च पदैर्दशधमुच्यते ८
ऊद्ध्र्वे षण्णवती सार्द्धं पदं भद्रमिति स्मृतम्
शतद्वयमनोपेतं महास्नपनमुच्यते ९
द्विशतोत्तरभूतेष्टपद्मगर्भपदैर्युतम्

पञ्चाशत् द्विशतोपेतं नियुतन्तस्य चण्डितम्  १०
अशीति द्विशतोपेतं वृत्तीं भौममिति स्मृतम्
त्रिशताष्टद्वयोपेतं कर्णाष्टकमिदं पदम्  ११
षड्विंशत्त्रिशतोपेतं गणिकापदमेव च
चतुर्भूतपदं सूर्यं विशालन्तस्य चण्डितम्  १२
सुसंहितपदञ्चैव चत्वारिंशच्चतुर्दश
शतदिक्त्तुशिवारीति पदैस्सुप्रतिकान्तकम्  १३
चत्वारिंशद्रसखण्डैश्च सार्द्धपञ्चाशतैर्युतम्
एतद्विशालमाख्यातं विप्रगर्भमथ श्रुणु  १४
शतैः पञ्चपदोद्ध्र्वे तु षट्सप्तति समायुतम्
विप्रगर्भमिदन्नाम षडुक्तं पञ्चसंयुतम्  १५
विश्वेशाख्यमिदन्नाम विपुलं भोगदं श्रुणु
षट्भिर्युतपदोद्ध्र्वे तु षट्सप्तति समायुतम्  १६
विपुलं भोगदन्नाम विप्रतीकान्तमुच्यते
नवविंशतिकं सप्तशतं विप्रतिकान्तकम्  १७
सप्तशतपदोद्ध्र्वे तु चतुराशीति संयुतम्
विशालाक्षमिदन्नाम चण्डितं सर्वसिद्धिदम्  १८
अष्टाशतसुपञ्चाशत्पदं विप्रसुभक्तिकम्
विश्वेशसारमाख्यातं पदन्नन्दशतैर्युतम्  १९
शिवषष्ट्याधिकान------ न्तेश्वरकान्तकम्
सहस्रैर्वेद षट्कोष्ठमिंद्रकान्तन्तु चण्डितम्  २०
एतत्सुचण्डितं वेद सर्वकर्मानुसाधयेत्  २१

इति चण्डितविधानविधिपटलश्चत्वारिंशत्तमः

## महाभिषेकविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि महदप्यभिषेचनम्

धर्मार्त्थकाममोक्षार्त्थं शान्तिकं पौष्टिकन्तथा १
आयुश्श्रीकीर्तिजयदं व्याधिनाशं रिपुक्षयम्
ग्रामवृद्धिकरं पुण्यं सर्वोपहतिनाशनम् २
नवाहे वाथ सप्ताहे पञ्चाहे वा त्र्याहके
त्रिदिने तद्दिनात्पूर्वरात्रे वाङ्कुरमाचरेत् ३
यद्वासद्याङ्कुरं कुर्यादादिशैवः प्रशस्यते
रोहिण्यनिलसंयुक्तं पुष्यं वैष्णवमुच्यते ४
आदित्यहस्तमित्युक्तमष्टमी च चतुर्दशी
दशमी पूर्णमंसी च मासान्तं वाविशेषतः ५
कर्त्तुर्मरण ऋक्षं वा ग्रामऋक्षान्तमेव वा
नृपजन्मावसानर्क्षं प्रतिष्ठाहान्त ऋक्षकम् ६
नवाहं सौख्यदं प्रोक्तं सप्ताहं देविकं परम्
पञ्चाहं शान्तिकं प्रोक्तं त्र्याहन्तु शिवप्रियम् ७
एकाहं रोगशान्त्यर्त्थन्तस्मात्संपूजयेच्छिवम्
पूर्वरात्रौ तु कर्तव्यन्निर्वाणदीपमाचरेत् ८
क्षीराभिषेचनं कृत्वा कौतुकं बन्धयेत्ततः
शिवप्रस्थन्तु नैवेद्यं पायसं हविषन्ददेत् ९
प्रातः स्नात्वा शुचिर्भूत्वा देशिकश्शिष्यसंयुतः
गोमधालेपनं कृत्वा पुण्याह प्रोक्षणन्ततः १०
जलभाण्डं वर्द्धनीञ्च कलशं पुष्पपात्रकम्
पाटली सदृशाकारं सर्वलक्षणसंयुतम् ११
सर्वपात्रन्ततः कृत्वा क्षाळयेत्तत्वमन्त्रतः
दर्भासनोपरिस्थाप्य कवचेनाचकुण्ठनम् १२
निरीक्षणं हृदा चैव प्रोक्षणं पुरुषेण तु
ताडनं हुंफडन्तेन स्पर्शनं सद्यमन्त्रतः १३
मीलनन्नेत्रमन्त्रेण मण्टपस्योत्तरे स्थितम्

वस्त्रपूतं हि सलिलं जलभाणे परिग्रहेत्  १४
उदयादेवकर्त्तव्यं रात्र्यन्ते वाजलं ग्रहेत्
वर्णगन्धरसैर्हीनं कृमिशैवलकेशकम्  १५
फेनबुद्बुदजुष्टञ्च तज्जलं परिवर्जयेत्
विवर्णं रोगदं पुंसां गन्धहीने रिपोर्भयम्  १६
रसहीने तु –ारिद्र्यं कृमियुक्तं भयावहम्
शैवलं शोकसन्तापं केशयुक्बालनाशनम्  १७
सर्षपं स्त्रीप्रजानाशं बुद्बुदं सस्यनाशनम्
वस्त्रपूतविहीने च मरणं भूभुजां ध्रुवम्  १८
सस्मात्सनिर्मलन्तोयन्निर्दोषञ्च परिग्रहेत्
एलालवंगकर्पूरमगरुञ्चन्दनं लघु  १९
अंबुजञ्चैव तक्कोलं कञ्चोलहरिबेरकम्
उशीरं चंपकं कोष्ठं स्नानद्रव्यमिति स्मृतम्  २०
जलभाण्डे विनिक्षिप्य तदंबुवासितं क्रियात्
पञ्चाङ्गभूषणैर्युक्तो देशिको मूर्त्तिपैस्सह  २१
अंगन्यासकरन्यासमष्टत्रिंशत्कलान्नयसेत्
प्राणप्रकृतियोगेन ज्ञात्वा पूजां समाचरेत्  २२
प्राणो मन्त्र इति प्रोक्तः प्रकृतिः स्थापकं स्मृतम्
कुंभञ्च वर्द्धनीञ्चैव घटं त्रिद्व्येकतन्तुभिः  २३
वेदयित्वाथ तद्रन्ध्रं यवमात्रन्तु देशिकः
स्नपनं पञ्चगव्यञ्च पञ्चामृतं प्रकल्पयेत्  २४
स्नानमण्टपमद्ध्ये तु शालिभिस्थण्डिलं कुरु
प्राक्सूत्रं वसुसूत्रं स्यादुदक्सूत्रन्तथैव च  २५
सूत्रात्सूत्रान्तरन्तालम्मद्ध्ये नवपदं ग्रहेत्
अभितस्तस्य बाह्ये तु पदमेकं परित्यजेत्  २६
वसुद्वारसमायुक्तं त्यजेत्गोमयवारिणा

द्विद्रोणशालिभिः कुर्यात्तिलतण्डललाजकैः २७
शालिभिस्तण्डुलैस्त्वर्द्धैस्तस्यार्द्धैस्तु तिलैस्तथा
सूत्रपातं प्रकल्प्याथ दर्भैः पुष्पैः परिस्तरेत् २८
नवर्षी भूतवेदाग्निशक्तिदर्भैः परिस्तरेत्
पूर्वाग्रैश्चोत्तराग्रैश्च पदंप्रतिपदंप्रति २९
मद्ध्ये तु शिवकुंभन्तु वीधिमद्ध्ये तु वर्द्धनीम्
पाद्यमाचमनञ्चार्घ्यं कस्तूरी गन्धतैलकम् ३०
नीवारं कुंकुमञ्चैव मुरम्माञ्जी तिलन्तथा
प्रथमाचरणे चैव कलशानष्टदिक्षु च ३१
द्वितीयावरणे चैव पूर्वादिषु प्रकल्पयेत्
मधुकुष्ठं गुळञ्चैव ह्रीबेरञ्चन्दनं तथा ३२
तक्कोलञ्जातिकह्लारं शतपत्रञ्च मालती
द्रोणञ्च नाळिकेरञ्च वेणुं सर्षपमेव च ३३
गोरोचनञ्च बिल्वञ्च द्रव्याण्येतानि षोडश
ब्रह्मविष्णुमहेशांश्च हृषीकेशश्च भास्करः ३४
कलानाथम्महासेनं शर्वरुद्रेश्वराधिपम्
प्रथमावरणे न्यस्य देवपाणि तले न्यसेत् ३५
द्वितीयावरणे देवान्यष्ट्वा चैवं पितामहः
इंद्रादिलोकपालांश्च सोमांगिरबृहस्पती ३६
पिंगळं मन्मथञ्चैव ब्रह्माणं ब्रह्मर्षिं तथा
वसिष्ठं श्रीधरञ्चैव क्रमात्षोडशकान्नयजेत् ३७
हस्तपाणितले न्यस्य स्नपनं कल्पयेत् बुधः
दर्भैरेकादशैः कुंभे देशिकः कूर्चमाचरेत् ३८
अग्रं वेदांगुलञ्चैव ग्रंथीं व्योमांगुलं नयेत्
वर्द्धन्नया नवभिः काशैः विस्तारं तालमात्रकम् ३९
पञ्चभिर्द्वादशांगुल्य कलशानान्तु कूर्चकम्

गन्धपुष्पैः समभ्यर्च्य पूजयेत्स्वस्वनामभिः ४०
प्रत्येकं नववस्त्रेण स्नपनञ्चैव दापयेत्
तस्य पश्चिमदिग्भागे पञ्चगव्यं निधाय च ४१
स्थण्डिलं शालिभिः कुर्यात् नवकोष्ठसमन्वितम्
पादेषु पञ्चकोष्ठानि मद्ध्यपूर्वे तु दक्षिणे ४२
उत्तरे पश्चिमे चैव परिस्तरणपूर्वकम्
लाजपुष्पतिलैश्चैव रंध्रकोष्ठेषु योजयेत् ४३
कलशं क्षाळयित्वा तु त्रिपादूर्ध्वे तथैव च
क्षीरन्तु मद्ध्यमे स्थाप्य गोमूत्रं पूर्वकोष्ठके ४४
गोमयं दक्षिणे स्थाप्य पश्चिमे दधिविन्यसेत्
उत्तरे तु घृतं स्थाप्य पावके मधुविन्नयसेत् ४५
नैर्ऋते फलसारञ्च वायव्ये गुळसारकम्
ऐशान्नये नाळिकेरञ्च पूर्वादीनि क्रमान्नयसेत् ४६
क्षीरन्तत्प्रस्थसंयुक्तं गोमूत्रं कुडवद्वयम्
गोमयं कुडवञ्चैव दधितत्कुडवत्रयम् ४७
आज्यं कुडवमित्युक्तं पयश्च कुडवत्रयम्
कुडवन्तु मधुप्रोक्तं फलसारञ्च तत्द्वयम् ४८
गुळसारं ततः प्रस्थं नाळिकेरं तथा भवेत्
नवद्रव्यस्य संख्यातमधिदेवान्ततश्श्रुणु ४९
अगस्त्यञ्च पुलस्त्यञ्च विश्वामित्रञ्च भार्गवम्
गार्ग्यञ्च तुंबुरुञ्चैव भारतीनाञ्च मुद्गलम् ५०
ऋषिं ब्रह्मपदञ्चैव कलशं पाणी संस्थितम्
पुष्पैः कूर्चैस्समभ्यर्च्य स्वस्वमन्त्रेण देशिकः ५१
धूपदीपं ततः कृत्वा लिंगं सुरभिमुद्रया
तत्वमन्त्रेण संपूज्य दशमुद्रां प्रदर्शयेत् ५२
प्रधानकलशो मद्ध्ये सर्वं संयोजयेत् बुधः

सापिधानञ्च सर्वत्र शस्त्रमन्त्रेण बुद्धिमान् ५३
शिवस्य यजनार्थाय द्रव्यजातान् समाहरेत्
महाभिषेके द्रव्यस्य जलस्य हविषस्तथा ५४
गन्धस्यापि विशेषेण न प्रमाणं प्रजापते
मनोभिलषितं यच्च तत्सर्वं परिकल्पयेत् ५५
अथवान्यप्रकारेण तेषां मानं वदामि ते
चतुश्शतञ्च कदळी लिकुचं शतमेव च ५६
नारंगञ्चैव पञ्चाशत्तत् द्वयं चूतमेव च
नाळिकेरशतं प्रोक्तं पनसन्तु द्वयं भवेत् ५७
त्रिंशत्पलं शर्करा च घृतं द्विप्रस्थमेव च
तत् द्वयं माक्षिकं प्रोक्तं तच्चतुष्कन्तु तैलकम् ५८
तत् द्वयं क्षीरमित्युक्तं चंदर्द्धमीरितं दधि
चतुर्विंशत्पलं गन्धं जलद्रव्यं पलं स्मृतम् ५९
तदर्द्धं घनसारादि रजन्यामलसक्तुकम्
षट्पलञ्चेति विख्यातं खारी स्यादन्नपूजनम् ६०
द्रव्याण्यपि तथान्यानि चतुःप्रस्थेन कारयेत्
एवं द्रव्यस्य संख्याकमुपर्युपरिकल्पयेत् ६१
सर्वद्रव्याणि संगृह्य प्रक्षाळ्य प्रोक्षयेद्बुदा
शोधयित्वा तु सद्येन द्वारपूजां समाचरेत् ६२
द्वारमस्त्रांबुना प्रोक्ष्य द्वारपालान्प्रपूजयेत्
गर्भगेहं प्रविश्याथ देशिकश्चोत्तराननः ६३
प्राणप्रकृतियोगेन ज्ञात्वा कर्मसमाचरेत्
संपूज्यमूललिंगन्तु शुद्धिं शिवास्त्रको भवेत् ६४
तुळसी बिल्वपत्रेण लिंगपीठन्तु घर्षयेत्
लेपयेन्मूलमन्त्रेण प्राणयोगं समाचरेत् ६५
अष्टत्रिंशत्कलान्यासम्मकुटादिक्रमान्नयसेत्

न्यस्त्वा कुंभस्थमीशानं लिंगस्थन्तु सदाशिवम्  ६६
प्राकृतं भावमुत्सृज्य पूजयेदेकचित्ततः
स्नपनं पञ्चगव्यञ्चाप्यर्चनोक्तं विधीयते  ६७
मूलब्रह्मषडंगैश्च गन्धतोयं प्रपूजयेत्
ऊर्द्ध्वश्वासमधःश्वासं सन्निरुद्ध्य परीक्षयेत्  ६८
मौनञ्च द्रार्कनाशश्च सर्वपूजा निमित्तकम्
वेदाद्यद्ध्ययनं कुर्यादग्रमण्टपमद्ध्यमे  ६९
चमकन्नमकञ्चैव पुंसूक्तं पवमानकम्
श्रीसूक्तं पञ्चशान्तिं च कलासूक्तं हिरण्यकम्  ७०
विप्रो वाथ चतुर्वेदी महाशैवोऽथ दीक्षितः
अदीक्षितो भक्तिहीनो मन्त्रहीनो न संस्पृशेत्  ७१
लिंगार्च्चामपि तत्तुल्यैस्समयाय विशेषतः
वेदाध्ययनयुक्तस्सन् गन्धवारिप्रपूजयेत्  ७२
गव्यं पञ्चामृतञ्चैव व्योमव्यापिं समुच्चरन्
दशाक्षरत्रयो मन्त्रैः पूजयेत्परमेश्वरम्  ७३
लंबकूर्चं लंबमालां मूलब्रह्मषडंगकैः
पिष्टामलकहारिद्र गन्धतोयैश्च पूजयेत्  ७४
अष्टपुष्पैर्वस्त्रगन्धैस्सप्तसंख्यानि वेदनम्
नृत्तगीतसमायुक्तं स्तोत्रमंगळवाचकैः  ७५
नानादीपैरलंकृत्य धूपदीपं प्रदापयेत्
पञ्चाननिवेद्यञ्च पुराचमनन्ततः  ७६
तांबूलमुखवासञ्च दर्पणन्दर्शयेत्ततः
शैवाग्निं संप्रकल्प्याथ वह्निकार्योक्तमार्गतः  ७७
ब्रह्मवृक्षसमिद्भिस्तु समिदाज्य चरून्हुनेत्
होमद्रव्याणि सर्वाणि सद्योजातादिभिस्सह  ७८
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्

शेषाहुतिञ्च कूश्माराडं स्विष्टकृत्जुहुयात्ततः ७९
पुनस्त्वादित्येतिमन्त्रेण पूर्णाहुतिं समाचरेत्
सर्वरोगनिवृत्यर्त्थं सर्वयागफलप्रदम् ८०
सर्वसंपत्करं नृणां पुत्रपौत्राभिवर्द्धनम्
आचार्यं पूजयेत्पश्चात् दैवज्ञमृत्विजन्तथा ८१
एवं यः पूजनं कुर्यात्सर्वशान्तिमवाप्नुयात् ८२
इति महाभिषेकविधिपटल एकचत्वारिंशत्तमः

एकादशरुद्राभिषेकविधिपटलप्रारंभः
अतः परं प्रवक्ष्यामि रुद्रमन्त्राभिषेचनम्
सर्वविघ्नविनाशार्त्थमपमृत्युविनाशनम् १
सर्वरोगविनाशार्त्थं राष्ट्रदुर्भिक्षनाशनम्
वर्षार्त्थं च जयार्त्थं च विशेषात् ज्वरनाशनम् २
ग्रहपीडविनाशार्त्थं सर्वोपद्रवनाशनम्
सर्वसिद्धिकरं पुरायं मासर्क्षे जन्मनि त्रये ३
रविवारे सोमवारे जन्मर्क्षे विषुवायने
संक्रान्तौ ग्रहणे चैव कल्पयेत्तु विशेषतः ४
शिवाग्रे स्थरिडलं कृत्वा पुरयाहं पंचगव्यकम्
पंचामृतन्तु संकल्प्य कुंभसंस्थापनन्ततः ५
मद्ध्यकुंभे शिवं पूज्य वर्द्धनीन्तस्य वामके
अष्टविद्येश्वरान्स्थाप्य विधिवत्पूजयेत् गुरुः ६
अग्निकार्योक्तमार्गेण होमं कुर्याद्विशेषतः
द्वारपूजान्ततः कृत्वा लिंगशुद्धिमथाचरेत् ७
आत्मार्त्थञ्च परार्त्थञ्च शुद्धशैवो जपेत्क्रमात्
अथवा ब्राह्मणान्विप्रान्शिवकुंभसमन्वितान् ८
रुद्रसंख्यान्समाहूय अर्द्धमराटपसंस्थितान्

जपेत्संकल्पपूर्वञ्च एकादशपरायणम्  ९
तैलाद्यन्नपूजान्तमभिषेकमथाचरेत्
ओदनन्नाळिकेरञ्च गुळतांबूलसंयुतम्  १०
रुद्रपारायणान्ते च पुनःपुनर्न्निवेदयेत्
एकादशजपान्ते तु गन्धतोयाभिषेचनम्  ११
मन्त्रान्नञ्च निवेद्याथ ततः कुंभाभिषेचनम्
वस्त्रमाल्यैरलंकृत्य महानैवेद्यमाचरेत्  १२
धूपदीपोपचारादीन्पूर्वोक्तविधिनाचरेत्
त्रिपत्तं वा द्विपत्तं वा पत्तमेकमथापि वा  २३
एकादशदिने पूज्य यथावित्तानुसारतः
ब्राह्मणान्भोजयेन्नित्यं यथा विभवविस्तरम्  २४
यथावित्तानुसारेण दक्षिणान्दापयेत्क्रमात्
एवमेव प्रकारेण कारयेद्देशिकोत्तमः  २५
विपरीतन्नकर्त्तव्यं कर्त्तव्यं कर्त्तृनाशनम्
एवं संपूज्य विधिवत् एकाहे वा समाचरेत्  २६
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्  २७
इति एकादशरुद्राभिषेकविधिपटलः द्विचत्वारिंशत्तमः

## तैलाभ्यंगविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि तैलाभ्यञ्जनमुत्तमम्
तिलतैलेन कृत्वा तु सुगन्धकुसुमैर्युतम्  १
गृहीत्वा नवकुंभेन वर्मणावकुण्ठनं कुरु
लिंगं वा प्रतिमां वापि मृण्मये भित्तिचित्रके  २
लिंगञ्च प्रतिमांशैलं लेपनं मर्दनेन तु
मृण्मये भित्तिचित्रे वा दर्पणस्य तु बुद्धिमान्  ३
रत्नजे लोहजे चैव कूर्चेन प्रोक्षयेद्बुधः

वस्त्राणि सन्त्यजेदेव तत्पुरुषेण पूजयेत् ४
धूपदीपं हृदा दत्वा दन्तकाष्ठन्ददेद्बुधः
दर्पणन्दर्शयेद्धीमान्तांबूलन्दापयेद्धृदा ५
तैलमस्त्रेण संप्रोन्द्य कवचेनावकुण्ठयेत्
अस्त्रमन्त्रेण संरन्द्य तैलं हृदयबीजकम् ६
मर्दयेत् मस्तकं लिंगलेपनन्देशिकोत्तमः
पीठेन मार्जनं वाममघोरं मूलकेन तु ७
हरिद्रां सद्यमन्त्रेण स्नाापयेत्तु विशेषतः
अशुभानि रसत्कृत्वा शुभानान्दापयेत्कृतिः ८
गन्धोदकेन संपूज्य वस्त्रेणैव तु मार्जनम्
गन्धं पुष्पञ्च धूपञ्च दीपञ्चैव तु योजयेत् ९
निवेदनञ्च कर्त्तव्यं उपदंशसमन्वितम्
तांबूलन्दापयेत्पश्चात्स्वस्थानं पादमूलतः १०
नित्ये नैमित्तिके वापि वारे पर्वद्वयेऽपि तु
उत्सवादीनि काम्यन्तु तीर्त्थमन्त्ये तु कारयेत् ११
परिवेषन्ततः कृत्वा गेयनृत्तसमाकुलम्
चूर्णन्तु कुट्टयेद्धीमान्महाव्योमेति मन्त्रतः १२
लूखलं पृथिवी चैव मुसलं मेरुकल्पयेत्
तन्मद्धये रजनीन्तस्य सशुष्केण समन्वितम् १३
स्तोत्रस्तुत्य समायुक्तं सर्वालंकारसंयुतम्
ततो भक्तजनैस्सार्द्धं दापयेत्तैलकं विदुः १४
तांबूलन्दापयेत्पूर्वे सर्वत्र परिसेवितम्
यान्यान्कामयते देवं तान्तान्शर्वस्य सिद्धितः १५

इति तैलाभ्यंगविधिपटलस्त्रिचत्वारिंशत्तमः

शीतकुंभविधिपटलप्रारंभः

अथवक्ष्ये विशेषेण शीतकुंभविधिक्रमम्
सर्वलोकहितं पुण्यं सर्वदा सस्य वर्द्धनम्  १
अनावृष्टौ ज्वरोत्पत्तौ महामारी प्रकोपने
प्रवर्त्तितेऽग्निदिग्दाहे ग्रामेऽपिनगरेऽपि वा  २
वाहनानान्तु रोगार्त्तौ शीतकुंभन्तु कारयेत्
प्रासादाग्रे तु कर्त्तव्ये मण्टपे स्थण्डिलं कुरु  ३
शालिभिश्च वसुद्रोणैस्तस्यार्द्धैस्थण्डिलैरपि
हस्तद्वयप्रविस्तारन्तन्मद्ध्येऽब्जं समालिखेत्  ४
स्थण्डिलं गन्धपुष्पाद्यैः पूजयेद्धृदयेन तु
पक्वबिंबफलोपेतन्निष्कळंकं सुनिर्मलम्  ५
द्रोणत्रयजलैः पूर्णं कृतं सत्कुंभमुत्तमम्
मद्ध्यमं खारिसंपूर्णं शिवत्रयजलावहम्  ६
अन्नयसंजातिविख्यातं सूत्रेणैव तु वेष्टयेत्
कुंभं सद्येन संगृह्य क्षाळयेत्कवचेन तु  ७
प्रोक्षयेत्पुरुषेणैव स्थापयेत्स्थण्डिलोपरि
मधुनाज्येन वादध्ना क्षीरेणेक्षुरसेन वा  ८
गन्धादिभिर्वा संपूर्य कूर्च्चन्तत्रैव निक्षिपेत्
चंद्रकान्तन्नयसेत्तस्मिन्नथवा हेमपंकजम्  ९
चतुर्थस्य द्वितीयेन प्रथमस्वरसंयुतम्
वारिबीजसमायुक्तं बिन्दुनादसमन्वितम्  १०
दशार्णैरेव संवेष्ट्य परितश्च दळे न्यसेत्
वस्त्रैश्च सितवर्णैश्च चंद्रं गन्धादिभिर्यजेत्  ११
दर्शयेत्सुरभिमुद्रां विधानेन विधाय च
वस्त्रयुग्मेन संवेष्ट्य पायसान्नं निवेदयेत्  १२
याज्ञिकैः स्तरुभिः कुर्यात्त्रिपादी लक्षणान्वितम्
रत्निमात्राधिकं लिंगं मूर्ध्निचोपरिकल्पयेत्  १३

त्रिपाददैर्घ्यमेवं तु कल्पवित्तमः
युगाश्रं वासुवृत्तं वा द्वादशांगुलनाहकम् १४
पञ्चतालप्रमाणेन तदूर्द्ध्वे फलकां कुरु
अब्ध्यंगुलेन सुषिरं वृत्तमद्ध्ये प्रकल्पयेत् १५
क्षाळयेत्पञ्चगव्यैश्च शिवतोयेन सेचयेत्
अधिवासनकाले तु पादानभ्यर्च्य देशिकः १६
गुणत्रयेण पादेषु गन्धपुष्पादिभिर्यजेत्
वस्त्रेण वेष्टयेत्पादान्प्रोक्षयेत्पुरुषेण तु १७
ब्रह्माणं दक्षिणे पूज्य विष्णुं वामे तु पूजयेत्
वृषभं पश्चिमे पूज्य त्रिपादेषु च देवताम् १८
महामायां न्यसेदूर्द्ध्वे फलकायास्स्वमन्त्रतः
देशिको मूर्त्तिपैस्सार्द्धं होमकर्मसमारभेत् १९
पञ्चाग्निर्वानवाग्निर्वाप्येकाग्निर्वा तु कारयेत्
ऐशान्यन्तु प्रधानन्तु महाशासु चतुर्ष्वपि २०
विदिक्षु चतुरश्राणि प्रधानं वृत्तमेव च
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा २१
त्रयाग्न्यायतनं वापि एकाग्न्यायतनन्तु वा
एकाग्न्यायतनञ्चेत्तु ईशान्यां संप्रकल्पयेत् २२
अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः
समिधाज्य चरून्लाजान्सर्षपांश्च यवांस्तिलान् २३
समिधं सद्यमन्त्रेण शेषांश्चान्यैर्हुनेत्क्रमात्
पलाशखदिराश्वत्थप्लक्षोदुंबरमेव च २४
शमी च बिल्वपत्रञ्चाप्यपामार्गवटन्तथा
पलाशन्तु प्रधाने स्यात्समिच्चक्रादिषु क्रमात् २५
प्रत्येकं शकमर्द्धं वा तदर्द्धं वापि होमयेत्
पञ्चब्रह्मषडंगैश्च मूलेनैव हुनेत्पृथक् २६

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिन्तु शिरसा स्विष्टमग्नेति होमयेत् २७
स्तोत्रैश्च नृत्तगेयाद्यैरात्रिशेषं व्यपोह्य च
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः २८
प्रातस्सन्ध्यावसाने तु कुंभारोहणमारभेत्
गव्यैस्संस्नापयेद्देवं पञ्चब्रह्ममुदाहरन् २९
आसनं कल्पयित्वा तु यथाविधिपुरस्सरम्
गन्धपुष्पैश्च धूपैश्च नैवेद्यैर्विविधैर्यजेत् ३०
त्रिपादीन्स्थापयेद्धीमान्सूत्राग्नेः परिवर्जितम्
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः ३१
निष्कत्रयाधमा ज्ञेया द्विगुणामद्ध्यमा स्मृता
त्रिगुणा चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा ३२
आदावन्ते गुरोरेव दक्षिणान्दापयेत् बुधः
मूर्तिपान्पूजयेत्पश्चात्प्रागुक्तविधिना सह ३३
सर्वलक्षणसंयुक्तं सर्वातोद्य समायुतम्
कुंभमुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ३४
त्रिपादूर्द्ध्वे न्यसेत्कुंभं व्योमव्यापिं समुच्चरन्
सुषिरं कुंभपृष्ठे तु कारयेत्तु विचक्षणः ३५
माषमात्रं सुवर्णेन चतुरंगुलमानतः
नाळन्तत्र प्रकर्त्तव्यं यवार्द्धसुषिरं कुरु ३६
तन्नाळात्सततन्तोयं प्रावयेल्लिंगमूर्द्धनि
तद्द्रव्येण समापूर्य स्थण्डिलेऽप्युपकुंभकम् ३७
स्थापयित्वा विशेषेण मन्त्रन्यासादि वर्जितम्
मद्ध्वादिशोषणात्पूर्वमुपकुंभन्तु पूरयेत् ३८
मासं वाप्यर्द्धमासं वा अथवादिनसप्तकम्
पञ्चाहं वा त्र्यहं वापि दिनमेकमथापि वा ३९

यावन्निश्चित्यदिवसन्तावदेवं समाचरेत्
ब्राह्मणान्भोजयेत् नित्यं यथा वित्तानुसारतः ४०
कुंभादेवस्त्रवे कुर्यानित्यं नैमित्तिकन्तथा
पूर्वे निश्चित्य काले तु मद्ध्याह्ने त्ववरोहणम् ४१
कृत्वा संपूजयेद्देवं स्नपनं कारयेत्ततः
शान्तिहोमन्ततः कृत्वा पूजयेत्तु विशेषतः ४२
एवं यः कुरुते मर्त्यस्सोऽन्ते मोक्षमवाप्नुयात् ४३
इति शीतकुंभविधिपटलश्चतुश्चत्वारिंशत्तमः

जलधाराविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि जलधाराविधिक्रमम्
महामारीविनाशार्त्थमपमृत्युविनाशनम् १
सर्वरोगविनाशार्त्थं राष्ट्रदुर्भिक्षनाशनम्
वर्षार्त्थञ्च जयार्त्थञ्च विशेषात् ज्वरनाशनम् २
ग्रहपीडाविनाशार्त्थमारोग्यार्त्थं विशेषतः
सर्वसिद्धिकरं पुण्यमासर्क्षे तु त्रिजन्मनि ३
रविवारे सोमवारे जन्मर्क्षे कल्पयेद्बुधः
संक्रान्तौ ग्रहणे चैव षडशीतिमुखेऽपिवा ४
विष्णुपद्यांपितृलये कुर्वन्दर्शे विशेषतः
शुद्धिं कृत्वालयञ्चैव गोमयेनातुलेपयेत् ५
नित्यसन्ध्यावसाने तु जलधारां समाचरेत्
शिवाग्रे स्थण्डिलं कृत्वा स्थापयेत्पञ्चगव्यकम् ६
पञ्चामृतन्तु संकल्प्य फलसारन्तथैव च
तैलं संकल्प्य विधिवच्चालिपिष्टन्तथैव च ७
आमली रजनी कल्प्य नाळिकेरस्य तोयकम्
गन्धतोयन्तथा कृत्वा शिवाग्रे स्थापयेद्बुधः ८

पुण्याहं वाचयित्वा तु प्रोक्षयेदस्त्रमन्त्रतः
नवभाण्डानि संगृह्य स्नानार्त्थमुदकं ग्रहेत्  ९
वस्त्रपूरिततोयेन सुगन्धद्रव्यवासितैः
स्वच्छमर्कांशुसन्तप्तैर्जलद्रोणीञ्च पूरयेत्  १०
द्वारपूजान्ततः कृत्वा लिंगशुद्धिं समाचरेत्
वस्त्रेणोद्वर्त्तनं कुर्यादस्त्रमन्त्रेण देशिकः  ११
संग्रह्य स्थापितान्द्रव्यान्तैलादीनभिषेचयेत्
पिष्टामलकचूर्णांश्च रजनीं घर्षयेत्पुनः  १२
पञ्चगव्येन संस्नाप्य पञ्चामृतन्तदन्तके
तदन्ते फलसारञ्च गन्धोदकन्तदन्तके  १३
नाळिकेरोदकेनैव स्नापयेत्परमेश्वरम्
शीतळन्तज्जलं कृत्वा यथेष्टमभिषेचयेत्  १४
वस्त्रेण वेष्टितं लिंगं गन्धमाल्यैश्च भूषयेत्
पाद्यमाचमनञ्चार्घ्यं हृदयेन प्रदापयेत्  १५
धूपदीपं हृदा दत्वा पायसान्नन्निवेदयेत्
पानीयाचमनन्दत्वा तांबूलन्तु निवेदयेत्  १६
सौवर्णं राजतं ताम्रमथवा मृण्मयं भवेत्
द्रोणत्रयेण संपूर्णञ्जलपात्रन्तु संग्रहेत्  १७
कनिष्ठाग्रप्रमाणेन तत्पृष्ठे सुषिरं कुरु
वस्त्रयुग्मेन संवेष्ट्य गन्धपुष्पादिनार्च्चयेत्  १८
मूलब्रह्मषडंगैश्च गन्धोदपरिपूरितम्
शिवगायत्रिमन्त्रेण कूर्च्चं तन्मद्ध्यमे न्यसेत्  १९
शंखद्ध्वनिसमायुक्तं पणवद्ध्वनिसंयुतम्
यंत्रिकोपरिपात्रन्तु विन्यसेल्लिंगमूर्द्धनि  २०
स्नावयेदभिषेकेनाविच्छिन्नाग्रधारया
श्रीरुद्रं रुद्रसंख्यञ्च चमकञ्च पृथक्पृथक्  २१

जपेयुर्ब्राह्मणास्सर्वे ननुसूत्रादिकं क्रमात्
पञ्चब्रह्मषडंगानि देशिकस्तु जपेद्बुधः २२
तदन्ते स्नापयेद्देवं शिवगायत्रिमन्त्रतः
शिवमन्त्रमनुस्मृत्य पुष्पं मूर्द्धनिदापयेत् २३
वस्त्रेणालंबनं कृत्वा लिंगपीठं विशेषतः
कर्प्पूरागरुसम्मिश्रञ्चन्दनेन विलेपयेत् २४
पुष्पैर्नानाविधैरन्यैरलंकृत्य विशेषतः
पाद्यमाचमनञ्चार्घ्यं हृदयेन प्रदापयेत् २५
धूपदीपं हृदा दत्वा प्रभूतहविषन्ददेत्
पानीयाचमनन्दत्वा तांबूलन्तु निवेदयेत् २६
शान्तिहोमन्ततः कृत्वा शिवाग्निं कल्पयेद्बुधः
ब्राह्मणान् भोजयेन्नित्यं शैवान्वेदादिपारगान् २७
एकाहं वा त्रयाहं वा पञ्चाहं वा विधीयते
सप्ताहन्तु नवाहं वा रुद्राहन्तु विशेषतः २८
अथवा द्वादशाहं वा एकमाहमथापि वा
जपहोमार्चनं कार्यं ब्राह्मणाराधनादिकम् २९
विशेषयजनञ्चैव नित्यनैमित्तिकन्तु वा
एतत्सर्वं प्रकर्तव्यं विशेषफलसिद्धये ३०
राज्यार्थी लभते राज्यं जयार्थी लभते जयम्
पुत्रार्थी लभते पुत्रं सुखार्थी लभते सुखम् ३१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३२
इति धाराभिषेकविधिपटलः पञ्चचत्वारिंशत्तमः

उष्णोदकविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेणाप्युष्णोदकविधिक्रमम्
सर्वशत्रुक्षयकरं सर्वोपद्रवनाशनम् १

वृश्चिके मासिपक्षे च धनुर्मासे समाचरेत्
मकरे कुंभमासे च उत्तमो विधिरीरितम्  २
जलधाराविधिप्रोक्तमुष्णोदकमथाचरेत्
तत्काले पूजनं कुर्यात्सर्वसंपत्सुखावहम्  ३
यामं प्रतिविशेषेणाप्युष्णोदकमथाचरेत्
उपसन्ध्योर्विशेषेण उष्णोदकं समाचरेत्  ४
यामं प्रतिविशेषेण अभिषेकन्तु कारयेत्
स्त्रीश्यंपुरुषवश्यं वा राजवश्यं तथैव च  ५
शत्रुनाशकरन्नित्यमायुरारोग्यवर्द्धनम्
उष्णोदकं तथात्युष्णं सधूममतिशीतळम्  ६
अतप्तं वर्जयेत्तोयमुष्णानुच्चन्तु संग्रहेत्
अत्युष्णे तु प्रजानाशं सधूमे द्रव्यनाशनम्  ७
अतिशीते तु सन्नापमतप्ते सस्यनाशनम्
तस्मात्तदोष्णानुष्णेन सलिलेनाभिषेचयेत्  ८
उष्णोदं मलवर्ज्यं स्यात्तस्मात्पूजाफलं भवेत्
पूर्ववत्पूजनं कुर्याद्वस्त्रकाञ्चनभूषणैः  ९
गन्धपुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत्
नैवेद्यन्दापयेत्तस्मै सव्यञ्जनसपूपकम्  १०
नृत्तगीतादिकं सर्वं बलिहोमं समाचरेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्  ११
इति उष्णोदकविधिपटल षट्चत्वारिंशत्तमः

## सहस्रधाराभिषेकविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण सहस्रधाराभिषेचनम्
अनावृष्टौ ज्वरोत्पन्ने सर्वव्याधिनिवारणम्  १
सर्वदोषहरं पुण्यं सर्वतीर्थं तथैव च

सर्वपापहरञ्चैव सहस्रधाराभिषेचनम्  २
सौवर्णमुत्तमं विद्धिमद्ध्यमं रजतं भवेत्
अधमं ताम्रमित्युक्तं पूर्णचंद्रवदाकृतिः  ३
तन्मद्ध्ये पद्मपत्रञ्च दळानामष्टसंयुतम्
सुषिरं सहस्रसंयुक्तं कल्पयेत्तु विचक्षणः  ४
देवासहस्रधारायां सहस्रनयनस्य च
नामये वादिवृत्ते तु नहोदेति प्रकीर्तिता  ५
आकाशं गमने गंगा धारया चाभिषेचनम्
सहस्रशीर्षमन्त्राणि जपं कृत्वा विशेषतः  ६
सहस्रधारामुद्धृत्य लिंगस्योर्ध्वे तु कल्पयेत्
चतुरंगुलमेवन्तु लिंगमग्रे तु कल्पयेत्  ७
ईशसंख्या तु मन्त्रेण जपित्वा धारयेत् बुधः
तज्जलैरभिषेकं स्यात्सर्वदोषनिकृन्तनम्  ८
पूजान्ते सहस्रधाराभिषेचनन्तु शनैश्शनैः
सर्वारिष्टविनाशं स्यात्सर्वतीर्थफलप्रदम्  ९
सहस्रमुखगंगायां धारयेदभिषेचनम्
श्रीकरं विजयं पुण्यमायुरारोग्यवर्द्धनम्  १०
इति सहस्रधाराविधिपटलस्सप्तचत्वारिंशत्तमः

अष्टकलशचतुष्कलशस्नपनविधिपटलप्रारंभः

अष्टभिः कलशैर्वद्ध्ये स्नपनं तत्र मण्टपे
चतुर्द्रोणयवैः कृत्वा स्थण्डिलन्तु सुवृत्तकम्  १
कर्णिकाष्टदळोपेतं तत्र पद्मं समालिखेत्
कूटाक्षरं लिखेन्मद्ध्ये दळेष्वष्टसुचक्रमात्  २
यकारादिवकारान्तं शकाराद्धान्तमेव च
दिग्विदिक्ष्वक्षराण्यष्टलिखेत्पूर्वादितत्सुधीः  ३

शिवयोः कुंभयोर्मद्ध्ये पूर्ववत्स्थाप्य तद्बहिः
दळाग्रेषु क्रमात्स्थाप्य पाद्यादीनान्तथाष्टकम् ४
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरन्दधिघृतञ्चैव दळाग्रेषु च विन्यसेत् ५
एवमष्टभिरुद्दिष्टञ्चतुर्भिः कलशोच्यते
पूर्ववत्स्थण्डिलं कृत्वा ततः पद्मञ्चतुर्दळम् ६
आलिख्यकर्णिकामद्ध्ये त्वपोक्षरमथालिखेत्
पृथिव्यादीनि वर्णानि पूर्वादि क्रमशो भवेत् ७
पूर्ववत् शिवकुंभन्तु वर्द्धन्या सह देशिकः
विन्यस्याथ घृतक्षीरन्दधिक्षौद्राणि च क्रमात् ८
पूर्वादिषु दळेष्वेतान् विन्यसेदथवा बुधः
पूरितो वान्यसेन्मंत्री ततो यजनमारभेत् ९
शिवयोः कुंभयोश्चैव पूर्ववत्सम्यगाचरेत्
धर्मादींश्च चतुर्ष्वेषु अर्च्चयेत्तु विधानतः १०
एवमभ्यर्च्चयेतान्पश्चात्तैः कुर्यात्स्नपनं परम्
इति यः कारयेन्मर्त्यो स्नपनं विधिपूर्वकम् ११
सर्वयज्ञफलं प्राप्य शिवेन सह मोदते
वेदाग्निनयनप्रस्थैस्संपूर्णा स्याद्यथाक्रमम् १२
श्रेष्ठं मद्ध्यकनिष्ठन्तु कलशस्नापनोचिताः
सर्वेषां कलशानान्तु शिवकुंभञ्चतुर्गुणम् १३
शक्तिकुंभञ्च कलशात् द्विगुणं स्यात्प्रमाणतः १४

इति अष्टकलशचतुष्कलशस्नपन अष्टचत्वारिंशत्तमः

## पुण्याभिषेकविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण पुण्याभिषेकमुत्तमम्
धन्यं यशस्करं पुत्रपौत्रवृद्धिप्रदायकम् १

सर्वपापहरं पुरायं सर्वयज्ञफलप्रदम्
राजराष्ट्राभिवृद्ध्यर्थं सर्वसंपत्समृद्धिदम् २
कालस्तु द्विविधो ज्ञेयः स्थूलसूक्ष्मोपलक्षितः
पुरायकालं प्रवक्ष्यामि विशेषेण प्रजापते ३
माखादिज्येष्ठपर्यन्तं लौकिकं कालमुत्तमम्
षाराम्मासमपि विज्ञेयमुत्तरायणसंज्ञकम् ४
आषाढञ्च समारभ्य पुष्यपर्यन्तमुत्तमम्
लौकिकं कालमुद्दिष्टं दक्षिणायनसंज्ञकम् ५
चैत्रादिमासौ द्वौ द्वौ च षट्संज्ञा ऋतवस्तथा
वसन्तग्रीष्मवर्षाख्य शरद्धेमन्तशैशिराः ६
क्रमेण भाषितौ चैव सर्वे च भास्कराश्रयाः
वसन्तश्शिशिरश्चैव ग्रीष्मस्स्यादुत्तरायणम् ७
शरद्वर्षश्च हेमन्तो दक्षिणायनसंज्ञकम्
ऋतवोऽपि वसन्ताद्याश्चांद्रसौराद्विधामताः ८
दर्शाद्यावाझषाद्यावामेषाद्यातपनाश्रयाः
भाविन्यप्ययने याम्ये व्यतीते चोत्तरायणे ९
विषुवद्विषुवे मध्ये प्रशस्तं यजनादिकम्
यामं यामार्द्धकं वापि घटिकैका तु वाथवा १०
दानं प्रदक्षिणं होमं तीर्थमध्ययनादिकम्
यजनञ्चैव तत्काले कारयेत्सर्वसंपदम् ११
कुळीरमकरौ स्यातामयने दक्षिणोत्तरे
तौलिच्छागौ च विषुवद्विषुवे च प्रकीर्तिते १२
अधस्तात् विंशतिः कर्क्यां मकरे पिपरे तथा
विषुवद्विषुवे त्रिंशन्नाड्यस्तु पुरायदायकाः १३
घटे च वृश्चिके सिंहे वृषे सौरे समागते
आद्यन्तयोः कलानाड्यः स्मृता विष्णुपदेषु च १४

अन्नचायां कार्मुके मीने मिथुने वा गते रवौ
द्वात्रिंशन्नाडिकाः पूर्श्वे पश्चाच्च षडशीतिषु १५
कर्क्यां रात्र्यन्तके त्वर्द्धरात्रे संक्रमते रविः
पूर्वे हनिप्रकर्तव्यं ज्येष्ठनाडिस्समीपगा १६
उपविष्टे मृगं सूर्ये निशीथे वातमीमुखे
परस्मिन् दिवसे कार्यमिह शास्ते सुनिश्चितम् १७
प्रविष्टेर्के निशीथे वा पूर्वापरदिनद्वयम्
रात्रौ द्वियामात्पूर्वे च संक्रमेद्यदिभास्करः १८
तद्दिनस्य तु मद्ध्याह्नादूर्ध्वं कुर्याद्विशेषतः
द्वियामात्परतो रात्रौ परे ह्नयावर्तनादधः १९
पुरायकालस्समुद्दिष्टो ज्ञात्वा यजनमारभेत्
यजनं द्विविधं प्रोक्तमात्मार्थञ्च परार्थकम् २०
आत्मार्थञ्चलमित्युक्तं परार्थं स्थिरलिंगकम्
स्वगृहे च शिवक्षेत्रे स्वेष्टदेशे मनोरमे २१
संस्थाप्य विधिनालिंगं स्वात्मनो हितकांक्षया
यावत् जीवं स्वहस्तेन पूजितं स्वेष्टलिंगकम् २२
आत्मार्थमिति विज्ञेयं साक्षात्कैवल्यदायकम्
ग्रामे वा नगरे वापि पत्तने राजधानिके २३
कुब्जखेटपुरादौ वा पुरायक्षेत्रे विशेषतः
प्रतिष्ठाप्य विधानज्ञश्चैव सिद्धान्तमार्गतः २४
पूजितं लिंगबेरञ्च परार्थमिति कीर्तितम्
द्विविधं यजनं सर्वमादिशैवेन कारयेत् २५
तस्य योग्यं भवत्यत्र नान्येषान्तु प्रजापते
द्विजादयश्चतुर्वर्णा योग्यास्स्युस्वस्वकर्मणि २६
विप्रादीनान्तु दीक्षायामुत्सवे स्थापने तथा
प्रोक्षणे स्नपने चैव प्रायश्चित्ते च पूजने २७

सर्वदेवार्चने स्वार्त्थे परार्त्थे वान्यकर्मणि
आदिशैवः प्रशस्तस्तद्व्यतिरिक्तैर्द्विजातिभिः २८
कृते परार्त्थे यजने सर्वदोषः प्रवर्तते
संहिताहोममुद्दिष्टमेकसन्ध्यार्चने कृते २९
त्रिसंध्यार्चा कृते तत्र स्नपनं शान्तिहोमकम्
पक्षोर्ध्वे मूर्तिहोमं स्यात्पञ्चाशत्स्नपनं चरेत् ३०
मासोर्ध्वे संहिता होमं स्नपनं पञ्चविंशतिः
द्विमासे तु दिशाहोमं स्नपनन्तु तथा भवेत् ३१
त्रिमासे शान्तिरित्युक्ता स्नपनं पञ्चगव्यकम्
चातुर्मास्ये दिशाहोममष्टोत्तरशतं घटम् ३२
पञ्चमे मासिशान्तिस्स्यादष्टोत्तरशतैर्यजेत्
षाण्मासे मूर्तिहोमं स्यात् सहस्रकलशैर्यजेत् ३३
षाण्मासोर्ध्वे शान्तिहोमं जलसंप्रोक्षणं कुरु
सहस्रकलशैर्यष्ट्वा स्नापयेत्परमेश्वरम् ३४
ततोर्चनं प्रकर्तव्यमादिशैवेन धीमता
अदीक्षितस्तु यो विप्रः कुर्याल्लिंगस्य पूजनम् ३५
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः
ब्राह्मणादि चतुर्वर्णैश्शिवदीक्षा विवर्जितैः ३६
स्वेष्टलिंगे यदादृष्टे प्रायश्चित्तं समाचरेत्
अनुलोमैर्विलोमैर्वा प्रतिलोमैर्विशेषतः ३७
आत्मार्त्थयजनं कार्यं न कर्तव्यं परार्त्थकम्
चातुर्वर्णोद्भवस्त्रीणामात्मार्त्थमर्चनं हितम् ३८
आत्मार्त्थे वा परार्त्थे वा यजनार्त्थं भृतिं ग्रहेत्
सवैदेवलकोनाम सर्वकर्मबहिष्कृतः ३९
अथ देवलकान्वक्ष्ये श्रुणुष्वकमलासन
कर्मदेवलकाः केचित्कल्पदेवलकाः परे ४०

शुद्धदेवलकाः केचित् हीनदेवलकाः परे
स्विष्टदेलेकास्त्वन्ये पञ्चधा देवलास्मृताः ४१
अन्यसूत्रोक्तमार्गेण ये संवत्सरपूजकाः
अदीक्षितास्वयं तत्र कर्मदेवलका स्मृताः ४२
अनेनैव प्रकारेण वत्सरत्रयपूजकाः
कल्पदेवलकाः प्रोक्ताः स्वकर्मनिरतास्तथा ४३
आचारमन्यसूत्रोक्तमार्गेणोपदिशन्तिये
शुद्धदेवलकाः स्युस्ते हीनाचारसमन्विताः ४४
स्वसूत्रोन्यसूत्रोक्तमार्गन्त्यक्त्वाचरन्तिये
हीनदेवलकास्युस्ते सदाचारसमन्विताः ४५
भृतिं वाञ्छन्तिपूजायां स्विष्टदेवलकास्तुते
वित्तार्त्थी च चतुर्वेदी दीक्षितो दीक्षितोऽपिवा ४६
सवैदेवलकोनाम हव्यकव्येषु गर्हितः
दीक्षितश्च चतुर्वेदी वित्तार्त्थी वत्सरत्रयम् ४७
स वै देवलको नाम स्थापनादिषु गर्हितः
भृत्यर्त्थं पूजयेद्यस्तु देवान्वालिंगमेव वा ४८
स वै देवलको नाम पूजाकर्मसु गर्हितः
प्रातः स्नात्वा विधानेन सन्ध्याकर्मसमाप्य च ४९
देवालयं प्रविश्यार्द्धं सकळी कृतविग्रहम्
स्वासनस्यार्चनञ्चैव भस्मन्यासक्रमन्ततः ५०
करशुद्धिक्रमञ्चैव प्राणवायोश्चरोधनम्
भूतशुद्धिं ततः कृत्वा न्यासक्रमविधानतः ५१
अन्तर्यागक्रमञ्चैव सामान्यार्घ्यं विधानतः
पुण्याहवाचनं कृत्वा शुद्ध्यर्त्थं प्रोक्षयेत्ततः ५२
सौरपूजादिकं सर्वं पूर्ववत्परिकल्पयेत्
प्रासादस्येशदिग्भागे पूर्वे वा चोत्तरेऽपि वा ५३

त्रयोदशकरं कार्यन्दशपञ्चकरन्तु वा
मराटपं कारयेत्तत्र षोडशस्तंभसंयुतम्  ५४
श्रुतिद्वारसमायुक्तं वेदतोरणभूषितम्
दर्भमालासमायुक्तं वितानाद्युपशोभितम्  ५५
दाडिमीफलसंयुक्तं कदळीपूगदराडयुक्
गात्रवेष्टनसंयुक्तं मंगळांकुरशोभितम्  ५६
तन्मद्ध्ये वेदिकां कुर्याल्लक्षणेन समन्विताम्
द्वादशांगुलमारभ्य तालमात्रविवर्द्धनात्  ५७
सार्द्धचत्वारिहस्तन्तु नवधा चोच्छ्रयं भवेत्
चतुरंगुलमारभ्य त्रियंगुलविवर्द्धनात्  ५८
नवधा चोपवेदी स्यादंगुलञ्चाष्टविंशतिः
नवधा हस्तमारभ्य चतुर्हस्तान्तवेदिका  ५९
नवांगुलेन संवृद्ध्या नवधा विस्तृताः क्रमात्
द्वादशांगुलमारभ्य षडंगुलविवर्द्धनात्  ६०
----- द्धहस्तान्तमुत्सेधन्नवधा भवेत्
दर्पणोदरसंकाशमुपवेदीञ्च कल्पयेत्  ६१
चतुरंगुलमारभ्य द्वाविंशत्यंगुलान्तकम्
द्विद्व्यंगुलविवृद्ध्या तु नवधा विस्तृता तु सा  ६२
विस्तारार्द्धसमोपेतां सर्वत्र समतां कुरु
अथवा मराटपन्त्रेधा कृत्वा मद्ध्ये तु वेदिकाम्  ६३
अरत्निमात्रसमुत्सेधान्दर्पणोदरसंनिभाम्
अष्टांगुलप्रविस्तारविस्तारार्धसमन्विताम्  ६४
वेद्यामूले तु परितश्चोपवेदीं प्रकल्पयेत्
चतुरंगुलमुत्सेधन्निम्नोन्नतविवर्जितम्  ६५
गोमयालेपनं कृत्वा पुरयाहं वाचयेत्ततः
शालिभिः स्थरिडलं कुर्यादष्टद्रोणविनिर्मितैः  ६६

तन्मद्ध्ये नळिनं कुर्यादष्टपत्रं सकर्णिकम्
यथोक्तमासनं कल्प्य स्थण्डिलेऽभ्यर्चयेत्क्रमात् ६७
शक्तिमुद्रां पद्ममुद्रां मुकुळीञ्च प्रदर्शयेत्
चन्दनोशीरकाश्मीरकर्पूरैलासुवासितैः ६८
वस्त्रपूतैर्जलैः पूर्य शिवकुंभञ्च वर्द्धनीम्
कलशांस्तु तथापूर्य कृत्वा लंकारसंयुतान् ६९
शिवाख्यं कलशं मद्ध्ये स्थापयेदंबुजोपरि
वर्द्धनीञ्चोत्तरे तस्य परितश्चाष्टकुंभकान् ७०
शिवाख्ये पञ्चरत्नांबु वर्द्धनी हेमसंयुताम्
सकूर्चौ सापिधानौ च फलपल्लवशोभिताम् ७१
नाळिकेरफलोपेतौ वस्त्रयुग्मेन वेष्टितौ
कलशांस्तु तथाकृत्वा मद्ध्यकुंभे शिवं यजेत् ७२
मनोन्मनीन्तु वर्द्धन्यां विद्येशानष्टदिक्षु च
पूजयित्वा विशेषेण गन्धपुष्पादिभिर्यजेत् ७३
गन्धपुष्पादिभिश्चैव पूजयेत्तु विशेषतः
ततो होमं प्रकुर्वीत पञ्चसंस्कारपूर्वकम् ७४
समिदाज्य चरून्लाजसक्तुबिल्वतिलांस्तथा
सर्षपञ्चयवव्रीहि कदळीफलमेव च ७५
हृदादीशानपर्यन्तैः प्रत्येकन्तु शताहुतिः
व्याहृतिञ्च ततो हुत्वा बीजमुख्येन होमयेत् ७६
क्षुरिकेण ततो हुत्वा द्रव्यान्ते पञ्चविंशतिः
पूर्णाहुतिं प्रकर्तव्यं पुनस्त्वादित्यमन्त्रतः ७७
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
कूश्माण्डाहुतिकं हुत्वा प्रायश्चित्तार्त्थकं हुनेत् ७८
परिषिच्य ततो वह्निं मन्त्रपूतेन वारिणा
परिधिस्थान्विष्टरस्थान्देवानुद्वासयेत्सुधीः ७९

स्नपनं पञ्चगव्यञ्च पञ्चामृतं तथैव च
पूर्ववत्स्थापनं कृत्वा पुरयाह प्रोच्चरौर्युतम्  ८०
द्वारपूजादिकं सर्वं प्रागुक्तविधिनाचरेत्
पुष्पं मूर्द्धनि विन्यस्य शुद्धाभिरभिषेचयेत्  ८१
नमकञ्चमकञ्चैव पञ्चशान्तित्रियंबकम्
हिरगयं पवमानञ्च घृतसूक्तत्रयाच्चरम्  ८२
शनैश्शनैर्जपित्वाथ युगांगुलप्रमाणतः
अभिषेकं प्रकर्तव्यं यथा विभवविस्तरम्  ८३
पञ्चामृतैः पञ्चगव्यैः फलपञ्चामृतैरपि
दधिच्चीरघृतान्नैस्तु शर्करातैलमाच्चिकैः  ८४
नाळिकेरोदकैश्चेच्चु रसैरर्घ्योदकैरपि
गंधोदकैश्च बिल्वोदैस्सहस्त्रधारयापि वा  ८५
अभिषेकः प्रकर्तव्यः मद्धये शुद्धांबुमिश्रितम्
पञ्चब्रंहषडंगेन पूर्वाह्ने चाभिषेचयेत्  ८६
पञ्चाच्चरं समुच्चार्य मद्धयाह्ने चाभिषेचयेत्
व्योमव्यापिं समुच्चार्य सायं कालेऽभिषेचयेत्  ८७
अर्द्धयामे द्विजश्रेष्ठो मूलमन्त्रेण पूजयेत्
अन्यसन्ध्योपसन्ध्यासु संहितामनुनायजेत्  ८८
मनोभिलषितं यच्च द्रव्यं विद्धयुक्तमार्गतः
अभिषेकं कृतं यत्नात्सत्फलं प्रतिपद्यते  ८९
धूपदीपं ततः कृत्वा पुष्पं मूर्द्धनि विन्यसेत्
गंधैः पुष्पैस्समभ्यर्च्य मूलमन्त्रमनुस्मरन्  ९०
धर्मज्ञानञ्च वैराग्यमैश्वर्यञ्च चतुष्टयम्
सिंहपादन्तु तत्रैवाप्यधर्मादीळिकान्नयसेत्  ९१
अनन्तारभ्य योगान्तं विष्टरे परिकल्पयेत्
तदूर्ध्वेस्नापयेल्लिंगं सद्येनैव तु मन्त्रतः  ९२

स्थापितान्वेदिकायान्तु कुंभानानीय देशिकः
लिंगाग्रेस्थापयेत्प्राग्वत् गंधपुष्पादिभिर्यजेत् ९३
कुंभाद्देवं समानीय मूलमन्त्रमनुस्मरन्
योजयेल्लिंगमद्ध्ये तु हृदयेन समन्वितः ९४
वर्द्धन्यां गौरीमादाय पिण्डिकायान्तु वामके
अनन्तादिशिखण्ड्यन्तान् प्रागाद्यावरणे न्यसेत् ९५
पञ्चब्रह्मशिवांगैश्च कुंभाद्भिरभिषेचयेत्
गौरीगायत्रिमन्त्रेण गौरीं पीठेऽभिषेचयेत् ९६
अनन्तादिशिखण्ड्यन्तान् तन्मन्त्रेणाभिषेचयेत्
अर्चनोक्तं समभ्यर्च्य परिवारगणैस्सह ९७
पञ्चवर्णहविर्दद्यात् शिवाय परमात्मने
तांबूलं दापयेत्पश्चात्मुखवाससमन्वितम् ९८
उपचारादिकं सर्वं प्राग्वत्परिकल्पयेत्
अष्टपुष्पन्ततो दत्वा मन्त्रपुष्पन्निदापयेत् ९९
आचार्यं भूषयेत्पश्चात् वस्त्रहेमांगुलीयकैः
मूर्तिपान्परिचारांश्च दैवज्ञान् जापकानपि १००
दीनांधकृपणादीनां पूजयेत्तु यथा तथा
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् १०१
इति पुण्याभिषेकविधिपटल एकोनपञ्चाशत्तमः

## पूजाद्रव्यविधिपटलप्रारंभः

अथ वक्ष्ये श्रुणु ब्रह्मन्पूजाद्रव्यक्रमन्तथा
जलेनैव तु संक्षाळ्य निर्माल्यन्तु विवर्जयेत् १
कूर्चेन वर्षयेल्लिंगं चक्षुस्तृणनिराञ्जनम्
कण्डूयेन गवांस्तेन प्रीयतां परमेश्वरः २
प्रस्थतैलप्रमाणस्य कदळी पञ्चविंशतिः

पिष्टंप्रस्थार्द्धकञ्चैव तथाचामलकं भवेत् ३
रजनींचरसद्रव्यं तत्प्रमाणं विधीयते
कुडुपंघृतसंयुक्तं तदर्द्धं क्षौद्रमुच्यते ४
दुग्धन्तु शिवसंख्या च दधिचाढकमेव च
दशपलन्तु शर्करा आढकं इक्षुसारकम् ५
लिकुचं दशसंख्या च नारंगं द्वयमेव च
चूतं पञ्चदशं ज्ञेयं दाडिमी त्रयमेव च ६
मातुळुंगानि च त्रीणि कुळं जीरससंख्यया
तमरं त्रयमेवोक्तं एकं पनसमेव च ७
देवताम्रफलं त्रीणि दशकं नाळिकेरकम्
अन्नाभिषेकमन्त्रान्नं द्वित्रिप्रस्थञ्च कारयेत् ८
गन्धतोयञ्चार्द्धपलं गन्धमेकपलं भवेत्
ततो कुंभाभिषेकञ्च नद्यां स्नानन्ततः परम् ९
ततस्सहस्रधारा च सामान्यार्घ्याभिषेचयेत्
विशेषर्ती रोधार्घ्ये स्वागतार्घ्यन्ततः परम् १०
पाद्यादित्रितयञ्चैव अभिषेकन्तु कारयेत्
बिल्वोदकन्ततो दद्यात् शृंगशंखाभिषेचयेत् ११
त्रिप्रस्थञ्चैव शुद्धान्नं महानैवेद्यखारिका
प्रतिप्रस्थं विशेषेण व्यञ्जनं पलमेव हि १२
क्रमुकं पञ्चकं विद्यात् नागवल्ली तु विंशतिः
एलाचूर्णसमं मिश्रं पानीयं प्रस्थमेव च १३
धूपमर्द्धपलं प्रोक्तं धारणाचूडकं भवेत्
घृतदीपाञ्जलिः प्रोक्तं द्रव्यसंख्याप्रकीर्त्तिताः १४
उक्तेषु वस्तुकादीषु नूने वाप्यधिकेऽपि वा
यथा संभवैस्संपूज्य श्रुणुष्वकमलोद्भव १५
आवाहनावसाने तु मधुपर्कं निवेदयेत्

गन्धतोयावसाने तु मन्त्रान्नन्तु निवेदयेत् १६
मार्जनान्ते तु शुद्धान्नमलंकारे महाहविः
मन्त्रान्नन्तु कथन्देव ब्रूहि मे त्रिपुरान्तक १७
मन्त्रं रहस्यमित्युक्तमदनादन्नमुच्यते
रहस्ये त्वदनं यत्तत् मन्त्रान्नमिति कथ्यते १८
इति पूजाद्रव्यविधिपटलः पञ्चाशत्तमः

आधाराधेयविधिपटलप्रारंभः

आधारपटलं वक्ष्ये श्रूयतां तत्प्रजापते
आधारमासनं प्रोक्तमाधेयः परमश्शिवः १
शिवस्तु निष्कळः प्रोक्तस्त्वाधारस्सकळो भवेत्
त्याज्ये निष्कळमेवोक्तं सकळं संनिधिस्थितम् २
उपानं पादकमलं जगती जंघमेव च
कुमुदं कुक्षिमित्याहुः कंपबाहुमुरस्तथा ३
कण्ठं कर्णमिति प्राहुरधः कंपं ललाटकम्
तदूर्ध्वं मूर्ध्निविन्यासं केशान्तं घृतवारिणी ४
एषा चैव त्रियाशक्तिर्ज्ञानशक्तिस्ततश्श्रुणु
गोमुवीदक्षिणे पार्श्वे त्वीशानदिशमाश्रिता ५
दक्षिणावसदं पादं वामपादं प्रलंबितम्
तयोरग्रस्थितं लिंगं किञ्चिदीशानमाश्रितम् ६
लिंगमेवोक्ततिर्यग्वा ----- वायनिर्गतम्
ज्ञानशक्तिसमायुक्तं लिंगमेतत्प्रकीर्तितम् ७
ध्यायेद्दुग्धांबुधौ वासा सर्वावयवसुन्दरी
नितंबतटविस्तीर्णा मद्ध्ये क्षामास्तनोन्नता ८
वर्द्धन्योन्तर्गताशक्तिर्लिंगं वा विन्यसेत् बुधः
पिण्डिकायां त्रियाशक्तिः ध्यानं तत्पूर्वमेव च ९

प्रतिष्ठादित्रियाणान्तु ज्ञानशक्तिं मनोन्मनीम्
ब्रह्मादिस्तंबपर्यन्तं शक्तिबृन्दाद्विनिष्कृतम् १०
शक्तिर्मनोन्मनीमाता शिव एव पितागुरुः
मनोन्मनीं शक्तिरूपा पुंरूपस्याच्छिवार्त्थकम् ११
पुष्पेषु गंधवत् ज्ञेयं तिलेषु तैलवत्तथा
स्थावरं जंगमञ्चैव जगद्योनिश्चराचरम् १२
लिंगस्थापनकाले तु चिन्तयेत्तु सदाशिवम्
किञ्चित् भेदं विशेषोस्ति मनोन्मन्यास्तु वाचिकम् १३
चतुर्भुजं त्रिणेत्रञ्च द्विपादं पीठसंस्थितम्
वरदाभयहस्तञ्च लिंगालिंगन्तु सम्मुखम् १४
पूजाभिषेककालेऽस्मिन् एकरूपन्तु निर्जितम्
द्वायोर्भेदं न कर्तव्यं कर्तव्यमन्यकालके १५
संयोगं ज्ञानशक्तिस्तु त्रियाशक्तिस्सुभाषितम्
आधाराधेयकं ज्ञात्वा स्थापयेत्तु प्रजापते १६
अज्ञानात्स्थापितं लिंगं शिवादेवस्य संनिधौ
विचार्यशास्त्रजालानि सम्यक्ज्ञात्वा पुनःपुनः १७
कर्षणादि प्रतिष्ठान्तं कर्तव्यं देशिकेन तु
अन्यधा कुरुते यस्तु ग्रामक्षोभकरं भवेत् १८
इति आधाराधेयविधिपटल एकपञ्चाशत्तमः

चटकबलिविधिप्रारंभः

चण्डयागमिति ख्यातं चटकस्य विधिं श्रुणु
त्रिशूलमन्त्रलिंगञ्च वक्ष्येऽहं पूजसंयुतम् १
शुद्धान्नं घृतसम्मिश्रं क्षौद्रन्दधि च लड्डुकम्
रक्तपुष्पेण संपूज्य पूर्वस्यां निक्षिपेद्बलिम् २
अर्द्धयामावसाने वा मद्ध्यरात्रेऽथवा त्रियाम्

मौनव्रतधरास्तत्र संधिदेवान् समर्चयेत् ३
उद्वासनन्तु तत्काले दिनेशार्त्थन्तु वर्जयेत्
चटकस्य बलिं दद्यात्स्वनामाद्येन पूर्ववत् ४
तद्रूपमधुना वक्ष्ये कृष्णवर्णो महाबलः
ऋजुपादसमायुक्तः क्रूरदृष्टिर्भयानकः ५
दंष्ट्राकराळवदनो मंजीरचरणांबुजः
पद्मासने समासीनः फणिबद्धकरांबुजः ६
किंकणीमालया युक्तो विद्युत्पिंगजटान्वितः
घोरदाससुवृत्ताक्षश्शूलाभयकरान्वितः ७
सर्वावयवसंयुक्तो ग्रामपालनतत्परः
ग्रामबाह्ये तु परितः पैशाचस्य पदे स्थितः ८
पायसान्नन्तु चटकबलिं कुर्यात्तु तस्य वै
अष्टदिक्षु यथा न्यासं पूर्वदिक्षु यथा क्रमम् ९
दीपवाद्यञ्च तत्काले भैरवस्वरसंयुतम्
तत्तत्काले प्रयोक्तव्यं शंखकाहळताळकम् १०
शब्दी कृत्वा बलिन्दद्यात्पश्चाद्ग्रामप्रवेशनम्
चटकस्य बलिः ख्यातं ग्रामसंपत्करं शुभम् ११
गौरी यागमहं वक्ष्ये पूर्वरात्राधिवासयेत्
साये चोत्सवमारोप्याप्युमास्कन्देश्वरन्तथा १२
ग्रामप्रदक्षिणं कुर्यात् भक्तोत्सवमथाचरेत्
सर्वलोकहितं पुण्यं सर्वराष्ट्रविवर्द्धनम् १३
सर्वदारिद्र्यशमनं राजाविजयवर्द्धनम्
भोगमोक्षप्रदं पुंसामुत्सवं कथितं क्रमात् १४
इति चटकबलिविधिपटलो द्विपञ्चाशत्तमः

## शास्तार्च्चनविधिपटलप्रारंभः

वद्त्ये शास्तार्च्चनं पुगयं शुभदं पापनाशनम्
सर्वलोकहितं पुगयं सर्वोपद्रवनाशनम् १
आत्मार्थञ्च परार्थञ्च द्विविधं परिकीर्तितम्
दत्वाभक्त्या तु गुरुगा बिंबं पद्मासनन्तु वा २
पटे वा भित्तिचित्रे वा आत्मार्थयजनं शुभम्
ग्रामादीनां हितार्थाय नृपागामभिवृद्धये ३
स्थापितं पूजितं बिंबं परार्थमिति कीर्तितम्
विप्रद्तत्रियविट् शूद्रादीन्तिताश्च प्रवेशकाः ४
आत्मार्थमर्च्चनं योग्यमितरेषामयोग्यकम्
आत्मार्थञ्च परार्थञ्च यजनं हि विशेषतः ५
योग्यं शिवद्विजानान्तु तेषामेवं सुनिश्चितम्
पूर्वं कृत्वात्मशुद्धिस्तु स्थानशुद्धिर्द्वितीयकम् ६
तृतीयं द्रव्यशुद्धिस्तु चतुर्थं बिंबशोधनम्
पञ्चमं मन्त्रशुद्धिस्स्यादुच्यन्ते पञ्चशुद्धयः ७
शौचमाचमनं स्नानं तर्पगं विधिपूर्वकम्
सावित्र्याष्टशतञ्जप्त्वा प्रविश्य भवनन्ततः ८
प्रदत्तिगात्रयं कृत्वा ब्रह्मजज्ञानमन्त्रतः
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः ९
सन्धार्य विधिनापूर्वं पवित्रं लद्तगान्वितम्
अंगन्नयासं करन्नयासं पूर्वोक्तविधिना कुरु १०
द्वरपूजान्ततः कृत्वा ऊर्ध्वगं भैरवन्तथा
गजं पूर्वे तु संपूज्य गन्धपूष्पादिनापुरा ११
प्रविश्य भवनन्तत्र स्थानशुद्धिन्तथाचरेत्
आसनं कल्पयेत्तत्र पद्मासनं पुरोक्तवत् १२
अर्च्चयेद्गन्धतोयेन अघोरायेतिमन्त्रतः
त्रियंबकमिदं विष्णुर्ब्रह्मजज्ञानमन्त्रकैः १३

शनैश्शनैस्सुसंपूज्य गन्धपुष्पं सधूपकम्
दीपं हृदयमन्त्रेण नैवेद्यान्तं समाचरेत् १४
देवस्य त्वेतिमन्त्रेण नैवेद्यं कारयेद्बुधः
द्वारादि बलिपीठान्तं बलिं दद्यात् यथाक्रमम् १५
मदनोभीषणो रौद्रो उन्मत्तश्चोग्रभाषकः
आश्चर्यस्सुन्दरो वीर्य शास्ताष्टपरिवारकाः १६
गन्धपुष्पादिभिश्चैव स्वनाम्ना च बलिन्ददेत्
अन्त्यजे स्पर्शने बिंबं गर्भगेहं प्रवेशयेत् १७
स्नपनं कारयेद्देवं शान्तिहोमन्तु कारयेत्
प्रभूतहविषन्दत्वा यथापूर्ववदाचरेत् १८
इति शास्तार्च्चनविधिपटलस्त्रिपञ्चाशत्तमः

## आत्मार्थपूजाविधिपटलप्रारंभः

आत्मार्थयजनं कुर्यात् चललिंगे विशेषतः
काम्यार्थन्तु विशेषेण हर्म्यं कुर्याद्विचक्षणः १
शिलाभिश्चेष्टकाभिर्वा दारुभिर्वा सलक्षणम्
ग्रामे वा नगरे वापि पत्तने राजधानिके २
कुब्जके खेटके चैव स्थापयेत्तु विचक्षणः
वास्त्वंगदेवतास्थाने वीध्यग्रेचैव मद्ध्यमे ३
कर्णसूत्रादि तत्सूत्रे मद्ध्यवीध्यास्तु दक्षिणे
एतेषां स्थापनञ्चोक्तं उक्तस्थाने प्रकल्पयेत् ४
चललिंगं समानीय वास्त्वंगे स्थापयेन्न च
पूर्वं प्रतिष्ठितं पूज्य तत्पश्चाद्यजनन्न हि ५
जलोषितं वा दुःस्थाने कश्चिदाराद्ध्य लिंगकम्
प्रयत्नेन गृहीत्वा तु पुनः स्थापनमारभेत् ६
मासपक्षर्क्षवारादीनविचारेण स्थापयेत्

परिवारादिभिर्युक्तमेकदेशे विमानयुक् ७
विश्वदेशे च देशे वा यथेष्टं पूजयेद्बुधः
अपत्नीको ग्रहस्थो वा ब्रह्मचारी च नैष्ठिकः ८
भौतिको वा वनस्थश्च चातुर्वर्णास्ततो नरः
आत्मार्थं पूजयेन्नित्यं यथा शास्त्रमतंद्रितः ९
मोक्षार्थी लभते मोक्षं पुत्रार्थी लभते सुतम्
अर्थार्थी चार्थमाप्नोति ज्ञानार्थी ज्ञानमाप्नुयात् १०
इति आत्मार्थपूजाविधिपटलश्चतुःपञ्चाशत्तमः

सौरार्चनविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि सौरार्चनविधिक्रमम्
नित्यन्तदुदयात्पूर्वञ्चातुर्वर्णं समाचरेत् १
वृत्तन्त्र्यश्रं पुनर्वृत्तं षडश्रं वृत्तयुग्मकम्
अष्टाश्रञ्च कलाश्रञ्च सौरचक्रं प्रकीर्तितम् २
वृत्तस्य मद्ध्ये प्रणवं त्रिकोणेंगारकन्न्यसेत्
पुनर्वृत्ते लिखेत्पञ्च बहिरष्टाक्षरन्न्यसेत् ३
सुदर्शनन्तु षट्कोणे षडंगन्तस्य सन्धिषु
वृत्तयुग्मे महासौरं गायत्रीं शिरसा सह ४
अष्टस्वष्टाक्षरन्त्यस्य चक्रदिक्देवतान्न्यसेत्
कलाश्रञ्च स्वरं प्रोक्तं कलाश्रेष्टकलान्न्यसेत् ५
कादिसान्तञ्च रन्ध्रेषु श्रीं क्रीं ह्रीञ्च समन्ततः
महामरटपमद्ध्यस्थं सौरचक्रं प्रकीर्तितम् ६
वाय्वग्नीशकवरुणेश्वरराक्षसेन्दुप्रदेशप्रणत्रलिखितैरथादि वर्णैः ७
चतुर्वेदागमाद्युक्तं सर्वपापहरं परम्
विप्राणामर्चनं कुर्यात् क्षत्रियाणां विधिं श्रुणु ८
वृत्तञ्च वृत्तपद्मञ्च षडश्रं वृत्तपद्मकम्

अष्टाश्रञ्चतुरश्रञ्च न्यसेत्प्रणवमद्ध्ययोः ९
सूर्यमन्त्रन्दळेन्यस्य श्रीं ह्रीञ्च विलिखेत् शुभम्
क्षत्राणामर्चनं ह्येवं वैश्यानामर्चनं श्रुणु १०
वृत्तपद्मन्तथा पद्मं षट्कोणं वृत्तमश्रकम्
प्रणवं मद्ध्यपत्रे च सूर्यनामलिखेद्दळे ११
ह्रींकारमश्रसंयुक्तं श्रीं क्लीं ह्रीञ्च दळे लिखेत्
वैश्यानामर्चनं ह्येवं शूद्राणामर्चना क्रमम् १२
वृत्तं षडश्रकञ्चैव वृत्तं पंकजमश्रकम्
मद्ध्ये वेदादिकं प्रोक्तं सूर्यमन्त्रं दळे लिखेत् १३
श्रीं ह्रीञ्चैव तु षट्कोणे त्वश्रं ह्रींकारकं पुनः
अन्यादन्यान्तु संकल्प्य कर्त्ताभर्त्ता विनश्यति १४
यावत्कर्ते समारभ्य सर्वपापहरं भवेत्
अंगन्यासकरन्यासं भूतशुद्धिं विशेषतः १५
अन्तर्यजनमाश्रित्याप्यर्घ्यस्थापनमारभेत्
निर्ऋतौ दण्डिनं पूज्य पिंगळं वायुकोणके १६
गणेशमीशदेशे तु पावके गुरुपूजनम्
मद्ध्ये प्रभूतिकं स्थाप्य पत्रपुष्पाणि योजयेत् १७
विमलं सारमाराद्ध्य तथापरमकोणयोः
मद्ध्ये पद्मासनन्तत्र सूर्यं संपूजयेत्ततः १८
उषाञ्च प्रत्युषां पूज्य तयोश्च स्वस्वनामतः
दीप्ता च सूक्ष्मका चैव भद्रा च विजया तथा १९
अमोघाविमला चैव विभूता विद्युदन्तका
सर्वतो नाममन्त्रञ्च दळमद्ध्ये तु विन्यसेत् २०
पूर्वे सोमस्वरूपञ्च दक्षिणे बुधपूजनम्
गुरुं वै पश्चिमे पूज्य सोमे शुक्रं समर्चयेत् २१
अग्नावंगारकं पूज्य निर्ऋतौ च शनैश्चरम्

राहुञ्च वायुदेशे तु केतुमीशानगोचरे  २२
सर्वोपचारसंयुक्तन्तेजश्चराडेशमर्चयेत्
यथाशक्तिनमस्कारं स्तोत्रं भुक्तिप्रदन्नृणाम्  २३
रक्षार्थं भयनाशार्थमस्त्रशस्त्रनिवारणम्
एकाहमर्चनं कुर्यात्सर्वसौभाग्यदायकम्  २४
चराडमारुतसौभाग्यमायुरारोग्य वर्द्धनम्
अपस्मारं क्षयं कुष्ठं त्वक्दोषं सर्वनाशनम्  २५
सर्वज्वरप्रशमनमक्षिरोगविनाशनम्
दुस्वप्नसर्वदुःखानान्दुर्न्निमित्तविनाशनम्  २६
द्विकालमर्चनं कुर्यात्सर्वसंपत्समृद्धिदम्
षारमासात्सर्वकार्याणि मुक्तिदं वत्सरान्तकम्  २७
सर्वसिद्धिकरन्नृणां प्रणतार्तिविनाशनम्
पुत्रप्रदमपुत्राणां सूर्यलोकं भजन्तिते  २८

अथातस्संप्रवक्ष्यामि सौरदेवार्चनं श्रुणु
पूर्वस्याभिमुखञ्चैव पद्मासनं सुसंस्मृतम्  १
पाद्यादि त्रीणिपात्राणि अस्त्रमन्त्रेण शोधयेत्
शुद्धोदकेन पूरित्वा सौरन्न्यासक्रमं श्रुणु  २
अस्त्रायेति च मन्त्रे तु दक्षिणं हस्तमद्धयमे
उत्तरं हस्तमद्धयन्तु हस्तौ स्पर्शनमेव च  ३
मूलमन्त्रषडंगञ्च क्रमाद्वक्ष्ये ऋषीश्वराः
प्रणवं मन्त्रमुच्चार्य शंकरञ्चान्तमुच्चरन्  ४
विसर्गान्तन्तु यन्मन्त्रं सूर्यमन्त्रं समृद्धिकम्
सान्तं बीजसमायुक्तं हृदये तु न्यसेत्ततः  ५
अर्काय शिरसे न्यस्त्वा भूर्भुवस्पर्शिकान्न्यसेत्
हुंकारं कवचं न्यस्त्वा त्रिवेदी तु त्रिमन्त्रकम्  ६

अग्निबीजं विसर्गान्तं सौरं त्रिदशदिक्षु च
बिन्दुनादसमायुक्तं तन्मन्त्रं उच्चरन्द्वयम् ७
अबिन्दुरेखामुच्चार्य वह्निं सूर्यान्तमुच्चरन्
इदम्मत्रं समुच्चार्य गन्धपुष्पं प्रदापयेत् ८
कुशाक्षततिलञ्चैव रक्तचन्दनकुंकुमैः
अर्घ्यपात्रं प्रतिष्ठाप्य सौरद्ध्यानक्रमं श्रुणु ९
द्विभुजञ्चैकवक्त्रन्तु द्विनेत्रं पद्मधृक्करम्
वर्तुळं देवबिंबस्य मद्ध्यस्थं रक्तवाससम् १०
रक्तवर्णं महात्मानं ममरूपं महेश्वरम्
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ११
अष्टबाहुश्चतुर्वक्त्रं ध्यायेद्दिवसनायकम्
त्रिणेत्रं चतुर्भुजं ध्यात्वा कृतघ्नघ्नं दिवाकरम् १२
सप्ताश्वं रथमद्ध्ये तु स्थापयेत्तु प्रभाकरम्
उषावरुणसंयुक्तं प्रभासन्ध्यासमन्वितम् १३
मेधया प्रज्ञया युक्तं सोमादिग्रहसंयुतम्
सोमांगारबुधांश्चैव जीवशुक्रशनैश्चरान् १४
राहुकेतुसमायुक्तमपमृत्युविनाशनम्
क्षीरवर्णन्तु सोमे तु अंगारं रक्तमेव च १५
बुधानां श्यामवर्णाभं बृहस्पत्यग्निवर्णकम्
शुक्रं कुन्देन्दुवर्णन्तु कृष्णवर्णं शनैश्चरम् १६
नीलजीमूतसंकाशं राहुवर्णं प्रकीर्तितम्
केतूनां धूम्रवर्णन्तु सर्वे पद्मासने स्थिताः १७
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम्
सोमञ्च उत्तरे स्थाप्य शुक्रं पूर्वे तु पूजयेत् १८
दक्षिणेंगारकञ्चैव पश्चिमे तु बृहस्पतिम्
ईशान्यान्तु शनिं स्थाप्य आग्नेय्यां राहुं विन्यसेत् १९

नैर्ऋत्यां केतुं विन्यस्य वायव्यान्तु बुधन्न्यसेत्
पुरस्ताद्रथमश्वञ्च अरुणं पूर्वतो न्यसेत् २०
प्रभामुषाञ्च संध्याञ्च प्रज्ञाञ्चैव तु विन्यसेत्
मेधाञ्च सूर्यचण्डेशौ ईशान्यां दिशि पूजयेत् २१
आदित्यलोकपालानां तत्तत्स्थानेषु पूजयेत्
गंधं पुष्पञ्च धूपञ्च स्वनामाद्येन पूजयेत् २२
षडंगन्यासमंत्रञ्च अर्घ्यञ्चैव प्रदापयेत्
सूर्याचनक्रमञ्चैव इत्येते लक्षणास्तथा २३
इति सौरार्चनविधिपटलः पञ्चपञ्चाशत्तमः

वास्तुहोमविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेन वास्तुहोमविधिक्रमम्
बालस्थाने सभास्थाने सत्रे वै यागमण्टपे १
आद्योपलेष्टिकाधाने लिंगसंस्थापने तथा
प्रोक्षणे गर्भविन्न्यासे सकळस्थापनेऽपि च २
मण्टपस्थापने चैव नृत्तरंगे विशेषतः
देवतावाहने चान्न्य स्थापने च समारभेत् ३
वास्तुहोमं प्रकर्त्तव्यं सर्वसंहारसंयुतम्
दीक्षाभिषेकसंपन्न सादिशैवो दृढव्रतः ४
सर्वलक्षणसंयुक्तस्सर्वतंत्रविशारदः
मंत्रतंत्रक्रियामुद्रा भवनाभावगर्भितः ५
पञ्चांगभूषणोपेतस्सर्वलक्षणलक्षितः
शुधात्मावास्तुविधिना वास्तुहोमन्तु कारयेत् ६
वास्तुं संपूजयेत्पूर्वं एकाशीति पदेषु च
जलावर्त्तन्न्यसेदैंद्रे शालिमद्धये विशेषतः ७
संपूर्यगन्धतोयेन हेमन्तत्रैव निक्षिपेत्

दूर्वापलाशकाशौ च तन्मद्ध्ये तु न्यसेत्ततः ८
वस्त्रेणैव तु संवेष्ट्य कूर्चन्तत्रैव निक्षिपेत्
ब्राह्मणान्पूजयेत्तत्र गन्धपुष्पादिभिः क्रमात् ९
स्थण्डिलं वालुकैः कुर्यादनार्द्रैः श्लक्ष्णवत्तरैः
पूर्वोदितेन मार्गेण पदे वै समरीयके १०
त्रितालमात्रविस्तारमुत्सेधञ्चतुरंगुलम्
षडंगुलप्रमाणेन सव्ये तुर्याश्रकं कुरु ११
ब्रह्मस्थानन्तदित्युक्तं स्थण्डिलस्योत्तरे ततः
षडंगुलप्रमाणेन वृत्तं कुर्यात्क्रमेण तु १२
प्रणीतास्थानमित्युक्तन्तन्मद्ध्ये नळिनं लिखेत्
चतुरश्रं चतुर्वृत्तं योन्नयाद्यङुलस्थण्डिले १३
रेखात्रयन्तु पूर्वाग्रे मद्ध्ये याम्ये तथोत्तरे
रेखात्रयन्तु सौम्याग्रे मद्ध्ये पश्चिमपूर्वयोः १४
रुद्रो वै वस्वतस्सोमः प्रागग्राणान्तु देवताः
उत्तराग्राश्च रेखाश्च वारुणानलभास्कराः १५
सद्येनैव तु संलिख्य प्रोक्षयेद्धृदयेन तु
सूर्यकान्तोद्भवं श्रेष्ठं अरण्युद्भवमद्ध्यमम् १६
श्रोत्रियागारजं हीनमानयेत्पावकन्ततः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः १७
होमं कुर्याद्विशेषेण वास्तुदेवस्वनामभिः
ईशश्चैव तु पर्जन्नयो जयन्तश्च महेंद्रकः १८
आदित्यस्सत्यकभ्रंशावन्तरिक्षस्तथैव च
अग्निः पूषा च वितथो ग्रहक्षतयमस्तथा १९
रुद्रो रुद्रजयश्चैव समरीयस्तथैव च
विवस्वांश्चैवमित्रश्च उर्वी धरजयस्तथा २०
गन्धर्वो भृंगराजश्च मृगश्च निर्ऋतिस्तथा

दौवारिकश्च सुग्रीवः पुष्पदन्तस्तथैव च २१
वरुणो सुरशोषश्च पापयक्ष्मस्तथैव च
रोगो नागस्तथा मुख्यो भल्लाटस्सोम एव च २२
रुगोदित्यदितिश्चैव आपश्चैवापवत्सकः
सवितासावित्रकश्चैव सेंद्रस्त्विंद्रजयस्तथा २३
चरकी च विदारी च पूतनापापराक्षसी
वास्तुदेवान्नयथाख्याता स्वस्वनामैशमंत्रकैः २४
प्रणवाद्यैश्चतुर्थ्यन्तैस्वनामपदमद्धयगैः
स्वाहान्तैश्चैव मंत्रैश्च होमयेत्तु विशेषतः २५
पलाशसमिधाहुत्वा चत्वारिंशन्नवाधिकम्
तत्संख्यययाघृतं हुत्वा चरुन्तत्संख्यया तथा २६
तिलतण्डुलमिश्रेण हुत्वा पूर्वोक्तसंख्यया
वास्त्वभ्यन्तरबाह्यस्थ देवानां स्वस्वनामभिः २७
समिदादिक्रमेणैव प्रत्येकञ्जुहुयात्ततः
द्रव्यान्ते व्याहृतिं हुत्वा मूलेनाज्यन्तु होमयेत् २८
पञ्चब्रह्मषडंगैश्च प्रत्येकन्तु शताहुतिम्
जयादिरभ्याधानञ्च राष्ट्रभृच्चक्रमाद्धुनेत् २९
स्विष्टमग्नेतिमंत्रेण हुनेत्पूर्णाहुतिं पुनः
पलाशोदुंबराश्वत्थ पत्रशुष्कान् सदर्भकैः ३०
बद्ध्वाज्येन सदासिक्त्वा तिलसिद्धार्त्थदर्भयुक्
संप्रोक्ष्य हृदयेनैव संप्रज्वाल्य तदग्निना ३१
प्राकाराभ्यन्तरं सर्वं भवनं यागमण्टपम्
पर्यग्निकरणं कृत्वा वर्द्धन्नयास्त्रावतोययुक् ३२
उल्कान्त्यक्त्वा तु तद्बाह्ये स्नानं कुर्याद्विधानतः
जलभाण्डस्थतोयेन सर्वत्र प्रोक्षयेद्धृदा ३३
वास्तुहोमं समाख्यातं सर्वदोषनिकृन्तनम्

होतारं पूजयेत्तत्र क्रियां प्रतिक्रियां प्रति ३४
पर्यंकं पादुकाद्यैश्च यथा शास्त्रविधानतः
धनधान्य सुखैः पट्टैरन्यैराभरणादिभिः ३५
इति वास्तुहोमविधिपटलष्षट्पञ्चाशत्तमः

विघ्नेशस्थापनविधिपटलप्रारंभः
अथातस्संप्रवक्ष्यामि विघ्नेशस्थापनं परम्
भुक्तिमुक्तिप्रदन्नृणां पुत्रपौत्रविवर्द्धनम् १
ग्रामसमृद्धिकरं पुण्यं सर्वविघ्ननिवारणम्
ग्रामे च नगरे चैव पत्तने खेटकेऽपि च २
पुरे वा कुब्जके वापि विशेषाद्राजधानिके
एतेषु कल्पयेद्धीमान् विघ्नेशस्यालयं क्रमात् ३
त्रिहस्तादि समारभ्य नवहस्तान्तकं क्रमात्
कर्तव्यं भवनन्तस्य अत ऊर्द्ध्वन्न कारयेत् ४
अष्टदिक्षु प्रकर्तव्यं हस्तिपृष्ठविमानकम्
तन्मद्ध्ये कल्पयेत् द्वारं प्राङ्मुखो वाप्युदङ्मुखः ५
दण्डमाने प्रकर्तव्यं प्राकारादीनि पूर्ववत्
वीद्ध्यग्रवीधिमद्ध्ये वा चैत्रवृक्षादिकेषु वा ६
कुर्याद्विघ्नेशरूपन्तु सर्वसंपत्सुखप्रदम्
ऐंद्रे तु संपदं प्रोक्तमाग्नेय्यान्धनदं विदुः ७
याम्यायां भयनाशार्त्थं नैर्ऋत्यां पुत्रवर्द्धनम्
वारुण्यां सस्यसंपत्तिर्वायव्यां पुष्टिवर्द्धनम् ८
सौम्यायां धान्यराशिः स्यादीशान्यां सर्वकामदम्
वीध्यग्रे शान्तिकं प्रोक्तं मद्ध्ये दुःखहराय वै ९
चैत्यवृक्षादिके चैव गवां वृद्धिकरं भवेत्
एवमेवं यथा स्थाने न्यस्तव्यन्तु गणाधिपम् १०

स्वतः प्रधानकं सांगं द्विविधं स्थापनं स्मृतम्
परिवारसमायुक्तं कुर्यात्स्वस्वप्रधानकम् ११
सांगन्तु परिवारन्तु विनास्नापनमारभेत्
प्रतिमां कारयेद्धीमान् पूर्वोक्तलक्षणैस्सह १२
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुवाराभिर्युते काले शुभग्रहनिरीक्षिते १३
अंकुरार्पयेद्धीमान्पूर्वोक्तविधिना सह
मंटपेस्थण्डिलं कृत्वा शालिभिर्विमलैश्शुभैः १४
तस्योर्ध्वे तु न्यसेत्पीठं मद्ध्ये रंध्रावटं कुरु
हृदयेनैव हेमाब्जमवटेसु न्यसेत्क्रमात् १५
आखुं हैमेन कृत्वा तु विन्नयसेन्मद्ध्यमे वटे
विन्यसेत्प्रतिमां तत्र सुस्निग्धं सुदृढं कुरु १६
मृन्मयस्यार्द्धचित्रस्य आभासस्य पटस्य च
रत्नानां चैव विन्नयासं तथानयनमोक्षणम् १७
जलाधिवासनं स्थानं शयनं स्थापनं तथा
क्षीरं पद्मासनञ्चैव स्थापनं यजनन्तथा १८
नृत्तमूर्तिप्रतिष्ठोक्तमार्गेणैव समाचरेत्
ततः प्रदक्षिणं कुर्यात् नेत्रयुग्मं दिनेदिने १९
स्थण्डिलन्तु प्रकर्तव्यं शालिभिर्विमलैश्शुभैः
पूर्वस्याभिमुखं विघ्नं स्थापयेत्स्थंडिलोपरि २०
हेमसूचिप्रहाराभ्यां वक्ष्मरेखां समालिखेत्
असितं मण्डलं लिख्य दृष्टिमंडलमालिखेत् २१
ज्योतिर्निर्मलमालिख्य कुर्याच्छिल्पिविसर्जनम्
तदग्रे स्थण्डिलं कृत्वा बिंबं तत्रोपरिन्यसेत् २२
तर्जन्यानामिकामद्ध्ये रविचंद्रानि लाधिपैः
सुवर्णनखसंयुक्तां गुलिभिश्चक्रमेण तु २३

उच्चार्यनेत्रमंत्रन्तु प्रोत्यनेत्रत्रयेषु च
सुवर्णदूर्वयास्त्रेण मध्वाज्याभ्याञ्च तर्पयेत्  २४
मधुना च घृतेनैव पात्रे प्रस्थेन पूजयेत्
मध्वाज्यसूक्तमुच्चार्य दर्शयेत्तु क्रमात्सुधीः  २५
धेनुंगौर्धेनुभव्येति ब्रंहसूक्तेन भूसुरान्
प्रच्छन्नपटमावृत्य जनसंख्यान्प्रदर्शयेत्  २६
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
स्नापयेत्पञ्चगव्यैश्च अष्टमृत्सलिलैरपि  २७
वस्त्रैराभरणैर्माल्यैर्भूषयेद्भूषणार्हकैः
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्  २८
ग्रामप्रदक्षिणं कुर्यात्संप्रविश्य जलाशयम्
तत्तीरे स्थण्डिलं कृत्वा प्रतिमां तत्र विन्यसेत्  २९
नववस्त्रेण संवेष्टय लंबकूर्चसमन्वितम्
जलमद्ध्ये प्रपां कृत्वा चतुर्गात्रसमन्वितम्  ३०
वितानध्वजसंयुक्तं दर्भमालासमन्वितम्
शाययित्वा गळन्दघ्ने जले तु फलकोपरि  ३१
एकरात्रं द्विरात्र वा त्रिरात्रं वा जलोषितम्
भवनस्याग्रतः कुर्यात् मण्टपं चतुरश्रकम्  ३२
धर्मरंध्राष्टहस्तं वा कलास्तंभसमन्वितम्
मण्टपन्तु त्रिधाभज्य मद्ध्यभागे तु वेदिकाम्  ३३
रत्निमात्रसमुत्सेधां दर्पणोदरसन्निभाम्
कुण्डानि कल्पयेत्पश्चात् मानुषे तु पदे हितम्  ३४
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा
दिशास्वंबुजकुंडानि विदिग्वश्वत्थपत्रवत्  ३५
प्राक्कुण्डं वेदिकामद्ध्ये वृत्तं प्राधान्यकं कुरु
पञ्चाग्न्यायतनञ्चेत्तु योन्याकाराणि वर्जयेत्  ३६

मण्टपस्योत्तरे देशे स्नानश्वभ्रं प्रकल्पयेत्
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत् ३७
मण्टपं भूषयित्वा तु भूसुरान्भोजयेत्ततः
उच्छिष्ठन्तु ततोद्वास्य गोमयेनोपलेपयेत् ३८
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु
पुण्याहं वाचयित्वा तु स्वस्तिसूक्तसमन्वितम् ३९
मंटपं पूजयेद्धीमान् स्थापनं क्रमवत्कुरु
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् ४०
जलादुत्तीर्य बिंबन्तु स्नानश्वभ्रे तु विन्यसेत्
वस्त्रादीनि व्यपोह्यात्र गव्यैरेवाभिषेचयेत् ४१
गन्धतोयेन संस्नाप्य शुद्धैरुत्थैरिति ब्रुवन्
ईशानेन समभ्यर्च्य पीतवस्त्रेण वेष्टयेत् ४२
कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिनासह
वेद्यूद्ध्र्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ४३
तण्डुलैस्तिलदर्भैश्च परिस्तीर्य विशेषतः
शयनं कल्पयेन्मद्ध्ये चर्मजाद्यैरनुक्रमात् ४४
प्रोक्षयेत्पुरुषेणैव आपोहिष्ठेतिमन्त्रतः
आचार्यः शिष्यसंयुक्तं प्रागुक्तलक्षणान्वितम् ४५
नववस्त्रधरोष्णीषो हेमांगुलीय शोभितः
स्नानवेद्यास्समुद्धृत्य सर्वालंकारसंयुतम् ४६
शन्नोदेवीतिमन्त्रेण विघ्नेशं शयनोपरि
शाययित्वा ततो मंत्री प्राक्छिरश्चोद्ध्र्वचक्त्रकम् ४७
अर्चयित्वा हृदा पश्चाद्रक्तवस्त्रेण वेष्टयेत्
पद्ममुद्रां प्रदर्श्याथ अंकुशाख्यां प्रदर्शयेत् ४८
सर्वलक्षणसंयुक्तं द्रोणतोय प्रपूरितम्
कुंभं प्रक्षाळ्यतोयैश्च वस्त्रेणैव तु वेष्टयेत् ४९

सकूर्चं सापिधानञ्च सवस्त्रं वारिपूरितम्
विघ्नेशस्य शिरोभागे स्थापयेद्देशिकोत्तमः ५०
तत्रैव पञ्चरत्नानि निक्षिपेद्धृदयेन तु
विन्नयसेत्कुंभमद्ध्ये तु विघ्नेशं मूलमन्त्रतः ५१
खान्तं सान्तसमायुक्तं यान्तं मायासमन्वितम्
त्रयोदशान्तसंयुक्तं षष्ठस्वरसमन्वितम् ५२
मूलमन्त्रमिदं प्रोक्तं विघ्नेशस्य प्रजापते
खान्तेनैव समायुक्तं ब्रह्मांगानि प्रकल्पयेत् ५३
गणेशं पुरुषाकारं गजकर्णं गजाननम्
महोदरं बृहत्कायमेकदंष्ट्रं त्रिलोचनम् ५४
रौद्रनेत्रन्तु लंबोष्ठं नागयज्ञोपवीतिनम्
करण्डमकुटोपेतं सर्वाभरणभूषितम् ५५
चतुर्दोर्दण्डसंयुक्तं दक्षिणेंकुशदन्तधृक्
पाशञ्च लड्डुकञ्चैव वामभागे तु धारितम् ५६
करस्थलड्डुकेनैव गजहस्ताग्रसंयुतम्
एतत् गणेशरूपन्तु ध्यात्वा मन्त्रन्तु विन्नयसेत् ५७
पूजयित्वा तु गन्धाद्यैः पञ्चवक्त्रं प्रदर्शयेत्
द्रोणार्द्धन्तोयसंपूर्णान्सूत्रदामसमन्वितान् ५८
हेमपाशांकुशोपेतान् गन्धोदकप्रपूरितान्
अभितस्तु घटानष्टौ स्थापयेदष्टदिक्षु च ५९
वरदं पूर्वकुंभे तु वीरमाग्नेयकुंभके
विघ्नेशं दक्षिणे कुंभे नैर्ॠत्यान्तु गजाननम् ६०
इक्षुप्रियन्तु वारुण्यं गजकर्णन्तथानिले
विनायकन्तु सौम्यायां लंबोष्ठं त्वीशके यजेत् ६१
विघ्नेशरूपिणस्सर्वे विशेषमधुनोच्यते
पाशांकुशधरास्सर्वे वरदाभयदान्विताः ६२

द्विनेत्राश्च द्विहस्ताश्च ध्यात्वा तत्तत्स्वबीजके
विन्नयसेत्कुंभमद्ध्ये तु गन्धपुष्पादिभिर्यजेत् ६३
गुळान्नन्दापयेद्धीमान् तांबूलन्दापयेत्पृथक्
परिवारघटानष्टावुपवेद्युपरिन्नयसेत् ६४
सकूर्च्चान्सापिधानाढ्यान् सवस्त्रान्वारिपूरितान्
सुप्रभूतं सुवक्त्रञ्च वामनं शंखपालकम् ६५
महावीरं भैरवञ्च वीरेशञ्चोग्ररूपिणम्
इंद्रादीशानपर्यन्तं कुंभमद्ध्ये तु विन्नयसेत् ६६
शुक्लं कृष्णं हरीतालं श्यामं रक्तन्तु शाबलम्
काश्मीरन्धूम्रवर्णन्तु सुप्रभूतानि वर्णकम् ६७
पल्गखेटकहस्तांश्च भीमरूपान् सुदंष्ट्रकान्
सर्वाभरणसंयुक्तान्यूर्ध्वकेशाळकान्वितान् ६८
द्विनेत्रान्कराळवदनान्स्वनामाद्यक्षरैस्तथा
पूजयेत्तु विशेषेण गन्धपुष्पादिभिः क्रमात् ६९
द्वाररक्षघटौ द्वौ तु उपवेद्यान्तु विन्नयसेत्
सकूर्च्चौ सापिधानौ च सवस्त्रौ वारिपूरितौ ७०
वीरञ्च सव्यभागे तु महावीरञ्च वामके
द्विभुजौ च द्विनेत्रौ च रक्तवर्णौ गदाधरौ ७१
वामे विस्मयहस्तौ च स्वनामाद्येन विन्नयसेत्
पूजयित्वा हृदामंत्री गन्धपुष्पादिभिः क्रमात् ७२
ऋगाद्यद्ध्ययनं कुर्यात्प्रागादिषु क्रमेण तु
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ७३
गणेशाग्निप्रकल्प्याथ कुण्डं प्रतिविशेषतः
समिधाज्य चरूंल्लाजां सक्तुगौळमपूपकम् ७४
प्रियंगुकोद्रवञ्चैव पृथुकं पनसन्तथा
शमीखदिरमायूरो दुंबरास्तु दिशासु च ७५

बिल्वञ्चार्कन्तथाप्लक्षन्नयग्रोधं विदिशासु च
पलाशन्तु प्रधानं स्यात्समिधस्संप्रकीर्तिताः ७६
सद्यादीशास्त्रपर्यन्तमन्त्रैश्चैव क्रमेण तु
शतमर्द्धं तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् ७७
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा तु प्रतिमान्ततः
मूर्तिपान्स्वस्वदिग्भागे स्पृष्ट्वास्पृष्ट्वा तु होमयेत् ७८
आचार्यो हृत्प्रदेशे तु होमं कुर्याद्विशेषतः
गणानान्त्वेतिमन्त्रेण मूलेनैव विशेषतः ७९
घृतेन जुहुयान्मंत्री प्रत्येकन्तु शताहुतिः
एवं जागरणं रात्रौ प्रभाते विमले ततः ८०
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
दक्षिणान्दापयेत्पश्चात् गोभूमीकाञ्चनैस्सह ८१
पञ्चनिष्काधमं प्रोक्तं द्विगुणं मद्ध्यमं भवेत्
त्रिगुणं चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा ८२
अद्ध्येतृमूर्तिधारांश्च पूजयेद्विधिपूर्वकम्
शयनात् बिंबमुद्धृत्य वस्त्रादीनि व्यपोह्य च ८३
पूजयेत् गंधपुष्पाद्यैः कुंभात्सर्वान्प्रपूजयेत्
अग्निं संपूजयेत्पश्चात्प्रतिकुण्डं विशेषतः ८४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति मंत्रतः ८५
हुत्वाग्निन्तु विसृज्याथ स्थापनन्तु समारभेत्
शयनाद्गणेशमुद्धृत्य स्नानवेद्युपरिन्यसेत् ८६
घृतं शिरोर्पणं कुर्यात्प्रागुक्तविधिना सह
अकारादिक्षकारान्तं देहे पूर्वोक्तवन्न्यसेत् ८७
पद्ममुद्रां प्रदर्श्याथ पञ्चवक्त्रीं प्रदर्शयेत्
दिग्बंधञ्चास्त्रमंत्रेण कारयेद्दशदिक्षु च ८८

मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ८९
कृत्वा बिंबस्य चाग्रे तु स्थण्डिलोपरिविन्न्यसेत्
कुंभात् बीजं समादाय प्रतिमां हृदिविन्यसेत् ९०
तत्कुंभस्थजलैश्चैव स्थापयेत्तु विनायकम्
अष्टमूर्तिं घटे न्यस्त्वा बीजान्यष्टदळेषु च ९१
पीठांबुजे क्रमेणैव इंद्राद्यैशान्तकान्नयसेत्
तत्कुंभस्थोदकैश्चैव विघ्नेशमभिषेचयेत् ९२
पूजयेत् गन्धपुष्पाद्यैर्मूलमन्त्रेण देशिकः
हृदा सर्वोपचाराणि दापयेत्तु क्रमेण तु ९३
स्नपनं कारयेत्पश्चात्पूर्वोक्तविधिना सह
किञ्चिदस्मिन्विशेषोऽस्ति शिवकुंभञ्च वर्द्धनीम् ९४
व्यपोह्य मद्ध्यमे कुंभे विघ्नेशं संप्रपूजयेत्
पूजयित्वा विशेषेण प्रभूतहविषन्ददेत् ९५
गुळान्नं पायसान्नञ्च मुद्गान्नञ्च निवेदयेत्
भक्ष्याणि विविधान्यत्र गणानां त्वेति दापयेत् ९६
भोजयेत् ब्रंहचारींश्च तेषां भक्ष्याणि दापयेत्
अविघ्नं प्रार्त्थयेत्तत्र गणेशन्तु विशेषतः ९७
द्वारपालौ स्वदिग्भागे स्थापयेत्तु क्रमेण तु
पूजयेत् गंधपुष्पाद्यैः स्वनामाद्येन मंत्रतः ९८
स्थापयेत्परिवाराणि अन्तर्मण्डलमद्ध्यमे
पुरतो बलिपीठन्तु कृत्वा तस्मिन्सुभूतकम् ९९
विन्यसेत्तेन मंत्रेण पूजयेत्तु क्रमात् बुधः
स्थापयेत्तु सुवक्त्रादीन्प्रदक्षिणक्रमेण तु १००
नित्यार्चनविधिं वक्ष्ये सर्वसिद्धिकरं परम्
प्रागुक्तविधिना स्नात्वा सकळीकरणं कुरु १०१

पूजाद्रव्याणि सर्वाणि प्रोक्षयेत्पुरुषेण तु
द्वारदेशं समानीय पूजयेत् द्वाररक्षकौ  १०२
पतंगस्योर्ध्वके लक्ष्मीमधस्तात्पृथिवीं ततः
पूजयित्वा यथान्न्यायं प्रविश्याभ्यन्तरं ततः  १०३
स्थानशुद्धिं ततः कृत्वा मार्जना लेपनादिभिः
पात्रशुद्धिं ततः कृत्वा यथा द्रव्यार्हकेण तु  १०४
पूजापर्युषितं सर्वं हृदयेन विसर्जयेत्
शैलजैर्लोहजैश्चैव मृण्मये त्वर्द्धचित्रके  १०५
आभासे च पटे कुर्यात् बिंबशुद्धिर्यथार्हकम्
ततश्शुद्धोदकेनाथ शुद्धिं कृत्वा विशेषतः  १०६
आसनं कल्पयेत्पश्चादग्न्यादिविदिशासु च
धर्मज्ञानञ्च वैराग्यमैश्वर्यं चैव पादगाः  १०७
अधर्मादीळिकाः प्रोक्ताः पूर्वादियुगदिक्षु च
गुणत्रयेण सञ्च्छाद्य तस्योर्ध्वेब्जासान्न्यसेत्  १०८
नवाक्षरमयं पुष्पं पूर्वादीनि प्रदक्षिणम्
अकारादि उकारान्ता दळेष्वष्टसुविन्न्यसेत्  १०९
ओंकारं कर्णिकायान्तु पूजयेत् गन्धपुष्पकैः
तस्योर्ध्वे सद्यमन्त्रेणावाहयेत्तु गजाननम्  ११०
ध्यात्वा देवं ततो रूपं मूलेन स्नानमाचरेत्
पाद्यन्दत्वा तु सद्येन शिरसाचमनीयकम्  १११
वामदेवेन मन्त्रेण अंबरं दापयेत्ततः
अर्घ्यन्तु शिखया दत्वा गंधं वामेन दापयेत्  ११२
पुष्पं मूलेन दत्वा तु धूपन्नेत्रेण दापयेत्
दीपन्तु कवचेनैव दापयेत्तु विशेषतः  ११३
प्रतिद्रव्यं हृदामंत्री दद्यादाचमनीयकम्
वरदान्न्यष्टमूर्तींस्तु प्राग्दळादिषु विन्यसेत्  ११४

स्वनामाद्यत्तरेणैव गंधपुष्पादिभिर्यजेत्
गौळ्यं वा पायसं मौद्गयं शुद्धान्नं वा निवेदयेत् ११५
गौळ्यं साज्यं गुळोपेतमुपदंशैस्समन्वितम्
फलैः पक्वैश्च सूपेन दध्ना चैव विशेषतः ११६
गणानान्त्वेति मंत्रेण विघ्नेशाय निवेदयेत्
परिवारबलिन्दद्यात्स्वस्वमंत्रेण बुद्धिमान् ११७
आचमनन्ततो दद्यात् नैवेद्यन्तु व्यपोह्य च
तांबूलं दापयेत्तस्मै अस्त्रेणैव तु देशिकः ११८
चतुष्कालं त्रिकालं वा नित्यं संपूजयेद्बुधः
नित्याग्निं कल्पयेद्धीमान् वह्नौ वैशानगोचरे ११९
वृत्तं वा चतुरश्रं वा कुण्डं तत्र प्रकल्पयेत्
ततो होमं प्रकुर्वीत वह्निसंस्कारपूर्वकम् १२०
आज्यं सद्येन जुहुयादन्नं वामेन होमयेत्
दशाहुतिस्स्यात्प्रत्येकं पञ्चब्रंहषडंगकैः १२१
व्याहृतिञ्चैव द्रव्यान्ते जुहुयाद्देशिकोत्तमः
एककालं द्विकालं वा त्रिकालं होममाचरेत् १२२
तदन्ते चोत्सवं कुर्यात् विघ्नेशप्रतिमायुतम्
रुद्रांगुलसमायाममुत्तमन्तु विधीयते १२३
रंध्रांगुलसमायामं मद्ध्यमञ्चेति कीर्तितम्
अब्ध्यंगुलसमुत्सेधमधमञ्चेति कीर्तितम् १२४
विघ्नेशरूपं कर्तव्यं प्रतिमालत्तणोक्तवत्
एवं नित्योत्सवार्त्थन्तु प्रतिष्ठां पूर्ववत्कुरु १२५
सर्वालंकारसंयुक्तं प्रतिमां भूषयेत्ततः
परिचारकमाहूय सोष्णीषञ्चोत्तरीयकम् १२६
तस्य मूर्ध्निप्रदेशे तु विघ्नेशं विन्यसेत् बुधः
सर्वातोद्य समायुक्तं पञ्च चामरसंयुतम् १२७

नृत्तगेय समायुक्तं धूपदीपसमाकुलम्
प्रदक्षिणत्रयं कृत्वा प्रासादं प्रतिमायुतम्  १२८
द्वारदेशं समानीय पादप्रक्षाळनं कुरु
प्रविश्य गर्भगेहन्तु स्थापयेत्पूर्वदेशके  १२९
संवत्सरोत्सवे प्राप्ते कुर्यात्संवत्सरोत्सवम्
प्रायश्चित्ते तु संप्राप्ते प्रायश्चित्तोक्तवत्कुरु  १३०
मंत्रे भेदो भवेदत्र क्रिया भेदो न विद्यते
एवं परार्थमाख्यातं आत्मार्थं श्रुणु सुव्रत  १३१
प्रतिमां वा पटे वापि क्षणिके मण्डलेऽपि वा
स्थण्डिले वा जले वापि स्वयमात्मनिवायजेत्  १३२
परिवारद्वारपूजाञ्च हित्वा सर्वं समाचरेत्
एककालं द्विकालं वा त्रिकालं वा यजेत् बुधः  १३३
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
निर्विघ्नं सर्वकार्येषु भयं सर्वत्र नश्यति  १३४

अथातस्संप्रवक्ष्यामि विघ्नेश्वरस्य पूजनम्
नित्येनैमित्तिके काम्ये प्रतिष्ठायां विशेषतः  १
आदौ विघ्नेश्वरं पूज्य मोदकादिभिरेव च
भक्ष्यादिषु च सर्वेषु नाळिकेरं विशिष्यते  २
नाळिकेरं गृहीत्वा तु देशिकश्शोधनञ्चरेत्
यौवनञ्चेत्सुसंग्राह्यं बालवृद्धन्न कारयेत्  ३
दुर्गन्धञ्चैव वक्रञ्च दीर्घं भिन्नञ्च वर्जयेत्
अश्लक्ष्णं नेत्रहीनं वा स्थूलसूक्ष्मविहीनकम्  ४
केशबन्धविहीनं वा पुराणञ्जलवर्जितम्
एवं परीक्ष्य बहुधा क्षाळयेन्नाळिकेरकम्  ५

नाळिकेरशिखां न्यस्त्वा कनिष्ठांगुलनाहतः
क्रमेण च शिखान्नयस्त्वा कनिष्ठानामि --- ६
अंगुष्ठेन विशेषेण तस्य वक्त्रं स्पृशेत्पुनः
प्रहरेन्नाळिकेरन्तु गणेशनिकटोपले ७
प्रादेशमात्रमौन्नत्यं त्रियंबकाख्येन मंत्रतः
एकप्रहरमात्रेण द्विभागं सममुद्भवेत् ८
अत्कर्मणश्शुभं कुर्याद्धनधान्यविवर्द्धनम्
गुणांशमुखभागन्तु एकांशं पृष्ठभागिकम् ९
गुणांशं मूलभागन्तु एकांशमुखभागकम्
अंगुल्यग्रप्रमाणेन यत् भागन्तु ग्रहीतकम् १०
पुंसां स्त्रीणाञ्च तत् गेहेऽप्यन्योन्यकलहं भवेत्
शिथिले कर्मनाशं स्यात् नेत्रे कर्तृ विनाशनम् ११
प्रधानचक्षुरेखायां देशिकन्नाशयेद्ध्रुवम्
दक्षिणे चक्षुरेखायां ग्रामस्थानां विनाशकृत् १२
उत्तरे चक्षुरेखायां भूपतिस्त्वन्यथा भवेत्
वक्त्रेक्षतिर्महत्क्षोभं दीर्घप्रहरके भयम् १३
छेदे हस्तं गृहीतञ्चेत् गर्भप्राणिविनाशनम्
बहुछेदे कृते चैव क्षुत्पीडाग्रामवासिनाम् १४
जलहीने वर्षहीनं केशहीने धनक्षयम्
दुर्गन्धं सलिलन्तस्य राज्यश्रीस्त्वन्यथा भवेत् १५
नाळिकेरस्य दुर्गन्धं महामारि प्रकोपनम्
एवमादिकृते दोषेऽप्यघोरास्त्रं शतञ्जपेत् १६
यौवनन्नाळिकेरञ्च पुनर्ग्राह्य निवेदयेत्
त्रिमुखन्नाळिकेरञ्च स्थूलवक्त्रे तु ताडयेत् १७
द्विभागमूलखण्डञ्चाप्येकभागन्तथाग्रकम्
गुणांशं मुखभागञ्च द्वयांशं पृष्ठभागकम् १८

द्विखण्डञ्च समं कृत्वा सर्वसिद्धिकरं शुभम्
धूपदीपञ्च नैवेद्यन्तांबूलञ्च प्रदापयेत् १९
मनोभिलषितानिष्टान्तस्याग्रे प्रार्थयेत्ततः
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् २०
इति विघ्नेशस्थापनपटलस्सप्तपञ्चाशत्तमः

स्थापनक्रमविधिपटलप्रारंभः

स्थापनस्य विधिं वक्ष्ये सर्वशान्तिकरं परम्
अधुना सकळादीनां स्थापनात्क्रममुच्यते १
सहितः स्थापनं यत्र एकदेशिकमाचरेत्
सहितः द्विविधं प्रोक्तं स्कन्दोमासहितस्य तु २
अंकुरादिप्रतिष्ठान्तमेकदेशिकमाचरेत्
अयनं द्विविधं प्रोक्तं दक्षिणे चोत्तरे तथा ३
देवानान्तु दिवाकाले उत्तरायणमेव तु
देवानान्दक्षिणे रात्रौ ज्ञात्वा कर्मसमाचरेत् ४
रात्रौ तु लिंगं संस्थाप्य न्नाशनञ्चाखिलञ्जगत्
राजप्रधानमहिषी प्रधानश्च गजे मृते ५
तस्मात्सर्वप्रयत्नेन दिवाकाले प्रतिष्ठितम्
सकळानान्तु सर्वेषां सर्वमासेषु संग्रहेत् ६
भवानी स्थापनं वक्ष्ये सहितं भिन्नमेव च
सहितं स्थापनं सर्वमेकदेशिकमाचरेत् ७
अन्नथा चेन्न कर्त्तव्यं राजराष्ट्रं विनश्यति
सस्यगो नाशमेतद्धि सर्वशत्रुविवर्द्धनम् ८
स्थापयेद्यदि मोहात्तु ग्रामनाशं भवेद्ध्रुवम्
प्रासादात्स्थापनं यत्र प्रतिष्ठां पुनराचरेत् ९
आरंभाद्यन्तमेवन्तु एकदेशिकमाचरेत्

तस्याभावे तु पुत्रो वा शिष्यो वाथ गुरुस्तथा १०
अन्यधा चेन्न कर्त्तव्यं कर्त्ता भर्त्ता विनश्यति
आचार्यस्यानुकुंभन्तु पूजयेत्तु यथा विधि ११
कुलानि मूर्त्तिपानान्तु पूजयेत्तत्र तत्र वै
एकसन्तानकं कल्प्य मूर्त्तिपानां विशेषतः १२
आचार्यो मूर्त्तिपैस्सार्द्धं स्नानं कृत्वा तु पूर्वकम्
अलंकृत्य स्वदेहन्तु प्रविशेद्यागमण्टपम् १३
इंद्रपावकयोर्मद्ध्ये मद्ध्यईशेंद्रयोस्तु वा
स्थापयेत्सौरकुंभन्तु पूजयेत्तु यथाविधि १४
बहिर्गत्वा द्विराचम्य पूर्वोक्तविधिना सह
द्वाराण्यस्त्रेण संप्रोन्द्य द्वारद्वाराधिपान्नयजेत् १५
आदौ शान्तिकलाशास्तद्वाराधनमभूद्यपि
प्रतिष्ठां पूजयेत्पूर्वे द्वाराभिख्यन्तु दक्षिणे १६
वारुणे तु प्रतिष्ठाख्यन्निवृत्ताख्यमुदग्गते
प्राचीनन्दिमहाकाळौ याम्ये भृंगिविनायकौ १७
पश्चिमे वृषभस्कन्दौ देविचण्डोत्तरेण तु
प्रणवादि नमोन्तास्तु चतुर्त्थ्यन्तं क्रमान्नयसेत् १८
तत् शाखाम्मूलदेशस्थौ प्राशन्तु सशिरोघटौ
पर्जन्यौ शोकनामानौ भूतसञ्जीवनामृतौ १९
धनदश्रवृतौ द्वौ द्वौ पूजयेदनुपूर्वशः
भूलोकन्तु भुवर्लोकं पूर्वद्वारौ तु पूजयेत् २०
दक्षिणे पूजयेद्विद्वान्स्वर्लोकजनलोककौ
तपोलोकस्य लोकौ तु पश्चिमे तु प्रपूजयेत् २१
लोकालोकशिवालोकौ उत्तरद्वारकं यजेत्
आदित्यसोमे प्राक्द्वारे पूजयेद्दक्षिणे बुधः २२
अंगारकोबुधश्चैव पश्चिमे तु यजेत्ततः

यजेत् बृहस्पतिश्शुक्रोऽप्युत्तरे शनिराहुकौ  २३
इत्येवं ग्रहकुंभेषु पूजयेद्देशिकोत्तमः
धरो ध्रुवश्च सोमश्च आपश्चैवानिलोनलः  २४
प्रत्यूषश्च प्रभासश्च वसवश्चाष्ट एव च
इत्येवं वस्वष्टौ तु द्वौ द्वौ द्वारे तु पूजयेत्  २५
गंगा च यमुना चैव नर्मदा च सरस्वती
सिंधुगोदावरी चैव कावेरी सरयुस्तथा  २६
द्वौ द्वौ द्वारिप्रपूज्याथ गंधपुष्पादिभिः क्रमात्
वैकर्तनं विवस्वांश्च मार्ताण्डं पूजयेत्तु सः  २७
लोकप्रकाशकश्चैव पूजयेत्तु विचक्षणः
पश्चिमे लोकसाक्षिञ्च आदित्यञ्च त्रिविक्रमम्  २८
उत्तरे च यजेत्सूर्य मंशुमांश्च दिवाकरम्
एते वै द्वादशादित्याः पूजयेत्तु विचक्षणः  २९
कृतयुगन्तु यजेत्पूर्वं त्रेताञ्च दक्षिणे तथा
द्वापरं पश्चिमे पूज्य कलिं चैवोत्तरे दिशि  ३०
पूजयेत्तु विशेषेण गंधपुष्पादिभिर्यजेत्
ऋग्वेदन्तु यजेत्पूर्वे यजुर्वेदन्तु दक्षिणे  ३१
पश्चिमे सामवेदन्तु उत्तरेऽथर्ववेदकम्
गंधपुष्पैश्च धूपैश्च दीपैर्नीराजयेद्बुदा  ३२
द्वारं प्रतिविशेषेण पूजयेत् श्रीगणौ बुधः
वज्रं शक्तिञ्च दण्डञ्च खड्गं पाशं तथागुरुः  ३३
गदा त्रिशूलं वक्त्रञ्च पद्मञ्चेति दशायुधम्
पूर्वादिदिक्पताकादि पूजयेत्तु दशायुधम्  ३४
कुमुदं कुमुदाक्षञ्च पुण्डरीकञ्च वामनः
शंखकर्णस्तथाशर्वस्त्रिणेत्रस्संप्रतिष्ठितः  ३५
पूर्वाध्वगाष्टवामानां समभ्यर्च्य यथाक्रमम्

हेतुस्त्रीपुंनरघ्नश्च वेताळश्चाग्निजिह्वकः ३६
काळं कराळिनं भीमं एकपादं तथैव च
पूर्वादीशानपर्यन्तं पूजयेत्तु यथाक्रमम् ३७
स्राकाशे स्रचलञ्चैव पाताळे हाटकेश्वरम्
एवन्तु भूमिपालानां गंधपुष्पादिभिर्यजेत् ३८
प्रत्येकं हाटकं शाली प्रत्येकन्तु पटं यजेत्
पश्चिमे द्वारमारूढ्य नित्यद्वारादिकं यजेत् ३९
दिव्यन्तरिक्षभूम्मिष्ठान्विघ्नानुत्सार्य बुद्धिमान्
दक्षजंघां समुत्क्षिप्य वामशाखाविशेषतः ४०
स्रस्त्रेणोदुंबरं पुष्पं द्वारं प्रतिविचक्षणः
वास्तोष्पतये चेति ब्रह्मणे नम इत्यपि ४१
संपूज्य गन्धपुष्पाद्यैः ब्रंहाणं निर्ऋृतिगोचरे
यागमण्टपकंपेषु पृथिवी तत्वकं यजेत् ४२
तृणेषु जलतत्वञ्च बंधेषु चाग्नितत्वके
वंशेषु वायुतत्वञ्च स्थूणासुगगनं यजेत् ४३
वितानञ्चंद्रबिंबञ्च दर्भमालाञ्च वासुकिम्
इत्येवं मण्टपं पूज्य व्याप्यं सदाशिवान्तिकम् ४४
दर्पणं पूर्णकुंभञ्च वृषभं युग्मचामरम्
श्रीवत्सं स्वस्तिकं शंखं दीपो देवाष्टमंगलम् ४५
पूर्वादीशानपर्यन्तं पूजयेदष्टमंगलम्
संपूज्य गंधपुष्पाद्यैरस्त्रप्राक्शिरकल्पनम् ४६
सर्वावकुंठनाद्यागगेहं संरक्ष्यदेशिकः
उपविष्ट उदग्वक्त्रो भूतशुद्धिं समाचरेत् ४७
सकळीकरणं कृत्वा कृत्वान्तर्यजनं कुरु
विशेषार्घ्यं ततः कुर्यादायसीन्नचार्द्धचाक्षतैः ४८
स्रापस्तिलकुशाग्रैश्च क्षीरपुष्पसमन्वितम्

तदंभसा तु संप्रोन्दय स्वशिरो द्रव्यसंहतिम् ४९
अस्त्रमन्त्रेण तत्सर्वं कवचेनावकुण्ठयेत्
हृदाभिमन्त्र्य प्रत्येकं तिलकञ्च नवन्नयेत् ५०
शिवहस्तञ्च संकल्प्य तदारोपि तदस्तके
ज्ञानासितत्वसंख्यातैश्चतुरूनैरथापि वा ५१
दर्भैः प्रादेशमात्रन्तु निर्मितञ्चास्त्रमंत्रितम्
कल्पयेत्पञ्चगव्यन्तु विधानं तमिहोच्यते ५२
मण्टपस्य शुभे भागे क्षेत्रेन वपदी कृते
पञ्चतत्वकृतन्यासे पञ्चपात्राणि विन्यसेत् ५३
पञ्चतत्वकृतन्नयासे पञ्चवक्त्राणि विन्यसेत्
शिवसादाख्यविद्याया काले पुंसि च देशिकः ५४
सुप्रतिष्ठां सुशान्तञ्च तेजोवादभृता क्रमम्
रक्षोदकेन संकल्प्य क्षीरन्दधिघृतं न्यसेत् ५५
गोमयञ्चैव गोमूत्रमीशानाद्यैस्तु मन्त्रयेत्
लाजचन्दनसिद्धार्त्थ भस्मपुष्पकुशाक्षताः ५६
हेतयोस्त्रेण सप्तैते विधातव्याविमिश्रिताः
नैर्ऋत्यां मण्टपे स्थित्वा संस्कृतिं मण्टपस्य तु ५७
कुर्यादीशस्य वक्त्रन्तु संस्कारैर्लक्षणादिभिः
विकीर्य विकिरानीशे कुशकूर्च्चं समाचरेत् ५८
वेद्यां वामेशकं वापि ईशानं ब्रह्मपश्चिमे
हेमाद्यैकतमं कुंभं निधायापूर्यचांभसा ५९
चूतपल्लवतापेतास्वर्णवस्त्रादिसंयुताम्
संहृदौ विकिरास्त्राणामासनन्तु चलाचलम् ६०
संकल्प्य मूर्त्तिमन्त्रेण मूर्त्तिभूतं घटन्नयसेत्
वर्द्धनी सोदकासूत्रा वस्त्रास्वर्णादि संयुता ६१
विन्यसेदस्त्रभूतानां प्रत्यन्नाळसमन्वितम्

संपूज्य गन्धपुष्पाद्यैर्घटस्तालं गुरूत्तमः ६२
इंद्राग्नेय यमञ्चैव निर्ऋृतिं वरुणन्तथा
वायुं सोमन्तथेशानं पूजयेत्प्राग्दिगादितः ६३
विरिञ्चिमीशदक्षस्थं विष्णुं निर्ऋृतिवामकम्
घटस्थं कलशस्थं वा कुर्याद्वाथ यजेत् गुरुः ६४
भोभोशक्रत्वयास्वस्यान्दिशिविघ्नप्रशान्तये
सावधानेन यागान्तं यावत्स्थेयश्शिवाज्ञया ६५
सर्वेषां लोकपालानामनेन क्रमयोगतः
शिवाज्ञां श्रावयेत्कुंभं भ्रामयेदस्त्रतोग्रकम् ६६
विन्यसेत्कुंभवर्द्धन्यौ पूर्ववत्तदनन्तरम्
स्थिरासनन्तु संपूज्य देवमस्त्रञ्च पूजयेत् ६७
मूलविद्या धनं सांगं शिवसाध्वरणार्थकम्
पूजयित्वा तयोरर्घ्यं कल्पयेद्धेनुमुद्रया ६८
सव्यमुष्टिक्रमात्पिण्डं लिंगमंगुष्ठकोहरः
हृदये कल्प्य संस्पृष्ट्वा पूर्वमंगुष्ठवर्मणा ६९
संस्पृशेत् वर्द्धनीं पश्चात् मुष्टिना हृदयेणुना
मूर्तये च पुरा स्पृष्ट्वा वर्द्धनीममुनैव तु ७०
स्पृशेदंगुष्ठकाग्रेण चामरञ्च घटन्तथा
उमायै भगरूपिण्यै लिंगरूपधराय च ७१
शंकराय नमस्तुभ्यमिति स्तुत्वा नमोद्यशः
यज्ञस्याधिपतिस्त्वं हि मूर्तिरेषा तवाचला ७२
एषतेज्ञाननिर्देशस्तत् गृहाणसमायुतम्
मायावृत्तिततश्चायं यज्वनाहतकेन तु ७३
रक्षणीयस्य वै तर्हि समास्तीर्य यदस्य हि
यज्ञरक्षासतान्तस्मिन्नवमारोप्य देशिकः ७४
विनायकं वासुदेवं ऐशान्ये तु गुरुं यजेत्

संप्रार्थ्यैवं करोमीति लब्धानुज्ञां शिवाद्गुरुः ७५
मंत्रितान्मूलमन्त्रेण व्याप्तिं कृत्वा स्थितिं शुभाम्
उष्णीषं शिरसि न्यस्त्वा शिवेनैक्यन्तु भावयेत् ७६
अथवान्यप्रकारेण पूर्ववत् द्वारकं यजेत्
प्राचीनन्दिमहाकाळौ याम्ये भृंगिविनायकौ ७७
वारुणे वृषभस्कन्दौ देवी चंडौ तदुत्तरे
इंद्राग्नियमकाञ्चैव निर्ऋतिं वरुणमेव च ७८
वायुं सोमन्तथैशानमनन्तञ्च पितामहम्
गणेशमनिले हाटं ईशाने तु गुरुं यजेत् ७९
अनेन देवतानाञ्च विनासर्वं समाचरेत्
लिंगञ्च प्रतिमायाञ्च परिवाराणां प्रतिष्ठितम् ८०
स्थापने प्रोक्षणे चैव पवित्रदमनेऽपिवा
उत्सवे शीतकुंभे च एवं सर्वं समाचरेत् ८१
द्वारपूजादिहीनञ्चेत् राजराष्ट्रं विनश्यति
तस्मात्सर्वप्रयत्नेन द्वारपूजासमायुतम् ८२

इति स्थापनक्रमपटल अष्टपञ्चाशत्तमः

लिंगस्थापनविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण लिंगस्थापनमुत्तमम्
धन्नघं शस्करञ्चायुवर्द्धनं पुत्रवृद्धिदम् १
भुक्तिदं मुक्तिदं सर्वदानयज्ञफलप्रदम्
अयने दक्षिणे नेष्टं प्रशस्तञ्चोत्तरायणे २
शुक्लपक्षे चतुर्त्थी च अष्टमी च चतुर्दशी
नवमी प्रतिपञ्चैव पञ्चतिथ्यशुभास्मृता ३
यमाश्लेषाग्निशूर्पाणि श्रविष्ठासार्प्पवारुणम्
ज्येष्ठा च त्रीणि पूर्वाणि नैर्ऋतञ्चैव वर्जयेत् ४

शेषास्तु तिथयोड्डूनि शुभाः स्थापनकर्मणि
राशिष्वपि धनुश्चैव चत्वारश्चरराशयः ५
अप्रशस्ता इति ख्याताश्शेषास्तु शुभदाः स्मृताः
सितसौम्यो गुरुर्विन्दु वारा श्रेष्ठतमा स्मृताः ६
अशुभा रविसौर्याराश्शुभयोगे शुभप्रदाः
रोहिण्यनिलसंयुक्तश्शनिवारस्तु शोभनः ७
पूषासावित्रसंयुक्तः सूर्यवारो वरस्मृतः
विश्वेदेवाश्विनी युक्तः कुजवारोवरस्मृतः ८
शुभानां होरकानांश्च द्रेक्काणविधिनाशुभाः
शुभानामुदयश्शस्तस्तत्र शश्युदयं विना ९
लग्नस्य नैधनस्थाने ग्रहान्सर्वांश्च वर्जयेत्
द्वादश्येकादशी चैव पञ्चमी च द्वितीयका १०
षष्ठ्यष्टमी च नवमी सूर्यादिभिः क्रमान्विता
दग्धवारा इति ज्ञेया स्थापनादिषु वर्जयेत् ११
पूषा च सप्तमी युक्तश्चाश्विनी च द्वितीयका
पुष्यवैष्णवसंयुक्तस्सितवारोत्तरेण तु १२
सौम्येन गुरुवारस्तु उत्तराषाढसंयुतः
सोमवारस्तु हस्तेन चाश्विनी बुधवारकः १३
दग्धवारा इति ज्ञेयाः स्थापनादिषु वर्जयेत्
एते त्वशोभनाः प्रोक्ताः कुर्यात्प्राणिविनाशनम् १४
पाप्पग्रहसमायुक्तां युक्तकांक्षितमन्तराम्
खण्डं स्थूणं व्यतीपातं विष्टिं करणसंक्रमम् १५
कण्टकं ब्रह्मदण्डञ्च उल्कापातञ्च विद्धकम्
ग्रहणं वेधनक्षत्रं शूलञ्च भूमिकंपकम् १६
द्ध्वजञ्चैव विशेषेण वर्जयेत्तु प्रयत्नतः
प्रतिष्ठां वर्जयेज्जीव भार्गवास्तमनेऽपि च १७

एवं परीक्ष्य बहुधा लिंगस्थापनमारभेत्
अंकुरार्पयेद्धीमान् पूर्वोक्तविधिना सह १८
यागार्थं मण्टपं कुर्याद्धर्म्याग्रे वाथ पार्श्वयोः
ज्येष्ठमण्टपविस्तारं द्वात्रिंशद्धस्तमुच्यते १९
अष्टाष्टस्तंभसंयुक्तं कलातालोच्छ्रयं भवेत्
तन्मण्डपस्य मद्ध्ये तु चतुस्तंभं विसर्जयेत् २०
पंक्तिद्वयकरैर्द्वारमद्ध्यमण्टपकस्य तु
षट्त्रिंशत्स्तंभसंयुक्तं धर्मतालसमुच्छ्रयम् २१
पूर्ववत्सन्त्यजेत् मद्ध्ये रविहस्तसुविस्तरम्
स्तंभैः ष्षोडशभिर्युक्तमुत्सेधञ्चाष्टतालकम् २२
कन्नयसं मण्टपं ज्ञेयं मण्टपन्तु त्रिधापवेत्
वेदिका मद्ध्यभागे त्वरत्निमात्रसमुच्छ्रिता २३
तदधश्चोपवेदिन्तु कल्पयेत्तु समावृतम्
युगांगुलप्रविस्तारमुत्सेधस्योक्तवर्द्धकम् २४
द्व्यंगुलं द्व्यंगुलाधिक्य मद्ध्यमस्योत्तमस्य तु
दर्पणोदरसंकाशं मृदा चष्टकया कुरु २५
कन्नयसत्रयलिंगानां मण्टपं कन्नयसं भवेत्
मद्ध्यमत्रयलिंगानां मण्टपं मद्ध्यमं भवेत् २६
उत्तमत्रयलिंगानां मण्टपं चोत्तमं भवेत्
कूटं वापि प्रपां वापि मण्टपं समलंकृतम् २७
वेदिकायास्तु परितः कुण्डानि च प्रकल्पयेत्
कुण्डकुट्टिमयोर्मद्ध्ये चान्तरन्तु द्विहस्तकम् २८
द्वात्रिंशत्कुण्डकान्नयत्र कुर्यादुत्तममण्टपे
चतुर्विंशतिकुण्डानि कुर्यान्मद्ध्यममण्टपे २९
कारयेन्नवकुण्डानि कन्नयसे मण्टपे क्रमात्
कुर्याच्चाश्वत्थपत्राभे चापगुणाश्रवर्त्तुळे ३०

भूताश्राब्जाष्टकाश्राणि कुराडानिंद्रादिषु क्रमात्
वृत्तं प्रधानकं मद्धये इंद्रकुराडेशकुराडयोः ३१
एवमभ्यन्तरे कुर्यात् बाह्ये सर्वं युगाश्रकम्
सर्वलन्नणसंयुक्तं पूर्वोक्तविधिना कुरु ३२
महादिन्नु चतुर्ष्वेषु सप्रवेशं सतोरणम्
अश्वत्थोदुंबरप्लन्नन्यग्रोधाः प्राक्दिशादिकाः ३३
नवानाञ्चैव लिंगानान्नवधा तोरणं कुरु
वितानाश्चादितञ्चाष्टदिग्ध्वजैरुपशोभितम् ३४
हेमशुक्लारुणारक्तकृष्णानीलसितारुणाः
एकहस्तविशालोच्चास्तदर्द्धशिखरान्विताः ३५
ध्वजायतसमायामं पुच्छत्रयसमन्विताम्
वज्रादिशूलपर्यन्तं द्धवजैश्चाष्टासु लेखयेत् ३६
ध्वजान्प्रागादिकान्प्रोक्तान् लंबयेत्तु प्रदन्निणम्
रंभाम्रनाळिकेराणां फलैस्तु क्रमुकस्य च ३७
चूतप्रवाळतांबूललताभिश्च विभूषयेत्
मुक्तासृग्दामभिश्चैव दर्भमालाभिरावृतम् ३८
गात्रवेष्टनसंयुक्तं पूर्णकुंभैरलंकृतम्
अष्टमंगळसंयुक्तन्नानादीपैस्समायुतम् ३९
तरंगेण समायुक्तं मराटपञ्च विभूषयेत्
तस्यैव सौम्यदिक्भागे लन्नणोद्धारणाय च ४०
मराटपं कारयेद्धीमान् मराटपार्द्धसुविस्तृतम्
तन्मद्धये वेदिकां कुर्याल्लिंगायामप्रमाणतः ४१
रव्यंगुलसमुत्सेधं दर्पणोदरसन्निभम्
तस्याः पश्चिमभागे तु स्नानश्वभ्रं प्रकल्पयेत् ४२
लिंगानुरूपं कर्त्तव्यन्दारुपीठं सलन्नम्
सौम्ये तु जलमार्गस्यादवटेनसमन्वितम् ४३

देशिकस्तन्नकैस्सार्द्धं विशेत्कर्मकुटीन्ततः
वस्त्रहेमांगुलीयैश्च देशिकं तन्नकं यजेत् ४४
शाणाभिकर्षणं कृत्वा लिंगञ्च विण्डिकान्ततः
अष्टमृत्सलिलेनैव स्नापयेत् गन्धतोयकैः ४५
लिंगञ्च पिण्डिकाञ्चैव वस्त्रकाशैश्च वेष्टयेत्
स्यन्दने तु समारोप्य नयेदुत्तरमण्टपे ४६
वेद्यूर्द्ध्वे स्थण्डिलं कुर्याच्छाल्यष्टद्रोणकैस्सुधीः
अलंकुर्यात्स्थण्डिलञ्च लाजपुष्पतिलैः कुशैः ४७
स्थण्डिलं पूजयेत्पश्चात् गन्धपुष्पादिभिर्हृदा
लिंगन्तु शाययेत्तस्मिन् प्राक्शिरस्कं सपीठकम् ४८
रक्तवस्त्रेण संवेष्टय गन्धपुष्पादिभिर्यजेत्
वेद्याश्चोत्तरभागे तु स्थण्डिले होममाचरेत् ४९
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
पलाशसमिधस्सद्यमन्त्रेण जुहुयात्ततः ५०
आज्यमूलेन हुत्वा तु देवस्य त्वाचरुं हुनेत्
शतमर्द्धन्तदर्द्धं वा द्रव्यान्ते व्याहृतिं हुनेत् ५१
ब्रह्मजज्ञानमन्त्रेण घृतेन जुहुयाच्छतम्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्ने हुनेत्ततः ५२
कौतुकं हृदयेनैव रुद्रभागे तु बन्धयेत्
प्रभाते सुमुहूर्त्ते तु लक्षणोद्धारमारभेत् ५३
रुद्रभागसमायामं षण्णवत्यंशकं भजेत्
अंगुलन्तेषु भागैकमुत्तमोत्तमकस्य तु ५४
सूत्रकस्य तु विस्तारं पञ्चांगुलमिति स्मृतम्
ह्रासयेदर्द्धमर्द्धन्तु अंगुलान्तं क्रमेण तु ५५
अष्टानाञ्चैव लिंगानां सूत्रविस्तारमुच्यते
तन्मानं कारयेद्धीमान्यासं सूत्रस्य चावधि ५६

मस्तके मद्धयमं ज्ञात्वा हेमसूचिन्तु विन्नयसेत्
भ्रामयेत् मस्तकान्तन्तु तस्यैव शिरसि क्रमात् ५७
मस्तके च महाशासु गैरिकेणांकयेत्क्रमात्
अ्रजभागस्य तारस्य मद्धयमं त्वंकयेत्तथा ५८
तन्मस्तकं समारभ्य मस्तके मद्धयमान्तकम्
गैरिकात्तेन सूत्रेण स्थालयेन्मद्धयमं दृढम् ५९
वस्वश्रम्मद्धयमं ज्ञात्वा गैरिकात्तेन तन्तुना
सूत्रमास्फालयेद्धीमानष्टादशांगुलान्तकम् ६०
ज्ञात्वापतनपार्श्वन्तु नाळन्तन्मद्धयमे कुरु
गुणांगुलन्तु तत्तारन्नाळस्यैव द्विपार्श्वयोः ६१
तस्य सीमावधेश्चैव ध्रुवसूत्रे समालिखेत्
रुद्रांशोच्चं त्रिधाकृत्वा ऊद्ध्र्वभागेंशकन्नयजेत् ६२
पद्मांशन्दशधाभज्य व्योमांशम्मुकुळं भवेत्
विस्तारन्तत्समं ज्ञेय मंगुलद्वयसंयुतम् ६३
क्रमेण कुशमार्गेण तस्याग्रेणैव बन्धयेत्
नाळायामन्तु वस्वंशं मुकुळस्य तु मूलतः ६४
तस्मात्तेनैव मानेन मणिरेकात्तु वर्त्तयेत्
तयोस्संगमनं पृष्ठे कारयेत्तु क्रमेण तु ६५
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं श्रुणु
रुद्रांशं भज्यरव्यंशमूद्ध्र्वे गुणांशकन्नयजेत् ६६
एकभागेन मुकुळं मद्धयांशन्नाळमुच्यते
पार्श्वसूत्रद्वयौ कार्यौ प्रागुक्तविधिना कुरु ६७
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं श्रुणु
रुद्रांशन्नवधाभज्य ऊद्ध्र्वे भागद्वयन्त्यजेत् ६८
अ्रंशमेकमधस्त्यक्त्वा मुकुळञ्चैव भागतः
पञ्चांशेनैव नाळन्तु शेषं पूर्वोक्तवद्भवेत् ६९

तृतीयं लक्षणं प्रोक्तञ्चतुर्थं लक्षणं श्रुणु
कालांशं भद्ररुद्रांशमूर्द्ध्वे वेदांशकन्त्यजेत्  ७०
पक्षभागमधस्त्यक्त्वा मुकुळञ्चैकभागतः
रन्ध्रांशन्नाळमित्युक्तं शेषं पूर्वोक्तवद्भवेत्  ७१
मुकुळं वागजाक्षं वा लिङ्गाकारमथापि वा
पद्माभं वापि कर्त्तव्यं शूलाकारमथापि वा  ७२
अन्नयकार्याणि सर्वाणि मुकुळस्योक्तमार्गतः
नाळं सदाशिवं ज्ञेयं सर्वसूत्रमजाधिपम्  ७३
वैष्णवं वामसूत्रन्तु त्रिसूत्राणान्तु देवताः
त्रियंबकेन मन्त्रेण नाळसूत्रद्वयं लिखेत्  ७४
ब्रह्मजज्ञानमन्त्रेण ब्रह्मसूत्रन्तु लेखयेत्
विष्णुसूक्तमिदं विष्णुरिति मन्त्रेण लेखयेत्  ७५
मधुवाता ऋतायेति मधुना तर्पयेत्ततः
घृतं मिमिक्षुमन्त्रेण तर्पयेत्तु घृतेन तु  ७६
स्नानश्वभ्रे नयेल्लिंगन्दारुपीठोपरिन्यसेत्
कौशेयोपरिविन्यस्य ततः स्नानं समारभेत्  ७७
सर्वातोद्य समायुक्तं नृत्तगेयसमाकुलम्
स्नापयेत्पञ्चगव्यैश्च पवमानमुदीरयेत्  ७८
अष्टमृत्सलिलेनैव यवगोधूमसर्षपैः
रात्रिचूर्णं शकृच्चूर्णं भस्मतद्युक्ततोयकैः  ७९
स्नापयेत्तु विशेषेण शुद्धैरुद्धैरिति ब्रुवन्
पाद्यमाचमनञ्चार्घ्यं वक्त्रमन्त्रेण दापयेत्  ८०
गन्धपुष्पादिभिः पूज्य हृदयेन तु मन्त्रतः
पुण्याहं वाचयेत्तत्र रक्तवस्त्रेण वेष्टयेत्  ८१
अधिवासनपूर्वे तु पञ्चाहेति यहेऽपि वा
द्विरात्रञ्चैकरात्रं वा वेदायाममथापि वा  ८२

जलाधिवासनं कुर्याज्ञलपूर्वप्रपां कुरु
जलादुत्तीर्य कलशान्पूर्वोक्तमराटपन्नयेत् ८३
भूसुरान्भोजयेत्तत्र मराटपे तु विशेषतः
मराटपम्मार्जनं कृत्वा कारयेत्तु क्रमेण तु ८४
समरीय पदैश्चैव प्रागुक्तविधिना सह
प्रासादे मराटपे चैव वास्तुहोमन्तु कारयेत् ८५
ग्राषाढपत्रदर्भैश्च पर्यग्निन्तेन वह्निना
मराटपञ्च विमानञ्च कारयेत्तु क्रमेण तु ८६
गन्धतोयेन संप्रोन्द्य पुरायाहं वाचयेत्ततः
स्थरिडलं वेदिकोद्धर्वे तु कृत्वा द्रोणाष्टशालिभिः ८७
तदर्द्धतराडुलोपेतन्तराडुलार्द्धतिलान्वितम्
ग्रालिख्यनळिनन्तत्र सकर्णिकदळाष्टकम् ८८
परिस्तीर्य ततोदर्भैः फलैर्लाजैस्सुपुष्पकैः
तन्मद्धयमे समभ्यच्चर्य गन्धपुष्पादिभिर्हृदा ८९
पञ्चभिः शयनं कुर्याच्चर्मजाद्यैरनुक्रमात्
चर्मजं रोमजञ्चैव कराडजम्मुराडजन्तथा ९०
वामजञ्चैव पञ्चैते शयनं पञ्चकीर्तिताः
कलाभेकंबळैः पञ्च शयनन्तदलाभके ९१
कल्पयेत्पञ्चवस्त्रेण उपधानसमन्वितम्
शंखदुन्दुभिनादैश्च स्वस्तिसूक्तोच्च नादकैः ९२
गेयनृत्तसमायुक्तं सर्वालंकारसंयुतम्
स्नानवेद्यास्समुत्सृष्ट्य जलाशयं प्रकल्पयेत् ९३
विधिवज्ञलाशयं कृत्वा स्नानवेद्युपरिन्नयसेत्
स्नानं च विधिना कुर्यात्सर्वालंकारसंयुतम् ९४
स्नानवेद्यास्समुद्धृत्य वेद्यां लिंगन्नयेत्ततः
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु ९५

सौवर्णं राजतं वापि क्षौमं कार्पासकन्तु वा
रक्षासूत्रन्तु विन्नयस्य पात्रे तु तराडुलोपरि ९६
आलयन्तु परिभ्राम्य पूजयेत् गन्धपुष्पकैः
पुरायाहं वाचयित्वा तु सर्वातोद्यसमायुतम् ९७
दत्वा सर्वजनानान्तु तांबूलन्तु विशेषतः
संप्रोक्ष्य विधिना सूत्रं सुमुहूर्ते सुलग्नके ९८
रुद्रांशे कौतुकं बद्ध्वा ईशाने न तु मन्त्रतः
प्राक्शिरस्कमधस्सूत्रं शयने शाययेद्धृदा ९९
मुकुळीं पद्ममुद्राञ्च सुरभीन्ताळमिद्रिकाम्
लिंगाख्यं पञ्चवक्त्रञ्च दर्शयेद्धृदयेन तु १००
रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पादिभिर्यजेत्
पिराडकान्नन्दिकावर्त्त शिलाः कूर्मशिलास्तथा १०१
लिंगमूले तु विन्नयस्य पीतवस्त्रैश्च वेष्टयेत्
गन्धपुष्पादिभिः पूज्य शक्तिबीजमनुस्मरन् १०२
शिलायाः पिराडकालाभे इष्टिकावाधिवासयेत्
सर्वलक्षणसंयुक्तास्त्रीलिंगाश्चष्टकेष्टका १०३
द्रोणतोयेन संपूर्णान्निष्कलंकान्घनस्वनान्
सुपक्वान्दोषरहितान्पक्वबिंबफलप्रभान् १०४
संप्रक्षाळ्याथ कुंभांश्च त्रिसूत्रेणैव वेष्टयेत्
विधानानिहसर्वाणि चित्राकारादिवस्त्रयुक् १०५
पूरितं स्यात् चतुर्विंशत्प्रस्थैरपिसुगन्धरकैः
शिवकुंभमिति प्रोक्तं द्रोणोदैः परिपूरितम् १०६
वर्द्धनी तत्र विख्याता सर्वलक्षणसंयुता
वस्त्रपूतेन तोयेन सर्वगन्धान्वितेन तु १०७
संपूर्यवस्त्रयुग्मेन समावेष्ट्यपृथक्पृथक्
लिंगस्यैवशिरोभागे कल्पयेदासनन्ततः १०८

द्रोणतोयेन संपूर्णान्निष्कळंकघनस्वनान्
सुपक्वान्दोषरहितान्पक्वबिंबफलप्रभान् १०९
संप्रक्षाळ्य तु कुंभांश्च त्रिसूत्रेण च वेष्टयेत्
विधिनाद्रि सहस्राणि चित्रिकाकारचित्रयुक् ११०
गन्धादिभिस्समभ्यर्च्य शिवकुंभन्तु विन्यसेत्
पञ्चरत्नं क्षिपेत्तत्र न्यसेदुत्तमकूर्चकम् १११
शिवकुंभस्य मद्ध्ये तु शिवमन्त्रन्तु विन्यसेत्
ध्यात्वा सदाशिवं रूपं पूर्वोक्तविधिना सह ११२
सद्यमन्त्रेण चावाह्य स्वागतं हृदयेन तु
स्थापयेद्वामदेवेन अघोरेण निरोधनम् ११३
ईशानेन तु सान्निद्ध्यं पुरुषेण तु संमुखम्
पाद्यमाचमनञ्चार्घ्यं शिरोमन्त्रेण दापयेत् ११४
गन्धं पुष्पञ्च धूपञ्च दीपन्नैवेद्यमेव च
हृदयेनैव दत्वा तु तांबूलन्दापयेत्ततः ११५
दर्शयेद्दशमुद्राञ्च लिंगमुद्रान्तथैव च
पञ्चवक्त्रीं प्रदर्श्याथ विधानेन विधाय च ११६
कस्त्रेणैव तु मन्त्रेण दिग्बन्धनन्ततः कुरु
तस्यैव वामभागे तु वर्द्धनीञ्चैव विन्यसेत् ११७
वर्द्धनीं मद्ध्यमे न्यस्त्वा हाटकेन सरोरुहम्
निक्षिप्य मद्ध्यमं कूर्चं मनोन्मन्यास्तु मन्त्रकम् ११८
वर्द्धनीं मद्ध्यमे न्यस्त्वा ध्यात्वा तद्रूपकं व्रजेत्
अब्जमुद्रां प्रदर्श्याथ सुरभीताळमुद्रिकाम् ११९
विधाय च विधानेन दिग्बन्धनञ्चरंस्ततः
अभितस्तु घटानष्टौ स्थापयेदष्टदिक्षु च १२०
इंद्रादीशानपर्यन्तमष्टविद्येश्वरान्न्यसेत्
निक्षिपेत्कन्न्यसं कूर्चं तेषाञ्चैवायुधानि च १२१

शातकुंभेन कृत्वा तु कुंभमद्ध्ये विनिक्षिपेत्
तत्तत्बीजस्य सित्वा तु द्ध्यात्वा पूर्वोक्तवत्सुधीः १२२
गंधादिभिर्यजेत्पश्चात् नैवेद्यान्तं क्रमाद्बुदा
अष्टविद्येश्वरान्सर्वान् शिवकुंभञ्च वर्द्धनीम् १२३
तल्लिङ्गाभिमुखाश्चैव स्थापयेत्स्थापकोत्तमः
अष्टमं गलरूपाणि उपवेद्युपरिन्यसेत् १२४
द्वारपूजादिसर्वांश्च यागमण्टपवद्बुधः
पूर्वोक्तलक्षणोपेतमादिशैवन्तु देशिकम् १२५
पञ्चाङ्गभूषणैर्वस्त्रैरङ्गुलीयैश्च भूषयेत्
गंधैः पुष्पैश्च विविधैर्हेमयज्ञेन संयुत १२६
प्रागुक्तलक्षणोपेतान्मूर्तिपान्भूषयेत्ततः
वस्त्रहेमांगुलीयैश्च गंधपुष्पादिभिर्युतम् १२७
तांबूलं दापयेत्पश्चात् मूर्तिपानां गुरोस्तथा
आचार्यायाभ्यनुज्ञाय सर्वकर्मसमारभेत् १२८
होमारंभस्य पूर्वे तु स्रुक्स्रुवौ चेन्धनेन तु
परिधींश्चैव दर्भांश्च समिदाज्य चरूंस्तथा १२९
होमद्रव्याणि सर्वाणि गंधपुष्पाणि धूपकम्
दीपं वै द्रव्यपाकानि विहष्यञ्च कमण्डलम् १३०
वर्द्धनीमक्षतं दर्वीं संप्राप्तं हेमसाधनम्
आहृत्य होमसंभारानेवं कुण्डं प्रतिक्रमात् १३१
आचार्यो मूर्तिपैस्सार्द्धं पश्चाद्धोमं समाचरेत्
प्रधाने देशिकः प्रोक्तस्त्वन्यकुंडेषु मूर्तिपा १३२
सर्वे वै मूर्तिपास्तत्र मूर्तिस्तद्भावसंयुताः
भवश्चोग्रश्च शर्वश्च महादेवश्च रुद्रकः १३३
भीमः पशुपतिश्चैव ईशानश्चाष्टमूर्तयः
इंद्रादीशानपर्यन्तं स्वस्वमन्त्रैर्विशेषतः १३४

संयजेयुः क्रमान्मूर्तीन्कुंडानाञ्चैव दक्षिणे
सदाशिवं प्रधाने तु यजेत्कुंडस्य दक्षिणे १३५
इंद्रादिलोकपालांश्च बाह्ये तत्तद्दिशासु च
कोणपार्श्वद्वयोश्चैव वसून्प्रागादिविन्नयसेत् १३६
मरुतश्चैव चक्रादि शेषेष्वायतनेषु च
मरुतश्च विना कुर्यान्मद्धयमे होमकर्मणि १३७
वसूंश्चैव च दिक्पालान्कन्नयसे होममाचरेत्
अग्न्याधानादिकं सर्वमाज्यभागान्तकं पृथक् १३८
होमं प्रतिविशेषेण अग्निकार्योक्तमाचरेत्
ऋग्वेदाद्धययनं पूर्वे यजुर्वेदन्तु याम्यके १३९
पश्चिमे सामवेदन्तु अथर्वञ्चोत्तरे तथा
देवताभिमुखास्सर्वे वर्द्धनी कूर्चतोययुक् १४०
कोणे मन्त्रजपं कुर्यात् मूलमन्त्रान्विशेषतः
समिदाज्य चरूंल्लाजान्माषमुद्गयवांस्तिलान् १४१
शालिगोधूमनीवारान्सक्तून्सिद्धार्त्थकं दधि
क्षीरं क्रमेण विधिवत् जुहुयुर्वै पृथक्पृथक् १४२
पलाशाश्चैव शुक्लार्कश्चाश्वत्थोदुंबरौ तथा
प्लक्षखादिरबिल्वाश्च शमी वै प्रथमावृतौ १४३
इंद्रादीशानपर्यन्तं क्रमशस्समिधस्मृताः
प्रधानाग्नौ पलाशन्तु आषाढोवाप्युदुंबरः १४४
सर्वेषां बाह्यकुंडानां समिधः संप्रकीर्तिताः
सद्येन समिधो हुत्वा मूलेनाज्यन्तु होमयेत् १४५
आघोरेण चरुं हुत्वा लाजं तत्पुषेण तु
मुद्गं हृदयमन्त्रेण माषं शिरसाहुनेत् १४६
यवं नेत्रेण हुत्वा तु तिलं वामेन होमयेत्
शालिमीशानमन्त्रेण गोधूमञ्चाष्टमंस्मृतम् १४७

शिखामन्त्रेण नीवारं कवचेनैव सक्तुकम्
पाशुपतेन सिद्धार्थं बीजमुख्ये हुनेद्दधि १४८
दशाक्षरेण मन्त्रेण दुग्धन्तु जुहुयात्ततः
अष्टाधित्रिशतं द्रव्यं उत्तमञ्च क्रमाद्धुनेत् १४९
द्विशताष्टाहुतिर्मद्ध्यमष्टोत्तरशताधमम्
व्याहृत्याहुतिकं कार्यं प्रतिद्रव्यं पुनःपुनः १५०
ततः स्पर्शाहुतिं कुर्यात् लिंगद्रव्यं प्रतिप्रति
स्पृष्ट्वास्पृष्ट्वा तु तन्मन्त्रैर्देशिको मूर्तिपैस्सह १५१
ब्रह्मजज्ञानमंत्रेण हुत्वा ब्रह्मशिलांस्पृशेत्
मनोन्मन्यास्तु मंत्रेण हुत्वा तां पिंडिकां स्पृशेत् १५२
प्रत्येकं षोडशं हुत्वा व्याहृतिं जुहुयात्ततः
होमारंभस्य पश्चात्तु पूर्णाहुत्यास्तु पूर्वतः १५३
आसने स्थापने क्रोधे क्षुधे निष्ठीवने क्रमे
वायुचारे भयोत्पन्ने भाषिणे चाप्य दीक्षितैः १५४
श्लेष्मोद्गारे च सन्तापे क्रिया विस्मृतिसंभवे
मंत्रोक्ते मंत्रकार्ये तु व्याहृत्याहुतिमाचरेत् १५५
नृत्तगेय समायुक्तं रात्रिशेषं व्यपोह्य च
एकरात्रं द्विरात्रं वा त्रिरात्रं वाधिवासयेत् १५६
ततः प्रभाते विमले आचार्यो मूर्तिपैस्सह
कृत्वा स्नानत्रयं पश्चात्सकली करणं कुरु १५७
लिंगन्तु शयने पूज्य कुंभस्थामूर्तिकान्न्यसेत्
कुंभस्थदेवतानान्तु नैवेद्यं दापयेत्ततः १५८
कुंडं प्रतिविशेषेण गंधपुष्पादिभिर्यजेत्
आचार्यः शिल्पिनासार्द्धं प्रविशेत् गर्भगेहकम् १५९
पूर्वपश्चिममार्गेण मत्स्यसूत्रन्तु पादयोः
दक्षिणोत्तरमार्गेण सूत्रं कुर्यात्तु मद्ध्यमे १६०

पूर्वपश्चिममार्गेण पुरस्तात्परपूर्वकम्
याम्यं सौम्यं तथा चैव द्वात्रिंशत्सप्तधा भजेत् १६१
मद्ध्यभागं त्रिधाभज्य पद्मांशं दक्षिणं त्यजेत्
एकांशमुत्तरे त्यक्त्वा मद्ध्यसूत्रन्तु पातयेत् १६२
शिवसूत्रं तथाख्यातं तन्मद्ध्ये स्थापयेच्छिवम्
अन्यथास्थापयेल्लिंगं स्थाननाशं धनक्षयम् १६३
तन्मद्ध्ये स्थापितं लिंगं सर्वन्दोषापहारकम्
शालिपिष्टोक्तसूत्रेण गैरिकाक्तेन वा पुनः १६४
सुत्रमास्फालयेद्धीमान्स्थले भित्तौ क्रमेण तु
भित्त्यभावे महाशासु यष्टिन्तु स्थापयेत्ततः १६५
शिवसूत्रं महाशासु तन्तुनोद्ध्वं प्रकल्पयेत्
पिण्डकायास्तु ताराद्धं शिवसूत्रस्य मद्ध्यमात् १६६
अंकयेत्तु महाशासु सूत्रपातन्तु कारयेत्
यदुक्तं कूर्मशैलस्य प्रवेशानान्तु भागकम् १६७
तत्समं कारयेद्वृत्तं विस्तारं पीठविस्तरम्
गर्तं समतलं कृत्वा घनीकृत्वाष्टपादकः १६८
आयाभिस्समतां कृत्वा वस्त्रैरेव तु शोधयेत्
गर्त्तं यष्ट्यंघ्रिशैलन्तु शक्तिबीजेन विन्यसेत् १६९
मद्ध्यमं शिवसुत्रात्तु लंबयित्वा विदुः क्रमात्
कारयेत्प्रतिलिंगन्तु याज्ञिकैर्वृक्षकैस्तथा १७०
उपपीठन्तथा कृत्वा श्वभ्रमद्ध्ये तु विन्यसेत्
प्रतिलिंगन्तु संस्थाप्य सुस्थितं दुस्थितं विदुः १७१
पिण्डकां प्रतिलिंगञ्च यष्टिसूत्राणि सन्त्यजेत्
कूर्मशैले वटान् शोद्ध्य प्रोक्षयेत्पुरुषेण तु १७२
चन्दनेनानुलिप्याथो रत्नानि विविधान्न्यसेत्
वज्रं मरतकंपुष्यरागन्नीलं प्रवाळकम् १७३

मौक्तिकञ्चैव वैडूर्यं स्फटिकञ्च महामणीन्
इंद्रादिमद्ध्यपर्यन्तं विन्यसेन्मूलविद्यया १७४
सुवर्णं रजतं तांम्रमायसं त्रपुसीसकम्
आरकूटञ्च विपुलं देवलोहं क्रमात्तथा १७५
हरितालत्रयञ्चैव गंधकं धरदाञ्जनम्
सौराष्ट्रं गैरिकञ्चैव माक्षिकं पूर्ववन्न्यसेत् १७६
यवगोधूमनीवारशालिवैणवकानि च
प्रियंगुतिलमुद्गानि निष्पावञ्च क्रमात्तथा १७७
चन्दनं कुंकुमञ्चैव लोहं पत्रपलत्रयम्
कर्पूरमुशिरञ्चैव पूर्ववद्विन्यसेत्ततः १७८
वैणवं वज्रपाणिञ्च वृषभध्वजमेव च
लक्ष्मीञ्च सहदेवीञ्च शंखपुष्पं सुवर्चलाम् १७९
दूर्वाञ्चतुर्मुखञ्चैव विन्न्यसेद्देशिकोत्तमः
पृथिवीं शातकुंभेन समुद्रराजतेन तु १८०
तांम्रेण वृषभं कृत्वा तोमरञ्चामरं गजम्
श्रीवत्सं कलशं भेरीन्दर्पणं पद्मपुष्पकम् १८१
महामेरुं सुवर्णेन कृत्वा रंध्रे पटे न्यसेत्
दक्षिणे मद्ध्यमे सौम्ये त्ववटेषु क्रमान्न्यसेत् १८२
मुकुळीपद्ममुद्राञ्च शोधनीञ्च प्रदर्शयेत्
पूजयित्वा तु रत्नानि गन्धपुष्पादिभिर्हृदा १८३
पायसेन तु लिप्याथ सद्यं ब्रह्मशिलापटम्
आसनं कल्पयेत्पञ्च तस्य मद्ध्ये क्रमेण तु १८४
गंधपुष्पादिभिः पूज्य वस्त्रेणावेष्ट्य सर्वतः
आचार्यो मूर्तिपैस्सार्द्धं विधिनास्नानमाचरेत् १८५
शुक्लवस्त्रमथोष्णीषं वसनञ्चोत्तरीयकम्
हेमपुष्पांगुलीयाश्च यज्ञसूत्रत्रयाणि वै १८६

पञ्चांगभूषणैर्ह्येवं गन्धपुष्पानुलेपनम्
आचार्याय प्रदातव्यं मद्ध्ये कृञ्चैव मूर्तिपान् १८७
मन्त्रजपाश्च वस्त्रैश्च मेहांगुलीयकैर्यजेत्
पर्यष्टिपरिचारांश्च पूजयेत्तु यथार्हकम् १८८
संपूज्य देशिकादीनां दक्षिणान्दापयेत्ततः
उत्तमं स्याच्चतुषष्टिर्निष्कादेशिकदक्षिणा १८९
पञ्चाशन्मद्ध्यमा ज्ञेया त्रिंशन्निष्कन्तु कन्यसम्
भृत्यगोभूमिधान्यानि गृहोपकरणानि च १९०
आचार्याय प्र---व्यं श्रद्धाभक्तिसमन्वितः
यजमानो गुरुन्तोष्य वित्तशाठ्यविवर्जितः १९१
देशिकस्य मनस्तुष्टिर्देवतानान्तु सन्निधिः
देशिकन्तोषयेत्तस्मात्सन्निधीकरणाय च १९२
होतृणां मन्त्रजप्तृणामद्ध्ये तृणाञ्च दक्षिणा
उत्तमं नवनिष्कं च सर्वेषान्तु विधीयते १९३
निष्काष्टमं मद्ध्यमं स्यात् निष्कषष्ठन्तु कन्नयसम्
एतेषु दक्षिणैकस्स्यादेतत् द्विगुणदक्षिणा १९४
वास्तुहोमककर्तुश्च दैवज्ञस्य तथैव हि
मुहूर्तान्प्राप्तकाले तु सर्वातोद्य समन्वितम् १९५
शंखदुन्दुभिनादैश्च गीतनृत्तसमायुतम्
ब्रह्मघोषसमायुक्तं नानाभक्तिसमन्वितम् १९६
छत्रध्वजवितानैश्च धूपदीपैश्च संयुतम्
वर्द्धन्यस्त्रावसहितं मंगळांकुरसंयुतम् १९७
उद्धृत्य शयनाल्लिंगं वस्त्रादीनि व्यपोह्य च
घृतं शिरोर्पणं कुर्याद्धेमदूर्वांकुराक्षतैः १९८
रथे वा शिबिकायां वा रज्जुयन्त्रेण वा पुनः
उत्कालंकारसः युक्तं कृत्वा धामप्रदक्षिणम् १९९

पृष्ठतो यजमानस्तु पुत्रभ्रातृसमन्वितः
आचार्यस्त्वग्रतोगच्छेदर्घ्यहस्तसमाहितः २००
विश्रांम्य द्वारदेशे तु अर्घ्यं दत्वाविशेत् गृहम्
कलन्निरीक्ष्य दैवज्ञो गुरवे सन्निवेदयेत् २०१
आचार्यो मूर्तिपैस्सार्द्धं लिंगस्थापनमारभेत्
पुरुहूतेन संस्थाप्य लिंगन्तु द्वारसंमुखम् २०२
दुस्थिते स्फुटिते वक्त्रे स्थापितन्तु न चालयेत्
एवमादीनि सम्भूते निष्कृतिञ्च समाचरेत् २०३
अष्टोत्तरशतं हुत्वा शिवाग्नौ शिवमन्त्रतः
अथ ब्रह्मषडंगैश्च प्रत्येकन्तु शताहुतिः २०४
नन्द्यावर्त्तशिलां योज्य पूर्वोक्तविधिना सह
वालुकाभिस्समापूर्य सुस्निग्धं सुदृढं क्रमात् २०५
मानोन्मन्यास्तु मन्त्रेण पिण्डिकाञ्च समुद्धरेत्
उक्तालंकारसंयुक्तं कृत्वा धामप्रदक्षिणम् २०६
द्वारदेशं समानीय दत्वार्घ्यं शिरसा पुनः
शनैर्लिङ्गं समायोज्य शक्तिबीजं समुच्चरन् २०७
पिण्डिकां चैव लिंगोद्ध्वं वेशयेत्तु शनैश्शनैः
सुसमं सुदृढं कृत्वा वालुकाभिः सुपूरयेत् २०८
अष्टबन्धन्तु विधिना कारयेत्सुदृढं क्रमात्
शुद्धिं कृत्वा यथान्न्यायं पवमानमुदीरयन् २०९
गन्धपुष्पादिभिश्चैव लिंगं संपूजयेद्धृदा
आचार्यो दक्षिणं हस्तं लिंगमूर्ध्निनिधाय च २१०
दशाक्षरं जपित्वा तु पञ्चविंशतिसंख्यया
अष्टत्रिंशत्कलान्न्यासं मकुटादिक्रमान्न्यसेत् २११
शिवांगानि ततो न्न्यस्त्वा दिग्बन्धञ्चास्त्रमन्त्रतः
कृत्वा तु पद्ममुद्राञ्च लिंगाख्यं पञ्चमुद्रिकाम् २१२

शोधनीं सुरभीमुद्रां दर्शयेद्धृदयेन तु
षडद्धवने न्नयसेत्पीठे पद्ममुद्रां प्रदर्शयेत् २१३
वह्निं प्रज्वाल्य कुण्डस्थं कृत्वा तु परिषेचनम्
जयादिरभ्यधानञ्च हुनेद्राष्ट्रभृतं क्रमात् २१४
पूर्णाहुतिञ्च शिरसा स्विष्टमग्निऋचाहुनेत्
समाप्य होमशेषन्तु पूर्वोक्तविधिना सह २१५
प्रधानकुंभमाचार्यो मूर्त्तिपास्त्वन्नयकुंभकान्
उद्धृत्यशिरसा धृत्वा कृत्वाधामप्रदक्षिणम् २१६
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम्
स्थण्डिलोपरिलिंगाग्रे स्थापयेयुः क्रमात् घटान् २१७
ध्यात्वा सदाशिवं रूपं सर्वज्ञंकारणेश्वरम्
संस्थाप्य वामदेवेन ग्रघोरेण निरोधयेत् २१८
पुरुषेणैव सान्निद्धयमीशानेन तु संमुखम्
ध्यात्वा मनोन्मनीं देवीं पिण्डिकायां विशेषतः २१९
सुमुहूर्त्ते सुलग्ने तु मंत्रे न्यासं समारभेत्
ग्राचार्यस्सुप्रसन्नात्मा लिंगस्य दक्षिणे स्थितः २२०
प्राणप्रकृतियोगन्तु ज्ञात्वा स्थापनमारभेत्
प्राणो मंत्र इति प्रोक्तः प्रकृतिः स्थाप्य उच्यते २२१
कुंभात् बीजं समादाय कूर्चेनाभियुतं सुधीः
दक्षिणेनैव हस्तेन ग्रस्त्रावब्बिन्दुकेन तु २२२
ध्यानेनैव समायुक्तं सदामंत्रमनुस्मरन्
लिंगस्यैव तु मद्धये तु विन्नयसेत्तु विशेषतः २२३
मस्तके चैव तन्मूले न्नयस्त्वा संपूजयेत्ततः
कुंभाद्भिस्तु विशेषेण स्नापयेत्परमेश्वरम् २२४
वर्द्धन्नयाश्च मनोन्मन्नया बीजमादाय पूर्ववत्
लिंगस्य वामभागे तु पिण्डिकायाञ्च विन्नयसेत् २२५

वर्द्धनी तोयकैश्चैव पिण्डिकामभिषेचयेत्
विद्येशबीजं विन्नयस्य इंद्राद्यैशानकक्रमात्  २२६
तत्तत्कुंभजलैश्चैव तत्तत्स्थानेऽभिषेचयेत्
पूजयित्वा यथान्नयं पञ्चमावरणान्वितम्  २२७
क्रमेण पञ्चवक्त्रेषु हविषं पञ्चवर्णकम्
देवस्य त्वेतिमंत्रेण हृदयेनैव दापयेत्  २२८
वक्त्रेणाचमनन्दत्वा निर्माल्यन्तु विसर्जयेत्
तांबूलन्दापयेत्पश्चान्मुखवाससमन्वितम्  २२९
नानापक्वफलद्रव्यं देवदेवाय दापयेत्
चण्डेशं पूजयित्वा तु निर्माल्यन्तु निवेदयेत्  २३०
स्नपनं कारयेत्पश्चाद्यथा वित्तानुसारतः
पूजयित्वा यथान्नयायं पञ्चमावरणैस्सह  २३१
प्रभूतञ्च हविर्दत्वा तांबूलञ्च प्रदापयेत्
नन्द्यादिबलिपीठान्तं बलिन्दद्यात्क्रमेण तु  २३२
अञ्जनञ्च हरिद्राञ्च सर्षपञ्च मनश्शिलाम्
गोरोचनं घृतेनैव सप्ताहं लेपयेत्ततः  २३३
प्रतिष्ठोत्सवन्तु कर्तव्यं यावत्सप्तदिनान्तकम्
तल्लिंगे पूजिते राष्ट्रं सुभिक्षं रोगनाशनम्  २३४
आयुरारोग्यवद्राजा सार्वभौमत्वमाप्नुयात्
एवं यः कुरुते मर्त्यस्सर्वपापात्प्रमुच्यते  २३५
मोक्षार्थी लभते मोक्षं पुत्रार्त्थी लभते सुतम्
अर्त्थार्त्थी चार्त्थमाप्नोति ज्ञानार्त्थी ज्ञानमाप्नुयात्  २३६
उहैव पुत्रवान् श्रीमान्सोन्तेसायुज्यमाप्नुयात्
इति लिंगस्थापनविधिपटल एकोनषष्टितमः  २३७

परिवारस्थापनविधिपटलप्रारंभः

स्थापनं परिवाराणां वद्त्ये लद्दाणपूर्वकम्
परितो हर्म्यबाह्ये तु परिवाराणि कल्पयेत् १
अन्तर्मराडलके कुर्यादैशे चराडेश्वरालयम्
श्रीकराख्यविमाने तु चराडेशं स्थापयेद्बुधः २
प्राकारे तु द्वितीये तु परिवाराष्टकल्पयेत्
प्राकारभित्तिसंयुक्तं चान्तराळाश्रितन्तु वा ३
स्थापयेत्परिवाराणि आलयैश्च समन्वितम्
पूर्वपश्चिममार्गेण दद्दिाणोत्तरमार्गतः ४
अन्तर्हारात्तु परितो मद्धये सूत्रन्तु पातयोः
हर्म्यमद्ध्याच्चतुर्दिन्नु कारयेत्सूत्रपातनम् ५
सूत्रमद्ध्याद्विमानानां मद्ध्याञ्चेति प्रकीर्तिताः
मूलगर्भप्रमाणेन परिवारालयं कुरु ६
मन्दिरार्द्धसमं वापि तद्गर्भार्द्धसमन्तु वा
विस्तारद्विगुणोत्सेधमालयानां विधीयते ७
तत्तारगुणभागैकं गर्भन्तत्र प्रकल्पयेत्
द्विभुजे दशधातारं रसांशं वाथ गर्भकम् ८
स्थापयेद्वृषभं पूर्वे त्वगस्त्यं वह्निगोचरे
याम्ये कात्यायनी प्रोक्तं नैर्ऋत्यान्तु गणेश्वरम् ९
ब्रह्माणं वारुणे देशे वायव्याञ्चैव षरामुखम्
केशवं सौम्यदिग्भागे ऐशान्नयां भास्करन्तथा १०
मराटपन्तु चतुर्द्वारं कर्त्तव्यं वृषभालयम्
पाकालयं पावके तु दुर्गालयञ्च स्वस्तिकम् ११
गजपृष्ठे तु नैर्ऋत्यां ब्रह्मणः पूर्वतो मुखम्
कुक्कुटाराडं गुहस्योक्तं विष्णोः कान्तं हरेः कुरु १२
नन्द्यावर्त्तमथैशान्नयां पूर्वोक्तविधिना कुरु
पश्चिमद्वारहर्म्ये तु स्थापयेद्वारुणं वृषम् १३

ब्रह्माणं पूर्वदेशे तु स्थापयेद्देशिकोत्तमः
न्यसेन्मद्ध्यादिभित्तौ च परिवाराणि षोडश १४
दक्षिणोत्तरमार्गेण पूर्वपश्चिममार्गतः
तत्प्रकारयुतुर्थं स्यान्मद्ध्यसूत्रन्तु पातयेत् १५
एवन्तु परितः कल्प्य दिक्सूत्रं पूर्ववत्कुरु
स्थापयेत्सूत्रमद्ध्ये तु आलयैश्च समन्वितम् १६
स्थापयेत्स्वस्वदेशे तु चक्रादीन्लोकपालकान्
अश्विनी सप्तमातृश्च वागीशींकमलोद्भवाम् १७
ज्येष्ठाञ्चैवोरगेंद्रञ्च क्षेत्रपालं रविं क्रमात्
ऐंद्राग्नेयञ्च मद्ध्यादिष्वन्तराळे तु विन्नयसेत् १८
मण्टपा कृतिकं वापि सभाकृतिमथापि वा
नन्द्यावर्त्तविमानं वा सर्वेषान्तु प्रकल्पयेत् १९
मातृणाञ्च विशेषेण कल्पयेत् मन्दिरं शुभम्
ईशानात्पावकान्तञ्च मन्दिरं पश्चिमाननम् २०
नैर्ऋत्याद्यनिलान्तञ्च प्राङ्मुखमञ्चास्त्रमन्दिरम्
दक्षिणस्थमुत्तराभिमुखञ्चैव प्रकल्पयेत् २१
सर्वाण्यौत्तरवेश्मानि दक्षिणाशामुखानि वै
बिंबोच्चं परिवाराणां सर्वेषान्तु विधीयते २२
पूजाभागसमं वापि चाद्ध्यर्द्धद्विगुणन्तु वा
परिवारालयद्वारस्यायामन्तु त्रिधा भवेत् २३
बिंबोदयन्तु पक्षांशं व्योमांशं पिण्डकोदयम्
प्रतिमालक्षणोपेतमार्गेण सर्वमाचरेत् २४
प्रतिमानामभावे तु पीठं वा कल्पयेत्सुधीः
विमानेन युतं वापि हीनं वा स्थापयेत्सुधीः २५
पक्षतालप्रविस्तारमुत्सेधन्तु तदर्द्धकम्
द्विमेखलासमायुक्तमेकैकञ्चतुरंगुलम् २६

उत्सेधन्तत्समं ज्ञेयं तन्मद्ध्येब्जन्तु कारयेत्
षडंगुलप्रमाणेन पद्मां कुर्याद्दळाष्टकम् २७
अग्न्यंगुलप्रमाणेन तन्मद्ध्ये कर्णिकां कुरु
वृत्तं वा चतुरश्रं वा एवं पीठन्तु कारयेत् २८
अथवान्यप्रकारेण परिवारस्थानमुच्यते
दण्डाग्रन्तु परिग्राह्य परितोष्टसुदिक्षु च २९
इंद्रादिलोकपालानान्तत्तत्स्थानेषु कल्पयेत्
द्विमेखलासमायुक्तं पीठं पूर्वोक्तवत्कुरु ३०
प्रतिमाकारनेष्टन्तु आलयानां विना कुरु
शतमखस्य तु देशस्तु कल्पोक्तस्य तु पृष्ठतः ३१
अन्तर्हारस्तु परितो देवानां स्थानमुच्यते
ऐंद्रईशानयोर्मद्ध्ये भास्करस्य तु देशकम् ३२
पावके वाग्निदेशस्तु मातॄणान्तु यमस्तथा
नैर्ऋत्यान्दिशि विघ्नेशं सुब्रंहण्यस्य वारुणे ३३
पाशिनैर्ऋतयोर्मद्ध्ये विघ्नेशं स्याहिदेशकम्
लक्ष्मीञ्चैव तु वाग्देवीं ध्वजज्येष्ठां तथैव च ३४
होमदुर्गास्त्विति ख्याता ऐशान्यां क्षेत्रवालकाः
पूर्वोक्तविधिना चैव लक्षणञ्चालयं कुरु ३५
मद्ध्ये तु मद्ध्यहारायां बलिपीठं प्रकल्पयेत्
षोडशैः परिवारैश्च महामर्यादिमद्ध्यमे ३६
बलिपीठं गुरुर्द्धीमान् लक्षणोक्तक्रमेण तु
महागोपुरबाह्ये तु दण्डद्वयान्तिके ततः ३७
कुर्यात्पैशाचिकं पीठं सर्वलक्षणसंयुतम्
अथवान्नयप्रकारेण पीठस्थानं विधीयते ३८
मूलप्रासादविस्तारं यत्तद्दण्डमिहोच्यते
प्रासादन्तु समारभ्य रसदण्डान्तिकेऽपि वा ३९

रुद्रदण्डान्तिके चैव मनुदण्डान्तिकेऽपि वा
कारयेत्तत्र पीठानि पीठलक्षणमुच्यते ४०
गर्भागारार्द्धविस्तारमुत्सेधद्वित्र्यरत्तिभिः
द्वारोच्चमष्टधा कृत्वा रसांशं पीठतारकम् ४१
उत्सेधन्तत्समं ज्ञेयं द्वारायामप्रमाणतः
कारयेन्मद्ध्यपीठन्तु उत्सेधन्तत्समं भवेत् ४२
तस्य चार्द्धप्रमाणेन बाह्यपीठन्तु कारयेत्
विस्तारसममायामं त्रिसप्तधा भजेत्तु तम् ४३
उपानञ्जगती कुंभं फुल्लं कर्णञ्च पट्टिका
महापट्टी च पट्टी च दळं वै कर्णिकां क्रमात् ४४
इंद्रतुर्याग्निकाश्वग्निखाश्विनीन्तु गुणाश्विनीम्
भद्रपीठं समाख्यातं पद्मपीठमथ श्रुणु ४५
पूर्ववद्विभजेदायञ्जन्मव्योमांशमुच्यते
जगतीदळयुग्मांशेन व्योमांशं पद्ममुच्यते ४६
गुणांशं कुमुदं प्रोक्तन्तस्योद्ध्वेंशेन कंपकम्
पक्षांशेनैव कण्ठन्तु व्योमांशेनोद्ध्र्वकंपकम् ४७
अंशेनाब्जन्तु तस्योद्ध्वे महापट्टी द्वयांशतः
त्र्यंशेनाब्जदळं प्रोक्तं पक्षांशेनैव कर्णिका ४८
पद्मपीठं समाख्यातं प्रोच्यते पुष्पपुष्कलम्
पञ्चविंशद्भजेदाय मेकांशं जन्ममुच्यते ४९
अद्ध्यर्द्धांशमधः पद्मं कुंभमद्ध्येन कारयेत्
जगती च युगांशेन एकेनाथ सरोरुहम् ५०
एकांशेनैव कंपन्तु अग्न्यंशं कर्णमुच्यते
कर्णिकार्द्धार्द्धभागेन एतच्चाधसरोरुहम् ५१
अर्द्धांशेनैव कंपन्तु अग्न्यंशं कंठमुच्यते
कंपमर्द्धेन कर्तव्यमर्द्धेनापि सरोरुहम् ५२

पद्मांशेन महापट्टी अर्द्धेनोर्ध्वाब्जमुच्यते
अर्द्धांशेनैव कंपन्तु अग्न्यंशेन दळं भवेत् ५३
कर्णिकाद्ध्यर्द्धभागेन एतत्स्यात्पुष्पपुष्कलम्
पूर्ववद्विभजेदायमेकेनोपानमुच्यते ५४
अधः पद्मद्विभागैकं कंपमेकेन कारयेत्
जगती चतुरंशेन अर्द्धेनाथ सरोरुहम् ५५
अर्द्धांशेनैव कंपन्तु अर्द्धेनोर्ध्वसरोरुहम्
वप्रं सार्द्धद्विभागेन अर्द्धेनाथ सरोरुहम् ५६
अर्द्धांशेनैव कंपन्तु द्विभागं कर्णमुच्यते
अर्द्धांशेनोर्ध्वकंपन्तु अर्द्धांशेनोर्ध्वपद्मकम् ५७
द्विभागेन कपोतन्तु अर्द्धेनाळिन्दपट्टिका
अर्द्धेनान्तरितं प्रोक्तं प्रतिरर्द्धांशमुच्यते ५८
कंपमर्द्धेन कर्तव्यं पद्मांशेनैव पद्मकम्
कर्णिका च द्विभागेन एतत् श्रीकरमुच्यते ५९
श्रीकरं पीठमाख्यातं श्रुणु पुष्कलपीठकम्
एकविंशत् भजेदायमंशेनोपानमुच्यते ६०
अद्ध्यर्द्धांशेन पद्मन्तु जगती सार्द्धद्व्यंगुलम्
पद्मकः परितोर्ध्वेन पद्मांशं कुमुदं भवेत् ६१
अर्द्धांशेनोर्ध्वपद्मन्तु कंपमर्द्धेन कारयेत्
कर्णं कुर्याद्गुणांशेन अर्द्धेनोर्ध्वाब्जमुच्यते ६२
पद्मं मद्ध्येन कर्तव्यमद्ध्यर्द्धेन कपोतकम्
एकेन वाजनं कुर्यात्प्रतिमैकेन कारयेत् ६३
त्र्यंशेनाब्जदळं कुर्यात्पद्मांशेनैव कर्णिका
ग्रीवासु युगकोणेषु पादयुक्तं प्रकल्पयेत् ६४
नासिका पञ्चकैर्युक्तं हर्म्यपञ्जरकैस्तु वा
भूतं कुर्याच्चतुर्दिक्षु नानालीलासमायुतम् ६५

चतुष्कोणेषु कर्तव्यं वृषभं प्रस्तरोपरि
तस्यैव दक्षिणे भागे सोपानं गजहस्तकम्  ६६
पुष्कलाख्यं समाख्यातं श्रुत्यश्रं वर्तुळन्तु वा
वस्वश्रं वापि पीठानि कारयेत्तु विशेषतः  ६७
उपवीठोर्ध्वके वापि अथवा फलकोपरि
पीठाधाराष्टभागैकमुपपीठोच्चमुच्यते  ६८
पीठलक्षणमेवं स्यात् वृषभस्थानमुच्यते
पीठाद्दण्डद्वयं त्यक्त्वा तस्याग्रे स्थापयेद्वृषम्  ६९
अथवान्यप्रकारेण वृषस्थानं विधीयते
गुणहस्तान्तरं वापि पक्षहस्तान्तरन्तु वा  ७०
पीठाग्रे तु प्रकर्तव्यं तस्य लक्षणमुच्यते
उत्तमं लोहजं प्रोक्तं शैलजं मद्ध्यमं भवेत्  ७१
मृण्मयं चाधमं प्रोक्तं त्रिविधं परिकीर्तितम्
प्राकारे तु द्वितीये तु अल्पोक्षं परिकल्पयेत्  ७२
अन्नयोः स्थानयोश्चैव महोक्षं कारयेत्सुधीः
पूजाभागसमायाममल्पोक्षायाममुत्तमम्  ७३
तदर्द्धं मद्ध्यमं ज्ञेयं तदर्द्धं कन्नसं भवेत्
तत्समन्तु त्रयं मानं कल्पयेद्देशिकोत्तमः  ७४
शुद्धद्वारन्तु नवधा कृत्वाब्ध्यंशेन दैर्घ्यकम्
एतन्मद्ध्य वृषस्येतु द्विगुणं बाह्यके वृषम्  ७५
लोहेनोक्षं प्रकर्तव्यं स्थितं वा शयनन्तु वा
शैलेन मृण्मयेनैव शयनञ्चैव कारयेत्  ७६
वक्त्रन्तु युगभागन्तु गुणभागन्तु नासिका
भागं स्याच्छृंगमूलन्तु द्विभागेनान्तरद्वयोः  ७७
नेत्रं पक्षांगुलं ज्ञेयं विस्तारं त्वंबरांगुलम्
श्रोत्रनेत्रान्तरं भागं शृंगमानं युगांगुलम्  ७८

मुखं वस्वंगुलं ज्ञेयं विस्तारन्तु चतुर्दश
कर्णमूलकला प्रोक्ता धर्मांगुलन्तु दैर्घ्यकम्  ७९
ग्रीवावस्वंगुला प्रोक्ता कलांगुलं ककुद्भवेत्
धर्माङ्गुलन्तु जंघा च तदूर्ध्वे च चतुष्कला  ८०
गुल्फं रसांगुलं ज्ञेयं त्र्यंगुलं खुरमुच्यते
जंघा तु पश्चिमा पञ्च कलोर्ध्वन्तु कलाधिकम्  ८१
वालं स्यात्पादमूलान्तं चतुरंगुलविस्तृतम्
मूलं पक्षांगुलन्तारमग्रं व्योमांगुलं भवेत्  ८२
वृषणौ द्व्यंगुलायामौ विस्तारन्तु द्विभागकम्
शेषं युक्त्या प्रकर्तव्यं प्रोच्यते वृषलक्षणम्  ८३
एवं प्रोक्तं प्रमाणन्तु स्थापनञ्चाधुना श्रुणु
परिवारालयाग्रे तु मण्टपं लक्षणान्वितम्  ८४
नवहस्तमष्टहस्तं वा सप्तहस्तमथापि वा
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव वा  ८५
कृत्वा मण्टपमद्ध्ये तु त्रिभागैकेन वेदिका
कलांगुलसमायामादर्पणोदरसंनिभा  ८६
परितश्चाग्निकुण्डानि महाशासु प्रकल्पयेत्
चतुरश्रन्धनुर्वृत्तं कोणं पूर्वादितः क्रमात्  ८७
हस्तमात्रप्रविस्तारं मेखलात्रयसंयुतम्
नाभियोनिसमायुक्तं कारयेल्लक्षणान्वितम्  ८८
एकाग्निं वाथ कुर्वीत प्रासादस्याग्रके बुधः
वर्त्तुळन्नळिनं योनिं भूताश्रन्तु युगाश्रकम्  ८९
त्रिकोणञ्चैव वस्वश्रमष्टाश्रन्तु क्रमेण तु
वृषादिभास्करान्तानां कारयेद्देशिकोत्तमः  ९०
रत्नन्यासं प्रकर्तव्यं पूर्वोक्तविधिना ततः
नयनं मोक्षणं कुर्यात् नेत्रद्वययुते दिने  ९१

पद्मरेखां पुरा कृत्वा ततो वै कृष्णमण्डलम्
ज्योतिर्मण्टयमालिख्य नेत्रमन्त्रमुदाहरन्  ९२
लेपयेद्धृदयेनैव मधुना च घृतेन च
मृदांभसा तु संस्नाप्य गव्येनैवाभिषेचयेत्  ९३
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पुरुषेण तु
लोहजं शैलजञ्चेत्तु कुर्याज्जलाधिवासनम्  ९४
जलमद्ध्ये प्रपां कृत्वा चतुर्गात्रसमन्वितम्
वस्त्रेणावेष्टय्बिंबानि कण्ठमात्रे जले ततः  ९५
शाययेत्तु त्रिरात्रं वा एकं वा युगयामकम्
ब्राह्मणान्भोजयेत्पश्चाद्यथावित्तानुसारतः  ९६
मण्टपं भूषयेत्पश्चाद्यथावित्तानुसारतः
मण्टपं भूषयेत्पश्चाद्वितानाद्यैर्विशेषतः  ९७
पुण्याहं वाचयेत्तत्र स्वस्तिसूक्तन्तु वाचयेत्
स्थण्डिलं कारयेद्विद्या मण्टद्रोणैस्तु शालिभिः  ९८
लाजपुष्पतिलैर्दर्भैर्विकिरैस्समलंकृतम्
जलादुत्तीर्य बिंबानि शुद्धिं कृत्वा तु पूर्ववत्  ९९
कौतुकं बन्धयेत्पश्चात्सद्यमन्त्रेण देशिकः
शयनं वस्त्रकाशाभ्यां कल्पयेत्स्थण्डिलोपरि  १००
शाययेत्तत्र बिंबन्तु प्राक्शिरश्चोद्ध्र्ववक्त्रकम्
वस्त्रेणाच्छाद्य बिंबन्तु पूजयेद्धृदयेन तु  १०१
सर्वलक्षणसंयुक्तं द्रोणतोयं प्रपूरयेत्
सूत्रकूर्च्चविधानाढ्यं सोदकं वस्त्रसंयुतम्  १०२
बिंबस्य तु शिरोभागे स्थापयेद्व्योमकुंभकम्
ध्यात्वा तु तत्स्वरूपाणि तत्तत्कुंभे तु देशिकः  १०३
तेषां बीजानि विन्नय्स्य पूजयेयुर्हृदा तथा
वर्गस्य पञ्चमस्यैव चतुर्थं ग्राह्यबुद्धिमान्  १०४

सप्तमस्वरसंयुक्तं वृषबीजमिति स्मृतम्
आद्यस्वरमिति प्रोक्तमगस्त्यस्य तु बीजकम् १०५
पञ्चमस्य तृतीयेन पञ्चमस्वरसंयुतम्
दुर्गाबीजमिति प्रोक्तं कान्तन्तेनाद्यकस्वरम् १०६
एतत् विघ्नेशबीजन्तु षष्ठस्य तु तृतीयकम्
यान्तेनाद्यस्वरोपेतं ब्रह्मबीजमिति स्मृतम् १०७
अष्टमस्य तृतीयेन पञ्चमस्वरसंयुतम्
सुब्रह्मण्यस्य बीजन्तु सप्तमस्य चतुर्थकम् १०८
मायाबीजेन संयुक्तं विष्णुबीजमिति स्मृतम्
अष्टवर्गचतुर्थन्तु द्वितीयस्वरसंयुतम् १०९
सूर्यबीजमिति प्रोक्तं सर्वसिद्धिकरं परम्
कार्यकारणसंयुक्तास्सर्वे मन्त्राः प्रजापते ११०
तेषामाद्यक्षरेणैव ब्रह्मांगानि प्रकल्पयेत्
पञ्चब्रह्माणि ह्रस्वाश्च षडंगाश्चैव दीर्घकाः १११
अस्त्रं विसर्गसंयुक्तं सानुस्वारन्तु नेत्रकम्
प्रणवादि नमोन्ताश्च मन्त्रास्सर्वे प्रकीर्तिताः ११२
नैवेद्यन्दापयित्वा तु पश्चाद्धोमं समाचरेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ११३
पलाशोदुंबराश्वत्थवटाः पूर्वादितः क्रमात्
समिदाज्य चरून्लाजान्सर्षपञ्च क्रमेण तु ११४
सद्यादिब्रह्ममन्त्रैश्च जुहुयुर्वै क्रमेण तु
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्ततः ११५
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेयुर्हुतमन्त्रकैः
व्यपोह्य रात्रिशेषन्तु प्रभाते विमले ततः ११६
आचार्यो मूर्तिपैस्सार्द्धं स्नानं कृत्वा विशेषतः
कुंभञ्च प्रतिमाञ्चैव पूजयेयुर्हृदा तथा ११७

जयादिरभ्याधानञ्च राष्ट्रभृज्जुहुयुः क्रमात्
मूलमन्त्रैश्च जुहुयुः प्रत्येकं शतसंख्यया ११८
आचार्यं पूजयेत्पश्चात्वस्त्रहेमांगुलीयकैः
निष्कत्रयन्ददेद्धीमान्प्रत्येकं तु विशेषतः ११९
पूजयेत् मूर्तिधारांश्च भक्तान्संपूजयेत्ततः
मुहूर्त्तनाडिका पूर्वे स्थापनं तु समारभेत् १२०
प्रासादाभ्यंतुरे तत्तन्मानुषप्रतिमान्न्यसेत्
सुस्निग्धं कारयित्वा तु पुण्याहं वाचयेत्ततः १२१
पूर्णाहुतिञ्च शिरसा यदस्येति तदन्तिके
जुहुयुर्वै क्रमेणैव पश्चादग्निं विसर्जयेत् १२२
मुहूर्ते समनुप्राप्ते स्थापकं स्थापनं कुरु
तत्तत्कुंभं समुद्धृत्य स्थाप्यबिंबाग्रकेषु च १२३
न्यासं क्रमेण विन्न्यस्य पञ्चब्रंहषडंगकान्
बीजान्यादाय कुंभेभ्यो न्यसेयुर्बिंबहृत्सु च १२४
यजेयुर्गंधपुष्पाद्यैर्नैवेद्यां तं हृदा क्रमात्
अत्राष्टपरिवाराणां प्रोक्तं स्थापनमुत्तमम् १२५
स्थापनं परिवाराणां षोडशानां श्रुणुष्वथ
मूर्तीनाञ्चैव सर्वेषां प्रत्येकं व्योमकुण्डकम् १२६
सर्वेषां चतुरश्रं तु कारयेद्विधिपूर्वकम्
मूर्तीनाञ्चैव सर्वेषां प्रत्येकं व्योमकुंभकम् १२७
स्वनामाद्यक्षरं तेषां बिन्दुनादसमन्वितम्
प्रणवादिनमोंतञ्च सर्वेषां मन्त्रमुच्यते १२८
एतेषाञ्च विशेषाणि यत एव विधीयते
अन्न्यानि सर्वकार्याणि आचरेत्प्रोक्तमार्गतः १२९
भक्तानाञ्चैव सर्वेषां तथैव स्थापनं कुरु
एवं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् १३०

इति परिवारस्थापनविधिपटलषष्टितमः

बलिपीठप्रतिष्ठाविधिपटलप्रारंभः

बलिपीठप्रतिष्ठां तु प्रवक्ष्यामि प्रजापते
पूर्वे वा पश्चिमे वापि पूर्ववन्मराटपं कुरु १
तन्मद्ध्ये वेदिकां कुर्यात् हस्तद्वयप्रमाणतः
तालमात्रसमुत्सेधां दर्पणोदरसन्निभाम् २
कुराडानि परितः कुर्यात् चतुर्दिक्षु युगाश्रकम्
पीठञ्च मराटपञ्चैव पुरायाहं वाचयेत्ततः ३
स्थरिडलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः
तस्योर्ध्वे नळिनं लिख्य साष्टपत्रं सकर्णिकम् ४
लाजपुष्पतिलैर्दर्भैर्विकिरैस्समलंकृतम्
रसकुंभान्समादाय द्रोणतोयप्रपूरितान् ५
ससूत्रान्सापिधानांश्च सकूर्चान्वस्त्रवेष्टितान्
गंधांबपूरितांस्तत्र वेद्यूर्ध्वे स्थापयेद्बुधः ६
पूर्वादिषु चतुर्दिक्षु मद्ध्ये वैशानगोचरे
अविघ्नं मद्ध्यकुंभे तु आमोदं पूर्वकुंभकम् ७
प्रमोदं याम्यकुंभे तु प्रमुखं वरुणेऽपि च
दुर्मुखं सोमकुंभे तु विघ्नकर्तारमीशके ८
स्वनामाद्यक्षरेणैव बिन्दुनादसमन्वितम्
कुंभमद्ध्ये न्यसेद्धीमान् तत्तद्रूपन्तु भावयेत् ९
आमोदं श्यामवर्णन्तु प्रमोदं कृष्णवर्णकम्
प्रमुखस्फटिका भासो दुर्मुखः कुंकुमप्रभः १०
अविघ्नो विद्रुमाभासो विघ्नकर्तञ्जनप्रभाः
द्विभुजाश्च द्विनेत्राश्च टंकपाशधरास्तथा ११
उग्रदृष्टिसमायुक्ता भीमरूपामहाबलाः

सर्वाभरणसंयुक्ता नागयज्ञोपवीतकाः १२
प्रासादाभिमुखास्सर्वे तीक्ष्णदंष्ट्रोद्भटाननाः
संपूज्य गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदाबुधः १३
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिदाज्य चरून्लाजान्सर्षपञ्च तिलं तथा १४
अविघ्नाङ्गैश्च मन्त्रैश्च क्रमेणैव तु होमयेत्
शतमर्द्धं तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् १५
द्रव्यांते व्याहृतिं हुत्वा तेषां मूलैः पृथक्पृथक्
आज्येन जुहुयाद्धीमानष्टोत्तरशतं क्रमात् १६
एवं जागरणं रात्रौ प्रभातेस्थापनं कुरु
जयादिरभ्याधानञ्च क्रमाद्राष्ट्रभृतं हुनेत् १७
पूर्णाहुतिञ्च शिरसा स्विष्टांतं होममाचरेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः १८
निष्कत्रयन्ददेत्पश्चान्मूर्तिपान्संप्रपूजयेत्
सुमुहूर्त्ते शुभे लग्ने स्थापयेद्देशिकोत्तमः १९
अविघ्नं कर्णिकामद्ध्ये आमोदं पूर्वदिग्दळे
दळे याम्ये प्रमोदं तु प्रमुखं पश्चिमे दळे २०
दुर्मुखं तु दळे सौम्ये विघ्नकर्त्तारमीशके
कुंभेभ्यो बीजमादाय तत्तत्स्थानेषु विन्यसेत् २१
तज्जलैरभिषेकं तु कारयेद्देशिकोत्तमः
पूजयेत् गन्धपुष्पाद्यैर्नैवेद्यां तं हृदा बुधः २२
एवं यः कुरुते मर्त्त्यस्सपुण्यां गतिमाप्नुयात् २३
इति बलिपीठप्रतिष्ठाविधिपटल एकषष्टितमः

रत्नादिलिंगस्थापनविधिपटलप्रारंभः

वक्ष्ये रत्नादिलिंगस्य स्थापनं लोहजस्य तु

बाणलिंगस्य लोहस्य आत्मार्त्थे च परार्त्थकम् १
आषाढज्येष्ठमासञ्च माघञ्च मार्गशीर्षकम्
अप्रशसस्तानि मासानि शस्तान्यन्यानि च स्मृतः २
इक्तमासेषु सर्वेषु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते स्थापनं तु समारभेत् ३
प्रतिष्ठादिवसात्पूर्वे नवमे सप्तमेऽपि वा
पञ्चमे वांकुराणयत्र प्रागुक्तविधिना सह ४
शुद्धदेशे मनोरम्ये देवागारे गृहेऽपिवा
शल्यं विमोचयेत्तत्र भूमिं समतलं कुरु ५
दशरंध्राष्टहस्तैर्वा सप्तहस्तेन वा पुनः
युगाश्रम्मणटपं कुर्यात् षोडशस्तंभसंयुतम् ६
गुणपङ्क्तिसमायुक्तमुच्छ्रयं पङ्क्तिमानकम्
तन्मद्ध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागतः ७
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा
कुणडं वा स्थणिडलं वापि अग्नेरायतनं कुरु ८
मानुषे तु पदे कुर्यात्कुणडानि लक्षणैस्सह
दिशासु चतुरश्राणि पद्मानि विविधासु च ९
ईशानचक्रयोर्मद्ध्ये वृत्तं प्राधान्यकं कुरु
नवाग्निक्रममेवन्तु पद्मकुंडानि वर्जयेत् १०
ईशाने वृत्तकुणडानि पञ्चहोमक्रमान्वितम्
प्राग्देशे वृत्तकुणडन्तु एकहोमे प्रजापते ११
मणटपस्योत्तरे स्नानश्वभ्रं कुर्यात्सलक्षणम्
हस्तमात्रन्तु विस्तारञ्चतुरश्रसमं कुरु १२
मेखला द्वयसंयुक्तं उत्सेधन्तु नवांगुलम्
चतुरश्रं प्रविस्तारमुत्तरे नाळनिर्गमम् १३
नाळायामसमं तस्य रंध्रन्तारैस्तु मेखलम्

तस्यान्ते त्ववटं कुर्यात् विस्तारं हस्तमात्रकम्  १४
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत्
मराटपं भूषयेत्पश्चात् युगद्वारसमायुतम्  १५
चतुस्तोरणसंयुक्तं गात्रवेष्टनसंयुतम्
दर्भमालासमायुक्तं वितानध्वजसंयुतम्  १६
मुक्तादामैस्समायुक्तं नाळिकेरफलैस्सह
तदुत्तरसमीपस्थं मराटपञ्चतुरश्रकम्  १७
जलाधिवासनस्योक्तं चतुस्तंभैरलंकृतम्
वितानेनोर्ध्वमाच्छाद्य सर्वालंकारसंयुतम्  १८
मृद्भिश्च गोमयेनैव पञ्चगव्येन शुद्धयेत्
कटारं शुद्धतोयैश्च पूरयेद्देशिकोत्तमः  १९
मराटपे चाधिवासस्य तत्कटारविभूषितम्
पञ्चमृत्पञ्चगव्यैश्च स्नापयेल्लिंगमुत्तमम्  २०
शुद्धतोयेन संस्नाप्य शुद्धैरुद्धैरिति ब्रुवन्
वस्त्रेण वेष्टयेल्लिंगं जलमद्ध्ये तु विन्यसेत्  २१
कटारपरितोष्टौ च कलशान्स्थापयेत्क्रमात्
इंद्रादिदिक्पतीनाञ्च पूजयेत्तु यथाक्रमम्  २२
दिवैकं वाथ यामं वा सलिले चाधिवासयेत्
ब्राह्मणान्भोजयेत्पश्चात्सर्वान्संभोजयेत्ततः  २३
गोमयालेपनं कृत्वा वास्तुहोमं ततः कुरु
पर्यग्निकरणं कृत्वा पुनः पुरायाहमाचरेत्  २४
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः
स्थरिडलं कारयेद्विद्यामष्टद्रोणैश्च शालिभिः  २५
तदर्द्धैः स्थरिडलं भूष्य तदर्द्धैश्च तिलैरपि
लाजदर्भैः परिस्थाप्य प्रोक्षयेत्पुरुषेण तु  २६
जलादुत्तीर्य देवेशं स्नानश्वभ्रे तु विन्यसेत्

व्यपोह्य वेष्टितं वस्त्रं स्नापयेत्पञ्चगव्यकैः २७
घर्षयेत् भस्मनालिंगं पीठश्चैव क्रमेण तु
स्नापयेत्पञ्चगव्यैश्च पूजयेद्धृदयेन तु २८
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना सह
शुक्लवस्त्रेण संवेष्ट्य पुण्याहं वाचयेत्ततः २९
स्थण्डिलस्यैव मद्ध्ये तु शयनं पञ्चकल्पयेत्
शयने शाययेल्लिंगं प्राक्शिरस्कमधोमुखम् ३०
पूजयेत्पुरुषेणैव वस्त्रेणैव तु वेष्टयेत्
आदाय नवकुंभानि वर्द्धन्या सह देशिकः ३१
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान्
सकूर्चान्पल्लवोपेतान्स्थापयेत्तु क्रमेण तु ३२
शिरः प्रदेशे लिंगस्य शिवकुंभञ्च वर्द्धनीम्
रत्नादिशिवकुंभे तु वर्द्धन्यां हैमकं क्षिपेत् ३३
सदाशिवं यजेत्कुंभे शिवमन्त्रेण देशिकः
मनोन्मनीन्तु वर्द्धन्यान्तन्मन्त्रेणैव विन्यसेत् ३४
अभितोष्टघटान्यस्त्वा हैमेन टंकशूलधृक्
विद्येशानां सुमन्त्रेण पूजयेत्तु क्रमेण तु ३५
गन्धपुष्पादिभिः पूज्य नैवेद्यं दापयेत्पृथक्
एवं संस्नाप्य विधिना पश्चाद्धोमं समाचरेत् ३६
ततः परं यागशालां संप्रोक्ष्य हृदयेन तु
विघ्नेशं पूजयेत्पूर्वं संकल्पञ्च क्रमेण तु ३७
पुण्याहं वाचयित्वा तु पञ्चगव्येन सेचयेत्
भास्करं पूजयेत्पूर्वमेकावरणसंयुतम् ३८
प्रणवार्घ्यञ्च संपाद्य तोरणादिषु पूजयेत्
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः ३९
अग्निकार्योक्तमार्गेण शिवाग्निं परिकल्पयेत्

अश्वत्थोदुंबरप्लक्षवटाः पूर्वादिदिक्षु वै ४०
शमीखदिरमायूरं श्रीवृक्षञ्च विदिक्षु वै
प्रधानस्य पलाशन्तु समिधस्संप्रकीर्तिताः ४१
सद्येनैव तु मन्त्रेण समिधाहुतिमाचरेत्
मूलेन जुहुयादाज्यमन्नं वामेन होमयेत् ४२
धान्नचकं हृदयेनैव सर्षपं कवचेन तु
तिलमस्त्रेण जुहुयान्नेत्रेणैव यथा हुनेत् ४३
वैणवं शिरसाहुत्वा शालिञ्च शिखया हुनेत्
शतमर्द्ध तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात् ४४
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा लिंगन्तु होमयेत्
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु ४५
आचार्यो मूर्तिपैस्सार्द्धं स्नानं कृत्वा यथा विधि
अंगन्यासकरन्यासं पूर्वोक्तविधिना कुरु ४६
लिंगं संपूज्य गन्धाद्यैः कुंभान्संपूजयेद्धृदा
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ४७
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्
आचार्यं पूजयेद्धीमान्वस्त्रहेमांगुलीयकैः ४८
दक्षिणान्दापयेत्पश्चात्प्रागुक्तविधिना सह
मूर्तिपान्दापयेत्पश्चात्तत्तत्स्थापनमारभेत् ४९
शयनाल्लिंगमुद्धृत्य स्नानवेद्यान्तु विन्यसेत्
मूर्द्धादिपादपर्यन्तं कलान्यासं समारभेत् ५०
सुमुहूर्ते सुलग्ने च मन्त्रन्यासं समारभेत्
शिवकुंभं समुद्धृत्य वर्द्धन्यां सहकुंभकैः ५१
लिंगाग्रे स्थण्डिलोर्ध्वे तु विन्यसेद्देशिकोत्तमः
स्थापकोदङ्मुखो भूत्वा लिंगन्तु प्राङ्मुखं कुरु ५२
कुंभात् बीजं समादाय लिंगस्य शिरसि न्यसेत्

वर्द्धन्यान्तु मनोन्मन्यां बीजं पीठे तु विन्यसेत् ५३
अनन्तादिशिखण्डयन्तानष्टविद्येश्वरान्क्रमात्
इंद्राद्यैशानपर्यन्तं पीठे चैव तु विन्नयसेत् ५४
एकावरणमार्गेण पूजयेद्देशिकोत्तमः
स्नपनं कारयेत्पश्चात् यथावित्तानुसारतः ५५
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत्
तांबूलन्दापयेत्पश्चात् मुखवाससमन्वितम् ५६
एवन्तु बाणलिंगन्तु स्थापयेदादिशैवकः
मन्त्रमुद्रा क्रियाश्चैव शिष्यस्योपदिशेद्गुरुः ५७
पश्चाल्लिंगं ददेत्तस्य शिष्यस्य देशिकोत्तमः
नमस्कृत्वा गुरुं स्वस्ति लिंगमादाय बुद्धिमान् ५८
तद्दिनान्मरणान्तन्तु तल्लिङ्गपूजनं कुरु
त्रिकालं वा द्विकालं वा एककालमथापि वा ५९
पूजयेत्तु क्रमेणैव अर्चनोक्तक्रमात्सुधीः
परार्थं गर्भगेहस्थं पीठं संस्थापयेद्दृढम् ६०
तत्र रत्नादिविन्यासं चलेपीठे च पूर्ववत्
बालस्थाने गतं वाथ बालाद्यं मूलधामनम् ६१
स्थापयेदविचारेण तल्लिङ्गं न विसर्जयेत्
शिलावृक्षमयं बाणं स्थाप्य तत्रैव वास्तुनि ६२
तस्यामुद्वाह्य बाणादौ मूलस्थाने शिवं न्यसेत्
बालस्थानगतं लिंगं विधिना तं विसर्जयेत् ६३
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ६४
इति रत्नादिलिंगस्थापनविधिपटलो द्विषष्टितमः

मन्त्रद्रव्यहोमविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण होमद्रव्यविधिक्रमम्

कूर्मासनन्तु धरणी अनन्तमुपवेदिका १
सिह्मासनं महावेदी शालियोगासनन्तथा
तण्डुलं पद्ममेवोक्तं तिलं वै विमलासनम् २
लाजं शक्त्यासनञ्चैव तदूर्ध्वे घटमर्चयेत्
शक्त्यादिशक्तिपर्यन्तं नित्यवत्पूजयेत्क्रमात् ३
गंधपुष्पादिनापूज्य तद्वामे वर्द्धनीं यजेत्
अष्टविद्येश्वरान्स्थाप्य यथोक्तविधिना यजेत् ४
नवाग्निं वाथ पञ्चाग्निं एकाग्निं वाथ कल्पयेत्
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिमार्गतः ५
होमयेत्तत्तन्मार्गेण द्रव्याणि होमयेत्ततः
समिधस्सद्यमन्त्रेण त्रियंबकेन मन्त्रतः ६
घृतं मिमिक्षमंत्रेण आज्यं मूलेन होमयेत्
अघोरेण चरुं हुत्वा देवस्य त्वेति होमयेत् ७
लाजं तत्पुरुषेणैव एषामीशेतिमंत्रतः
सक्तुं वामेतिमंत्रेण आपो राजेति हूयते ८
क्षीरमीशानमंत्रेण आप्यायस्वेतिमंत्रतः
दधितत्पुरुषेणैव सोमो धेन्विति मंत्रतः ९
गुळं वै घोरमंत्रेण मानस्तोकेति हूयते
मधुञ्च वाममंत्रेण मधुवाता ऋताय वै १०
अपूवान्सद्यमंत्रेण सर्वान्गायत्र्याहुनेत्
ईशानेन फलान्सर्वान् इदं विष्णुश्च मंत्रतः ११
पाशुपतेन पत्राणि अप्सु मे सोमो अब्रवीदिति
दशाक्षरेण पुष्पाणि योपां पुष्पेण होमयेत् १२
गोधूमं पुरुषेणैव अग्न आयाहि मंत्रतः
तिलञ्चाघोरमंत्रेण शन्नोदेवीति हूयते १३
आढकं वाममंत्रेण अग्निमीळेति हूयते

मुद्गं वै सद्यमंत्रेण विश्वं भूतेन होमयेत् १४
ईशानेन तु निष्पावं कद्रुद्रायेति मंत्रतः
सर्षपं हृदयेनैव यो रुद्रस्तदनन्तरम् १५
माषञ्च शिरसाहुत्वा एषते रुद्रमन्त्रतः
शिखया वेणुबीजञ्च नमो हिरण्यमंत्रतः १६
चणकं कवचमंत्रेण इषे त्वोर्जेति मंत्रतः
नीवारं नेत्रमंत्रेण सर्वो वै रुद्रमंत्रतः १७
यवं वै अस्त्रमंत्रेण जातवेदेति हूयते
मूलेनान्यानि सर्वाणि त्रियंबकेन होमयेत् १८
घृतं मिमिक्षो घृतमित्यनेन त्रियंबकेणैव समित्सलाजाः
चरुञ्च देवस्य सुजालजाला मेषाञ्च धत्ते जुहुयात्तिलञ्च १९
यो रुद्र इत्येवसुसर्षपञ्च मान्मान्मनिष्ये क्षतरुद्रभागः
आप्येतिनीवारमथोर्हसक्तुमांबोक्तसोमोऽप्यधिबिल्वपत्रम् २०
अपूपजालामधुक्षीरमुद्गं वेणुञ्च बीजं मधुसोमराजम्
गायत्रिरूपञ्च इदं विष्णुमेव माया हि शन्नो जुहु इक्षुखण्डम् २१
इत्येवमंत्रेण जुहुयाच्छताष्टौ द्रव्याणि संख्यादशांतमेवम् २२
इति मंत्रे द्रव्यहोमविधिपटलस्त्रिषष्टितमः

पञ्चब्रंहविधिपटलप्रारंभः

ईशानं पुरुषञ्चैव अघोरं वामदेव च
सद्योजातं तु पञ्चैते मंत्रब्रह्ममिति स्मृतम् १
आवाहनं स्थापनञ्च सान्निद्ध्यं सन्निरोधनम्
अवकुंठनमित्येते क्रिया ब्रह्ममिति स्मृतम् २
ब्रह्माविष्णुश्चरुद्रश्च ईश्वरश्च सदाशिवः
पञ्चदेवत्वमित्युक्तं तत्वब्रह्ममिति स्मृतम् ३
लकारञ्च वकारञ्च रकारञ्च यकारकम्

हकारं पञ्चबीजानि बीजब्रह्ममिति स्मृतम् ४
सद्योजातमघोरञ्च तत्पुरुषेशानमेव च
इत्येषामाननं पञ्च मुखब्रह्ममिति स्मृतम् ५
मंत्रब्रंहक्रियाब्रंह तत्वब्रंहमिति स्मृतम्
बीजब्रंहमुखब्रंहं पञ्चब्रह्मेति कीर्तितम् ६
इति पञ्चब्रंहविधिपटलश्चतुष्षष्टितमः

उपचारविधिपटलप्रारंभः
दीपान्तं वा हविषान्तं बल्यन्तन्तागडवादिकम्
दशोपचारदीपान्तं षोडशं हविरन्तकम् १
बल्यंशं पञ्चविंशञ्च षट्त्रिंशत्तागडवान्तकम्
आवाहनार्घ्यपात्राणि तथैवाचमनीयकम् २
स्नानं गन्धञ्च पुष्पञ्च धूपदीपं विसर्जनम्
दशोपचारं विज्ञेयं दीपान्ते तु शिवार्चनम् ३
आवाहनं स्थापनञ्च पाद्यमाचमनार्घ्यकम्
स्नानं वस्त्रोपवीतञ्च भूषणं गन्धपुष्पकम् ४
धूपदीपनिवेद्यान्तं नमस्कारं विवर्जनम्
षोडशैवोपचारन्तु हविष्यान्ते च पूजनम् ५
आवाहनं स्थापनञ्च स्वागतञ्चानुमान्यकम्
पाद्यमाचमनीयार्घ्यं स्नानवस्त्रोपवीतकम् ६
भूषणं गन्धपुष्पञ्च धूपदीपन्तथैव च
नीराजनन्ततो मुद्रा दर्शनावर्णनार्चनम् ७
नैवेद्यं होमकारञ्च बलिदानन्तथैव च
स्तोत्रञ्जपनमस्कारं उत्सवञ्च विसर्जनम् ८
बल्यन्तेशान्तिकं पञ्च विंशत्येवोपचारकम्
आसनावाहनार्घ्याणि स्वागतञ्चानुमान्यकम् ९

पाद्यमाचमनं स्नानं वस्त्रञ्चैवोपवीतकम्
भूषणं गन्धपुष्पञ्च धूपं दीपन्तथैव च १०
नीराजनाञ्जने चैव चामरं छत्रदर्पणम्
दर्शनन्दशमुद्राणां पञ्चावरणपूजनम् ११
नैवेद्यं होमकार्यञ्च बलिदानञ्जपन्तथा
द्ध्यानं स्तोत्रं नमस्कारमुत्सवं गीतवाद्यकम् १२
नृत्तमर्घ्यं विसर्जञ्च षट्त्रिंशदुपचारकम्
पाद्यन्तु पञ्चमात्रं स्यात् मात्रमाचमनन्तथा १३
अर्घ्यं द्वादशमात्रं स्यात् धूपदीपं दशस्मृतम्
दीपन्तु दशमात्रं स्यात् नीराजनन्तु षोडशम् १४
भस्मदानन्तु वै पश्चात्सप्तमात्रन्तु कथ्यते
अंजनन्तु त्रिमात्रं स्यात् चामरञ्च द्वयं भवेत् १५
छत्रन्तु पञ्चमात्रं स्यात् दर्पणन्दशमात्रकम्
नैवेद्यं षोडशमात्रं बलिदानन्तु तत्समम् १६

इति उपचारविधिपटलपञ्चषष्टितमः

## परिवारबलिक्रमपटलप्रारंभः

अतः परं प्रवक्ष्यामि परिवारबलिक्रमम्
सर्वलोकहितं पुण्यं सर्वदेवप्रियार्त्थकम् १
आलयस्सर्वभूतानां मूलाधार इति स्मृतम्
उत्पन्नस्सर्वभूतानां बलदो बलिरुच्यते २
शौचकं शान्तिकञ्चैव सौख्यकञ्च ततः परम्
शैविकं त्विति विज्ञेयं बलिदानञ्चतुर्विधम् ३
सौख्यकं शैविकं चैव बिंबयुक्तं बलिन्ददेत्
शौचकं शान्तिकञ्चैव बलिबेरयुतन्नव ४
वृषादिभ्यस्तथा पूर्वमिंद्रादिभ्यो द्वितीयकम्

वज्रादिभ्यस्तृतीयन्तु भूतेभ्यस्तच्चतुर्थकम् ५
एवं शैविकमाख्यातं सौख्यकन्तु विनास्त्रकैः
इंद्राद्यैस्तद्विनाशान्तिर्द्वारादिवाहनान्तकम् ६
शौचकं त्विति विज्ञेयं बलिदेवं ततश्शृणु
सर्वेभ्यो द्वारपालेभ्यस्तृप्तये नन्दिकाळकौ ७
द्वारस्य दक्षिणे नन्दिं गंगामेवं तदुत्तरे
वामपार्श्वे महाकाळं यमुनां तस्य दक्षिणे ८
पुरतो वृषभं यष्ट्वा चाग्नेय्या पावकन्ततः
सप्तमातृगणं याम्ये विघ्नेशं नैर्ऋते ततः ९
पश्चिमे तु गुहञ्चैव ज्येष्ठां वायव्य देशके
सौम्यभागे तु दुर्गाञ्च ईशे क्षेत्रं समर्चयेत् १०
द्वारं बलिविशेषेण नन्दिकाळबलिन्ददेत्
प्रथमे च महापीठे भास्करस्य बलिन्ददेत् ११
प्रथमावरणं प्रोक्तं द्वितीयावरणं श्रृणु
गोपुरे दण्डिनं सव्ये मुण्डिनं वामपार्श्वके १२
रक्तकृष्णनिभौ चैव दण्डहस्तौ महाबलौ
सर्वाभरणसंयुक्तौ सूची विस्मयसंयुतौ १३
उग्रदृष्टिसमायुक्तौ भीमरूपौ महाबलौ
महोक्षं पूजयेदग्रे इंद्रादीनां बलिन्ददेत् १४
इंद्रञ्चैव तथाग्निञ्च यमञ्च निर्ऋतिं तथा
वारुणञ्चैव वायुञ्च सोममीशानमर्चयेत् १५
पुनः प्रदक्षिणं कृत्वा ब्रह्मविष्णू समर्चयेत्
नैर्ऋते चैव विष्णुञ्च ईशे ब्रह्माणमेव च १६
द्वितीया वरणं प्रोक्तं वज्रादीनां तृतीयके
पीठाग्रे चास्त्रकं यष्ट्वा महापीठे बलिं क्षिपेत् १७
आमोदादिदळाग्रे वा तन्मूले वा समर्चयेत्

तदन्ते कर्णिका मद्धये विघ्नं वा रुद्रभूतकम्  १८
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा
अविघ्नो विघ्नराजश्च षडैते भूतनायकाः  १९
अविघ्नं कर्णिकामद्धये आमोदं पूर्वदिग्दळे
याम्ये चैव प्रमोदञ्च सुमुखं पश्चिमे दळे  २०
दुर्मुखन्तु दळे सौम्म्ये विघ्नकारञ्च ईशके
आमोदश्श्यामवर्णस्तु प्रमोदः कृष्णवर्णकः  २१
सुमुखस्फटिकाभासो दुर्मुखः कुंकुमप्रभः
अविघ्नो विद्रुमाभासो विघ्नकर्ताञ्जनप्रभः  २२
द्विभुजाश्च द्विनेत्राश्च टंकपाशधरास्तथा
उग्रदृष्टिसमायुक्ता भीमरूपामहाबलाः  २३
सर्वाभरणसंयुक्ता नागयज्ञोपवीतकाः
प्रासादाभिमुखास्सर्वे दीर्घदंष्ट्रोत्कटाननाः  २४
एते द्वारादिपीठान्ता देवाश्च परिकीर्तिताः
अथवान्यप्रकारेण प्रथमावरणे यदि  २५
प्रथमं दक्षिणं कृत्वा वृषाद्यष्टकमर्चयेत्
पुनः प्रदक्षिणं कृत्वा मातृणां बलिमाचरेत्  २६
गोपुरद्वारपालेभ्यो वृषञ्चास्त्रञ्च पूर्ववत्
इंद्रादींश्च दळाग्रेषु तन्मूले पीठभूतकान्  २७
एवं बलिक्रमं कुर्यात् बलिदानक्रमं श्रुणु
नित्यार्चने निवेद्यान्ते होमान्ते च समाचरेत्  २८
देवदेवस्य विज्ञाप्य बलिबेरं समर्चयेत्
रंगे वा शिबिकायां वा परिवारकमूर्द्धनि  २९
बलिबेरसमायुक्तं बलिद्रव्य समायुतम्
शुद्धान्नं पायसान्नं वा दद्धयन्नं वा घृतप्लुतम्  ३०
गंधपुष्पसमायुक्तं धूपदीपसमन्वितम्

भेरीघोषेण संयुक्तं सर्ववाद्यसमन्वितम्  ३१
छत्रचामरसंयुक्तं गणिकादिभिरावृतम्
नानाध्वजसमायुक्तं जयशब्दसमन्वितम्  ३२
स्तोत्रसंगीतनृत्तैश्च पञ्चशब्दसमन्वितम्
शनैः प्रदक्षिणं कुर्यात् बलिदानसमन्वितम्  ३३
आचार्यस्सुप्रसन्नात्मा सोष्णीषस्सोत्तरीयकः
शुक्लगन्धानुलिप्तांगश्शुक्लयज्ञोपवीतकः  ३४
प्राङ्मुखोदङ्मुखस्स्थित्वा तत्तद्देवाग्रकेऽपि वा
देवदक्षिणभागे वा पीठक्षाळनमाचरेत्  ३५
प्रोक्षणावाहने कृत्वा पाद्यमाचमनन्ददेत्
अर्घ्यं गंधञ्च पुष्पञ्च धूपदीपं तथैव च  ३६
मुद्रया सह बद्ध्वाथ बलिन्दद्यात्स्वनामतः
अर्घ्योदकस्त्रवं कुर्यात् हृदयाञ्जलिमुद्रया  ३७
श्रेष्ठं करतलं पूर्णं मद्ध्यमं मुष्टिमात्रकम्
अधमन्त्वाहुती मात्रं बलिरेकः प्रकीर्तितः  ३८
अंगुष्ठतर्जनीभ्यान्तु धूपमुद्रेति कीर्तिता
अंगुष्ठानामिकाभ्यान्तु दीपमुद्रेति कत्थ्यते  ३९
देवानान्तु बलिं हस्ते भूतानां बलिमास्यके
पैशाचानां क्षिपेद्भूमौ ऋषीणां पीठके बलिम्  ४०
अथवा सर्वदेवानां बलिपीठे बलिं क्षिपेत्
बलिदानावसाने तु गीतनृत्तसमन्वितम्  ४१
सर्ववाद्यसमायुक्तं प्रदक्षिणमथाचरेत्
नृत्तगेयादिकं कुर्यादिंद्रादिष्वष्टदिक्षु च  ४२
अथवा पूर्वदिग्भागे चैशाने वा समाचरेत्
धाम्ने तु तुल्यमेवेति पीठे वा त्रिः प्रदक्षिणम्  ४३
भूर्भुवस्वस्त्रिलोकानां रक्षणार्त्थं विशेषतः

भूप्रदक्षिणकं पूर्वं द्वितीयं भुवः प्रदक्षिणम् ४४
स्वप्रदक्षिणकं पश्चात्प्रदक्षिणमहाबलम्
बलिदानसमायुक्तं सर्वसंपत्सुखावहम् ४५
आयुरारोग्यकरदं पुत्रपौत्रविवर्द्धनम्
पादप्रक्षाळनं कृत्वा प्रविशेदालयं प्रति ४६
इति परिवारबलिक्रमपटलष्षट्षष्टितमः

शूलस्थापनविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि शूलस्थापनमुत्तमम्
चन्दनश्च मधूकश्च खादिरं सरळन्तथा १
शमीक्षीरासनश्चैते शूलवृक्षास्तु शूलिनः
पनसं सुरदारूञ्च प्लक्षमर्जुनकिंशुकम् २
तिलकं सप्तपर्णी च विष्णुशूलस्य वृक्षकम्
वकुळं कुटजञ्चैव पिण्डकस्तिमिजन्तथा ३
धनञ्चार्जुनकञ्चैव ब्रह्मणश्शूलवृक्षकम्
मुक्तानां यत् द्रुमं प्रोक्तं देवीनान्तद्रुमं भवेत् ४
वैकंकतञ्च खादिर्यं शभ्यार्याया विधीयते
पाटली चैव ज्येष्ठायां रोहिण्यां मातृभिस्तथा ५
सरस्वत्यास्तु सरसे सरळञ्चण्डेश्वरस्य तु
राजवृक्षेण शूलं वै पलाशानां विशेषतः ६
खादिरं सर्वदेवानां शूलवृक्षमुदाहृतम्
एकस्यैवैकवृक्षेण बहुवृक्षन्नकारयेत् ७
उपलंग्रहणस्योक्तं मार्गेण प्रविशेद्वनम्
सर्वेषाञ्चैव वृक्षाणां लक्षयेत्तु शुभाशुभम् ८
अग्निदग्धञ्च शुष्कञ्च वल्लीगुल्मावृतन्तु यत्
वेष्टितं त्वन्नयतरुभिः दुष्टसर्पाश्रितन्तु यत् ९

बहुपक्षिनिवेशन्तु अधः कोटरसंयुतम्
वायुभिन्ना तथाहिन्ना तथैव गजमर्दितम्  १०
कृमिकोटरविद्धञ्च वक्रवक्रे विहीनकम्
तद्वृक्षान्वर्जयेद्युक्तान् फलपुष्पोपशोभितम्  ११
संकीर्णञ्चाग्रशाखाभिस्साग्रं शतवयोधिकम्
वृक्षं शुभं विजानीयात्पूजितं बिंबकर्मसु  १२
सुप्रशस्तश्चत् गृह्णीयादप्रशस्तञ्च वर्जयेत्
संशोद्धय वृक्षमूलन्तु तृणगुल्मलतादिकान्  १३
वृक्षस्थादेवतायूयं यक्षराक्षपिशाचकाः
नागागरुद्धगन्धर्वसिद्धविद्याधरास्त्विमे  १४
बिंबार्त्थमाहृतं वृक्षं गच्छद्ध्वं हि यथा सुखम्
बलिहोमस्वप्नकाद्याश्शिलाग्रहणवत् भवेत्  १५
तरुं प्रदक्षिणं कृत्वा गन्धपुष्पादिभिर्यजेत्
कुठारं हविषालिप्य अस्त्रेणैव तु पूजयेत्  १६
आचार्यं पूजयेत्पश्चाच्छिल्पिनं पूजयेत्ततः
आचार्योदङ्मुखो भूत्वा छेदयेदस्त्रमन्त्रतः  १७
तक्षकश्छेदयेत्पश्चात्कुंठार्या प्रियमानसः
शान्तिकं पूर्वपतितं दक्षिणे चाभिचारकम्  १८
पश्चिमे पौष्टिकं विद्यादुत्तरे पुत्रवर्द्धनम्
अधो भागमुखं ज्ञेयमूद्ध्वर्भागन्तु पुष्टिकम्  १९
मुखभागेब्जमालिख्य टंकं पृष्ठे तु लेखयेत्
उपशाखादिसर्वांश्च छेदयेत्तु विचक्षणः  २०
हृदयेनैव मन्त्रेण शूलवृक्षन्तु संस्पृशेत्
आलयस्याग्रगे चैव मण्टपन्तु नयेत्ततः  २१
देशिकं पूजयेत्पश्चाच्छिल्पिनं पूजयेत्ततः
बेरायामन्तु संगृह्य तालेनैव तु भाजयेत्  २२

तेष्वेकभागमंगुल्यन्तन्मानेन प्रकल्पयेत्
ऊद्ध्र्वकायमधः कायं समं हि परिकीर्त्तितम्  २३
प्रागुक्तदेहमानन्तु चरणायान्तथैव च
मांसत्वादुभयोश्चैव तयोर्द्दारुं विसर्जयेत्  २४
ब्रह्मदण्डस्य विस्तारं पञ्चांगुलमिति स्मृतम्
मेढ्रादिनाभिपर्यन्तं ब्रह्मांशञ्चतुरश्रकम्  २५
नाभेर्हिक्कान्तकञ्चैव वस्वंशं वैष्णवं भवेत्
तस्योद्ध्र्वे वृत्तकं कुर्याच्छिवभागमिति स्मृतम्  २६
वक्षोदण्डस्य विस्तारं सप्तांगुलमिति स्मृतम्
तद्वेरन्तु कला चैव उभयोरग्रयोरपि  २७
कलांशैवघनन्तस्य उभयोः पार्श्वयोरपि
द्विमात्रेण शिखां कुर्यादेकद्वित्रिचतुश्शिखा  २८
मुकुळे दुर्निवृक्षस्य ऊद्ध्र्ववक्त्राकृतिर्भवेत्
रन्ध्रं विष्णवं शतारेण पक्षोदण्डस्य मद्ध्यमे  २९
हिक्का सूत्रादधस्तात्तु पक्षोदण्डन्तु सुस्थितम्
कटिदण्डस्य विस्तारं सप्तमात्रमुदाहृतम्  ३०
कलाश्चैव घनन्तत्र उभयोः पार्श्वयोरपि
गुणांगुलप्रमाणेन शिखांकुरूद्ध्र्ववक्त्रकम्  ३१
ब्रह्मभागस्य तारेण तन्मद्ध्ये सुषिरं कुरु
युगाश्रमूले त्र्यंगुल्यं मांसमानन्त्यजेत्तरुम्  ३२
द्विमात्रन्नाभ्यधस्तात्तु हित्वात्रकटिदण्डकम्
योजयेत् ब्रह्मदण्डे तु सुस्निग्धं सुदृढं कुरु  ३३
ऊर्वायामं परिग्राह्य रुद्रमात्रेण संयुतम्
ऊरुदण्डन्तथाख्यातं विस्तारञ्चतुरंगुलम्  ३४
ऊरुदण्डाग्रविस्तारं कोलकञ्चेति कीर्तितम्
तस्य मूले तु सुषिरं शिखामानेन कारयेत्  ३५

तस्याग्रे तु शिखां कुर्यात्पञ्चांगुलप्रमाणतः
कटिदण्डशिखायान्तु ऊरुदण्डन्तु योजयेत्  ३६
जंघायामन्तु संग्राह्य भागेनैव तु योजयेत्
जंघामूलस्य विस्तारमग्न्यंगुलमुदाहृतम्  ३७
तस्याग्रस्य तु विस्तारं सार्द्धमात्रमिति स्मृतम्
आयामन्तत्समं ज्ञेयन्तत् घनन्तु तदर्द्धकम्  ३८
दोर्दण्डमूलविस्तारं गुणांगुलमुदाहृतम्
तस्य मूले तु सुषिरञ्चतुरंगुलमायतम्  ३९
ऊर्वग्रस्य शिखायान्तु सुषिरन्तस्य योजयेत्
योजयेदुभयोस्सन्धौ जानुमण्डलकं बुधः  ४०
जानुमण्डलविस्तारं युगांगुलमुदाहृतम्
बाहुकाग्रस्य विस्तारं सार्द्धमात्रमिति स्मृतम्  ४१
तन्मूले सुषिरं कुर्यात्पञ्चांगुलप्रमाणतः
पञ्चो दण्डकरो विप्र बाहुमूलन्तु योजयेत्  ४२
तारं प्रकोष्ठदण्डस्य मूलेऽग्न्यंगुलमुच्यते
तस्याग्रस्य तु विस्तारमेकांगुलमिति स्मृतम्  ४३
तन्मूलेन द्विमात्रेण सुषिरं कारयेत् बुधः
बाह्वग्रयोश्शिखाश्चैव प्रकोष्ठेनैव योजयेत्  ४४
पञ्चो दण्डात्कटीदण्डात्पार्श्वदण्डायतास्मृतम्
द्विमात्रन्तस्य विस्तारन्तत्समन्तु घनं भवेत्  ४५
ऊर्ध्वे तु पार्श्वदण्डं तु अंगुलं सुषिरोगतम्
अजदण्डात्पार्श्वदण्डात् ग्रन्ध्यन्तं शरमात्रकम्  ४६
मूले स्निग्धं प्रयोक्तव्यं पार्श्वदण्डं विशेषतः
स्त्रीणाञ्चैव विशेषेण वर्जयेत्पार्श्वदण्डकम्  ४७
पार्श्वयोर्घटिदण्डस्य वञ्चो दण्डस्य वै तथा
बाहुमूले च तस्याग्रे कूर्परस्य तु मूलके  ४८

एतेष्वथ प्रदेशेषु मांसमन्नचारकन्नचसेत्
यथोक्तमानं यत्तेषामस्त्रांगुलविहीनकम्  ४९
कपालं करतलं कर्णमपरञ्चरणन्तथा
तन्मानं दण्डमात्रन्तु हीनं युक्त्या तु कारयेत्  ५०
स्थानकस्येवमाख्यातमासने किञ्चिदस्ति हि
ब्रह्मदण्डस्य मूले तु योजयेत्तु युगांगुलम्  ५१
जंघामूलप्रदेशे तु अर्द्धयर्द्धांगुलहीनकम्
पूर्वोक्तविधिनादण्डं कृत्वा लक्षणसंयुतम्  ५२
मूलं पादतले न्यस्त्वाप्यग्रमग्रे न्यसेद्बुधः
स्वर्णेन रजतेनैवाप्यथवा ताम्रजेन वा  ५३
पट्टेन वलयं कृत्वा दण्डमन्तस्सुयोजयेत्
अथवाप्यखिलं शूलं ताम्रेण निर्ममेद्बुधः  ५४
ताम्रेण निर्मितं शूलमुत्तमं परिचक्षते
सीसत्रपुषकांस्याद्यैस्ताम्रं हीनन्तु मिश्रितम्  ५५
तत्तत् द्रव्यैः प्रकर्तव्यमुत्तमोत्तममिष्यते
ताम्रेषु स्वर्णरजतमिश्रञ्चेदुत्तमोत्तमम्  ५६
एवमेव प्रकर्तव्यं शूलबिंबं प्रजापते
शूललक्षणमाख्यातं स्थापनन्त्वधुनाश्रुणु  ५७
अयने चोत्तरे काले शूलस्थापनमारभेत्
शुक्लपक्षे शुभर्क्षे तु सुतिथौ वासुवारके  ५८
प्रासादस्याग्रतः कुर्यान्मण्टपञ्चतुरश्रकम्
रन्ध्राष्टाब्धिकराः प्रोक्ताः ज्येष्ठादीनान्तु तारकम्  ५९
षोडशस्तंभसंयुक्तं श्रुतिद्वारसमायुतम्
मण्टपन्तु त्रिधा कृत्वा मद्ध्ये त्वेकेन वेदिकाम्  ६०
रत्निमात्रं समुत्सेधन्दर्पणोदरसन्निभम्
कुण्डानि परितः कुर्याद्दिशासु विदिशासु च  ६१

नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा
दिशासु चतुरश्राणि वृत्तानि विदिशासु वै  ६२
ईशानचक्रयोर्मद्ध्ये वृत्तं प्राधान्यकं कुरु
पञ्चाग्न्यायतनञ्चेत्तु विदिक्कुण्डानि वर्जयेत्  ६३
गोमयालेपनं कुर्यात्प्रोक्षयेन्मन्त्रवारिणा
वितानद्ध्वजसंयुक्तम्मुक्तादामैरलंकृतम्  ६४
चतुस्तोरणसंयुक्तन्नाळिकेरफलैर्युतम्
मंगळाष्टकसंयुक्तं मंगळांकुरशोभितम्  ६५
स्तंभवेष्टनसंयुक्तं मण्टपं भूषयेत्ततः
पुण्याहं वाचयित्वा तु वेदिकोपरिशालिभिः  ६६
अष्टद्रोणैस्तदर्द्धैर्वा स्थण्डिलं कुरु देशिक
तन्मद्ध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्  ६७
तिलतण्डुलदर्भैश्च पुष्पैश्चैव परिस्तरेत्
शयनं कल्पयेत्पञ्च चर्मजाद्यैरनुक्रमात्  ६८
वास्तुहोमन्ततः कुर्यात् पर्यग्निकरणं कुरु
शूलं संक्षाळयित्वा तु गव्यैश्चैवाभिषेचयेत्  ६९
गन्धांभसा तु संस्नाप्य शुद्धतोयेन सेचयेत्
सर्वातोद्य समायुक्तं सर्वालंकारशोभितम्  ७०
सद्यमन्त्रमनुस्मृत्य शूलं वस्त्रेण वेष्टयेत्
शयने शाययेच्छूलं वामदेवं समुच्चरन्  ७१
गन्धादिभिस्समभ्यर्च्य हृदयेन तु मन्त्रतः
कौतुकं बन्धयेद्धीमान्वक्षो दण्डस्य दक्षिणे  ७२
गन्धाद्यैरर्च्चयित्वा तु पायसान्नन्निवेदयेत्
एवं कृते विशेषेण पश्चाद्धोमं समारभेत्  ७३
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिधाज्य चरूल्लाजास्तिलश्शाली तथैव च  ७४

हृदयाद्यस्तपर्यन्तं मन्त्रैश्चैव क्रमेण तु
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् ७५
द्रव्यान्ते व्याहृतिं हुत्वा मूलेनैव शतं हुनेत्
प्रतिद्रव्यं स्पृशेच्छूलं सद्यमन्त्रमनुस्मरन् ७६
नृत्तगेयकवाद्यैश्च रात्रिशेषं व्यपोह्य च
प्रभाते विमले धीमान्शूलस्थापनमारभेत् ७७
आचार्यो मूर्त्तिपैस्सार्द्धं स्नानं कृत्वा यथा विधि
नववस्त्रधरोष्णीषस्सर्वाभरणभूषितः ७८
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः
प्रागुक्तविधिनाचार्यदक्षिणान्तु प्रदापयेत् ७९
मूर्तिपान्पूजयेत्पश्चादाढ्ये त्रीन्पूजयेत्ततः
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ८०
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्
मुहूर्त्ते समनुप्राप्ते स्थापनन्तु समारभेत् ८१
गर्भगेहन्तथैकोन पञ्चाशत्पदकं कुरु
मद्ध्ये त्वेकपदं ब्राह्ममभितोष्टौ तु दैविकम् ८२
पदमेकावृतन्तस्य त्वभितोमानुषं पदम्
चतुर्विंशत्पदं बाह्ये हितं पैशाचिकं भवेत् ८३
मानुषे स्थापयेच्छूलं दैविकाभिमुखस्थितः
द्विमुखं वार्द्धाधिकं वा पादाधारस्य तारकम् ८४
तद्घनन्तु द्विमात्रं स्याच्चतुरश्रं समन्ततः
हैमेन वाथ तारेण ताम्रेणैवाथ कारयेत् ८५
रंध्रं घटन्तु तन्मद्ध्ये कल्पयेत्तु विचक्षणः
मानुषे स्थापयित्वा तु रत्नानि विधिवन्न्यसेत् ८६
वज्रमैंद्रन्तु विन्न्यस्य वैडूर्यं वह्निगोचरे
इंद्रे नीलन्तु याम्यायं मुक्ता निर्ऋृतिगोचरे ८७

वारुणे स्फटिकन्नयस्त्वा पुष्यरागन्तथा निले
पद्मरागन्तु सौम्यायान्नीलमीशानगोचरे ८८
माणिक्कम्मद्धयमे स्थाप्य धातूंश्चैव तु विन्नयसेत्
हरितलाञ्जनं सीसं माक्षिकं गैरिकाभ्रकम् ८९
सिन्दूरंगन्धकञ्चैव न्यसेदिंद्रादिषु क्रमात्
गोधूमयवनीवारतिलसर्षपमाषकान् ९०
व्रीहिमुद्गं क्रमेणैव न्यस्त्वावटक्रमेण तु
तन्मद्धये स्थापयेच्छूलमीशानेन तु मन्त्रतः ९१
एकाक्षरं द्व्यक्षरं वा कारयेत्सुदृढक्रमात्
नाळिकेरफलस्यैव पक्वस्याहृत्यतत्त्वचम् ९२
रेणुभिश्च विना तत्र शोधयित्वा पुनःपुनः
शुद्धसारन्तु संग्राह्य रज्जुन्तेनैव कारयेत् ९३
त्रिवृत्वापि द्विवृत्वापि नाहन्तस्य यवत्रयम्
रज्जुना वेष्टयेच्छूलं युक्त्या सर्वत्र बुद्धिमान् ९४
पर्वताग्रे नदीतीरे पुण्यक्षेत्रे मनोरमे
बिंबार्त्थं मृत्तिकाशस्ता सर्वकामफलप्रदाः ९५
सितारक्ता च पीताभा कृष्णा च सुमनोरमा
चूर्णयित्वा मृदं पश्चात् दधिक्षीरघृतैर्युतम् ९६
गोधूमयवमाषाणां चूर्णैरपि समन्वितम्
श्यामं श्रीवेष्टकञ्चैव हिंगुकं रजनीन्तथा ९७
कुन्दुकं गुग्गुलुं लाक्षा सर्ज्जगन्धरसन्ततः
कर्प्पूरञ्चन्दनं कुष्ठं कस्तूरीमगरुंगुळम् ९८
पञ्चनिर्यासंसंयुक्तं मरीची च समायुतम्
बिल्वोद्भवं रसञ्चैव एकी कृत्य विमर्दयेत् ९९
पाषाणे पेषयित्वा तु सुधया सह भागतः
शनैश्शनैः प्रकर्तव्यं प्रतिमालक्षणान्वितम् १००

ततस्तत्प्रतिमस्योक्तं भूषणैश्च समन्वितम्
कपित्थोद्भूतनिर्यासं रसेनैवोषितैर्जलैः १०१
पञ्चवर्णैस्ततस्तस्मिन्लेखयेच्चित्रवित्तमः
हैमेनाभरणं रत्नं लाक्षयाबन्धयेद्दृढम् १०२
एवं यः कुरुते मर्त्यस्स पुण्यांगतिमाप्नुयात्
कुलैकविंशदुद्धृत्य पुत्रपौत्रादिभिस्सह १०३
इति शूलस्थापनविधिपटलस्सप्तषष्टितमः

त्रिशूलस्थापनविधिपटलप्रारंभः

संस्थापनं त्रिशूलस्य वक्ष्ये लक्षणपूर्वकम्
सर्वेषां लक्षणार्थन्तु सर्वव्याधिनिवारणम् १
सर्वदेवमयं शूलं महास्त्रं परमं शुभम्
हेमराजतताम्रे आयसेनैव वा कुरु २
गर्भद्वारे च हस्ते च तुंगानि योजयेत्ततः
गर्भादधिकमादाय शूलमुत्तममुच्यते ३
मद्ध्यमं समगर्भन्तु तत् गर्भं भूतभागकम्
त्रिभागमधमं ज्ञेयं कनिष्ठोत्तममद्ध्यमम् ४
अष्टधा विभजेत्तत्र उत्तमादित्रयन्त्रयम्
वारोत्सेधसमम्मानमुत्तमं शूलमुच्यते ५
वास्तूनां यजमानानामानुकूल्यन्तु यौगिकम्
एतेषामपिराष्ट्रस्य चानुकुल्यन्तु लौकिकम् ६
यौगिकन्तु द्विमाने तु यजेत्सर्वत्र लौकिकम्
आयामं भूतभागैकं पात्रायाममिति स्मृतम् ७
नाडिकांशं भजेत्तच्च एकांशं पत्रविस्तरम्
संगृह्य पत्रमानन्तु चतुरश्रं समं कुरु ८
पत्रतारं विसृज्याथ पार्श्वयोरुभयोरपि

वृत्ताकारं यथा तत्र वर्तयेत्तदनुक्रमात् ९
तयोर्बाह्यान्तरं ग्राह्यं भ्रामयेद्दिङ्गुखन्तुवत्
पार्श्वे पत्रद्वयं ह्येवं भवेत्तद्वर्तुळद्वयात् १०
पात्रतारेण चाग्रे तु धारानिशितसंयुतम्
तारार्द्धं मुकुळं कुर्यात् मद्ध्यम्मूलाग्रतः क्रमात् ११
पत्रविस्तारमुद्दिष्टं भागैकं घनमुच्यते
ताराद्र्धताग्रके मूले चान्तरं पार्श्वपत्रयोः १२
पात्रायामञ्च नवधा भज्यभागेन मूलतः
पादायाममिदं प्रोक्तं तदर्द्धं पादविस्तरम् १३
द्विगुणं मद्ध्यपादस्य विस्तारं पार्श्वपत्रवत्
पत्राणां पादमूले तु कुर्याद्वि कुण्डली कृतम् १४
विचित्रपत्रविहितं पत्रलेखेन कारयेत्
तस्याधः पालिकाकार्या पत्रायामं त्रिभागतः १५
तत्तारं नवधाभज्य व्योमांशं पालिकायतम्
द्व्यंशेनाब्जन्तु तस्याधः कोणेष्वश्वत्थपत्रवत् १६
कर्तव्यं पालिका ह्येवं तदधः कल्पयेद्गळम्
पालिकायास्तु विस्तारं विभजेत्तु दशांशकम् १७
एकांशं गळविस्तारमुत्सेधं तत्समं भवेत्
पालिकार्द्धं घटाकारमुत्सेधं स्यात्तदर्द्धतः १८
तस्याधः कर्णिकारेण कर्णं कुर्यात्तु बुद्धिमान्
पादेन कुंभकारेण तस्याधसाडिका भवेत् १९
घटवत्ताडिकामानं तन्मानं युगमार्जितम्
एकभागान्तरं कुर्यात्तत्प्रमाणेन हीरिका २०
हीरिकाथ प्रकर्तव्या शेषं दण्डमिहोच्यते
नाडिकायास्तु विस्तारं चतुर्भागत्रिभागिकम् २१
दारुदण्डस्य विस्तारं तदर्द्धं लोहदण्डकम्

दराडमूले तु पद्मं स्यात् विस्तारं पालिकासमम्  २२
तदर्द्धं मानमित्युक्तं तन्मानं गुराभाजितम्
एकांशं पट्टिकाज्ञेयं शेषांशेन कुशेशयम्  २३
वृत्तं वा चतुरश्रं वा कारयेत्तु कुशेशयम्
हीरिका सममानेन पद्मोर्ध्वे पट्टिकां कुरु  २४
मद्धयपत्रस्य मद्धये तु लिखेदब्जन्तु तन्मुखम्
एवं लद्मरामाख्यातं प्रतिष्ठां कारयेत्ततः  २५
उत्तरायराकाले तु शुक्लपद्मे शुभे दिने
प्रतिष्ठादिनपूर्वे तु अंकुरारार्पयेत्सुधीः  २६
नयनं मोद्मरां नोक्तं कुर्यात् गव्याभिषेचनम्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्  २७
त्रिशूलं समलंकृत्य कुर्यात् ग्रामप्रदद्मिराम्
जले चैव प्रपां कृत्वा चतुर्गात्रसमन्वितम्  २८
वितानदर्भमालाभिर्ध्वजैश्चैव समन्वितम्
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्  २९
षोडशस्तंभसंयुक्तं द्वादश स्तंभमेव वा
मराटपन्तु त्रिधाभज्य मद्धयभागे तु वेदिका  ३०
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम्
कुराडानि परितः कुर्यात् दिशासु विदिशासु च  ३१
दिशासु चतुरश्राणि चाब्जानि विदिशासु च
ईशानचक्रयोर्मद्धये वृत्तं प्राधान्यकं कुरु  ३२
पश्चिमे चोत्तरे वापि स्नानश्वभ्रं प्रकल्पयेत्
उद्वास्य शिल्पिनं पश्चात् गोमयेनानुलेपयेत्  ३३
मंटपं भूषयेत्पश्चात्पुरायाहं वाचयेत्ततः
ब्राह्मणान्भोजयेत्पश्चात् उच्छिष्टोद्वासनं कुरु  ३४
गोमयेनोपलिप्याथ वास्तुहोमन्तु कारयेत्

पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्  ३५
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः
वेद्यूर्ध्वे स्थंडिलं कृत्वा चाष्टद्रोणैश्च शालिभिः  ३६
तन्मद्ध्येऽब्जं समालिख्य साष्टपत्रं सकर्णिकम्
तंडुलैस्तिलदर्भैश्च विकिरेत्समलंकृतम्  ३७
तन्मद्ध्ये शयनं कल्प्य चर्मलाद्यैरनुक्रमात्
जलादानीय शूलास्त्रं स्नानश्वभ्रे परिन्यसेत्  ३८
वज्रमापाद्य शूलास्तं शुद्धिं कृत्वाष्टमृज्जलैः
पञ्चगव्येन संस्नाप्य हृदयेन तु मन्त्रतः  ३९
गंधतोयेन संस्नाप्य शुद्धैरुद्धैरिति ब्रुवन्
हृदयेन तु मन्त्रेण गन्धपुष्पादिभिर्यजेत्  ४०
मद्ध्यपात्रस्य मद्ध्ये तु कौतुकं बन्धयेद्धृदा
मूर्द्धादिपादपर्यन्तं रक्तवस्त्रेण वेष्टयेत्  ४१
शयने शाययेच्छूलं प्राक्शिरश्चोर्ध्ववक्त्रकम्
गंधपुष्पादिभिः पूज्य ईशानेन तु मन्त्रतः  ४२
सर्वालंकारसंयुक्तान्कुंभद्रोणोदपूरितान्
सवस्त्रान्सापिधानांश्च ससूत्रान्कूर्चसंयुतान्  ४३
गंधोदकेन संपूर्णान्स्थंडिलोर्ध्वे तु विन्यसेत्
शूलस्य दक्षिणे चैव मद्ध्ये पश्चिमपूर्वयोः  ४४
स्थापयेत्तु घटान् पूज्य मद्ध्यमे तु शिवं यजेत्
ब्रह्माणं पश्चिमे पूज्य पूर्वे विष्णुं सपूजयेत्  ४५
कुंभमद्ध्ये न्यसेद्धीमान्पद्ममुद्रां प्रदर्शयेत्
पार्वतीं पूर्वकुंभे तु स्कन्दामाग्नेयकुंभके  ४६
विघ्नेशं याम्यकुंभे तु भास्करं निर्ऋतौ घटे
श्रीदेवीं वारुणे कुंभे वायौ सरस्वतीं न्यसेत्  ४७
वसुधां सौम्यकुंभे तु दुर्गामीशानकुंभके

तत्तद्बीजानि विन्यस्त्वा पूजयेत्तु हृदा बुधैः ४८
दिशास्वद्धययनं कुर्यात् चतुरो वेदपारगान्
स्थापयेन्मूर्तिपैस्सार्द्धं ततो होमं समारभेत् ४९
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु
अश्वत्थोदुंबरप्लक्षवटं पूर्वादिदिक्षु च ५०
शमीखदिरबिल्वार्कमायूरञ्च विदिक्षु वै
प्रधानस्य पलाशन्तु समिधस्संप्रकीर्तिताः ५१
समिधस्सद्यमन्त्रेण मूलेनाज्यन्तु होमयेत्
अघोरेण चरुं हुत्वा लाजं वामेन होमयेत् ५२
तिलं हुत्वा तु शिखया नेत्रेणैव यवं हुनेत्
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् ५३
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेत् शूलं समस्तकम्
ब्रह्मजज्ञान मन्त्रेण इदं विष्णवादिमन्त्रतः ५४
त्रियंबकेन मन्त्रेण प्रत्येकं षोडशं हुनेत्
मूलब्रह्मषडंगैश्च प्रत्येकन्तु दशाहुतिः ५५
एवं जागरणं रात्रौ प्रभाते विमले ततः
आचार्यो मूर्तिपैस्सार्द्धं विधिनास्नानमाचरेत् ५६
अंगन्न्यासं करन्न्यासं पूर्वोक्तविधिना कुरु
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ५७
पूर्वाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्
पावकन्तु विसृज्याथ स्थापनन्तु समारभेत् ५८
पूर्वोक्तविधिमार्गेण देशिकादीन् प्रपूजयेत्
शयनाच्छूलमुद्धृत्य वस्त्रादीनि व्यपोह्य च ५९
सर्वातोद्य समायुक्तं स्नानश्वभ्रे तु विन्न्यसेत्
अर्च्चयेद्धृदयेनैव गन्धपुष्पादिभिः क्रमात् ६०
घृतं शिरोर्पणं कुर्यात्प्रागुक्तविधिना सह

मुहूर्त्ते समनुप्राप्ते गुरवे सन्निवेदयेत्  ६१
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम्
कृत्वा शूलस्य चाग्रे तु स्थापयेत्तण्डुलोपरि  ६२
शिवाख्यबीजमादाय मद्ध्यपत्रे तु विन्नयसेत्
ब्रह्मबीजं समादाय दक्षिणे पत्रके न्यसेत्  ६३
विष्णुबीजं समादाय वामपत्रे तु विन्नयसेत्
पार्वतीबीजमादाय पालिकायान्तु विन्नयसेत्  ६४
स्कन्दबीजं समादाय कुंभमद्ध्ये तु विन्नयसेत्
विघ्नेशबीजमादाय पिंडिकायान्न विन्नयसेत्  ६५
सूर्यबीजं समुद्धृत्य दण्डमद्ध्ये तु विन्नयसेत्
लक्ष्मीबीजं समादाय पद्मे पूर्वे तु विन्नयसेत्  ६६
वागीशं बीजमादाय दक्षिणे तु दळेन्नयसेत्
वसुधाबीजमादाय पश्चिमे तु दळेन्नयसेत्  ६७
दुर्गायाबीजमादाय उत्तरे तु दळेन्नयसेत्
तद्धटस्थोदकैश्चैव त्रिशूलं स्नापयेद्बुदा  ६८
गन्धपुष्पादिभिस्तत्र ईशानेनैव पूजयेत्
स्नपनं कारयेदन्ते यथावित्तानुसारतः  ६९
गन्धं पुष्पञ्च धूपञ्च दीपन्नैवेद्य कादिभिः
तत्तदीशानमन्त्रेण प्रतिसन्धिषु पूजयेत्  ७०
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्  ७१
इति त्रिशूलस्थापनविधिपटल अष्टषष्टितमः

पाशुपतस्थापनविधिपटलप्रारंभः
अथ संस्थापनं वक्ष्ये परं पाशुपतस्य तु
परचक्रप्रमथनं सर्वारिष्टनिवारणम्  १
ग्रामऋद्धिकरं पुण्यं सदासस्यविवर्द्धनम्

प्रतिष्ठादिनपूर्वे तु कारयेदंकुरार्पणम् २
विचित्रमराटपे चैव रत्नन्नयासं समारभेत्
स्थरािडलं शालिभिः कृत्वा पीठन्तस्योपरिन्नयसेत् ३
मािराक्कमिंद्रनीलञ्च वैडूर्यन्नीलमेव च
शंखं वै स्फटिकंचैंद्रकान्तं वैडूर्यमेव च ४
पुष्यरागन्तु पूर्वादि क्रमादीशान्तकं हृदा
बिंबन्तस्योपरिन्नयस्त्वा सुस्निग्धं सुदृढं कुरु ५
नेत्रद्वययुतर्द्धे तु नेत्रमोद्धाराणमारभेत्
स्थरािडलं शालिभिः कुर्यात्तस्योद्ध्र्वे प्रतिमान्नयसेत् ६
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत्
कृष्णमराडलमालिख्य नेत्रमराडलमालिखेत् ७
वस्त्रांगुलीयकैः पूज्य शिल्पिनन्तु विसर्जयेत्
तदग्रे स्थरािडलं कृत्वा तस्योद्ध्र्वे प्रतिमान्नयसेत् ८
नेत्रत्रयेषु तत्रैव प्रोतसौवर्णकैर्नखैः
तर्पयेन्मेधुसर्पिभ्यां नेत्रेणैव तु बुद्धिमान् ९
गौर्द्धेनुभव्यमन्त्रेण सवत्सांगां प्रदर्शयेत्
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्संप्रदर्शयेत् १०
प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत्
पञ्चगव्येन संस्नाप्य अष्टमृत्सलिलैर्हृदा ११
ग्रामप्रदक्षिणन्नोक्तं कुर्याज्जलाधिवासनम्
नववस्त्रेण संवेष्टय लंबकूर्चसमन्वितम् १२
जले चैव प्रपां कृत्वा सर्वलक्षणसंयुताम्
कराठमात्रे जले चैव तन्मद्धये फलकोपरि १३
प्राक्शिरश्चोर्ध्ववक्त्रन्तु शाययेद्धृदयेन तु
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् १४
भवनस्याग्रके कुर्यात् मराटपं चाष्टहस्तकम्

कलास्तंभसमायुक्तं युगद्वारसमाश्रितम्  १५
तन्मद्ध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागया
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम्  १६
कुण्डानि परितः कल्प्य मानुषे तु पदे क्रमात्
चतुरश्रं धनुर्वृत्तं त्रिकोणं युगदिक्षु च  १७
वृत्तकुण्डन्तथैशान्यां कल्पयेत्तु प्रधानकम्
मण्टपस्योत्तरे कुर्यात्स्नानश्वभ्रन्तु पूर्ववत्  १८
उद्वास्यशिल्पिनं पश्चाद्गोमयेनोपलेपयेत्
समर्यकपदे सम्यक् वास्तुहोमन्तु कारेयेत्  १९
पुण्याहं वाचयित्वाथ प्रोक्षयेत्पञ्चगव्यकैः
द्वारपूजादिकं सर्वं स्नापनक्रमवत्सुधीः  २०
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः
तण्डुलैश्च तिलैश्चैव दर्भैः पुष्पैः परिस्तरेत्  २१
शयनं कल्पयेत्पञ्च कंबळैः पूजयेद्धृदा
जलादुत्तीर्य बिंबन्तु सर्वातोद्य समायुतम्  २२
वस्त्रादीनिविसृज्याथ पूर्ववच्छुद्धिमाचरेत्
कौतुकं बन्धयेद्धीमान्प्रागुक्तविधिना सह  २३
शयने शाययेत् बिंबं प्राक् च्छिरश्चोद्ध्वर्ववक्त्रकम्
रक्तवस्त्रेण संवेष्टय पूजयेदस्तमन्त्रतः  २४
दशमुद्रांशराख्याञ्च ताळमुद्रां प्रदर्शयेत्
प्रधानकुंभन्तस्यैव शिरोभागे तु विन्नयसेत्  २५
ससूत्रमुदकोपेतं सकूर्च्चं सापिधानकम्
सवस्त्रं रत्नसंयुक्तं पल्लवैरुपशोभितम्  २६
तन्मूर्तिन्तु भवेत्कुंभे न्यसेत्पाशुपतास्त्रकम्
तस्यमन्त्राक्षरोपेतं ब्रह्मांगानि प्रकल्पयेत्  २७
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत्

धर्मकुंभान्समादाय सूत्रादिभिस्समन्वितान् २८
परितश्चक्रादिविन्नयस्य नैर्ऋते शांकरे न्यसेत्
वज्रादिपद्मपर्यन्तं कृत्वा याम्ये तु निक्षिपेत् २९
कुलिशादिपद्मपर्यन्तं बीजानि च क्रमेण तु
ध्यात्वा कुंभेषु विन्नयस्त्वा पूजयेत्पुरुषेण तु ३०
नववस्त्रधरोष्णीष उत्तर्याभरणान्वितः
देशिको मूर्त्तिपैस्सार्द्धं होमकर्मसमारभेत् ३१
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
शमीबिल्वञ्च मायूरं खादिरञ्च दिशासु च ३२
प्रधानस्य पलाशन्तु सर्वेषां समिधा स्मृता
समिधं सद्यमन्त्रेण मूलेनाज्यन्तु होमयेत् ३३
शिरसा च चरुं हुत्वा लाजं वामेन होमयेत्
सर्षपं कवचेनैव तिलमस्त्रेण होमयेत् ३४
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत्
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिं समाचरेत् ३५
अस्त्रेण षोडशं हुत्वा बिंबस्यैव हृदि स्मरेत्
अथ ब्रह्मषडंगैश्च प्रत्येकन्तु शताहुतिः ३६
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु
स्थापको होतृभिस्सार्द्धं स्नानत्रयमथाचरेत् ३७
अंगन्नयासकरन्नयासं पूर्वोक्तविधिना कुरु
पूर्वोक्तविधिमार्गेण पूजयेत् गुरुमूर्तिपान् ३८
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिञ्च शिरसा हुत्वाग्निन्तु विसर्जयेत् ३९
उत्थाप्य शयनाल्लिंगं स्नानवेद्योपरिन्नयसेत्
अंगैरंगानि विन्नयस्य अक्षराण्येव विन्नयसेत् ४०
घृतं शिरोर्पणन्तस्य कुर्यात्पूर्वोक्तमार्गतः

कुंभानुद्धृत्य बिंबाग्रे स्थापयेत्स्थरिडलोपरि ४१
कुंभात् बीजं समादाय तत्तत् बीजोपरिन्यसेत्
तत्कुंभस्थोदके बिंबं स्नापयेद्देशिकोत्तमः ४२
अस्त्राणाञ्चैव बीजानि पीठाब्जे स्वस्वदेशतः
विन्नयस्त्वा तज्जलैर्बिंबं स्नापयित्वा हृदार्च्चयेत् ४३
आलयन्तु नयित्वाथ प्रभूतहविषन्ददेत्
एवं वज्रादिरूपाणि स्थापनीयानि देशिकैः ४४
तत्तद्देवायुधानेषु तत्प्रधानं यथा तथा
बिंबाधिवासहोमानि कुरुध्वं स्थाप्य पूजयेत् ४५
तेषामावृतकत्वेन शूलन्तु परिवर्जयेत्
सर्वमर्कसमानन्तु सर्वास्तस्याथ मूर्तिनाम् ४६
एवं यः कुरुते मर्त्त्यस्सपुरयां गतिमाप्नुयात् ४७
इति पाशुपतस्थापनविधिपटल एकोनसप्ततितमः

विमानस्थापनविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि विमानस्थापनं परम्
सर्वपापहरं पुरयं सर्वसिद्धिकरं शुभम् १
हेमैर्वा रजतैस्ताम्रैश्शिलामयैश्च वित्तळैः
इष्टकादारुभिर्वाथ हर्म्यं कृत्वा सलक्षणम् २
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत् ३
विमानस्थापने हीने तेन हर्म्येन किल्बिषम्
तस्मात्सर्वप्रयत्नेन प्रासादस्थापनं कुरु ४
अंकुरारयर्पयेद्विद्यान्पूर्वोक्तविधिना सह
प्रागुक्तविधिना कुर्यात् मूर्तीनामक्षिमोचनम् ५
जलाधिवासनन्नोक्तं पुरयाहं वाचयेत्ततः

प्रासादस्य चतुर्दिक्षु मराटपन्तु प्रकल्पयेत् ६
नवममष्टहस्तं वा सप्तहस्तमथापि वा
कला स्तंभसमायुक्तं द्वादशस्तंभमेव वा ७
मराटपस्य त्रिभागैकम्मद्ध्यभागैकवेदिका
रत्निमात्रं समुत्सेधं दर्पणोदरसन्निभम् ८
कुराडानि परितः कुर्यात् मानुषे तु पदे क्रमात्
युगाश्रं योनिचापञ्चत्र्यश्रं वृत्तमथाब्जकम् ६
सप्ताश्रञ्चैव वस्वश्रमिंद्रादिषु प्रकल्पयेत्
प्राक्कुराडवेदिका मद्ध्ये वृत्तं प्राधानिकं कुरु १०
हर्म्याग्रे मराटपं ह्येवं कारयेल्लक्षणैस्सह
अन्नयेषां मराटपे ह्येवं कुर्यात्सर्वं युगाश्रकम् ११
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनन्तु वा
पञ्चाग्न्यायतनञ्चेत्तु विदिशासु विसर्जयेत् १२
प्रासादस्याग्रभागे तु मराटपं स्कन्दमराटपम्
हर्म्यस्यैव पुरे भागे मराटपं विष्णुमराटपम् १३
सौम्येब्जमराटपं प्रोक्तं दक्षिणे त्वीशमराटपम्
अलंकृत्य वितानाद्यैर्मंटपानि विशेषतः १४
भूसुरान्भोजयेत्पश्चात् मंटपं प्रतिबुद्धिमान्
पश्चादुच्छिष्टमुद्वास्य गोमयेनोपलेपयेत् १५
विमानाभ्यन्तरे पश्चात् वास्तुहोमं समाचरेत्
पर्यग्निकरणं हर्म्ये कुर्यात्ते नैववह्निना १६
प्रासादन्तन्तुनावेष्टय दर्भमालाभिरावृतम्
स्थूप्याद्युपानपर्यन्तं नववस्त्रेण वेष्टयेत् १७
दुकूलपट्टदेवांगैः कार्पासैश्च विभूषयेत्
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः १८
वेद्यूर्द्ध्वे स्थरािडलं कुर्यादष्टद्रोणैश्च शालिभिः

पूर्वे तु रक्तधान्नयैश्च दक्षिणे श्वेतशालिभिः १९
अपरे कृष्णशाल्यैश्च सौम्यायां पीतशालिभिः
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि २०
लाजदर्भैः परिस्तीर्य स्थण्डिलं पूजयेद्बुदा
चत्वारो देशिकाः प्रोक्ताः पूर्वोक्तैर्ल्लक्षणैर्युताः २१
शुक्लवस्त्रधरोष्णीषाश्शुक्लमाल्यैरलंकृताः
शुक्लगन्धानुलिप्तांगाः पञ्चांगभूषणैर्युताः २२
स्कन्दादिमण्टपेष्वत्र सर्वं कुर्यात्तु मूर्तिपैः
पूर्वोक्तलक्षणोपेतान् घटान्संगृह्य वर्मणा २३
शुक्लसूत्रांबुसंयुक्तान्सकूर्च्चान्सापिधानकान्
सवस्त्रान्पल्लवोपेतान्विन्नयसेत्स्थण्डिलोपरि २४
ऐशान्ये मण्टपे वेद्यां शिवकुंभन्तु मद्धयमे
विन्नयस्त्वा तस्य मद्धये तु पञ्चरत्नं विशेषतः २५
ध्यात्वा सदाशिवन्तस्मिन् शिवमन्त्रन्तु विन्नयसेत्
वर्द्धनीन्तस्य वामे तु तस्यां हेमं विनिक्षिपेत् २६
ध्यात्वा मनोन्मनीन्तस्यास्तन्मूलेनैव विन्नयसेत्
ईशस्य मद्धयमे वेद्यां स्थण्डिलोपरिविन्नयसेत् २७
स्कन्दकुंभन्नयसेद्धीमान् शिवकुंभस्य दक्षिणे
पञ्चरत्नं क्षिपेत्तस्मिन्ध्यात्वा तु स्कन्दरूपकः २८
तन्मूलन्तु न्नयसेत्तस्मिन्गन्धपुष्पादिभिः क्रमात्
तत्तदीशानमन्त्रैश्च पूजयेत्तु विशेषतः २९
लिंगमुद्राञ्च पद्माख्यां शक्तिमुद्रां प्रदर्शयेत्
अभितस्तु घटानष्टौ पूर्वाशादिषु विन्नयसेत् ३०
कुमारं षण्मुखञ्चैव सुब्रह्मण्यं सुराष्ट्रजम्
सेनापतिं सुरेशञ्च कार्तिकेयं गुहं क्रमात् ३१
पूर्वादिषु घटेष्वेतान् न्यसेत्तत् बीजमन्त्रकैः

ततदीशानमन्त्रेण गन्धपुष्पादिभिर्यजेत् ३२
ईशस्य मण्टपे वेद्यां स्थण्डिलेपरितो न्यसेत्
प्रधानकुंभन्नयस्त्वा तु दक्षिणं मूर्तिरूपकम् ३३
ध्यात्वा महेशबीजन्तु विन्नयसेत् घटमद्ध्यमे
परितोष्टघटेष्वेतान् भवादीन्पूर्वतो यजेत् ३४
भवं सर्वज्ञमीशानं पशुपतिं रुद्रमेव च
उग्रं भीमम्महादेवं यजेत्पूर्वादितः क्रमात् ३५
गन्धादिभिर्यजेद्धीमान् ईशानेनैव मन्त्रतः
अभितः कलशानष्टौ चक्रादिषु च विन्नयसेत् ३६
विद्येशानां स्वबीजैश्च न्यस्त्वा संपूजयेद्गुदा
विष्णुमण्टपके वेद्याः स्थण्डिलोपरिमद्ध्यमे ३७
प्रधानकुंभं विन्नयस्त्वा तन्मद्ध्ये विष्णुरूपकम्
ध्यात्वा बीजं न्यसित्वा तु गन्धादिभिर्यजेद्गुदा ३८
अभितस्तु घटानष्टौ चक्रादिषु च विन्नयसेत्
संकर्षणश्च प्रद्युम्नो वासुदेवोनिरुद्धकः ३९
रामश्चैवाच्युतश्चैव नारसिंहश्च वामनः
क्रमेणैतानि सर्वाणि अष्टकुंभेषु विन्नयसेत् ४०
ब्रह्ममण्टपके वेद्यां स्थण्डिलोपरिमद्ध्यमे
प्रधानकुंभं विन्नयस्त्वा तन्मद्ध्ये ब्रह्मरूपकम् ४१
ध्यात्वा बीजन्नयसित्वा तु पूजयेत्पुरुषेण तु
अभितस्तु घटानष्टौ इंद्रादिषु क्रमान्नयसेत् ४२
त्रयीमयीञ्च मूर्तिञ्च पद्माक्षं पद्मयोनिकम्
चतुर्मुखञ्च धातारं पितामहमजन्तथा ४३
तत्तन्मन्त्रं क्रमान्नयस्त्वा ईशाने नैव पूजयेत्
ऋगाद्यद्ध्ययनं कुर्याच्चतुर्द्दिक्षु क्रमेण तु ४४
देशिको मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ४५
पलाशखदिराश्वत्थ न्यग्रोधं प्लक्ष एव च
शमीबिल्वमपामार्गमौदुंबरं क्रमेण तु ४६
इंद्रादीनाञ्च कुण्डानां समिधस्संप्रकीर्तिताः
समिधाज्य चरुं लाजान्सर्षपञ्च यवन्तिलान् ४७
आढकं शालिमाषञ्च निष्पावञ्च क्रमेण तु
तत्तत् ब्रह्मषडंगैश्च समिधादीनि होमयेत् ४८
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात्
द्रव्यान्ते व्याहृतिं हुत्वा भवनं स्पर्शयेत्क्रमात् ४९
द्रव्यं प्रति च हुत्वा तु तत्तदीशासुवर्मणा
स्पृष्ट्वाधिष्ठानभागन्तु व्याहृतिञ्जुहुयात्ततः ५०
तेषां स्वनाममन्त्रेण जुहुयाच्छतसंख्यया
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु ५१
वस्त्रहेमांगुलीयाद्यैर्देशिकं संप्रपूजयेत्
दक्षिणान्दापयेत्तेषां त्रिंशन्निष्कन्तु चोत्तमम् ५२
तदर्द्धम्मद्ध्यमं ज्ञेयं तदर्द्धं कन्नयसं भवेत्
दक्षिणा द्विगुणन्दद्याद्गुरवे स्कन्दमण्टपे ५३
कला भुवनवर्णाख्यमन्त्राख्यशिखरे न्यसेत्
प्रथमं गुरुणा ध्यात्वा न्यस्त्वाधिष्ठानमेरुके ५४
तत्वाख्यं पादमग्रे तु पदाख्यं प्रतरे न्यसेत्
गळवर्गे तु वर्णाख्यं मन्त्राख्यं शिखरे न्यसेत् ५५
स्थूपिवर्गे कलाद्ध्वानं विन्नयसेद्विधिपूर्वकम्
देहं विमानमित्युक्तन्देहीलिंगमिति स्मृतम् ५६
सुमुहूर्त्ते सुलग्ने तु मन्त्रन्नयासं समारभेत्
ध्यात्वा सदाशिवं कुंभं मन्त्रं स्थूप्यग्रके न्यसेत् ५७
वर्द्धन्नया बीजमादाय तद्धटैशानं पूजयेत्

तत्तद्दिक्वीशदेवानां तत्तत्कुंभाभिषेचनम्  ५८
गन्धपुष्पादिभिश्चैव ईशानेन च पूजयेत्
नैवेद्यन्दापयित्वा तु तांबूलन्दापयेत्ततः  ५९
उत्सवं कारयेत्पश्चात्पूर्वोक्तविधिना सह
स्थापनं कुरुते मर्त्य सुखी स्यात्सुतबंधुभिः  ६०
उषित्वा सुचिरं कालं परांगतिमवाप्नुयात्  ६१
इति विमानस्थापनविधिपटलस्सप्ततितमः

सकलोत्पत्तिपटलप्रारंभः

वक्ष्यामि सकळोत्पत्तिं यजनञ्च विशेषतः
शिवं परात्परं ब्रह्ममप्रमेयमनूपमम्  १
अनिन्द्यमव्ययं सूक्ष्मं नित्यं भव्यगतं प्रभुम्
शुद्धत्वाच्च शिवं प्रोक्तं स्वयं तच्च परात्परम्  २
ब्रह्मत्वात् ब्रंहरूपाच्च ब्रह्ममित्यभिधीयते
प्रमाणव्यतिरिक्तत्वात् अप्रमेयमिति स्मृतम्  ३
अनौपम्म्यमधश्श्याममलत्वादनिन्द्यकम्
अक्षीणादव्ययं प्रोक्तं व्योमादि तच्च सूक्ष्मकम्  ४
नित्यं कारणशून्यत्वात् व्यपकात्सर्वतः स्मृतम्
सर्वेषामेव तत्वानां स्वामित्वाच्च प्रभु स्मृतम्  ५
शिवतत्वमिति प्रोक्तं तत्वानामखिलामयम्
तस्माच्छक्तिकरं ज्ञातं तस्माच्छक्तिकरं स्मृतम्  ६
शक्तेर्नादसमुद्भूतं नादात् बिन्दुप्रकीर्तितम्
एतेषां ध्यानपूजाश्च निष्कळत्वाच्च भिन्नकाः  ७
इत्येवं निष्कळं प्रोक्तं परं भावमिति स्मृतम्
सृष्टिस्थं लोकरक्षार्थं लोकस्योत्पत्तिकारणम्  ८
साधकानां हितार्थन्तु स्वेच्छया गृह्णतेन तु

साधनञ्च द्विधा चेति प्रोक्तस्सकळनिष्कळः ९
सकळञ्च तथा ज्ञेयमुच्यते क्रमशस्तथा
बिन्दोस्सदाशिवोद्भूतो लिंगपीठं प्रकारतः १०
लिंगशंभुसमुद्भूतो नाम्ना सदाशिवेन तु
पीठे शक्तिस्समुद्भूता मनोन्मन्याख्यया सह ११
योगीनाञ्च यतीनाञ्च मंत्रिणां ज्ञानिनां तथा
ध्यानपूजा निमित्ताय सकळं निष्कळं स्मृतम् १२
सदाशिवं महेशन्तु जाते चाव्यक्तरूपतः
मनोन्मन्या भवानी तु एवन्तु सकळं स्मृतम् १३
द्विविधं तत्समाख्यातं चलञ्चैवाचलन्तथा
चलं धातुमयं प्रोक्तं शैलं चलाचलं स्मृतम् १४
अचलं मृण्मयं ज्ञेयं भित्तिचित्रपटन्तथा
चित्रशैलञ्चलं हीनं चलं चित्रयुतन्तथा १५
कलयोरभितं युक्तं निष्कळञ्चेति कीर्तिताः
कलया सहितं यत्तत्तत्सकळकीर्तितम् १६
लिंगोद्भवञ्च चैवास्य वृषारूढं शशीधरम्
सन्ध्यानृत्तं पुरारिञ्च कामारिं कालनाशनम् १७
ततो मास्कन्दसहितं दक्षिणा मूर्तिविग्रहम्
अर्द्धनार्यञ्च हर्यर्द्धचण्डेशानुग्रहं परम् १८
भिक्षाटनञ्च कंकाळं मूललिंगं सुवासनम्
गंगाधरन्तथान्यञ्च प्रतिमाश्च विशेषतः १९
विधिनैतेन मन्त्रज्ञं आदिशैवो यजेत्क्रमात्
पटस्य भित्तिचित्रस्य चित्रयुक्तोपलस्य च २०
मृण्मयस्य विशेषेण कर्म्मचाया सहार्चयेत्
कर्माचायन्तु पीठे वा कुर्यान्मणिमयोर्चनम् २१
रूपावायतया तत्र प्रोक्तं स्नानार्द्रचन्दनम्

मणौ वा दर्पणे वाथ कृपाणे यत्र कुत्रचित् २२
प्रतिबिंबयुते द्रव्ये यात्रपूजाविधीयते
प्रतिमालक्षणोक्तन्तु कृत्वा वर्चायजेत् गुरुः २३
अंगालोज्य यतो देवं शक्त्याभंगविलोचनात्
जान्वन्तं वापि नाभ्यन्तं कर्म्मार्च्चां प्रतिमोच्छ्रियम् २४
चित्रहीनशिलायास्तु लोहस्यार्चां विवर्जयेत्
प्रोक्तमार्च्चना यस्य नोत्तमादी कृतार्च्चनम् २५
आदीकृतार्चनन्तत्र कर्मार्चायान्तु कारयेत्
मूले पराजितापूजा कर्तव्यन्देशिकोत्तमैः २६
आर्द्रा वा प्रोक्षणं वापि सुव्यक्ते लोहकर्मणि
स्थापितं केवलं यत्र परिवारादिभिर्युतम् २७
तत्तन्मंत्रोपचारैश्च कर्त्तव्या यजनं क्रमात्
केवलादन्नयबिंबा च स्नापितार्चाविशेषतः २८
हविष्यन्तं यजेद्धीमान्परिवारादिभिर्विना
कृत्वा तु विधिना स्नानं पूजकस्सन्धिपूजके २९
प्रविशेदालयं पश्चात् प्रदक्षिणत्रयं कुरु
प्रक्षाळ्यपाणिपादौ तु आचम्यविधिपूर्वकम् ३०
प्रागुक्तविधिना पश्चात्सळीकरणं कुरु
सम्मृज्य होमयेन्नैव कंकणं परिमार्जयेत् ३१
द्वारस्य बाह्यतश्चाग्रे हस्तमात्रेण मण्डलम्
कृत्वा तन्मद्ध्यमे स्थाप्य सर्वद्रव्याणि पात्रकैः ३२
क्षाळयेदस्त्रमन्त्रेण क्षाळयेन्ननिरीक्षयेत्
द्वारपूजां ततः कृत्वा प्रागुक्तविधिना सह ३३
प्रविश्याभ्यन्तरं पश्चात् घटन्तत्रापनीय च
बिंबशुद्धिं ततः कृत्वा यथा बिंबानुसारतः ३४
पूर्वसंध्यार्चितं माल्यमपनीय हृदा ततः

संशोद्धच मृरमयं लिंगं वस्त्रपिंडेन वा पुनः ३५
कुशैर्वा शोधयेद्धीमान् चित्रहस्तस्तथैव च
तथा च वर्णिततले केवलञ्चेञ्जलेन तु ३६
रात्रिचूर्णैश्च सौवर्णं राजतं लवरोन तु
ताम्रमम्लेन शुद्धिस्स्यादस्त्रमन्त्रेण सुव्रत ३७
शक्रादिष्वीळिकां ------ विन्नयसेत्क्रमात्
गुणत्रयैश्च सञ्च्छाद्य मद्धयमे तु हरिं यजेत् ३८
तस्योर्ध्वे कमलन्नयस्त्वा साष्टपत्रं सकर्णिकम्
तन्मद्धये विन्नयसेद्देवं षट्त्रिंशच्च कलामयम् ३९
कर्मार्चयायुतं तस्मात्कर्मार्चया समारभेत्
सद्येनावाहयेद्देवं विन्नयसेत् गुह्यकेन तु ४०
सन्निरोधञ्च घोरेण कुशया प्रोक्षयेद्बुधः
अंबरं भूषणञ्चैव उपवीतञ्च दर्पणम् ४१
ईशानेन प्रमाणेन पाद्यं सद्येन दापयेत्
वामेनाचमनं दत्वा वर्मणार्घ्यन्तु दापयेत् ४२
मालान्तु शिरसादद्यात् धूपं तत्पुरुषेण तु
दीपं वै नेत्रमन्त्रेण गौरीं वामे तु संयजेत् ४३
गंगाञ्च पूर्वदिग्भागे दक्षिणे तु विनायकम्
सेनापतिन्तु पाशिन्यां कोणेष्वस्त्रं यजेत्क्रमात् ४४
देवस्य त्वेति मन्त्रेण नैवेद्यन्तु निवेदयेत्
हृदाचाचमनं दद्यात् निर्माल्यञ्च विवर्जयेत् ४५
तांबूलं दापयेत्पश्चात् मुखवाससमन्वितम्
गौर्यास्सेनापतिञ्चैव तत्तत् ब्रह्मषडंगकैः ४६
कुर्यात्सर्वोपचाराणि क्रिया भेदो न विद्यते
ददेच्चलस्य दराडस्य सकळान्तानि वेदकम् ४७
लिंगे निवेदितं यत्तु निर्माल्यमिति कीर्तितम्

भूमौ वह्नौ जले वाथ गोगुणार्त्थं विवर्जयेत् ४८
कार्यस्वमलबंधत्वान्निर्माल्यन्तु न भोजयेत्
भुक्तञ्चेत्तत्प्रमादात्तु अतिकृच्छ्रं समाचरेत् ४९
प्रमादाल्लंघनं यत्र प्राजापत्यं चरेत्सुधीः
स्पर्शने पाणिपादौ तु प्रक्षाळ्याचमनं कुरु ५०
आपोहिष्ठेति मन्त्रेण प्रोक्षयेच्छुद्धवारिणा
प्रतिमानाञ्च सर्वेषां निर्माल्यकन्नविन्यसेत् ५१
भोज्यन्तत्परिवाराणामन्येषां न तु भोज्यकम्
गणेशस्य तु नैवेद्यं सर्वेषां भोज्यमुच्यते ५२
सेनापतेस्तु नैवेद्यं भोज्यञ्चैव जयार्त्थिनाम्
दुर्गानिवेद्यं यद्भोज्यमायुरारोग्य वर्द्धनम् ५३
ज्येष्ठायास्तु निवेद्यं यत् भोग्यं तच्छ्रीविवर्द्धनम्
अभोज्यं भानुभक्तानां नैवेद्यं भास्करस्य तु ५४
अन्येषामपि सर्वेषां भोज्यं नैवेद्य कारये
नैवेद्यन्तु महाकोटय्चं भोज्यं पुत्रविवर्द्धनम् ५५
मातृणाञ्चैव नैवेद्यं ब्राह्मणानामभोज्यकम्
सर्वेषामपि भोज्यं हि उमादेवी निवेदितम् ५६
हरेर्निवेदितं यत्तत्सर्वेषां भोज्यमुच्यते
क्षेत्रपालस्य नैवेद्यं भोज्यं रोगविवर्द्धनम् ५७
वास्तुदेवस्य नैवेद्यं भोज्यं ज्ञानविवर्द्धनम्
ब्राह्मानान्तु भोज्यं हि ब्रह्मणश्च निवेदितम् ५८
नैवेद्यं लोकपलानामारोग्यं कुरुते सदा
मन्मथस्य निवेद्यं तत्सर्वेषां भोज्यमुच्यते ५९
प्रायश्चित्तनिमित्तन्तु प्राजापत्यादिकं श्रुणु
अनग्न्यायात्र्यहं साये वर्म्ममन्त्रैर्जपेत्तदा ६०
पञ्चमन्तु त्र्यहं जप्त्वा चान्नमद्यादयाचितम्

त्रियहञ्चैव नाश्नीयात्ततः परं विशेषतः ६१
सदाशिवं ततो ध्यात्वा वक्त्रमंत्रं जपेत्ततः
जपेत्सहस्रसंख्या तु दिनं प्रतिदिनं प्रति ६२
प्राजापत्यमिदं ज्ञेयं सर्वपापनिकृन्तनम्
नवाहमग्रमंत्रन्तु भुंजीत गुह्यकं जपेत् ६३
पश्चात्त्र्यहन्तु नाश्नीयात्सहस्रं हृदयं जपेत्
अतिकृच्छ्रमिति प्रोक्तं दिनं प्रतिजपेत्ततः ६४
सप्तजन्मकृतं पापमनेनैव विनश्यति ६५
इति सकळोत्पत्तिपटलं एकसप्ततितमः

सकळस्थापनविधिपटलप्रारंभः
स्थापनक्रमविधिं वक्ष्ये सर्वशान्तिकरं परम्
अधुना सकळादीनां स्थापनक्रममुच्यते १
सहितं स्थापनं यत्र एकदेशिकमाचरेत्
तद्विधिर्द्विविधं प्रोक्तं स्कन्दोमासहितस्य तु २
अंकुरादिप्रतिष्ठान्तं एकदेशिकमाचरेत्
अयनं द्विविधं प्रोक्तं दक्षिणञ्चोत्तरन्तथा ३
देवानान्तु दिवाकाले उत्तरायणमेव तु
देवानान्दक्षिणं रात्रौ ज्ञात्वा कर्मसमारभेत् ४
रात्रौ तु लिंगं स्थाप्य नाशत्यखिलञ्जगत्
राजप्रधानमहिषी प्रधानश्च गजो मृतः ५
तस्मात्सर्वप्रयत्नेन दिवाकाले प्रतिष्ठितम्
सकळानान्तु सर्वेषां सर्वमासेषु संग्रहेत् ६
भवानीस्थापनं वक्ष्ये सहितं भिन्नमेव च
सहितस्थापनं सर्वमेकदेशिकमाचरेत् ७
अन्नयथाचेन्नकर्त्तव्यं राजाराष्ट्रं विनश्यति

सस्यगोप्राणिनाशस्स्यात्सर्वशत्रुविवर्द्धनम् ८
स्थापयेद्यदिमोहात्तु ग्रामनाशं भवेद्ध्रुवम्
प्रमादात्स्थापनं कुर्यात्प्रतिष्ठां पुनराचरेत् ९
आरंभाद्यन्तमेवन्तु एकदेशिकमाचरेत्
तस्याभावे तु पुत्रो वा शिष्योथ गुरुरेव वा १०
अन्नयथा चेन्न कर्त्तव्यं कर्त्ताभर्त्ता विनश्यति
आचार्यस्यानुकूलानि मूर्त्तिपानान्तु तत्र वै ११
एकसन्तानकर्त्तव्यं मूर्त्तिपानां विशेषतः
आचार्यो मुर्त्तिपैस्सार्द्धं स्नानं कृत्वा तु पूर्ववत् १२
अलंकृत्य स्वदेहन्तु प्रविशेद्यागमराटपम्
आचार्यः कृतनित्यस्तु कृतमंत्रादि तर्प्पणः १३
कृतभान्वर्च्चनश्शुद्धः कृतमंत्रपरिग्रहः
सामान्नयार्घ्यकरो भूत्वा प्रविशेद्यागमराटपम् १४
इंद्रपावकयोर्मद्धये मद्धय ईशे तु चापि वा
स्थापयेत्सौरकुंभन्तु पूजयेत्तु यथाविधि १५
बहिर्गत्वा द्विराचम्य पूर्वोक्तविधिना सह
द्वाराणयस्त्रेण संप्रोन्द्य द्वारद्वाराधिपान्नयसेत् १६
सौरपूजानकर्तव्या रजन्यान्तु विशेषतः
सामान्ययजनं रात्रौ विशेषं प्रातरेव च १७
कर्तव्यमधिवासञ्च सौरकुंभं विनार्चयेत्
आदौ शान्तिकलाशब्दद्वाराय नम इत्यपि १८
प्रतिष्ठां पूजयेत्पूर्वे विद्या द्वारन्तु दन्निणे
वारुणे तु प्रतिष्ठाप्यं निवृत्ताख्यमुदक् दिशि १९
प्राच्यान्नन्दिमहाकाळौ याम्ये भृंगिविनायकौ
पश्चिमे वृषभस्कन्दौ देवी चराडौ तथोत्तरे २०
प्रणवादिनमोन्ताश्च चतुर्थ्यन्ताः क्रमाद्यजेत्

तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ २१
पर्जन्यौ लोकनामानि भूतसंजीवनामृतौ
धनदश्री प्रदौ द्वौ द्वौ पूजयेदनुपूर्ववत् २२
भूलोकश्च भुवर्लोकः पूर्वद्वारे तु पूजयेत्
दक्षिणे पूजयेद्विद्वान्स्वर्लोकजनलोककौ २३
तपोलोकः सत्यलोकः पश्चिमे तु प्रपूजयेत्
लोकालोकशिवालोकौ उत्तरद्वारकं यजेत् २४
आदित्यसोमौ प्राक् द्वारे पूजयेद्दक्षिणे बुधः
अंगारकबुधौ चैव पश्चिमे तु यजेत्ततः २५
यजेत् बृहस्पतिश्शुक्र उत्तदेशनिराहुकौ
इत्येवं ग्रहकुंभेषु द्वौ द्वौ द्वारं प्रपूजयेत् २६
गंगा च यमुना चैव नर्मदा च सरस्वती
सिन्धुगोदावरी चैव कावेरी सरयूस्तथा २७
द्वौद्वौ द्वारं प्रपूज्याथ गन्धपुष्पादिभिः क्रमात्
वैकर्त्तनं विवस्वन्तं मार्त्ताण्डं भास्करं रविम् २८
लोकप्रकाशकञ्चैव पूजयेत्तु विचक्षणः
पश्चिमे लोकसाक्षिञ्च आदित्यञ्च त्रिविक्रमम् २९
उत्तरे तु यजेत्सूर्यमंशुमांश्च दिवाकरः
एते वै द्वादशादित्याः पूजयेत्तु विचक्षणः ३०
कृतयुगं यजेत्पूर्वे त्रेतन्तु दक्षिणे तथा
द्वापरं पश्चिमे पूज्य कलौ चैवोत्तरे दिशि ३१
पूजयेत्तु विशेषेण गन्धपुष्पादिभिः क्रमात्
ऋग्वेदन्तु यजेत्पूर्वे यजुर्वेदन्तु दक्षिणे ३२
पश्चिमे सामवेदन्तु उत्तरे थर्ववेदकम्
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैर्यजेद्धदा ३३
द्वारं प्रतिविशेषेण पूजयेत् श्रीगणौ बुधः

वज्रं शक्तिञ्च दराडञ्च खट्गं पाशांकुशौ तथा ३४
गदात्रिशूलञ्चक्रञ्च पद्मञ्चेति दशायुधाः
पुर्वादिदिक्पताकासु पूजयेत्तु दशायुधान् ३५
कुमुदं कुमुदाद्त्तञ्च पुराडरीकञ्च वामनम्
शंकुकर्णस्तथा सर्वे त्रिरोत्रस्सुप्रतिष्ठितः ३६
पूर्वात् द्ध्वजाष्टपालाना समभ्यर्च्य यथा क्रमम्
हेतुकं त्रिपुरघ्नञ्च वेताळञ्चाग्निजिह्नकम् ३७
काळंकराळिनं भीमञ्चैकपादन्तथैव च
पूर्वादीशानपर्यन्तं पूजयेत्तु यथा क्रमम् ३८
स्राकाशे स्रचलञ्चैव पाताळे हाटकेश्वरम्
एवन्तु भूमिपालानां गन्धपुष्पादिभिर्यजेत् ३९
प्रत्येकं ह्याढकं शालि प्रत्येकन्तु घटं यजेत्
प्रत्येकं हैमशालिन्तु चतुः प्रस्थेन संयुतम् ४०
न्यसेद्वापदमालिख्य तदर्द्धं तराडुलैरपि
तदर्द्धन्तु तिलैश्चैव प्रत्येकं कलशं प्रति ४१
पश्चिमद्वारमाश्रित्य नित्यद्वारादिकं यजेत्
दिव्यन्तरिद्मभूमिष्ठ विघ्नानुत्सार्यबुद्धिमान् ४२
दद्मजंघां समुत्द्मिप्य वामशाखां विशेषतः
स्रस्त्रेरणोदुंबरेरणैव द्वारं प्रतिविचद्मराः ४३
वास्तोष्पतये चेति ब्रह्मरो नम इत्यपि
संपूज्य गन्धपुष्पाद्यैर्ब्रह्मारान्निर्ऋतौ यजेत् ४४
यागमराटपकंपेषु पृथिवीतत्वकं यजेत्
तृरोषु जलतत्वं च बन्धेषु चाग्नितत्वकम् ४५
वंशेषु वायुतत्वं च स्थूरासुगगनन्तथा
विताने चंद्रबिंबञ्च दर्भमालासु वासुकिम् ४६
इत्येवं मराटपं पूज्य व्याप्यं सदाशिवान्तकम्

दर्पणं पूर्णकुंभञ्च वृषभं युग्मचामरम्  ४७
श्रीवत्सं स्वस्तिकं शंखं दीपो देवाष्टमंगलम्
पूर्वादीशानपर्यन्तं पूजयेदष्टमंगलम्  ४८
ऊर्वशी मेनका चैव रंभा चैव तिलोत्तमा
सुमुखी दुर्मुखी चैव कामुकी कामवर्धना  ४९
एतास्त्वप्सरसा प्रोक्तास्त्वष्टमंगळधारिकाः
संपूज्य गन्धपुष्पाद्यैरस्त्रप्राक् च्छिरकल्पना  ५०
सर्वावकुण्ठनं यागगेहं संरक्ष्यदेशिकः
उपविष्ट उदग्वक्त्रो भूतशुद्धिं समाचरेत्  ५१
सकळीकरणं कृत्वा कृत्वान्तर्यजनो गुरुः
विशेषार्घ्यन्ततः कुर्याद्यवसिद्धार्थचाक्षतैः  ५२
आपस्तिलकुशाग्रैश्च क्षीरपुष्पसमन्वितम्
तदंभसा तु संप्रोक्ष्य स्वशिरो द्रव्यसंहतिम्  ५३
अस्त्रमन्त्रेण तत्सर्वं कवचेनावकुण्ठयेत्
हृदाभिमंत्र्य प्रत्येकं तिलकञ्चन्दनन्नयेत्  ५४
शिवहस्तञ्च संपूज्य तदारोपि तदस्तके
ज्ञानासितत्वसंख्यातैश्चतुरूनैरथापि वा  ५५
दर्भैः प्रादेशमात्रन्तु निर्मितं शस्त्रमंत्रितम्
कल्पयेत्पञ्चगव्यन्तु तद्विधानमिहोच्यते  ५६
मण्टपस्य शुभे भागे क्षेत्रे नवपदे कृते
पञ्चतत्वकृतन्नयासे पञ्चपात्राणि विन्यसेत्  ५७
शिवसादाख्यविद्यायां काले पुंसीवदेशिकः
पुप्रतिष्ठं सुशान्तञ्च तेजो वदमृतात्मकम्  ५८
रत्नोदकञ्च संकल्प्य क्षीरन्दधिघृतन्नयसेत्
गोमयञ्चैव गोमूत्रमीशानाद्यैस्तु मंत्रयेत्  ५९
लाजचन्दनसिद्धार्थभस्मपुष्पकुशाक्षताः

हेतयोस्त्रेण सप्तैते विधातव्याविमिश्रिताः ६०
नैर्ऋत्याम्मराटपे स्थित्वा संस्कृतिं मराटपस्य तु
कुर्यादीशानवक्त्रस्तु संस्कारैर्वीच्चणादिभिः ६१
विकीर्यविकिरानीशे कुशकूर्च्चं समाचरेत्
वेद्यां वामेशके वापि ईशानं ब्रह्मपश्चिमे ६२
हेमाद्येकतमं कुंभं मानीयागर्हितांभसा
पूरितं पल्लवोपेतं स्वर्णवस्त्रादिसंयुतम् ६३
संहृतौ विकिरास्त्राणामासनन्तु चलाचलम्
संकल्प्य मूर्त्तिमंत्रेण मूर्त्तिभूतं घटन्नयसेत् ६४
वर्द्धनीं सोदकां सूत्रं वस्त्रस्वर्णादिसंयुताम्
विन्यसेदस्त्रभूतानां प्रत्यङ्नाळसमन्वितम् ६५
संपूज्य गन्धपुष्पाद्यैर्घटस्थाणुं गुरूत्तमः
इंद्राग्नेतियमञ्चैव निर्ऋतिर्वारुणन्तथा ६६
वायुसोमन्तथैशानं पूजयेत्प्राक् दिशादितः
विरिञ्चिमीशदच्चस्थं विष्णुञ्च निर्ऋतिवामकम् ६७
घटस्थं कलशस्थं वा कुढयगं वा यजेत् गुरुः
भोभोशक्रत्वयाचात्र दिशिविघ्नप्रशान्तये ६८
सावधानेन यागाञ्चं स्थातव्यस्तु शिवाज्ञया
सर्वेषां लोकपालानामनेन क्रमयोगतः ६९
शिवाज्ञां श्रावयेत्कुंभं भ्रामयेदग्रतोस्त्रकम्
विन्नयसेत्कुंभवर्द्धन्नयौ पूर्ववत्सर्वकारणम् ७०
स्थिरासनन्तु संपूज्य देवमस्त्रञ्च पूजयेत्
मूर्त्तिविद्या तनुं सांगं शिवं सावरणान्तकम् ७१
पूजयित्वा तयोरैक्यं कल्पयेद्धेनुमुद्रया
सव्यमुष्टिक्रमात्पिराडं लिंगमंगुष्ठको हरः ७२
हृदये कलशं स्पृष्ट्वा पूर्वमंगुष्ठवर्मणा

संस्पृशेद्वर्द्धनीं पश्चात् मुनिनाहृदयाणुना ७३
मुक्तये च पुरा स्पृष्ट्वा वर्द्धनीं मुष्टिनैव तु
स्पृशेदंगुष्ठकाग्रेण चरमञ्चघटन्तथा ७४
उमायै गर्भरूपिरायै लिंगरूपधराय च
शंकराय नमस्तुभ्यं इति स्तुत्वा नमोनमः ७५
यज्ञस्यास्य पतिस्त्वं हि मूर्त्तिरेषातवाचला
एषते ज्ञाननिस्त्रिंशत् गृहाणस्वस्वमायुधम् ७६
मयाप्रवृत्तितश्चायं यजनं भवतः क्रतुः
रक्षणी यस्त्वया तर्हि समाप्तिर्यावदस्य हि ७७
यज्ञरक्षाधरान्तस्थ नवमारोप्य देशिकः
विनायकं वायुदेशे ऐशाने तु गुरुं यजेत् ७८
संप्रात्थ्यैंवं करोमीति लब्धानुज्ञः शिवाद्गुरुः
मंत्रितं मूलमंत्रेण सप्तकृत्वा स्थितं शुभम् ७९
उष्णीषं शिरसिन्यस्य शिवेनैक्यन्तु भावयेत्
अथवा न्यप्रकारेण पूर्ववत्द्वारकं यजेत् ८०
प्राच्यां नन्दीमहाकाळौ याम्ये भृंगिविनायकौ
वारुणे वृषभस्कन्दौ देवी चराडौ तदुत्तरे ८१
इंद्रवल्लीं यमश्चैव निर्ऋृतिर्वरुणस्तथा
वायुस्थोमस्तथैशान अनन्तञ्च पितामहम् ८२
गणेशमनिले न्यस्य ईशाने तु गुरुं यजेत्
अन्यासां देवतानाञ्च विना सर्वं समाचरेत् ८३
लिंगस्य प्रतिमायाश्च परिवाराणां प्रतिष्ठितम्
स्थापने प्रोक्षणे चैव पवित्रे दमनकेऽपि वा ८४
उत्सवे शीतकुंभे च एवं सर्वं समाचरेत्
द्वारपूजाविहीनञ्चेत् राजराष्ट्रं विनश्यति ८५
तस्मात्सर्वप्रयत्नेन द्वारपूजासमन्वितम्

यावत्क्रियान्तमाचार्यस्तावत्कर्मसमाचरेत् ८६
यागोपकरणं सर्वमाचार्याय प्रदापयेत्
एवं कृत्वा विशेषेण शिवलोकमवाप्नुयात् ८७
इति सकळस्थापनविधिपटलद्विसप्ततितमः

सकळप्रोक्षणविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण सकळप्रोक्षणं परम्
आयुः श्रीकीर्तिपुष्टिञ्च धनधान्यविवर्द्धनम् १
प्रासादभिन्ने छिन्ने वा पतिते चांगहीनके
प्रमादाद्बुद्धिवैषम्ये दुर्जनस्पर्शने तथा २
अंगहीनेषु कार्येषु पुनस्सन्धानकर्मणि
प्रभाहीने चांगच्छन्ने उपांगहीने तथैव च ३
अंगभेदमिदं प्रोक्तन्तच्चतुर्विधमुच्यते
अंगप्रत्यंगसांगञ्च उपांगञ्चतुरो भवेत् ४
शिरो वक्त्रञ्च हृदयमंगञ्चेति प्रकीर्तितम्
कुक्षिकण्ठस्तनौ बाहूनाभि गुह्योदरस्तथा ५
ऊरुजानुद्वयञ्चैव प्रत्यंगञ्चेति कीर्तितम्
नेत्रनासाग्रकर्णौ च पाणिपादौ तलांगुली ६
जटामकुटसंयुक्तं सांगञ्चेति प्रकीर्तितम्
वस्तोपवीतमाला च आयुधाभरणन्तथा ७
गंगादिचंद्रं भस्मारन्नागकूर्मन्तथैव च
प्रभासहितसंयुक्तं पद्मबन्धन्तथैव च ८
आसनावरणञ्चैव उपांगञ्चैव कीर्तितम्
शिल्पिस्पर्शे तु कार्येषु पूजाहीने तथैव च ९
तस्करस्पर्शने वापि चोरेणोत्थापने तथा
प्रमादात्पतिते भूमौ उत्सवे पतिते तथा १०

पूजाहीने तथा मासे स्नपनं शान्तिहोमकम्
षाण्मासादूर्ध्वहीने तु पूजायास्तु प्रजापते ११
प्रोक्षणन्तु प्रकर्तव्यं कुर्याज्जलाधिवासनम्
उत्सवादूर्द्ध्वहीनेन कुर्यात्संप्रोक्षणन्तथा १२
तिथिवारञ्च नक्षत्रन्निरपेक्षन्तु कारयेत्
रत्नादिशयनान्तञ्च कुर्यात्सकळकर्मणि १३
पूजाहीनं त्रिवर्षोर्द्ध्वं प्रतिष्ठायां प्रचक्षते
रत्नन्यासाक्षिमोक्षञ्च जलाधिवासनं विना १४
अन्यानि सर्वकार्याणि पूर्वोक्तलक्षणैर्युतम्
माघप्रोष्ठपदे चैव आषाढे मार्गशीर्षके १५
पूजयित्वा विशेषेण शेषाणां प्रोक्षणेऽपि च
पूर्वपक्षे तु पुष्यर्क्षे यजमानानुकूलके १६
अंकुराण्यर्पयेत्पूर्वं प्रोक्षणादिविशेषतः
प्रासादस्याग्रके वापि याम्ये वा पावके तथा १७
ऐशान्यां पश्चिमे वापि मण्टपन्तु युगाश्रकम्
नवहस्तं पञ्चहस्तं उत्तमं मद्ध्यमाधमम् १८
षोडशस्तंभसंयुक्तं युगद्वारसमायुतम्
पूर्वोक्तलक्षणैर्युक्तं चतुस्तोरणभूषितम् १९
मण्टपन्नवभागन्तु मद्ध्ये वेदीं प्रकल्पयेत्
रत्निमात्रोच्छ्रियं कुर्यात् षोडशांगुलमेव वा २०
गोमया लेपनं कृत्वा दर्पणोदरसन्निभम्
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात् २१
नवाग्निं वाथ पञ्चाग्निमेकाग्निं वा विशेषतः
दिशासु चतुरश्राणि विदिशास्वब्जकुण्डकम् २२
शक्रशांकरयोर्मद्ध्ये वृत्तं प्राधानकं कुरु
पञ्चाग्न्यायतनं चेत्तु अब्जकुण्डानि वर्जयेत् २३

प्रत्येकं व्याहृतिं हुत्वा तत्राज्येन प्रकल्पयेत्
पूर्णाहुतिन्ततो हुत्वा मूलमन्त्रेण हूयते २४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
स्विष्टमग्नेतिमन्त्रेण जुहुयात्तदनन्तरम् २५
वास्तुहोमन्ततः कृत्वा समरीयपदेषु च
गन्धं पुष्पञ्च धूपञ्च दीपमर्घ्यं हृदाचरेत् २६
वेद्यास्तु देवतोद्धृत्य स्नानवेद्यान्निवेशयेत्
सद्योजातेन मंत्रेण स्रावाहनं प्रकल्पयेत् २७
वामदेवेन संस्थाप्य अघोरेण तु सन्निधिम्
पाद्यमाचमनञ्चार्घ्यं एतन्मंत्रेण दापयेत् २८
अष्टत्रिंशत्कलायोगं महेशं बीजं विन्नयसेत्
प्राणप्रकृतियोगन्तु न्यस्त्वारूपं विचिन्तयेत् २९
वेद्याः कुंभं समुद्धृत्य ईशानेनाभिषेचयेत्
घृतं शिरोर्पणं कुर्यात्स्नापयेत्तु शिवांभसा ३०
विद्येशान्कुंभमुद्धृत्य स्वस्वमंत्राभिषेचयेत्
प्रोक्षणान्ते तु स्नपनं यथावित्तानुसारतः ३१
गन्धपुष्पञ्च धूपञ्च दीपञ्चैव हृदा बुधः
कलशं विंशदुद्धृत्य शिवकुंभेषु योजयेत् ३२
नैवेद्यं दापयेत्पश्चात् यथावित्तानुसारतः
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३३
इति सकळप्रोक्षणविधिपटलः त्रिसप्ततितमः

लिंगोद्भवविधिपटलप्रारंभः

स्थापनं संप्रवक्ष्यामि परं लिंगोद्भवस्य तु
यत्नदं श्रीकरं पुण्यं राजराष्ट्रविवर्द्धनम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने

शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत् २
रत्नन्यासं प्रकर्तव्यं पूर्वोक्तविधिना बुधः
अतः परं विशेषेण कुर्यान्नयनमोक्षणम् ३
नेत्रद्वययुतर्क्षेषु सुमुहूर्ते सुलग्नके
विचित्रमण्टपे मद्ध्ये स्थंडिलं शालिभिः कुरु ४
तस्योर्ध्वे विन्यसेत् बिंबं वामे वामे त्वजं हरिम्
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत् ५
असितं मण्डलं लिख्य दृष्टिमंडलमालिखेत्
नेत्रमन्त्रं समुच्चार्य लेपयेद्देशिकोत्तमः ६
ब्रंहाणञ्च हरिञ्चैव हंसवाराहरूपकान्
नयनोन्मीलनं ह्येवं कारयेच्छिल्पवित्तमः ७
हेमांगुलीयवस्त्राद्यैस्संपूज्यो ह्यस्य शिल्पिनम्
तदग्रे स्थंडिलं कृत्वा बिंबं तस्योपरिन्यसेत् ८
अभितः कलशानष्टौ ससूत्रान् शुद्धोदपूरितान्
सकूर्चान्सापिधानांश्च सवस्त्रानिंद्रादिषु न्यसेत् ९
इंद्रादीन्लोकपालांश्च कलशेषु यजेत्तदा
तर्जन्यनामिका मद्ध्यां गुलिभिस्सौवर्णकैर्नखैः १०
सूर्यसोमाग्निदेवत्यैः प्रोक्तं नेत्रत्रयेषु च
नेत्रं मध्वाज्यसूक्ताभ्यां मध्वाज्याभ्यान्तु तर्पयेत् ११
मधुना च घृतेनैव पात्रैः प्रस्थप्रपूरिते
तत्सूत्राभ्यां क्रमेणैव दर्शयेत्तु विचक्षणः १२
गौर्धेनुभाव्यमंत्रेण सवत्सां गां प्रदर्शयेत्
धान्यराशिमघोरेण ब्रह्मसूक्तेन भूसुरान् १३
ब्रह्मणश्च हरेरेवं कारयेत्तु विचक्षणः
प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत् १४
स्नापयेत्पञ्चगव्यैश्च अष्टमृत्सलिलैर्हृदा

स्नापितैः कलशाद्भिस्तु प्रतिमां स्थापयेत्ततः १५
अष्टमृत्सलिलैर्विष्णुं ब्रंहाणमभिषेचयेत्
गंधपुष्पादिभिर्बिंबानीशानेन तु पूजयेत् १६
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
वस्त्रैराभरणैर्माल्यैर्बिंबान्संपूजयेत्ततः १७
रंभे वा शिबिकायां वा रथे वा रोपयेत्ततः
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम् १८
ग्रामप्रदक्षिणं कृत्वा प्रविश्याथ जलाशयम्
तीरे तु स्थंडिलं कृत्वा शालिभिर्विमलैर्बुधः १९
तस्योर्ध्वे तु न्यसेद्बिंबान्गंधादिभिर्यजेद्बृदा
नचानाहतवस्त्रेण वेष्टयेत्तु पृथक्पृथक् २०
कण्ठदघ्ने जले मद्ध्ये प्रपां कृत्वा तु सुन्दराम्
चतुर्गात्रसमायुक्तं वितानध्वजसंयुतम् २१
दर्भमालासमायुक्तं तन्मद्ध्ये फलकोपरि
शाययेत्प्रतिमाञ्चैव प्राक्शिरश्चोर्ध्ववक्त्रकम् २२
उभयोः पार्श्वयोर्विष्णुं ब्रंहाणं वा यजेद्बुधः
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान् २३
इंद्रादिषु च विन्नयस्य लोकपालान्नयजेद्बृदा
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् २४
आलयस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा
द्वादशं दशहस्तं वा नवहस्तमथापि वा २५
कलास्तंभैर्युगाश्रन्तु कारयेन्मण्टपं बुधः
तत्त्रिभागैकभागेन तन्मद्ध्ये वेदिकां कुरु २६
कला द्वयसमुत्सेधा दर्पणोदरसन्निभा
मानुषे तु पदे चैव कुंडानि परितः कुरु २७
युगाश्वञ्चेन्दुखण्डञ्च भूताश्रन्तु गुणाश्रकम्

इंद्रादिषु महाशासु कोणेष्वेव कुशेशयम्  २८
ईशानचक्रयोर्मद्धये प्रधानं वर्तुळं कुरु
तस्यपश्चिमभागे तु विष्णोस्तु परिकल्पयेत्  २९
ब्रंहणः पूर्वभागे तु स्नानश्वभ्रं प्रकल्पयेत्
पश्चाच्छिल्पिनमुद्वास्य गोमयेनानुलेपयेत्  ३०
मणटपं भूषयेत्पश्चात् युगद्वारस्य तोरणम्
वितानध्वजसंयुक्तं गात्रवेष्टनसंयुतम्  ३१
मुक्तादामैश्च विविधैर्दर्भमाला समावृतम्
मंगलांकुरसंयुक्तमष्टमंगलसंयुतम्  ३२
ब्रांहणान्भोजयित्वा तु उच्छिष्टो द्वासनं कुरु
गोमया लेपनं कुर्यात् प्रोक्षयेत्पुरुषेण तु  ३३
समरीय पदे धीमान्वास्तुहोमं ततः कुरु
पर्यग्निकरणं कुर्यात् मणटपन्तेन वह्निना  ३४
द्वारपूजादिकं सर्वं स्थापनक्रमवत् बुधः
स्थणिडलं कारयेद्वेद्यां अष्टद्रोणैश्च शालिभिः  ३५
तदर्द्धैस्थणिडलोपेतं तदर्द्धैस्तु तिलैरपि
दर्भैः पुष्पैः परिस्तीर्य स्थणिडलं पूजयेद्धृदा  ३६
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्
कलादुत्तीर्य बिंबांश्च स्नानश्वभ्रोपरिन्यसेत्  ३७
परितः कलशस्थांश्च लोकपालान्विसर्जयेत्
वस्त्रादीनि विसृज्याथ पूर्ववच्छुद्धिमाचरेत्  ३८
गंधपुष्पादिभिर्बिंबानीशानेन तु पूजयेत्
कौतुकं बंधयेद्धीमान्बिंबान्प्रागुक्तमार्गतः  ३९
शयनं कल्पयेत्पञ्च चर्मजाद्यैरनुक्रमात्
स्नानवेद्यां समुद्धृत्य विन्यसेच्छयनोपरि  ४०
गंधपुष्पादिभिर्बिंबं पूजयेद्धृदयेन तु

शयने शाययेद्बिंबं प्राक्शिरश्चोद्ध्र्ववक्त्रकम्  ४१
ब्रंहाणं दक्षिणे चैव विष्णुं वामेन शाययेत्
वस्त्रेण वेष्टयेद्बिंबान्गंधादिभिर्यजेद्बृदा  ४२
प्रधानकुंभान्तेषां च शिरोभागेषु विन्यसेत्
वर्द्धनीं विन्यसेद्धीमान् शिवकुंभस्य चोत्तरे  ४३
ससूत्रानुदकोपेतान्सकूर्चान्सापिधानकान्
सवस्त्रान्नृत्तसंयुक्तान्कुंभान्संप्रोक्ष्य वर्मणा  ४४
तत्तन्मूर्त्या कृतिं ध्यात्वा तत्तत् बीजं घटेषु च
विन्यसेत्तु क्रमेणैव ईशानेन तु पूजयेत्  ४५
पञ्चवक्त्रीञ्च पद्माख्यां शान्तमुद्राञ्च निष्ठुराम्
दर्शयेत्तु क्रमात्कुर्यात् दिग्बंधञ्चास्त्रमंत्रतः  ४६
अभितस्तु घटानष्टौ ससूत्रान्वस्त्रयुग्मकान्
इंद्राशादिषु संस्थाप्य विद्येशानां स्वबीजकैः  ४७
त्यस्त्वासंपूजयेत् गंधपुषाद्यैर्हृदयेन तु
नैवेद्यं दापयित्वा तु तांबूलन्दापयेत्पृथक्  ४८
नववस्त्रधरोष्णीषस्सोत्तरीयस्सुमालकः
प्रागुक्तलक्षणोपेतस्सर्वाभरणभूषितः  ४९
देशिको मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्  ५०
समिदाज्य चरून्लाजं यवञ्च तिलसर्षपम्
होमद्रव्याणि सप्तैते जुहुयात्तु क्रमेण तु  ५१
पलाशौ दुंबराश्वत्थप्लक्षाः पूर्वादिदिक्षु च
सम्यक् बिल्वञ्च माधूकं विदिक्षु परिकल्पयेत्  ५२
प्रधानस्य पलाशन्तु सर्वेषामिद्ध्ममुच्यते
ईशानेन समिद्धुत्वा आज्यं मूलेन होमयेत्  ५३
शिरसा तु चरुं हुत्वा लाजं वामेन होमयेत्

यवन्नेत्रेण हुत्व तु तिलमस्त्रेण होमयेत् ५४
सर्षपं कवचेनैव द्रव्यान्ते व्याहृतिं हुनेत्
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत् ५५
त्र्ययंबकेनैव मन्त्रेण हुत्वाज्येनैव षोडश
वदनं हृत्प्रदेशन्तु नाभिञ्चैव क्रमेण तु ५६
प्रत्येकन्तु तथा कृत्वा हुत्वान्ते तु विशेषतः
ब्रह्मजज्ञानमन्त्रेण हुत्वाज्येनैव पूर्ववत् ५७
ब्रह्माणन्तु स्पृशेत्पश्चात् इदं विष्णवेति मन्त्रतः
आज्येन पूर्ववद्धुत्वा स्पृशेद्विष्णुं क्रमेण तु ५८
अथ ब्रंहषडंगैश्च मूलमन्त्रैर्दशाक्षरैः
बीजमुख्यैर्घृतेनैव प्रत्येकन्तु शतं हुनेत् ५९
नृत्तगेयैश्च विविधैरात्रिशेषं व्यपोह्य च
देशिको मूर्तिपैस्सार्द्धं स्नानत्रयमथाचरेत् ६०
अंगन्यासकरन्यासं प्रागुक्तविधिना कुरु
पूर्वोक्तविधिमार्गेण देशिकादीन्प्रपूजयेत् ६१
उद्धृत्य शयनात् बिंबान् वस्त्रादीनि विवर्जयेत्
गंधपुष्पादिभिश्चैव ईशानेन तु पूजयेत् ६२
कुंभान्कुंडानि संपूज्य गंधपुष्पादिभिस्सह
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ६३
पूर्णाहुतिञ्च शिरसा यदस्येति च होमयेत्
उद्धृत्य शयनात् बिंबं स्नानश्वभ्रे तु विन्नयसेत् ६४
घृतं शिरोर्पणं कुर्यात्प्रागुक्तविधिना सह
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्नयसेत् ६५
ब्रह्माणञ्च हरिञ्चैव अक्षरन्नयासमाचरेत्
अंगेष्वंगानि विन्नयस्य ईशानेनैव पूजयेत् ६६
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्

कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ६७
कृत्वा बिंबाग्रके चैव स्थण्डिलोपरिविन्यसेत्
मुहूर्त्ते समनुप्रोक्ते स्थापनन्तु समारभेत् ६८
यथोत्कृष्टक्रमं ज्ञात्वा तथा संस्थापनं कुरु
कुंभाद्बीजं समादाय ध्यात्वा बिंबं हृदिन्नयसेत् ६९
तत्कुंभस्थजलेनैव देवेशमभिषेचयेत्
वर्द्धन्नयां बीजमादाय अथोभागे तु विन्यसेत् ७०
वर्द्धनीस्थोदकैस्तत्र स्नाप्य संपूजयेद्धृदा
विद्येश्वरघटैर्द्देवं स्नाप्येशानेन पूजयेत् ७१
विष्णुबीजं समादाय प्रतिमाहृदिविन्यसेत्
गन्धपुष्पादिभिश्चैव ईशानेन तु पूजयेत् ७२
ब्रह्मबीजं समादाय न्यसेत्तत्तत्प्रदेशके
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु ७३
प्रत्येकं स्नपनं कृत्वा अर्चनोक्तं समाचरेत्
आलयन्तु नयेत्पश्चात् बिंबान्संस्थापयेद्बुधः ७४
ब्रह्माणन्दक्षिणे भागे विष्णुं वामे तु विन्नयसेत्
गन्धपुष्पादिभिः पूज्य प्रभूतहविषन्ददेत् ७५
उत्सवं कारयेत्पश्चादेकाहं त्रियहन्तु वा
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ७६
इति लिंगोद्भवविधिपटलश्चतुस्सप्ततितमः

नृत्तमूर्त्तिस्थापनविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण स्थापनन्नृत्तमूर्तिनः
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १
सुतिथौ सुष्ठुवारे च सुयोगकरणान्विते
सुमुहूर्त्ते सुलग्ने च प्रतिमां कारयेत्ततः २

चलानामचलानाञ्च मासपक्षर्क्षकादिकाः
लिंगसंस्थापनस्योक्तमार्गेणैव समाचरेत् ३
परिग्रहेत्प्रतिष्ठादि कारयेदंकुरार्पणम्
रत्नन्न्यासन्ततः कुर्यादंबुजे तु विशेषतः ४
इंद्रनीलन्तु पूर्वस्यां पुष्यरागन्तु पावके
मौक्तिकं याम्यदेशे वा नैर्ऋतौ मरतकं न्यसेत् ५
नीलन्तु वारुणे देशे वायव्ये पद्मरागकम्
वैडूर्यं सौम्यदिग्भागे ईशाने तु प्रवाळकम् ६
माणिक्यम्मद्ध्यमे स्थाप्य वारादीनां स्वबीजकैः
पूर्वादिमद्ध्यदेशान्तं क्रमेणैव तु विन्न्यसेत् ७
यथा स्निग्धन्तथात्रैव बन्धयेत्तु विशेषतः
शैलञ्चेत्स्थापनात्पूर्वं रत्नानि विन्यसेद्बुधः ८
शूलस्थापनकाले तु न्यसेत्स्वयादिमूर्तिकाः
अन्येषां रत्नविन्यासं वर्जयेत्तु प्रयत्नतः ९
नेत्रद्वययुतर्क्षे तु कारयेन्नेत्रमोक्षणम्
सुगुप्ते मण्टपे रम्ये गोमयेनानुलेपिते १०
प्रच्छन्नपटसंयुक्ते सर्वालंकारसंयुते
स्थण्डिलन्तस्य मद्ध्ये तु युगांगुलसमुच्छ्रयम् ११
या तु तालप्रविस्तारं युगास्त्रं शालिभिः कुरु
तदूर्द्ध्वेष्टदळं पद्मं तण्डुलैश्चैव कारयेत् १२
तस्य मद्ध्ये न्यसेद्देवं प्राङ्मुखन्देशिकोत्तमः
हेमसूचिप्रहाराभ्यां आचार्यश्शिल्पिभिस्सह १३
पद्मरेखां पुरा कृत्वा ततो वै दृष्टिमण्डलम्
ज्योतिर्मण्डलमालिख्य नेत्रमंत्रसमायुतम् १४
उच्चरेन्मंत्रमाचार्यः स्थपतिः कर्मकारयेत्
अपस्मारस्य गंगायां कुर्यान्नयनमोक्षणम् १५

आलिख्य प्रतिमानान्तु तत्तद्वर्णैस्तु तत्र वै
तदाक्षिमोचनं कुर्यात् हेमसूचिक्रिया सुधीः १६
वस्त्रहेमांगुलीयाद्यैस्संपूज्योद्वास्य शिल्पिनम्
तस्याग्रे स्थण्डिलं कृत्वा बिंबन्तस्योपरिन्नयसेत् १७
सूत्रोदकादिभिश्चाष्टौ कलशानष्टदिक्षु च
स्वनामैरभितस्थाप्य लोकेशान्संप्रपूजयेत् १८
सुवर्णदूर्वया नेत्रे मद्ध्वाज्याभ्यान्तु लेपयेत्
यन्मधूनोमधव्येति मधुना तर्पयेद्गुरुः १९
घृतं घृतेतिमन्त्रेण तर्पयेत्तु घृतेन तु
लोहजे शैलजे दार्वे नेत्रेष्वेवन्तु लेपयेत् २०
अन्येषाञ्चैव सर्वेषां भावयेल्लेपनक्रियाः
तर्ज्जन्नयानामिकामद्ध्ये सूर्यसोमाग्निकाधिपैः २१
हिरण्यनखसंप्रोक्तैर्न्यसेत्तंबीजसंयुतम्
सौवर्णे रजते ताम्रे कांस्ये वाथ शरावके २२
घृतेन मधुना चैव प्रत्येकं प्रस्थपूरितम्
घृतं प्रदर्शयेन्मंत्री नेत्रमन्त्रमनुस्मरन् २३
दर्शयेन्मधुपात्रन्तु दशाक्षरमनुस्मरन्
गौर्द्धेनुभव्यमन्त्रेण सवत्सांगां प्रदर्शयेत् २४
ब्रह्मजज्ञानमंत्रेण ब्राह्मणान्दर्शयेत्ततः
क्षुरिकाबीजमुख्यैश्च धान्यराशीन्प्रदर्शयेत् २५
अपोहिष्ठेतिमंत्रेण स्नापयेत्तु नटेश्वरम्
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत् २६
मृण्मये चैव कर्त्तव्यं गर्भगेहे विशेषतः
प्रतिमा शुद्धिन्ततः कुर्यात् मृण्मये कुशमार्जनम् २७
मूर्द्धादिपादपर्यन्तं त्रिः कृत्वा तु दशाक्षरैः
लोहजञ्चाष्टमृद्भिस्तु मर्दयेदाज्यसंयुतम् २८

कुशाशकृत् भस्ममृद्भिः कलशैश्चाभिषेचयेत्
आपोहिष्ठेति मंत्रेण स्नापयेत्पञ्चगव्यकैः २९
पाशुपतेन चास्त्रेण स्नापयेत् गन्धतोयकैः
गन्धाद्यैरर्चयित्वा तु सर्वालंकारसंयुतम् ३०
सर्वातोद्य समायुक्तं कुर्यात् ग्रामप्रदक्षिणम्
जलमद्ध्ये प्रपां कृत्वा चतुर्गात्रसमन्वितम् ३१
दर्भमालासमायुक्तं वितानद्ध्वजसंयुतम्
लंबकूर्चसमायुक्तं बिंबं वस्त्रेण वेष्टयेत् ३२
पीठे वा फलके वापि कण्ठमात्रे जले गुरुः
प्रतिमां शाययेत्तत्र प्राक्शिरश्चोर्ध्ववक्त्रकम् ३३
त्रिरात्रं वा द्विरात्रं वा व्योमरात्रमथापि वा
जलाधिवासनं कुर्यात् वेदायाममथापि वा ३४
जलाधिवासनारंभं रात्रौ चैवन्नकारयेत्
नकुर्याच्छयनारंभं दिवाकाले विशेषतः ३५
मृण्मये त्वर्द्धचित्रे च भित्तिचित्रे पटे तथा
ग्रामप्रदक्षिणेनोक्तमेतेषान्तु प्रजापते ३६
जलाधिवासनञ्चैषामग्रे तु शालिभिः कुरु
वेदतालप्रविस्तारमुत्सेधन्तु युगांगुलम् ३७
स्थंडिलञ्चतुरश्रन्तु तन्मद्ध्ये नळिनं लिखेत्
तस्योर्ध्वे जलभाण्डन्तु विन्नयसेत्सूत्रवेष्टितम् ३८
वस्त्रेणास्तीर्य तस्योर्ध्वे दर्पणं विन्यसेत्ततः
प्रतिबिंबयुतं तत्र स्थापयेद्दर्पणं हृदा ३९
त्रिंशत्कांशैस्समायुक्तमग्रन्तु चतुरंगुलम्
ग्रंधिव्योमांगुलं दैर्घ्यं प्रतिमाजानुमात्रकम् ४०
तत्कूर्चं हृदयेनैव विन्यसेद्दर्पणोपरि
चतुष्पादं न्यसेत्तत्र याज्ञिकैर्वृक्षसंभवैः ४१

रत्निमात्राधिकं बिंबं मानं गात्रस्य दैर्घ्यकम्
युगाश्रं वाथ वृत्तं वा द्वादशांगुलनाहकम् ४२
पञ्चतालप्रमाणेन तदूर्ध्वे फलकां कुरु
अब्ध्यंगुलेन सुषिरं वृत्तमद्ध्ये प्रकल्पयेत् ४३
द्वात्रिंशत्प्रस्थसंपूर्णं कुंभबिंबसमप्रभम्
सूत्रेण वेष्टयेत्कुंभं यवान्तरक्रमेण तु ४४
एवमेवोपकुंभन्तु कल्पयेत्कल्पवित्तमः
चतुष्पाद्युपरिन्नचस्त्वा पृष्ठे तु सुषिरं कुरु ४५
वेदतारप्रमाणेन नाळं हैमेन संयुतम्
तन्नाळं तत्र तोयैश्च स्नापयेद्दर्पणोपरि ४६
कुंभांभश्शोषणात्पूर्वे उपकुंभन्तु पूरयेत्
जलाधिवासनं ह्येवं मण्टपं कारयेत्ततः ४७
प्रासादस्याग्रतो वापि दक्षिणे चोत्तरेऽपि वा
धर्मरंध्राष्टहस्ताश्च मण्टपानाञ्च विस्तरम् ४८
कलास्तंभसमायुक्तं स्तंभनाहं द्वितालकम्
पङ्क्तित्रयसमायुक्तं उच्छ्रयं पङ्क्तिमानकम् ४९
मण्टपं रंध्रयाभज्य मद्ध्ये व्योमन्तु वेदिका
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् ५०
परितो वेदिकामूले उपवेदीं प्रकल्पयेत्
युगांगुलप्रविस्तारमुत्सेधञ्चांगुलद्वयम् ५१
मानुषे तु पदे कुर्यात्कुण्डानि लक्षणैस्सह
श्रुत्यश्रञ्चैव पूर्वायामग्नौ चाश्वत्थपत्रवत् ५२
याम्ये तु धनुषाकारं नैर्ऋत्यान्तु गुणाश्रकम्
पर्जन्नचे वर्तुळं कुण्डं वायव्यान्तु षडश्रकम् ५३
सौम्म्ये कुशेशयं प्रोक्तमीशे तु पर्वताश्रकम्
ईशानचक्रयोर्मद्ध्ये वृत्तं प्राधानकमं कुरु ५४

तस्योत्तरे वा पाशिन्नर्चां स्नानश्वभ्रं प्रकल्पयेत्
त्रितालमात्रविस्तारं चतुरश्रं द्विमेखलम् ५५
मेखलाभ्यान्तु विस्तारं प्रत्येकञ्चतुरंगुलम्
उत्सेधं तत्समं ज्ञेयं उत्तरे नाळनिर्गमम् ५६
द्वादशांगुलमायामं मद्ध्ये रंध्रं युगांगुलम्
तस्योर्ध्वोत्तरभागे तु जलावर्तन्तु कारयेत् ५७
उद्वास्य शिल्पिनं पश्चात् गोमयेनानुलेपयेत्
प्रोक्षयेद्धृदयेनैव मण्टपं भूषयेत्ततः ५८
युगद्वारसमायुक्तं वेदतोरणसंयुतम्
वितानेनोर्ध्वमाच्छाद्यमुक्तादामैरलंकृतम् ५९
दिक् ध्वजैश्च समायुक्तं दर्भमालासमावृतम्
जगळाष्टकसंयुक्तं तरंगेणैव वेष्टितम् ६०
पुण्याहं वाचयेत्तत्र भूसुरान्पूजयेत्ततः
समरीयपदे सम्यक् वास्तुहोमन्तु कारयेत् ६१
आषाढपत्रदर्भैश्च पर्यग्निन्तेन वह्निना
कृत्वाशिवांभसा प्रोक्ष्य पुनः पुण्याहमाचरेत् ६२
द्वारपूजादिसंपूज्य स्थापनक्रमवद्बुधः
स्थण्डिलं वेदिकोर्ध्वे तु निर्मलैरन्नशालिभिः ६३
दशद्रोणैस्समायुक्तन्तदर्द्धन्तण्डुलैरपि
तन्मद्ध्ये पंकजं कृत्वा साष्टपत्रं सकर्णिकम् ६४
तिलैर्ल्लाजैश्च दर्भैश्च पुष्पैश्चैव परिस्तरेत्
शयनं कल्पयेत्तत्र चर्मचाद्यैरनुक्रमात् ६५
चर्मजं रोमजञ्चैव मुण्डजञ्चाण्डजन्तथा
उपरिस्तरणेनैव उपधानैस्समन्वितम् ६६
उपर्युपरिकञ्चैव पञ्चधाशयनन्तथा
परिस्तरणदर्भैश्च पवमानमुदीरयन् ६७

प्रोद्धयेत्पुरुषेणैव हृदागन्धादिभिर्यजेत्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् ६८
जलादुत्तीर्यदेवेशं स्नानश्वभ्रे तु विन्नयसेत्
व्यपोह्य वस्त्रकूर्चादीन्पूजयेत् गन्धपुष्पकैः ६९
अष्टमृत्सलिलेनैव ज्ञाळयित्वा तु निर्म्मलम्
स्नापयेत्पञ्चगव्यैश्च शुद्धैरुत्थैरिति ब्रुवन् ७०
संस्नाप्य गंधतोयैश्च वस्त्रेणैव तु वेष्टयेत्
पूजयेद्धृदयेनैव कौतुकं बंधयेत्ततः ७१
सौवर्णं रजतं सूत्रं क्षौमं कार्पासजन्तु वा
कौतुकन्तु हृदाबध्वा दक्षिणे तु करे बुधः ७२
गंधादिभिर्यजेन्मुद्रां महाशक्त्यां प्रदर्शयेत्
आदिशैवान्वयोद्भूतस्सर्वलक्षणसंयुतः ७३
नववस्त्रधरोष्णीषस्सोत्तरीयस्सुमाल्यकः
हेमांगुलीयकटककुंडलाभ्यामलंकृतः ७४
दिव्यगंधानुलिप्तांगस्सौम्म्याभिमुखमास्थितः
शयनेशाशयेद्देवं प्राक्शिरश्चोर्ध्ववक्त्रकम् ७५
शाययित्वा हृदा कुर्यात् दिग्बंधं चास्त्रमंत्रतः
छादयेद्वस्त्रदर्भैश्च गंधादिभिर्यजेद्धृदा ७६
शैलजे लोहजे चैव कुर्याद्देवं क्रमेण तु
मृण्मये त्वर्द्धचित्रे च आभासे च पटेऽपि च ७७
व्यपोह्य दर्पणं कूर्चं संगृह्य शयनोपरि
संस्थाप्य पूज्य गंधाद्यैः बंधयेत्कौतुकं बुधः ७८
मृण्मये त्वर्द्धचित्रे च तद्धस्ते च प्रबद्धयेत्
आभासे च पटे चैव कौतुकं भावयेद्बुधः ७९
दर्पणं वापि कूर्चं वा पूर्वोक्तं शाययेद्बुधः
कुंभान्संस्थापते पश्चात्सर्वलक्षणसंयुतान् ८०

ससूत्रान्सापिधानांश्च सवस्त्रान्कूर्चसंयुतान्
गंधोदकेन संपूर्णानाम्रपल्लवशोभितान् ८१
शिरः प्रदेशे देवस्य शिवकुंभन्तु विन्नयसेत्
तस्यैवोत्तरदिग्भागे विन्नयसेद्वर्द्धनीं ततः ८२
शिवाख्यं पञ्चरत्नांबु हेमाब्जं वर्द्धनीं न्यसेत्
कुंभमद्ध्ये न्यसेद्बीजं महेशाख्यं जगत्पतिम् ८३
चतुर्भुजं त्रिणेत्रञ्च जटामकुटसंयुतम्
शशिपन्नगधुत्तूरदिव्यपुष्पैरलंकृतम् ८४
सर्वलक्षणसंयुक्तं रक्तवस्त्रोपशोभितम्
गोक्षीरधवळप्रख्यं किञ्चित्प्रहसिताननम् ८५
एवं महेशरूपन्तु तत्तद्रूपोक्तचिह्नधृक्
तद्रूपन्तु ततो ध्यात्वा पूजयेत्तु विशेषतः ८६
वर्द्धन्नयां विन्नयसेत्पश्चात् गौरीबीजन्तु देशिकः
द्विभुजाञ्चारुवदनां नेत्रद्वयसमन्विताम् ८७
करंडमकुटोपेतां श्यामनीलाळकान्विताम्
नितंबस्तनविस्तीर्णां प्रसार्यचरणान्विताम् ८८
दक्षिणेब्जकरां देवीं सर्वाभरणभूषिताम्
दुकूलवसनांगौरीं द्ध्यात्वा गन्धादिभिर्यजेत् ८९
मुकुळीं पद्ममुद्राञ्च दर्शयेदुभयोरपि
अभितः कलशानष्टौ चाष्टविद्येश्वरैर्युतान् ९०
इंद्रादीशानपर्यन्तं स्वैस्वैर्मन्त्रैस्वरूपकैः
हेमेन टंकशूलन्तु न्यसेदष्टघटेषु च ९१
अर्पयेत् गन्धपुष्पाद्यैर्नैवेद्यान्तं पृथक्पृथक्
आसनञ्चैव नृत्तञ्च स्थितमारूढमेव च ९२
यावत्संकल्पमाचार्यं यथादेवोपरूपधृक्
शयनाधिवासनं ह्येवं पश्चाद्धोमं समारभेत् ९३

पूर्वोक्तलक्षणोपेतान्मूर्त्तिपान्संवरेत्सुधीः
ऋगाद्यद्धययनं कुर्यात् चतुर्द्दिक्षु क्रमेण तु ९४
मूलं पाशुपतास्त्रञ्च अघोरास्त्रक्षशाक्षरम्
आग्नेयादिषु कोणेषु कुर्यान्मन्त्रजपेद्विजः ९५
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
भवश्चोग्रश्च शर्वश्च महादेवश्च रुद्रकः ९६
भीमः पशुपतिश्चैव ईशानश्चाष्टमूर्त्तयः
इंद्राद्यैशानपर्यन्तं स्वस्वमन्त्रैर्विशेषतः ९७
संयजेयुः क्रमान्मूर्त्तीन्कुण्डानाञ्चैव दक्षिणे
समिदाज्य चरून्लाजं सर्षपञ्च यवन्तिलम् ९८
प्रियंगुशालिमुद्गाञ्च अपूपञ्जुहुयात्क्रमात्
न्यग्रोधञ्च शमीबील्वं अर्क्कं पूर्वादिदिक्षु च ९९
उदुंबरञ्च मायूरं पिप्पलं खादिरन्तथा
अग्न्यादिविदिशासूक्ताः प्रथानस्य पलाशकम् १००
सद्यादिचास्त्रपर्यन्तं मन्त्रैस्तु समिदादिभिः
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् १०१
व्याहृतिञ्जुहुयाद्धीमान्द्रव्यान्ते तु पृथक्पृथक्
द्रव्यान्ते तु स्पृशेद्बिंबमचलञ्चलमेव वा १०२
मकुटञ्च शिरश्चैव नेत्रं श्रोत्रञ्च नासिका
आस्यं बाहुहृदिस्थाने जठरं गुह्यदेशके १०३
पादौ चैव तु तद्द्रव्यं हुत्वा तेनैव मन्त्रतः
मौल्यादिपादपर्यन्तं हुत्वा ते तु तथा स्पृशेत् १०४
आज्येन मूलमन्त्रेण जुहुयात्तु शताहुतिम्
ब्रह्मजज्ञानमन्त्रेण इदं विष्णिवति मन्त्रतः १०५
त्रियंबकेन मन्त्रेण पञ्चविंशद्धुनेत्पृथक्
नृत्तं गेयञ्चविविधैस्तुत्यैस्तोत्रैर्विशेषतः १०६

रात्रिशेषं व्यपोह्याथ प्रभाते विमले ततः
देशिको मूर्तिपैस्सार्द्धं स्नानन्तु विधिना कुरु १०७
अंगन्यासकरन्यासं पूर्वोक्तविधिना कुरु
उद्धृत्य प्रतिमां कुर्यात्प्राङ्मुखं शयनोपरि १०८
व्यपोह्य वस्त्रपुष्पाणि गग्धादिभिर्यजेद्बुदा
कुंभान्संपूजयेत्पश्चात् वह्निकुण्डेषु पूजयेत् १०९
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिञ्च शिरसा जुहुयाद्देशिकोत्तमः ११०
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
कटकैः कुण्डलैश्चैव यज्ञसूत्रैश्च हेमकैः १११
अधमन्दशनिष्कं स्याद्विगुणं मद्धमं भवेत्
त्रिगुणञ्चोत्तमा प्रोक्ता दक्षिणा देशिकस्य तु ११२
अष्टभागैकभागन्तु मूर्तिपानान्तु दक्षिणा
अर्द्धयेतृणां तदर्धन्तु जप्तृणान्तु तदर्द्धकम् ११३
भक्तानां परिचाराणां यथाश्रद्धानुदक्षिणाः
स्विष्टमग्नेतिमन्त्रेण हुत्वाग्धिन्तु विसर्जयेत् ११४
मुहूर्त्तनाडिकान्पूर्वे स्थापनन्तु समारभेत्
शैलजं प्रतिमाञ्चेत्तु दैविकं मद्धमे पदे ११५
स्थापयेत्तु विशेषेण कूर्मशैलोपरिक्रमात्
बिंबायामं त्रिभागैकं कूर्मोपलकविस्तृतम् ११६
घनन्तत्पञ्चभागैकं तन्मद्धे त्ववटं घनेत्
नवरत्नानि बीजानि धातूंश्चैवोषधीन्क्रमात् ११७
लिंगस्थापनवत्प्रोक्तं आलयं सप्रदक्षिणम्
कूर्मपीठं तु पीठं वा ब्राह्मिके कल्पयेद्बुधः ११८
उद्धरेद्देवदेवेशं शयनाद्धोतृभिस्सह
मूर्तिपांश्च नयेद्देवमद्धयेतृभिस्समन्वितम् ११९

आचार्योर्घ्यं गृहीत्वा तु नयेदग्रे विशेषतः
पुत्रभ्रातृकळत्रैश्च यजमानो व्रजेदनु १२०
चलञ्चेत्स्नानवेद्यान्तु अचलञ्चालयेन्नयेत्
प्रविश्यद्वारदेशन्तु दद्यादर्घ्यं हृदा सुधीः १२१
नीत्वागर्भगृहं पश्चात्प्रोक्षयेत्कुशवारिणा
स्थापयेद्देवदेवेशमीशानेन तु देशिकः १२२
सुस्निग्धं कारयित्वा तु कुर्यात् घृतशिरोर्प्पणम्
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत् १२३
अद्ध्वोक्तांगं समापूर्य भुवनाद्ध्वोत्तरोमधृक्
वर्णाद्ध्वैवत्वचोपेतो मन्त्राद्ध्वारुधिरान्वितम् १२४
शिरोमांसपदाद्ध्वाच शुक्लमज्ञास्थितत्वकः
महेशस्य षडद्ध्वात्मा तस्य प्राणस्सदाशिवः १२५
पूजयेद्देवदेवेशं गन्धपुष्पादिभिर्हृदा
मुहूर्त्ते समनुप्राप्ते गुरवे सन्निवेदयेत् १२६
उद्धृत्य शिवकुंभन्तु वर्द्धन्यासह बुद्धिमान्
सर्वातोद्य समायुक्तं स्तोत्रमंगलवाचकैः १२७
वितानध्वजसंयुक्तं पिंछचामरसंयुतम्
शिरसा वाहयित्वा तु विद्येश्वरघटैर्युतम् १२८
हर्म्यप्रदक्षिणं कृत्वा प्रतिमाग्रन्नयेत् बुधः
प्राणप्रकृतियोगन्तु ज्ञात्वा संस्थापनं कुरु १२९
कुंभात् बीजं समादाय प्रतिमा हृदि विन्न्यसेत्
तत्कुंभस्थजलैश्चैव स्नापयेत्परमेश्वरम् १३०
वर्द्धन्या बीजमादाय पीठाब्जं विन्न्यसेत् बुधः
अंबुजे वर्द्धनी तोयैः स्नापयेत्तु विशेषतः १३१
विद्येशान्परितः स्थाप्य देवेशं स्नाप्य तज्जलैः
गन्धपुष्पादिनाभ्यर्च्य दशमुद्रां प्रदर्शयेत् १३२

स्नपनं कारयेदन्ते यथा शक्तिविशेषतः
लोहजे शैलजे त्वेव मृण्मये त्वर्द्धचित्रके १३३
आभासे च पटे चैव विशेषोस्ति शृणुष्वथ
शयनात्कूर्च्चमुत्तीर्य प्रतिमां हृदि विन्नयसेत् १३४
बिंबं पूर्वं प्रतिष्ठाप्य कूर्मार्च्चां स्नापयेज्जलैः
कूर्मार्च्चयास्वभावे तु पीठञ्चैवाभिषेचयेत् १३५
अर्चनोक्तं समभ्यर्च्य वस्त्राभरणपुष्पकैः
भस्मदत्वा हृदामंत्री दर्पणन्दर्शयेत्ततः १३६
पायसन्दापयेत्तत्र तांबूलन्दापयेत्ततः
चलाचलविभागन्तु ज्ञात्वा पूर्वोक्तवत्क्रिया १३७
तत्तत्संस्थापनोक्तञ्च मार्गेणैव समाचरेत्
भवानी स्थापनं वक्ष्ये सहितं भिन्नमेव वा १३८
सहितं स्थापनं पूर्वमेकदेशिकमारभेत्
अन्नये चैवन्नकर्तव्यं राजाराष्ट्रं विनश्यति १३९
प्रमादात्स्थापनं यत्र पुनः स्थापनमारभेत्
तस्मात्सर्वप्रयत्नेन चान्येन देशिकं कुरु १४०
कल्याणसुन्दरस्योक्तं वैवाह्यं कर्ममाचरेत्
उत्सवं कारयेत्पश्चाद्यावत्सप्तदिनान्तकम् १४१
एकाहमुत्सवं वापि कारयेद्देशिकोत्तमः
आरंभाद्यान्तमेवन्तु एकदेशिकमारभेत् १४२
आचार्यस्य ह्यभावे तु मूर्तिपेन तु कारयेत्
यागोपकरणं सर्वं देशिकाय प्रदापयेत् १४३
एवं यः कुरुते मर्त्यस्सपुण्यं गतिमाप्नुयात्
इहैव धनवान्पुत्रान्सोन्तेसायुज्यमाप्नुयात् १४४
इति नृत्तमूर्त्तिस्थापनविधिपटलपञ्चसप्ततितमः

## दक्षिणामूर्तिस्थापनविधिपटलप्रारंभः

अथ संस्थापनं वक्ष्ये दक्षिणा मूर्तिनः परम्
ज्ञानदं शान्तिदं नृणां भुक्तिदं मुक्तिदं परम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत् २
प्रागुक्तविधिमार्गेण अंकुराणि समर्पयेत्
विचित्रे मंटपे रम्ये रत्नन्यासं समारभेत् ३
शालिभिस्थण्डिलं कृत्वा पीठन्तस्योपरिन्यसेत्
माणिक्कं पुष्यरागञ्च वैडूर्यं नीलमेव च ४
स्फटिकं मौत्तिकं शंखं चंद्रकान्तं प्रवाळकम्
मद्ध्यादीशानपर्यन्तं विन्यसेद्धृदयेन तु ५
प्रतिमां तस्योपरिन्यस्त्वा सुस्निग्धं सुदृढं कुरु
ऋषीणां रत्नविन्यासं न कुर्यात्तु प्रजापते ६
ततोऽक्षिमोक्षणं कुर्यात् नेत्रद्व्ययुते दिने
मण्टपे लंकृते मद्ध्ये स्थंडिलं शालिभिः कुरु ७
बिंबं तस्योपरिन्यस्त्वा तस्य वामे न्यसेदृषीन्
पद्मरेखां पुरालिख्य कृष्णमंडलमालिखेत् ८
ज्योतिर्मंडलमालिख्य हेमसूच्या प्रहारयुक्
नेत्रमन्त्रमनुस्मृत्य लेखयेद्देशिकोत्तमः ९
ऋषीणान्नैव नेत्रेषु नेत्रेणैव समालिखेत्
हेमांगुलीय वस्त्राद्यैस्संपूज्यो द्वास्य शिल्पिनम् १०
तस्याग्रे स्थंडिलं कृत्वा शालिभिश्च विशेषतः
प्राङ्मुखं प्रतिमां तस्य तन्मद्ध्ये विन्नयसेत् बुधः ११
ऋषीनुत्तरतो न्यस्त्वा प्रोक्षयेदस्त्रमंत्रतः
नेत्रेषु नेत्रमुच्चार्य प्रोतहैमनखैरपि १२
ततो मध्वाज्यसूक्ताभ्यां मध्वाज्याभ्याञ्च तर्पयेत्

मधुना च घृतेनैव पात्रे तु प्रस्थपूरिते १३
तत्सूक्ताभ्यां क्रमेणैव दर्शयेद्देशिकोत्तमः
गौर्धेनुहव्यमन्त्रेण सवत्सांगां प्रदर्शयेत् १४
धान्यराशिं हृदामंत्री ब्रंहसूक्तेन भूसुरान्
मधुना च घृतेनैव ऋषीन्नेत्रेषु तर्पयेत् १५
प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत्
स्नापयेत्पञ्चगव्यैश्च अष्टमृत्सलिले हृदा १६
मालाभरणवस्त्राद्यैर्बिंबान्संभूष्य देशिकः
रंगे वा शिबिकायां वा रथे वारोप्य भक्तितः १७
सर्वालंकारसंयुक्तं कृत्वा ग्रामप्रदक्षिणम्
ततो जलाशयं प्राप्य तीरे समतलं कुरु १८
स्थंडिलं शालिभिः कृत्वा बिंबं तत्रैव विन्नयसेत्
हृदागंधादिभिः पूज्य बिंबान्वस्त्रेण वेष्टयेत् १९
जलमद्ध्ये प्रपां कृत्वा वितानध्वजसंयुताम्
दर्भमालासमायुक्तां चतुर्गात्रसमन्विताम् २०
तन्मद्ध्ये कण्ठदघ्ने तु जले वै फलकोपरि
प्रतिमां शाययेद्विद्वान्प्राक्शिरश्चोर्ध्ववक्त्रकम् २१
ऋषींस्तत्रोत्तरे पार्श्वे पूर्ववच्छाययेत् बुधः
अभितः कलशानष्टौ लोकपालाधिदैवतान् २२
सूत्रादिभिस्समोपेतानीशानेन तु पूजयेत्
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् २३
आलयस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा
द्वादशं दशहस्तं वा नवहस्तमथापि वा २४
विकारस्तंभसंयुक्तं मण्टपञ्चतुरश्रकम्
मद्ध्यमे वेदिकां कुर्यात् गुणभागैकभागया २५
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम्

कुराडानि कल्पयेद्धीमान्मानुषे तु पदे हितम् २६
वेदाश्रं शशिखराडञ्च भूताश्रन्तु गुणाश्रकम्
महाशासु प्रकल्प्याथ कोरोष्वेव सरोरुहम् २७
शक्रशांकरयोर्मद्धये वृत्तं प्राधानकं कुरु
स्थानश्वभ्रे ततः प्राग्वत्कल्पयेन्मराटपोत्तरे २८
पश्चाच्छिल्पिनमुद्वास्य गोमयेन तु लेपयेत्
मराटपं भूषयेद्धीमान्कृतद्वारसमन्वितम् २९
वेदतोरणसंयुक्तं गात्रवेष्टनसंयुतम्
वितानदर्भमालाभिरंकुरैरष्टमंगळैः ३०
तरंगवेष्टनोपेतं भूसुरान्भोजयेत्ततः
उच्छिष्टन्तु ततो द्वास्य गोमयेनानुलेपयेत् ३१
वास्तुहोमं ततः कुर्यात् मराटपन्तेन वह्निना
पुरायाहं वाचयित्वा तु द्वारपूजादिपूर्वकम् ३२
वेद्यूर्ध्वे स्थंडिलं कुर्यादष्टद्रोरौश्च शालिभिः
तदर्द्धैस्तंडुलैर्भूष्य तदर्द्धैश्च तिलैरपि ३३
दर्भैः पुष्पैः परिस्तीर्य यजेदीशानमन्त्रतः
तन्मद्धये शयनं कुर्यात् चर्मचाद्यैरनुक्रमात् ३४
शयनं गंधपुष्पाद्यैर्वामदेवेन पूजयेत्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् ३५
जलादुत्तीर्य बिंबांश्च स्नापयेत् ब्रंहपञ्चकैः
तस्य पञ्चमभागे तु फलकोर्ध्वे न्यसेदृषीन् ३६
वस्त्रकूर्चादिकं त्यज्य पूर्ववच्छुद्धिमाचरेत्
गंधपुष्पादिभिस्तत्र ईशानेन तु पूजयेत् ३७
तत्पुरुषेन मन्त्रेण कौतुकं बंधयेत्सुधीः
स्नानवेद्यास्समुद्धृत्य प्रतिमां शयनोपरि ३८
प्राक्शिरश्चोर्ध्ववक्त्रञ्च शाययेत्पुरुषेण तु

वस्त्रेणैव तु संवेष्ठ्य ईशानेन तु पूजयेत् ३९
देवस्य दक्षिणे भागे अगस्त्यश्चांगिरस्तथा
देवस्य वामभागे तु विश्वामित्रपुलस्त्यकौ ४०
काशे तु शाययेद्धीमान्पूर्ववत्पुरुषेण तु
वस्त्रेण वेष्टयेत्सर्वान्गंधादिभिर्यजेद्धृदा ४१
बिंबस्यैव शिरोभागे शिवकुंभञ्च वर्द्धनीम्
ससूत्रौ जलसंपूर्णौ सापिधानौ सकूर्चकौ ४२
सवस्त्रौ हेमरक्ताद्यौ विन्न्यसेत्तु क्रमेण तु
ध्यात्वा मूर्त्या कृतिं कुंभे तज्जलञ्चैव विन्न्यसेत् ४३
ईशानेन तु संपूज्य पद्ममुद्रां प्रदर्शयेत्
गौरीबीजन्तु वर्द्धन्न्यां ध्यात्वा गौरीं न्यसेद्धृदा ४४
दर्शयेन्मुकुळी मुद्रां पद्ममुद्रां प्रदर्शयेत्
ऋषीणाञ्च शिरोभागे प्रत्येकन्तु घटान्न्यसेत् ४५
सूत्रादिभिस्समोपेतान् हैमाब्जेन समायुतान्
विन्न्यसेदृषिबीजानि ध्यात्वा कुंभस्य मद्ध्यमे ४६
ईशानेन तु मन्त्रेण गंधपुष्पादिभिर्यजेत्
अभितस्तु घटानष्टौ चन्दनोदकपूरितान् ४७
सूत्रादिभिस्समोपेतानिंद्राशादिषु विन्न्यसेत्
विद्येशानां स्वबीजानि कुंभमद्ध्ये क्रमान्न्यसेत् ४८
गंधपुष्पादिभिस्तत्तत् हृदयेनैव पूजयेत्
नैवेद्यं दापयेत्तेषां तांबूलन्तु निवेदयेत् ४९
प्रागुक्तलक्षणोपेतस्सर्वाभरणभूषितः
नवांबरधरोष्णीषस्सोत्तरीयस्सुमालकः ५०
स्थापको मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ५१
समिदाज्य चरून्लाजं बिल्वपत्रं यवं तिलम्

होमद्रव्याणि सप्तैते जुहुयादादिशैवकः ५२
महाशासु पलाशन्तु बिल्वञ्च विदिशासु च
प्रधानस्य पलाशन्तु सर्वेषामिध्ममेव च ५३
समिधस्सद्यमन्त्रेण घृतं मूलेन होमयेत्
चरुं वामेन जुहुयात् लाजन्तु हृदयेन तु ५४
बिल्वपत्राणि शिरसा यवन्नेत्रेण होमयेत्
पुरुषेण तिलं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ५५
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत्
कद्रुद्रायेतिमन्त्रेण हुत्वाज्येनैव षोडशम् ५६
स्पृष्ट्वा तु मस्तकं पश्चादघोरायेति मन्त्रतः
आज्येन पूर्ववद्धुत्वा स्पृशेत्तद्धृत्प्रदेशतः ५७
त्रियंबकेन मन्त्रेण प्राक् धृत्वा संस्पृशेत्कटिम्
शिवांगैश्चैव विद्यांगैः पञ्चब्रह्मैश्च मूलकैः ५८
बीजमुख्ये घृतेनैव प्रत्येकन्तु शतं हुनेत्
नृत्तगेयञ्च विविधैरात्रिशेषं व्यपोह्य च ५९
प्रभाते विमले धीमान्स्थापनन्तु समारभेत्
देशिको मूर्तिपैस्सार्द्धं स्नानत्रयमथाचरेत् ६०
अंगन्यासकरन्यासं पूर्वोक्तविधिना कुरु
आचार्यो मूर्तिपाश्चैव पूजयेत्तु पुरोक्तवत् ६१
उद्धृत्य शयनात् बिंबान्वस्त्रादीनि विसर्जयेत्
गंधपुष्पादिभिश्चैव पूजयेत्पुरुषेण तु ६२
कुंभान्कुंडानि संपूज्य गंधपुष्पादिभिस्ततः
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ६३
पूर्णाहुतिञ्च शिरसा हुत्वाग्निं परिवर्जयेत्
सर्वालंकारसंयुक्तं सर्वातोद्य समन्वितम् ६४
स्नानवेद्या नयेद्बिंबं तत्पश्चिमे नयेदृषीन्

अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्नयसेत् ६५
पूजयेत्पुरुषेणैव गंधपुष्पादिभिस्सह
ऋषीणामक्षरन्यासं पूर्वोक्तविधिना कुरु ६६
घृतशिरोर्पणं देवं प्रागुक्तविधिना कुरु
कुंभानुद्धृत्य शिरसा बाह्ये हर्म्यप्रदक्षिणम् ६७
कृत्वा बिंबाग्रके चैव स्थंडिलोर्ध्वे तु विन्नयसेत्
मुहूर्ते समनुप्राप्ते स्थापनन्तु समारभेत् ६८
प्राणप्रकृतियोगन्तु ज्ञात्वा संस्थापनं कुरु
कुंभात् बीजं समादाय प्रतिमा हृदि विन्नयसेत् ६९
तत्कुंभस्थजलैश्चैव स्नापयेत्परमेश्वरम्
वर्द्धन्यां बीजमादाय पीठकण्ठे तु विन्नयसेत् ७०
वर्द्धनी कुंभतोयेन स्नापयेत्तत्प्रदेशकम्
विद्येशानान्तु बीजानि पीठे शक्रादिषु न्यसेत् ७१
तद्धटस्थोदकैर्देवं स्नाप्येशाने तु पूजयेत्
ऋषीणां हृत्प्रदेशे तु तत्तत् बीजन्तु विन्नयसेत् ७२
गंधपुष्पादिभिस्तत्र ईशानेन तु पूजयेत्
स्नपनं कारयेद्देवमर्चनोक्तं समर्चयेत् ७३
आलयन्तु नयेद्देवं विन्नयसेद्दक्षिणाननम्
तस्य दक्षिणभागे तु अगस्त्यञ्चांगिरन्नयसेत् ७४
देवस्य वामभागे तु विश्वामित्रं पुलस्त्यकम्
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत् ७५
उत्सवं कारयेत्पश्चादेकाहं त्रियहन्तु वा
ऋषिभिश्च विना ह्येवं स्थापनं गेयमूर्तिनः ७६
ग्रामस्य दक्षिणे भागे शतदण्डस्य चान्तके
तटाकतीरे वानद्यास्तीरे व्याख्यानमूर्तिनः ७७
स्थापयित्वा विधानेन पूजयेद्विधिपूर्वकम्

स्वतः प्रधानमेतत्स्यात् ज्ञानार्थं संप्रकल्पयेत् ७८
एवं यः कुरुते मर्त्यस्सपुरायां गतिमाप्नुयात् ७९
इति दक्षिणामूर्तिस्थापनविधिपटलष्षट्सप्ततितमः

इंद्रशेखरस्थापनविधिपटलप्रारंभः

प्रतिष्ठाविधिमहं वक्ष्ये चंद्रशेखरमूर्तिनः
सर्वशान्तिकरं पुरायं ग्रामऋद्धिकरं शुभम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
सुमुहूर्ते सुलग्ने च सुवारे करणान्विते २
स्थापयेद्देवदेवेशं विधिना देशिकोत्तमः
प्रतिष्ठादिनपूर्वे तु कारयेदंकुरार्पणम् ३
रत्नन्यासं ततः कुर्यात् मराटपे स्थंडिलोपरि
अंबुजे मद्ध्यदेशे तु नवकोष्ठानि कल्पयेत् ४
ऐंद्रे मरतकं न्यस्त्वा याम्यायां पुष्यरागकम्
वारुणे स्फटिकन्नयस्त्वा चंद्रकान्तन्तु सौम्यके ५
प्रवाळं वह्निदेशे तु वज्रन्निर्ऋृतिगोचरे
मौक्तिकं वायुदेशे तु शंखमीशे तु विन्नयसेत् ६
माणिक्कं मद्ध्यमे न्यस्त्वा हृदयेन तु मंत्रतः
उक्तस्थाने तु तत् द्रव्यमलाभे काञ्चनं क्षिपेत् ७
सुस्निग्धं कारयेद्धीमान्निर्वृणं सुदृढं क्रमात्
नयनं मोक्षणं कुर्यात् नेत्रद्वययुते दिने ८
उदयादिसमारभ्य मद्ध्याह्नान्तं समाचरेत्
स्थंडिलं कारयेत्तत्र अष्टद्रोणैश्च शालिभिः ९
तदर्द्धं तराडुलैर्भूष्य तदर्द्धैश्च तिलैरपि
दर्भैः पुष्पैः परिस्तीर्य देवेशं तत्र विन्नयसेत् १०
परितो मराटपस्यैव तरंगेणैव वेष्टयेत्

हेमसूचिप्रहाराभ्यां नेत्रोन्मीलनमाचरेत्  ११
पद्मरेखां समालिख्य कृष्णमण्डलमालिखेत्
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रेण बुद्धिमान्  १२
नेत्रेषु नेत्रमन्त्रेण प्रोतसौवर्णकैर्नखैः
मधुवाता ऋतायेति  मधुनातर्पयेद्गुरुः  १३
घृतं मिमीक्षेतिमन्त्रेण सौवर्णं दूर्वया सुधीः
गौर्धेनुहव्यमन्त्रेण सवत्सांगां प्रदर्शयेत्  १४
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणानपि दर्शयेत्
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत्  १५
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
शिल्पिनं पूजयेत्पश्चात् वस्त्रांगुलीयकादिभिः  १६
अष्टमृत्सलिलेनैव संस्कुर्यादभिषेचनम्
अर्चयेत् गन्धपुष्पाद्यैर्हृदयेन विचक्षणः  १७
पुण्याहं वाचयेत्तत्र स्वस्तिमंगळवाचकैः
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम्  १८
नानाभक्तजनैस्सार्द्धं कुर्यात् ग्रामप्रदक्षिणम्
ततोजलाशयं प्राप्य जलमद्ध्ये प्रपां कुरु  १९
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्
वस्त्रेण वेष्टयेद्देवं लंबकूर्चसमन्वितम्  २०
प्रतिमां कण्ठदघ्ने तु जले चैवाधिवासयेत्
शाययेद्देवदेवेशं प्राक्शिरश्चोर्ध्ववक्त्रकम्  २१
अभितः कलशानष्टौ चाष्टविद्येश्वरात्मकान्
पूजयेत्तु विशेषेण गंधपुष्पादिभिर्बुधः  २२
एकरात्रं द्विरात्रं वा त्रिरात्रं वाजलोषितम्
प्रासादस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा  २३
द्वादशं दशहस्तं वा नवहस्ताष्टहस्तकम्

षोडशस्तंभसंयुक्तं मराटपं कारयेत्क्रमात् २४
मराटपन्तु त्रिधाभज्य मद्धचभागे तु वेदिका
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् २५
मानुषे तु पदे कुर्यात्कुराडानि हस्तमात्रकम्
वेदाश्रञ्चैव चापाश्रं वर्त्तुळञ्चकुशेशयम् २६
दिशासु कल्पयेद्देवमनलेश्वत्थपत्रवत्
पञ्चाश्रन्नैर्ऋते कुर्यादग्न्यश्रं वायुदेशतः २७
ऐशान्नचे चैव वस्वश्रं कुर्यात्कुराडानि लन्नणैः
इंद्रईशानयोर्मद्धचे वृत्तं प्रधानकं कुरु २८
गोमयालेपनं कृत्वा पञ्चपूर्णैरलंकृतम्
स्तंभानि वेष्टयेत्तत्र नानावस्त्रेण बुद्धिमान् २९
वितानद्ध्वजसंयुक्तं मुक्तदामैरलंकृतम्
दर्भमालासमायुक्तं चतुस्तोरणभूषितम् ३०
अष्टमंगलसंयुक्तमंकुरैरपि शोभितम्
मराटपस्योत्तरे भागे स्नानश्वभ्रं प्रकल्पयेत् ३१
रत्निद्वयप्रविस्तारं द्विमेखलसमायुतम्
नाळावटसमायुक्तं कल्पयेत्कल्पवित्तमः ३२
ब्राह्मणान्भोजयेत्तत्र ततोच्छिष्टं विवर्जयेत्
गोमयालेपनं कृत्वा पुनः पुरायाहमाचरेत् ३३
समरीय पदे चैव वास्तुहोमन्ततः कुरु
पर्यग्निकरणं तत्र कुर्यात्तेनैव वह्निना ३४
द्वारपूजादिकं सर्वं स्थापनक्रमवद्बुधः
जलादुत्तीर्य देवेशं स्नानश्वभ्रे तु विन्नचसेत् ३५
वस्त्रकूर्च्चान्व्यपोह्यात्र स्नापयेत्पञ्चगव्यकैः
पाशुपतेन चास्त्रेण शुद्धाद्भिरभिषेचयेत् ३६
गन्धपुष्पादिभिः पूज्य हृदयेन तु देशिकः

वामदेवेन मन्त्रेण दापयेत्तु नवांबरम् ३७
कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिना सह
वेदिकोपरिसंशुद्धे चाष्टद्रोणेन शालिना ३८
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि
स्थण्डिलं कारयेत्काशैः पुष्पैश्चैव परिस्तरेत् ३९
शयनं कल्पयेन्मद्ध्ये चर्मचाद्यैरनुक्रमात्
वामदेवेन मन्त्रेण पूजयेच्छयनोपरि ४०
तन्मद्ध्ये शाययेद्देवं प्राक्शिरश्चोद्ध्र्ववक्त्रकम्
रक्तवस्त्रेण संवेष्टय गन्धादिभिर्यजेद्धृदा ४१
प्रधानकुंभन्तस्यैव शिरो भागे तु विन्नयसेत्
तस्यैव वामभागे तु वर्द्धनीञ्चैव विन्नयसेत् ४२
अभितः कलशानष्टौ चाष्टविद्येश्वरात्मकान्
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ४३
सकूर्चान्हेमसंयुक्तान्फलपल्लवशोभितान्
शिवाख्यं पञ्चरत्नांबु उमाख्यं हेमसंयुतम् ४४
तत्तन्मूर्त्त्यात्मकैर्बीजैर्वर्णा कृतिसचिह्नकैः
कुंभेष्वेवं विशेषेण द्ध्यात्वा संपूजयेत्क्रमात् ४५
नैवेद्यन्दापयेत्पश्चात्तांबूलन्दापयेत्ततः
पद्ममुद्रां प्रदर्श्याथ होमकर्मसमाचरेत् ४६
शिवाग्निं कल्पयेत्तत्र अग्निकार्योक्तमार्गतः
समिदाज्य चरून्लाजान्सर्षपञ्च यवांस्तिलान् ४७
होमद्रव्याणि सप्तैते जुहुयात्क्रमशः क्रमम्
अश्वत्थोदुंबरप्लक्षवटं पूर्वादिदिक्षु च ४८
शमीखदिरबिल्वञ्च मयूरञ्च विदिक्षु च
पलाशञ्च प्रधानस्य सर्वेषामिद्ध्ममुच्यते ४९
समिधं सद्यमन्त्रेण मूलेनैव घृतं हुनेत्

अघोरेण चरुं हुत्वा वामदेवेन लाजकम् ५०
सर्षपं कवचेनैव यवमस्त्रेण होमयेत्
तिलं नेत्रेण मन्त्रेण होमयेद्देशिकोत्तमः ५१
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात्
घृतं मिमिक्षेति घृतं हुत्वा देवस्य त्वाचरुं हुनेत् ५२
एषामीशेति वैलाजं अग्निं कुर्या हि सर्षपम्
यवञ्च शन्नो देवीति कद्रुद्रायेति वैतिलम् ५३
प्रत्येकं षोडशं हुत्वा उपाहुति समिद्भिना
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिन्ततः कुरु ५४
मकुटं वदनञ्चैव हृदयन्नाभिगुह्यकौ
पदे चैव तु तद्द्रव्यं हुत्वा तेनैव मन्त्रतः ५५
मौल्यादिपादपर्यन्तं हुत्वान्ते तु तथा स्पृशेत्
एवं जागरणं रात्रौ प्रभाते स्थापनं कुरु ५६
आचार्यो मूर्तिपैस्सार्द्धं स्नानत्रयमथाचरेत्
अंगन्यासकरन्यासं पूर्वोक्तविधिनाचरेत् ५७
प्रतिमां शयनोर्ध्वे तु उद्धृत्य प्राङ्मुखं कुरु
पर्युषितानि सन्त्यज्य गंधपुष्पादिभिर्यजेत् ५८
पूजयित्वा ततः कुंभान्कुंडेषु पावकं यजेत्
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः ५९
दक्षिणान्दापयेद्धीमान्प्रागुक्तविधिना सह
अर्द्धयेतृमूर्तिपांश्चैव परिचारांश्च पूजयेत् ६०
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिञ्च शिरसा पूजयेद्देशिकोत्तमः ६१
स्विष्टमग्नेति मन्त्रेण हुत्वाग्निन्तु विसर्जयेत्
मुहूर्ते समनुप्राप्ते स्नानश्वभ्रं न्यसेत्प्रभुम् ६२
घृतं शिरोर्पणं कुर्यात् हेमदूर्वांकुराक्षतैः

घृतेनैव क्षिपेद्धीमान्मूर्तिपांश्चैव दापयेत् ६३
अष्टत्रिंशत्कलान्न्यासं क्रमेणैव तु विन्न्यसेत्
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम् ६४
प्रधानकुंभमुद्धृत्य वर्द्धनीं मूर्तिकुंभकान्
शिरसा वाचयित्वा तु कृत्वा सम्यक्प्रदक्षिणम् ६५
बिंबाग्रे स्थंडिलं कृत्वा स्थापयेत्स्थापनं क्रमात्
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत् ६६
कुंभात् बीजं सदादाय प्रतिमा हृदि विन्न्यसेत्
वर्द्धनीबीजमादाय पीठाब्जे मद्ध्यमे न्यसेत् ६७
विद्येशान्स्वस्वबीजेन इंद्रादिष्वंबुजं न्यसेत्
तन्मद्ध्ये स्थापयेद्देवमिन्दुशेखरमूर्तिनम् ६८
स्वपनं कारयेद्धीमान् पूजयेद्विधिपूर्वकम्
फलान्यत्रैव दत्वा तु पायसान्नं निवेदयेत् ६९
तांबूलं दापयेत्तत्र मुखवाससमन्वितम्
वस्त्राभरणमाल्याद्यैर्भूषयेत्परमेश्वरम् ७०
उत्सवं कारयेद्धीमान्भवनं भौतिकन्तु वा
गौणवाप्यथ शैवं वा यथावित्तानुसारतः ७१
एवं संस्थापनं प्रोक्तं चंद्रशेखरमूर्तिनः
सुखासनपुरार्योश्च एवमेवं विधीयते ७२
ध्यानभेदो भवेन्मंत्री क्रियाभेदो न चैव हि
एवं यः कुरुते मर्त्यस्सपुत्रः पौत्रयुक्सुखम् ७३
सोन्ते शिवपुरं याति सर्वैश्वर्यसुखावहम् ७४

इति चंद्रशेखरस्थापनविधिपटलस्सप्तसप्ततितमः

वैवाह्यस्थापनविधिपटलप्रारंभः

अथ संस्थापनं वक्ष्ये वरं वै वाह्यमूर्तिनः

ईशानं माधवञ्चाजं गौरीञ्च जातवेदसम् १
कृवा तु विधिना सम्यक् तत्तस्थापनमारभेत्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने २
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत्
प्रागुक्तविधिना धीमान्कारयेदंकुरार्पणम् ३
रत्नन्यासं ततः कुर्यात् मंटपे समलंकृते
स्थंडिलं कारयेद्धीमान्प्रत्येकं शालिभिः क्रमान् ४
तन्मद्ध्ये विन्नयसेद्देवान्पूर्वाभिमुखसंस्थितान्
पूजयित्वा यथान्नयायं गंधादिभिर्यजेद्धृदा ५
पद्मे वा भद्रपीठे वा रत्नन्यासन्तु कारयेत्
इंद्रनीलन्नयसेदैंद्रे वैडूर्यं वह्निगोचरे ६
याम्म्ये मरतकं प्रोक्तं स्फटिकं नैर्ऋते न्यसेत्
वारुणये मौक्तिकं प्रोक्तं प्रवाळमनिले न्यसेत् ७
पुष्यरागन्तु सौम्म्यायामैशान्यां चंद्रकान्तकम्
माणिक्कं मद्ध्यमे चैव न्यसेद्दिक्पालमंत्रकैः ८
ब्रंहजज्ञानमन्त्रेण ब्रह्मस्थाने तु विन्नयसेत्
एवमेवन्यसेद्विष्णोरन्येषां कनकं न्यसेत् ९
अक्षिद्वयुतर्क्षे तु कारयेन्नेत्रमोक्षणम्
मंटपे स्थंडिलं कुर्यात्प्रत्येकं खारिशालिभिः १०
तदर्द्धैस्तंडुलैर्भूष्य तदर्द्धैश्च तिलैरपि
काशैः पुष्पैस्तथा लाजैर्विकिरेत्समलंकृतम् ११
तन्मद्ध्ये स्थापयेद्बिंबं पूर्वस्याभिमुखस्थितम्
देवस्य दक्षिणे भागे ब्रंहाणं हरिमुत्तरे १२
गौर्याश्च दक्षिणे भागे लक्ष्मीञ्चैव तु विन्नयसेत्
गंधादिभिस्समभ्यर्च्य तत्तद्धृदयमन्त्रतः १३
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत्

असितं मराडलं लिख्य ज्योतिर्मराडलमालिखेत्  १४
एवं क्रमेण सर्वेषां कारयेच्छिल्पवित्तमः
शिल्पिनं पूजयेत्तत्र वस्त्रहेमंगुलीयकैः  १५
दक्षिणान्दापयित्वा तु कुर्याच्छिल्पिविसर्जनम्
वह्नेस्तु रत्नविन्नयासं नेत्रमोक्षन्न कारयेत्  १६
स्थरिडलाग्रे विशेषेण पूर्ववत्स्थरिडलं कुरु
स्थरिडले तु नयेद्देवान्प्रोक्षयेत्पुरुषेण तु  १७
अभितः कलशानष्टौ ससूत्रानुदकपूरितान्
सकूर्चान्सापिधानांश्च सवस्त्रान्स्थापयेत्क्रमात्  १८
लोकपालान्समभ्यर्च्य एवं प्रत्येकमाचरेत्
नवांबरधरोष्णीषो हेमांगुलीय शोभितः  १९
दिव्यगन्धानुलिप्तांगो पुष्पमालाधरो गुरुः
नेत्रमन्त्रेण नेत्रेषु प्रोतसौवर्णकैर्नखैः  २०
तर्पयेन्मधुसर्पिभ्यां सौवर्णदूर्वया ततः
मधुवाता ऋतायेति मधुना तर्पयेत् गुरुः  २१
हैमे वा राजते ताम्रे अथवा कांस्य पात्रके
मधुना च घृते नैव एकैकं प्रस्थपूरितम्  २२
यन्मधुनो मधव्येति मधुपात्रं प्रदर्शयेत्
घृतं दर्शयेन्मंत्री नेष्टाविद्धमिति स्मरन्  २३
गौर्द्धे तु हव्यमन्त्रेण सवत्सांगां प्रदर्शयेत्
ब्राह्मणान्दर्शयेत्पश्चात् ब्रह्मजज्ञानमन्त्रतः  २४
दशबीजेन मन्त्रेण धान्यराशिं प्रदर्शयेत्
प्रच्छन्नपटमावर्ज्य मर्त्यसंघान्प्रदर्शयेत्  २५
एवमेवन्तु सर्वेषां कारयेत्तु पृथक्पृथक्
स्नापयेत्पञ्चगव्यैश्च पञ्चब्रह्ममनुस्मरन्  २६
मृदांभसा तु संस्नाप्य शुद्धैरुद्धैरिति ब्रुवन्

स्थापितैः कलशैर्देवान्स्नापयेत्पुरुषेण तु २७
तत्तदीशानमंत्रेण गन्धपुष्पादिभिर्यजेत्
वस्त्रैराभरणैर्माल्यैर्भूषयेत्तु पृथक्पृथक् २८
रंगे वा शिबिकायां वा सर्वानारोप्य देशिकः
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम् २९
वितानछत्रपिंच्छैश्च नृत्तगेय समाकुलम्
चामरैश्च ध्वजोपेतं ब्रह्मघोषसमायुतम् ३०
नानाभक्तजनैस्सार्द्धं कुर्यात् ग्रामप्रदक्षिणम्
नद्यां वापि तटाके वा ह्रदे वाप्यथ दीर्घिके ३१
तीरे समतलं कृत्वा स्थण्डिलं कारयेद्बुधः
स्थण्डिले स्थाप्य देवांश्च वर्जयेत् भूषणादिकात् ३२
नवांबरन्ततो दत्वा लंबकूर्चन्न्यसेद्धृदा
वस्त्रेणैव तु देवांश्च वेष्टयेत्तु पृथक्पृथक् ३३
कारयेज्जलमद्ध्ये तु चतुर्गात्रप्रपाद्वयम्
वितानध्वजसंयुक्तं दर्भमालासमायुतम् ३४
तन्मद्ध्ये फलकान्न्यस्त्वा कण्ठमात्रे जले गुरुः
शंकरञ्चक्रपाणिञ्च ब्रह्माणमधिवासयेत् ३५
गौरी लक्ष्मी धरायाश्च पार्श्वयोश्चैव मद्ध्यमे
प्रागूर्द्ध्वे शयनाद्बिंबान्शाययेत्फलकोपरि ३६
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान्
इंद्रादिषु क्रमात्स्थाप्य लोकपालान्समर्चयेत् ३७
इतरायां प्रपायान्तु एवमेवं प्रकल्पयेत्
उच्चरेद्वारुणं बीजं शतं वार्द्धार्द्धमेव वा ३८
अत्र निर्वाणदीपन्तु कल्पयेत्तु विचक्षणः
त्रिरात्रं वा द्विरात्रं वा व्योमरात्रमथापि वा ३९
जलाधिवासनं कुर्यात् द्वादशं याममेव वा

हर्म्यस्य दक्षिणे वापि उत्तरे वाग्रकेऽपि वा ४०
तस्यैव दक्षिणे वाथ उत्तरे वापि शांकरे
द्वादशन्दशहस्तं वा कलास्तंभसमन्वितम् ४१
मण्टपं कारयेद्धीमान्पङ्क्तिमानमथोच्छ्रयम्
द्वितालं स्तंभनाहन्तु तालमात्रन्तलोन्नतम् ४२
मण्टपं विभजेत्तत्र नवकोष्ठसमन्वितम्
मद्ध्यमे वेदिकां कुर्यात् रत्निमात्रसमावृताम् ४३
वेद्याम्मूले तु परितः उपवेदीं प्रकल्पयेत्
वेदांगुलप्रविस्तारमुत्सेधन्तु तदर्द्धकम् ४४
दर्पणोदरसंकाशन्निम्नोन्नतमिवस्थितम्
कुण्डानि परितः कुर्यात् मानुषे तु पदे क्रमात् ४५
युगाश्रं वर्त्तुळञ्चेंद्रखण्डं भूताश्रपंकजम्
मुन्नयश्रञ्जातवेदाश्रं वस्वश्रं पूर्वकादिषु ४६
वेदाश्राष्टाश्रयोर्मद्ध्ये प्रधानं वर्त्तुळं कुरु
पूर्वोक्तजक्षणैश्चैव कुर्यात्कुण्डानि बुद्धिमान् ४७
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रत्रयं कुरु
मद्ध्यमे तु हरस्योक्तं पश्चिमे तु हरः स्मृतम् ४८
स्नानश्वभ्रजलस्यैंद्रे एतत्स्याच्छिवमण्टपे
तस्यैंद्रे चोत्तरे वापि तत्समं मण्टपं कुरु ४९
तन्मद्ध्ये वेदिकां कुर्यात्पूर्वोक्तलक्षणैस्सह
मानुषे तु पदे सम्यक्कुण्डानि परितः क्रमात् ५०
अष्टौ वाप्यथ चत्वारि कुण्डानि परिकल्पयेत्
दिशास्वश्वत्थपत्रन्तु विदिशासु सरोरुहम् ५१
वेदाग्न्यायतनञ्चेत्तु विदिशासु विवर्जयेत्
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रत्रयं कुरु ५२
गौर्याश्च मद्ध्यमे चैव पंकजायाश्च पश्चिमे

ऐंद्रे तु पावकस्योक्तमेतत् गौर्यास्तु मराटपम्  ५३
उद्वास्य शिल्पिनं पश्चात् गोमयेनानुलेपयेत्
मराटपं भूषयेत्पश्चाच्चतुर्द्वारसमन्वितम्  ५४
युगतोरणसंयुक्तं वितानद्ध्वजसंयुतम्
स्तंभवेष्टनसंयुक्तं मुक्तादामैरलंकृतम्  ५५
दर्भमालासमायुक्तं तरंगेरौव वेष्टयेत्
मंगलाष्टकसंयुक्तं मंगलांकुरशोभितम्  ५६
नाळिकेरफलैः पुष्पैर्गात्रं प्रतिसुभूषितम्
उत्तरं मराटपं ह्येवं भूष्य पुरायाहमाचरेत्  ५७
भूसुरान्भोजयेत्तत्र त्रियहं वादिनद्वयम्
एकाहमथवा प्रोक्तमुच्छिष्टन्तद्विसर्जयेत्  ५८
गोमयालेपनं कृत्वा प्रोन्नयेत्पुरुषेण तु
प्राक्कुराडं वेदिका मद्ध्ये वास्तुहोमन्तु कारयेत्  ५९
पर्यग्निकरणं कुर्यान्मराटपन्तेन वह्निना
पुरायाहं वाचयित्वाथ स्वस्तिसूक्तसमन्वितम्  ६०
द्वारपूजादिकं सर्वं स्थापनक्रमवत् बुधः
वेद्यूद्ध्र्वे स्थरिाडलं कुर्यात् ग्रष्टद्रोरौश्च शालिभिः  ६१
तदर्द्धैस्तराडुलैर्भूष्य तदर्द्धैश्च तिलैरपि
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्  ६२
परिस्तीर्य ततो दर्भैः फलैर्लाजैस्सुपुष्पकैः
तन्मद्ध्यमे समभ्यच्चर्य गन्धपुष्पादिभिर्हृदा  ६३
शयनं मद्ध्यमे तल्पे चर्मचाद्यैरनुक्रमात्
ग्रलाभे कंबळैः पञ्च शयनन्तदलाभके  ६४
कल्पयेत्पञ्चवस्त्रेण उपधानसमन्वितम्
कल्पयेत्तु हरेर्यामे ब्रह्मणश्चोत्तरे गुरुः  ६५
गौर्याश्च मराटपे सर्वे एवमेवं प्रकल्पयेत्

आदिशैवकुलोत्भूतस्सर्वलक्षणसंयुताः ६६
नववस्त्रधरोष्णीषश्शुक्लचन्दनलेपितः
पञ्चांगभूषणैर्युक्तो हेमरत्नांगुलीयकः ६७
सोत्तरीयस्सुमाली च हेमयज्ञोपवीतिनः
मन्त्रतन्त्रक्रिया मुद्रा भावनाभावगर्भितः ६८
शंखदुन्दुभिघोषैश्च ब्रह्मघोषसमन्वितम्
नृत्तगेयसमायुक्तं सर्वालंकारसंयुतम् ६९
जलादुत्तीर्य बिंबानि स्नानश्वभ्रे नियोजयेत्
वस्त्रकूर्चादिसन्त्यज्य पूर्ववच्छुद्धिमाचरेत् ७०
गन्धपुष्पादिभिः पूज्य तत्तद्धृदयमंत्रतः
सौवर्णं रजतं वापि क्षौमं कार्पासजन्तु वा ७१
कौतुकन्दक्षिणे हस्ते तत्तद्धृदयमन्त्रतः
बन्धयित्वाथ बिंबानि उक्तालंकारसंयुतम् ७२
स्नानवेद्यास्समुद्धृत्य विन्न्यसेच्छयनोपरि
शयने शाययेद्देवं प्राक्शिरश्चोद्ध्र्ववक्त्रकम् ७३
शाययेत्तु यमे विष्णुं ब्रह्माणमुत्तरे तथा
ईशानेन तु मन्त्रेण गन्धपुष्पादिभिर्यजेत् ७४
मुकुळीं पद्ममुद्राञ्च सुरभिमुद्रां प्रदर्शयेत्
रक्तवस्त्रेण संवेष्ट्य प्रत्येकं हृदयेन तु ७५
अस्त्रेणैव तु मन्त्रेण कारयेद्दिग्विरेचनम्
द्रोणतोयैश्च संपूर्णान्निष्कळंकान्घनस्त्रनान् ७६
सुपक्वान्दोषरहितान्पक्वबिंबफलप्रदान्
सप्रक्षाळ्याथ कुंभांश्च त्रिवृत्सूत्रेण वेष्टयेत् ७७
शुद्धतोयैश्च संपूर्णान्सकूर्चान्सापिधानकान्
पञ्चरत्नसमायुक्तान्सवस्त्रान्पल्लवैर्युतान् ७८
प्रतिमायां शिरोभागे दक्षिणे विन्न्यसेत् घनान्

मद्ध्ये महेशकुंभन्तु तस्य वामे तु वर्द्धनीम् ७९
दक्षिणे विष्णुकुंभन्तु उत्तरे ब्रह्मकुंभकम्
तत्तत् बिंबाकृतिन्ध्यात्वा तत्तत् बीजं घटेन्न्यसेत् ८०
गन्धपुष्पादिभिः पूज्य तत्तदीशानमंत्रतः
ससूत्रानुदकोपेतान्सवस्त्रान्कूर्चसंयुतान् ८१
वितानैस्संयुतानष्टविद्येश्वरसमायुतान्
शातकुंभमयेनैव टंकशूलेन संयुतान् ८२
अष्टकुंभानथ स्थाप्य ऐंद्रेशादिषु संयजेत्
नैवेद्यन्दापयित्वा तु तांबूलन्दापयेत्पृथक् ८३
इतरे स्थापयेत् गौरीं मण्टपे चाधिवासयेत्
गौरी गायत्रिमन्त्रेण गौरीं मद्ध्ये तु शाययेत् ८४
पंकजा दक्षिणे भागे वह्निं वामे तु शाययेत्
रक्तांबरन्तु दत्वा च पीतवस्त्रेण वेष्टयेत् ८५
गन्धपुष्पादिभिश्चैव हृदयेनैव पूजयेत्
पूर्वोक्तलक्षणोपेतान्द्रोणतोयप्रपूरितान् ८६
ससूत्रानुदकोपेतान्सवस्त्रान्कूर्चसंयुतान्
वितानैस्संयुतान्कुंभान्तत्तच्छिरप्रदेशतः ८७
गौरीकुंभन्न्यसेन्मद्ध्ये दक्षिणे पङ्कजाद्धटम्
उत्तरे वह्निकुंभन्तु विन्न्यसेत्तु क्रमेण तु ८८
शातकुंभमयं पद्मं कुंभेषु च विनिक्षिपेत्
ध्यात्वा तत्तत्स्वरूपन्तु तद्बीजं घटमद्ध्यमे ८९
विन्न्यस्य गन्धपुष्पाद्यैर्न्नैवेद्यान्तं हृदाददेत्
ससूत्रान्शुद्धांबुसंपूर्णान्सवस्त्रान्कूर्च्चसंयुतान् ९०
वितानैश्च समायुक्तानभितोष्टौ घटान्न्यसेत्
वामादीनाञ्च शक्तीनां बीजानिंद्रादिषु क्रमात् ९१
न्यस्त्वा संपूजयेन्मंत्री गन्धपुष्पादिभिर्हृदा

ऋगाद्यद्ध्ययनन्दिक्षु कारयेच्छिवमराटपे ९२
कोणे मंत्री जपं कुर्यात् मूलमन्त्रैर्विशेषतः
आचार्यो मूर्तिपैस्सार्द्धं होमकर्मसमारभेत् ९३
प्रधानकुंडे त्वाचार्यश्चान्यकुराडे तु मूर्तिपाः
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिनाचरेत् ९४
समिदाज्य चरून्लाजं सर्षपञ्च यवन्तिलम्
होमद्रव्याणि सप्तैते क्रमेणैव तु होमयेत् ९५
शमीबिल्वमपामार्गं खादिरं विदिशासु वै
पलाशन्तु प्रधानस्य सर्वेषामिध्ममुच्यते ९६
ईशानेन समिद्धोमं पुरुषेण घृतं हुनेत्
अघोरेण चरुं हुत्वा वामदेवेन लाजकम् ९७
सर्षपं कवचेनैव नेत्रेणैव यवं हुनेत्
अघोरेण तिलं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ९८
शतमर्द्धं तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात्
त्रियंबकेन मन्त्रेण गुळाज्येनैव षोडशं ९९
बिंबस्य मस्तकं स्पृष्ट्वा तेनैव पूर्ववद्धुनेत्
हृदयेन स्पृशेदन्ते तेनैव पूर्ववद्धुनेत् १००
पादसंस्पृर्शने कृत्वा व्याहृत्याहुतिमाचरेत्
इदं विष्णवेतिमन्त्रेण पूर्ववद्धोममाचरेत् १०१
प्राग्वत्संस्पर्शयेद्विष्णुं ब्रंहजज्ञानमंत्रतः
एवं हुत्वा तु ब्रंहाणं स्पर्शयेत्पूर्ववत्क्रमात् १०२
ऋगाद्यद्ध्ययनं दिक्षु कुर्याद्गौर्याश्च मराटपे
गौर्याश्च मूलमंत्रेण कोणमंत्रजपं कुरु १०३
देशको मूर्तिपैश्चैव होमकर्मसमाचरेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् १०४
पलाशखदिरं बिल्वं वटञ्चैव दिशासु च

वारुणयं शम्यपामार्गं न्यग्रोधं विदिशासु च १०५
समिधा च तथैध्मानि क्रमेण परिकीर्तिता
ईशाने समिधं हुत्वा घृतं मूलेन होमयेत् १०६
अघोरेण चरुं हुत्वा लाजं वामेन होमयेत्
माषन्तु शिखयाहुत्वा शालिमीशानमंत्रतः १०७
सर्षपं कवचेनैव तिलमस्त्रेण होमयेत्
शतमर्द्धं तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात् १०८
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिमथाचरेत्
गौरीमिमायमन्त्रेण हुत्वाज्येनैव षोडशम् १०९
तेन मंत्रेण हृदयं स्पृष्ट्वान्ते व्याहृतिं हुनेत्
श्रिये जातेतिमंत्रेण जुहुयात्पूर्ववत्स्पृशेत् ११०
अग्निमीळेतिमंत्रेण हुत्वाज्येनैव षोडशम्
स्पृष्ट्वाग्निज्वलनं पश्चात् तेत्रमंत्रेण देशिकः १११
नृत्तगेयसमायुक्तं रात्रिशेषं व्यपोह्य च
कृत्वा स्नानत्रयं पश्चात् आचार्यो मूर्तिपैस्सह ११२
अंगन्यासं करन्यासं कृत्वा पूर्वोक्तमार्गतः
उद्धृत्य शयनात् बिंबान्वस्त्रादीनि व्यपोह्य च ११३
गंधपुष्पादिभिस्तत्र ईशानेनैव पूजयेत्
कुंभान्कुंडानि संपूज्य गंधपुष्पादिभिः क्रमात् ११४
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
हैमकैर्यज्ञसूत्रैश्च हारकुंडलकंकणैः ११५
अधमं षोडशं निष्कं द्विगुणं मद्धयमं भवेत्
त्रिगुणञ्चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा ११६
अष्टभागैकभागन्तु मूर्तिपानान्तु दक्षिणाः
अद्धयेतृणान्तु जप्तृणां तदर्द्धादक्षिणास्मृता ११७
जयादिरभ्याधानञ्च राष्ट्रभृच्चक्रमाद्धुनेत्

हृदाहुतिञ्च हुत्वा तु व्याहृतिं जुहुयात्ततः ११८
पूर्णाहुतिञ्च शिरसा हुत्वाग्निन्तु विसर्जयेत्
उद्धृत्य शयनाद्बिंबान्स्नानश्वभ्रे न्यसेत्पृथक् ११९
घृतं शिरोर्पणं कुर्यात्प्रागुक्तविधिना सुधीः
देवस्यैव कलान्यासं मकुटादिक्रमान्न्यसेत् १२०
तत्तत्कुंभस्थतोयैश्च तत्तद्देवाभिषेचनम्
अथ पुष्पादिभिर्बिंबं पूजयेद्धृदयेन तु १२१
गौरीकलान्यसेत्गौर्यामन्येषामक्षरन्न्यसेत्
सर्वातोद्य समायुक्तं नृत्तगेय समाकुलम् १२२
सर्वालंकारसंयुक्तं स्थण्डिलोर्ध्वैस्त्रिभिस्सह
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् १२३
कृत्वा बिंबाग्रके चैव स्थण्डिलोपरिविन्न्यसेत्
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत् १२४
प्राणप्रकृतियोगन्तु ज्ञात्वा संस्थापनं कुरु
कुंभात् बीजं समादाय प्रतिमे हृदि विन्न्यसेत् १२५
तत्कुंभन्तु जले चैव स्नापयेत्परमेश्वरम्
वर्द्धनी बीजमादाय पीठाब्जे मद्ध्यमे न्यसेत् १२६
तज्जलैस्नापयेत्पीठं गंधपुष्पादिभिर्यजेत्
विष्णुमूर्तेर्हृदि न्यस्त्वा विष्णुबीजं विशेषतः १२७
ब्रह्मबीजं तथा न्यस्त्वा तत्तद्रूपन्तु भावयेत्
गौरी कुंभान् समादाय बीजं गौरी हृदि न्यसेत् १२८
श्रीबीजं विन्न्यसेत्पश्चात्पंकजं हृदि देशिकः
मद्ध्यमायां शिखायान्तु वह्निबीजन्तु विन्न्यसेत् १२९
देवस्यैव तु पीठाब्जे विद्येशानां स्वबीजकैः
इंद्रादिषु क्रमान्न्यस्त्वा कुंभोदैस्नापयेत्परम् १३०
गौरीपीठाब्जके चैव वामादीनां स्वबीजकैः

इंद्रादीशानपर्यन्तं क्रमेणैव तु विन्नयसेत् १३१
तत्तत्कुंभस्थतोयैश्च गौरीञ्चैवाभिषेचयेत्
गंधपुष्पादिभिर्बिंबान्पूजयेद्धृदयेन तु १३२
स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह
गंधपुष्पादिभिश्चैव पूजयेत्तु विशेषतः १३३
मंटपे विन्नयसेत् बिंबात् स्थंडिलोपरिविन्नयसेत्
वस्त्रैराभरणैर्माल्यैर्मकुटाद्यैर्विभूषयेत् १३४
फलानि दापयित्वा तु पायसान्नं निवेदयेत्
तांबूलं दापयेत्पश्चात् मुखवाससमन्वितम् १३५
यागोपयोगद्रव्याणि देशिकाय प्रदापयेत्
सुमुहूर्ते सुलग्ने तु तद्दिने वापरे दिने १३६
कुर्याद्वै वाह्य कार्यन्तु दिवाकालेर्द्धरात्रिके
मंटपे वा प्रपायां वा तन्मद्ध्ये स्थंडिलं कुरु १३७
सर्वालंकारसंयुक्तं मणटपं भूषयेत्क्रमात्
वस्त्रैराभरणैर्माल्यैरेवं सम्यक्प्रभूषयेत् १३८
सर्वातोद्य समायुक्तं नृत्तगेयसमाकुलम्
पिञ्छचामरसंकीर्णं धूपदीपसमाकुलम् १३९
ब्रह्मघोषसमायुक्तं ततो मंगळवाचकैः
रंगे वा शिबिकायां वारोप्यमटपमानयेत् १४०
स्थंडिलोपरि वस्त्रेणास्तीर्य तस्यैव चोपरि
स्थापयेत्प्राङ्मुखं देवं प्रत्यग्रे स्थण्डिलं कुरु १४१
पूर्वोक्तलक्षणोपेतं वालुकैर्देशिकोत्तमः
देवस्थण्डिलयोर्मद्ध्ये स्थापयेत् वह्निमूर्तिनम् १४२
तस्यैव वामभागेजं स्थापयेदुत्तराननम्
विष्णुमुत्तरतो वह्निः स्थापयेद्दक्षिणाननम् १४३
पाद्यन्दद्याद्धृदामंत्री सद्येनाचमनन्ददेत्

सदशं वस्त्रयुग्मञ्च वामदेवेन दापयेत्  १४४
एवमाच्छादनं प्रोक्तमुत्तरीयमथान्यकम्
स्थण्डिलेग्निं विनिक्षिप्य आदिशैवोत्तराननः  १४५
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
ब्रह्मांगैर्मूलमंत्रैश्च प्रत्येकं सर्पिषाहुनेत्  १४६
सर्वाभरणसंयुक्तं सर्वालंकारसंयुतम्
गन्धपुष्पैस्तथा गौरीं भूषयेत् भूषणार्हकैः  १४७
पाद्यमाचमनन्दद्यादीशानेनैव देशिकः
पुरुहूतेन मंत्रेण ददेन्मंगलसूत्रकम्  १४८
वस्त्रयुग्मन्ददेत्गौर्यास्त्वेकमाच्छादनं भवेत्
उत्तरीयन्तथैकन्तु वामदेवेन मन्त्रतः  १४९
सर्वालंकारसंयुक्तं पंकजं भूषयेत्ततः
सर्वातोद्य समायुक्तन्नृत्तगेय समाकुलम्  १५०
देवस्य दक्षिणे गौरीन्न्यसेत्तत्पार्श्वके श्रियम्
कौतुकं बन्धयेद्देवीं गौरीन्तत्पुरुषेण तु  १५१
सर्वलक्षणसंयुक्तश्शिवशास्त्रपरायणः
सर्वाभरणसंयुक्तस्त्वादिशैवो दृढव्रतः  १५२
आत्मानं विष्णुवत् भाव्य शिवगायत्रिमंत्रतः
देशिकस्य कराभ्यान्तु देवं द्ध्यात्वा जलन्ददेत्  १५३
हृदयेनैव मंत्रेण भस्मनादापयेत् द्वयोः
पुण्याहं वाचयित्वाथ पलाशसमिधा ततः  १५४
सद्येन षोडशं हुत्वा व्याहृतिञ्जुहुयात्ततः
हृदयेन गुळन्दुग्धं मधुपर्कन्ददेत्प्रभोः  १५५
आचमनन्ततो दत्वा पुरुषेणैव देशिकः
त्र्यंबकेनैव मंत्रेण सर्पिषा षोडशं हुनेत्  १५६
विष्णोर्णुकेन मन्त्रेण आज्येन पूर्ववद्धुनेत्

ब्रह्मजज्ञानमंत्रे हुनेदाज्येन पूर्ववत् १५७
हृदयेन ददेच्छंभो पात्रेन्नमुपदंशकैः
शिरसा चमनन्दत्वा तांबूलन्तु हृदाददेत् १५८
गौर्याश्च हृत्प्रदेशन्तु वर्मणास्पर्शयेत् गुरुः
तस्य दक्षिणकर्णे तु बीजमुख्यञ्जपेत् सुधीः १५९
अश्मानं स्थापयेद्वामे शालिस्थण्डिलकोपरि
तमास्थापितवान्देवो गौरी दक्षिणपादतः १६०
ध्यात्वा तु बीजमुख्येन मनसास्थापयेत् गुरुः
विष्णुं संपूजयेद्धोमभूषणैर्वस्त्रसंयुतम् १६१
देवस्यैव द्विहस्ताभ्यां मुक्तामालां क्रमेण तु
उमादेवी तु हस्ताभ्यामग्नौ हुतवती तथा १६२
ध्यात्वा तु पुरुहूतेन हुनेल्लाजाश्च देरिकः
अग्निं प्रदक्षिणं कृत्वा गौरीबीजमनुस्मरन् १६३
आस्थाभ्याश्मानमंत्रेण लाजं हुत्वा प्रदक्षिणम्
कृत्वा ह्येवन्तृतीयन्तु व्याहृतिञ्जुहुयात्ततः १६४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
महेशस्यैव मूलेन अष्टोत्तरशतं हुनेत् १६५
पूर्णाहुतिञ्च शिरसा यदस्येति हुनेत्ततः
पावकन्तु विसृज्याथ देवान्गन्धादिभिर्यजेत् १६६
प्रभूतहविषन्दत्वा तांबूलन्तु निवेदयेत्
चतुर्थे दिवसे चैव देवीं सम्यक् विभूषयेत् १६७
रात्रौ तु कुर्याद्धोमं तु मण्टपे समलंकृते
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् १६८
समिधाहुत्यास्त्रमंत्रेण पलाशञ्चैव षोडशम्
पञ्चब्रह्मषडंगैश्च विद्यांगैर्मूलमंत्रकैः १६९
पाशुपतेन चास्त्रेण प्रत्येकन्तु शताहुतिः

देवस्य त्वेतिमंत्रेण जुहुयात्तु चरुन्तथा  १७०
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिञ्च शिरसा हुत्वाग्निं परिवर्जयेत्  १७१
शयनं कल्पयेद्धीमान् चर्मचाद्यैः क्रमाद्धृदा
शयने विन्नयसेद्देवं गौरीयुक्तन्तु वर्मणा  १७२
स्नपनं कारयेद्देवं देवीञ्चैव विशेषतः
अर्चनोक्तं समभ्यर्च्य नैवेद्यन्दापयेत्ततः  १७३
आलयन्तु नयेद्देवं स्थापयेद्देशिकोत्तमः
देवं देवीं श्रियञ्चैव स्थापयेत्तु समासतः  १७४
देवाग्रे स्थापयेदग्निं ब्रह्माणन्तस्य वामके
अग्नेर्दक्षिणभागे तु स्थापयेत्तु हरिन्ततः  १७५
अर्चनोक्तं यजेद्देवं नैवेद्यन्दापयेत्क्रमात्
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः  १७६
एवं विन्नयस्य कल्याणं कुर्यात् ब्रह्मादिभिर्विना
एवं यः कुरुते मर्त्त्यस्सपुण्यांगतिमाप्नुयात्  १७७
राज्यार्त्थी लभते राज्यं पुत्रार्त्थी लभते सुतम्
इहैव धनवान् श्रीमान् सोन्ते मोक्षमवाप्नुयात्  १७८
इति वैवाह्यस्थापनविधिपटल अष्टसप्ततितमः

सोमास्कन्दस्थापनविधिपटलप्रारंभः

संप्रवक्ष्ये उमास्कदं सहितस्थापनं परम्
देवानान्तु दिवाकाले सितपक्षे शुभे दिने  १
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत्
अयने चोत्तरं श्रेष्ठं दक्षिणे तु त्वरान्विते  २
मार्गशीर्षञ्च माघञ्च वर्जयेत्तु प्रयत्नतः
तयोरपि च कर्त्तव्यं त्वरिते तु प्रजापते  ३

सर्वमासेषु संग्राह्यं शिवेन परिभाषितम्
सकळानान्तु सर्वेषामेवमेवं विधीयते ४
अंकुरारयर्पयेत्पश्चात्पूर्वोक्तविधिना सह
सर्वालंकारसंयुक्ते मराडले स्थरिडलोपरि ५
भद्रपीठे समारोप्य रत्नादिविधिवन्न्यसेत्
पद्मेनैव युतञ्चेत्तु पद्मे रत्नानि विन्न्यसेत् ६
केवलं भद्रपीठञ्च तत्तत्पीठन्न्यसेद्बुधः
पंकजे पद्मबीठे वा नवकोष्ठा निकल्पयेत् ७
मारिक्कं पद्मरागञ्च वैडूर्यञ्च प्रवाळकम्
महादिक्षु क्रमान्त्यस्त्वा पुष्यरागञ्च मौक्तिकम् ८
नीलञ्च स्फटिकन्न्यस्त्वा कोरोष्वाशापमन्त्रकैः
देव्याश्च नवकोष्ठेषु सौवर्णाब्जादिविन्न्यसेत् ९
गौरीगायत्रिमन्त्रेरा क्रमेरौव तु विन्न्यसेत्
सौवर्णं रत्नविन्न्यासं न कर्त्तव्यं गुहस्य तु १०
तदूर्द्ध्वे प्राङ्मुखन्देवं देवीं स्कन्दन्न्यसेत्ततः
सुस्निग्धं सुदृढं सम्यक्कारयेच्छिल्पवित्तमः ११
नेत्रद्वययुतर्ञ्चे तु कारयेदक्षिमोक्षराम्
मराटपस्य तु तन्मद्ध्ये अष्टद्रोरौश्च शालिभिः १२
स्थरिडलद्वितयं कुर्यात्साष्टपत्रं सकर्णिकम्
तदूर्द्ध्वे तु न्यसेद्देवं प्रागाशाश्रृतवक्त्रकम् १३
हाटके नैव सूच्याथ पद्मरेखां समालिखेत्
कृष्णमराडलमालिरव्य ज्योतिर्मराडलमालिखेत् १४
नेत्रमन्त्रमनुस्मृत्य लेखयेद्देशिकोत्तमः
पूजयित्वांगुलीयाद्यैश्शिल्पिनं परिवर्जयेत् १५
उत्तरे स्थरिडलन्न्यस्त्वा प्रोक्षयेत्पुरुषेरा तु
ससूत्रान्सापिधानांश्च स्कूर्चान्वारिपूरितान् १६

सवस्त्रानष्टकलशान्लोकपालाधिपान्क्रमात्
अभितः स्वस्वमन्त्रैश्च गन्धपुष्पादिभिर्यजेत् १७
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
तर्जन्नयनामिकामद्ध्ये सूर्यहोमाग्निकाधिपैः १८
हिरण्यनखसंप्रोक्तैर्न्यसेत्तद्बीजसंयुतम्
सौवर्णदूर्वया नेत्रं मध्वाज्याभ्यान्तु तर्पयेत् १९
मधुवाता ऋतायेति मधुना तर्पयेत् गुरुः
घृतमिमीक्षेतिमन्त्रेण तर्पयेत्तु घृतेन तु २०
स्वर्णपात्रे तु तारे वा ताम्रे वा कांस्य पात्रके
सर्पिषा मधुना चैव प्रत्येकं प्रस्थपूरितम् २१
यन्मधुनो मधव्येति मधुपात्रं प्रदर्शयेत्
घृतं घृतेतिमन्त्रेण घनपात्रं प्रदर्शयेत् २२
गोर्द्धेनुहव्यमंत्रेण सवत्सांगां प्रदर्शयेत्
ब्राह्मणान्दर्शयेत्पश्चात् ब्रह्मजज्ञानमंत्रतः २३
दशबीजैर्विशेषेण धान्यराशिं प्रदर्शयेत्
कारयेद्देवदेवन्तु गौर्यांश्चैव गुहस्य तु २४
प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत्
मण्टपस्योत्तरे भागे देवं काशोपरिन्नयसेत् २५
पञ्चगव्येन संस्नाप्य पञ्चब्रह्ममनुस्मरन्
अष्टमृत्सलिलेनैव स्नापयेत्तु दशाक्षरैः २६
स्नापयेत्कलशाद्भिस्तु ईशानेनाभिषेचयेत्
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु २७
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम्
नृत्तगेय समायुक्तं च्छत्रपिंछसमायुतम् २८
मयूरव्यञ्ज नैर्युक्तं दुकूलव्यञ्जनैर्युतम्
वितानद्ध्वजसंयुक्तं नानाभक्तजनैर्युतम् २९

रथे वा शिबिकायां वा नीत्वा देवमलंकृतम्
धूपदीपसमायुक्तं कुर्यात् ग्रामप्रदक्षिणम् ३०
जलाशयमनुप्राप्य तत्तीरे स्थण्डिलं कुरु
तस्योर्द्ध्वे तु न्यसेद्बिंबं वस्त्रादीनि व्यपोह्य च ३१
पूजयेत्पुरुषेणैव पृथक् वस्त्रेण वेष्टयेत्
जलमद्ध्ये प्रपां कृत्वा वेदिकात्रसमन्विताम् ३२
वितानध्वजसंयुक्तान्दर्भमालासमन्विताम्
आचार्यः कण्ठमग्नाप्सुप्रपायाश्चैव मद्ध्यमे ३३
शाययेत्फलकोर्द्ध्वे तु बिंबं प्रागूर्द्ध्ववक्त्रकम्
अभितः कलशानष्टौ लोकपालाधिदैवतान् ३४
सूत्रादिभिस्समोपेतान्स्थाप्य संपूजयेद्बुदा
त्रिरात्रं वा द्विरात्रं वा व्योमरात्रञ्जलोषितम् ३५
हर्म्यस्य दक्षिणे वापि सौम्ये वाप्यग्रकेऽपिवा
तस्यैव दक्षिणे वाथ उत्तरे मण्टपं कुरु ३६
द्वादशन्दशहस्तं वा नवहस्तमथापि वा
विकारस्तंभसंयुक्तं पङ्क्तिमानमथोच्छ्रयम् ३७
सकण्ठं कतरून् त्यक्त्वा गात्राणि च परिग्रहेत्
विभजेन्मण्टपं धीमान्नवकोष्ठसमन्वितम् ३८
मद्ध्यैकवेदिका प्रोक्ता तद्युगांशैकमुच्छ्रयम्
तदधश्चोपवेदीन्तु परितस्संप्रकल्पयेत् ३९
युगांगुलप्रविस्तारमुत्सेधन्तु तदर्द्धकम्
दर्पणोदरसंकाशं समन्निम्नोन्नतन्न च ४०
मानुषे तु पदे कुर्यात्पावकायतनानि च
हस्तमात्रप्रविस्तारं प्रागुक्तलक्षणैस्सह ४१
युगाश्रञ्चेन्दुखण्डञ्च वर्त्तुळञ्च सरोरुहम्
महाशासुप्रकल्प्याथ योनिं कोणेषु कल्पयेत् ४२

शक्रशांकरयोर्मद्ध्ये वृत्तं प्राधानिकं कुरु
प्राक्कुण्डं वेदिकामद्ध्ये वेदाश्रन्तु गुहस्य तु ४३
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
तत्पीठान्तरं द्विगुणं विस्तारं समुदाहृतम् ४४
आयामस्यार्द्धमानेन श्वभ्रायामं प्रकल्पयेत्
उत्तरे जलमार्गं स्यात्पीठविस्तारमायतम् ४५
युगांगुलप्रविस्तारं जलनिर्गमनस्य तु
मेखला द्वयसंयुक्तमेकैकञ्चतुरंगुलम् ४६
उत्सेधं तत्समं प्रोक्तं नाळाग्रेप्यवटं कुरु
बाहुमात्रप्रविस्तारं तत्समञ्चावटं भवेत् ४७
मण्टपं भूषयेत्पश्चात् चतुर्द्वारसमन्वितम्
युगतोरणसंयुक्तं गात्रवेष्टनसंयुतम् ४८
वितानध्वजसंयुक्तं मुक्तादामैरलंकृतम्
मंगलाष्टकसंयुक्तं मंगळांकुरशोभितम् ४९
दर्भमालासमायुक्तं तरंगेणैव वेष्टयेत्
पञ्चगव्येन संप्रोक्ष्य पुण्याहं वाचयेत्ततः ५०
भूसुरान्भोजयेत्पश्चादुच्छिष्टन्तु विसर्जयेत्
गोमया लेपनं कृत्वा पुण्याहं वाचयेत्ततः ५१
वास्तुहोमन्ततः कुर्यात्समरीयपदे बुधः
पर्यग्निकरणन्तेन वह्निनात्रैव कारयेत् ५२
द्वारपूजादिकं सर्वं स्थापनक्रमवद्बुधः
वेद्यूर्द्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ५३
तदर्द्धैश्चाक्षतैश्चैव तदर्द्धैश्च तिलैरपि
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ५४
दर्भैश्चैव परिस्तीर्य लाजपुष्पैस्समायुतम्
शयनं कल्पयेन्मद्ध्ये चर्मचाद्यैरनुक्रमात् ५५

जलादुत्तीर्य देवेशं स्नानश्वभ्रोपरिन्यसेत्
व्यपोह्य वस्त्रकूर्चादीन्गव्यैश्चैवाभिषेचयेत् ५६
शुद्धांभसा तु संस्नाप्य हृदयेनैव मंत्रतः
संपूज्य गंधपुष्पाद्यैरीशानेन तु मंत्रतः ५७
शयनं गंधपुष्पाद्यैर्वामदेवेन पूजयेत्
कौतुकं बंधयेत्तत्र देवदेवीं गुहं तथा ५८
महेशमुद्रां नाळाख्यां पद्ममुद्रां प्रदर्शयेत्
शयनोर्ध्वेनयेद्देवं गंधादिभिर्यजेद्बुदा ५९
आदिशैवान्वयोद्भूतः पूर्वोक्तलक्षणैर्युतः
नववस्त्रधरोष्णीषस्सोत्तरीयस्सुमालकः ६०
सर्वाभरणसंयुक्तस्सर्वगंधानुलेपयेत्
उत्तराभिमुखो भूत्वा शयनस्य तु मद्ध्यमे ६१
शाययित्वा तु देवेशं प्रागूर्ध्ववदनं हृदा
वस्त्रेणैव समावेष्ट्य देवदेवीं गुहं क्रमात् ६२
संपूज्य गंधपुष्पाद्यैरीशानेन तु मंत्रतः
सर्वलक्षणसंयुक्तान्कुंभान्संग्राह्य देशिकः ६३
ससूत्रानुदकोपेतान्सकूर्चान्सापिधानकान्
सवस्त्रान्पल्लवोपेतान्महेशोमागुहाधिपान् ६४
तत्तच्छिरप्रदेशे तु तत्तत्कुंभान्न्यसेत्सुधीः
पञ्चरत्नप्रधाने तु वर्द्धन्यां हाटकाब्जकान् ६५
तथैव स्कंदकुंभे तु विन्न्यसेद्देशिकोत्तमः
यादृशं प्रतिमाकारं तादृशं भाव्यबुद्धिमान् ६६
महेशाख्यञ्च गौर्याश्च स्कन्दस्यैव तु बीजकम्
तत्कुंभस्य च मद्ध्येषु न्यस्त्वा गंधादिभिर्यजेत् ६७
अभितस्तु घटानष्टौ सूत्रानुदकपूरितान्
सकूर्चान्सापिधानां च ससूत्रान्पल्लवैर्युतान् ६८

विन्यस्यैंद्रादिदिद्द्वष्टविद्येशान्स्वस्वबीजकैः
विन्नयस्य गंधपुष्पाद्यैर्हृदयेनैव पूजयेत् ६९
शातकुंभमयेनैव टंकशूलन्नयसेत्पृथक्
नैवेद्यं दापयित्वा तु तांबूलन्तु निवेदयेत् ७०
ऋगाद्यद्ध्ययनं कुर्यात्पूर्वादीनि क्रमेण तु
कोणे मंत्रजपं कुर्यात्प्रागुक्तविधिना सह ७१
स्थापको मूर्त्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ७२
वेदाग्निं जनयेद्धीमानन्योन्यायतनेषु च
प्राक्कुण्डं वेदिकामद्ध्ये कुण्डसंस्कारमंत्रतः ७३
पलाशोदुंबराश्वत्थप्लक्षञ्चेति दिशासु वै
शम्यर्कबिल्वमायूरार्विदिक्षुसमिधः स्मृताः ७४
पलाशन्तु प्रधानस्य स्कन्दाग्ने तु तथैव च
सद्यादिभिश्चतुर्दिक्षु ईशानेन प्रधानके ७५
गौरीगायत्रिमंत्रेण कोणेषु समिधा हुनेत्
हृदयेनैव मंत्रेण स्कन्दाग्नौ जुहुयात्ततः ७६
आज्यं मूलेन हुत्वा तु अन्नं वामेन होमयेत्
माषन्तु शिखयाहुत्वा लाजमस्त्रेण होमयेत् ७७
सर्षपं कवचेनैव तिलन्नेत्रेण होमयेत्
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्ततः ७८
द्रव्यान्ते व्याहृतिं हुत्वा मूलैश्च षोडशं हुनेत्
बिंबानां हृदयं स्पृष्ट्वा व्याहृतिञ्च हुनेत्ततः ७९
त्रियंबकेन मंत्रेण घृतेन जुहुयाच्छतम्
ऐंद्राशासु महाशासु प्रधानेप्येवमाचरेत् ८०
गौरीमिमायमंत्रेण आज्येन जुहुयाच्छतम्
कोणेषु जुहुयात्तत्र स्कन्दाग्नौ तु घृतं हुनेत् ८१

अयं कुमारेतिमंत्रेण जुहुयाच्छतसंख्यया
स्तुत्यैस्तोत्रैश्च विविधैरात्रिशेषं व्यपोह्य च ८२
देशिको मूर्तिपैस्सार्द्धं विधिनास्नानमाचरेत्
अंगन्यासकरन्यासं पूर्वोक्तविधिना कुरु ८३
उद्धृत्य शयनाद्देवं पूर्वाभिमुखसंस्थितम्
व्यपोह्य वस्त्रकूर्चादि त्यजेत् गंधादिभिर्हृदा ८४
कुंभान्कुण्डानि तत्रैव गंधपुष्पादिभिर्यजेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ८५
दक्षिणान्दापयेत्तत्र पूर्वोक्तविधिना सह
प्रागुक्तविधिमार्गेण मूर्तिपादीन्प्रपूजयेत् ८६
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत् ८७
सर्वालंकारसंयुक्तं नृत्तगेय समन्वितम्
वेद्यांश्च प्रतिमा स्नानं श्वभ्रे तु छलकोपरि ८८
विन्यस्य पुरुषेणैव गंधपुष्पादिभिर्यजेत्
घृतं शिरोर्पणं कुर्यात्पूर्वोक्तविधिना सह ८९
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत्
गौरीकलान्न्यसेद्धीमान्गौरीदेहे विशेषतः ९०
वर्णानि विन्यसेत्स्कन्ददेहे वै देशिकोत्तमः
उक्तालंकारसंयुक्तमुद्धृत्यात्रैव कुंभकान् ९१
शिरसावाहयित्वा तु कुर्यात् हर्म्यप्रदक्षिणम्
देवस्याग्रे क्रमेणैव स्थण्डिलोपरिविन्न्यसेत् ९२
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेशयेत्
प्राणप्रकृतियोगन्तु ज्ञात्वा स्थापनमारभेत् ९३
यथाकृष्टक्रमं ज्ञात्वा तथासंस्थापयेत् गुरुः
कुंभात् बीजं समादाय प्रतिमे हृदिविन्न्यसेत् ९४

तत्कुंभस्थजलैर्देवं स्नापयित्वा विशेषतः
वर्द्धन्यां बीजमादाय उमाया हृदिविन्नयसेत् ९५
वर्द्धन्याश्च जलैश्चैव गौरीं तत्राभिषेचयेत्
स्कन्दकुंभान्समादाय स्कन्दबीजं हृदिन्यसेत् ९६
तत्कुंभस्थजलेनैव कुमारमभिषेचयेत्
मूर्तिकुंभान्समादाय अभितामूर्तिपान्नयसेत् ९७
तत्तत्कुंभस्थतोयैश्च स्नापयेत्परमेश्वरम्
गन्धादिभिर्हृदायष्ट्वा दशमुद्रां प्रदर्शयेत् ९८
स्नपनं कारयेदन्ते पूजयेद्विधिपूर्वकम्
वस्त्राभरणमालाञ्च भस्मनादापयेद्बुदा ९९
फलानि विविधानीह पायसान्नन्ददेत्पृथक्
तांबूलन्दापयित्वा तु मुखवाससमन्वितम् १००
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः
यागोपयोगद्रव्याणि देशिकाय प्रदापयेत् १०१
स्थापनञ्चेत्समाख्यातमुमयासहितं कुरु
स्कन्दकुंभादिनं स्कन्दं वर्जितमस्त्रबुद्धिमान् १०२
कुमारेण विना विप्र चण्डानुग्रहमूर्तिनः
कुर्यात्स्थापनमेवन्तु विशेषमधुनोच्यते १०३
चण्डे दृङ्गोन्नणं कृत्वा नेत्रमन्त्रेण देशिकः
देवस्य वामभागे तु जलेनैवाधिवासयेत् १०४
देवस्य वामभागे तु चण्डेशं शाययेद्बुदा
तस्य दन्निणपार्श्वे तु चण्डकुंभन्तु विन्नयसेत् १०५
सूत्रादिभिस्समोपेतं हैमटंकसमायुतम्
चण्डबीजन्नयसेत्तत्र गन्धपुष्पादिभिर्यजेत् १०६
स्नानश्वभ्रस्य पूर्वे तु चण्डेशं विन्नयसेद्बुधः
वर्णानि विन्नयसेद्देहे प्रागुक्तविधिना सह १०७

चराडबीजं समादाय प्रतिमे हृदि विन्नयसेत्
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत् १०८
देवस्य मालानैवेद्यं दापयेच्चराडमूर्तिनः
एवं यः कुरुते मर्त्त्यस्सपुरायांगतिमाप्नुयात् १०९
कुलैकविंशदुत्तार्य शिवलोके महीयते ११०
इति सोमास्कन्दस्थापनविधिपटल एकोनाशीतितमः

अर्द्धनारीस्थापनविधिपटलप्रारंभः
अथातस्संप्रवक्ष्यामि नार्यर्द्धस्थापनं परम्
श्रीकरञ्जयदं पुरायं प्रजावृद्धिकरन्नृणाम् १
सुराणान्तु दिवाकाले सितपक्षे शुभे दिने
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगारभेत् २
प्रागुक्तविधिना पश्चादंकुरारायर्पयेत् बुधः
मरिडते मराटपे चैव रत्नन्नयासं समारभेत् ३
तन्मद्ध्ये स्थरिडलं कृत्वा शालिभिर्विमलैस्ततः
पीठन्तस्योपरिन्नयस्त्वा मारिाक्यं मद्ध्यमे न्यसेत् ४
इंद्रनीलन्नयसेदैंद्रे वैडूर्यं वह्निगोचरे
याम्ये चैव महानीलं मौक्तिकञ्चैव नैर्ऋते ५
स्फटिकं वरुणे देशे वायव्ये पुष्यरागकम्
सौम्ये चैव प्रवाळन्तु ईशाभ्याञ्चैव वज्रकम् ६
दिक्पालानाञ्च मंत्रैश्च क्रमेरौव तु विन्नयसेत्
तस्योपरिन्यसेत् बिंबं सुस्निग्धं सुदृढं कुरु ७
ततोक्षिमोक्षणं कुर्यात् नेत्रयुग्मयुते दिने
मरिडते मराटपे मद्ध्ये स्थरिडलं शालिभिः कुरु ८
तन्मद्ध्ये विन्नयसेत् बिंबं प्राङ्मुखं हृदयेन तु
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत् ९

असितं मराडलं लिख्य दृष्टिमराडलमालिखेत्
नेत्रेणैव तु मंत्रेण लेखयेत्स्थापकोत्तमः १०
वस्त्रहेमांगुलीयाद्यैः संपूज्योद्वास्य शिल्पिनम्
तदग्रे स्थरिडलं कृत्वा प्रतिमान्तत्र विन्नयसेत् ११
प्रोन्नयेत्पुरुषेणैव अभितश्चाष्टकुंभकान्
सूत्रादिभिस्समोपेतान् इंद्राशादिषु विन्नयसेत् १२
लोकपलान्क्रमात्तेषु संस्थाप्याभ्यर्च्चयेद्बुदा
तर्जन्नयनामिकामद्धये सूर्यसोमाग्निदैवतैः १३
हिरगयनखसंयुक्तां गुलिभिर्द्देशिकोत्तमः
नेत्रमंत्रमनुस्मृत्य प्रोतनेत्रत्रयेषु च १४
हिरगयदूर्वया विद्वान्मध्वाज्याभ्यान्तु तर्पयेत्
यन्मधुनो मधव्येति तर्पयेन्मधुना पुनः १५
घृतं स्त्रवेतिमंत्रेण तर्पयेत्तु घृतेन तु
मधुना च घृतेनैव पात्रे तु प्रस्थपूरिते १६
पूर्वोदिताभ्यां मंत्राभ्यां क्रमेणैव प्रदर्शयेत्
गौर्धेनुहव्यमंत्रेण सवत्सांगां प्रदर्शयेत् १७
ब्रह्मजज्ञानमंत्रेण भूसुरान्संप्रदर्शयेत्
प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत् १८
व्योमव्यापिपदे चैव कुर्यात् गव्याभिषेचनम्
मृदांभसा तु संस्नाप्य कलशाद्भिस्तथैव च १९
माल्याभरणवस्त्रैश्च प्रतिमांभूषयेत्ततः
उक्तालंकारसंयुक्तं कृत्वा ग्रामप्रदक्षिणम् २०
जलाशयं ततः प्राप्य तत्तीरे स्थंडिलं कुरु
प्रतिमां स्थरिडले स्थाप्य गंधादिभिर्यजेद्बृदा २१
नववस्त्रेण संवेष्टय लंबकूर्चसमन्वितम्
करठदघ्नजले चैव प्रपां कृत्वा तु सुन्दराम् २२

वितानध्वजसंयुक्तां दर्भमालाभिरावृताम्
प्रतिमांशाययेन्मद्ध्ये प्राक्शिरश्चोर्ध्ववक्त्रकाम् २३
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान्
पूर्वादिषु न्यसेत्स्थित्वा इंद्रादीन्संयजेद्धृदा २४
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम्
मन्दिरस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा २५
भानुरुद्राष्टहस्तैर्वा रंध्रहस्तेन वा सुधीः
कलास्तंभसमायुक्तं युगाश्रं मण्टपं कुरु २६
मद्ध्यमे वेदिकां कुर्यात्तत्रिभागैकभागया
रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् २७
मानुषे च पदे चैव कुंडानि परितः कुरु
वेदाश्रञ्चेन्दुखण्डं तु भूताश्रन्तु सरोरुहम् २८
एतानि कारयेद्दिक्षु कोणेष्वश्वत्थपत्रवत्
शक्रशांकरयोर्मद्ध्ये प्रधानं वर्तुळं कुरु २९
स्नानश्वभ्रं ततः कुर्यात् मण्टपस्यैव चोत्तरे
उद्वास्य तत्क्षकं पश्चात् गोमयेनानुलेपयेत् ३०
मंटपं मंडयित्वा तु भूसुरान्भोजयेत्ततः
उच्छिष्टन्तु ततो द्वास्य गोमयेनोपलेपयेत् ३१
प्राक्कुंडं वेदिकामद्ध्ये वास्तुहोमकन्तु कारयेत्
पर्यग्निकरणान्तेन वह्निना मण्टपं कुरु ३२
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः ३३
तदर्द्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि
तन्मद्ध्येब्जं समालिख्य साष्टपत्रं सकर्णिकम् ३४
लाजैर्दर्भैश्च पुष्पैश्च विकिरेत्समलंकृतम्
स्थंडिले तु यजेद्गंधं पुष्पैस्तत्पुरुषेण तु ३५

द्वारपूजादिकं सर्वं स्थापनक्रमवद्बुधः
तन्मद्ध्ये शयनं कल्प्य चर्मचाद्यैरनुक्रमात् ३६
शयनं गंधपुष्पाद्यैर्वामदेवेन पूजयेत्
जलादुत्तीर्य बिंबन्तु स्नानश्वभ्रे तु विन्नयसेत् ३७
वस्त्रादीनि व्यपोह्याथ पूर्ववच्छुद्धिमाचरेत्
गंधपुष्पादिभिश्चैव ईशानेन तु पूजयेत् ३८
अस्त्रेणैव तु मन्त्रेण कौतुकं बंधयेत्सुधीः
आरोप्य सुमुहूर्ते तु शयने हृदयेन तु ३९
तत्रैव शालयेद्बिंबं प्राक्शिरश्चोर्ध्ववक्त्रकम्
वस्त्रेणैव तु संवेष्टय गंधपुष्पैर्यजेद्धृदा ४०
प्रधानकुंभबिंबस्य शिरोभागे तु विन्नयसेत्
ससूत्रं सापिधानञ्च सवस्त्रं वारिपूरितम् ४१
सरत्नकूर्चसंयुक्तं पल्लवैरुपशोभितम्
तत्तन्मूर्त्याकृतिं ध्यात्वा कुंभे माहेशबीजकम् ४२
विन्नयस्य गंधपुष्पाद्यैरीशानेन तु पूजयेत्
ससूत्रां सापिधानाञ्च सवस्त्रान्तोय पूरिताम् ४३
सकूर्चां हेमपुष्पाढ्यां वर्द्धनीं तस्य चोत्तरे
विन्नयस्य तु भवान्याश्च बीजं तस्यैव मद्ध्यमे ४४
धात्वा तु विन्नयसेत् गन्धं पुष्पाद्यैरर्चयेद्धृदा
अभितस्तु घटानष्टौ सूत्रादिभिस्समन्वितान् ४५
इंद्रादिषु न्यसित्वा तु अष्टविद्येश्वरान्नयसेत्
गन्धपुष्पादिभिस्तत्र ईशानेनैव पूजयेत् ४६
नैवेद्यन्दापयेद्धीमान्तांबूलन्दापयेत्पृथक्
दिशास्वद्ध्ययनं कुर्यात् चतुरो वेदपारगान् ४७
कोणे मन्त्रजपं कुर्यात् मूलमन्त्रैर्विशेषतः
वस्त्राभरणमालाद्यैः भूषितस्त्वादिशैवकः ४८

देशिको मूर्त्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वं प्रागुक्तविधिनाचरेत्  ४९
समिदाज्य चरून्लाजं सक्तुमाषतिलानपि
सिद्धार्द्धं यवशाली च होमयेत्तु विशेषतः  ५०
पलाशखदिराश्वत्थ वटाः पूर्वादिदिक्षु च
शम्यर्कौ दुंबराप्लक्षा विदिक्षु परिकीर्तिताः  ५१
प्रधानस्य पलाशन्तु सर्वेषामिद्ध्ममेव च
सद्यादिनेत्रपर्यन्तं मन्त्रैश्चैव क्रमाद्धुनेत्  ५२
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत्
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिमथाचरेत्  ५३
मकुटं वदनं कुराडं बाहू चैवस्तनद्वयम्
पादौ चैव क्रमोक्तेषु मन्त्रैर्हुत्वा क्रमात्स्पृशेत्  ५४
महेशस्यैव मूलेन अष्टोत्तरशतं हुनेत्
आज्येन जुहुयात्प्राग्वत् गौरीबीजेन सुव्रत  ५५
स्तुत्वास्तोत्रैरनेकैश्च रात्रिशेषं व्यपोह्य च
देशिकोमूर्त्तिपैस्सार्द्धं विधिनास्नानमाचरेत्  ५६
अंगन्यासकरन्नयासं प्रागुक्तविधिनाचरेत्
अष्टत्रिंशत्कलान्नयासं मकुटादिक्रमान्नयसेत्  ५७
गन्धपुष्पादिभिश्चैव हृदयेनैव पूजयेत्
सर्वातोद्य समायुक्तं मुक्तालंकारशोभितम्  ५८
पूजयेद्देशिकं सम्यक्पूर्वोक्तविधिना सह
शिरसा वाहयित्वा तु कुंभानुद्धृत्य मूर्त्तिपैः  ५९
कृत्वा प्रदक्षिणं हर्म्यं बिंबाग्रे स्थापयेत् घटान्
मुहूर्त्ते समनुप्राप्ते मंत्रन्नयासं समारभेत्  ६०
कुंभाद्बीजं समादाय महेशांशे हृदिन्नयसेत्
वर्द्धन्नयं बीजमादाय उमांशे हृदि विन्नयसेत्  ६१

ताभ्यां संस्नापयेद्देवमष्टविद्येश्वरान्क्रमात्
पीठेशक्रादिषुन्न्यस्त्वा तज्जलैः स्नापयेत्प्रभुम् ६२
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु
स्नपनं कारयेत्पश्चादर्च्चनोक्तं समर्चयेत् ६३
फलानि दापयित्वा तु आलयं प्रविशेत्ततः
प्रभूतहविषन्दत्वा तांबूलन्तु निवेदयेत् ६४
उत्सवं कारयेत्पश्चादेकाहं त्रियहन्तु वा
हर्यर्द्धस्थापनं ह्येवं कारयेद्देशिकोत्तमः ६५
ध्यानभेदो भवेदत्र मंत्रभेदो न विद्यते
तथा चैव त्रियाभेदो पूजा प्रस्तार एव च ६६
वित्तार्थी लभते वित्तं भोगार्थी भोगमाप्नुयात्
अन्न्यार्थी लभते कन्न्यां जयार्थी लभते जयम् ६७
इति अर्द्धनारी स्थापनविधिपटल अशीतितमः

गंगाधरप्रतिष्ठाविधिपटलप्रारंभः
प्रतिष्ठाविधिमहं वक्ष्ये जाह्नवी धरमूर्त्तिनः
सर्वपापहरं पुण्यं सर्वसिद्धिकरं परम् १
देवानान्तु दिवाकाले सितपक्षे शुभे दिने
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत् २
पूर्वोक्तविधिनाधीमान्न्यंकुराण्यर्पयेत्ततः
मण्टपे स्थण्डिलं कृत्वा शालिभिस्तिलदर्भकैः ३
पद्मे वा भद्रपीठे वा रत्नन्यासं समारभेत्
माणिक्कमिंद्रनीलञ्च वैडूर्यं नीलमेव च ४
शंखं वै स्फटिकञ्चेंद्रं कान्तं वैडूर्यकान्तकम्
पुष्यरागं क्रमेणैव मद्ध्यादीशानमंत्रकम् ५
रत्नादिविन्न्यसेद्धीमान्हृदयेन तु मंत्रतः

तस्योपरिन्नचसेद्देवं सुस्निग्धं सुदृढं कुरु ६
लोचनद्वयनक्षत्रे चाक्षिमोक्षणमारभेत्
मण्डिते मण्टपे चैव शालिभिस्थंडिलं कुरु ७
तस्योर्ध्वे विन्नचसेद्देवं प्राङ्मुखं हृदयेन तु
तस्य दक्षिणभागे तु स्थापयित्वा भगीरथम् ८
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत्
असितं मण्डलं लिख्य नेत्रमण्डलमालिखेत् ९
नयनं मोक्षणं कुर्यात् जाह्नवीन्तु भगीरथम्
हेमांगुलीय वस्त्रैश्च संपूज्यो द्वास्य शिल्पिनम् १०
तस्याग्रे स्थंडिलं कृत्वा बिंबं तस्योपरिन्यसेत्
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान् ११
संस्थाप्य लोकपालांश्च यजेद्गंधादिभिर्हृदा
हिरण्यनखयुक्ताभिरंगुलीभिः क्रमेण तु १२
हृदयेन तु मंत्रेण प्रोतनेत्रत्रयेषु च
सुवर्णदूर्वयाधीमान् मध्वाज्याभ्यान्तु तर्पयेत् १३
यन्मधुनो मधव्येति तर्पयेन्मधुना बुधः
घृतं घृतेतिमन्त्रेण तर्पयेत्तु घृतेन तु १४
मधुनापूरितं पात्रमाज्यप्रत्यस्त्रपूरितम्
नेत्रमंत्रेण दृश्याथ धान्यराशिं प्रदर्शयेत् १५
गौर्धेनुहव्यमंत्रेण सवत्सांगां प्रदर्शयेत्
ब्रह्मजज्ञानमंत्रेण ब्रांहणान्संप्रदर्शयेत् १६
प्रच्छन्नपटमावर्ज्य सर्वान्मर्त्यान्प्रदर्शयेत्
पञ्चमृत्पञ्चगव्यैश्च स्नापयेत्तु दशाक्षरैः १७
शुद्धतोयेन संस्नाप्य पूजयेद्धृदयेन तु
वस्त्राभरणमालाभिर्भूषयेत्तु विशेषतः १८
सर्वातोद्य समायुक्तं रथे वा रोप्य भक्तितः

ग्रामप्रदक्षिणं कुर्यात् उक्तालंकारसंयुतम् १९
ततो जलाशयं प्राप्य तीरे समतलं कुरु
स्थंडिलं शालिभिः कुर्यात् बिंबं तस्योपरिन्यसेत् २०
नववस्त्रेण संवेष्टय देवञ्चैव भगीरथम्
कण्ठदघ्ने जले चैव प्रपां कृत्वा तु सुन्दराम् २१
चतुर्गात्रसमायुक्तां दर्भमालादिभिर्युताम्
तन्मद्ध्ये शाययेद्बिंबं प्राक् शिरश्चोद्ध्वर्वक्त्रकम् २२
देवस्य वामभागे तु शाययेत्तु भगीरथम्
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान् २३
इंद्रादिषु क्रमात्स्थाप्य लोकपालान्यसेद्बुदा
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा २४
याममात्रं तदर्द्धं वा घटिकैकामथापि वा
आलयस्याग्रतो वापि दक्षिणे चोत्तरेऽपि वा २५
द्वादशन्दशहस्तं वा नवहस्तमथापि वा
षोडशस्तंभसंयुक्तं मण्टपं कारयेद्बुधः २६
तन्मद्ध्ये वेदिकां कुर्यात्तत्रिभागैकभागया
रत्निमात्रसमुत्सेधन्दर्पणोदरसन्निभम् २७
कुण्डानि परितः कल्प्य दिशासु विदिशासु च
युगाश्रं शशिखण्डन्तु भूताश्रन्तु कुशेशयम् २८
महाशासु प्रकल्प्येवं वृत्तादिविदिशासु च
शक्रशांकरयोर्मद्ध्ये वृत्तं प्रधानकं कुरु २९
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत् ३०
मण्टपं मण्डयित्वा तु सर्वालंकारसंयुतम्
भूसुरान्भोजयित्वा तु उच्छिष्टो द्वासनं कुरु ३१
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः

वास्तुहोमन्ततः कुर्यात्समरीयपदे बुधः ३२
पर्यग्निकरणं कुर्यात्मराटपन्तेन वह्निना
जलभाराडस्थतोयैश्च प्रोन्नयेत्पुरुषेण तु ३३
स्थरिाडलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः
तदर्द्धैस्तराडुलैश्चैव तदर्द्धैश्च तिलैरपि ३४
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्
कुशैस्सुमनसैर्ल्लाजैः परिस्तीर्य ततोपरि ३५
स्थरिाडलं पूजयेत्तत्र गन्धपुष्पादिभिर्हृदा
शयनं कल्पयेन्मद्ध्ये चर्मचाद्यैरनुक्रमात् ३६
द्वारपूजादिकं सर्वं स्थापनक्रमवत् बुधः
जलादुत्तीर्य बिंबन्तु भगीरथ समन्वितम् ३७
स्नानश्वभ्रे नयेद्देवं तस्याग्रे तु भगीरथम्
व्यपोह्य वस्त्रकूर्च्चादीन् पूर्ववच्छुद्धिमाचरेत् ३८
ईशानेन तु मन्त्रेण गन्धपुष्पादिभिर्यजेत्
त्रियंबकेन मन्त्रेण कौतुकं बन्धयेत्सुधीः ३९
कृत्वा भगीरथस्यैवं भस्मानन्दापयेत्तयोः
स्नानवेद्यास्समुद्धृत्य शाययेच्छयनोपरि ४०
वामदेवेन मंत्रेण प्राक्छिरश्चोद्ध्र्ववक्त्रकम्
रक्तांबरेण संछाद्य सितवस्त्रेण वेष्टयेत् ४१
ईशानेन तु मंत्रेण गन्धपुष्पादिभिर्यजेत्
महेशाख्याञ्च शान्ताख्यान्नाळमुद्रां प्रदर्शयेत् ४२
अस्त्रेणैव तु मन्त्रेण दिग्विरेचनमारभेत्
प्रागुक्तलक्षणोपेतान् घटान्संग्राह्य देशिकः ४३
सूत्रेण वेष्टयित्वा तु शुद्धतोयैस्सुपूरयेत्
शिवकुंभन्न्यसेदीशे सकूर्च्चं सापिधानकम् ४४
सवस्त्रां रत्नसंयुक्तां वर्द्धनीन्तस्य वामके

वस्त्रकूर्च्चसमायुक्तां सापिधानान्तु विन्नयसेत् ४५
पद्मं हैमेन कृत्वा तु वर्द्धन्नयाञ्चैव विन्नयसेत्
कुंभे महेशबीजन्तु ध्यात्वा रूपन्तु विन्नयसेत् ४६
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु
सुरभिन्नाळमुद्राञ्च महेशाख्यां प्रदर्शयेत् ४७
गौरी बीजन्तु वर्द्धन्नयां ध्यात्वा रूपन्तु विन्नयसेत्
गन्धपुष्पादिभिश्चैव हृदयेन तु पूजयेत् ४८
शक्तिमुद्रां प्रदश्र्याथ शान्तमुद्रां प्रदर्शयेत्
दक्षिणे शिवकुंभस्य गंगा कुंभन्तु विन्नयसेत् ४९
सकूर्च्चान्सापिधानाञ्च वस्त्रेणैव तु वेष्टितान्
पद्मं कृत्वा तु तारेण कुंभमद्ध्ये तु विन्नयसेत् ५०
कुंभस्य मद्ध्यमे ध्यात्वा गंगाबीजन्तु विन्नयसेत्
गन्धपुस्पादिभिश्चैव पूजयेत्पुरुषेण तु ५१
ततः सूत्रादिभिर्युक्तानिंद्रादिष्वष्ट कुंभकान्
हैमेन टंकशूलाभ्यां संयुक्तञ्चैव न्नयसेत् ५२
विद्येशान्स्वस्वबीजैश्च न्यस्त्वासंपूजयेद्धृदा
नैवेद्यन्दापयित्वा तु तांबूलन्दापयेत्पृथक् ५३
पश्चिमे वेदिकापार्श्वे शालीभिस्थण्डिलं कुरु
दर्भैश्चैव परिस्तीर्य वस्त्रेणैव परिस्तरेत् ५४
भगीरथन्तु तस्योद्ध्र्वे शाययेद्दक्षिणोत्तरम्
दक्षिणे तु शिरश्चोद्ध्र्ववक्त्रं वस्त्रेण वेष्टयेत् ५५
गन्धपुष्पादिभिस्तस्य ईशाने नैवपूजयेत्
शिरः प्रदेशकस्यैव कुंभं विन्नयस्य देशिकः ५६
ससूत्रं सापिधानञ्च सवस्त्रं कूर्चसंयुतम्
कुंभमद्ध्ये न्यसेत्तस्य बीजन्ध्यात्वा स्वरूपकः ५७
गन्धपुष्पादिभिस्तस्य ईशानेनैव पूजयेत्

दिशास्वद्धयनं कुर्यात्कोणे मन्त्रजपं कुरु ५८
नववस्त्रधरोष्णीषस्सर्वाभरणभूषितः
देशिको मूर्त्तिपैस्सार्द्धं होमकर्मसमारभेत् ५९
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
पलाशं वैकताशोकन्नयग्रोधं खादिरं शमी ६०
बिल्वोदुंबरमायूरं समिधस्संप्रकीर्तिताः
प्रधानादीशपर्यन्तं कल्पयेत्तु क्रमेण तु ६१
ईशाने समिधं हुत्वा घृतम्मूलेन होमयेत्
चरुं हुत्वा तु शिखया धान्नयकं कवचेन तु ६२
हृदयेन गुळं हुत्वा क्षीरं सद्येन होमयेत्
सर्षपं पुषेणैव द्रव्यान्ते व्याहृतिं हुनेत् ६३
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत्
मकुटं वदनं ग्रीवां हृदयन्नाभिगुह्यकम् ६४
पादन्तेनैव मन्त्रेण हुत्वान्ते तु स्पृशेत्क्रमात्
पञ्चब्रह्मषडंगैश्च विद्यांगैश्च दशाक्षरैः ६५
आज्येन जुहुयाद्धीमान् प्रत्येकं शतसंख्यया
क्द्रुद्रायेति मन्त्रेण सर्पिषापूर्ववद्धुनेत् ६६
कृत्वा तु स्पर्शयेत् गंगां व्याहृतिञ्जुहुयात्ततः
एवं जागरणं कृत्वा प्रभाते स्थापनं कुरु ६७
देशिको मूर्तिपैस्सार्द्धं विधिनास्नानमाचरेत्
अंगन्यासकरन्यासं पूर्वोक्तविधिना कुरु ६८
देशिकं पूर्जयेत्तत्र वस्त्रांगुलीयकादिभिः
दक्षिणान्दापयेत्तत्र पूर्वोक्तविधिना सह ६९
प्रागुक्तविधिमार्गेण मूर्तिपादीन् प्रपूजयेत्
शयनादेवमुद्धत्य वस्त्रादीनि विसर्जयेत् ७०
गंधपुष्पादिभिश्चैव ईशानेनैव पूजयेत्

कुंभान् कुंडानि संपूज्य गंधपुष्पादिभिस्सह  ७१
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्  ७२
पावकन्तु विसृज्याथ स्नानश्वभ्रे नयेत्प्रभुम्
देवस्य पश्चिमे भागे स्थापयेत्तु भगीरथम्  ७३
गंधपुष्पादिभिश्चैव ईशानेन तु पूजयेत्
कुंभान् कुंडानि संपूज्य गंधपुष्पादिभिस्सह  ७४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्वाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्  ७५
पावकन्तु विसृज्याथ स्नानश्वभ्रे नयेत्प्रभुम्
देवस्य पश्चिमे भागे स्थापयेत्तु भगीरथम्  ७६
गंधपुष्पादिभिर्देवं पूजयेत्पुरुषेण तु
आवाहनादिमुद्रांश्च दर्शयेदीशमन्त्रकैः  ७७
घृतं शिरोर्पणं कुर्यात् प्रागुक्तविधिना सह
अष्टत्रिंशत्कलान्यासं मकुटादि क्रमान्न्यसेत्  ७८
गंधाद्यैश्चैव सद्येन पूजयेत्तु भगीरथम्
अक्षराणि ततो न्यस्त्वा प्रागुक्तविधिना सह  ७९
ब्रंहघोषसमायुक्तं स्वस्तिमंगळवाचकैः
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम्  ८०
कृत्वा बिंबस्य चाग्रे तु स्थंडिलोपरिविन्न्यसेत्
कुंभात् बीजं समादाय प्रतिमा हृदिविन्न्यसेत्  ८१
तत्कुंभस्थोदकैश्चैव स्नापयेत् परमेश्वरम्
गौरी बीजं समादाय न्यस्त्वा पद्मस्य मद्ध्यमे  ८२
तज्जलैस्तत्प्रदेशे तु स्नापयेत्तु विचक्षणः
जाह्नवी बीजमादाय गंगाया हृदिविन्न्यसेत्  ८३
तत्कुंभस्थोदकैश्चैव जाह्नवीमभिषेचयेत्

अष्टविद्येश्वरांश्चैव पद्मे चक्रादिषु न्यसेत्  ८४
तत्कुंभस्थोदकैश्चैव देवेशमभिषेचयेत्
गंधपुष्पादिभिश्चैव पूजयेत्तु हरं हृदा  ८५
भगीरथस्य बीजन्तु न्यसेत् तद्धृत् प्रदेशके
तत्कुंभस्थजलैश्चैव स्नापयेत्तु भगीरथम्  ८६
गंधपुष्पादिभिश्चैव ईशानेनैव पूजयेत्
स्नपनं कारयेदेवं यथा बीजानुसारतः  ८७
अर्चनोक्तं समारभ्य प्रभूतहविषं ददेत्
उत्सवं कारयेत्पश्चात् एकाहं त्रियहन्तु वा  ८८
गंगाभगीरथाभ्याञ्च विनोद्धारूढमूर्तिनः
कुर्यात् स्थापनमेवन्तु विशेषं किञ्चिदस्ति हि  ८९
भगीरथस्य वत्सर्वं कुर्यात्तु वृषभस्य तु
मन्त्रभेदो भवेत्तत्र क्रिया भेदो न विद्यते  ९०
एवं यः क्रियते मर्त्यः पुत्रपौत्रयुतस्सुखम्
सोन्ते शिवपदं यान्ति सर्वैश्वर्य सुखावहम्  ९१

इति गंगाधरप्रतिष्ठाविधिपटल एकाशीतितमः

कंकाळप्रतिष्ठाविधिपटलप्रारंभः

प्रतिष्ठाविधिमहं वक्ष्ये परं कंकाळमूर्तिनः
सर्वलोकहितं पुण्यं सर्वपापनिकृन्तनम्  १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत्  २
प्रागुक्तविधिना धीमान् अंकुरार्पयेत्क्रमात्
विचित्रे मण्टपे रम्ये रत्नन्यासं समारभेत्  ३
स्थंडिलं शालिभिः कृत्वा तस्योर्ध्वे प्रतिमां न्यसेत्
माणिक्कं पुष्यरागञ्च वैडूर्यं नीलमेव च  ४

स्फटिकं मौक्तिकं शंखं चंद्रकान्तं प्रवाळकम्
मद्ध्यादीशानपर्यन्तं शक्तिमन्त्रेण विन्नयसेत् ५
तस्योपरिन्यसेद्देवं सुस्निग्धं कारयेद्बुधः
कृष्णञ्चैव तु वीरेशं बलिपात्रधरन्तथा ६
सुस्निग्धं सुदृढं स्थाप्य भद्रपीठस्य चोपरि
बलिप्रदानजायाञ्च स्थापयेदन्यपीठके ७
सुस्निग्धं सुदृढं स्थाप्य नेत्रमोक्षणमारभेत्
मंटपे लंकृते मद्ध्ये स्थंडिलं शालिभिः कुरु ८
तस्योर्ध्वे विन्नयसेद्देव नन्दनन्दास्ववामके
हैमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत् ९
कृष्णमण्डलमालिख्य नेत्रमण्डलमालिखेत्
नेत्रेणैव तु मन्त्रेण लेखयेत्तु विचक्षणः १०
वीरेशं हरिणीञ्चायां कुर्यान्नयनमोक्षणम्
हेमांगुलीय वस्त्राद्यैस्संपूज्योद्वास्य शिल्पिनम् ११
तस्याग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः
तस्योर्ध्वे पूर्ववन्नयस्त्वा प्रोक्षयेत्पुरुषेण तु १२
अभितः कलशानष्टौ ससूत्रोदकपूरितान्
सकूर्चान् सापिधानांश्च सवस्त्रानिंद्रादिषु न्नयसेत् १३
लोकपालान् स्वबीजैश्च कलशेषु क्रमान्नयसेत्
नेत्रेषु नेत्रमन्त्रेण प्रोतहैमनखैरपि १४
मधुवाता ऋृतायेति तर्पयेन्मधुनाक्षिषु
घृतं मिमिक्षेतिमन्त्रेण सर्पिषा तर्पयेत्ततः १५
मधुना च घृतेनैव प्रस्थसम्पूर्णपात्रके
हैमे वारजते ताम्रे ह्यथवाकांस्य पात्रके १६
अघोरवाममन्त्राभ्यां पात्र द्वयं प्रदर्शयेत्
धेनुगौर्द्धेनुहव्येति धान्यराशिन्तु वर्मणा १७

ब्रह्मजज्ञानमन्त्रेण भूसुरान्संप्रदर्शयेत्
अन्नद्येषाञ्चैव नेत्रेषु मद्धवाज्याभ्यान्तु तर्पयेत् १८
प्रच्छन्नपटमावर्ज्य जनसंघान् प्रदर्शयेत्
अष्टमृत्सलिलैर्द्देवं पञ्चगव्येन वर्मणा १६
स्थापितैः कलशाद्भिस्तु बिंबान् संस्थापयेत्ततः
वस्त्रैराभरणैर्माल्यैर्भूषयेद्भूषणार्हकैः २०
रंगे वा शिबिकायां वा सर्वानारोप्य देशिकः
उक्तालंकारसंयुक्तं सर्वातोद्य समायुतम् २१
वितानछत्रपिञ्छैश्च नृत्तगेयसमायुलम्
चामरैश्च ध्वजोपेतं ब्रह्मघोषसमायुतम् २२
नानाभक्तजनैस्सार्द्धं कुर्याद्धामप्रदक्षिणम्
नद्यां वापि तटाके वा ह्रदे वा दीर्घिकातटे २३
गिरिप्रस्त्रवणे चैव वाप्यां वाथ समुद्रके
तीरे समतलं कृत्वा स्थंडिलं कारयेद्बुधः २४
स्थंडिले स्थाप्य देवांश्च वर्तयेत् भूषणादिकम्
नवांबरं ततो दत्वा लंबकूर्चं न्यसेद्बुदा २५
सर्वालंकारघं युक्तं कुर्यात् ग्रामप्रदक्षिणम्
जलाशयमनुप्राप्य तत्तीरे स्थण्डिलं कुरु २६
तस्योर्ध्वे विन्नद्यसेत्कुंभान् गन्धादिभिर्यजेद्बुदा
नवेनाहतवस्त्रेण वेष्टयित्वा पृथक् पृथक् २७
जलमद्ध्ये प्रपां कृत्वा चतुर्गात्रसमन्विताम्
वितानद्धवजसंयुक्तां दर्भमालासमायुताम् २८
कण्ठमात्रे जले चैव प्राक् च्छिरश्चोर्ध्ववक्त्रकाम्
प्रतिमांशाययित्वा तु नन्दानन्दास्य वामके २६
अभितः कलशानष्टौ चाष्टदिक्पालकात्मकान्
सूत्रादिभिस्समायुक्तान् परितस्थाप्य पूजयेत् ३०

प्रासादस्याग्रके वापि मण्टपे दक्षिणेऽपि वा
द्वादशन्दशहस्तं वा रंध्रहस्तमथापि वा ३१
षोडशस्तंभसंयुक्तञ्चतुर्द्वारसमन्वितम्
तलोच्चन्तालमात्रन्तु कारयित्वा विचक्षणः ३२
कृत्वा नवपदम्मद्ध्ये पादके वेदिकां कुरु
रत्निमात्रसमुत्सेधान्दर्पणोदरसन्निभाम् ३३
परितश्चोपवेष्टन्तु वेद्याम्मूले प्रकल्पयेत्
युगांगुलन्तु विस्तारमुत्सेधन्तु तदर्द्धकम् ३४
मानुषे तु पदे चैव कुण्डानि परितः कुरु
चतुरश्रं योनिखण्डे भूताश्रं वृत्तपद्मकम् ३५
अग्न्यश्रञ्चैव वस्वश्रमिंद्रादीशादि कल्पयेत्
ईशानशक्रयोर्मद्ध्ये वृत्तं प्राधानिकं कुरु ३६
स्नानश्वभ्रं प्रकर्तव्यं मण्टपस्योत्तरे तथा
पश्चाच्छिल्पिनमुद्वास्य गोमयेनोपलेपयेत् ३७
मण्टपं कारयेद्धीमान् सर्वालंकारसंयुतम्
भूसुरान् भोजयेत्पश्चादुच्छिष्टन्तु विसर्जयेत् ३८
गोमयेनोपलिप्याथ शुद्धोदैः प्रोक्षयेद्भृदा
प्राक्कुण्डं वेदिकामद्ध्ये वास्तुहोमन्तु कारयेत् ३९
समन्तात् मण्टपं कुर्यात् पर्यग्निन्तेन वह्निना
पुण्याहं वाचयित्वाथ प्रोक्षयेत् पुरुषेण तु ४०
द्वारपूजादिकं सर्वं स्थापनक्रमवद्बुधः
वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ४१
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि
तन्मद्ध्येब्जं समालिख्य साष्टपत्रं सकर्णिकम् ४२
दर्भैः पुष्पैश्च लाजैश्च विकिरेत् समलंकृतम्
स्थण्डिलं पूजयेत्तत्र वर्मणा गन्धपुष्पकैः ४३

शयनं कल्पयेन्मद्ध्ये चर्मचाद्यैरनुक्रमात्
गन्धपुष्पादिभिश्चैव पूजयेत् पुरुषेण तु ४४
अघोरेण तु मन्त्रेण वामदेवेन पूजयेत्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् ४५
जलादुत्तीर्यबिंबन्तु नन्दनाञ्चैव बुद्धिमान्
कृत्वा तु पूर्ववच्छुद्धिं प्रोक्षयेत् पुरुषेण तु ४६
कौतुकं बन्धयेद्धीमान् पूर्वोक्तविधिना हृदा
शयने शाययेद्बिंबं प्राक् शिरश्चोद्ध्र्ववक्त्रकम् ४७
तस्य पश्चिमभागे तु नन्दनांशाययेद्बुधः
शिरो दक्षिणभागे तु ऊद्ध्र्ववक्त्रसमन्वितम् ४८
वस्त्रेण वेष्टयेद्बिंबानीशानेनैव पूजयेत्
शक्रशांकरयोर्मद्ध्ये महेशाख्य घटन्न्यसेत् ४९
तस्यैवोत्तरभागे तु वर्द्धनीं विन्न्यसेत्ततः
सकूर्चौ सापिधानौ च सवस्त्रौ रत्नहेमकौ ५०
चन्दनोदकसंपूर्णौ आम्रपल्लवशोभितौ
महेशकुंभे तन्मूर्तिरूपन्ध्यात्वा तु बीजकम् ५१
विन्यस्त्वा गन्धपुष्पाद्यैः पूजयेत् पुरुषेण तु
वर्द्धन्न्यां विन्न्यसेत् गौरीं बीजन्ध्यात्वा तु देशिकः ५२
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत्
वीरेशस्य शिरोभागे न्यसेद्वीरेशकुंभकम् ५३
सूत्रावभूस्समोपेतं तन्मद्ध्ये तु ---
आस्वागन्धादिभिश्चैव पूजयेत्पुरुषेण तु ५४
नन्दनाशाशिरोभागे विन्न्यसेन्नदनाघटम्
सूत्रादिभिस्समोपेतान् तत् बीजं घटमद्ध्यमे ५५
विन्न्यस्त्वा गन्धपुष्पाद्यैः पूजयेद्धृदयेन तु
सूत्रादिभिस्समोपेतानभितश्चाष्टकुंभकान् ५६

शाकादिषु क्रमान्नयस्त्वा विद्येशान् स्वस्वबीजकैः
विन्नयस्त्वा तु क्रमेणैव गन्धादिभिर्यजेद्धृदा ५७
ऋगाद्यद्धयनन्दिद्वुकोणे मन्त्रजपं कुरु
एव वस्त्रधरोष्णीषस्सोत्तरीयस्सुमालकः ५८
आचार्यो मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वं प्रागुक्तविधिनाचरेत् ५९
समिदाज्यचरुं लाजं सक्तुशालितिलं यवः
गुळं वापि अपूपञ्च सद्याद्यस्त्रान्तकैर्हुनेत् ६०
पलाशखदिराश्वत्थ प्लक्षौ दुंबरवञ्जुळा
वारुणञ्च शमीबिल्वं समिदीशानमन्त्रकम् ६१
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात् क्रमात्
द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिमथाचरेत् ६२
वदनं हृदये पादं कद्रुद्रायेतिमन्त्रतः
आज्येन षोडशं हुत्वा स्पृष्ट्वास्पृष्ट्वा तु होमयेत् ६३
अथ ब्रह्मषडंगैश्च मूलेनैव दशाक्षरैः
बीजमुख्ये घृतेनैव प्रत्येकन्तु शताहुतिम् ६४
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु
कृत्वा स्नानत्रयं पश्चात् स्थापको मूर्तिपैस्सह ६५
अंगन्नयासकरन्नयासं प्रागुक्तविधिनाचरेत्
आचार्यं पूजयेद्वस्त्रहेमांगुलीयकादिभिः ६६
दक्षिणान्दापयेत्तस्य प्रागुक्तविधिना सह
प्रागुक्तविधिमार्गेण मूर्तिपानथ पूजयेत् ६७
उद्धृत्य शयनात् बिंबं स्थापयेत्प्राङ्मुखो गुरुः
वस्त्रादीनि व्यपोह्याथ गन्धादिभिर्यजेद्धृदा ६८
नन्दनाञ्च ततोद्धृत्य ईशानेन तु पूजयेत्
कुंभान्कुण्डानि संपूज्य गंधपुष्पादिभिस्सह ६९

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत् ७०
उद्वास्य पावकं पश्चात्स्नानश्वभ्रे नयेत्प्रभुम्
नन्दनावामभागे तु विन्नयसेद्देशिकोत्तमः ७१
बिंबं संपूजयेत्पश्चात् वर्मणा गंधपुष्पकैः
प्रागुक्तविधिमार्गेण कुर्यात् घृतशिरोर्पणम् ७२
अष्टत्रिंशत् कलान्नयासं मकुटादिक्रमान्नयसेत्
भूतञ्च नन्दनायाञ्च देहे वर्णानि विन्नयसेत् ७३
सर्वालंकारसंयुक्तं सर्वातोद्य समन्वितम्
नृत्तगेय समायुक्तं स्तोत्रमंगळवाचकैः ७४
वेद्याः कुंभान्समुद्धत्य बाह्यहर्म्यप्रदक्षिणम्
कृत्वा बिंबाग्रके चैव स्थण्डिलोपरिविन्नयसेत् ७५
कुभात् बीजं समादाय प्रतिमाहृदिविन्नयसेत्
तद्धटस्थोदकैश्शंभुं स्नापयित्वादिशैवकः ७६
गौरीबीजं समादाय मद्ध्यपद्म तु विन्नयसेत्
वर्धनी स्थोदकैश्चैव तत्प्रदेशेऽभिषेचयेत् ७७
ईशानेन तु मन्त्रेण गंधपुष्पादिभिर्यजेत्
वीरेशबीजमादाय विन्नयसेद्धृत्प्रदेशके ७८
तत्कुंभस्थजलैश्चैव वीरेशमभिषेचयेत्
विन्नयसेद्धृदये मन्त्रं हरिञ्च हृत्प्रदेशके ७९
गंधपुष्पादिभिश्चैव पूजयित्वा तु वर्मणा
नन्दनाबीजमादाय तस्याश्चैव हृदि न्यसेत् ८०
तज्जलैः स्नाप्य गंधाद्यैः पूजयेद्धृदयेन तु
अष्टविद्येशबीजानि पीठे चक्रादिषु न्यसेत् ८१
तद्धटस्थोदकैश्चैव देवेशमभिषेचयेत्
स्नपनं कारयेच्छंभोर्यथावित्तानुसारतः ८२

अर्चनोक्तं समभ्यर्च्य फलं तत्र निवेदयेत्
आलयन्तु प्रविश्याथ प्रभूतहविषन्ददेत् ८३
उत्सवं कारयेत्पश्चात् एकाहं त्रियहन्तु वा
एवं भिक्षाटनस्योक्तं नन्दनायां विनाद्विजाः ८४
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ८५
इति कंकाळप्रतिष्ठापटलो द्व्यशीतितमः

गजसंहारप्रतिष्ठा विधिपटलप्रारंभः
प्रणम्यशिरसा देवं पर्यपृच्छत्पितामहम्
कोवासं हारमूर्त्तीनां स्थापनं परमेश्वर १
ईश्वरः तत्सर्वमखिलं वक्ष्ये श्रुणुष्वकमलासन
नृत्तञ्चैव तु कामारीं कालन्दहनमेव च २
गजघ्नं त्रिपुरघ्नञ्च जलन्धरवधन्तथा
षष्ठे संहारमूर्त्तीनां स्थापनं त्विह चोच्यते ३
रोहिणी च पुनर्वस्व पुष्ये मृगशिरस्तथा
हस्ते च रेवती चैव स्वाती चैव त्रिरुत्तरा ४
स्थापयेत्स्थिरराशौ तु अष्टमग्रहवर्जितम्
अंकुराण्यर्प्पयेत्पूर्वं नवाहे सप्तमे हनि ५
मण्टपं कारयेत्सम्यक् प्रासादस्याग्रके ततः
दक्षिणे चोत्तरे वापि कारयेल्लक्षणान्वितम् ६
कूटं वापि प्रपां वापि कारयेदथवा पुनः
मण्टपञ्चैव विप्रेंद्र एकाशीति पदं कुरु ७
मद्ध्ये नवपदञ्चैव वेदिका रत्निरुच्छ्रयम्
तस्य बाह्ये तु परितः मानुष्ये कुण्डमुच्यते ८
चतुरश्रञ्च योनिञ्च अर्द्धचंद्रं त्रिकोणकम्
वृत्तञ्चैव षडश्रञ्च पद्मं सप्ताश्रमेव च ९

पूर्वादीनि च विप्रेंद्र अष्टदिक्षु क्रमान्नयसेत्
ईशान इंद्रयोर्मद्ध्ये सप्तकोणन्तु कारयेत् १०
एवन्तु नृत्तरूपं स्यात्कामहारिन्ततः श्रुणु
चतुरश्रञ्च षट्कोणं त्रिकोणं पञ्चकोणकम् ११
एतानि च महादिक्षु वृत्तं श्रेष्ठं प्रकल्पयेत्
ईशान इंद्रयोर्मद्ध्ये सप्तकोणन्तु कारयेत् १२
गजघ्नस्य चतुर्दिक्षु वेदाश्रं कुण्डमुच्यते
त्रिपुरघ्नन्तथादिक्षु चतुष्कोणं त्रिकोणकम् १३
जलन्धरवधञ्चैव एवमेव क्रमेण तु
ईशान इंद्रयोर्मद्ध्ये सप्ताश्रं कारयेत्ततः १४
एवमेव क्रमेणैव कुण्डं कुर्यात्तु देशिकः
सत्यकस्य पदे चैव रत्नन्यासन्तु कारयेत् १५
शालिना विकिरेत्तत्र विन्त्यसेत् तंडुलं तिलं
तस्योपरि न्यसेद्देवं षण्णवत्यभिधीयते १६
वज्रं मरतकञ्चैव वैडूर्यञ्च प्रवाळकम्
स्फटिकं पद्मरागञ्च पुष्यरागन्तथैव च १७
माणिक्कं मद्ध्यमे स्थाप्य शिवमन्त्रेण देशिकः
गंधपुष्पादिनाभ्यर्च्य प्रतिमां तत्र विन्नयसेत् १८
सुस्निग्धं शिल्पिनं कुर्यात् पुण्याहं वाचयेत्ततः
आचार्यं पूजयेत्पश्चात् शिल्पिनं पूजयेत्ततः १९
रत्नन्यासमिदं प्रोक्तं नेत्रमोक्षणमुच्यते
आदित्यस्य पदे चैव नेत्रमोक्षणमाचरेत् २०
नयनद्वययुक्ते तु दिनलग्ने शुभे तथा
शालिना विकिरेत्तत्र दर्भैश्चैव परिस्तरेत् २१
नृत्तरूपं तदूर्ध्वे तु विन्नयसेच्छिवमंत्रकैः
प्रच्छन्नपटसंयुक्तं पूर्वाभिमुखमेव च २२

स्थापयेत्कलशानष्टौ लोकपालाधिदैवतान्
सकूर्चान्सापिधानांश्च वस्त्रेणैव समायुतान्  २३
सुवर्णसूचिना विप्र शिल्पिना प्रहरेत्ततः
पद्मरेखाप्रकर्तव्या कृष्णमंडलमेव च  २४
ज्योतिर्मंडलमालिख्य नेत्रमन्त्रसमायुतम्
अग्निहोमन्ततः कुर्यात् आज्येन चरुणा तथा  २५
नेत्रमंत्रेण विप्रेंद्र अष्टोत्तरशतं पृथक्
तत्काले दक्षिणान्दत्वा पुण्याहं वाचयेत्ततः  २६
सर्वालंकारसंयुक्तं कुर्यात् ग्रामप्रदक्षिणम्
प्रतिमां कण्ठमग्ने च जले चैवाधिवासयेत्  २७
प्रपां कृत्वा विशेषेण देशिको विन्यसेत्ततः
सवस्त्रान् सापिधानांश्च ससूत्रानष्टदिक्षु च  २८
एकरात्रं त्रिरात्रं वा पञ्च वा सप्तरात्रकम्
ततो मंडलसंस्कारा रभवेन समन्वितम्  २९
वास्तुहोमन्दशा कुर्यात् लक्षणेन समन्वितम्
दर्भमालाभिरावेष्टय चतुस्तोरणसंयुतम्  ३०
अष्टदिक्षु ध्वजान्न्यस्य वितानैरुपशोभितम्
मुक्तादामैरलंकृत्य पुष्पमालोपशोभितम्  ३१
वेदिकारत्निचोत्सेधं दर्पणोदरवत्कृतम्
अष्टद्रोणैश्च शालीभिस्तन्मद्ध्ये विन्न्यसेत्ततः  ३२
शाल्यर्द्धं तण्डुलन्न्यस्य तंडुलार्द्धं तिलं न्यसेत्
पद्ममष्टदळं लिख्य दर्भैश्चैव परिस्तरेत्  ३३
शयनं कल्पयेत्तत्र अंडजाद्यैस्ततो बुधः
जलादुत्तीर्य देवेशं शुद्धिं कृत्वा विशेषतः  ३४
प्रासादं प्रविशेत्तत्र पुष्पदन्तपदे स्थितः
आचार्योऽपि शुचिर्भूत्वा नववस्त्रेण वेष्टयेत्  ३५

सोष्णीषञ्चोत्तरीयञ्च वस्त्राभरणभूषितम्
आचार्यमपि बीजेन सर्वांगेषु च विन्नयसेत् ३६
उपदेष्टसमायुक्तं युक्तमाचार्यमुच्यते
उपदेष्टाशरीरन्तत् आचार्यो जीवमुच्यते ३७
संहितस्तु भवेद्विप्र सर्वसंपत्कराय च
मंत्रन्यासं प्रकर्तव्यं लक्षणेन समन्वितम् ३८
हस्ताभ्यां स्पर्शयेत्तत्र कादिपादान्तमेव च
अंगुष्ठादिकनिष्ठान्तं पञ्चब्रंहक्रमान्नयसेत् ३९
मद्ध्यमादितर्जन्यन्तं षडंगं विन्यसेत्क्रमात्
अस्त्रं हस्ततले चैव विन्यसेत्तु विशेषतः ४०
अष्टत्रिंशत्कलां चैव विन्यसेद्देशिकोत्तमः
प्राकृतं भावमुत्सृज्य शिवोहमिति भावयेत् ४१
प्रतिमां पञ्चगव्येन स्थापयेच्छिवमन्ततः
स्वर्णसूत्रसमायुक्तं कौतुकं बंधयेद्धृदा ४२
फलत्रयञ्च कर्पूरं कुंकुमञ्चन्दनेन च
समालोड्य च सर्वन्तु लेपयेत्तु समन्ततः ४३
सुमुहूर्ते सुलग्ने वा शयने शाययेच्छिवम्
प्रतिमां नववस्त्रेण पिधाय सकलन्ततः ४४
प्रासादेन तु मंत्रेण गंधपुष्पादिनार्चयेत्
नवकुंभं समादाय सूत्रेणैव तु वेष्टयेत् ४५
शुद्धोदकेन संपूर्य सकूर्चं सापिधानकम्
सवस्त्रं सहिरण्यञ्च पञ्चरत्नसमायुतम् ४६
द्रव्येणैव समायुक्तं वर्णकादीनि विन्नयसेत्
प्रतिमस्यैशदिग्भागे स्थापयेच्छिवकुंभकम् ४७
शिवकुंभे शिवं पूज्य पञ्चब्रंहषडंगकैः
वर्द्धनीं तस्य वामे तु गौरी बीजेन स्थापयेत् ४८

पूर्वादीशानपर्यन्तमष्टविद्येश्वरैर्युतम्
तांबूलं दापयेत्तत्र सद्योजातेन मन्त्रतः ४९
ततो होमं दिवा कुर्यात् भ्रंशमद्धये पदे तथा
ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् ५०
पालाशाश्वत्थ बिल्वञ्च प्लक्षोदुंबरमेव च
खादिरञ्च शमीञ्चैव वटापामार्गमेव च ५१
पूर्वादीनि क्रमान्येतान् मद्धये पालाशमेव च
सर्वेषामेव होमानामिध्मंपालाशमुच्यते ५२
समिदाज्य चरून् लाजान् सर्षपांश्च यवास्तिलान्
मुद्गमाषञ्च विप्रेंद्र नवद्रव्यमिहोच्यते ५३
समिधं हृदयेनैव आज्यञ्च शिर उच्यते
चरुहोमं शिखा चैव लाजं वै कवचेन तु ५४
नेत्रेण सर्षपञ्चैव अस्त्रेणैव यवन्तथा
ईशानेन तिलं हुत्वा मुद्गं सद्येन हूयते ५५
माषं वामेन होतव्यमेवमेव क्रमेण तु
सहस्रं वा तदर्द्धं वा तदर्द्धार्द्धमथापि वा ५६
शतमष्टोत्तरं वापि पञ्चाशत्पञ्चविंशतिम्
षोडशद्वादशं वापि दशसंख्याविशेषतः ५७
द्रव्यान्ते चैव द्रव्यन्ते व्याहृतिं जुहुयात्ततः
भवश्शर्वः पशुपतिरीशोपि विजयस्तथा ५८
उग्रोरुद्रस्तथा भीमो ह्येते होमस्य देवताः
वामाज्येष्ठारौद्रकाबी कलविकरणी तथा ५९
बलविकरणी बलप्रमथिनी सर्वभूतमनोन्मनी
क्रमात्कुण्डेषु विप्रेंद्र शक्तीनामिह चोच्यते ६०
द्रव्यान्ते प्रतिमां स्पृष्ट्वा पञ्चब्रंहषडंगकैः
चतुर्दिक्षु चतुर्वेदैः कुर्यादद्धयनं ततः ६१

व्योमं प्रासादमंत्रञ्च ब्रंहांगञ्च तथैव च
दीच्चितैर्ब्राहिणैश्चैव चतुर्दिच्चुजपेत्ततः ६२
तानि सर्वाणि स्तोत्राणि गेयनृत्तसमाकुलैः
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् ६३
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम्
चित्तादींश्च जयादींश्च राष्ट्रभृच्चावहूयते ६४
हूयते क्रमशो विप्र व्याहृतिं जुहुयात्ततः
शिवदीच्चेण होतव्यं लच्चणेन समन्वितम् ६५
पर्यष्टिपरिचाराणां शिवदीच्चाविदो विदुः
एवं कृते तु विप्रेंद्रराजराष्ट्रसुखावहम् ६६
अधिवासनहोमन्तु प्रधानाग्नौ तु होमयेत्
यदस्य कर्मणस्येति स्विष्टकृद्धूयते क्रमात् ६७
प्रभाते दच्चिणान्दद्यादाचार्यादिषु सर्वशः
आचार्यं पूजयेत्पूर्वं वस्त्रांगुलीयकादिभिः ६८
पञ्चांगभूषणान्दद्यादाचार्यस्य विशेषतः
अधमन्दशनिष्कञ्च मद्ध्यमं द्विगुणं भवेत् ६९
उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दच्चिणा
स्तोत्राद्यद्ध्ययनादीनान्तदर्द्धं दच्चिणान्ददेत् ७०
साधकानां त्रिनिष्कन्तु शैविकानान्ददेत्पुनः ७१

इति गजसंहारप्रतिष्ठाविधिपटलः त्र्यशीतितमः

## कालनिग्रहस्थापनविधिपटलप्रारंभः

अथ संस्थापनं वद्त्ये कालनिग्रहमूर्तिनः
च्चेमदञ्जयदं लोके भुक्तिमुक्तिफलप्रदम् १
उत्तरायणकाले तु शुक्लपच्चे शुभे दिने
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत् २

प्रागुक्तविधिनापूर्वमकुराणयर्पयेत्सुधीः
विचित्रमराटपे हर्म्ये रत्नन्यासं समारभेत् ३
तन्मद्ध्ये स्थरिाडलं कृत्वा पीठन्तस्योपरिन्यसेत्
माणिक्कं मद्ध्यमे न्यस्त्वा हेमकूर्चसमन्वितम् ४
इंद्रनीलन्तु पूर्वायां याम्ये मरतकन्नयसेत्
स्फटिकं वारुणे भागे चंद्रकान्तन्तु सौम्यके ५
प्रवाळं वह्निदेशे तु वज्रं निर्रृति गोचरे
मौक्तिकं वायुदेशे तु शंखमीशे तु विन्नयसेत् ६
हृदयेन तु मंत्रेण विन्नयसेत्तु क्रमेण तु
देवन्तस्योपरिन्नयस्त्वा सुस्निग्धं सुदृढं कुरु ७
नयनमोद्मणं कुर्यात् नेत्रयुग्मयुते दिने
विचित्रमराटपे मद्ध्ये स्थरिाडलं शालिभिः कुरु ८
तन्मद्ध्ये विन्नयसेद्देवं प्राङ्मुखं हृदयेन तु
पद्ममरेखां लिखेत्सूच्या शातकुंभमयेन तु ९
कृष्णमराडलमालिख्य दृष्टिमराडलमालिखेत्
नेत्रमंत्रं समुच्चार्य लेखयेद्देशिकोत्तमः १०
हेमांगुलियवस्त्राद्यैस्संपूज्योद्वास्य शिल्पिनम्
तस्याग्रे स्थरिाडलं कुर्यात् बिंबन्तस्योपरिन्यसेत् ११
अभितः कलशानष्टौ सूत्रोदकादिभिर्युतान्
स्थाप्येंद्रादिषु विद्येशान् पूजयेत्पुरुषेण तु १२
प्रोतहेमनखैश्चैव नेत्रेषु नेत्रमंत्रतः
मद्ध्वाज्यसूक्तमुच्चार्य मद्ध्वाज्याभ्यान्तु तर्पयेत् १३
प्रतिप्रस्थपूरिताभ्यां पात्रे ताभ्यां प्रदर्शयेत्
धेनुगोर्द्धेनुहव्येति शिरसा चैव धान्नयकम् १४
ब्रह्मजज्ञानमंत्रेण भूसुरान् संप्रदर्शयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः १५

प्रच्छन्नपटमावर्ज्य जनसंघान्प्रदर्शयेत्
अष्टमृत्सलिलेनैव पञ्चगव्येन वर्मणा १६
प्रतिमांस्नापयित्वा तु गन्धादिभिर्यजेद्धृदा
वस्त्रैराभरणैर्माल्यैः प्रतिमां भूषयेत्ततः १७
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्
ग्रामप्रदक्षिणं कृत्वा संप्रविश्य जलाशयम् १८
तीरे तु स्थण्डिलं कृत्वा बिंबन्तस्योपरिन्यसेत्
मूर्द्धादिपादपर्यन्तं वस्त्रदर्भैश्च वेष्टयेत् १९
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत्
जलमद्ध्ये प्रपां कुर्यात् चतुर्गात्रसमन्विताम् २०
वितानद्ध्वजसंयुक्तां दर्भमालाभिरावृताम्
कण्ठमात्रे जले धीमान् तन्मद्ध्ये फलकोपरि २१
प्रतिमांशाययेद्धीमान् प्राक् छिरश्चोर्द्ध्ववक्त्रकाम्
अभितः कलशानष्टौ ससूत्रोदकपूरितान् २२
इंद्रादिभिस्समोपेतान् स्थाप्य संपूजयेद्धृदा
त्रिरात्रं वा द्विरात्रं वा एकरात्रञ्जलोषितम् २३
अथवा याममात्रं वा तदर्द्धं वा जलोषितम्
भवनस्याग्रके वापि दक्षिणे चोत्तरेऽपि वा २४
द्वादशं रुद्रहस्तं वा रन्ध्रहस्तमथापि वा
कलास्तंभसमायुक्तं मण्टपं कारयेत् बुधः २५
मद्ध्यमे वेदिकां कुर्यात् तत्त्रिभागैकभागया
रत्निमात्रसमुत्सेधां दर्प्पणोदरसन्निभाम् २६
कुण्डानि कल्पयेद्धीमान् परितो मानुषे पदे
दिशासु चतुरश्राणि वृत्तानि विदिशासु च २७
शक्रशांकरयोर्मद्ध्ये पद्मं कुर्यात् प्रधानकम्
स्नानश्वभ्रन्तथा कुर्यात् मण्टपस्योत्तरे ततः २८

पश्चाच्छिल्पिनमुद्वास्य गोमयेनानुलेपयेत्
मण्टपं कारयित्वा तु भूसुरान् भोजयेत्ततः २९
उच्छिष्टन्तु समुद्वास्य पुण्याहं वाचयेत्ततः
प्राक् कुण्डं वेदिकामद्ध्ये वास्तुहोमन्तु कारयेत् ३०
पर्यग्निकरणान्तेन वह्निनामण्टपे कुरु
पञ्चगव्येन संप्रोक्ष्य पुण्याहं वाचयेत्ततः ३१
द्वारपूजादिकं सर्वं स्थापनक्रमवत् बुधः
वेद्यूर्द्ध्वे स्थण्डिलं कुर्यात् अष्टद्रोणैश्च शालिभिः ३२
तदर्द्धैस्तण्डुलैश्चैव तदर्द्धैश्च तिलैरपि
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ३३
कुशैः पुष्पैश्च लाजैश्च परिस्तीर्य ततोपरि
स्थण्डिलं गन्धपुष्पाद्यैः पूजयेदस्त्रमन्त्रतः ३४
तन्मद्ध्ये शयनं कल्प्य चर्मचाद्यैरनुक्रमान्
शयनं गन्धपुष्पाद्यैर्वामदेवेन पूजयेत् ३५
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम्
जलादुत्तीर्य देवेशं स्नानश्वभ्रे तु विन्नयसेत् ३६
वस्त्रादीनि व्यपोह्याथ पूर्ववच्छुद्धिमाचरेत्
ईशानेन तु संपूज्य कौतुकं बन्धयेत्ततः ३७
स्नानवेद्यां समुद्धृत्य विन्नयसेच्छयनोपरि
शयने शाययेत् बिंबं प्राक् च्छिरश्चोर्द्ध्ववक्त्रकम् ३८
वस्त्रेणैव तु संवेष्टय पूजयेत्पुरुषेण तु
दशमुद्रां प्रदर्श्याथ महेशाख्यां प्रदर्शयेत् ३९
बिंबस्य पश्चिमे भागे रक्तवस्त्रे वेष्टयेत्
दक्षिणोत्तरमार्गेण शाययेत्स्थण्डिलोपरि ४०
पाशुपतेन चास्त्रेण प्रोक्षयेच्छुद्धवारिणा
महेशकुंभं बिंबस्य शिरोभागे तु विन्नयसेत् ४१

वर्द्धनीं विन्नयसेत्सौम्म्ये तस्य भागे तु विन्नयसेत्
ससूत्रं सापिधानञ्च सवस्त्रं गन्धपूरितम् ४२
रत्नहेमसमायुक्तं सकूर्चं पल्लवैर्युतम्
तन्मूर्धा कृतिकं ध्यात्वा कुंभन्तस्यैव बीजकम् ४३
न्यस्त्वा गंधादिभिश्चैव ईशानेनैव पूजयेत्
शरमुद्रां महेशाख्यां निष्ठुराञ्च प्रदर्शयेत् ४४
गौरी बीजन्तु वर्द्धन्यां ध्यात्वा न्यस्त्वा यजेद्धृदा
मुकुळी पद्ममुद्राञ्च शक्तिमुद्रां प्रदर्शयेत् ४५
अभितस्तु घटानष्टौ शुद्धोदकप्रपूरितान्
सूत्रादिभिस्समोपेतानिंद्रादिषु क्रमान्नयसेत् ४६
अनन्तादिशिखण्डयान्तानिंद्रादिदिक्षु विन्नयसेत्
गंधपुष्पादिभिस्तत्र ईशानेनैव पूजयेत् ४७
नैवेद्यं दापयेत्पश्चात्तांबूलं दापयेत्पृथक्
नवांबरधरोष्णीषश्शुक्लवस्त्रोत्तरीयकः ४८
सर्वाभरणसंयुक्तैर्गंधमाल्यैरलंकृतः
स्थापको मूर्तिपैस्सार्द्धं होमकर्म समाचरेत् ४९
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
दिशास्वद्धययनं कुर्यात्कोणे मन्त्रजपं कुरु ५०
समिदाज्य चरून्लाजान्यवसिद्धार्त्थमाषकान्
मधुघृतसमायुक्तं गुळखण्डञ्च होमयेत् ५१
अश्वत्थो दुंबरप्लक्षवटं पूर्वादिदिक्षु च
खादिरञ्च शमी बिल्वं मायूरं पावकादिषु ५२
प्रधानस्य पलाशन्तु सर्वेषामिध्ममेव च
ईशानेन समिद्धोमं पुरुषेण घृतं हुनेत् ५३
अघोरेण चरुं हुत्वा वामेनैव तु लाजकम्
सद्येनैव यवं हुत्वा सर्षपं कवचेन तु ५४

अस्त्रेण जुहुयान्माषं नेत्रेण मधुरं हुनेत्
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत् ५५
द्रव्यान्ते व्याहृतिं हुत्वा तन्मन्त्रैस्तु स्पृशेत्प्रभुः
पञ्चब्रह्मषडंगैश्च मूलमन्त्रैर्दशाक्षरैः ५६
बीजमुख्यैर्घृतेनैव प्रत्येकन्तु शताहुतिः
एवञ्जागरणं रात्रौ प्रभाते विमले ततः ५७
देशिको मूर्त्तिपैस्सार्द्धं स्नानत्रयमथाचरेत्
अंगन्न्यासकरन्न्यासं प्रागुक्तविधिनाचरेत् ५८
प्रागुक्तविधिमार्गेण देशिकादीन् प्रपूजयेत्
उद्धृत्य शयनाद्बिंबं वस्त्रादीनि व्यपोह्य च ५९
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत्
कुंभान्कुण्डानि संप्रोक्ष्य पूज्य गन्धादिभिः क्रमात् ६०
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत् ६१
पावकन्तु ततो ह्यस्य स्नानवेद्यान्नयेत्प्रभुः
कालबिंबं समुद्धृत्य देवस्याग्रे न्यसेत्ततः ६२
अष्टत्रिंशत्कलान्न्यासं मकुटादिक्रमान्न्यसेत्
गन्धपुष्पादिभिश्चैव ईशानेनैव पूजयेत् ६३
घृतं शिरोर्पणं कुर्यात्प्रागुक्तविधिना सह
मुहूर्त्ते समनुप्राप्ते स्थापनन्तु समारभेत् ६४
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्
वेद्याः कुंभान् समुद्धृत्य बाह्य हर्म्यप्रदक्षिणम् ६५
कृत्वा बिंबस्य चाग्रे तु स्थण्डिले तु न्यसेत्ततः
प्राणप्रकृतियोगन्तु ज्ञात्वा स्थापनमारभेत् ६६
कुंभात् बीजं समादाय प्रतिमा हृदि विन्यसेत्
तत्कुंभस्थजलैर्देवं स्नापयेत्तु विशेषतः ६७

गौरी बीजं समादाय पद्मपीठस्य मद्ध्यमे
विन्नयस्त्वा तज्जलैः स्नाप्य पीठे विद्येश्वरान्नयसेत् ६८
तत्कुंभस्थजलैर्देवं स्नापयेत्कालहारिणम्
कर्चनोक्तं समभ्यर्च्य स्नपनं कारयेत्ततः ६९
पूजयित्वा विशेषेण गन्धपुष्पादिभिस्ततः
आपोहिष्ठेतिमन्त्रेण प्रोक्षयेत्कालदेहकम् ७०
आलयन्तु न्यसेदेवमग्रे कालन्तु विन्नयसेत्
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत् ७१
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः
कामारिस्थापनं ह्येवं कारयेत्तु विचक्षणः ७२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ७३
इति कालनिग्रहस्थापनविधिपटलश्चतुरशीतितमः

पुरारिस्थापनविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण पुरारिस्थापनं परम्
मोक्षदं विजयं लोके भुक्तिमुक्तिफलप्रदम् १
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत् २
प्रागुक्तविधिना पश्चादंकुरार्पयेत्सुधीः
मण्टपे गोमयालिप्ते वितानाद्यैस्सुभूषितैः ३
शालिभिः स्थण्डिलं कृत्वा मद्ध्ये पद्मं समालिखेत्
पद्मपीठन्ततो न्यस्त्वा नवनिम्नसमन्वितम् ४
दिक् पालानान्तु परितो गन्धाद्यैः स्वस्वनामभिः
दशबीजं समुच्चार्य रत्नन्यासन्तु कारयेत् ५
आदिशैवान्वयोद्भूतश्शिवदीक्षाभिषिक्तकः
पञ्चगोचरसंभूतश्शिवानुष्ठानतत्परः ६

शैवसिद्धान्तशास्त्रज्ञश्शिवार्च्चनरतस्सुधीः
देवाग्निगुरुभक्तिश्च शिवलक्षणलक्षितः ७
शिवश्चेति सुपुष्टांगस्सर्वप्राणिदयारतः
ईदृशं गुरुमापाद्य वृणीयात्स्थापनाय वै ८
मूर्तिपास्त्वीदृशाः प्रोक्ताः कारयेद्धोमकर्मणि
तदाचार्यनियोगेन रत्नन्यासं समारभेत् ९
माणिक्कम्मद्ध्यमे कोष्ठे वज्रमैंद्रे तु विन्नयसेत्
वह्नौ मरकतं नीलं यामे निर्ऋृतिगोचरे १०
मौक्तिकं पुष्यरागञ्च वारुणे तु पदे तथा
गोमेदं वायुदिग्भागे विद्रुमं सोमदेशके ११
वैडूर्यमीशदिग्भागे गुरुः प्रक्षेपयेत्ततः
बिंबन्तदुपरिन्नयस्त्वा सुदृढं कारयेत्ततः १२
बिंबशुद्धिं ततः कृत्वा तत् द्रव्याहतवस्तुना
पञ्चमृत् पञ्चगव्यैश्च शुद्धतोयैर्विशेषतः १३
स्नापयेत्तु ततो बिंबं यावन्निर्मलतांगतः
नेत्रोन्मीलनं कुर्यात्स्थण्डिले शालिभिः कृते १४
दळाष्टकसमोपेतं पंकजं कर्णिकान्वितम्
आलिख्य कर्णिकायान्तु बिंबं प्रागाननन्नयसेत् १५
प्रागाद्यष्टदळेष्वेषु निर्दोषान् कलशाष्टकान्
गन्धाम्बुपूरितान् कूर्चान् वस्त्रपुष्पाक्षतान्वितान् १६
इंद्रादिलोकपालांश्च तत्तत्कुंभेषु योजयेत्
नेत्रद्वययुतर्क्षेषु नेत्रोन्मीलनकर्मणि १७
देशिकं शिल्पिनन्तत्र वस्त्रहेमांगुलीयकैः
संपूज्यगन्धपुष्पाद्यैः यजमानस्तु तोषयेत् १८
तरंगेन समावृत्य लेखयेत् हेमसूचिना
भ्रूरेखां पद्मरेखाञ्च कृष्णमण्डलमेव च १९

ज्योतिर्मण्डलमालिख्य मद्धवाज्याभ्यां सुसेचयेत्
ततश्शिल्पिनमुद्वास्य कलशान्स्वस्वमन्त्रकैः २०
संस्नाप्य शुद्धतोयैश्च स्नापयेत्तु पुनः पुनः
प्रत्येकं प्रस्थसंपूर्णं ताम्रेणैवाथ कांस्यके २१
कृत्वा पात्रत्रयन्तेषु मद्धवाज्यक्षीरपूरितम्
प्रक्षिप्य हेमकलशान् मधुवातेति मन्त्रतः २२
दर्शयेन्मधुपात्रे तु ब्रह्मजज्ञानमुच्चरन्
दर्शयेत्क्षीरपात्रन्तु सवत्सांगां पयस्विनीम् २३
गौर्द्धेनुहव्यमन्त्रेण दर्शयेत्तु विचक्षणः
त्रियंबकेन मन्त्रेण ब्रह्माणन्दर्शयेत्ततः २४
करंगपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत्
रंगे वा शिबिकायां वा सर्वालंकारभूषणैः २५
संपूज्यदेवदेवेशं शंखभेर्यादि निस्वनैः
चित्रध्वजपताकाद्यैः प्रदीपैर्बहुभिर्युतम् २६
ग्रामप्रदक्षिणं कृत्वा यजमानस्सबंधुभिः
जलाधिवासनात्र्थाय कण्ठदघ्ने जले शुभे २७
चतुर्गात्रसमायुक्तां प्रपां कृत्वा विशेषतः
वितानदर्भमालाद्यैर्ध्वजैश्चैव विभूषयेत् २८
जलान्तन्दारुपीठन्तु प्रक्षिपेत्सदृढं यथा
तीरे समतले देवं विन्यस्त्वा स्नाप्य पूर्ववत् २९
नवांबरैस्समावेष्ट्य पुष्पमालासकूर्चकम्
गंगा च यमुना चैव नर्मदा च सरस्वती ३०
सिंधु गोदावरी चैव कावेरी च जलान्तरे
संकल्प्य स्वस्य नामानि जले देवन्तु शाययेत् ३१
अभितः कलशानष्टौ पूर्ववत्स्थापयेद्गुरुः
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा ३२

दिवसं दिवसार्द्धं वा यामं यामार्द्धकं तु वा
घटिकैकासमुद्दिष्टा जले चैवाधिवासयेत् ३३
ध्यात्वा तु वा महादेवं यावज्जलगतन्तथा
प्रासादस्याग्रतो वापि याम्ये वा चोत्तरेऽपि वा ३४
शांकरे पावकेऽथ कर्तव्यं यागमण्टपम्
हस्तैर्द्वादशभिः कुर्यादेकादशकरैस्तु वा ३५
दशभिर्नवहस्तैर्वा षोडशस्तंभसंयुतम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ३६
कृत्वा नवपदं तत्र मद्ध्यकोष्ठेषु वेदिकाम्
रत्निमात्रसमुत्सेधां दर्पणोदरसन्निभाम् ३७
परितोष्टौ च कुंडानि चतुष्कुंडमथाचरेत्
तुर्याश्रं पूर्वदिग्भागे वह्निमश्वत्थपत्रवत् ३८
अर्द्धचंद्रं ततो याम्ये त्रिकोणं राक्षसाधिपे
पाशभृद्दिशिवृत्तं स्यात् षडश्रं वायुगोचरे ३९
पद्मकुंडन्ततो याम्ये शांकरेष्टाश्रमेव च
शक्रशांकरयोर्मद्ध्ये वृत्तकुण्डं शिवाग्नये ४०
पञ्चाग्निञ्च चतुर्दिक्षु शिवाग्निं शांकरे दिशि
हस्तविस्तारमेकैकं तद्वत्खातत्रिमेखलम् ४१
योन्याब्जनाभिसंयुक्तं वर्तनाविधिमार्गतः
सर्वेषु चतुरश्राणि वृत्ताकाराण्यथापि वा ४२
सन्निकृष्टदिने चैव स्थण्डिले होममाचरेत्
कुण्डानि कारयेद्धीमान् गोमयेनानुलेपयेत् ४३
शालिपिष्टकचूर्णाद्यैः पञ्चवर्णैस्सुलेखयेत्
रंगवल्लींसमालिख्य चित्रवर्णोपशोभितम् ४४
वितानैश्चैव संछाद्य दिक्ष ध्वजैश्च प्रलंबयेत्
दर्भमालाभिरावेष्ट्य फलपल्लवदामकैः ४५

स्तंभानावेष्ट्य वस्त्रैश्च तोरणान् खरदारुभिः
तस्यैवोत्तरपार्श्वे तु कर्तव्यं स्नानमराटपम् ४६
उत्तमानार्द्धमानेन प्राग्वत् भूषणभूषितम्
तन्मद्ध्ये स्नानपादिन्तु हस्तद्वयसुविस्तृताम् ४७
हस्तार्द्धमानतुंगाढ्यामेकमेखलयावृताम्
श्वभ्रे तदुत्तरे खात्वा हस्तद्वयप्रमाणतः ४८
ब्रांहणान्भोजयेत्तत्र तद्दिनं प्राग्दिनद्वये
ब्रांहणोच्छिष्टमुद्वास्य पुरायाहन्तत्र कारयेत् ४९
स्थापनाद्दिवसात्पूर्वे दिवसे स्तमये तथा
वास्तुहोमं ततः कृत्वा प्रासादेवाथमंटपे ५०
पूर्वोक्तविधिवद्धुत्वा पर्यग्निकरणं ततः
पुरायाहं वाचयेत्तत्र स्वस्तिसूत्रसमन्वितम् ५१
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः
जलादुत्तीर्य बिंबन्तु वस्त्रकूर्चं व्यपोह्य वै ५२
जलस्थापनकुंभस्थतोयैस्संस्नापयेच्छिवम्
स्नानवेद्यां ततो नीत्वा स्नापयेच्छुद्धवारिभिः ५३
पञ्चब्रंहशिवांगैश्च स्नापयेद्दशबीजकैः
गंधैस्सुगंधपुष्पैश्च धूपैर्दीपैर्यजेद्धृदा ५४
वस्त्रयुग्मेन संवेष्ट्य बिंबपीठप्रभान्वितम्
हेमकौतुकसूत्रन्तु ब्रंहजज्ञानमुच्चरन् ५५
बध्वा दक्षिणहस्ते तु भस्मनिक्षिप्य चास्त्रतः
भस्मभक्तजनान्दत्वा दूर्वांकुराक्षतैः घृतैः ५६
सद्यमन्त्रैश्च मूर्ध्नी च बाह्वोश्च पादयोस्तथा
घृतं शिरोर्पणं कृत्वा प्रारभेच्छयनं सुधीः ५७
स्थंडिले वेदिकोर्ध्वे तु द्रोणाष्टकसुशालिभिः
तंडुलैश्च चतुर्द्रोणैर्द्रोणद्वयतिलैरपि ५८

तन्मध्ये नळिनं कृत्वा साष्टपत्रं सकर्णिकम्
प्रोक्षयेत्पुरुषेणैव लाजदर्भैः परिस्तरेत् ५९
शयनं कल्पयेन्मद्ध्ये चर्मचाद्यैरनुक्रमात्
वामदेवेन मन्त्रेण पूजयेच्छयनोपरि ६०
तन्मद्ध्ये शाययेद्देवं प्राक् च्छिरश्चोर्द्ध्ववक्त्रकम्
रक्तवस्त्रेण संवेष्ट्य गन्धादिभिर्यजेद्धृदा ६१
प्रधानकुंभं तस्यैव शिरोभागे तु विन्न्यसेत्
तस्यैव वामभागे तु वर्द्धनीञ्चैव विन्न्यसेत् ६२
अभितः कलशानष्टौ चाष्टविद्येश्वरात्मकान्
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ६३
सकूर्च्चान्हेमसंयुक्तान्फलपल्लवसंयुतान्
शिवाख्यं पञ्चरत्नांबु उमाख्यं हेमसंयुतम् ६४
तत्तन्मूर्त्त्यात्मकैर्बीजैर्वर्णानान्तु सचिह्नकैः
कुंभेष्वेवं विशेषेण द्ध्यात्वा संपूजयेद्धृदा ६५
नैवेद्यन्दापयेत्पश्चात्तांबूलन्दापयेत्ततः
पद्ममुद्रां प्रदर्श्याथ होमकर्म समाचरेत् ६६
शिवाग्निं कल्पयेत्तत्र अग्निकार्योक्तमाचरेत्
समिदाज्य चरुं लाजं सर्षपांश्च यवांस्तिलान् ६७
होमद्रव्याणि सप्तैते जुहुयाद्वै क्रमेण तु
अश्वत्थोदुंबरप्लक्षं वटं पूर्वादिदिक्षु च ६८
शमीखदिरबिल्वञ्च मायूरञ्च विदिक्षु च
पलाशञ्च प्रधानस्य सर्वेषामिध्ममुच्यते ६९
समिधा सद्यमन्त्रेण मूलेनैव घृतं हुनेत्
अघोरेण चरुं हुत्वा वामदेवेन लाजकम् ७०
सर्षपं कवचेनैव यवमस्त्रेण होमयेत्
तिलं नेत्रेण मंत्रेण होमयेद्देशिकोत्तमः ७१

शतमर्द्धन्तदर्द्धं वा प्रत्येकं जुहुयात्
घृतं मिमिन्ने घृतं हुत्वा देवस्य त्वाचरुं हुनेत् ७२
यत्ते अग्ने तिलैर्लाजमग्न आयाहिसर्षपम्
यवन्तु शन्नो देवेति कद्रुद्रायेति वै तिलम् ७३
प्रत्येकं षोडशं हुत्वा उपाहुतिं समिद्विना
द्रव्यान्ते व्याहृतिं हुत्वा कुर्यात्स्पर्शाहुतिन्ततः ७४
मकुटं वदनञ्चैव हृदयन्नाभिगुह्यकौ
पादौ चैव तु तत् द्रव्यं हुत्वा तेनैव मंत्रतः ७५
मौल्यादिपादपर्यन्तं हुत्वान्ते च तथास्पृशेत्
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु ७६
आचार्यो मूर्त्तिपैस्सार्द्धं स्नानत्रयं समाचरेत्
अंगन्नयासकरन्यासं पूर्वोक्तविधिनाचरेत् ७७
प्रतिमांशयनोद्ध्र्वे तु उद्धृत्यप्राङ्मुखं कुरु
पर्युषितानि सन्त्यज्य गन्धपुष्पादिभिर्यजेत् ७८
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
दक्षिणान्दापयित्वा तु प्रागुक्तविधिना सह ७९
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा जुहुयाद्देशिकोत्तमः ८०
मुहूर्त्तन्नाडिकापूर्वे स्नानश्वभ्रन्नयसेत्प्रभुम्
घृतशिरोर्पणं कुर्यात्पूर्ववत् भाव्य बुद्धिमान् ८१
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्नयसेत्
प्रधानकुंभमुद्धृत्य वर्द्धनी मूर्त्तिकुंभकान् ८२
शिरसा वाहयित्वा तु कृत्वा धामप्रदक्षिणम्
बिंबाग्रे स्थापयेत्कुंभान् स्थापयेत्स्थण्डिलोपरि ८३
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
कुंभात् बीजं समादाय प्रतिमा हृदिविन्यसेत् ८४

वर्द्धन्नचां बीजमादाय पीठाब्जे मद्ध्यमे न्यसेत्
विद्येशान्स्वस्वबीजेन इंद्राद्यब्जदळे न्यसेत् ८५
प्रभूतहविषन्दत्वा गुळखराडसमन्वितम्
उत्सवं कारयेत्पश्चात् कर्त्ताविनानुसारतः ८६
एवं यः कुरुते मर्त्यस्सपुरायां गतिमाप्नुयात् ८७
इति पुरारिस्थापनविधिपटलपञ्चाशीतितमः

सप्ततारडवपटलप्रारंभः

त्यक्तस्यानन्दमूर्त्तिस्तु आदिमूलं परं शिवम्
मूलबिन्दुरिति ज्ञेयं अंकुरन्नादमुच्यते १
सदाशिवं परं गुह्यं सदाशिव महेश्वरम्
महेशं सकळोपेतममिश्रन्तु सदाशिवम् २
निष्कळं शिवमेकन्तु आनन्दं त्रिविधं भवेत्
तस्मादानन्दरूपन्तु नृत्तमूर्तिरिहोच्यते ३
कथ्यन्ते शिवशास्त्राणि नृत्तं सप्तविधं भवेत्
आनन्दतारडवं पूर्वं सन्ध्यातारडवतत्परम् ४
गौरीतारडवमेवन्तु तथा त्रिपुरतारडवम्
काळीतारडवमेवञ्च मुनीनान्तस्य तारडवम् ५
संहारतारडवं पश्चात् इत्येते सप्ततारडवम्
तारडवं सर्वमेवन्तु उमातारडवमंगलम् ६
उमासंप्रीतिकञ्चैव कल्याणविधिना कृता
तस्मात्कल्याणकर्मेण सर्वमंगळमंगळम् ७
कल्याणसुन्दरद्ध्यानं नृत्तरूपमिहोच्यते
कल्याणसुन्दरं नृत्तं भेदञ्चैव न विद्यते ८
बन्धञ्च बन्धुरे कराठे कराठभूषजलं ग्रहेत्
सुगन्धञ्चैव मांगल्यं सर्वलोकैकमंगळम् ९

पूर्वेथतीर्थदिवसात् उत्सवानां नटेश्वरम्
तत्र पूर्वे रजन्नयान्तु रक्षाबन्धनमाचरेत् १०
तत्कर्ममेव संकल्प्य अग्निसाक्षिन्तु साधयेत्
यात्राहोमं समारभ्य तत्र चैवं समाचरेत् ११
प्रपञ्चरक्षामेवन्तु सृष्टिस्थिति लयानि च
वस्त्रमंगल्य सूत्राणि शुद्धिदं होममाचरेत् १२
प्रतिसरन्तु सूत्राणि बन्धनन्तु समाचरेत्
यक्षराक्षसपैशाच भूतवेताळ बन्धनम् १३
पुरत्रयन्तु संहारं रक्षाबन्धं विधीयते
यात्रोपकरणं सर्वं सप्तानां दिवसन्नयेत् १४
अथवान्नयप्रकारेण अष्टानां दिवसे तथा
पश्चान्नृत्तोत्सवं प्रोक्तं तद्रात्रौ कौतुकं भवेत् १५
वस्त्रमंगल्य सूत्राणि शान्तिहोमं समाचरेत्
होमान्ते कौतुकं प्रोक्तं सर्वकर्मसमाचरेत् १६
विजयं श्रीकरं पुण्यं मंगल्यं मंगलं शुभम्
कीर्तिरायुष्य पुत्रार्थं कल्याणञ्चैव कारयेत् १७
इति सप्ततांडवपटलः षडशीतितमः

चण्डेशस्थापनविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि चण्डेशस्थापनं परम्
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत्
अंकुरार्पणर्पयेद्धीमान् पूर्वोक्तविधिना सह २
विचित्रमण्टपे मद्ध्ये स्थण्डिलं शालिभिः क्रमात्
तन्मद्ध्ये नळिनं लिख्य तस्योद्ध्र्वे प्रतिमान्नयसेत् ३
न कुर्याद्रत्नविन्नयासं नेत्रमोक्षणमारभेत्

हेमसूच्यालिखेत्पद्ममरेखां वै कृष्णमण्डलम्  ४
ज्योतिर्मण्डलमालिख्य मद्धुवाज्याभ्यान्तु तर्पयेत्
नेत्रेण तर्पयित्वा तु कुर्यात् गव्याभिषेचनम्  ५
ग्रामप्रदक्षिणन्नोक्तं कुर्यात् जलाधिवासनम्
वस्त्रेण प्रतिमां वेष्टय लंबकूर्च्चसमन्विताम्  ६
जलमद्ध्ये प्रपां कृत्वा शाययेत्तस्य मद्ध्यमे
एकरात्रं द्विरात्रं वा जले चैवाधिवासयेत्  ७
हर्म्याग्रे मण्टपं कुर्यात् अष्टहस्तप्रमाणकम्
कलास्तंभसमायुक्तं युगाश्रन्तस्य मद्ध्यमे  ८
सवेदिकां कुर्याद्धीमान् तत्त्रिभागैकभागया
रत्निमात्रसमुत्सेधां दर्पणोदरसन्निभाम्  ९
कुण्डानि परितः कुर्यात् मानुषे तु पदे क्रमात्
इंद्राशादि चतुर्दिक्षु वेदाश्रं कारयेत्ततः  १०
वृत्तकुंडं तथैशान्यां प्रधानं कल्पयेद्बुधः
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्  ११
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत्
मण्टपं भूषयित्वा तु भूसुरान् भोजयेत्ततः  १२
गोमया लेपनं कृत्वा पुण्याहं वाचयेत्ततः
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः  १३
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैश्च शालिभिः
तंडुलैस्तिलदर्भैश्च पुष्पैश्चैव परिस्तरेत्  १४
तन्मद्ध्ये कंबळञ्चैव शयनं पञ्चकल्पयेत्
जलादुत्तीर्य बिंबन्तु वस्त्रादीनि विसर्जयेत्  १५
कृत्वा तु पूर्ववच्छुद्धिं विन्नयसेच्छयनोपरि
गंधपुष्पादिभिश्चैव पूजयेद्धृदयेन तु  १६
आवेष्टय नववस्त्रेण प्राक् शिरश्चोर्ध्ववक्त्रकम्

प्रतिमां शाययेद्धीमान् कौतुकं बंधयेत्ततः १७
प्रतिमायाश्शिरोभागे चण्डकुंभन्तु विन्नयसेत्
ससूत्रं सापिधानञ्च सोदकं कूर्चसंयुतम् १८
हेमटंकसमायुक्तं वस्त्रेणैव समावृतम्
तन्मद्ध्ये च समूर्तिञ्च ध्यात्वा न्यस्त्वा हृदार्चयेत् १९
टंकमुद्रां प्रदर्श्याथ पद्ममुद्रां प्रदर्शयेत्
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान् २०
इंद्रादिषु क्रमान्यस्त्वा लोकपालांश्च विन्नयसेत्
गंधपुष्पादिना तत्तदीशानेनैव पूजयेत् २१
नववस्त्रधरोष्णीषस्सोत्तरीयस्सुमालिकः
रुद्राक्षमालाभरणमंत्रमुद्राक्रियान्वितः २२
आचार्यो मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् २३
शमीखदिरमायूरप्लक्षञ्चैव दिशासु वै
प्रधानस्य पलाशन्तु समिधस्संप्रकीर्तिताः २४
हृदयेन समिद्धुत्वा चण्डमूलेन होमयेत्
अस्त्रेणैव चरुं हुत्वा लाजमीशानकं हुनेत् २५
सर्षपं कवचेनैव द्रव्यान्ते व्याहृतिं हुनेत्
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत् २६
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेत् बिंबस्य मस्तके
एवञ्जागरणं रात्रौ प्रभाते स्थापनं कुरु २७
देशिको मूर्तिपैस्सार्द्धं स्नानत्रयमथाचरेत्
आचार्यो मूर्तिपैश्चैव पूजयेत्तु पुरोक्तवत् २८
शयनाद्बिंबमुद्धृत्य वस्त्रादीनि विसर्जयेत्
गन्धपुष्पादिभिश्चैव पूजयेत्पुरुषेण तु २९
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्

पूर्णाहुतिञ्च शिरसा हुत्वाग्निञ्च विसर्जयेत् ३०
उद्धृत्य शयनाद्बिंबं स्नानवेद्यान्तु विन्नयसेत्
प्रागुक्तविधिना बिंबे चाक्षरन्यासमाचरेत् ३१
गंधपुष्पादिभिश्चैव ईशानेनैव पूजयेत्
घृतशिरोर्पणं कृत्वा प्रागुक्तविधिना सुधीः ३२
कुंभानुद्धृत्य बिंबाग्रे स्थापयेत् स्थंडिलोपरि
कुंभात् बीजं समादाय चंडस्य हृदिविन्नयसेत् ३३
कुंभोदैस्नाप्य चण्डन्तु दिक्पालैश्च घटैस्तथा
शुद्धोदकेन संस्नाप्य गंधादिभिर्यजेद्धृदा ३४
आलयन्तु नयित्वाथ स्थापयेत्तु प्रदेशके
देवस्यैव तु नैवेद्यं मालाञ्चैव प्रदापयेत् ३५
चलाचलविभागन्तु ज्ञात्वा प्रागुक्तमाचरेत्
शैलजप्रतिमाञ्चेत्तु उक्तस्थानेषु मन्दिरे ३६
याम्याभिमुखसंयुक्तं स्थापयेन्मानुषे पदे
चंडस्य स्थाननिर्देशो नास्ति युक्त्या तु विन्नयसेत् ३७
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३८
इति चण्डेशस्थापनपटलस्सप्ताशीतितमः

भक्तस्थापनविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि भक्तानां स्थापनं श्रुणु
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने १
शुभवारादिभिर्युक्ते स्थापनन्तु समारभेत्
अंकुराण्यर्पयेद्धीमान् प्रागुक्तविधिना सह २
विचित्रे मण्टपे रम्ये स्थंडिलं शलिभिः कुरु
हेमसूच्यालिखेत्पद्म रेखां वै कृष्णमण्डलम् ३
मधुना तर्पयित्वा तु कुर्याद्गव्याभिषेचनम्

ग्रामप्रदक्षिणं कुर्याज्जलाधिवासमारभेत् ४
वस्त्रेण प्रतिमां वेष्टय लंबकूर्चसमन्वितम्
जलमद्ध्ये प्रपां कुर्यात्तन्मद्ध्ये शाययेत्ततः ५
एकरात्रं द्विरात्रं वा त्रिरात्रं याममात्रकम्
हर्म्याग्रे मण्टपं कुर्यादष्टहस्तप्रमाणतः ६
कलास्तंभसमायुक्तं ध्वजतोरणसंयुतम्
तन्मद्ध्ये वेदिकां कुर्यात्तत्रिभागैकभागतः ७
रत्निमात्रसमुत्सेधां दर्पणोदरसन्निभाम्
कुण्डानि परितः कुर्यात् मानुषे तु पदे क्रमात् ८
इंद्रादिषु च दुर्दिक्षु वेदाश्रं कारयेद्बुधः
वृत्तकुंडं तथैशान्नयां प्रधानन्तु प्रकल्पयेत् ९
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
उद्वास्य शिल्पिनं पश्चात् गोमयेनानुलेपयेत् १०
मण्टपे मण्डयित्वा तु भूसुरान् भोजयेत्ततः
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः ११
स्थंडिलं कारयेन्मद्ध्ये प्यष्टद्रोणैश्च शालिभिः
तंडुलैश्च तिलैर्दर्भैः पुष्पैश्चैव परिस्तरेत् १२
कर्णिका मद्ध्यमे चैव नयनं कल्पयेत्ततः
जलादुत्तीर्य बिंबन्तु वस्त्रादीनि व्यपोह्य च १३
कृत्वा तु पूर्ववच्छुद्धिं शाययेच्छयनोपरि
गंधपुष्पादिभिश्चैव पूर्ववत्पूजयेद्धृदा १४
आवेष्टय धौतवस्त्रेण प्राक्शिरश्चोर्ध्ववक्त्रकम्
कौतुकं बंधयित्वा तु शाययेत्प्रतिमान्ततः १५
तस्योर्ध्वे तु शिरोभागे भक्तकुंभन्तु निक्षिपेत्
तन्मद्ध्ये तु स्वनाम्नातु प्रणवादिनमोन्तकम् १६
स्थापयेत् भक्तकुंभन्तु पूजयेत्तु विशेहतः

भक्तकुंभस्य तस्यैव पद्ममुद्रां प्रदर्शयेत् १७
अभितः कलशानष्टौ सूत्रादिभिस्समन्वितान्
इंद्राद्याशासु विन्नयस्य लोकपालांश्च विन्नयसेत् १८
गंधपुष्पादिभिस्तत्र संपूज्येशानमन्त्रतः
शुक्लवस्त्रधरोष्णीषस्सोत्तरीयस्सुमालिकः १९
आचार्यो मूर्तिपैस्सार्द्धं होमकर्मसमारभेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः २०
शमीखदिरमायूर प्लक्षञ्चैव दिशासु वै
प्रधानस्य पलाशन्तु समिधस्संप्रकीर्तिताः २१
हृदयेन समिद्धुत्वा घृतम्मूलेन होमयेत्
अस्त्रेणैव चरुं हुत्वा लाजमीशेन होमयेत् २२
सर्षपं कवचेनैव द्रव्यान्ते व्याहृतिं हुनेत्
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत् २३
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेत् बिंबस्य मस्तकम्
एवमेव क्रमाद्रात्रौ प्रभाते स्थापनं कुरु २४
देशिको होतृभिस्सार्द्धं स्नानं पूर्ववदाचरेत्
ऋत्विग्भिस्सममाचार्यः पूजयेत्पूर्ववत्ततः २५
शयनात् बिंबमुद्धृत्य वस्त्रादीनि विसर्जयेत्
गन्धपुष्पादिभिश्चैव पूजयेत्पुरुषेण तु २६
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा हुत्वाग्निञ्च विसर्जयेत् २७
उद्धृत्य शयनाद्बिंबं स्नानवेद्यान्तु विन्नयसेत्
पूर्वोदितेन मार्गेण घृतेनैव शिरोर्पणम् २८
कुंभमुद्धृत्य बिंबाग्रे स्थापयेत्स्थंडिलोपरि
कुंभात् बीजं समादाय प्रतिमा हृदि विन्नयसेत् २९
तत्तत्कुंभोदकैः स्नाप्य गंधपुष्पादिभिर्यजेत्

नैवेद्यन्दापयित्वा तु तांबूलन्तु निवेदयेत् ३०
भक्तानां परिचाराणां यथा युक्त्या प्रपूजयेत्
भक्तानां स्थापनं प्रोक्तं यथा शास्त्रं प्रजापते ३१
इति भक्तस्थापनविधिपटल अष्टाशीतितमः

गौरीस्थापनविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण गौरी स्थापनमुत्तमम्
केवलं सहजं पौष्णयं त्रिविधन्तु विधीयते १
केवलं त्वितिविख्यातं स्थापनं शंभुना विना
भवानी सहितं देवं स्थापनं सहजं भवेत् २
प्रागेवस्थाप्य देवन्तु भवानी स्थापनं पुनः
यत्तत्पौष्णयमिति ख्यातं एवन्तु त्रिविधं स्मृतम् ३
कुर्यात्पौष्णयस्य क्ल्याणन्न चान्नयस्य प्रजापते
उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ४
शुभवारादिभिर्युक्ते प्रतिष्ठां सम्यगाचरेत्
प्रतिष्ठादिनपूर्वे तु सप्ताहे वाथ पञ्चमे ५
अंकुराणयर्पयेद्धीमान् पूर्वोक्तविधिना सह
रत्नन्नयासन्ततः कुर्यान्मण्टपे समलंकृते ६
स्थण्डिलं शालिभिः कुर्यात् तिलदर्भैः परिस्तरेत्
तन्मद्ध्ये विन्नयसेत्पीठन्नवकोष्ठसमायुतम् ७
इंद्रनीलन्नयसेदैंद्रे वैडूर्यं वह्निगोचरे
याम्यायान्तु महानीलं मुक्तान्निर्ऋृतिगोचरे ८
वारुणे स्फटिकञ्चैव वायव्ये पुष्यरागकम्
प्रवाळं सौम्यदेशे तु वज्रमीशानगोचरे ९
माणिक्कम्मद्ध्यमे न्नयस्त्वा दिक्पालानान्तु बीजकैः
प्रतिमान्तत्र विन्नयस्य सुस्निग्धं कारयेत्ततः १०

नेत्रद्वययुतर्क्षे तु नेत्रमोक्षणमारभेत्
मण्टपे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः ११
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम्
तरंगवेष्टनं कृत्वा बेरन्तु प्राङ्मुखं कुरु १२
हेमसूचिप्रहाराभ्यां पद्मरेखां समालिखेत्
असितं मण्डलं लिख्य दृष्टिमण्डलमालिखेत् १३
ज्योतिर्मण्डलकं पश्चात् नेत्रमुच्चार्य लेखयेत्
नेत्रहेमाङ्गुलीभिश्च संपूज्याद्वास्यशिल्पिनम् १४
हिरण्यदूर्वया विद्वान् मद्धवाज्याभ्यान्तु तर्पयेत्
सौवर्णमुत्तमं पात्रं ताम्रपात्रन्तु मद्धयमम् १५
मृण्मयञ्चाधमं पात्रं प्रस्थेनैव तु पूरितम्
मद्धवाज्याभ्यां प्रपूर्याथ तत्सूत्राभ्यां प्रदर्शयेत् १६
धेनुं गौर्द्धेनुहव्येति ब्रह्मसूक्तेति भूसुरान्
प्रच्छन्नपटमावर्ज्य जनसंघान् प्रदर्शयेत् १७
पञ्चमृत्पञ्चगव्यैश्च स्नापयेत्पुरुषेण तु
शुद्धतोयेन संस्नाप्य गन्धादिभिर्यजेद्धृदा १८
वस्त्राभरणमालाभिर्देवीं सभूषयेत्ततः
ग्रामप्रदक्षिणं कुर्यात् सर्वालंकारसंयुताम् १९
ततो जलाशयं प्राप्य तीरे समतलं कुरु
स्थण्डिलं कारयेत्तत्र गौरीमन्त्रोपरिन्यसेत् २०
नववस्त्रेण संवेष्ट्य लंबकूर्चसमन्वितम्
कण्ठदघ्ने जले चैव प्रपां कृत्वातिसुन्दरान् २१
चतुर्गोत्रसमायुक्तां दर्भमाला विभूषिताम्
प्रतिमां शाययेन्मद्धये प्राक् च्छिरश्चोद्धर्ववक्त्रकाम् २२
अभितः कलशानष्टौ ससूत्रान् सापिधानकान्
गन्धोदकसमायुक्तान् सवस्त्रान्कूर्चसंयुतान् २३

स्थापयित्वा क्रमेणैव लोकपालान् समर्चयेत्
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् २४
प्रासादस्याग्रतः कुर्यात् मण्टपञ्चतुरश्रकम्
द्वादशन्दशहस्तं वा नवहस्ताष्टहस्तकम् २५
विकारस्तंभसंयुक्तं श्रुतिद्वारसमायुतम्
मण्टपन्तु त्रिधा कृत्वा मद्ध्यभागे तु वेदिका २६
रत्निमात्रसमुत्सेधा दर्पणोदरसन्निभा
कुण्डानि परितः कुर्यात् दिक् विदिक्ष्वष्टदिक्षु च २७
योन्याकाराणि कुण्डानि महाशासु प्रकल्पयेत्
कोणेषु बिसिनी कुण्डं कल्पयेत्तु विचक्षणः २८
कुण्डं हस्तप्रविस्तारं संयुक्तं मेखलैस्त्रिभिः
युगाश्रायतनञ्चेत्तु अब्जकुण्डानि वर्जयेत् २९
प्रधानाग्न्यन्तु पूर्वोक्तमार्गं संकल्प्य तत्र तु
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रन्ततः कुरु ३०
गोमयालेपनं कृत्वा कुर्याच्छिल्पिविसर्जनम्
मण्टपं भूषयेत्पश्चाद्वसुदिक्षुद्ध्वजान्वितम् ३१
वितानदर्भमालाभिस्संयुक्तञ्चाष्टमंगलैः
नाळिकेरफलैश्चैव मुक्तादामैः प्रलंबितम् ३२
गात्रवेष्टनसंयुक्तं युगतोरणभूषितम्
भूसुरान् भोजयेत्तत्र उच्छिष्टोद्वासनं कुरु ३३
गोमयालेपनं कृत्वा यागमण्टपशुद्धये
पञ्चगव्येन संप्रोक्ष्य पूर्वे वा पश्चिमे तथा ३४
वास्तुहोमन्ततः कृत्वा पर्यग्निकरणं कुरु
पुण्याहं वाचयित्वाथ अष्टद्रोणैश्च शालिभिः ३५
वेद्यूद्ध्र्वे स्थण्डिलं कुर्यात्तदर्द्धैस्तण्डुलैरपि
तदर्द्धैस्तिलसंयुक्तं दर्भैः पुष्पैःपरिस्तरेत् ३६

तन्मद्ध्ये शयनं कल्प्य चर्मचाद्यैरनुक्रमात्
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः ३७
जलादुत्तीर्यगौरीन्तु स्नानश्वभ्रोपरिन्नयसेत्
वस्त्रकूर्चं विसृज्याथ पूर्ववच्छुद्धिमाचरेत् ३८
नवांबरेण संछाद्य गन्धपुष्पादिभिर्हृदा
कौतुकं बन्धयेत्पश्चात् गौरी गायत्रिमन्त्रतः ३९
आरोप्य सुमुहूर्त्ते तु प्राक् च्छिरश्चोद्ध्र्ववक्त्रकाम्
शयने शाययेत् गौरीं रक्तवस्त्रेण वेष्टयेत् ४०
देव्याश्च दक्षिणे भागे गौरी कुंभन्तु विन्नयसेत्
ससूत्रान् सापिधानाञ्च सवस्त्रान् कूर्चसंयुतान् ४१
हेमपंकजसंयुक्तान् द्रोणोदकसुपूरितान्
गौरी रूपन्ततो द्ध्यात्वा तद्रूपन्तु घटे न्यसेत् ४२
परितोष्टौ घटान्नयस्त्वा सूत्रादिभिस्समन्वितान्
इंद्रादिषु क्रमेणैव वामादिवसुशक्तिकाः ४३
स्वस्वबीजसमायुक्तन्नयस्त्वा संपूजयेद्धृदा
मुकुळीपद्ममुद्राञ्च बिंबमुद्रां प्रदर्शयेत् ४४
दिशास्वद्ध्ययनं कुर्यात्ततो होमं समाचरेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ४५
कुण्डमद्ध्ये यजेद्देवीं रक्तपद्मोपरिस्थिताः
आषाढाश्वत्थ खदिरो वटाः पूर्वादिदिक्षु वै ४६
औदुंबरमपामार्गं शम्यर्कं पावकादिषु
पलाशन्तु प्रधानस्स्याज्जुहुयाद्देशिकोत्तमः ४७
समिधा जुहुयाद्धीमान् सद्योजातेन मन्त्रतः
गौरी गायत्रिमन्त्रेण घृतं हुत्वा विशेषतः ४८
अघोरेण चरुं हुत्वा लाजं वामेन होमयेत्
तिलमस्त्रेण जुहुयात् सर्षपं कवचेन तु ४९

यावकं पञ्चमेनैव द्रव्यान्ते व्याहृतिं हुनेत्
शतमर्द्धन्तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात् ५०
गौरीमिमायमन्त्रेण होमयेत्पञ्चविंशतिः
गौरीबीजमनुस्मृत्य होमयेच्छतसंख्यया ५१
द्रव्यान्ते तु स्पृशेत् गौरीं गौरीमिमायमन्त्रतः
गेयनृत्तादिभिर्युक्तं रात्रिशेषं व्यपोह्य च ५२
आचार्यो मूर्त्तिपैस्सार्द्धं स्नानत्रयमथाचरेत्
अंगन्न्यासकरन्न्यासं पूर्वोक्तविधिना कुरु ५३
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
पञ्चांगभूषणैर्युक्तन्दक्षिणान्दापयेत्ततः ५४
पञ्चनिष्काधमाज्ञेया द्विगुणो मध्यमो भवेत्
उत्तमात्रिगुणाप्रोक्ता देशिकस्य तु दक्षिणा ५५
अर्द्धयेतृणाञ्च होतृणां दक्षिणान्दापयेत्ततः
उत्थायशयनाद्देवं प्रागाननं यथा कुरु ५६
वस्त्रादीनि व्यपोह्याथ गन्धादिभिर्यजेद्धृदा
कुंभान्कुण्डानि संपूज्य गन्धपुष्पादिभिस्सह ५७
जयादिरभ्यादानञ्च राष्ट्रभृच्च हुनेत्क्रमात्
पूर्णाहुतिं समूलेन हुत्वा होमं समाप्य च ५८
संस्थाप्य पूजयेन्नित्यं स्वतन्त्रपरतन्त्रके
आत्मार्त्थे वा परार्त्थे वा स्नपनोत्सवसंयुतम् ५९
पवित्रारोहणेत्युक्तं वस्त्रेणैवात्र कुत्रचित्
प्रासादे वा गृहे वापि पूज्य सिद्धिं सयच्छति ६०
मुहूर्त्ते नाडिकात्पूर्वे स्नानवेद्युपरिन्न्यसेत्
घृतशिरोर्पणं कुर्यात् प्रागुक्तविधिना सह ६१
गौरी कलान्न्यसेत्पश्चात् मकुटादिक्रमाद्बुधः
अंगेष्वंगानि विन्न्यस्त्वा वामदेवेन पूजयेत् ६२

मुहूर्त्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
सर्वातोद्य समायुक्तन्नृत्तगेय समाकुलम् ६३
कुंभानुद्धृत्य शिरसा बाह्यहर्म्यप्रदक्षिणम्
कृत्वा गौर्यापुरो भागे स्थण्डिलोद्ध्र्वे तु विन्नयसेत् ६४
प्राणप्रकृतियोगन्तु ज्ञात्वा स्थापनमारभेत्
उमा कुंभादुमामन्त्रं प्रतिमे हृदि विन्नयसेत् ६५
मूर्ध्निकण्ठे च योनौ च बीजं चैव तु विन्नयसेत्
शक्तिकां परितस्थाप्य तत्तत्कुंभान्विशेषतः ६६
पीठाब्जे परितो न्नयस्त्वा प्रागादिषु यजेद्धृदा
तज्जलैस्नाप्य गौरीन्तु गौरी गायत्रिमन्त्रतः ६७
स्नपनं कारयेद्धीमान् प्रागुक्तविधिना सह
अर्चनोक्तं समभ्यर्च्य नैवेद्यं पायसन्ददेत् ६८
हृदा चाचमनन्दत्वा निर्माल्यन्तु विसर्जयेत्
तांबूलन्दापयेद्धीमान् मुखवाससमन्वितम् ६९
सरस्वतीं श्रियन्दुर्गां मोटिञ्चैवान्नय शक्तिकाम्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ७०
इति गौरीस्थापनविधिपटल एकोननवतितः

## गौर्यर्चनाविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि गौरीणामर्चनन्तथा
गौरी चैव मनोन्मन्नयाभवानीत्रिविधं भवेत् १
द्विनेत्राद्विभुजाश्यामा गौरी दक्षिकरोत्पला
करंडमकुटोपेता सर्वाभरणभूषिता २
श्यामाद्विनेत्रा द्विभुजा त्रिभंगी सव्यापसव्यस्थितकुञ्चितांघ्रिः ।
सव्योत्पलासा स्तनोच्चाहस्तावलंबा परमेश्वरी सा ३
शंभुशक्तिसमभागमुच्यतेत वक्त्रे प्रकृतिञ्च स्वस्तिकः ।

लंबमेवकरदक्षिणोपलं मनुसारवक्त्रकः ४
कल्याणदायिभवतोस्तुपिनाकपाणिः पाणिग्रहे
भुजगकंकणभूषितायाः ।
सांछाद्य दृष्टिसहसैव नमश्शिवायेत्यर्द्धोक्तिलज्ञामुखमंबिकायाः ५
गौरीलक्षणमेवोक्तं मनोन्मन्याकृतिं श्रुणु
शशिवर्णं त्रिणेत्रञ्च जटामकुटमंडितम् ६
सर्वाभरणसंपूर्णं चतुर्भुजसमन्वितम्
पंकजाभयदक्षे तु वरदोत्पलं वामके ७
अथवा कटकं वापि द्विहस्तं वा विशेषतः
उत्पलं सव्यहस्ते तु वामहस्तं प्रलंबयेत् ८
इन्दुशेखरसंयुक्तं नक्रकुंडलधारिणम्
वाळिकाकर्णपुष्पेण शोभनांबरभूषितम् ९
कुन्दनिभवेदकर वह्निनयनं स्यात् पंकजवराभय करोत्पलचतुष्कम्
।
अंगहिमभूषणविचित्रनयनं स्यात् तुंगमकुटोज्वलमनोन्मनिस्वरूपम्
१०
मनोन्मन्याकृतिः प्रोक्ता भवानी लक्षणं श्रुणु १०-२
शंखनिभमंगवरुणं वृषयास्य पंकजवृषस्य करतुंगहस्तम् ।
अंघ्रितलकृष्णभुजनेत्रमिति धूम्रं भारती भवानि रूपम् ११-२
योगं भोगञ्च वीरञ्च शक्तिरेव त्रिधा भवेत् १२
योगं पीठसमायुक्तं भोगं वामसमन्वितम्
वीरं स्वतंत्रमित्युक्तं शक्तिरेवं त्रिधाभवेत् १३
शक्तिलक्षणमेवोक्तं द्वारपूजा विधिं श्रुणु
द्विभुजां च द्विनेत्रां च पीतवर्णसुयौवनाम् १४
एकवक्त्रसमायुक्तां कृताञ्जलिपुटान्विताम्
करण्डमकुटोपेतां भूमिदेवीं सलक्षणाम् १५

द्वाराग्रे तु तथापूज्य द्वारपूजां समाचरेत्
द्वारदक्षिणपार्श्वे तु गङ्गाया अर्चनन्तथा १६
योगिनी तस्य वामे तु अर्चयित्वा विधीयते
द्वारस्य वामपार्श्वे तु यमुनायार्चनन्तथा १७
डाकिनी तस्य सव्ये तु अर्चयेत्तु क्रमेण तु
ऊर्ध्वोदुंबरमद्ध्ये तु महालक्ष्मीं प्रपूजयेत् १८
तस्य दक्षिणपार्श्वे तु नर्मदायास्तु चार्चनम्
सरस्वतीं वामपार्श्वे पतंगोपरिपूजयेत् १९
दक्षिणे तु कवाटस्य सिंधूमपिसुपूजयेत्
कवाटवामे संपूज्य गोदावरीं तथैव च २०
भुजंगस्याथ मद्ध्ये तु कावेरीं संप्रपूजयेत्
तस्याग्रे वृषभं पूज्य अस्त्रदेवं समर्चयेत् २१
द्वारपूजाविधिः प्रोक्तः गौर्यार्चनविशेषतः
गर्भगेहं प्रविश्याथ निर्माल्यन्तु विसर्जयेत् २२
चण्डेश्वरीं समभ्यर्च्य पूर्वपूजां समाचरेत्
गौरीं संस्नापयेत् धीमान् सर्वं विध्युक्तमाचरेत् २३
सांगोपांगञ्च प्रत्यंगं पूजयेत्त्रिविधं स्मृतम्
स्नानतोयञ्च पाद्यञ्च तथाचाचमनीयकम् २४
सस्त्रमाभरणञ्चैव सुगंधं लेपनन्तथा
अर्घ्यञ्च गंधपुष्पञ्च सांगमेवं प्रकीर्तितम् २५
आरात्रिं धूपदीपं च नृत्तगेयसमन्वितम्
शंखध्वनियुतं वाद्यं उपांगञ्च प्रकीर्तितम् २६
नैवेद्यं बलिदानञ्च दधितांबूलमेव च
होमकर्मजपञ्चैव प्रत्यंगमिति चोच्यते २७
निष्कलं शैलजं गर्तं सकळं भाव्यरूपकम्
भाव्यरूपेण संबंधं लोहजानां शिलान्वितम् २८

वामां पूर्वे तु संपूज्य ज्येष्ठां पूज्याथ पावके
रौद्रीञ्च दक्षिणे पूज्य काळिनीं निर्ऋृतिदेशके २९
कलविकरणीं पश्चिमायां बलविकरणीन्तु मारुते
बलप्रमथिनीं सौम्ये सर्वभूतदमनीमीशके ३०
मद्ध्ये मनोन्मनीं पूज्य ओंकारादि नमोन्तकम्
तत्तत्स्वनाममन्त्रेण प्रथमावरणन्न्यसेत् ३१
ब्रांहीं पूर्वे तु संपूज्य माहेश्वरीमग्निगोचरे
कौमारीं दक्षिणेभ्यर्च्य राक्षसे वैष्णवीन्तथा ३२
वाराहीं पश्चिमे पूज्य इंद्राणीं मारुते न्यसेत्
चामुंडीं सौम्यदिग्भागे दुर्गामीशानगोचरे ३३
वीरभद्रञ्च विघ्नेशं ऐशान्न्ये नैर्ऋृते यजेत्
वृषभं पूर्वतः स्थाप्य गणेशमग्निगोचरे ३४
स्कन्दादीन् दक्षिणे पूज्य शास्तारं नैर्ऋृते यजेत्
शनैश्चरं पश्चिमे पूज्य वायव्यां वीरमेव च ३५
क्षेत्रपालन्तु सौम्ययामैशान्यां भास्करं यजेत्
कृतीया वरणं प्रोक्तं बलिदानमिहोच्यते ३६
जृंभिनीं पूर्वदिग्भागे स्तंभिनीमग्निगोचरे
शान्तिमोहिनिदाक्षिणये हेतिनीं नैर्ऋृते तथा ३७
रागिणीं वारुणीं पार्श्वे मारुतौ भद्रकामिनीम्
दुर्गान्तु सौम्यदिग्भागे चैशे चण्डेश्वरीं यजेत् ३८
बलिपीठन्तदाग्रे तु सर्वशक्तिमयन्तथा
आकाशमातरं पूर्वे दक्षिणे भूतमातरम् ३९
लोकमातरञ्च पाश्चात्ये सौम्म्ये च देवमातरम्
अनुक्तमातरं तूर्ध्वे चाग्रपीठे बलिन्ददेत् ४०
वृषादिबलिपीठान्तं बलिदेव्यः प्रकीर्तिताः
प्रातर्मद्ध्याह्नकाले तु प्रदोषे चैवमाचरेत् ४१

सर्वपूजाविहीने तु बलिदानस्य तृप्तये
बलिन्तत्रप्रकुर्वीत यथोक्तं सम्यगाचरेत्  ४२
बलिहीनं यजेद्यत्र तत् ग्रामे सर्वनाशनम्
अतः कुर्यात् प्रयत्नेन बलिं सर्वस्य तृप्तये  ४३
अभावे बलिदाने तु नृपग्रामक्षयं भवेत्
बलिहीने समभ्यर्च्य निष्फलं संप्रकीर्तितम्  ४४
मन्त्रान्सर्वप्रयत्नेन बलिदानञ्च बुद्धिमान्
अतः कुर्वीतमतिमान्बलिदेवादितृप्तये  ४५
बलिरादौ प्रकर्तव्या सकलासु क्रियासु च
अन्यथा कुरुते यस्तु पैशाचांशन्निगद्यते  ४६
करणीयं विशेषेण बलिं सर्वत्र दापयेत्
आयुष्यं बलदं पुंसां यशो वृद्धिकरं परम्  ४७
सर्वपापप्रशमनं सर्वसौभाग्यदायकम्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमप्नुयात्  ४८
इति गौर्यर्चनाविधिपटलनवतितमः

गौरीस्नपनविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि गौर्याः स्नपनमुत्तमम्
प्रागुक्तविधिना कुर्यान्नवधापूर्वकल्पनम्  १
किन्तु मद्ध्ये तु करकं सर्वलक्षणसंयुतम्
पाद्यमाचमनञ्चार्घ्यं गोमूत्रं गोमयं पयः  २
दद्ध्याज्यमष्टकञ्चैव नवकुंभप्रकल्पने
चन्दनं कुंकुमं कुष्ठं  ३
हरिद्रा चूर्णसंयुक्तं स्नपनं षोडशात्मकम्
उपस्नानार्थकलशैरष्टभिश्चान्तरस्थितैः  ४
कलशैर्वा घटैर्वापि नित्यनैमित्तिको मतः

उत्सवन्तु महादेव्याः प्रतिसंवत्सरं नयेत् ५
प्रागुक्तविधिना सर्वं कारयेद्देशिकोत्तमः
ध्वजं वै पूर्ववत्कुर्यात् वृषभं सिह्ममेव च ६
तीद्दणश्रृंगाय विद्महे वेदपादाय धीमहि
तन्नो वृषः प्रचोदयात् ७
चतुर्वेदाय विद्महे समपिंडाय धीमहि
तन्नो वृषः प्रचोदयात् ८
गायत्री चैव सावित्री वृषस्य समुदास्मृते
गंधाद्यैरर्चनोक्ताभ्यां होमं कुर्याच्चतुर्दिशि ९
अथवा पूर्वदिग्भागे होममेवं समाचरेत्
मद्धयमे वृषकुंभं स्यात्कलशास्स्युस्समन्ततः १०
ईशानात् सोममन्यत्र यानं वा धाम्निवामतः
एकादिशालसंयुक्ते बहिश्रेष्ठं प्रकीर्तितम् ११
सर्वदेवेषु सामान्यं विधानमिदमग्रज
धाम्निमूर्द्धेष्टिका स्थूपि स्थापनं पूर्ववन्नयेत् १२
दिग्देवमूर्तिसंयुक्तं मद्धयकुंभसमन्वितम्
धामसंस्थापनं कुर्यात्प्रागुक्तविधिना सह १३
अस्याः प्रतिष्ठा सर्वत्र बाल १४

इति गौरीस्नपनविधिपटल एकनवतितमः

## देवी नित्यार्चनाविधिपटलप्रारंभः

देव्यानित्यार्चनं वद्दये श्रुणुष्वेह प्रजापते
शौचमाचमनं स्नानं सन्ध्योपस्थानतर्पणम् १
प्रागुक्तविधिना कृत्वा प्रविशेदालयं प्रति
प्रद्माळितांघ्रिहस्तस्तु समाचम्य विधानतः २
सकळी कृतदेहस्तु सामान्यार्घ्यं प्रकल्पयेत्

द्वारन्तदंभसा प्रोन्द्य पूजयेत् द्वारपालिके ३
सर्वाभरणसंपन्ने सर्वरत्नविभूषिते
ऊद्ध्वोदुंबरमद्ध्यस्थां वाणीमभ्यर्च्य शाखयोः ४
गंगाञ्च यमुनां यद्वा देव्यस्त्रं देहळी कृतम्
अथवा मविशालाद्वञ्जटिलामूर्ध्वगां यजेत् ५
समृद्धिञ्च धृतिन्दत्ने वामे शाखागते यजेत्
सरस्वती च गंगा च शुक्लवर्णनिभे मते ६
अन्याश्च श्यामळास्सर्वास्सर्वाभरणभूषिताः
खड्गखेटकधारिण्यो द्विभुजा वा चतुर्भुजाः ७
देवान् वा द्वारपालान्वा विमलञ्च सुबाहुकम्
कवाटयोस्समारभ्य प्रविशेद्दत्नवामयोः ८
वास्तोष्पतिञ्च संपूज्य स्वासनस्थमुदङ्मुखम्
शक्तिस्थं स्वं समायोज्य भूतशुद्धिञ्च पूर्ववत् ९
संधासंपावनञ्चात्मा वाहनञ्चा मृती कृतिम्
करन्यासञ्च तैर्मन्त्रैर्देहन्यासञ्च कारयेत् १०
अष्टत्रंशत् कलान्यासं प्रणवेन समन्वितम्
पञ्चमूर्द्धास्य युक्तदेशं पूजायां संप्रकल्पयेत् ११
एकत्रिंशत्कलान्यासमेकोस्ये परिकल्पयेत्
शशिन्यादय एवोक्ताः केवलायाः कला इति १२
अथवा शिवमन्त्रैस्तु शैवमापाद्य विग्रहम्
देविस्कन्दगणेशादीन् सर्वान्संपूजयेत्तु वा १३
सकळी कृतदेहस्सन्नन्तर्यागं समाचरेत्
हृदयेर्चाविधानन्तु नाभौ होमं प्रकल्पयेत् १४
ललाटे चेश्वरीं ध्यायेत् वरदां सर्वतो मुखीम्
स्थानशुद्धिं ततः कृत्वा विशेषार्घ्यञ्च कल्पयेत् १५
गंधपुष्पाद्वतोपेतं द्रव्याभरणकं हृदा

संशोद्ध्यात्मानमभ्यर्च्य मन्त्रशुद्धिं समाचरेत् १६
बेरशुद्धिं ततः कुर्यात् पूजापर्युषितामपि
गणांबिकायविद्महे महातपायधीमहि १७
इत्युक्त्वादौ तदन्ते तु तन्नोदेवी प्रचोदयात्
इति मन्त्रं समुच्चार्य देव्यै तस्यै निवेदयेत् १८
देव्यै निर्माल्य धारिरायै त्यजित्वा पूजकोत्तमः
देव्यस्त्रमुच्चरन्मंत्री बेरशुद्धिं विधाय च १९
बेरञ्च लोहजं कुर्यात् स्नानं पर्वणिपर्वणि
सुधा चित्रादिजञ्चेत्तु कर्मचाशुद्धिरिष्यते २०
अथवास्त्राणुनालब्ध लीलाबृन्दजवायुना
अथवोपलमूर्तिश्चेत् क्षाळनं तत्र कीर्तयेत् २१
तत्रैवाम्लानमालाभ्यां निर्वाणन्न च दीपिकम्
प्रत्यंगञ्चार्चनन्तेष्टं किञ्चैवं वत्सरात्मकम् २२
कल्पयेदासनं मद्ध्यशक्तिमाधाररूपिणीम्
अर्घ्यपात्रं समुत्क्षिप्त्वाप्यादौ पाद्यं हृदा नयेत् २३
वक्त्रे चाचमनन्दद्यादर्घ्यमानमतंत्रतः
पाद्यन्तु पूर्ववद्वापि पृष्ठे कृत्वा निवेदयेत् २४
गंधपुष्पसमोपेतं धूपन्दद्याद्धृदाणुना
पञ्चामृतादियुक्तं वा वियुक्तं स्नानमाचरेत् २५
उन्मुच्य वाससा पश्चात् वाससा परिवेष्टयेत्
गुह्येनाचमनन्दत्वा गंधपुष्पसुधूपयुक् २६
दीपम्मूलाणुना दत्वा नैवेद्यं वाथ पूर्ववत्
गणविघ्नेशलोकेश तदस्त्रान्परितोऽर्चयेत् २७
एकद्वित्रिचतुर्भिर्वा वरणैस्तां समर्चयेत्
पुनर्धूपञ्च दीपञ्च मंत्रगानाद्यमेव च २८
नैवेद्यबलिहोमांश्च कृत्वा नित्योत्सवन्नयेत्

देवी तदर्द्धा कर्तव्या चैकवस्त्रा चतुर्भुजा २९
प्रसार्याभयहस्ता च शंखचक्रकरा परा
पद्मासनस्था तस्यान्तु यजेद्देवीम्मनोन्मनीम् ३०
पुष्पान्नाक्षतलिंगेषु -- पूजामुषां यजेत्
पूर्वोक्तविधिना कृत्वा प्रासादस्य प्रदक्षिणम् ३१
पादुकार्चनयुक्तं वा प्रविशेदालयं प्रति
नित्योत्सवाय बेराणि कल्पिताय बहूनि चेत् ३२
तदर्द्धं कल्पयेत्तेषु यथोक्तं बेरमुत्तमम्
एककालं द्विकालं वा त्रिचतुः पञ्चकालकम् ३३
षट्सप्तवसुकालं वा अभिषिच्यार्चयेच्छिवाम्
नित्यार्चनासमुद्दिष्टा सर्वाभीष्टफलप्रदा ३४
उत्सवं स्नपनञ्चैव दमनारोहणक्रिया
पवित्रा रोहणं सम्यक् कृत्तिका दीपमेव च ३५
संवत्सराद्युत्सवञ्च वसन्ताख्यं तदुत्सवम्
माहोत्सवं तथा मासे नवनैवेद्य कर्म च ३६
विशेषात्पूर्वकर्मापि प्रायश्चित्तं द्विजोत्तम
जीर्णानामुद्धृतञ्चान्यत्पूर्ववत्परिकल्पयेत् ३७
किन्तूत्सवध्वजं सिंहं वृषभं वा समालिखेत्
पूर्वफल्गुननक्षत्रे तीर्थकर्मविशेषतः ३८
शिवोत्सवे च देव्यास्तु प्रत्यहञ्चोत्सवो मतः
ध्वजहोमबलिं हित्वा केवलं यानमेव वा ३९
चक्रं वास्त्रत्रिशूलं वा देव्यस्त्रं परिगृह्यताम्
उत्सवप्रतिमाकार्या पूर्वलक्षणलक्षिता ४०
कृतदेव्यास्तु तत् ग्रामात् निर्गमो नहि सम्मतः
तत्रैव जलदानं स्यात्तत्रावश्यं हि यानकम् ४१
अन्यत्रापि च यानं वा धाम्निसर्वन्तु वामतः

एकादिशालसंयुक्ते बहिः श्रेष्ठं प्रकीर्तितम् ४२
सर्वदेवेषु सामान्यं विधानमिदमग्रज
धाम्निमूर्द्धेष्टका स्थूपी स्थापनं पूर्ववन्नयेत् ४३
दिग्देवमूर्तिसंयुक्तं मद्ध्यकुंभसमन्वितम्
धामसंस्थापनं कुर्यात् प्रागुक्तविधिना सह ४४
अस्याः प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा
देव्यनुग्रहतस्सार्वभौमत्वं नृपतिर्भवेत् ४५
भवेदेवाग्रतः कार्यः स्वभिषेको नृपस्य तु
इत्येवं कथितं सम्यक् देव्यास्संस्थापनादिकम् ४६
इति देवीनित्यार्चनाविधिपटलो द्विनवतितमः

उमापूजाविधिपटलप्रारंभः

उमापूजाविधातव्या सर्वकामार्त्थसाधिनी
कन्नयकानां प्रदाने च देशिकस्य तु हस्तके १
ग्रहप्रवेशने वापि विजयार्त्थे च मराडले
अन्यस्मिन्मंगळे काले संपूज्यावरणेश्वरीम् २
गृहाणां योग्य देशे तु गोमयेनोपलेपिते
स्थंडिलं कारयित्वाथाप्यासनं प्रणवं न्यसेत् ३
शोधितां पेषणीं पिष्ट -- तासु च समन्विताम्
निधायांकुरपात्राणि चतुष्कोणेषु बुद्धिमान् ४
ततो निधाय दीपांश्च स्थंडिलं प्रोन्नयेद्धृदा
गंधपुष्पादिनादेवीं भुवनाधिपतिं यजेत् ५
वस्त्राभ्यां वेष्टयेद्देवीं नवाभ्यां तामनुस्मरन्
आनीयालंकृतां कन्नयां सर्वकर्मतया नयेत् ६
संस्थाप्य व्रीहिसंपूर्णां मद्यप्रभृतिसंयुतम् ७
पुष्पांजलिं पुराकृत्वा शूर्पे संस्थापयेदमून्

लवणं पूर्वदिग्भागे दक्षिणे शुक्लगोमयम्  ८
रात्रिं पश्चिमदिग्भागे तंडुलं सौम्यगोचरे
-------- संस्थाप्यस्पर्शनं कारयेत्तदा  ९
क्रमात्संस्थाप्य तद्धस्ते देव्यूर्ध्वे भ्रामयेत्त्रिधा
संस्थाप्य तानि तद्देशे स्वांगं संस्पर्शयेत्त्रिधा  १०
गळंकर्णं स्तनं कुक्षिं संस्पृशेत् सर्वसिद्धये
एवं करोति यानारी पश्चात्पुत्रं धनं श्रियम्  ११
मंगल्यं बुद्धिवृद्धिञ्च देव्यानुग्रहतो भवेत्
एषा क्रिया विधातव्या सर्वमंगळकर्मणि  १२
एवं यः कारयेत्तस्यै वस्त्रद्वयसमन्विताम्
हेमांगुलीयकोपेतां दक्षिणां दापयेत्तदा  १३
आचार्यं पूजयेत्पश्चाद्यथाशास्त्रानुसारतः  १४
इति उमापूजाविधिपटलस्त्रिनवतितमः

गौरीधर्मविधिपटलप्रारंभः

गौरीधर्ममहं वक्ष्ये श्रुणुष्वेव प्रजापते
गौरीधर्मं तदन्ते स्युर्महालीला महोदया  १
स्नानार्थमामलक्यादेः स्नानं वस्त्रैरलंकृतिः
व्यजनं दर्पणं गंधं पुष्पं भोजनमेव च  २
कन्यानाञ्च तथैवस्युर्दर्शनाद्यं विशेषतः
तासाञ्च दर्शनं नित्यं ब्रांहणानां विशेषतः  ३
अपूपदानं विप्राणां अबलानां फलं गुळम्
पयोदानञ्च बालानां व्रीहितण्डुलयोरपि  ४
पशूनां तृणदानं यदुदकेन समन्वितम्
कवीनां पिष्टपिण्यकं फलाद्योदनसंयुतम्  ५
भोजनार्थम्महासत्रं प्रपापानीय संयुतम्

महासत्रञ्च शैवानां मृष्टान्नञ्च द्विजन्मनाम् ६
शय्याशाला च पानीयं चतुराश्रमधर्मिणाम्
उद्यानं देवतानान्तु बौद्धानां साहितस्य च ७
बालशिक्षा च तद्वृत्तिर्लेखकानाञ्च भोजनम्
कन्याविद्याप्रदानञ्च वेदवित् ब्रंहचारिणाम् ८
यतीनां क्षुन्निवृत्यर्थम् प्रत्यहञ्चान्नदानकम्
अनाधानां दरिद्राणामन्नपानमहर्निशम् ९
सांख्यादिसर्वशास्त्रादि वृत्तिभोजनसंयुतम्
व्याख्यातृणाञ्च शिष्याणां क्रमेण अरिकीर्तिता १०
ऋणान्निर्गतिकानान्तु गर्भरयारक्षणन्तथा
वंध्यानां पुत्रदानं यदा तुराश्रमरक्षणम् ११
तटाकाशिवकार्यादि वृत्तीनां भोजनं हितम्
वैद्यांबष्ठसमोपेतमनेकौ षधसंयुतम् १२
वपनार्त्थं प्रकर्तव्या निवृत्ते वृत्तिकल्पना
बुधे च शनिवारे च तलैदानं विशेषतः १३
सोपधानञ्च शयनं प्रतिरात्रमपूर्विका
पक्वमुद्गकुलस्थाद्यं सपानीयं प्रकल्पयेत् १४
अश्वनोश्वगजाद्येषु विभवं परिकल्पयेत् १५
इति गौरीधर्मविधिपटलश्चतुर्नवतितमः

प्रतिसरबन्धविधिपटलप्रारंभः

अतः प्रतिसरस्यैव विधिं वक्ष्ये प्रजापते
उत्सवे च प्रतिष्ठायामष्टबन्धनकर्मणि १
दीक्षायां प्रोक्षणे चैव स्नपनादिषु कर्मसु
अन्यस्मिन् मंगळे कार्ये कौतुकं बन्धयेत् बुधः २
शिवाग्रे स्थण्डिलं कृत्वा चतुरश्रन्तु मण्डलम्

ब्रह्मजज्ञानमन्त्रेण याम्ये नाग्रे सुपर्णकाः ३
आप्यायस्वेति सौम्ये तु पूर्वाग्रं लिख्यते क्रमात्
उत्तराग्रं विलिख्याथ सद्योरुद्रेति मन्त्रतः ४
इदं विष्णुं पश्चिमे च पूर्वे चैंद्रे यथा क्रमम्
मद्ध्ये वरुणकुंभन्तु सौम्ये प्रतिसरन्तथा ५
गायत्रीञ्च समावाह्य वेदादीन् प्रजपेत्ततः
अग्नेयशस्विन् कृणुष्व ब्रह्मसूक्तं त्रियक्षरीम् ६
श्रीसूक्तञ्चैव पुंसूक्तं पञ्च ब्रह्ममनुस्मरन्
सूत्रे च वासुकीन्ध्यात्वा धूपदीपञ्च दापयेत् ७
पुंसां दक्षिणहस्ते तु स्त्रीणां वामकरे तथा
लिंगे चैव विशेषेण पीठनाळकयोरपि ८
वृषस्य शृंगयोश्चैव रक्षां कृत्वा विचक्षणः
परमान्नमपूपञ्च तांबूलञ्च प्रदापयेत् ९
एवं कृत्वा तु विधिना रक्षासूत्रन्तु कारयेत्
तस्याग्रे तु विशेषेण अभीष्टं प्रार्थयेद्गुरुः १०
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ११
इति प्रतिसरबन्धविधिपटलपञ्चनवतितमः

देवीनित्योत्सवविधिपटलः प्रारंभः

अथ वक्ष्ये विशेषेन नित्योत्सवविधिक्रमम्
सर्वयज्ञतपोदानं सर्वदानफलप्रदम् १
भुक्तिदम्मुक्तिदन्दिव्यमायुरारोग्य वर्द्धनम्
नित्योत्सवविहीने तु शक्त्युत्सवं विवर्जयेत् २
नित्योत्सवन्ततः कुर्यादन्नलिंगसमन्वितम्
अष्टादशांगुलोत्सेधं मूलनाहन्तथा भवेत् ३
चतुरंगुलमग्रं स्यात् मूलनाहन्तथा भवेत्

चतुरंगुलमग्रं स्याच्चतुरश्राष्टवृत्तकम्  ४
पयोदधि घृतोपेतं फलमिश्रमथापि वा
तस्मिन्मनोन्मनीं पूज्य शंखचक्रसमन्विताम्  ५
शूलास्त्रेण समायुक्तां वरदाभय पाणिनीम्
उमाद्यादेवताश्चैव सर्वदुःखनिवारणीम्  ६
देवीं बिंबसमोपेतां लिंगमात्रमथापि वा
पुष्पान्नतण्डुलैर्न्नित्यं त्रिकालेषु यथा क्रमम्  ७
तदग्रे शुद्धनृत्तं स्यादेवं प्रत्यहमाचरेत्
एवं यः कुरुते मर्त्यः सोक्षयं फलमश्नुते  ८
इति देवीनित्योत्सवविधिपटलष्षण्णवतितमः

देवीमहोत्सवविधिपटलप्रारंभः
सावित्री देवता माता चतुर्दिक्षवीशदेशके
त्रिशूलेन समायुक्तं देवता वाहनन्नयेत्  १
सप्तविंशति ऋक्षं वाप्येकविंशति संख्यकम्
दिनन्निश्चित्य तत्पूर्वे ध्वजारोहणमाचरेत्  २
यागशालां यथा पूर्वं योनिकुण्डसमन्विताम्
नवपञ्चैककुण्डन्तु चतुरश्रमथैशतः  ३
स्थण्डिलं कारयेद्विद्वान् शाल्यक्षततिलान्वितम्
सर्षपञ्च यथामाषं रजनी चूर्णसंयुतम्  ४
पूर्वादद्धयर्धमानेन रजनी क्षणिका भवेत्
तिलैश्च केसराणीह तिलतण्डुलनिर्मितम्  ५
द्रोणद्वयसमापूर्णा तन्मद्ध्ये वर्द्धनीन्नयसेत्
तस्यां मनोन्मनीन्नयस्त्वा वामाद्याः परितो मताः  ६
उमासरस्वतीदुर्गा सावित्री च उषा मता
पत्युषा शमनी चैवाप्युशनाष्टौ समीरिता  ७

घटं वा करकं वापि गन्धाद्यैः प्राग्वदर्चयेत्
घृतेन वारिणा वापि पूजयेद्देशिकोत्तमः  ८
घृतम्मधुतथानन्धपुष्पतोय तिलोदकम्
चन्दनोदकमिन्नोश्च सारं पुष्पोदकन्ततः  ९
रत्नोदकं रजन्याभं पुष्पार्त्थं होममेव वा
पलाशोदुंबरोत् भूतास्समिधः परिकीर्तिताः  १०
समिदाज्य चरून् लाजान्मधुन्नीरं क्रमात् भवेत्
मूलमन्त्राच्छतं प्रोक्तमर्द्धं वांगैर्दशांशतः  ११
प्रथमञ्जयरात्रन्तु द्वितीयं भारती दिनम्
तृतीयमजिताख्यञ्च चतुर्त्थं विजयात्मिकाम्  १२
पञ्चमं वाक् भवं वाथ षष्ठं स्यात्पार्वती दिनम्
सप्तमी वाप्युमादेव्या दिनं सप्तदिनं मतम्  १३
शुद्धान्नमुत्पलञ्चैव प्रथमेऽह्नि बलिं न्निपेत्
मुद्गान्नं लड्डुकान्नञ्च द्वितीयेऽहनि दापयेत्  १४
कृष्णमाषसमायुक्तं सगुळं न्नीरमिश्रितम्
तृतीये च बलिन्दद्यात्पूर्वादिक्रमयोगतः  १५
शुद्धान्नं घृतसम्मिश्रं चतुर्त्थेह्नि बलिं न्निपेत्
निष्पावान्नं बलिन्दद्यात् पञ्चमेऽह्नि विशेषतः  १६
महामुद्गान्नकं दद्यात् षष्ठेऽह्नि बलितो नरः
दद्ध्यन्नं सप्तमे दद्यात् घृतेन सहदेशिकः  १७
तीर्त्थेऽह्नि पूर्वरात्रौ तु कलशान्नवविन्नयसेत्
अ्राज्यार्घ्यान्तन्तथा पाद्यं ततश्चाचमनं भवेत्  १८
गोमूत्रं गोमयं न्नीरं दधिमधुचतेषु वै
कौतुकं बंधयित्वा तु रात्र्यन्ते तीर्त्थमाचरेत्  १९
चूर्णोत्सवं महातीर्त्थं पूर्ववत्परिकल्पयेत्
प्राग्वदन्नयत्समुद्दिष्टं महोत्सवविधिं प्रति  २०

अनुक्तमन्यतो ग्राह्यमन्यत्पूर्वोक्तवन्नयेत्
देवांगभूते देवी चेत्पूर्ववत्सर्वमाचरेत्  २१
इति देवी महोत्सवविधिपटलस्सप्तनवतितमः

दुर्गास्थापनविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण दुर्गास्थापनमुत्तमम्
सर्वसिद्धिकरं पुण्यं सदा विजयवर्द्धनम्  १
यत्नेन स्थापयेद्देव्या दुर्गाया स्थापनं कुरु
ग्रामवास्तु विमाने वा स्थापनस्य शिवालये  २
शैलजं लोहजं वापि बेरं कुर्याद्विचक्षणः
मानांगुलेन वा कुर्यात् तालमानेन वा पुनः  ३
यजमानांगुलमानेन द्वारमानेन वा पुनः
यथोक्तं प्रतिमां कृत्वा शुभमासं समारभेत्  ४
अचलं शैलजञ्चेत्तु गर्भगेहवशाद्बुधः
रत्नन्न्यासं प्रकर्तव्यं शैलजन्तु चलं विना  ५
लोहजञ्चेत् कृते पीठे नैव पटसमायुते
मण्डले स्थण्डिले पद्मे पीठमन्त्रे निधाय वै  ६
पालिकाद्यंकुरैर्युक्ते दीपाद्यैश्च सुशोभिते
सुमुहूर्त्ते सुलग्ने च नवरत्नानि विन्न्यसेत्  ७
देवीं रत्नोपरिन्न्यस्त्वा सुदृढं लिर्वृणा कृतिः
देव्याबीजमनुस्मृत्य तत्काले देशिकेन तु  ८
सुदृढं शिल्पिनं कुर्यात् यथायुक्त्या तु कारयेत्
देशिकं स्थपतिं पूज्य वस्त्रहेमांगुलीयकैः  ९
शालिभिस्थण्डिलं कृत्वा तण्डुलैस्थिलसंयुतम्
गन्धाद्यैस्थण्डिलं पूज्य हृदयेन तु मन्त्रतः  १०
सदृष्टाधान्यराशञ्च वर्णाद्यैर्वसुदर्शयेत्

व्यपोह्य पटमत्रैव जनान्सर्वान् प्रदर्शयेत्  ११
देशिकं शिल्पिनं पूज्य वस्त्राद्यैश्च विशेषतः
शुद्धिं बिंबार्हकं कृत्वा पञ्चगव्य कुशोदकैः  १२
वस्त्रैराभरणाद्यैश्च भूषणैर्भूषणार्हकैः
शिबिकायां समारोप्य सर्वातोद्य समायुतम्  १३
रुद्रतोरणसंयुक्तं मयूरव्यञ्जनैर्युतम्
पिच्छचामरसंकीर्णं पताकाद्यैश्च संयुतम्  १४
वास्तुप्रदक्षिणं कृत्वा जले तीरे समाविशेत्
वस्त्रप्रच्छादिता देवी कूर्चसूत्रेण संयुतम्  १५
जलाधिवासनं कुर्यात् एकरात्रञ्जले तदा
आलयाग्रे च तत्पर्श्वे दक्षिणे चोत्तरे तथा  १६
नवहस्ताष्टहस्तं वा सप्तहस्तमथापि वा
षोडशस्तंभसंयुक्तं पङ्क्तित्रयसमायुतम्  १७
पङ्क्तिमानसमुत्सेधं चतुर्द्वारसमायुतम्
मण्टपन्तत्र कुर्वीत ब्रंहांशावेदिका भवेत्  १८
रत्निमात्रसमुत्सेधा दर्पणोदरसन्निभा
कुंडानि कारयेत्तत्र दिशासु विदिशासु च  १९
प्राक्कुण्डं वेदिका मद्ध्ये प्रधानं तत्र कल्पयेत्
गोमयालेपनं कृत्वा प्रोक्षयेत्तु शिवांभसा  २०
स्थंडिलं तत्र कर्तव्यं वेदिकोपरिशालिभिः
तंडुलैश्च तिलैरब्जं कृत्वा दर्भैः परिस्तरेत्  २१
अण्डजाद्यैर्विशेषेण कल्पयेच्छयनं हृदा
दीपैश्शैलांकुरैर्युक्तैः प्रच्छन्नपटसंयुते  २२
द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः
एवं मण्टपसंस्कारं तोरणैश्च ध्वजैर्युतैः  २३
जलादुत्तीर्य बिंबन्तु प्रविशेदालयं ततः

शुद्धिं कृत्वा तु गव्यैश्च सेचयेत् गंधवारिणा २४
गंधाद्यैर्लेपितं बिंबं नववस्त्रेण वेष्टयेत्
हेमं कौतुकसूत्रन्तु बंधयेद्दक्षिणे करे २५
शयने शाययेत् बिंबं हृदयेन तु मंत्रतः
द्रोणार्द्धतोयसंपूर्णान् वस्त्रेणैव तु वेष्टितान् २६
गंधतोयेन संपूर्णान् हेमपद्मास्त्रसंयुतान्
वरकूर्चसमायुक्तान् चक्रोपरिसमायुतान् २७
वस्त्रेण वेष्टितान् कुंभान् चूतपल्लवशोभितान्
देव्याश्च दक्षिणे पार्श्वे प्रधानञ्च घटन्न्यसेत् २८
दुर्गा कात्यायनी चैव विजया चापराजिता
देवी वेगवती चैव गायत्री शर्वरी तथा २९
कान्तार्योक्तक्रमेणैव मद्धयमा दिशि विन्यसेत्
तत्तद्बीजमनुस्मृत्य कुंभेष्वन्तर्जलन्न्यसेत् ३०
गंधादिभिरथाभ्यर्च्य हृदयादीन्यसेत्क्रमात्
समिदाज्य चरून् लाजान् मुद्गमाषतिलांस्तथा ३१
प्रत्येकं शतमर्द्धं वा द्रव्यं प्रतिविशेषतः
देव्यग्निञ्च प्रधाने तु कल्पयेद्देशिकोत्तमः ३२
तदग्निं सर्वकुंडेषु निक्षिपेत्प्रणवेन तु
अग्न्याधानादिकं कृत्वा द्रव्यहोमं समारभेत् ३३
मूलेन हृदयाद्यस्तु समिदादींश्च होमयेत्
देवीगायत्रिमंत्रेण पूर्णाहुतिमथाचरेत् ३४
तत्तन्मंत्रेण संस्पृश्य होमान्ते व्याहृतिं क्रमात्
एवं रात्रौ तु कर्तव्यं प्रभाते सुमुहूर्तके ३५
देवीमुत्थाप्य यत्नेन स्नानवेद्योपरिन्यसेत्
व्यपोह्य वस्त्रकूर्चन्तु कल्पयेदासनं पुनः ३६
नवशक्तिसमोपेतमशेषाग्निविनिर्गतम्

गंधाद्यैरासनं चाब्जं पूजयेद्देशिकोत्तमः ३७
ब्रह्मैरंगैस्सकीलन्तु बिंबन्नयस्त्वा क्रमेण तु
पञ्चमस्य तृतीयन्तु मायानलसमन्वितम् ३८
चतुर्दशेन संभिन्नं बिन्दुनादसमायुतम्
मूलमंत्रमिदं प्रोक्तं तस्मात् ब्रह्मांगकल्पनात् ३९
सिंहध्वजा चैत्रैव विद्महेति परं पदम्
ततो वै चक्रहस्ताय धीमही तत्परं पदम् ४०
तन्नोदुर्गा युते चैव तथा चैव प्रचोदयेत्
गायत्र्यासहितं मूलं ब्रंहैरंगैस्सुयोजयेत् ४१
सम्यक्संभाव्यते देवी प्रतिष्ठां कारयेत् गुरुः
देशिकं पूजयेत्तत्र वस्त्रैराभरणैस्तथा ४२
दक्षिणाञ्च ततो देयं सुवर्णां शास्त्रचोदितम्
मूर्तिपान्पूजयेत्तत्र दैवज्ञं पूजयेत्ततः ४३
पर्यष्ठं परिचाराणां भक्तानाञ्चैव दापयेत्
वाद्यकं गायकञ्चैव नृत्तकं पूजयेत्ततः ४४
अत्रोपयोगद्रव्याणि आचार्यैश्चैव संग्रहेत्
भ्रमणोत्सवमन्त्रेण स्थापनं कुरु यत्नतः ४५
वस्त्रैराभरणैर्भूष्य नैवेद्यन्न प्रदापयेत्
एवं यः कुरुते मर्त्यः प्राप्नेति विजयं श्रियम् ४६
इति दुर्गा स्थापनविधिपटल अष्टनवतितमः

हरिस्थापनविधिपटलप्रारंभः
हरिस्थापनमहं वक्ष्ये सर्वरोगनिवृत्तिकम्
क्षेमदञ्जयदं पुण्यं सर्वलोकसुखावहम् १
पादौ सुस्थितमेवन्तु सर्वलक्षणसंयुतम्
किरीटमकुटोपेतं शंखचक्रधरान्वितम् २

दक्षिणे चोत्तरे चक्रं वामे शंखसमन्वितम्
अभयन्दक्षिणं हस्तं वामं कटकहस्तकम् ३
स्तनसूत्रसमं कुर्यादुभयाग्रं विशेषतः
कटकास्ततलञ्चैव कटिसूत्रसमं भवेत् ४
पिप्पलीमूलदौपेतं कटकेन समायुतम्
परहस्तं विशेषेण तद्वयं परिकीर्तितम् ५
प्रतिमाणां विशेषेण मथा --- शृताः
ग्रामस्य वारुणे भागे समं कुर्याद्विशेषतः ६
अथवा वायुदिग्भागे गरुडालयमुत्तमम्
प्रतिष्ठादिवसात्पूर्वे नवाहे सप्तमेव वा ७
अंकुराणर्पयेद्धीमान् शास्त्रमार्गेण कर्मणा
रत्नन्न्यासं विशेषेण कुर्यान्नयनमोक्षणम् ८
विकारांघ्रि समायुक्तं मण्टपन्धर्महस्तकम्
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् ९
जलन्नीत्वा तु बिंबेन शिबिकोपरिविन्न्यसेत्
तन्मण्टपस्य मद्ध्ये तु वेदिं कुर्यात् सलक्षणाम् १०
तस्यामद्ध्ये विशेषेण स्थण्डिलं हस्तमात्रतः
तन्मद्ध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ११
अण्डजं मुण्डजन्तल्पं रोमजञ्चर्मजन्तथा
वामजं शयनं कल्प्य कल्पन्तु शयनस्य तु १२
शयने शाययेद्धीमान् प्राक् शिरश्चोद्ध्र्ववक्त्रकम्
सूत्रोदकस्य कुंभे तु पूर्वाशादिषु विन्न्यसेत् १३
संकर्षणश्च प्रद्युम्ना वासुदेवो निरुद्धकः
रामश्चैवाच्युतश्चैव नारसिंहोत्थवामनः १४
क्रमेणैतानि सर्वाणि अष्टकुंभानि विन्न्यसेत्
देवस्यैव शिरोभागे प्रधानां कुंभकं न्न्यसेत् १५

तत्तत् बीजं न्यसेत्कुंभे ह्यानपूर्वं विशेषतः
पाञ्चरात्रप्रकारेण प्रतिष्ठां सम्यगाचरेत् १६
कुंभानुद्धृत्य सर्वांश्च सर्वालंकारसंयुतान्
मूर्त्तिकुंभविशेषेण अभिषेकं समाचरेत् १७
इंद्राशादिषु पीठे तु अभिषेकं समाचरेत्
परिवारादि संयुक्तं स्थापयित्वा विशेषतः १८
संकर्षणादि मूर्त्तीनां पूर्वादिषु च विन्नयसेत्
अथवान्नयप्रकारेण परिवारविहीनकम् १९
मयासं त्तेपतः प्रोक्तं विशेषं पाञ्चरात्रवत्
पाञ्चरात्रक्रमेणैव होमादिन्यासमाचरेत् २०
इहैव धनवान्श्रीमान् सोन्ते विष्णुमवाप्नुयात् २१
इति हरिस्थापनविधिपटल एकोनशततमः

लद्मीस्थापनविधिपटलप्रारंभः

अथ वद्त्ये विशेषेण लद्मीस्थापनमुत्तमम्
आयुष्करं यशोवृद्धि श्रीसौभाग्य विवर्द्धनम् १
मूलदेवस्य धाम्ने च वायोर्वरुणमद्ध्यमे
स्वगृहे वान्यस्थाने वा स्थापयेल्लद्मीं बुधः २
शिला सुधा च चित्रञ्च उत्तमादीनि कारयेत्
देवाग्रे उत्तरे पूर्वे ऐशान्ये चोक्तदेशके ३
सप्तमं नवहस्तं वा दशहस्तमथापि वा
द्वादशस्तंभसंयुक्तं चतुर्द्वारसमायुतम् ४
चतुस्तोरणसंयुक्तं दर्भमाल्यैरलंकृतम्
वितानध्वजसंयुक्तं मराटपं भूषयेत्ततः ५
अधिवासदिनात्पूर्वमंकुरार्पणमाचरेत्
बेरस्य शोधनं कृत्वा शिल्पमार्गेण कारयेत् ६

हेमसूचि प्रहारेण नयनोन्मीलनं कुरु
ज्योतिर्मण्डलमालिख्य नेत्रमंत्रं समुच्चरन् ७
मधुक्षीराज्यकेनैव नेत्रस्पर्शनमाचरेत्
पुण्याहप्रोक्षणं कृत्वा गवां विप्रकराञ्जनान् ८
सप्तधान्यं विशेषेण दर्शनन्तु समाचरेत्
पुण्याहप्रोक्षणं कृत्वा बिंबशुद्धिमथाचरेत् ९
जलमद्ध्ये प्रपां कृत्वा जलाधिवासनं नयेत्
पश्चिमे तु शिरः स्थाप्य पादौ पूर्वे च विन्नयसेत् १०
तीरे चाष्टघटं स्थाप्य लोकपालान् समर्चयेत्
गंगादिनवतीर्थानि अर्चयेञ्जलमद्ध्यमे ११
नानावाद्य समायुक्तं नानाजपसमन्वितम्
नवरात्रं सप्तरात्रं त्रिरात्रमेकरात्रकम् १२
अथवा घटिकामात्रं जले कृत्वा विशेषतः
मण्टपाराधनं कृत्वा तोरणाद्यष्टमंगळम् १३
मण्टपस्याकृतिं मद्ध्ये वेदिकानां प्रकल्पयेत्
नवाग्निञ्चैव पञ्चाग्निं एकाग्निं वा प्रतिष्ठितम् १४
प्रधानकुण्डं योनिस्स्यादन्याब्जं चतुरश्रकम्
शालितण्डुलमुद्गञ्च माषमेव तिलन्तथा १५
कुंभस्य मूले स्थातव्यं लिखितन्नलिनन्तु वा
सूत्रवेष्टितकुंभानां गवाक्षसदृशान्तरम् १६
जलेन पूरितं कृत्वा सकूर्चं नाळिकेरकम्
चूतपल्लवसंयुक्तं सवस्त्रं सहपल्लवम् १७
परिवारघटे स्वर्णं पूरयित्वा यथाविधि
रत्नैश्च पूरितं कृत्वा घटमेकन्तु संयुतम् १८
जलाधिवासनं बेरं गृहीत्वा देशिकस्य तु
वेदिकायास्तु तन्मद्ध्ये शयनं पञ्चकं यथा १९

भूतात्मापञ्चतत्वानि अर्चनोक्तविधानतः
अण्डजं मुण्डजञ्चैव रोमजञ्चर्मजन्तथा २०
श्वेतवस्त्रं रक्तवस्त्रं शयनाच्छादनं क्रमात्
बेरस्य शिरसि स्थित्वा प्रधानं कुंभसंयुतम् २१
बहिरष्टघटञ्चैव श्रीदेव्याः परिवारकम्
द्विभुजाञ्च द्विनेत्राञ्च सरक्तमकुटान्विताम् २२
पीतवर्णसमायुक्तां सर्वावयवसुन्दरीम्
पंकजन्दक्षिणे हस्ते श्रीफलं वामहस्तके २३
पद्ममद्ध्यस्थितां देवीं हस्तद्वयविपार्श्वयोः
ऊर्ध्वहस्तघटोपेतां पार्श्वे उभयकुञ्जरम् २४
अभिषेकांबुसंयुक्तां श्रीदेवीं संप्रपूजयेत्
सरस्वतीञ्च वागीशीं स्तंभिनीं मोहिनीं तथा २५
सावित्रीञ्चैव गायत्रीं महेशीमुन्मनीं तथा
परिवाराष्टशक्त्यादीन् वर्द्धन्यां पूजयेत्सुधीः २६
मंटपाराधनं कृत्वा पूर्वोक्तविधिना कुरु
अग्निकार्यं विशेषेण कुंडे आवाह्य पूजयेत् २७
पालाशोदुंबराश्वत्थं वटं पूर्वोदिदिक्षु च
शमीखदिरमायूर श्रीवृक्षा अग्निकोणके २८
समिदाज्य चरून् लाजान् मुद्गमाषयवांस्तिलान्
शलिगोधूमनीवार सक्तुसिद्धार्त्थकन्दधि २९
क्षीरं क्रमेण विधिवत् होमयेन्मूलमंत्रतः
इच्छाज्ञानक्रियारूपञ्चत्वत्रयमथाचरेत् ३०
प्रोक्षणं शान्तिकुंभस्य जलेनास्त्रेण मन्त्रतः
अष्टमूर्तिविशेषेण मंत्रसंपुटमारभेत् ३१
पद्मासनं समभ्यर्च्य वामादीन् केसरान्वितान्
आवाह्य गन्धपुष्पाद्यैरर्चनोक्तं समाचरेत् ३२

कुण्डं होमञ्च मन्त्रञ्च शक्तिं यागोक्तमाचरेत्
प्रायश्चित्तविधानेन प्रायश्चित्तं समाचरेत् ३३
अग्निसंयोजयेत्कुंभे पश्चाद्धामप्रदक्षिणम्
कुंभाद्बीजं न्यसेत् बिंबे ह्रींकारञ्च स्वनामतः ३४
कुंभाभिषेकं कुर्याच्च चित्रवस्त्रेण वेष्टितम्
चन्दनं सर्वगन्धं स्यात् लेपयित्वा विशेषतः ३५
जातिनीलोत्पलञ्चैव पंकजं करवीरकम्
तुळसीबिल्वपत्रञ्च नन्द्यावर्तन्तु मल्लिका ३६
सर्वपुष्पैस्समभ्यर्च्य धूपदीपेन पूजयेत्
शुद्धान्नञ्चादिपञ्चान्नमपूपादिविशेषतः ३७
तांबूलं मुखवासादीं स्तोत्रमंगलमाचरेत्
वस्त्रहेमांगुलीयञ्च गोभूमिं देशिकस्य तु ३८
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३९
इति लक्ष्मीस्थापनविधिपटलश्शततमः

मोहिनीस्थापनविधिपटलप्रारंभः

मोहिनीस्थापनं वक्ष्ये समासेन प्रजापते
देवासुरमहायुद्धे त्वमृतम्मथने सति १
पीयूषमथने काले संभवे च द्वलोटने
देवस्थावपिसंग्राह्य वति -- कृतासुरान् २
हंसार्त्थमेमन्त्रवत्भास्य भवामोतांशनीवयम्
इतरत्वासह कारीते अमृतादेयदाकृता ३
तदाजायात्मना कृष्णान्दद्यात्ते नामृतामृतम्
विजित्वादरवास्त्वेवं संविशेयस्तु मांसदा ४
तदा तत्कृष्णजायान्तु हैमेमाभात्तु मोहिनी
कालार्णान्नु समुद्धृत्य चतुर्दशस्वरान्वितम् ५

बिन्दुनादसमायुक्तमस्यास्तु मूलमन्त्रकम्
ब्रह्मांगानपि तेनैवाप्युद्धरेदुत्तमर्षतः ६
ग्रामबाह्ये मनोरम्ये मोहिन्यावासकं परम्
प्रागुक्तेनैव हर्म्यन्तु कर्तव्यम्मराटपादयः ७
गरुडं सिंहमुद्धं वा कल्पयेत् ग्रीवमञ्चके
प्राक् द्वारस्य समानेन गर्भमानेन तत्कुरु ८
लोहजं शैलजं वापि मृरामयन्दारुकन्तथा
धातुकं वाथ कर्तव्यमनेनैव प्रकारतः ९
द्विनेत्रा द्विभुजा शान्ता द्विपादाश्यामळप्रभा
करराडमकुटोपेता सर्वाभरणभूषिता १०
पद्मपीठोपरिष्टात्तु पीतवस्त्रसधृतां वराम्
आसीनं स्थानकं वापि कल्पयेत्कल्पवित्तमः ११
त्रिभंगस्थानकञ्चेत्तु सव्यांघ्रिशायि --- नी
लसितं वामपादन्तु सव्यहस्ते धृतोत्पला १२
प्रसार्यवामहस्ते तु वरदं कटकन्तु वा
अन्यत्सव्ये तु शूलं वा कपालं वामहस्तके १३
एवं संकल्पयेन्मोटीं दक्षिणे द्विभुजं हरम्
चतुर्हस्तं प्रकर्तव्यं वामांघ्रिविष्टरे शयेत् १४
लंबयेद्दक्षिणं पादमभयं वरदान्वितम्
टंकं कृष्णमृगं वामे दक्षिणे वरकेसरी १५
जटामकुटसंयुक्तं सोमेश्वरमिवा कृति
केवलम्मोहिनीञ्चैव कल्पयेत्कल्पवित्तमः १६
अष्टांगी कोटरी चैव दक्षिणे दक्षिणे स्थिता
द्विनेत्रे द्विभुजे शान्ते चामरामालिका करे १७
पार्श्वयोर्गर्भगेहे तु प्रवेशस्य तु पार्श्वयोः
रक्तश्यामनिभावेतौ कल्पयेत्कोशबंधितौ १८

शंकिनी टंकिनी चैव बाह्यद्वारसुपार्श्वयोः
दक्षिणे दक्षिणे शूलं डमरुञ्चैव धारयेत् १९
अंगिनी आंगिनी चैव इंगिनी ईङ्गिनी तथा
उंगिनी ऊंगिनी चैव ऋंगिनी ॠंगिनी तथा २०
लृंगिनी ॡंगिनी चैव एंगिनी ऐंगिनी तथा
ओंगिनी औंगिनी चैव अंगिनी अःगिनी तथा २१
इंद्रादिक्रमयोगेन स्थापयेत्परिवारकान्
एवं षोडशपरिवारान् दिक्दिक् संस्थापतेत्ततः २२
अभयावरदास्सर्वे प्रासादाभिमुखस्थिताः
प्रासादस्याग्रतः कुर्यादग्निभागैकविस्तृतः २३
तस्याग्न्यंशसमुत्सेधं कर्तव्यं स्थाप्यवेदिकाम्
चतुर्दिक्ष्वग्निकुंडानि वृत्ताकाराणि कल्पयन् २४
रत्नन्यासन्तु मूलेन हृदा नयनमोक्षणम्
सर्पिर्मधुसवत्सांगां धान्यं विप्रं प्रदर्शयेत् २५
नेत्रमन्त्रं समुच्चाय पञ्चकन्नयां प्रदर्शयेत्
हृदास्थाप्य स्ववस्त्राद्यैरलंकृत्य विशेषतः २६
ग्रामप्रदक्षिणं कृत्वा जलाधिवासनं कुरु
एकरात्रं त्रिरात्रं वा प्रहरं वा जले वसेत् २७
स्थंडिलं कारयेद्वेद्यां शालिभिस्तिलतंडुलैः
लाजपुष्पकुशास्तीर्य शयनं नववस्त्रतः २८
गंधाद्यैस्तु समभ्यर्च्य बध्वाप्रतिसरन्ततः
शरने शाययेद्देवीं प्राक्शिरश्चोर्ध्ववक्त्रकम् २९
नववस्त्रेण सञ्छाद्य गंधाद्यैस्तु समर्चयेत्
स्थापयेत् मोहिनीं कुंभे कत्बिंबन्तु शिरोन्तिके ३०
सकूर्चवस्त्रहेमाढ्यमद्भिःपूर्यविधाय च
मूलमन्त्रन्नयसेत्तस्मिन् ध्यात्वा च मोहिनीं यजेत् ३१

द्वौ वारिका वृतान् कुंभान् परितः परिकल्पयेत्
हविषान्नं समभ्यर्च्य ततो होमं समाचरेत् ३२
पलाशखादिराश्वत्थो दुंबरञ्च समित्क्रमात्
समिदाज्य चरून् लाजान् सर्षपांश्च यवांस्तिलान् ३३
अजमां समपूपञ्च फलं सक्तुं हृदादिभिः
शतमद्धन्तदर्द्धं वा प्रत्येकाहुतिमाचरेत् ३४
द्रव्यान्ते व्याहृतिं हुत्वा तत्तदंगैस्पृशादिभिः
ततः पूर्णाहुतिं कुर्यान्मूलमन्त्रेण देशिकः ३५
एवञ्जागरणं रात्रौ प्रभाते सुमुहूर्त्तके
शयनाद्देविमुद्धृत्य सर्वालंकारसंयुतम् ३६
हर्म्यं प्रदक्षिणी कृत्य गर्भगेहं समाविशेत्
स्थापयेन्मूलमन्त्रेण तत्तदंगानि विन्नयसेत् ३७
घटात् बीजं हृदिन्यस्य तदद्भिरभिषेचयेत्
परिवारघटांश्चैव तत्तत्पीठेऽभिषेचयेत् ३८
ब्रह्मांगैरभिषिच्याथ हृदागन्धादिभिर्यजेत्
हविषान्नं समभ्यर्च्य बस्तमांसं हृदाददेत् ३९
परिवारबलिञ्चैव तद्रव्येणैव दापयेत्
प्रतिष्ठा यजनं ह्येवमुत्सवञ्चाधुनोच्यते ४०
सिंहद्ध्वजोक्षकेतुर्वा गरुडं वापि रोपयेत्
पञ्चायुधसमायुक्तं चक्रमूर्त्ति समन्वितम् ४१
सन्धिदेवावाहनाद्यं सर्वं कुर्यान्महोत्सवे
शूलं कपालदण्डञ्च खड्गञ्चापन्तथैव च ४२
मोहिन्यायुधपञ्चैते पञ्चमूर्त्याधिदेवताः
यागे तु वेदिकायान्तु स्थापयेन्मोहवर्द्धनीम् ४३
अंगिन्यादीनि वर्द्धन्यां परितः स्थापयेद्बुधः
तत्तन्मन्त्रन्नयसेद्धयायेद्धविषान्नं समर्चयेत् ४४

तस्यैंद्राग्निन्तु संकल्प्य पद्मकुण्डे तु होमयेत्
समिदाज्य चरून्लाजन् सर्षपांस्तिलमुद्गकान् ४५
बस्तानां रुधिरमांसमपूपं मुद्गकुळुत्थकम्
विद्याद्यस्त्रान्तमन्त्रैस्तु मोहिन्यास्तु शताहुतिम् ४६
पञ्चाशत्पञ्चविंशत्या प्रतिद्रव्यन्तु होमयेत्
होमान्ते तु बलिन्दद्यात् सर्वालंकारसंयुतम् ४७
घोषिणीमर्दिनी घोरी पालिनी पिंगली तथा
मत्भूतिविकृतिर्मार्दी भृंगिणी सन्धिदेवताः ४८
मद्ध्यादीशावसानेषु बलिन्दद्यात्तु सन्धिषु
शुद्धान्नं मांससंयुक्तं बलिन्दद्यात्स्वमंत्रतः ४९
नवाहं वाथ सप्ताहं पञ्चाहं ह्येवमाचरेत्
लृ -- न्ते चोत्सवं कुर्याद्देवीं मोहनमूर्तिकाम् ५०
य-- परिवेषञ्च युक्त्याशेषं समाचरेत्
एवं द्वित्रिदिनं वापि वनयात्रां समाचरेत् ५१
अन्यत्सर्वञ्च कर्तव्यमुत्सवस्यममोक्तवत् ५२
इति मोहिनी स्थापनविधिपटल एकोत्तरशततमः

चतुर्द्वारार्चनविधिपटलप्रारंभः

अतःपरं प्रवक्ष्यामि चतुर्द्वारार्चनन्तथा
प्राक् द्वारे शान्तिकं प्रोक्तं पश्चिमे मोक्षसिद्धिदम् १
दक्षिणे इष्टकाम्यं स्यात् धनधान्यन्तथोत्तरे
पूर्वे तु कल्पयेत्द्वारं सर्वकाम्यात्र्थसाधनम् २
श्रेष्ठं पश्चान्मुखञ्चैव अभावे प्राङ्मुखन्तथा
दक्षिणद्वारसंयुक्तमथवा उत्तराय च ३
पूर्वद्वारे पश्चिमेऽपि गोमूखोत्तरसंयुतम्
देशिकोत्तरवक्त्रः स्यादर्चनोक्तं विशेषतः ४

पश्चिमे नैर्ऋते स्थित्वा पूर्वे च वह्निदेशके
अर्चयित्वा तथा देवं स्थितमासीनकल्पयेत् ५
दक्षिणोत्तरवक्त्रं स्यात् गोमुखं पूर्वकल्पयेत्
देशिकः पूर्ववक्त्रः स्यात् अर्चयित्वा विशेषतः ६
दक्षिणे नैर्ऋते स्थित्वा उत्तरे वायुदेशके
अर्चयित्वा तथा देवं स्थितमासीनसंयजेत् ७
पश्चिमोत्तरके द्वारे नैवेद्यन्तु शिवाय च
आचार्यहस्तं संयोज्य गजहस्तन्निवेदनम् ८
पश्चिमोत्तरतश्चैव विकृतिं हस्तसंयुतम्
पूर्वे च दक्षिणे चैव प्रकृतिं हस्तसंयुतम् ९
प्रकृतिं विकृतिं हस्तं नैवेद्यञ्चैव दापयेत्
तद्दोषाय भवेत्कृत्वा भुक्तिमुक्तिफलप्रदम् १०
लिंगस्थञ्च घटस्थञ्च कुण्डस्थं मण्डलन्तथा
आचार्यहृदयस्थञ्च पञ्चमूर्त्तिं सदाशिवम् ११
पञ्चवक्त्रसमायुक्तं शुद्धस्फटिकनिर्मलम्
कक्षिपञ्चदशैर्युक्तं दशबाहुसमन्वितम् १२
खट्गञ्चपरशुं खट्गं वज्राभं यौचदक्षिणे
पाशन्नागांकुशञ्चैव घण्टां वह्निञ्च वामके १३
दिव्यांबरधदञ्चैव मकुटे वार्द्धचंद्रकम्
केयूरकटकञ्चैव सर्वरत्नैर्विभूषितम् १४
यल्लिंगं भावयित्वा तु पूजयित्वा सदाशिवम्
उत्तरे पूजयेद्देवीं तद्द्वाराभिमुखं क्रमात् १५
पूर्वद्वारन्तथा देवमर्चयेत्तु चतुर्मुखम्
ईशानं ऊर्ध्ववक्त्रं स्यात्तद्वक्त्रमैशगोचरे १६
पूर्वे तत् पुरुषञ्चैव अघोरन्दक्षिणे यजेत्
वाममुत्तरदेशे तु सद्योजातन्तु पश्चिमे १७

ईशानमभयञ्चाग्निं पुष्यगं वज्रनागगम्
अघोरं खड्गघण्टाञ्च वामं परशुमंकुशम् १८
शूलं वामं तथा सर्वकरैर्धार्यं पृथक्पृथक्
शुद्धस्सटिकमीशानं पुरुषं कुंकुमप्रभम् १९
अघोरमञ्जनाभासं रक्ताभं वामदेवकम्
सद्योजातन्तु गोक्षीरं पञ्चवक्त्रेषु भावयेत् २०
हृदयं पावके पूज्य निर्ऋृतौ तु शिखां यजेत्
कवचं वायुदेशे तु शिरो वैशानगोचरे २१
अस्त्रन्तु दक्षिणे पूज्य ईशाने नयनं यजेत्
पूर्वद्वारे तु संपूज्य द्वारदेवान्विशेषतः २२
द्वारमन्तर्मुखं विद्यात् द्वारपालाबहिर्मुखाः
तस्मान्मंटपबाह्ये तु द्वारपूजां समारभेत् २३
गुरोरन्तः प्रवेशस्य दक्षिणादिसमर्चयेत्
पतंगोर्ध्वे गणेशन्तु द्वारसव्ये समर्चयेत् २४
द्वारवामे सरस्वत्यां महालक्ष्मीन्तु मद्ध्यमे
आत्मनो दक्षिणे पार्श्वे नन्दीं गंगां प्रपूजयेत् २५
आत्मनो वामपार्श्वे तु काळञ्च यमुनान्तथा
मतंगञ्चोर्ध्वदेहळ्यामधो भुवनदेहळीम् २६
भुजंगं दक्षशाखायां तद्वामे मतंगमीरितम्
विमलञ्च सुबाहुञ्च पूजयेत्तु कवाटयोः २७
पट्टिकां स्कन्दमभ्यर्च्य वलयोस्सूर्यसोमकौ
सुषिरे नवशक्तिञ्च आधारे शक्तिरेव च २८
आधारेस्त्रञ्च संपूज्य तदग्रे वृषभं यजेत्
दंडिञ्च सव्यपार्श्वे तु मुंडिञ्च वामपार्श्वके २९
भृंगी विनायकौ चैव दक्षिणे तु समर्चयेत्
पूर्वे वृषभस्कन्दां च देवी चंडेश्वरोत्तरे ३०

विघ्ने त्रयमिदं पूज्य द्वारदेशेसमर्चयेत्
विघ्नाद्ध्यत्तन्तु प्रथमं विघ्नराजं द्वितीयकम्  ३१
विघ्नेश्वरं तृतीयन्तु विघ्नत्रयमिहोच्यते
पार्त्थिवं चान्तरित्तञ्च स्वर्गे चैव त्रिधा भवेत्  ३२
विघ्नत्रयमिदं प्रोक्तं स्थानं तत्रैव कल्पयेत्
भूमौ च सव्यपादेन पादांगुष्ठेन ताडयेत्  ३३
विघ्नाद्ध्यत्ताय तृप्तिं स्यात् भूमिविघ्ननिवारणम्
अन्तरित्ते विघ्नराज तृप्तिः स्याद्धस्तताडनात्  ३४
अंगुष्ठतर्जनीभ्यान्तु पत्रमूर्ध्वोस्त्रमन्त्रवित्
विसर्जनीय स्वर्गे स्यात् विघ्नेश्वरस्य तृप्तये  ३५
व्यपोह्य त्रयविघ्नन्तु शिवपूजां समाचरेत्
द्वाररत्ताय देवाय बलिं सर्वत्र दापयेत्  ३६
इंद्रादीशानपर्यन्तं पूर्वद्वारबलिं त्तिपेत्
पश्चिमद्वारहर्म्ये तु पूजयेत्तु सदाशिवम्  ३७
रूपद्ध्यानञ्च पूर्वोक्तं गौरीं दत्तिणतो यजेत्
पञ्चवक्त्रान् समभ्यर्च्य ईशानन्तूर्ध्वतो यजेत्  ३८
ऐशान्यां नैर्ऋते वक्त्रमर्चनां परिकल्पयेत्
पश्चिमे पुरुषं वक्त्रमघोरमुत्तरे न्यसेत्  ३९
दत्तिणे वामदेवन्तु पूर्वे सद्यमिति स्मृतम्
हृदयं वामदेशे तु ऐशान्नयां शिखिविन्नयसेत्  ४०
कवचं चाग्निदेशे तु शिरोनिर्ऋृति गोचरे
अस्त्रन्तथोत्तरे चैव अघोरं शिखिमद्ध्यमे  ४१
सर्वज्ञता बीजरूपमीशाने नयनं यजेत्
पश्चिमद्वारके पूज्य द्वारदेवान् समर्चयेत्  ४२
पतंगोद्ध्र्वे गणेशन्तु दत्तिणे तु समर्चयेत्
उत्तरे सरस्वतीं पूज्य मद्ध्ये लत्त्मीं प्रपूजयेत्  ४३

द्वारस्य दक्षिणे पार्श्वे नन्दीं गंगां प्रपूजयेत्
द्वारस्य वामपार्श्वे तु काळञ्च यमुनान्तथा ४४
कवाटद्वये तु संपूज्य विमलञ्च सुबाहुकम्
अधरेस्त्रं सुसंपूज्य वृषभं पश्चिमे यजेत् ४५
भृंगी विनायकौ चैव दक्षिणे तु समर्च्चयेत्
पश्चिमे वृषभस्कन्दौ देवी चण्डौ च वामके ४६
विघ्नत्रयमिदं पूज्य द्वारदेशे समर्चयेत्
द्वाररक्षाय देवाय बलिं सर्वत्र दापयेत् ४७
वारुण्यादिनैर्ऋत्यन्तं पश्चिमे बलिमाचरेत्
दक्षिणद्वारके चैव पूजयेत्तु सदाशिवम् ४८
देवस्य पूर्वभागे तु पूजयेत्तु मनोन्मनीम्
पञ्चवक्त्रं तथा देवं मूर्द्धनीशानकं यजेत् ४९
निरीक्ष्यवह्निदेशे तु ईशानमपि पूजयेत्
दक्षिणे पुरुषञ्चैव अघोरं पश्चिमे यजेत् ५०
पूर्वे वाममुखञ्चैव सद्योजातं तथोत्तरे
हृदये नैर्ऋते देशे वायव्यां शिखिविन्नयसेत् ५१
कवचं ईशदेशे तु शिरश्च वह्निगोचरे
अस्त्रन्तु पश्चिमे पूज्य पूर्वे तु नयनं यजेत् ५२
दक्षिणद्वारहर्म्ये तु द्वारदेवान् प्रपूजयेत्
द्वारस्य पूर्वपार्श्वे तु नन्दीं गंगां प्रपूजयेत् ५३
द्वारस्य पश्चिमे पार्श्वे काळञ्च यमुनान्तथा
विमलञ्च सुबाहुञ्च अर्चयेत्तु कवाटयोः ५४
द्वारस्याधारे चास्त्रं स्यात् वृषभं दक्षिणे यजेत्
भृंगी विनायकौ चैव पूर्वभागे समर्चयेत् ५५
दक्षिणे वृषभस्कन्दौ देवीञ्चण्डञ्च पश्चिमे
विघ्नत्रयन्तु संपूज्य द्वारदेशे समर्चयेत् ५६

द्वाररक्षाय विघ्नाय बलिं सर्वत्र दापयेत्
यमादिकग्निपर्यन्तं दक्षद्वारबलिं ददेत्  ५७
उत्तरद्वारहर्म्ये तु पूजयेत्तु सदाशिवम्
पूर्ववद्ध्यानमेवोक्तं पश्चिमे तु मनोन्मनीम्  ५८
पञ्चवक्त्रं महादेवमूर्ध्वमीशानसंयजेत्
ईशानवक्त्रमेवोक्तं वायुदेशे निरीक्षणम्  ५९
सौम्ये तत्पुरुषञ्चैव अघोरं पूर्वतो मुखम्
वामं पश्चिमभागे तु सद्योजातन्तु दक्षिणे  ६०
हृदयं चैश देशे तु आग्नेय्याञ्च शिखां न्यसेत्
कवचं नैर्ऋते देशे वायव्यां विन्यसेच्छिरः  ६१
अथ पूर्वे तु संपूज्य पश्चिमे नयनं यजेत्
उत्तरद्वारके यत्र द्वारदेवान् प्रपूजयेत्  ६२
पतंगस्योर्ध्वे गणेशन्तु पश्चिमे तु समर्चयेत्
पूर्वे सरस्वतीञ्चैव मद्ध्ये लक्ष्मीं समर्चयेत्  ६३
द्वारस्य सव्यपार्श्वे तु नन्दीं गंगां प्रपूजयेत्
द्वारस्य पूर्वपार्श्वे तु काळञ्च यमुनान्तथा  ६४
कवाटयोस्समभ्यर्च्य विमलञ्च सुबाहुकौ
अस्त्रमाधारे संपूज्य वृषभं चोत्तरे यजेत्  ६५
भृंगीविनायकौ चैव पश्चिमे तु प्रपूजयेत्
उत्तरे वृषभस्कन्दौ देवी चण्डन्तु पूर्वके  ६६
विघ्नत्रयन्तु संपूज्य द्वारदेशे तु संयजेत्
द्वाररक्षाय तृप्ताय बलिं सर्वे समाचरेत्  ६७
सोमादिवायुपर्यन्तमुत्तरे बलिमाचरेत्
यत्र देशे भवेत् द्वारं तत्र तत्पुरुषं यजेत्  ६८
चतुर्द्वारि तथा गौरीं वामभागे समर्चयेत्
आसनावरणादीनि प्रभादिषु यथार्चयेत्  ६९

चतुर्द्वारार्चनं ह्येतत् धनधान्यसमृद्धिदम्  ७०
इति चतुर्द्वारपूजाविधिपटलः द्व्युत्तरशततमः

क्षेत्रपालार्चनविधिपटलप्रारंभः

क्षेत्रपालार्चनं वक्ष्ये श्रुणुष्वेव प्रजापते
अर्द्धरात्रे विशेषेण क्षेत्रपालबलिं कुरु  १
असुरा राक्षसाश्चैव नित्यकर्मविरोधकृत्
शिवपूजा विधिं कृत्वा राजराष्ट्रस्य वर्द्धनम्  २
तत् ग्रामं तस्यरक्षार्थं चोरचक्रविनाशनम्
अपमृत्यु विनाशञ्च ज्वररोगादिनाशनम्  ३
जयार्थं पुत्रमित्रादि धनधान्यविवर्द्धतम्
सर्वशान्तिकरं पुण्यं सर्वपापविनाशनम्  ४
पूजान्ते तु बलिं कृत्वा भोगांगमिति संस्मृतम्
हकारस्यान्तराळस्थं कूटबीजं सुबालकम्  ५
बिन्दुनादसमायुक्तं अन्तस्थं स्थितिबालकम्
एकाक्षरपदं रौद्रं शान्तीनां शत्रुनाशनम्  ६
क्षेत्रबीजभयं कारं मृत्युनाशं सुशोभनम्
पाद्यैराचमनीयार्घ्यैर्गन्धैः पुष्पैश्चधूपकैः  ७
दीपैर्न्निवेदनैस्सर्वैः कूटबीजेन दापयेत्
श्वानमारूढदेवाश्च स्वनामाद्येन पूजयेत्  ८
क्षेत्रद्ध्यानक्रमं वक्ष्ये श्रुणुष्वेवप्रजापते
प्राप्ते कलियुगे घोरे नष्टेदग्धे च वा पुनः  ९
वृषरूपेण धर्मित्वा श्रुतिश्वानकवाहनः
आघ्रायाघ्रायबिन्दञ्च वेदश्वानश्शनैश्शनैः  १०
यत्पदानि महाटव्यां वन्देऽहं परमेश्वरम्
शुभश्चाशुभदश्चायं शुभं स्याच्छुभवाहनम्  ११

ऋग्यजुस्सामवेदांश्च अंगप्रत्यंगमेव च
चंद्रार्कस्याग्निनौ चैव सर्वदेवांशमेव वा १२
तस्मातु वाहनञ्चैव श्वानवाहनमुच्यते
द्वारन्तु पश्चिमे मुख्यं दक्षिणे मद्ध्यमं स्मृतम् १३
कन्नयसञ्चेंद्रके द्वारमैशान्नयां स्थानमुत्तमम्
द्विदोर्दण्डं चतुर्हस्तं षट्भुजञ्चाष्टहस्तकम् १४
सुदंष्ट्रं भैरवाकारं कृष्णवर्णं दिगंबरम्
सर्वयज्ञोपवीतञ्च शिरोमाला विभूषितम् १५
ऊर्ध्वकेशं सुवृत्ताक्षं नागाभरणसंयुतम्
त्रिणेत्रन्नग्नरूपञ्च किञ्चित्प्रहसिताननम् १६
शूलन्दक्षिणहस्ते तु वामहस्ते कपालकम्
द्विभुजे तु प्रकर्त्तव्यं नाभ्यांशार्द्धचतुर्भुजम् १७
डमरुकंसव्यहस्ते तु वामहस्ते तु पाशधृक्
त्रिशूलं सव्यहस्तं स्यात्कपालं वामहस्तकम् १८
चतुर्भुजमिति ख्यातं षट्भुजञ्चैव कारयेत्
खड्गन्दक्षिणहस्ते तु वामहस्ते तु खेटकम् १९
नागञ्च दक्षिणे हस्ते तोमरं वामहस्तके
त्रिशूलन्दक्षिणे हस्ते वामहस्ते कपालधृक् २०
षट्भुजं त्वितिविख्यातं भुजाष्टकमिदं श्रुणु
त्र्यक्षमष्टभुजं रौद्रं ऊर्ध्वकेशं सुदंष्ट्रकम् २१
रौद्रदृष्टिन्तु कृष्णाभं बालेन्दु कृतशेखरम्
नरशिरश्च दुर्द्धर्षं नागयज्ञोपवीतिनम् २२
संयुक्तं कर्णयोः पत्रं विक्तन्तो मरकुण्डलम्
शूलं डमरुकं खट्गं पिनाकं दक्षिणे करे २३
कपालञ्च धनुश्चैव घण्टां पाशमधः करे
सर्वाभरणसंयुक्तं शिरं वै केतुमालया २४

नग्ननागांबरञ्चैव किंकिणी वरदसंयुतम्
नूपुरं यज्ञसूत्रञ्च पादकिङ्तिणिसंयुतम् २५
प्रभा मण्डलसंयुक्तं पद्मपीठोपरिस्थितम्
एवं वै क्षेत्रपालन्तु स्वरूपाणान्तु विन्नयसेत् २६
पद्मं शूलञ्च मुकुळं निष्ठुरं योनिशंखजम्
मन्त्रान्तमुद्रा कार्यं वा विनियोगं प्रपूजयेत् २७
अथवान्यप्रकारेण विशेषमधुनोच्यते
पञ्चमस्योदरस्थन्तु वह्निमायासमन्वितं २८
बिन्दुनादसमायुक्तं प्रथमं प्रणवमुच्यते
वारुणञ्च समुद्धृत्य टवर्णं पञ्चमान्वितम् २९
वर्गाद्यञ्च द्वितीयेन सप्तवर्गादि संयुतम्
आपदुद्धारणायेति मन्त्रयुक्तञ्च कारयेत् ३०
वर्गाद्यं पञ्चमोपेतं यान्तञ्चैव तथैव च
एतौ वर्णौ द्विरुच्चार्य वरुणाय सुयोजयेत् ३१
टकारं पञ्चमोपेतं द्विवर्गञ्च द्वितीयकम्
वायुबीजं ततो ध्यात्वा मन्त्रमुच्चारयेत् क्रमात् ३२
पूर्वोक्तं प्रणवं चैव मन्त्राद्यं तत्प्रयोजयेत्
हृल्लेखं मन्त्रमुच्चार्य बिन्दुनादसमन्वितम् ३३
वटुकाख्यं महातन्त्रं ज्ञानयोगक्रियावहं
रहस्यमतिगुह्यं च सन्निधानकरं परम् ३४
मन्त्रोच्चारमिदं प्रोक्तं अर्च्चनस्य विधिं श्रुणु
आसनं कल्पयेत्पश्चात् गन्धपुष्पेन संयुतम् ३५
मण्डले स्थण्डिले पीठे पटेन हृदयेऽपि वा
चतुरश्रासनस्थन्तु चाष्टपत्रं सकर्णिकं ३६
तस्य मद्ध्ये चतुष्कोणमण्डलन्तु विधीयते
तन्मद्ध्ये तु त्रिकोणन्तु तन्मद्ध्ये वोमपात्रकम् ३७

तन्मद्ध्ये देवमावाह्य मूलमन्त्रेण मंत्रवित्
बालसूर्याग्निसंकाशं राजसन्ध्यानमुच्यते ३८
सात्विकं श्वेतवर्णन्तु कृष्णान्तामसमुच्यते
सर्वकामार्त्थसिद्ध्यर्त्थं राजसन्ध्यानमुच्यते ३९
सात्विकं मुक्तिदं प्रोक्तं रोगनाशं च तामसम्
चोरशत्रुक्षयकरं सर्वक्लेशविनाशनम् ४०
ग्रहभूतविशाचादि सर्वविघ्नविनाशनम्
एवन्ध्यात्वा विशेषेण कृष्णवर्णं प्रशस्यते ४१
त्रिणेत्रं रक्तवर्णं च चंद्रशेखार्द्धमौलिनं
सव्ये शूलं भयं चैव कपालं वरदं परे ४२
रक्तवस्त्रांबरधरं रक्तमाल्यानुलेपनम्
नीलग्रीवं च सौम्यं च सर्वाभरणभूषितम् ४३
राजसानां च तद्ध्यानं सात्विकानां ततश्श्रुणु
सात्विकं च विधिः प्रोक्तं मृत्युनानाभयं भवेत् ४४
तुषारकिंकिणी भासं बालरूपं द्विनेत्रकम्
मूर्ध्नित्वळकबृन्दं च देवीशान्तं चलोचनम् ४५
सर्वाभरणधर्तारं द्विभुजं व्यक्तरूपकम्
कपालं वामहस्ते तु शूलन्दण्डं च दक्षिणे ४६
पादनूपुरसंयुक्तं छन्नवीरविभूषितम्
सर्वमालासमायुक्तं घण्टालंकारसंयुतम् ४७
हस्तजानूरुवक्षश्च सर्वाभरणभूषितम्
एवं ध्यात्वा विशेषेण सदामृत्युंजयो भवेत् ४८
सर्वकामप्रदातारं सर्वयोगफलप्रदम्
सर्वज्ञानोद्भवं प्राप्ति सात्विकं चोत्तमं भवेत् ४९
सात्विकं ध्यानमित्युक्तं तामसं ध्यानमुच्यते
वर्णन्तु नीलमेघाभमूर्ध्वकेशं त्रिणेत्रकम् ५०

नग्नरूपं सरौद्रं च शिरोमालाविभूषितम्
नूपुरं चन्नवीरं च नागयज्ञोपवीतकम् ५१
किंकिणी मालयाभूष्यं भीमरूपं भयावहम्
डमरुञ्चांकुशञ्चैव खड्गशूलभयान्वितम् ५२
नागं पाशं च घरटाञ्च वरदं वामहस्तके
कपालञ्च विशेषेण वामहस्तसमन्वितम् ५३
सुदंष्ट्रं भीमनादञ्च सर्वपुष्पैरलंकृतम्
सर्वक्षोभणकर्तारं सर्वव्याधिनिवारणम् ५४
सर्वशत्रुक्षयकरं सर्वदं सस्यवर्द्धनम्
एवं ध्यात्वा तु मंत्रज्ञो आसनोपरिविन्नयसेत् ५५
असितांगोरुरुश्चरडः क्रोधश्चोन्मत्तभैरवः
अपालभीषणश्चैव संहारश्चाष्टभैरवाः ५६
पूर्वाद्यैशानपर्यन्तं पूजयेत्तु विशेषतः
कपालशूलसहितं अभयं वरदान्वितम् ५७
नीलमेघनिभाकारत्रियक्षं चंद्रशेखरम्
प्रणवादिनमोन्तं च पूजयेत्वष्टभैरवम् ५८
ग्रामेषु नगरे चैव पत्तने राजधानिके
चत्वारेषु श्मशानेषु समुद्रे गजपादिनम् ५९
देवालये गुरुगृहे विमाने पुरायदेशके
आररये पर्वताकारे नद्यादिषु कटाकके ६०
एतेषां स्थानमेवोक्तमन्येषु स्थापनं नयेत्
देवस्याभिमुखं पूर्वमैशान्यां क्षेत्रपालकम् ६१
दक्षिणाभिमुखन्देवं क्षेत्रेशं वायुदेशके
देवस्य पश्चिमद्वारे चाग्नेय्यां क्षेत्रपालकम् ६२
उत्तराभिमुखन्देवं क्षेत्रे शानन्तु नैर्ऋते
एतत्स्थानं प्रकर्तव्यं अन्येषां स्थाननाशनम् ६३

प्रमादाद्दित्तु संस्थाप्य यजमानं राष्ट्रनाशनम्
नीलनिभवेदकरवह्निनयनं स्याच्छूलकपालडमरुकपाशकरधारम् ।
नग्ननीलशुनवाहनकिङ्किणिविभूष्य मूर्ध्वगतिकेशधरसर्पधरहरः ६४
नग्नरूपं त्र्यद्दाचतुर्भुजसर्पडमरुकत्रा शूलकपालकः ।
ऊर्ध्वकेशसम मसन्निभं द्दोत्रपालस्वरूपमिदं भवेत् ६५
भैरवं दद्दिाणे भ्यर्च्य द्विभुजं चैकवक्त्रकम् ६६
खड्गखेटधरञ्चैव रक्तवर्णसमायुतम्
महाभैरववामे तु कृष्णवर्णसमायुतम् ६७
द्विभुजं विस्मयं हस्तं मूलं वा दराडधारिणम्
उग्रभैरवपीठं स्यात् बलिपीठबलिन्तथा ६८
तस्याग्रेश्वानसंयुक्तं द्वारपार्श्वे द्वयन्तथा
वाहनञ्चैव संयोज्य चतुर्वेदं प्रकल्पयेत् ६९
सर्वोपचारपूजायां भोगांगं पूजयेत्तदा
लयांगं लिंगपूजायां भोगांगं द्दोत्रपालकम् ७०
सर्वभैरवसंपूज्य बलिपीठं विशेषतः
रक्तपानबलिं कृत्वा सर्वशान्तिकरं शुभम् ७१
मधुमांसफलैर्युक्तं नैवेद्यन्तु प्रदापयेत्
गंधद्रव्यसमायुक्तं गंधपुष्पेण पूजयेत् ७२
धूपदीपसमायुक्तं सर्वातोद्यसमायुतम्
अर्द्धरात्रौ विशेषेण भोगांगं बलिपूजयेत् ७३
पूजान्ते तु बलिं कृत्वा सपुरायां गतिमाप्नुयात् ७४
इति द्दोत्रपालार्चनविधि पटलः त्र्युत्तरशततमः

वारपूजाविधिपटलप्रारंभः

अथ वद्दये विशेषेण वारपूजा विधिक्रमम्
सौरवारे समारभ्य मन्दवारान्तमाचरेत् १

प्रातस्सन्ध्यार्चनान्ते तु कर्तव्यं वारपूजनम्
गव्यैः पञ्चामृतैस्स्नाप्य पञ्चविंशत् घटोदकैः २
स्नापयित्वा विशेषेण गन्धपुष्पादिनार्चयेत्
वस्त्राभरणमालाद्यैरलंकृत्य विशेषतः ३
अब्जञ्चैव तु पुन्नागरक्तब्जञ्चैव पाटली
चंपकञ्जातिपुष्पञ्च नीलोत्पलं यथा क्रमम् ४
सौरादिशनिवारान्तमर्चयित्वा विशेषतः
पूर्वाश्च बिल्वपत्राणि धातकी तुळसी तथा ५
दान्तञ्च डाडिमी पत्रं विष्णुक्रान्तिन्तथैव च
एते सौरादिनाभ्यर्च्य रक्तचन्दनमेव च ६
श्वेतचन्दनकर्पूरकुंकुमञ्चागरुन्तथा
कृष्णागरुञ्च कस्तूरी हिमतोयैश्च मर्दिता ७
सौरवारादिसंलिप्य नैवेद्यं पायासादिभिः
पायासान्नञ्च दद्ध्यन्नं मुद्गान्नञ्च हरिद्रकम् ८
गुळान्नमपि शुद्धान्नं तिलान्नञ्च यथा क्रमम्
दुकूलं पीतकौशेयं रक्तवस्त्रं च शाबळम् ९
जीमूताभं हरिद्वर्णं कुंकुमांशुकमेव च
रव्यादिशनिवारान्तं सप्तधा वस्त्रमीरितम् १०
प्रवाळं स्फटिकं वज्रं पद्मरागं च मौक्तिकम्
गोमेदकं पुष्यरागं सप्तवारेषु दापयेत् ११
मुरवं झलरीढक्का पणवं घटशृंगकम्
तूर्यवाद्यं च सप्तैते सप्तवारेषु वाद्यकम् १२
श्रीरंगमर्कवारे तु झर्झरीमिन्दुवासरे
वर्णभिन्नं कुजे चैव बुधे च गोकुलप्रियः १३
बृहस्पतावेवताळं घृगौ च तापशेखरम्
दद्धट्टं मन्दवारे च सप्तवारेषु ताडयेत् १४

कामघ्नं च हरिध्वं संकालघ्नं दक्षयागभित्
त्रिपुरघ्नं गजघ्नं च चण्डेशानुग्रहन्तथा १५
सप्तधाकारयेद्वाद्य सप्तवारे प्रजापते
घृतं बिल्वं च निर्यासं चन्दनं गुग्गुलं लघु १६
कर्पूरं सप्तधा प्रोक्तं मद्ध्वाज्याभ्यां विमर्दितम्
भान्धादिमन्दवारान्तं दापयेद्धूपमुत्तमम् १७
सर्वोपचारं कर्तव्यं तांबूलं च निवेदयेत्
धूपदीपसमायुक्तन्दर्पणाद्यैर्विशेषतः १८
एवं संपूज्य विधिवत् चण्डपूजां समाचरेत्
एकाहे वाथ कर्त्तव्यं सौम्यवारे तु पूजयेत् १९
पूर्वयामान्तमारभ्य उदयान्तं समाचरेत्
आयुः कीर्तिं च विद्यां च श्रीकरं विजयन्तथा २०
पुत्रलाभं च सौभाग्यं एते वारफलास्मृताः २१
इति वारपूजाविधिपटलश्चतुरुत्तरशततमः

अष्टमीपूजाविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण अष्टम्यार्चनमुत्तमम्
सर्वलोकहितं पुण्यं सर्वैश्वर्य सुखप्रदम् १
घृतं पूज्यन्तु मोक्षं स्यात्पुत्रपौत्रविवर्द्धनम्
अष्टाविंशतिकोटीनामेकादश्यां घृतं चरेत् २
एकाकृष्णाष्टमी मुख्या तदर्द्धं च चतुर्दशी
घृतस्नानसमोपेतं पूजयेत्परमेश्वरम् ३
अष्टम्यां च चतुर्दश्यां घृतस्नानं सकृन्नरः
मात्रापित्रा च दारैश्च कुलत्रयसमन्वितम् ४
इहलोके सुखं प्राप्य सोन्ते सायुज्यमाप्नुयात्
तस्मात्सर्वं प्रयत्नेन अष्टम्यार्चनमाचरेत् ५

विप्रक्षत्रियविट् छूद्रादीक्षितानां विशेषतः
भक्तानां चैव सर्वेषान्नारीणां वृद्धिवर्द्धनी ६
मार्गशीर्षकमासे तु त्वारभ्यव्रतमाचरेत्
व्रतानामुत्तमं प्रोक्तं ----------- ७
अष्टम्यां वा चतुर्दश्यां रात्रावेव समाचरेत्
प्रातस्नानादिकं कृत्वा सन्ध्यावन्दनपूर्वकम् ८
शंभुं प्रदक्षिणं कृत्वा शिवमन्त्रञ्जपेत्ततः
शिवद्ध्यानसमायुक्तं शिवस्य कथनं श्रुणु ९
सायाह्नसमये चैव संध्यावन्दनपूर्वकम्
पूजां समारभेद्धीमान् पूर्वोक्तविधिना ततः १०
घृतस्य प्रोक्षणं लेपं घृतस्नानं त्रिधा भवेत्
दूर्वेण घृतसंयुक्तं प्रोक्षणं कुडुपद्वयम् ११
प्रस्थं प्रस्थार्द्धकञ्चैव घृतलेपनमेव च
द्विप्रस्थादिनिशान्तानि नवधा स्नानमेव च १२
यावन्मात्रमनो बुद्धिघृतपूज्येन बुद्धिमान्
सहस्रार्द्धघृतञ्चैव सायुज्यञ्च तथा भवेत् १३
अष्टोत्तरशतेनैव सारूप्यमभिधीयते
पुत्रपौत्रविवृद्ध्यर्त्थं पञ्चविंशत्घृतान्वितम् १४
इष्टकाम्यफलञ्चैव षोडशप्रस्तसंयुतम्
प्रस्थं प्रस्थार्त्थकञ्चैव ऐश्वर्यञ्च विशेषतः १५
कुडुपञ्चैव युग्मञ्च आयुरारोग्य वर्द्धनम्
स्थण्डिलं शालिभिः कृत्वा शिवाग्रे वाथ मण्टपे १६
पुण्याहप्रोक्षणं कृत्वा गव्यैः पञ्चामृतैरपि
स्नपनं तत्र कुर्वीत घृतं वै स्थापयेत्ततः १७
वस्त्रपूतेन शुद्धिस्स्यात् कोष्ठेनैव समन्वितम्
स्थापयेत्तु क्रमेणैव पूजयेद्धृदयेन तु १८

गंधपुष्पादिभिश्चैव धूपदीपैः प्रपूजयेत्
गर्भगेहं प्रविश्याथ लिंगशुद्धिं समाचरेत्  १९
आसनं मूर्तिमूञ्च विद्यादेहञ्च कल्पयेत्
आवाह्य देवदेवेशं गंधपुष्पादिनार्चयेत्  २०
पञ्चगव्यैस्तु संस्नाप्य शुद्धैस्तैरभिषेचयेत्  २१
पश्चात्पञ्चामृतेनैव जलस्नानान्तरान्तरे
घृतमिमीक्षेति मन्त्रेण घृतसूक्तेन मन्त्रतः  २२
चमकन्नमकञ्चैव नरसूक्तं त्रियंबकम्
जपेयुर्ब्राह्मणास्सर्वे शिवमन्त्रं समुच्चरन्  २३
अघोरेणैव मन्त्रेण स्नापयेल्लिंगमूर्द्धनि
पिंडिकायाञ्च संस्नाप्य शनैः कोष्णसमन्वितैः  २४
कोष्णोदकैश्च संस्नाप्य मुद्गचूर्णेन मर्दयेत्
कदळी फलसंयुक्तं नाळिकेरगुळन्तथा  २५
शुद्धोदकेन संस्नाप्य गन्धोदैरभिषेचयेत्
स्थाप्यतैः कलशैस्नाप्य शिवमन्त्रं समुच्चरन्  २६
गंधपुष्पादिनाभ्यर्च्य पायसान्नं ददेद्गुरुः
वस्त्राभरणमाल्याद्यैरलंकृत्य विशेषतः  २७
नैवेद्यं दापयित्वाथ तांबूलञ्च निवेदयेत्
नित्याग्नियजनं कृत्वा नित्योत्सवमथाचरेत्  २८
धूपदीपसमायुक्तं दर्पणञ्छत्र चामरैः
स्तोत्रसंगीतनृत्तैश्च पूजयेत्परमेश्वरम्  २९
कृत्वा प्रणम्म्य देवेशमुपोष्य रजनीं यथा
मुमुक्षूणां प्रकर्तव्यमन्नयेषान्तु विशेषतः  ३०
मुद्गादीनान्तु संप्राश्यमक्षारलवणन्तथा
नक्तवाथ प्रकर्तव्यं भोगमोक्षफलप्रदम्  ३१
एवं सामान्यमित्युक्तं विशेषमधुना श्रुणु

मार्गशीर्षकमासे तु शंकरन्तस्य चार्चयेत् ३२
नन्द्यावर्तेन संपूज्य पायसान्नं निवेदयेत्
पीत्वा शक्त्या च गोमूत्रमनाहारं निशि स्वपेत् ३३
अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत्
एवं पुष्ये तु संपूज्य शंभुमभ्यर्चयेत्ततः ३४
करवीरेण संपूज्य दद्ध्यन्नञ्च निवेदयेत्
घृतं संप्राश्य यत्नेन वाजपेयफलं भवेत् ३५
माघे महेश्वरं पूज्य बिल्वपुष्पैस्समर्चयेत्
गुळान्नञ्च निवेद्याथ गोक्षीरं प्राशयेत्ततः ३६
गमेदिष्टफलं लब्ध्वा फाल्गुनेन विशेषतः
महादेवञ्च संपूज्य पद्मपुष्पैस्समर्चयेत् ३७
तिलान्नञ्च निवेद्याथ तिलं संप्राशयेत्ततः
राजसूयस्य यज्ञस्य फलमष्टगुणं भवेत् ३८
वैशाखे शिवनामानिं कर्णिकारैस्समर्चयेत्
आज्यान्नन्तु निवेद्याथ पीत्वा चैव कुशोदकम् ३९
पुरुषमेधस्य यज्ञस्य फलं लब्ध्वा विशेषतः
ज्येष्ठे पशुपतिं पूज्य द्रोणपुष्पैस्समर्चयेत् ४०
शुद्धान्नं व्यञ्जनोपेतं गवांशृंगोदकं पिबेत्
गवां कोटिप्रदानस्य यत्फलं तदवाप्नुयात् ४१
आषाढे चोग्रनामानं श्वेतार्कैरेव पूजयेत्
हरिद्रान्नं निवेद्याथ प्राश्यगोमयवारिणा ४२
सौत्रामण्यस्य यज्ञस्य फलमष्टगुणं भवेत्
श्रावणस्सर्वनामानां जातिपुष्पैस्समर्चयेत् ४३
कदळीफलसंयुक्तां फलान्तञ्च निवेदयेत्
प्राश्येवं शुद्धपुण्याहं रुद्रलोके महीयते ४४
मासे भाद्रपदेष्टम्म्यां मन्त्रेश्वरमथार्चयेत्

चंपकैश्च समभ्यर्च्य पनसाम्रफलैस्सह ४५
नैवेद्यन्दापयित्वा तु पूजयेन्मन्त्ररूपकम्
प्राशनं बिल्वपत्राणामनन्तफलमाप्नुयात् ४६
मासे चाश्वयुजे चैव ईश्वरं संप्रपूजयेत्
उत्पलैश्च समभ्यर्च्य नाळिकेरान्नसंयुतम् ४७
नैवेद्यन्दापयित्वाथ पीत्वा च तण्डुलोदकम्
पुण्डरीकस्य यज्ञस्य फलमष्टगुणं भवेत् ४८
मासे तु कृत्तिका ख्येस्मिन् रुद्रनाम्ना च पूजयेत्
नीलोत्पलैस्समभ्यर्च्य सूपयुक्तं पयःप्लुतम् ४९
दापयेद्देवदेवाय दधिसंप्राशयेत्ततः
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं भवेत् ५०
मासं प्रतिविशेषेण शुद्धान्नञ्च निवेदयेत्
मूर्तिभेदेन मन्त्राणां भेदेनैव विचक्षणः ५१
प्रणवादि चतुर्थ्यन्तं स्वनामपदमद्धयमम्
स्वाहान्तं मंत्रमुद्दिष्टं तत्तन्मूलमिति स्मृतम् ५२
मूलमंत्रमिति ख्यातमन्येषां पूर्ववत् बुधः
व्रतान्ते भोजयेद्विप्रान् भक्तानां भोजयेत्ततः ५३
शक्त्या हिरण्यवासादिभक्त्या तेभ्योऽपि दापयेत्
निवेदयेच्च रुद्राय होमं कृष्णयजस्वनीम् ५४
वर्षमेकञ्चरेदेताञ्चैरन्तर्येण योनरः
तस्यैव फलसंपत्तिः वर्णने नैव शक्यते ५५
आचार्यं पूजयित्व तु दक्षिणां संप्रदाय च
यत्कर्म दक्षिणाहीनं तत्कर्मनिष्फलं भवेत् ५६
तस्मात्सर्वप्रयत्नेन आचार्यं पूजयेत्ततः ५७

इति अष्टमी पूजाविधिपटलः पञ्चोत्तरशततमः

प्रदोषपूजाविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण प्रदोषार्चाविधिक्रमम्
भक्तानां रक्षणार्त्थाय कृतान्तस्य च निग्रहम् १
कृतः कालान्तकेनापि तत्कालं रजनीमुखम्
अस्तमानं समारभ्य त्रिपादेन त्रिनाडिका २
प्रदोषमिति विख्यातं तत्काले शिवमर्चयेत्
स्नानं दानं जपं होमन्निष्फलञ्च भवेत्तदा ३
वृषस्य वृषणे चैव सर्वतीर्त्थानि तत्र वै
तस्मात्तद्वृषणं स्पृष्टा शृंगमद्ध्ये शिवन्दृशेत् ४
ऋणरोगादिदारिद्र्य क्षुद्बाह्य व्यधमृत्यवः
किल्बिषञ्च मनः खेदं कोपमोहभयानि च ५
एतेप्यस्तीति विज्ञाप्य देवदेवस्य सन्निधौ
तत्फलन्नलभेन्मर्त्त्यस्सर्वपापैः प्रमुच्यते ६
आर्द्रेण तालपत्रेण लेख्य विज्ञाप्य सन्निधौ
तत्पत्रन्दाहयित्वा तु जलतीरे विशेषतः ७
त्रिवारमिति कृत्वा तु तत्फलञ्च न विद्यते
सर्वपापहरं पुण्यं सर्वदोषनिकृन्तनम् ८
सायं काले विशेषेण शिवपूजां समारभेत्
वृषभं पूजयेत्पूर्वं पञ्चगव्याभिषेचनम् ९
शुद्धतोयेन सस्नाप्य गन्धं पुष्पञ्च धूपकम्
कृसरान्नन्निवेद्याथ तांबूलन्तु निवेदयेत् १०
प्रासादाग्रे विशेषेण स्थण्डिलं शालिभिः कुरु
लाजैः पुष्पैस्तिलैस्सार्द्धं विकिरेत्समलंकृतम् ११
परिस्तीर्य ततो दर्भैः पुण्याहं वाचयेत्ततः
नवकुंभं समादाय प्रोक्षयेच्छुद्धवारिणा १२
तन्तुनावेष्टयेत्तत्र वस्त्रकूर्च्चादिकन्तथा

चूतपल्लवहेमञ्च नाळिकेरसमन्वितम् १३
स्थण्डिलोपरिसंस्थाप्य सुगन्धादिभिरर्च्चयेत्
पञ्चगव्यञ्च संस्थाप्य पञ्चामृतन्तदन्तिके १४
नाळिके रोदकञ्चैव शुद्धतैलं घृतन्तथा
स्नानद्रव्यं समाहृत्य प्रोक्षयेच्छुद्धवारिणा १५
गर्भग्रहं प्रविश्याथ स्थानशुद्धिन्ततः कुरु
लिंगशुद्धिन्ततः कृत्वा पीठशुद्धिन्ततः परम् १६
आसनम्मूर्त्तिमूलञ्च मातृकां विन्यसेत्तदा
अष्टत्रिंशत्कलान्यासं व्योमव्यापि मुमा बुधः १७
आवाहयेत्ततो देवं पाद्याद्यैरुपचारकैः
पञ्चगव्यैस्ततस्नाप्य पञ्चामृतरसैस्तदा १८
नालिकेरोदके नैव स्नापयेत्परमेश्वरम्
स्नानद्रव्यं समालोडय देवदेवानुलेपयेत् १९
तैलं वाथ घृतं वाथ स्नापयेत्तु विशेषतः
गन्धोदैस्नापयित्वा तु शुद्धोदैरभिषेचयेत् २०
गन्धपुष्पादिभिः पूज्य धूपदीपन्ददेत्ततः
स्नपनक्रममुद्धृत्य गत्वा हर्म्यप्रदक्षिणम् २१
कुंभाद्देवं समादाय लिंगमद्धये तु विन्यसेत्
वर्धन्याद्बीजमादाय पीठमध्ये तु विन्यसेत् २२
तत्र कुंभोदकेनैव स्नापयेत्परमेश्वरम्
चमकं पुरुषसूक्तञ्च स्कन्दसूक्तन्तथैव च २३
प्रदोषे पूजयित्वा तु अन्यमन्त्राणि वर्जयेत्
वस्त्रेण लंबनं कृत्वा लिंगपीठं विशेषतः २४
सर्ववस्त्रैरलंकृत्य सर्वगन्धानुलेपनैः
हारके यूरमाल्याश्च हृदयेन प्रदापयेत् २५
धूपदीपन्ददेच्छंभोर्नैवेद्यञ्च प्रदापयेत्

देवस्य नयनोच्छिष्टं प्रदोषे निरवन्ततः २६
शुद्धान्नं पायसान्नञ्च अपूपञ्च विशेषतः
कदळीनालिकेरञ्च इक्षुदण्ढोपदंशकैः २७
नैवेद्यन्दापयेत्पश्चात् हृदयेनैव मन्त्रतः
पानीयन्दापयित्वा तु तांबूलञ्च निवेदयेत् २८
परिवारबलिन्दत्वा नित्यहोमपुरस्सरम्
नित्योत्सवन्ततः कुर्यात् धूपदीपन्ददेद्बुधः २९
आचमनन्दापयेत्पश्चात् भस्मरक्षासमन्वितम्
छत्रचामरकौ दद्यात् वेदं विज्ञाप्य देशिकः ३०
वेदैः पुराणरागैश्च कुर्यात् स्तोत्रमथाचरेत्
सर्ववाद्यैस्समायुक्तं नृत्तगीतेन सेवितम् ३१
पूजयेत्परमेशानं सर्वसंपत्सुखावहम्
प्रमादाद्यजने हीने राजराष्ट्रस्य दोषकृत् ३२
तस्मात्सर्वप्रयत्नेन शिवपूजां समाचरेत्
प्रदोषे रुद्रमभ्यर्च्य रुद्रलोके महीयते ३३
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
भक्तानां परिचाराणां स्वस्ववित्तानुदक्षिणाम् ३४
प्रदोषे यजनं प्रोक्तं सर्वपापनिकृन्तनम् ३५
इति प्रदोषपूजा विधिपटलः षडुत्तरशततमः

अमावास्यापूजाविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण त्वमावास्याविधिं परम्
सर्वपापहरं पुण्यं सर्वसिद्धिकरं शुभम् १
सर्वरोगविनाशार्थं सर्वप्राणिसुखावहम्
चतुर्दश्यान्तके प्राप्ते कारयेदधिवासनम् २
अर्द्धयामे प्रकर्तव्यं रक्षाबन्धनकर्म च

शालिभिः स्थगिडलं कृत्वा तन्मद्ध्ये नळिनं लिखेत्  ३
ततोमास्कन्ददेवस्य लिंगस्याग्रे तु कौतुकम्
देवसन्निधिसंप्राप्ते भस्मपात्रसुसंस्थिते  ४
स्थगिडले तगडुले हैमे तन्मद्ध्ये सूत्रमेव च
परिचारशिरस्थन्तत्प्रासादस्य प्रदक्षिणम्  ५
कृत्वा देवस्य पुरतो यात्राहोमं समाचरेत्
पञ्चब्रह्मषडंगैश्चाप्यष्टोत्तरशतं हुनेत्  ६
समिदाज्य चरून्लाजान् होमयेत्तु विशेषतः
ततो भूतबलिन्दत्वा लोकपालबलिं क्षिपेत्  ७
वाचयेत् नन्दपुगयाहं कौतुकं बन्धयेत्ततः
त्रियंबकेन मन्त्रेण रक्षासूत्रन्तु बन्धयेत्  ८
नैवेद्यन्दापयेत्पश्चात् तांबूलन्तु निवेदयेत्
नित्यपूजावसाने तु नित्योत्सवमथाचरेत्  ९
भेरीमाताडयविधिवत् ग्रामे चैव बलिं क्षिपेत्
शिवाग्रे स्थगिडलं कृत्वाप्युमास्कन्दपुरस्थितम्  १०
स्नपनं पञ्चविंशत्तु मूललिंगे सुयोजयेत्
अस्त्रदेवञ्च संपूज्य होमकर्मसमारभेत्  ११
भेरीमाताडय विधिवत् ग्रामे चैव बलिं क्षिपेत्
लोकपालबलिप्राप्ते तथावास्तु प्रदक्षिणम्  १२
अन्तलिंगसमायुक्तमस्त्रदेवसमायुतम्
तांबूलं रजनीञ्चैव देवन्दूर्वाक्षतैर्युतम्  १३
चूर्णोत्सवन्ततः कुर्यात्प्राकारे तु बलिं क्षिपेत्
मूललिंगञ्च संपूज्य तैलचूर्णञ्च दापयेत्  १४
रजनी चैव वक्त्रे स्याद्दूर्वाक्षतं विनिक्षिपेत्
अस्त्रञ्च पूजयेत्पश्चादुमास्कन्दञ्च पूजयेत्  १५
आचार्यं पूजयेत्पश्चात् ब्राह्मणान्पूजयेत्ततः

वाद्यनृत्तकनारीणान्दापयेत्तैलमेव च १६
ततो भक्तजनानान्तु तैलचूर्णं निवेदयेत्
नदी तीरे तटाके वा कुर्यात्तीर्थं विशेषतः १७
षोडशस्नपनं कृत्वा ह्यस्त्रमूर्तिञ्च पूजयेत्
वस्त्रेण वेष्टयेद्धीमान् नैवेद्यन्तु निवेदयेत् १८
तांबूलन्दापयेत्पश्चादालयन्तु प्रवेशयेत्
उमास्कन्देश्वरं पूज्य वस्त्रेणैव तु वेष्टयेत् १९
सर्वाभरणैस्संभूष्य सर्वपुष्पैरलंकृतम्
सर्ववाद्य समायुक्तं वेदध्वनिसमन्वितम् २०
हर्म्यं प्रदक्षिणी कृत्य सभास्थानं समाविशेत्
श्रमनिर्हरणार्त्थाय शीतळोदैस्सुगन्धिभिः २१
फलपञ्चामृतैश्चैव नाळिकेरोदकैस्तथा
स्नपनैरभिषिच्यैवं पूर्वोक्तवत्क्रमाद्यजेत् २२
नृत्तगीतैश्च विविधैः स्तोत्रैस्सन्तोष्य शंकरम्
धूपदीपादिनैवेद्यैर्नीराञ्जनपुरस्सरम् २३
विधायान्योपचाराणि सर्वातोद्य समायुतम्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् २४
इति अमावास्यापूजाविधिपटलस्सप्तोत्तरशततमः

## अमावास्यार्चनाविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण अमावास्यार्चनं परम्
सर्वपापहरं पुण्यं सर्वरोगविनाशनम् १
देवानाञ्च पितृणाञ्च पूजनं सफलन्ततः
पुष्याषाढे प्रकर्तव्या सर्वदेवप्रियार्त्थकम् २
शिवं संपूज्य विधिवत् पूजान्ते वासनन्ततः
तत्तत्काले विशेषेण गव्यैः पञ्चामृतैस्ततः ३

स्नपनं कारयित्वा तु पूर्ववत्पूजयेत्ततः
नैवेद्यं धूपदीपान्तं पूजयित्वा विचक्षणः ४
कृत्वा तु जलधारादीन् कारयेत्पूर्ववद्बुधः
शान्तिहोमं प्रकर्तव्यं सर्वदोषनिकृन्तनम् ५
उमास्कन्दादिदेवानां तीर्थयाने कृते सति
अंकुरार्पणयेद्वाथ कौतुकं बन्धयेत्ततः ६
पूर्वेद्युरधिवास्याथ प्रातस्सन्ध्यार्चनन्नयेत्
कृतकौतुकबेरस्य पूजां कृत्वा विशेषतः ७
अथ नैमित्तिकन्नित्यन्तत्रैव समाचरेत्
तीर्थदेशं समीपश्च अग्रे वा मण्डपेऽथवा ८
शिवाग्रे स्थण्डिलं कृत्वा भेरीताडनपूर्वकम्
चूर्णोत्सवन्ततः कुर्यात्पूर्वोक्तविधिना ततः ९
तैलदूर्वांकुरञ्चूर्णन्दद्यात्पूर्वोक्तवर्त्मना
अथवा तीर्थदेशन्तु क्रोशो यद्योजनान्तिकम् १०
तीर्थतीरेऽथ कर्तव्यञ्चूर्णोत्सवविधानतः
अस्त्रलिंगं समभ्यर्च्य अन्नलिंगसमन्वितम् ११
लोकपालबलिन्दत्वा कुर्यात् वास्तुप्रदक्षिणम्
शीघ्रं यानं प्रकर्त्तव्यं तीर्थदेशं प्रविश्य च १२
नदी तटाके स्त्रवणे समुद्रे संगमेऽपि वा
अन्येषु पुण्यतीर्थेषु जलक्रीडां समाचरेत् १३
तैलस्नानादिकं कृत्वा गव्यैः पञ्चामृतैस्तथा
स्नपनं कारयित्वा तु व्यपोह्य कौतुकन्ततः १४
वस्त्राभरणमालाद्यैरलंकृत्य विशेषतः
नैवेद्यं पायसादीनि दत्वा चाचमनक्रियाम् १५
तांबूलन्दापयित्वा तु मुखवाससमन्वितम्
नृत्तगीतसमायुक्तन्दर्पणछत्रचामरैः १६

सर्ववाद्य समायुक्तस्तोत्रमंगलवाचकैः
शनैर्द्ध्यानं प्रकर्तव्यं धूपदीपसमन्वितम्  १७
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपे
धूपदीपसमायुक्तमारार्तिकसमन्वितम्  १८
नृत्तगीतसमायुक्तं विनोदालोकनन्ततः
तांबूलन्दापयित्वा तु क्षत्रियस्य विशेषतः  १९
आलयन्तु प्रविश्याथ शेषं पूर्ववदाचरेत्
आचार्यं पूजयित्वा तु पञ्चाचार्यसमन्वितम्  २०
एतानेव सुसंपूज्य पर्यष्टिपरिचारकान्
भक्तानाञ्चैव सर्वेषां वाद्यकानान्तथैव च  २१
पूजयित्वा विशेषेण यथा विभवविस्तरम्  २२

इति अमावास्यार्चनविधिपटल अष्टोत्तरशततमः

नक्षत्रपूजाविधिपटलप्रारंभः

वक्ष्ये नक्षत्रयजनं सर्वारिष्टविनाशनम्
महाभूतप्रशमनं परसेनापलायनम्  १
सर्वशत्रुक्षयकरं सकलाभीष्टसिद्धिदम्
अकालमृत्युशमनं नवग्रहविनाशनम्  २
राजाभिषेकसमये कर्त्तुर्जन्मदिनेऽपि च
चतुर्दश्यामथाष्टम्यां पक्षयोरुभयोरपि  ३
रणारंभे वसाने वा योगयुक्तदिनेऽथवा
नक्षत्रयजनं कार्यं सर्वाभीष्टप्रसिद्धये  ४
शिवाग्रे मण्टपं कुर्यात्सर्वालंकारसंयुतम्
तन्मद्ध्ये वेदिकां कुर्यात् गुणभागैकभागतः  ५
विस्तारार्द्धसमुत्सेधं दर्पणोदरसन्निभम्
दिव्यमालासमायुक्तं निम्नोन्नतविवर्जितम्  ६

द्वादशस्तंभसंयुक्तं प्रासादवदलंकृतम्
तुरंगं वृषभं वाथ कल्पयेदग्रपार्श्वयोः ७
अलंकृत्य विशेषेण पत्रचित्रसुदामभिः
कैलासं कल्पयेन्मद्ध्ये शालिपिष्टमयेन तु ८
उपवेदिं ततः कृत्वा तद्विस्तारार्द्धमानतः
चतुरंगुलमुत्सेधं निम्नोन्नतविवर्जितम् ९
शालामण्टपं संकल्प्य मद्ध्ये पद्मं समालिखेत्
भानुसंख्यामहाब्जञ्च लिंगं षण्णवतिं विदुः १०
कुंकुमं कृष्णवर्णञ्च रक्तं गोक्षीरवर्णकम्
शुक्लवर्णं क्रमेणैव कल्पयेत् पूर्ववर्त्मना ११
गेयार्त्थं मण्टपं कुर्यात्पूर्वोक्तविधिना ततः
निश्चित्य दिवसात् पूर्वे नवमे सप्तमेऽपि वा १२
पञ्चमे वा विशेषेण बिल्ववृक्षं समाश्रयेत्
तत्पूर्वादीनि पत्राणि तृणादीनि व्यपोह्य च १३
पुण्याहं वाचयेद्धीमान् प्रोक्षयेच्छिवमन्त्रतः
हस्तमात्रेण तन्मूले परितश्चतुरश्रकम् १४
खातयेदस्त्रमन्त्रेण पञ्चगव्येन पूरयेत्
गंधादिभिस्समभ्यर्च्य मूलमन्त्रेण सुव्रत १५
त्रियंबकेन मन्त्रेण बध्वाप्रतिसरं यथा
दद्ध्योदनबलिन्दत्वा नवदेवादितृप्तये १६
यायादाशोषितं गव्यं जप्त्वा रुद्राधिदैवतम्
जपान्ते संग्रहेद्विद्वान् बिल्ववृक्षं समूलकम् १७
पञ्चांगं प्रणवेनैव विभजेत्तत्पृथक्पृथक्
सद्योजातेन संग्राह्य मूलं मूर्तिकयान्वितम् १८
रुद्रं वामेन संग्राह्य पत्रं हृदयमन्त्रतः
फलमस्त्रेण संग्राह्य ईशानेन सुमंग्रहेत् १९

शुद्धवस्त्रेण संवेष्ट्य शिरसावाहयेत्ततः
सर्वालंकारसंयुक्तं स्वस्तिसूक्तसमन्वितम् २०
धामप्रदक्षिणं कृत्वा शिवाग्रे वापि मण्टपे
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् २१
स्थण्डिलं कारयेद्विद्वान् शालिभिर्विमलैश्शुभैः
विन्यसेत् बिल्वपञ्चांगं तत्तन्मंत्रक्रमेण तु २२
तत्पूर्वे पश्चिमे वापि चोत्तरे वापि शेषतः
अष्टांगुलप्रमाणेन हित्वा परशुना स्मृतः २३
बिल्वकाष्ठञ्च मूलञ्च शुद्धतोयेन प्रोक्षयेत्
रोचनां कुंकुमञ्चापि चन्दनं हरिचन्दनम् २४
उशीरं मेघकर्पूरं तस्मादगरुनिस्सृतम्
हरिबेरसमायुक्तं हिमतोयेन मर्दयेत् २५
छायाशुष्कां पटीं कृत्वा पत्रपुष्पफलादिकम्
गृहीत्वा नवभाण्डे तु मुखं वस्त्रेण वेष्टयेत् २६
ऋचाभ्यर्च्य षडंगेन चामृती करणं कुरु
जप्त्वाष्टोत्तरसहस्रं पापक्षीणञ्च वाग्रतः २७
ओं सकल्मषाय नमः शिवाय नमः
ततो मण्टपमासाद्य सकळी कृतविग्रहः २८
विघ्नेश्वरं समभ्यर्च्य पुण्याहं वाचयेद्गुरुः
मण्टपं पूजयेद्विद्वान् पूर्वोक्तविधिना ततः २९
स्थण्डिलं वेदिका मद्ध्ये चाष्टद्रोणेन शालिना
तण्डुलैस्तिललाजैश्च दर्भैश्चैव परिस्तरेत् ३०
बहुरूपेण संप्रोक्ष्य पूजयेद्वृषभासनम्
मण्टपस्योत्तरे पूर्वे पश्चिमे वा विशेषतः ३१
अष्टद्रोणेन दुग्धेन स्नपनं परिकल्पयेत्
अर्घ्यं संसाधयेद्विद्वान् पात्रशुद्धिं समाचरेत् ३२

विभजेदथपञ्चांगमष्टधा देशिकोत्तमः
द्विभागेन शिवं रूपमेकभागेन पार्वतीम्  ३३
नक्षत्रं पञ्चभागेन कल्पयेत्तु यथाक्रमम्
गंधपुष्पादिना यष्ट्वा जप्त्वा पूर्वोक्तमंत्रतः  ३४
प्रणवेनैव संग्राह्य विन्यसेद्वेदिकोपरि
पूजयेत्कर्णिका मद्ध्ये पार्वतीं परमेश्वरम्  ३५
चतुर्दिक्षु न्यसेद्विद्वान् नक्षत्राणि यथा क्रमम्
अग्न्याद्याश्लेषपर्यन्तं सप्ताङ्गं त्विंद्रदेशके  ३६
माखादिशूर्पपर्यन्तं सप्ताङ्गं याम्यदेशके
अनूराधादि विष्णवन्तं षष्ठांगं पश्चिमे स्थितम्  ३७
श्रविष्ठादिभरण्यन्तं सप्ताङ्गं सौम्यदेशके
संकल्प्याभ्यर्च्य गंधाद्यैस्तत्तन्मंत्रेण देशिकः  ३८
ततो गर्भगृहं गत्वा लिंगशुद्धिं समाचरेत्
निवेदयेत्तु मुद्गान्नं लेपयेच्चन्दनेन तु  ३९
धूपदीपैस्समभ्यर्च्य इष्टार्थं प्रार्थयेद्गुरुः
ततो मण्डलमासाद्य मण्टपाधिपतिं न्यसेत्  ४०
अग्न्याय तनमासाद्य शिवाग्निं विधिना यजेत्
मधुरत्रयसंयुक्तं दूर्वाग्रकदळीफलम्  ४१
नाळिकेरफलं दुग्धमोदनेन समन्वितम्
ततो मण्टपमासाद्य सर्वालंकारसंयुतम्  ४२
प्रणवेनैव संग्राह्य पञ्चचूर्णं सबिल्वकम्
शिरसावाहयित्वा तु प्रदक्षिणमथाचरेत्  ४३
विवस्वन्मण्टपस्याग्रे पुण्याहं वाचयेत्ततः
कैलासगिरिमभ्यर्च्य पूजयेद्वृषदैवतम्  ४४
नक्षत्रं परितः स्थाप्य पूर्ववत्पूजयेत्क्रमात्
शतमर्द्धं तदर्द्धं वा मूलेनैव समाचरेत्  ४५

पूर्णाहुतिं ततो हुत्वा शिवाग्निञ्च विसर्जयेत्
ततस्संपूज्य देवेशमुमादेवी समन्वितम् ४६
हविर्निवेदयित्वा तु तांबूलं दापयेद्बुधः
परिचारं समाहूय सोष्णीषं सोत्तरीयकम् ४७
कुंभानुद्धृत्य शिरसा कृत्वा धामप्रदक्षिणम्
प्रविशेत् गर्भगेहन्तु स्नापयेत्स्नापनार्हकैः ४८
हविर्निवेदयित्वा तु गंधपुष्पादिभिर्यजेत्
ततो मंटपमासाद्य सर्वालंकारसंयुतम् ४९
प्रणवेनैव संगृह्य पञ्चचूर्णं सबिल्वम्
शिरसा वाहयित्वा तु प्रदक्षिणमथाचरेत् ५०
विवस्वन्मण्टपस्याग्रे पुण्याहं वाचयेत्ततः
कैलासगिरिमभ्यर्च्य पूजयेद्वृषदैवतम् ५१
नक्षत्रं परितस्थाप्य पूर्ववत्पूजयेत्क्रमात्
पट्टिकां पाटलीं व्याघ्रीं रक्तागस्त्यञ्च धातकीम् ५२
लक्ष्मीञ्चरक्तपद्मञ्च सप्तमं कृत्तिकादिषु
वरुणाद्रोणपुष्पञ्च धुत्तूरं करवीरकम् ५३
प्रदोषं पृथिवीपद्मं भूपाटलमखादिषु
तुळसीजातिपुन्नागं श्वेतार्कं बिल्वपत्रकम् ५४
रुद्रपर्णीति पत्रञ्च अनूराधादिषट्सु च
श्रियावर्तञ्च मन्दारं कर्तार्कञ्चतुरंगुलम् ५५
विष्णुक्रान्तिं सभां भद्रीं श्रविष्ठादि च सप्तसु
मुद्गान्नं कृत्तिकादौ स्यात् कृसरान्नं मखादिषु ५६
पायसान्नं प्रदातव्यमनूराधादिषट्सु च
गुळान्नन्तु श्रविष्ठान्तं शुद्धान्तं त्वीश्वरस्य तु ५७
भक्त्यासर्वोपचारेण पूजयेत्तु यथा विधि
यं यं कामयते मर्त्यस्सर्वमाप्नोति नित्यशः ५८

अाचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
भक्तानां परिचाराणां यथा शक्त्या च दक्षिणाम्  ५९
दीनान्धकृपणानाञ्च अन्नपानादिकं ददेत्
सन्ध्यान्तरे परे वाथ पुष्पाञ्जलिकरो गुरुः  ६०
मूलेन शिवमादाय योजयेच्छिवमात्मनि
पञ्चचूर्णं समादाय शुद्धपात्रे गृहेद्गुरुः  ६१
तच्चूर्णं यजमानाय दापयेत्तु विशेषतः
पञ्चचूर्णं समादाय चन्दनेनैव संयुतम्  ६२
भस्मनैव तु संयोज्य सततं धारयेन्नरः
सर्वपापविनिर्मुक्तस्सर्वत्र विजयि भवेत्  ६३
इति नक्षत्रपूजाविधिपटलनवोत्तरशततमः

मासपूजाविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण मासपूजा विधिक्रमम्
पुष्यमासादि संयुक्तं मार्गशीर्षकमन्तकम्  १
पुष्यमासे तु पुष्यान्तं माघमासे मखान्तकम्
उत्तरान्तन्तु फल्गुन्याञ्चित्रकञ्चैत्रमासके  २
विशाखान्तं हि वैशाखे ज्येष्ठके मूलभान्तकम्
अाषाढोत्तराषाढान्तं श्रावणे वैष्णवान्तकम्  ३
पूर्वाषाढं हि तन्मासे चाश्वयुङ्मासिचाश्वनी
कृत्तिकान्तं हि कार्तिक्यां अार्द्रान्तं मार्गशीर्षके  ४
अार्द्रान्तं सर्वमासे वा कर्तुर्जन्मदिनेऽपि वा
एकमासे द्वित्रिऋक्षे तु अन्त्यर्क्षे व्रतमाचरेत्  ५
चन्दनादिषु गन्धेषु पुष्यमासे हि पूजयेत्
घृतकं बळमाघस्य फल्गुन्यां पुष्पपूजनम्  ६
सुमानि चैत्रमासस्य वैशाखस्यात्र पूजनम्

ज्येष्ठमासे तु पूजायां परिपक्वफलानि च ७
आषाढे तु पवित्रं स्याच्छ्रावणे तिलपूजनम्
पूर्वाषाढे तिलासञ्च आश्वमासे घृतानि वै ८
कृत्तिकामासिदीपञ्च मार्गशीर्षे तु कुंकुमम्
पुष्पमालादि सर्वाणि पूजयेत्तु विशेषतः ९
सर्वपापहरञ्चैव सर्वशान्तिकरं शुभम्
सर्वशत्रुक्षयकरं सर्वयज्ञफलप्रदम् १०
सर्वव्याधिप्रशमनं सर्वधी कीर्तिवर्द्धनम्
आयुः श्रीः कीर्तिविजयं मासपूजा फलं त्विदम् ११
इति मासपूजाविधिपटलदशोत्तरशततमः

मासपूजाद्रव्यविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण सर्वशान्तिकरं शुभम्
श्रीकरं विजयं प्रोक्तं विशेषाच्छत्रुनाशनम् १
मण्टपञ्च ततः कुर्यात् भुवनस्य चतुर्दशि
अथवा त्वीशदिग्भागे मण्टपञ्चतुरश्रकम् २
षड्ढस्तं पञ्चहस्तं वा सप्तहस्तमथापि वा
उपवेदि समायुक्ता दर्पणोदरसन्निभा ३
तत्पूर्वञ्चतुरश्रं वा वृत्तं वा हस्तमानकम्
विस्तारं समखातं वा मद्ध्यमन्यंशमेव वा ४
मेखला सहितेनैव खातमानं विधीयते
कर्णमेकांगुलं ख्यातं परित्यज्य तु मेखलाम् ५
ऊर्द्ध्वे वेदांगुला यो धः त्र्यंगुला द्व्यगुलामताः
योन्यष्टनाभियुक्तं स्यान्मानं पूर्ववदाचरेत् ६
ब्रह्मस्थानं प्रणीता च मद्ध्यमे खलयासमम्
षडंगुलन्तु विस्तारमग्रञ्चैवाग्रयोनिकम् ७

घृतवैष्णवपीठं स्यादन्तरन्तु द्वयांगुलम्
यावत्तु मेखलात्मानं योनिनाळन्तु भूगतम् ८
त्र्यंगुलन्तु प्रविस्तारं वृत्तं वा चतुरश्रकम्
गजहस्तसमाकारं सर्पाकारमथापि वा ९
एवं संपाद्य कुण्डञ्च कुण्डस्याग्नौ तु चुल्लिका
भुजद्वयसमायुक्तं पूर्भे शिरसिसंयुता १०
पश्चिमाभिमुखीकार्या चैकैकं पर्वतांगुलम्
अग्रे त्वंगुलविस्तारा चुल्लिरत्रापि चित्रता ११
कुंभैकस्याग्रके वेदी मद्ध्ये व्याधि विनाशनम्
हस्तमात्र प्रविस्तारमुत्सेधन्तु तदर्द्धकम् १२
उपवेदी समायुक्तान्दर्पणोदरसन्निभाम्
ध्वजतोरणसंयुक्तन्दर्भमालाद्यलंकृतम् १३
एवं संपाद्य सर्वन्तु शुद्धिं कृत्वा विशेषतः
पुण्याहप्रोक्षणं कृत्वा पञ्चगव्येन संयुतम् १४
पूर्वेद्युरधिवासं वा सद्योधिवासनन्तु वा
मण्डलं वेदिकोद्ध्र्वे तु वसन्तादी च षड़ृतु १५
वसन्ते स्वस्तिकाब्जञ्च ग्रीष्मे तु सर्वभद्रकम्
प्रावृट् च भद्रमाख्यातं लिंगाब्जं स्वस्तिकन्तथा १६
शरद्येव तु हेमन्ते पार्वतीकान्तमण्डलम्
पद्मस्वस्तिकमाख्यातं शिशिरे तु विशेषतः १७
मेषादिमीनपर्यन्तमेकाहे सतिपूजने
पूजाम्मासदिने कुर्यात् पूर्वरात्रे समाचरेत् १८
षण्मण्डलं समासाद्य व्याण्यप्यधिवासयेत्
अन्नं पुष्पं फलञ्चैव लाजापूपसमन्वितम् १९
गन्धं सद्योधिवासञ्च अन्येषां पूर्वरात्रके
सद्योधिवासनञ्चेत्तु चरूं यागं विनाचरेत् २०

कुंभेसाग्रेधिवासः स्यात् पूजामासादिषु क्रमात्
स्थापनं यजनञ्चैव योजनञ्च क्रमेण तु २१
एकाग्नौ होमयेत्सर्वञ्चरुमेकसमन्वितम्
दर्भास्तरणमेकन्तु विष्टरं परिधी ततः २२
ब्रह्माणञ्च प्रणीतां च मण्टपस्यार्चनन्ततः
अधिवासहुतञ्चैकमुपहोमन्तथैव च २३
प्रायश्चित्ता हुतिञ्चैकं कुंभे स्तोरणन्ततः
पूजाहोमञ्च संपातद्रव्यं प्रतिविशेषतः २४
आरभ्योदयराशे तु उदयान्तं समाचरेत्
संपूज्य देवदेवेशं ज्ञापयेत्तु विशेषतः २५
अहं यद्यपिदेवेश दुर्बलो ह्यल्पसाधनः
भक्त्या करोमि पूजान्ते ततो नुज्ञातु मर्हसि २६
इति विज्ञाप्यदेवेशं प्रविशेन्मण्टपे ततः
मण्टपं विधिनाराद्ध्य पञ्चद्रव्याधिवासनम् २७
मण्डलेऽभ्यर्चनं कृत्वा होमं विज्ञाप्य देशिकम्
कुण्डसंस्कारपूर्वन्तु पञ्चसंस्कारमाचरेत् २८
पञ्चधाग्निं विभज्याथ चरुपाकं समाचरेत्
पश्चाद्धोमं प्रकर्तव्यं शिवावाहनपूर्वकम् २९
पलाशसमिदाज्यान्नलाजैश्चैव तिलैः क्रमात्
अष्टोत्तरशतं वार्द्धं सद्यादि ब्रह्मपञ्चकैः ३०
मूले नाद्यन्तु पञ्चाशत् संपातं सम्यगाचरेत्
उपहोमन्ततः कृत्वा स्वाहान्तं मूलमुच्चरन् ३१
एवञ्जागरणं रात्रौ प्रभाते स्नानमाचरेत्
मण्टपं पूर्ववत्पूज्य वर्द्धनी भ्रमणं विना ३२
तोरणद्वारपालानां कला स्यादधिदेवता
तत्तन्मन्त्रेण संग्राह्य कुंभेशे विनिवेशयेत् ३३

आसनं मूर्तिमूलेन पूजयेत्पावकन्ततः
होमान्ते पूजनं वाथ पूजान्ते वा समाचरेत्  ३४
पूजाहोमं प्रकर्तव्यं मूलेनाज्यन्तु होमयेत्
ओदनञ्चास्त्रमन्त्रेण हुनेदष्टशतं क्रमात्  ३५
तदर्द्धं मद्धयमं प्रोक्तन्तदर्द्धमधमं भवेत्
पूर्णाहुतिः प्रकर्तव्या पूजा होममिति स्मृतम्  ३६
पश्चाद्धोमं प्रकर्तव्यं प्रायश्चित्तादि दीक्षितः
सर्वद्रव्य समायुक्तं हव्यवाहनहोमयेत्  ३७
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
कूश्माण्डादादिभिर्हुत्वा व्याहृतिञ्च विशेषतः  ३८
अस्त्रेणैव तु मन्त्रेण हुनेदष्टशतं क्रमात्
पूर्णाहुतिः प्रकर्तव्या सर्वकर्मप्रपूरणी  ३९
एवं समाप्यहोमञ्च दर्भभस्मान्तमाचरेत्
प्रातस्सन्ध्यार्चनादेव तत्पूर्वे वा समाचरेत्  ४०
नित्यन्नैमितिकं काम्यन्तन्त्रेणैव समाचरेत्
द्वारपूजान्ततः कृत्वा लिंगशुद्धिं समाचरेत्  ४१
गव्यैर्गन्धोदकैः स्नाप्य पश्चात्पञ्चामृतेन च
अष्टोत्तरशतैः स्नाप्य यजेदावरणं प्रति  ४२
शंखद्धवनि समायुक्तं स्तस्तिसूक्तसमन्वितम्
द्रव्यानुद्धृत्य शिरसा कुंभेशेन सहैव च  ४३
धामप्रदक्षिणं कृत्वा प्रविशेत् गर्भगेहके
गन्धपुष्पादिनाभ्यर्च्य प्रोक्षयेत्तु घटोदकैः  ४४
पश्चात् द्रव्येण संयोज्य मूलमन्त्रमनुस्मरन्
मूर्द्धादिपिण्डिकान्तं वा स्थलान्तं वा समाचरेत्  ४५
नववस्त्रेण संवेष्ट्य लिंगपीठं क्रमेण तु
वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः  ४६

पायसान्नं हरिद्रान्नं कृसरान्नं गुळान्नकम्
मुत्गान्नन्दापयेदीशवक्त्राद्ये पञ्चवक्त्रके ४७
तराडुलात्त्रिंशतिर्भागं रजनी चूर्णसंयुतम्
जीरकादिसमोपेतं किञ्चिल्लवणसंयुतम् ४८
हरिद्रान्नमिति प्रोक्तमन्येषां पूर्ववत् बुधः
अथवा शुद्धोदनं स्यात्तु व्यञ्जनेन समन्वितम् ४९
नारंगं लवणोपेतं श्रिंगिबेरसमायुतम्
सर्षपञ्चैव संमिश्रं लवणं त्रिफलैर्युतम् ५०
दधिमत् घृतसंयुक्तमपूपादि समन्वितम्
दापयेद्देवदेवाय उमादेव्यै च दापयेत् ५१
सकळानान्तु सर्वेषां यथा वित्तानुसारतः
पानीयाचमनन्दत्वा तांबूलं दापयेत्ततः ५२
नित्याग्नियजनं कुर्यात् बलिभ्रमणमाचरेत्
प्रविशेत् गर्भगेहन्तु धूपदीपादिभिश्शिवम् ५३
आरात्रिकेण सन्तोष्य दर्प्पणच्छत्रचामरैः
तालवृन्तेन संयुक्तं वेदादीन् दापयेत्ततः ५४
गीतवाद्यसमायुक्तं नृत्तान्तं सम्यगाचरेत्
एवं कृत्वा विशेषेण प्रतिमासं समाचरेत् ५५
श्रीकरं पुरायवृद्धिञ्च आयुरारोग्य वर्द्धनम् ५६

इति मासपूजाद्रव्यविधिपटल एकादशोत्तरशततमः

कृत्तिकादीपनक्षत्रनिर्णयपटलप्रारंभः

अथातस्संप्रवक्ष्यामि कृत्तिका दीपमृक्षकम्
तिथिनक्षत्रभेदांश्च विस्तरेण वदाम्यहम् १
कृत्तिकारोहिणीमिश्रा तद्रात्रौ पूर्णिमायुता
राजराष्ट्रसुभिक्षं स्यात् तत्काले दीपमुत्तमम् २

द्विवारे खण्डितं पर्वं पूर्वं त्यक्त्वा परं ग्रहेत्
अर्द्धास्तमनवेळायां दीपोत्सवं समाचरेत्  ३
पर्वं नोचेत्तु सन्ध्यायां पूर्वेद्युर्दीपमाचरेत्
उत्तमं कृत्तिकायुक्तं मद्ध्यमं रोहिणीयुतम्  ४
अथवा भरणी युक्तं दीपं पर्वणिकारयेत्
केवलं पौर्णमास्यान्तु कृत्तिकोत्सवमाचरेत्  ५
भरणी कृत्तिकामिश्रा तद्दिने च चतुर्दशी
अल्पवृष्टिश्च रोगाश्च राष्ट्रक्षोभो न संशयः  ६
भरणी कृत्तिका मिश्रे तद्दिने तु चतुर्दशी
कृत्तिकोत्सवमेवन्तु तदन्ये वा समाचरेत्  ७
भरणीकृत्तिकामिश्रा तद्दिने च चतुर्दशी
कृत्तिकारोहिणीमिश्रा तद्दिने तु चतुर्दशी  ८
संभवेत्तु चतुर्वक्त्रतदन्यवासरे चरेत्
तदन्यवासरे चैव कलया पौर्णमीयुता  ९
दीपोत्सवं तथा सर्वं शोभयेन्मम मन्दिरम्
रोहिण्यां वा भरण्यां वा कदाचिन्मृगशीर्षके  १०
पर्वसंबन्धसंन्ध्यायां दीपोत्सवमथाचरेत्
ऋक्षत्रययुते पर्वे राहुग्रस्ते चतुर्मुख  ११
तद्रात्रौ दीपकाले वा ग्रसेद्दीपं समाचरेत्
एवं विचार्यकर्तव्यं कृत्तिका दीपमाचरेत्  १२
इति कृत्तिकादीपनक्षत्रनिर्णयपटल एकादशोत्तरशततमः

कृत्तिकादीपलक्षणविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण कृत्तिकादीपलक्षणम्
आदित्ये गळिते चाग्नि नक्षत्रे च हरिद्रके  १
शिवाय शिवपूजान्तु कारयेत्तु विशेषतः

तद्दिनस्यात्र पूर्वे तु अंकुराणयर्प्पयेत्ततः २
तद्रक्षपूर्वरात्रे तु दीपञ्चैवाधिवासयेत्
चंपकं नाळिकेरं वा तालं वा खादिरन्तु वा ३
तिलकं वार्जुनं वापि दीपदण्डं विधीयते
प्रासादस्य समन्दीर्घमुक्षस्थलसमन्तु वा ४
ग्रीवान्तं वा कपोतान्तं महातालिस्तलन्तु वा
दीपस्तंभं परिग्राह्य सर्वलक्षणसंयुतम् ५
हर्म्याग्रे वृषपृष्ठं वा पीठबाह्ये तथाग्रके
मद्धयमा मद्धयहारायां स्थापये दीपलक्षणम् ६
पञ्चतालप्रमाणेन खानयेत्पृथिवीन्ततः
वेदांगुलाधिकन्तारदण्डविस्तारमुच्यते ७
दीपकीलानि दण्डे तु योजयेच्चक्रवत्क्रमात्
सहस्रदीपसंयुक्तन्तस्यार्द्धं युक्तमेव वा ८
शतदीपायुतं वापि दण्डमूलाधवाग्रतः
स्थापयेद्दीपदण्डन्तु तन्मूले वेदिकां कुरु ९
त्रिकरञ्चोत्तमं विद्धि मद्धयमं द्विकरं भवेत्
अधमञ्चैकहस्तं वा विस्तारं संप्रकीर्तितम् १०
हस्तमात्रसमुत्सेधं कन्नयसञ्च विधीयते
षडंगुलस्य वृद्धया तु मद्धयमस्योत्तमस्य तु ११
मूलचक्रक्रमारभ्य यावच्चक्रान्तकं यथा
पूर्वोक्तदीपसंयुक्तं तथा दीपन्तु दण्डकम् १२
घटिकां बन्धयेद्यत्र वृत्तावृत्तं यथा तथा
पूर्वे वा दक्षिणे वापि यन्त्रद्वारं प्रकल्पयेत् १३
एकहस्तं द्विहस्तं वा कल्पयेत् द्वारमत्र तु
वेदकीलन्तु दण्डाग्रे न्यस्त्वा हस्तप्रमाणतः १४
दीपदण्डस्य परितः कोणेषु च चतुर्ष्वपि

पञ्चहस्तप्रमाणेन कटं वापि प्रकल्पयेत्  १५
गोमयालेपनं कृत्वा पञ्चचूर्णैरलंकृतम्
तरंगं पटमावेष्ट्य दर्भमालासमावृतम्  १६
युगतोरणसंयुक्तं मण्टपं प्रतिमण्टपम्
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत्  १७
शिवाग्रे स्थण्डिलं कृत्वा निर्दोषैस्सिकतैस्सितैः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्  १८
पलाशसमिधश्चैव सद्यमन्त्रेण होमयेत्
आज्यं मूलेन हुत्वाथ चरुञ्चांगेन होमयेत्  १९
कार्पासबीजं शिखया क्षीरन्तु शिखया हुनेत्
अग्नेस्तु बीजमन्त्रेण घृतेन जुहुयाच्छतम्  २०
दीपस्थालीन्नवादाय प्रस्थाज्येन प्रपूरितान्
कनिष्ठाङ्गुलिपरीणाहवर्तिभिश्च समायुता  २१
कपिलाघृतेन दीपन्तु तद्वह्नौ रोपयेद्धृदा
मण्टलस्यैशदिग्भागे स्थण्डिलं शालिभिः कुरु  २२
तस्योर्ध्वे नळिनं लिख्य साष्टपत्रं सकर्णिकम्
दर्भैः पुष्पैः परिस्तीर्य प्रोक्षयेत्पुरुषेण तु  २३
तन्मद्ध्ये नवदीपानि मद्ध्यादीशान्तकं ततः
संस्थाप्य गंधपुष्पाद्यैर्नवशक्तीस्सुपूजयेत्  २४
ततो जयादिहुत्वाथ होमशेषं समापयेत्
कौतुकं बन्धयेद्दण्डे पूजयेद्धृदयेन तु  २५
मद्ध्यदीपे समारोप्य दीपन्तु तरुणाख्यकम्
दीपदण्डञ्च संपूज्य गंधपुष्पादिभिर्युतम्  २६
तस्योर्ध्वे तु न्यसेद्दीपं तरुणाख्यं विशेषतः
अपरे दिवसे धीमान् दीपारोहणमारभेत्  २७
पात्रन्तु कारयेद्धीमान् शातकुंभमयेन वा

रौप्येन तावत्ताम्रेण मृण्मयेनैव बुद्धिमान्  २८
खारित्रयञ्च संग्राह्य गोघृतञ्चैलमेव वा
तदर्द्धं वा तदर्द्धं वा पात्रं संपूर्य देशिकः  २९
षट्सप्ताष्टपलाच्छिन्नवस्त्रैस्तु कन्यसादयः
कार्पासबीजसंयुक्तां पुत्तळास्यन्तु बन्धयेत्  ३०
आसमन्तात् घृतेनैव वत्ताळाख्यञ्च सेचयेत्
पात्रं निक्षिप्यदंडाग्रे विन्यसेत्कलमद्धयमे  ३१
दीपकीलानि दण्डे तु घृतेनैव तु सेचयेत्
दंडमूले तथा कुर्यात् यावत्सम्मार्जलेपनम्  ३२
वेष्टयेत्वस्त्रयुग्मेन दंडमूले विशेषतः
चतुष्कोणेषु कुंडेषु होमं कुर्याच्छिवद्विजः  ३३
कुण्डे वा स्थण्डिले वापि कारयेत्तु प्रमाणतः
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु  ३४
ब्रंहाविष्णुश्च रुद्रश्च ईश्वरश्च क्रमेण तु
होमाधिदेवताः प्रोक्ताः दीपदंडे सदाशिवः  ३५
पलाशवटशम्यर्कसमिधः पावकादिषु
पूर्वोक्तैश्चैव मन्त्रैश्च द्रव्यैश्चैव पृथक्पृथक्  ३६
होमयेत्तु विशेषेण स्विष्टान्तं देशिकोत्तमः
आदित्यास्तमने चैव दीपारोहणमारभेत्  ३७
सर्वालंकारसंयुक्तं सर्वातोद्य समायुतम्
नृत्तगेयसमायुक्तं पिञ्छिचामरसंयुतम्  ३८
वितानध्वजसंयुक्तं नानाभक्तजनैर्युतम्
प्रतिमान्तु नयेत्तत्र पूजयेद्देशिकोत्तमः  ३९
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
पूजयेन्मूर्तिधारांश्च भक्तांश्च परिचारकान्  ४०
विज्ञाप्य देवदेवानां दीपारोहणमुत्तमम्

शक्तिदीपानि सर्वाणि एकीतृत्य सुबंधयेत्  ४१
ग्रहस्थो ब्रंहचारी वा तद्दीपं गृह्य पाणिना
दंडन्तु शीघ्रमारुह्य अग्रे तूत्तरदिङ्मुखः  ४२
पुत्तळे रोपयेद्दीपं दीपकीलेषु रोपयेत्
अग्रादिमूलपर्यन्तं ज्वालामाला विभूषितम्  ४३
पालिकेषु कपोतेषु महानासितलं कुरु
प्रासादमूर्ध्निपर्यन्तं दीपं सर्वत्र रोपयेत्  ४४
अलाभे दीपदंडस्य स्थूप्यग्रे तु विनिक्षिपेत्
गोपुरे चैव हर्म्याग्रे वृषाग्रे चैव दीपयेत्  ४५
वृषालाभे तु हर्म्याग्रे दीपकूटन्तु कारयेत्
तदग्रे रोपयेद्दीपमलाभे देशिकोत्तमः  ४६
प्रदक्षिणत्रयं कृत्वा प्रविशेदालयं प्रति
परिवेषक्रमं कुर्यात्प्रविश्यास्थानमंटपम्  ४७
स्नपनं कारयेच्छंभोः प्रभूतहविषन्ददेत्
उत्सवं कारयेत्तत्र यथा वित्तानुसारतः  ४८
दीपदण्डयुतञ्चेत्तु एवमेवसमाचरेत्
हर्म्याग्रे वा वृषाग्रे वा कूटाग्रे रोहणन्तु चेत्  ४९
तानि कार्याणि सर्वाणि कुर्याच्चैवाधिवासिनाम्
एवं कृतं महापुण्यं सर्वसस्य विवर्द्धनम्  ५०
राष्ट्रग्रामनृपाणाञ्च वर्द्धनं रोगनाशनम्
सर्वदेवप्रियात्र्थं स्यात् प्रियं पाताळवासिनाम्  ५१

अथ वक्ष्ये विशेषेण कृत्तिकादीपलक्षणम्
संकल्प्य कृत्तिकादीपं तिथ्यर्क्षवारसंयुतम्  १
कृत्तिकापर्वमाकल्प्य वह्निनक्षत्रमेव च
तस्मिन्पर्वणि तत्रैव कृत्तिकर्क्षयुतं यदि  २

उत्तमं त्वितिविख्यातं तस्मिन्पर्वणि रोहिणी
मद्ध्यमं त्वितिविख्यातं भरणी सहितन्तु वा ३
अधमं त्वितिविख्यातं तत्पर्वं मृगशीर्षयुक्
कन्यसं त्विति विख्यातं निश्चित्यैवं प्रकल्पयेत् ४
आदित्ये गळिते चाग्नि नक्षत्रे तु हरिद्रके
रात्रौ दीपं प्रयोक्तव्यं वारापेक्षं न चेष्यति ५
सद्वारं वापि दुर्वारं ऋक्षयुक्तमयुक्तकम्
पर्वं प्रधानमित्युक्तमादित्ये दृश्यमानके ६
सायाह्ने रोपयेद्दीपं शिवप्रीतिप्रदायकम्
शिवाय दीपपूजान्तु कारयेत्तु विशेषतः ७
तद्दिनस्य तु पूर्वे वा नवमे सप्तमेऽपि वा
पञ्चमं वात्र्यहं वापि सद्योंकुरमथाचरेत् ८
तद्दक्षपूर्वरात्रे च दीपमेवाधिवासयेत्
मण्टपस्यैशदिग्भागे पूर्वे वा चोत्तरेऽपि वा ९
गोमयालेपनं कृत्वा दर्भमालैरलंकृतम्
पिष्टचूर्णैरलंकृत्य प्रोक्षयेत्तु शिवांभसा १०
तन्मद्ध्ये स्थंडिलं कृत्वाप्यष्टद्रोणैश्च शालिभिः
तंडुलैस्तिललाजैश्च दर्भैः पुष्पैः परिस्तरेत् ११
आधारं पूजयेत्तत्र पञ्चपात्राणि विन्यसेत्
अव्यक्ताख्यं सुशान्तञ्च तेजोरूपं कलामयम् १२
अमृतोदकपात्रं स्यादेवं पूजाविधीयते
गोघृतेन तु तत्पूर्य विन्यसेत्तन्तु वर्तितम् १३
पुण्याहं वाचयेत्तत्र ततो होमं समाचरेत्
नवाग्निं वाथ पञ्चाग्निमेकाग्निं वा प्रकल्प्य च १४
अग्न्याधानादिकं सर्वमग्निकार्योक्तवत्कुरु
इन्धनाज्यचरून्लाजान्वेणुशालियवन्तिलम् १५

सक्तुसर्षपमुद्गञ्च पञ्चब्रह्मषडंगकैः
क्रमात् द्रव्याणि जुहुयादष्टोत्तरशतं बुधः १६
तदग्नौ रोपयेद्दीपं मद्ध्यमादि यथाक्रमम्
पूर्वादि चोत्तरान्तन्तु दीपमारोपयेद्बुधः १७
सर्वदीपांस्तु तत्रैव प्रधानाभिमुखान्न्यसेत्
तत्प्रधानन्तु तन्मन्त्रैरीशानाभिमुखान्न्यसेत् १८
पूजयेत्तु यथान्यायं पञ्चब्रंहाङ्गदैवतम्
गंधपुष्पैस्समभ्यर्च्य धूपदीपं प्रदापयेत् १९
------- बद्ध्वाप्युमया सहितं शिवम्
एकरात्रे तु कर्तव्यं नित्यपूजावसानके २०
पञ्चब्रंहात्मकैर्मन्त्रैर्दीपञ्चैवाधिवासयेत्
एकरात्रौ प्रकर्तव्यं दीपारोहणमारभेत् २१
स्नानं कृत्वा यथा न्यायं देशिको होतृभिस्सह
शिवपूजां प्रकल्प्याथ हव्यादीन् द्विगुणं ददेत् २२
गंधपुष्पैस्समभ्यर्च्य देवेशं प्रार्त्थयेद्गुरुः
चंपकन्नाळिकेरं वा तालं वा खदिरन्तु वा २३
तिलकञ्चार्जुनं वापि नन्दनं वेणुकन्तथा
तिंत्रिणीकिंशुकञ्चैव मधूकं क्रमुकन्तथा २४
देवदारुद्रुमञ्चैव दपदराडं विधीयते
ध्वजदराडोक्तवत्कुर्यात्सर्वलक्षणसंयुतम् २५
प्रासादस्याग्रतः स्थाने वृषस्य पुरतोऽपि वा
उक्षस्यापरभागे वा पीठाग्रे वा वृषाग्रके २६
गोपुराग्रेऽथ पृष्ठे वा महामर्यादि मद्धमे
दराडस्थानं प्रकर्तव्यं सर्वलक्षणसंयुतम् २७
प्रासादस्य समन्दीर्घं उक्षस्थलसमन्तु वा
प्रस्तरान्तं नासिकान्तं कूटान्तं वा गळान्तकम् २८

महानासिकपोतान्तं शालान्तं गोपुरान्तकम्
दंडमानमिति ख्यातं हस्तमानमथोच्यते २९
दण्डहस्तं समारभ्य चैकहस्तविवर्द्धनात्
यावत्त्रयोदशान्तं स्यात्तस्योत्सेधमिहोच्यते ३०
अवक्रं निर्व्रणं स्निग्धं कृमिकोटरवर्जितम्
निर्दुष्टसारसंयुक्तं बहुपुष्पविहीनकम् ३१
अबालं पर्वहीनञ्च तरुसंग्राहयेद्बुधः
वक्रे तु कलहं विद्धि व्रणयुक्तं गवांक्षयम् ३२
अलक्ष्ये च प्रजानाशं कृमिदष्टन्तु संकटम्
कोटरे सस्यनाशं स्यात् दोषयुक्ते कुलक्षयम् ३३
सारहीने महाव्याधिः स्त्रीनाशं बहुपुष्पयुक्
तरुणं रिपुवृद्धिस्स्यात्पर्वयुक्तं नृपक्षयम् ३४
त्वक्सारमन्तस्सारं वा संग्रहेल्लक्षणान्वितम्
त्वक्सारं मद्ध्यमं प्रोक्तमन्तस्सारन्तु चोत्तमम् ३५
द्वात्रिंशदंगुलन्नाहं कन्यसं त्विति कीर्तितम्
मद्ध्यमस्य तु नाहं स्यादष्टाविंशतिकांगुलम् ३६
चतुश्चत्वारिकांगुल्यमुत्तमन्नाहमुच्यते
दीपस्तंभं परिग्राह्य सर्वलक्षणसंयुतम् ३७
वेदांगुला -- कन्दण्डविस्तारमुच्यते
दीपकीलानि दण्डे तु योजयेच्चक्रवत्क्रमात् ३८
सहस्रदीपसंयुक्तं तस्यार्द्धेन युतन्तु वा
शतदीपयुतं वापि दण्डमूले तथाग्रतः ३९
स्थापितस्यैव दण्डस्य तन्मूले वेदिकां कुरु
त्रिकरञ्चोत्तमं विद्धि मद्ध्यमं द्विकरं भवेत् ४०
अधमञ्चैकहस्तं स्याद्विस्तारं संप्रकीर्तितम्
हस्तमात्रसमुत्सेधं कन्यसस्य विधीयते ४१

षडंगुलविवृद्ध्या तु मद्ध्यमस्योत्तमस्य तु
मूलचक्रं समाश्रित्य यावच्चक्रान्तकं यथा ४२
पूर्वोक्तदीपसंयुक्तं कर्तव्यं युक्तमेव वा
घटिभिर्बन्धयेत्तत्र वृत्तं वृत्तं यथा तथा ४३
पूर्वे वा दक्षिणे वापि यन्त्रद्वारं प्रकल्पयेत्
एकहस्तं द्विहस्तं वा कल्पयेत् द्वारमराटपे ४४
वेदकीलन्तु दराढाग्रे न्यस्त्वा हस्तप्रमाणतः
दीपदराडस्य परितः कोरोषु च चतुर्ष्वपि ४५
पञ्चहस्तप्रमाणेन कूटं वापि प्रपां कुरु
गोमयालेपनं कृत्वा पञ्चचूर्णैरलंकृतम् ४६
तरंगपट्टमावेष्ट्य दर्भमाला प्रलंबितम्
युगतोरणसंयुक्तं पुष्पस्त्रग्भिरलंकृतम् ४७
पूर्णकुंभसमायुक्तं मुक्तादामविभूषितम्
मंगळांकुरसंयुक्तमष्टदिक् ध्वजशोभितम् ४८
प्रच्छन्नपटसंयुक्तं मंटपं प्रतिमंटपम्
उद्वास्य शिल्पिनं पश्चात् गोमयेनोपलेपयेत् ४९
पुरायाहं वाचयेत्तत्र प्रोक्षयेत्तु शिवांभसा
गव्येन प्रोक्षयेद्धीमान् बाह्यमाभ्यन्तरं ततः ५०
शिवाग्रे स्थरिडलं कृत्वा निर्दोषैस्सिकतैस्सितैः
हस्तमात्रप्रविस्तारं षडंगुलसमुच्छ्रितम् ५१
तत्र स्थाप्य विधानेन शिवाग्निं जनयेत्ततः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ५२
समिदाज्य चरूं लाजान् सर्षपञ्च यवन्तिलम्
मुद्गं माषञ्च नीवारं गोधूमं वैणवन्तथा ५३
होमद्रव्याणि सर्वाणि जुहुयात्तु पृथक्पृथक्
समिधं सद्यमंत्रेण घृतं मूलेन होमयेत् ५४

चरुञ्च हृदयेनैव लाजं वामेन होमयेत्
सर्षपं घोरमन्त्रेण यवन्नेत्रेण होमयेत् ५५
तिलमीशानमन्त्रेण मुद्गन्तु शिरसा हुनेत्
माषन्तु शिखया हुत्वा नीवारं कवचेन तु ५६
गोधूमञ्चास्त्रमंत्रेण मूलेन वैणवं हुनेत्
उक्तानुक्तन्तु यत्किञ्चित् तत्सर्वं मूलमन्त्रतः ५७
पलाशसमिधं सद्यमंत्रेणैव तु होमयेत्
कार्पासबीजं शिखया क्षीरन्तु शिरसा हुनेत् ५१
मधूनि शस्त्रमंत्रेण दधीनि पुरुषेण तु
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत् ५२
अग्नेस्तु बीजमंत्रेण घृतेन जुहुयाच्छतम्
दीपस्थालीन्तदादाय प्रस्थेनाज्येन पूरितान् ५३

कनिष्ठांगुलिसन्नाह वर्त्तिभिश्च समायुतान्
कपिलाघृतेन दीपांश्च तद्वह्नौ रोपयेद्धृदा ६१
मण्टपस्येशदिग्भागे स्थण्डिलं शालिभिः कुरु
तस्योद्ध्र्वे नळिनं लिख्य साष्टपत्रं सकर्णिकम् ६२
दर्भैः पुष्पैः परिस्तीर्य प्रोक्षयेत्पुरुषेण तु
तन्मद्ध्ये रंध्रदीपानि मद्ध्यादीशानमंत्रकैः ६३
संस्थाप्य गन्धपुष्पाद्यैर्न्नवशक्तिं प्रपूजयेत्
ततो जयादिनाहुत्वा होमशेषं समाचरेत् ६४
कौतुकं बन्धयेद्दण्डे पूजयेद्धृदयेन तु
मद्ध्यदीपैस्समारोप्य तद्दीपन्तरुणाख्यकम् ६५
दीपदण्डन्तु संपूज्य गन्धपुष्पादिभिर्हृदा
तस्योद्ध्र्वे विन्यसेद्दीपं तरुणाख्यं विशेषतः ६६
अपरे दिवसे धीमान् दीपारोहणमारभेत्

पात्रन्तु कारयेद्धीमान् शातकुंभमयेन तु ६७
रौप्येण वाथ ताम्रेण मृणमये नैवबुद्धिमान्
खारित्रयन्तु संग्राह्य तैलैर्वा गोघृतेन वा ६८
तस्यार्द्धं वा तदर्द्धं वा पात्रमापूर्यदेशिकम्
षट्सप्ताष्टनवाछिन्न वस्त्रात्तु कन्यसादयः ६९
कार्पासबीजसंयुक्तं पुत्तळ्याख्यन्तु बन्धयेत्
आसमन्तात् घृतेनैव पुत्तळ्याख्यन्तु सेचयेत् ७०
पात्रे निक्षिप्य दण्डाग्रे विन्यसेत्कीलमद्धयमे
दीपकालानि पिण्डन्तु घृतेनैव तु सेचयेत् ७१
दण्डमूलेऽथवा कुर्यात् सम्मार्जनोपलेपने
वेष्टयेद्युग्मवस्त्रेण दण्डमूले विशेषतः ७२
चतुष्कोणेषु कुण्डेषु होमं कुर्याद्विधानतः
कुण्डे वा स्थण्डिले वापि कारयेत्तु प्रमाणतः ७३
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु
ब्रह्माविष्णुश्च रुद्रश्च चेश्वरश्चक्रमेण तु ७४
होमाधिदेवताः प्रोक्ता दीपदण्डे सदाशिवम्
पलाशवटशम्यर्क्कास्समिधः पावकादिषु ७५
पूर्वोक्तद्रव्यैरेतैश्च मन्त्रैश्चैव पृथक्पृथक्
होमयेत्तु विशेषेण स्विष्टान्तं देशिकोत्तमः ७६
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
पूजयेन्मूर्तिपांश्चैव भक्तांश्च परिचारकान् ७७
विज्ञाप्य देवदेवाय दीपारोहणमुत्तमम्
आदित्यास्तमनेकाले दीपारोहणमारभेत् ७८
उक्तालंकारसंयुक्तं सर्वातोद्य समायुतम्
नृत्तगेय समायुक्तं वितानध्वजसंयुतम् ७९
नानादीपसमायुक्तं छत्रचामरसंयुतम्

नानाभक्तजनैर्युक्तं प्रतिमासंयुतन्नवा ८०
मद्ध्यदीपे महानासि पूर्वे पचनशालया
परिवाराश्च ये सर्वे दक्षिणन्दीपयोजनम् ८१
पश्चिमे संस्थिते दीपे प्राकारे गोपुरेषु च
उत्तरे संस्थिते दीपे तद्दण्डेषु च योजयेत् ८२
शक्तिबीजानि सर्वाणि चैकीकृत्य सुबन्धयेत्
ग्रहस्थो ब्रह्मचारी वा दीपं संग्राह्य पाणिना ८३
दण्डन्तु शीघ्रमारुह्य चोत्तराभिमुखस्थितम्
पुत्तळे रोपयेद्दीपं दीपकीलेषु रोपयेत् ८४
अग्रादिमूलपर्यन्तं ज्वालामाला विभूषितम्
द्ध्यायेत् ज्योतिस्वरूपन्तु लिंगं पौराणरूपकम् ८५
तत्काले त्वग्निकूटानि ददेत्सर्वाण्यशेषकम्
दीपारोहणकर्त्तारं वस्त्रयुग्मेन पूजयेत् ८६
प्रासादेऽपि हि सर्वत्र दीपमाला विभूषितम्
पालिकेषु कपोतेषु महानासि तलं प्रति ८७
प्रासादमूर्द्धिदेशे तु मण्टपे गोपुरे तथा
परिवारालये चैव बाह्ये चाभ्यन्तरेऽपि वा ८८
प्राकारे सर्वदेशे तु दीपं सर्वत्र रोपयेत्
अलाभे दीपदण्डस्य स्थूप्यग्रे तु विनिक्षिपेत् ८९
एवन्देशे तु हर्म्याग्रे वृषे पीठे च दीपयेत्
वृक्षालाभे तु हर्म्याग्रे दीपकूटन्तु कारयेत् ९०
तदग्रे रोपयेद्दीपमलाभे देशिकोत्तमः
प्रदक्षिणत्रयं कृत्वा दीपन्तु प्रतिमान्वितम् ९१
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
परिवेष्टन्ततः कुर्यात्प्रविश्या स्थानमण्टपम् ९२
स्नपनं कारयेच्छंभोः प्रभूतहविषन्ददेत्

भारादिनवभारान्तं नैवेद्ये पृथुकम्मतम्  ९३
पृथुकन्दापयेच्छंभोर्न्नाळिकेरफलैर्युतम्
मरीचिजीरकैर्युक्तलेमाशुण्ठिसमायुतम्  ९४
गुळखण्डसमायुक्तं नैवेद्यार्त्थं प्रकल्पितम्
अंकुरार्पणहीनं वा क्रियामेनां समाचरेत्  ९५
गुरवे दक्षिणान्दद्यात् होतृभ्यस्तदनन्तरम्
यागोपकरणं सर्वं हेमकूटादिकन्धनम्  ९६
तदंगमपरन्तेषान्देशिकाय प्रदापयेत्
उत्सवं कारयेत्तत्र यथा वित्तानुसारतः  ९७
दीपदण्डयुतञ्चेत्तु ह्येवमेवं समाचरेत्
हर्म्याग्रे वा वृषाग्रे वा कूटारोपणमारभेत्  ९८
विनाकार्याणि सर्वाणि कुर्याद्दीपाधिवासनम्
एवं कृते महापुण्यं सर्वसस्य विवर्द्धनम्  ९९
राष्ट्रग्राम    नृपाणाञ्च वर्द्धनं रोगनाशनम्
सर्वदेवप्रियार्त्थं स्यात् प्रियं पाताळवासिनाम्  १००
इति कृत्तिकादीपविधिपटलो द्वादशोत्तरशततमः

## धनुर्मासपूजा विधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि धनुर्मासार्च्चनं शुभम्
मकराद्यन्तु षाण्मासं देवानान्तु दिवा स्मृतः  १
कर्क्कटाद्यन्तु षाण्मासं देवरात्रिरिति स्मृतः
मासैकं पञ्चनाडी स्यात् षाण्मासञ्चैव ज्येष्ठके  २
आषाढं पञ्चनाडी स्यात् षाण्मासं मार्गशीर्षके
कोदण्डस्थे सवितरि प्रत्यूषे च शिवार्च्चनम्  ३
पञ्चविंशत्युषः कालमुत्तमन्तु विधीयते
सप्तविंशत्युषः कालमधमन्तु विधियते  ४

उषः पूजा प्रकर्तव्या धनुर्मासे विशेषतः
अर्द्धरात्रात् परे काले जलसंग्रहणं मतम्  ५
पुष्पसंग्रहणं विप्र पूर्वेद्युरह उच्यते
नीलोत्पलञ्च कमलन्तुळसीबिल्वपत्रकम्  ६
एकाहोषितपुष्पाणि नदोषन्तैस्सुपूजयेत्
यस्मिन्दिने प्रभाते च सायं मद्ध्यन्दिने रविः  ७
चापसंक्रमणं कुर्यात् तद्दिनाद्यैस्सुरार्च्चयेत्
रविसंक्रमणं रात्रावपरे संप्रपूजयेत्  ८
उषः काले धनुर्मासि स्वभक्त्याचार्च्चयेत् शिवम्
मुद्गान्नं घृतसंयुक्तं दधिशृंगीफलैर्युतम्  ९
सहस्रशाखासंयुक्तं दिने दिने विशेषतः
सहस्रवर्षकीपूजा दिनमेकेन लभ्यते  १०
पूजान्ते बलिदानं स्यात्पूर्वोक्तविधिमार्गतः
इति धनुर्मासपूजाविधिपटलत्रयोदशोत्तरशततमः

## आर्द्राव्रतविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि चार्द्राव्रतसुलक्षणम्
मार्गशीर्षकमासेऽस्मिन्नार्द्रायां व्रतमाचरेत्  १
आर्द्रायां पर्वसंयुक्तमयुक्तं वाथवा यदि
विशेषात् केवलाप्यार्द्रा चोत्तमेति प्रचक्षते  २
आर्द्रायामष्टनाडी स्यादन्यर्क्षे व्रतमाचरेत्
यद्यूनमष्टनाडीभिः पूर्वाह्ने व्रतमाचरेत्  ३
यदृक्षमष्टनाड्यूनं तत्कृत्यं निष्फलं भवेत्
नालाभो वाथ सप्ताहे पञ्चाहेंकुरमारभेत्  ४
मृगशीर्षकनक्षत्रे त्वधिवासनमारभेत्
सायाह्ने तु प्रकर्तव्यं सर्वालंकारसंयुतम्  ५

गौरीन्तु स्थापयेत्पश्चात् श्वेतवस्त्रेण वेष्टयेत्
सर्वैराभरणैर्भूष्य सर्वैः पुष्पैश्च पूजयेत् ६
मण्टपे शुद्धिसंयुक्ते स्थण्डिलं कारयेत्क्रमात्
तन्मद्ध्ये स्थापयेत् गौरीं कौतुकं बन्धनाय च ७
सकुण्डलस्मितः स्थित्वा तन्मद्ध्ये तन्तुसूत्रकम्
नवांबरधरश्शुद्धः परिधानोत्तरीयकः ८
परिचारक उद्धृत्य प्राकारे समलंकृते
प्रदक्षिणन्ततः कुर्यान्मंगलैस्स्वस्तिवाचकैः ९
धूपदीपौ हृदा दत्वा पुण्याहं वाचयेत्ततः
शंखदुन्दुभिनिर्घोषैस्तोत्रमंगलवाचकैः १०
वेदद्ध्वनिसमायुक्तं नृत्तगेय समन्वितम्
त्र्यंबकेन मन्त्रेण कौतुकं बन्धयेत्ततः ११
रक्षासूत्रन्तु विप्रेंद्रैराशिषो वाचयेत्ततः
नैवेद्यन्दापयेत्पश्चादपूपन्तु निवेदयेत् १२
धूपदीपौ हृदा दत्वा तांबूलन्तु निवेदयेत्
पश्चान्नटोत्सवं कुर्यात् पूर्वोक्तविधिनाधुना १३
पूर्ववत्कौतुकं कृत्वा देशिकस्तु विचक्षणः
अपरे दिवसे पश्चान्नित्यपूजां समाचरेत् १४
यमादूद्ध्र्वे शिखान्देवीमंगुलार्द्धं यथा क्रमम्
नववस्त्रैरलंकृत्य सर्वाभरणभूषितम् १५
सर्वैर्माल्यैस्समायुक्तं पूजयेत्परमेश्वरम्
शिवाग्रे स्थण्डिलं कृत्वा अष्टद्रोणेन शालिभिः १६
तदूद्ध्र्वे वस्त्रमावेष्टय तन्मद्ध्ये लवणं क्षिपेत्
तन्मद्ध्ये स्थापितां देवीन्नवशक्तीश्च पूजयेत् १७
गौरीन्दक्षिणभागे तु विघ्नेशं पूजयेत्ततः
वामपार्श्वे तथा दुर्गां पूजयेत्तु विशेषतः १८

अङ्कपाणिं तथा कुर्यादुमासंनिधिसंस्थितम्
पिष्टसूत्रैरलङ्कृत्य वेदिं सर्वत्र वेष्टयेत् १९
पात्रमग्रे तु संस्थाप्य प्रथतण्डुलपूरितम्
शकत् चूर्णसमायुक्तं रजनीं लवणं तथा २०
तिलसंगृह्य संयुज्यात्प्रत्येकं प्रस्थमानतः
एकपात्रे गृहीत्वा तु सदूर्वाक्षतसंयुतम् २१
गौरीं दक्षिणहस्ताब्जे पानीयं त्रिः प्रदक्षिणम्
प्रस्थतण्डुलपूर्णं तु दापयेद्देशिकोत्तमः २२
नवपात्रं गृहीत्वा तु पायसान्नं समृद्धिदम्
अपूपं कदलीपात्रे उमया संनिधौ क्षिपेत् २३
पुण्याहं वाचयित्वा तु चार्द्रायां व्रतमाचरेत्
उमासूक्तेन मन्त्रेण तत्काले ब्राह्मणो जपेत् २४
देवी करेण संगृह्य पानीयं दापयेद्गुरुः
सुमुहूर्ते सुलग्ने च देव्युत्सवमथाचरेत् २५
अश्मानं शिशुमागृह्य तण्डुलादर्शनात्परम्
सकृच्चूर्णं तु पादाय व्रीहीं वानभिदेशके २६
रजनीं हृदये भागे प्रवणं कण्ठदेशके
तिलं न्यस्य शिखायां च सर्वद्रव्यैः समक्रमात् २७
दूर्वाक्षतस्तु मूर्ध्नि स्यादर्चयेत्तु मनोन्मनीम्
नवशक्तेस्तु यत्पूज्यमपूपं पायसान्नकम् २८
तद्देवस्य निवेद्यं स्यात्सर्वसस्यफलप्रदम्
ताम्बूलं दापयेत्पश्चात् मुखवाससमन्वितम् २९
धूपदीपौ हृदा दत्वा नीराजनसमन्वितम्
दर्पणं दर्शयेत्तत्र चामरव्यजनं तथा ३०
ऋग्यजुस्सामवेदाश्च सर्पादिस्तोत्रसूत्रकम्
शुद्धनृत्तं समारभ्य गेयवाद्यैः समायुतम् ३१

गोदर्शनमथाचार्यकन्यामालोकयेत्तदा
आचार्यं पूजयेत्तत्र ब्राह्मणान्भोजयेत्ततः ३२
पायसान्नं तथा कृत्वा मङ्गलीनां तु दापयेत्
प्राकारे तु प्रदक्षिण्यामालये तु स्थितं भवेत् ३३
आर्द्रायां रुद्रनक्षत्रे महास्नापनमाचरेत्
मध्याह्ना परमं कुर्यात् नृत्तेशस्योत्सवं ततः ३४
महास्नपनमारभ्य अष्टोत्तरशतं हुनेत्
होमान्ते स्नपनं कुर्यात् नृत्तमूर्तिं सुपूजयेत् ३५
वस्त्रेण वेष्टयेत्कृत्वा सर्वाभरणभूषितम्
सर्वपुष्पैरलङ्कृत्य सर्वगन्धान्प्रदापयेत् ३६
महानैवेद्यसंयुक्तमापो वाचमनीयकम्
विशुद्धाशुद्धवर्धन्यैश्शुद्धेयु परिचारकाः ३७
शुभं षोडशभिर्देव्या सर्वेभ्यो देशिकोत्तमः
श्रावयेच्चतुरो वेदान् ससूत्रान्सपुराणकान् ३८
गेयवाद्यादिनृत्ताद्यैर्घोषयेद्देवशम्भुना
हस्तमावरतं कृत्वा ग्रामं याने प्रदक्षिणम् ३९
मङ्गल्यैः स्वस्तिवाचैश्च वाद्यघोषैः पृथग्विधैः
प्रदक्षिणं ततः कुर्यात्सभायाश्चामया स्थितम् ४०
सर्वसिद्धिं च नानां च सर्वरक्षां च सादयेत्
वस्त्रहेमाङ्गुलीयैश्च देशिकः संप्रपूजयेत् ४१
एवं संक्षेपतः प्रोक्तं आर्द्राव्रतविधिक्रमम्
कार्तिकप्रश्नकार्यार्थं शम्भुना वक्ष्यते क्रमात् ४२

इति कारणे प्रतिष्ठातन्त्रे आर्द्राव्रतविधिः पटलः

पवित्रारोहणविधिपटलप्रारंभः
पवित्रारोहणं वक्ष्ये भुक्तिमुक्तिप्रदं शुभम्

सर्वलोकहितं पुरयं सर्वसंपत्करं परम्  १
पूजासंकर्षणं चैव विश्वे कृत्रिमनाशनम्
निर्माल्यसंकरं यत्तत्पूजायां वत्सरे कृतम्  २
तद्दोषशमनार्थं तु पवित्रारोहणं कुरु
परमाणुसमं तूलं यावत्सूत्रे तु कल्पितम्  ३
तावद्वर्षसहस्राणि शिवलोके महीयते
आषाढादिचतुर्मासा शस्ता अन्यांस्तु वर्जयेत्  ४
कर्तव्यं पद्मयोः शुक्लकृष्णयोरुभयोरपि
चतुर्दश्यामथाष्टम्यामारोहे तु पवित्रकम्  ५
द्विजकन्याकृतं सूत्रमुत्तमं त्विति कीर्तितम्
मध्यमं नृपकन्यातः कन्यसं शूद्रया कृतम्  ६
सूत्रमूर्णमयं वाथ सूत्रं कार्पाससंभवम्
यथासंभवसूत्रं वा द्रव्यात्कृतमथापि वा  ७
समं श्लक्ष्णं दृढं दीप्तं निष्केशं तृणवर्जितम्
तत्सूत्रं त्रिगुणीकृत्य तेनैव त्रिगुणीकृतम्  ८
तत्सूत्रं चैव सूत्रं तु कुर्यात्तेन पवित्रकम्
प्रोक्षयेद्बीजमुख्येन शोधयेत्सूत्रमादरात्  ९
क्षालयेत्कवचेनैव कम्बलं वर्मणा कुरु
अष्टाविंशतिसूत्रात्तु दशवृद्ध्या शताष्टकम्  १०
पवित्रं नवधा प्रोक्तं अधमादित्रयं त्रयम्
तत्पवित्रेण तत्कार्यं ग्रन्थयस्तन्तुसंख्यया  ११
दृढं बद्ध्वा पवित्रं तु तेष्वन्तरसमस्मृताः
ग्रन्थिं कुर्यात्तथा वन्ये प्राकारेणैव देशिकः  १२
एकाङ्गुलप्रमाणेन अङ्गुलत्रयमथापि वा
अथ नास्यङ्गुलेनैव ग्रन्थिं कुर्यात्तु देशिकः  १३
ग्रन्थयः सक्तसंयुक्तं येन यत्नेन तन्तुना

ग्रन्थ्यग्रे वलये दात्रि सारोक्तेनैव तन्तुना १४
बन्धयेदन्तराले तु प्रतिग्रन्थि यथाक्रमम्
ग्रन्थीनामधिदेवस्य ब्रह्मा विष्णु महेश्वरः १५
यज्ञसूत्रं शिरोमाला बाहुमालाविशेषतः
मकुटं लम्बमानं च लिङ्गे वा कौतुकेऽपि वा १६
सपीठलिङ्गमानेन लम्बमालां तु कारयेत्
विष्कम्भद्विगुणाधिक्यं बाहुमाला च तत्समम् १७
लिङ्गनाभिप्रमाणेन शिरोमालां तु कारयेत्
एकं तु परिवाराणां प्रासादस्य त्रिसूत्रकम् १८
शतार्धं सूत्रितं सूत्रं नृपाणां परिकल्पयेत्
पञ्चविंशतिसूत्रैश्च कृतं तत्स्थापकाय च १९
परिचारकभक्तानां रन्ध्रसूत्रेण सूत्रितम्
एवमापाद्य गन्धाख्यपवित्राणि विशेषतः २०
तथा शुद्धपवित्राणि संगृह्येव पृथक्पृथक्
निर्दिष्टदिवसात्पूर्वरात्रौ कुर्वधिवासनम् २१
हर्म्याग्रे मण्टपं कुर्यात् दशहस्ताष्टहस्तकम्
विकारस्तम्भसंयुक्तं चतुर्द्वारसमायुतम् २२
तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागतः
विस्तारभ्य चतुर्भागं उत्सेधं तु विधीयते २३
वेद्या मूले तु परितश्चोपवेदिं प्रकल्पयेत्
युगाङ्गुलप्रविस्तारं तदर्धं चोच्छ्रयं भवेत् २४
चतुर्दिक्षु च कुण्डानि तुर्यश्रं पद्ममेव वा
वृत्तकुण्डं तथैशान्ये कारयेद्विधिपूर्वकम् २५
तोरणैश्च ध्वजैश्चैव दर्भमालाङ्कुरैस्तथा
मङ्गलाष्टकसंयुक्तं स्तम्भवेष्टनसंयुतम् २६
गोमयालेपनं कृत्वा शालिपिष्टेन चिन्तयेत्

प्रोक्षयेत्पञ्चगव्येन मराटपं कुशवारिणा २७
स्थरिडलं कारयेद्विद्वान्दशद्रोरौश्च शालिभिः
तराडुलैः समतलं कृत्य तिलदर्भैः सुपुष्पकैः २८
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
शिवकुम्भं न्यसेन्मध्ये अस्त्रेशमस्त्रवर्धनीम् २९
कुम्भाग्रे मराडलं चैव विधिवत्पूजयेद्गुरुः
गन्धादिकं समभ्यर्च्य पाद्यं वेद्युपरि न्यसेत् ३०
शातकुम्भमयं वाथ ताम्रं वा कांस्यमेव वा ३१
तन्मद्ध्ये विन्यसेत्सूत्रं नववस्त्रेण वेष्टयेत्
अभ्यर्च्य गंधपुष्पाद्यैर्हृदयेनैव देशिकः ३३
दर्शयेत्सुरभी मुद्रां नाळमुद्रां तथैव च
ईशाने तु पवित्रञ्च तैलामलकपूर्वके ३४
दराडाक्षमालाशय्यादि भिक्षापात्राणि दक्षिणे
शलाकां केशशोधञ्च कर्त्रिकां नखशोधनीम् ३५
उत्तरे विन्न्यसेद्धीमान् पश्चिमे तु विशेषतः
तांबूलं योगपट्टीञ्च चामरं गजमलिकाम् ३६
ईशानादीनि सद्यान्तं तत्तन्मन्त्रेण मन्त्रयेत्
पादुकान्दर्पणं वस्त्रं पञ्चमृत्पञ्चगव्यकैः ३७
छत्रं मृगा जनञ्चैव दन्तकाष्ठन्तथैव च
इंद्रादीशानपर्यन्तं वेद्यां क्रमेण विन्न्यसेत् ३८
नैर्ऋते त्वञ्जनन्न्यस्त्वा भस्म चैशानगोचरे
न्यसेद्दिक्पालबीजैश्च प्रत्येकं वस्त्रवेष्टितम् ३९
गंधपुष्पादिभिः पूज्य हृदयेनैव देशिकः
न्यस्त्वा शुद्धाख्यमेवन्तु मूलेनैव शतं हुनेत् ४०
नित्यकर्मसमाप्ते तु नैमित्तिकमथाचरेत्
भक्त्यावित्तानुसारेण स्नपनं कारयेत्प्रभोः ४१

अर्चयेत् गंधपुष्पाद्यैरर्चनोक्तं विशेषतः
पात्रे तु गृह्य तत् ग्रंथिं गंधपुष्पैस्समायुतम्  ४२
प्रविश्य गर्भगेहन्तु प्रोक्षयेल्लिङ्गमस्त्रतः
पूजापर्युषितं सर्वमपनीय हृदा बुधः  ४३
प्रोक्षयेत्पुरुषेनैव ततो गंधपवित्रकम्
ईशानेन तु मन्त्रेण रोपयेत्तत्पवित्रकम्  ४४
पायसान्नं न्यसेद्धीमान् तांबूलञ्च निवेदयेत्
अपूपान्पृथुकान्लाजान्गुळखण्डेक्षुखण्डकान्  ४५
पनसाम्रकदळ्यादि दापयेद्धृदयेन तु
पुनराचमनन्दत्वा तांबूलन्तु निवेदयेत्  ४६
सौवर्णमूर्णसूत्रं वा सूत्रं कार्पासकन्तु वा
बन्धयेद्धृदयेनैव लिंगमध्ये तु देशिकः  ४७
हृदयेनैव मन्त्रेण पवित्रन्धारयेत् गुरुः
शिरो मनुमनुस्मृत्य मूर्तिपानां प्रदापयेत्  ४८
राज्ञो वाथ शिवस्याथ दापयेत्तु पवित्रकम्
प्रतिमानान्तु सर्वेषां ददेत् गन्धपवित्रकम्  ४९
प्राकाराभ्यन्तरे देवान् परिवारान् विशेषतः
गन्धपुष्पादिनाभ्यर्च्य पवित्रन्दापयेद्धृदा  ५०
मन्दिरे गोपुरे चैव रोपयेत्तु पवित्रकम्
सर्वेषां परिवाराणां दिक्पालानाञ्च दापयेत्  ५१
एवं कृत्वा विशेषेण पश्चाद्धोमं समाचरेत्
नववस्त्रोष्णीषधरः पञ्चांगभूषणैर्युतः  ५२
शुक्लगन्धानुलिप्तांगश्शुक्लमाल्यैरलंकृतः
प्रागुक्तलक्षणोपेतो देशिको मूर्तिपैस्सह  ५३
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
पालाशोदुंबराश्वत्थ वटान् पूर्वादिषु क्रमात्  ५४

प्रधाना हि पलाशास्तु समिधस्संप्रकीर्तिताः
आज्यान्नसक्तुलाजांश्च तिलसर्षपकांस्तथा ५५
हृदयाद्यस्त्रपर्यन्तं मन्त्रैश्च जुहुयात्क्रमात्
शतमर्द्धन्तदर्द्धं वा प्रत्येकन्तु समाचरेत् ५६
मूलेनैव तु मन्त्रेण घृतेनाष्टशतं हुनेत्
पञ्चब्रह्मषडंगैश्च प्रत्येकञ्चाष्टसंख्यया ५७
द्रव्यान्ते व्याहृतिं हुत्वा जयादिं जुहुयात्ततः
नृत्तगेयैश्च वाद्यैश्च स्तोत्रैर्मन्त्रजपैस्तथा ५८
रात्रिशेषं व्यपोह्याथ प्रभाते विमले गुरुः
कृतस्नानस्तु विधिना सकळीकरणञ्चरेत् ५९
गुरुं संपूज्य वस्त्रैश्च यज्ञपुष्पांगुलीयकैः
दक्षिणान्दापयेत्तस्य पञ्चनिष्कन्तु कन्यसम् ६०
द्विगुणं मद्ध्यमं प्रोक्तं त्रिगुणञ्चोत्तमं भवेत्
पूर्वोक्तविधिना चैव मूर्तिपादीन् प्रपूजयेत् ६१
पूर्णाहुतिन्तु शिरसा हुत्वाग्निन्तु विसर्जयेत्
शङ्खभेरीनिनादैश्च नृत्तगेयैः समाकुलम् ६२
ततो मुहूर्ते संप्राप्ते सूत्रारोहणमारभेत्
वेद्यां पवित्रमादाय शिरसाधार्य देशिकः ६३
शेषद्रव्याणि सर्वाणि मूर्तिपैः परिचारकैः
धारयित्वा क्रमेणैव हर्म्यं कृत्वा प्रदक्षिणम् ६४
व्रतांगमेवं कर्तव्यं उक्तमार्गेण देशिकः
ततो गर्भगृहं गत्वा स्थंडिलोर्ध्वे तु विन्नयसेत् ६५
त्यक्त्वा पर्युषितं सूत्रं चंडेशाय प्रदापयेत्
लिंगशुद्धिं ततः कृत्वा आसनं कल्पयेत्ततः ६६
आवाह्य देवदेवेशं पाद्यादीनि प्रदापयेत्
आसनन्दापयेद्धीमान् हृदयेन मृगाजिनम् ६७

सद्येन पादुकान्दत्वा लोहेन दारुजेन वा
ईशानेन तु मन्त्रेण छत्रं वै दापयेत्ततः ६८
दन्तकाष्ठं ददेद्धीमान् आदर्शानान्तु वर्मणा
अघोरेण तु मन्त्रेण त्वञ्जनन्दापयेत्प्रभोः ६९
अन्ते तु दापयेद्भस्ममन्त्रेण नयनेन च
पञ्चमृत्पञ्चगव्यैश्च स्नापयेद्बीजमुख्यकैः ७०
अन्यानि सर्वकार्याणि चार्चनोक्तं समाचरेत्
आरोपयेद्धृदामंत्री शुद्धाख्यन्तु पवित्रकम् ७१
मुकुळीं पद्ममुद्राञ्च पञ्चवक्त्रं प्रदर्शयेत्
अस्त्रेणैव तु मन्त्रेण दिग्बलञ्च ततः कुरु ७२
प्रागुक्तानि पवित्राणि तेभ्यस्तेभ्यः प्रदापयेत्
प्रभूतञ्च हविर्दत्वा तांबूलन्तु निवेदयेत् ७३
आचण्डाळान्तरन्नादींस्तस्मिन्नहनि दापयेत्
द्विमासञ्चैकमासं वा पक्षं वाथ विशेषतः ७४
पञ्चाहं त्रयहं वाथ एकाहं वा पवित्रकम्
पूजान्ते प्रोक्ष्य तु हृदा रोपयेत्तत्पवित्रकम् ७५
यावत्पवित्रमावर्ज्य तावत्कालं व्रतञ्चरेत्
अक्षारलवणाशी स्यात्सदा वै निशि न स्वपेत् ७६
ग्रामान्तरं न गन्तव्यं न खरोमे न छेदयेत्
स्नात्वा प्रतिदिनं कर्ता व्रतमेवं समाचरेत् ७७
अर्त्थार्थी ह्येवमेवं स्यात् गुरुर्होमेन संयुतः
आलये वा गृहे वापि कारयेद्विधिपूर्वकम् ७८
आत्मार्त्थं लिंगपूजा चेत् यत्र लिंगं प्रकल्पयेत्
एकहस्तप्रमाणेन रेणुरज्जुं समारभेत् ७९
तत्राकारं शिरः कुर्यात् लिंगं वै स्थापयेत्क्रमात्
दुकूलपट्टवेदांगैश्चित्रवस्त्रैश्च वेष्टयेत् ८०

शेषं पूर्वोक्तवत्कुर्यात् गुरुणा सह पूजनम्
क्षुरिका बीजमुख्यैश्च पवित्राण्येव रोहयेत् ८१
स्नपनं कारयेदन्ते यथा वित्तानुसारतः
यागोपकरणं सर्वमाचार्याय प्रदापयेत् ८२
अर्चनोक्तं समभ्यर्च्य प्रभूतन्तु हविर्ददेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ८३
इति पवित्रारोहणविधिपटलः द्वाविंशत्युत्तरशततमः

## पूरकर्मविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि पूरकर्मविधिं श्रुणु
आषाढे पूरमेवं स्यादश्वनीपूरमेव वा १
सर्वशान्तिकरं श्रेष्ठं सर्वसिद्धिकरं शुभम्
ग्रामरक्षाकरं पुण्यम्मंगळैस्सर्वरक्षकम् २
नवाहञ्चैव सप्ताहं पञ्चाहन्तु त्रयाहकम्
तद्दिनात्पूर्वरात्रौ तु कारयेदंकुरार्पणम् ३
नक्षत्रे तु मखे चैव प्रारभेदधिवासनम्
सायं काले प्रकर्तव्यमुक्तालंकारसंयुतम् ४
स्नापयेत्तु मनोन्मन्या श्वेतवस्त्रेण वेष्टयेत्
सर्वाभरणसंभूष्यं सर्वगनानुलेपनम् ५
सर्वमालां समादाय पूजयेत्परमेश्वरीम्
मण्टपे पावके देशे शांकरे वा विशेषतः ६
मण्टपस्योत्तरे वापि स्थण्डिलं कारयेत् बुधः
अष्टद्रोणैस्तु शालीनान्तदर्द्धन्तण्डुलैरपि ७
तदर्द्धन्तु तिलञ्चैव तस्यार्द्धञ्चैव लाजकम्
स्थण्डिलोपरिसंवेष्ट्य दर्भं पुष्पोपरिन्यसेत् ८
आसनं कल्पयेत्तत्र योगासनं समारभेत्

तदूर्द्ध्वे गौरीं संस्थाप्य पूजयेत्तु मनोन्मनीम्  ९
नवशक्त्या तु संपूज्य पूजयेत्स्वस्वनामतः
अस्त्रदेवं सुसंपूज्य वस्त्रेणैव तु वेष्टयेत्  १०
पुष्पमालां समादाय पूजयेत्तु विशेषतः
स्थलिके स्थण्डिले चैव तन्मद्ध्ये तन्तुरक्षकम्  ११
परिचारकस्य शिरसि न्यस्त्वा हर्म्य प्रदक्षिणम्
पञ्चद्ध्वनि समायुक्तं किंकिणीरवशोभितम्  १२
शंखद्ध्वनि समायुक्तं ताळकाहळमद्दळैः
भेरीवंशसमायुक्तैर्गेयनृत्तसमाकुलैः  १३
स्तोत्रमंगळवाद्यैश्च जयशब्दादिशोभितैः
पणवैर्झल्लरीमोतैरावेष्टय सदनं सुधीः  १४
देवसन्निधिमासाद्य पुण्याहं वाचयेत्क्रमात्
व्रतहोमं समाश्रित्य कौतुकन्तु समर्चयेत्  १५
समिदाज्य चरून् लाजान् होमयेत्तु विशेषतः
पञ्चब्रह्मषडंगैश्चाप्यष्टोत्तरशतं हुनेत्  १६
गौरीगायत्रिमंत्रेण पञ्चविंशति होमयेत्
कौतुकं बन्धयेत्पश्चादस्त्रमूर्तिं सुपूजयेत्  १७
मनोन्मनीं सुसंपूज्य रक्षासूत्रन्तु कारयेत्
पायसं फलसंयुक्तं मनोन्मन्यास्तु दापयेत्  १८
अष्टद्रोणैस्तु शालीनान्तदर्द्धैस्तण्डुलैरपि
तदर्द्धन्तु तिलैश्चैव तदर्द्धं लाजमेव च  १९
निवेदयेत्तु तांबूलमारात्रिकन्ददेत्ततः
भसितन्दापयेत्पश्चाद्यूर्ध्वर्णन्दर्शयेद्बुदा  २०
छत्रचामरदर्शेन पूजयेत्तु मनोन्मनीम्
वर्द्धनीं नवसंस्थाप्य नवशक्त्या तु पूजयेत्  २१
मुद्गन्तु पञ्चभारं स्यादुत्तमं परिकीर्तितम्

त्रिभारम्मद्ध्यमं प्रोक्तं भारात् भारार्द्धं कन्यसम् २२
तोयेनैव तु शुद्धेन मुद्गांकुरं प्रजायते
शकलैर्न्नाळिकेराणां शर्करा गुळखण्डकैः २३
एलाभिर्मिश्रितं कृत्वा कदळीफलसंयुतम्
द्विगुणं लवणं ग्राह्य कल्पयित्वा विधीयते २४
अधिवासनमेवोक्तं व्रताचारन्ततश्शृणु
द्वितीये दिवसे चैव स्नापयेद्देशिकोत्तमः २५
पञ्चगव्येन संप्रोन्द्य आलयेन तु बिंबके
आत्मार्त्थं विधिवत्पूज्य उपवासं समाचरेत् २६
धूपदीपं हृदा दत्वा पूजयेत्तु मनोन्मनीम्
पूर्वरात्रौ तु संस्थाप्य वर्द्धनीं स्थापयेत्क्रमात् २७
नववस्त्रैरलंकृत्य सर्वगन्धानुलेपनम्
सर्वमाल्यं समादाय सर्वालंकारसंयुतम् २८
शिवाग्रे स्थण्डिलं कृत्वा षोडश द्रोणमेव व
तण्डुलन्तु तदर्द्धं वा तदर्द्धं वा तिलैरपि २९
तदर्द्धं लाजसंयुक्तं विन्यसेद्देशिकोत्तमः
एवं प्रमाणमित्युक्तं कल्पयेत्स्थण्डिलं क्रमात् ३०
तन्मद्ध्येब्जं समालिख्य तदूद्ध्र्वे वस्त्रवेष्टितम्
तन्मद्ध्ये कदळीपत्रं लवणं पूर्णमेव हि ३१
लजपुष्पतिलैर्दर्भैर्विकीर्य समलंकृतम्
स्थण्डिले गौरीं विन्यस्य पूजयेद्देशिकोत्तमः ३२
पूजयेन्नवशक्तीनान्नवदिक्षु च विन्यसेत्
मनोन्मनीन्तु तन्मद्ध्ये पूर्वाशाभिमुखस्थिताम् ३३
पश्चिमद्वारपश्चिम्यान्दक्षिणद्वारदक्षिणे
उत्तरद्वारसौम्यायाः पार्श्वे चैवाष्टशक्तिकाः ३४
पूजयेत्तु स्वनामाद्यैर्देशिको होतृभिस्सह

गौरी दक्षिणदिग्भागे विघ्नेशं पूजेयेत्क्रमात् ३५
वामपार्श्वे तु दुर्गान्तु पूजयेत्तु स्वनामतः
हरिद्राणीं समाश्रित्य प्रस्थं पूरवरं लयम् ३६
शिवपूर्णन्तु व्रीहिस्स्यात्पूर्वाग्रे स्थापयेद्गुरुः
शकृच्चूर्णेन संयुक्तान् लवणं पूर्णमेव हि ३७
रजनीं स्थापनं कृत्वा पूर्वोक्तविधिना सह
एकपात्रे तु संग्राह्य दूर्वाक्षतैकपात्रकम् ३८
गौरी सन्निधिमासाद्य प्रोक्षयेदस्त्रवारिणा
देवीपादं समादाय मुद्गांकुरसमृद्धिदम् ३९
नवभाण्डे तु पात्रं स्यात्पात्रकन्तु नवद्वयम्
तत्पात्रे पूर्णमुद्गं स्यान्नवकं पात्रमुच्यते ४०
प्रातर्मद्ध्याह्नसायाह्ने व्रताचारं समाचरेत्
हरिद्राणीं समाश्रित्य मृदाप्लावनमाचरेत् ४१
ईशानेन तु मन्त्रेण सलिलन्तु विधीयते
तण्डुलन्दापयेत्पश्चात् पुरुषं मन्त्रमुच्चरन् ४२
व्रीहिदर्शनमेवोक्तं घोरमन्त्रं समुच्चरन्
पानीयं त्रिः प्रदक्षिण्यं विन्यसेद्देशिकोत्तमः ४३
शकृच्चूर्णन्तु पादाभ्यान्नाभौ व्रीहिञ्च विन्यसेत्
रजनीं हृदयेन्यस्य लवणं कण्ठमेव च ४४
दूर्वाक्षतौ न्यसेन्मूर्ध्नि व्रताचारं क्रमादिति
शंखदुन्दुभिनिर्घोषैः स्तोत्रमंगळवाचकैः ४५
कन्यकानवकं सप्तभूतं वै त्रिविधं भवेत्
वस्त्रचन्दनपुष्पाद्यैरर्चयेत् कन्यकाः क्रमात् ४६
धूपदीपादि नैवेद्यं तांबूलन्दापयेत्ततः
यथा शक्त्या सुवर्णानि यावत्कन्यां प्रपूजयेत् ४७
कन्यागोदर्शनञ्चैव ब्राह्मणान्स्वस्तिवाचकैः

गीतनृत्तसमायुक्तं पूरकर्मविधीयते ४८
मराटपस्य तु तन्मद्ध्ये स्थरािडलन्तु विधीयते
सर्लमाल्यं समादाय सर्वालंकार संयुतम् ४९
शिवाग्रे स्थरािडलं कृत्वा षोडश द्रोरामेव वा
तराडुलन्तु तदर्द्धं वा कुंभार्द्धन्तु तिलैरपि ५०
तदर्द्धं लाजसंयुक्तं विन्यसेद्देशिकोत्तमः
स्नपनं तत्र कुर्वीताप्यष्टोत्तरशतं क्रमात् ५१
अथवाप्येकविंशच्च अथवा पञ्चविंशतिः
स्नपनन्देवदेव्योश्च कृत्वा पूजां विशेषतः ५२
पायसान्नन्ददेत्पश्चात्तांबूलन्दापयेत्ततः
शिवाग्रे स्थरािडलं कृत्वा शालिभिर्विमलैस्सितैः ५३
तदूर्ध्वे वस्त्रमावेष्ट्य तन्मद्ध्ये लवणं क्षिपेत्
तदूर्ध्वे स्थापयित्वामां नवशक्त्या तु पूजयेत् ५४
गौरीदक्षिणदिग्भागे विघ्नेशं पूजयेत्ततः
यष्ट्वादुर्गां वामपार्श्वे हरिद्राणीमथोत्तरे ५५
उमाग्रे प्रस्थसंपूर्णं तंडुलं दूर्वयान्वितम्
शकृच्चूर्णं व्रीहियुक्तं रजनी लवणान्तथा ५६
एकपात्रं गृहीत्वा तु ततो दूर्वाक्षतान्वितम्
गौरी दक्षिणहस्ते तु पानीयं त्रिः प्रदक्षिणम् ५७
प्रतराडुलं प्रस्थपूर्णं गंधयुक् दापयेत्क्रमात्
नववस्त्रं गृहीत्वा तु घृतयुक्पायसं हविः ५८
हरिद्राणीं समाश्रित्य तराडुलानान्तु दर्शनम्
पद्मान्नयस्त्वा शकृत् चूर्णं व्रीहीणां नाभिदेशके ५९
रजनीं हृदयेन्यस्य लवणंगळदेशके
उत्तमांगे क्षतं दूर्वामनोन्मन्यास्तु दापयेत् ६०
देशिकं पूजयेदन्ते वस्त्रहेमांगुलीयकैः

भक्तानां परिचाराणां यथा शक्त्या तु दापयेत्  ६१
लवणं मुत्गदानञ्च ग्रहं प्रतिग्रहं प्रति
सर्वेषान्दापयित्वाथ धनधान्य समृद्धिदम्  ६२
राजराष्ट्रविवृद्धिञ्च सर्वशान्तिकरं शुभम्
सर्वपापात्प्रमुच्यन्ते सत्फलैकैकमंगळम्  ६३
आषाढपूरकर्म स्यादाश्वयुङ्मासिवाथवा
सर्वमंगळकार्यार्त्थं सर्वमंगळरक्षकम्  ६४
पूरकर्म तु संयोज्य सत्फलं सर्वसाधनम्  ६५

गौरी श्रुणु त्वहं वक्ष्ये चाषाढे पूरकर्मकम्
आयुरारोग्य जयदं पुत्रपौत्रविवर्द्धनम्  १
सर्वपापहरं पुण्यं सर्वसिद्धिकरं शुभम्
तद्दिनात्पूर्वरात्रे तु चाधिवासनमारभेत्  २
तदर्द्धं मद्ध्यमं प्रोक्तमधमं द्रोणसंयुतम्
नवपात्रे क्षिपेत्तत्र गन्धपुष्पादिनार्चयेत्  ३
प्रभाते विमले स्नाप्य देव्यै विज्ञाप्यदेशिकः
रंगे वा शिबिकायां वा रथे वा रोप्य भक्तितः  ४
पञ्च द्ध्वनिसमायुक्तं किंकिणीरवशोभितम्
अंकुरं मुद्गसंयुक्तं लवणञ्च प्रदापयेत्  ५
ग्रामप्रदक्षिणं कृत्वा नदीं गच्छेत्समुद्रगाम्
शंखद्ध्वनिसमायुक्तैः ताळकाहळमद्दलैः  ६
भेरीवंशसमायुक्तैर्गेयनृत्तसमाकुलैः
स्तोत्रमंगळवाद्यैश्च जयशब्दादिशोभितैः  ७
तीरे समतलं कुर्यात्प्रपां कृत्वातिसुन्दराम्
तस्य मद्ध्ये स्थितान्देवीं वामाद्याभिस्समर्चयेत्  ८
वेद्यास्तु पूर्वदिक्भागे स्थण्डिलं कारयेद्बुधः

अष्टद्रोणप्रमाणैश्च शालिभिः पद्ममालिखेत् ९
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि
विंशकं पञ्चकं श्रेष्ठं न्नवपञ्चकवा पुनः १०
प्रत्येकं शुद्धवस्त्रेण वेष्टयेत्तु हृदा पुनः
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्कलशानपि ११
गन्धपुष्पादिनाभ्यर्च्य नवशक्त्याधिदेवताः
गौरी गायत्रिमन्त्रेण स्नापयेद्देशिकोत्तमः १२
लाजचूर्णं विसृज्याथ अस्त्रमन्त्रेण बुद्धिमान्
रजनीन्दापयेन्नार्यास्ततस्नानं सहैव तु १३
संवत्सरकृतं पापं स्नानेनैव विनश्यति
राजराष्ट्रविवर्द्धेन भ्रातृमातृविवर्द्धनम् १४
गन्धपुष्पादिनाभ्यर्च्य कुर्यात्तत्राभिषेचनम्
आचार्यं पूजयेतव्यं वस्त्रहोमांगुलीयकैः १५
साभ्यानां परिवाराणां वस्त्रादीनि प्रदापयेत्
प्रविशेदालयं पश्चात्स्वस्तिसूक्तसमन्वितम् १६
प्रभूतहविषन्दत्वा तांबूलञ्च निवेदयेत् १७
इति पूरकर्मविधिपटलस्त्रयोविंशत्युत्तरशततमः

## श्रावणतिलपूजाविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण तिलपूजा विधिक्रमम्
सर्वशान्तिकरं पुण्यं सर्वरोगविनाशनम् १
तिलानां पूजनार्त्थाय शनिदोषनिवारणम्
शनिनापीडनार्त्थाय सर्वदुःखनिवारणम् २
पूजयेत्तु विशेषेण शनिं मृत्युविनाशनम्
तिलपूजाफलसमं न भूतो न भविष्यति ३
भारादिदशभारान्तं पूजनार्त्थं प्रगृह्य च

क्षाळनं शोषणं कृत्वा शोषयेच्चास्त्रमंत्रतः ४
तिलपूजाविशेषेण मन्त्रमूर्तिमयेन च
तंत्रात्मकशरीरेण मंत्रो मूर्तिरिति स्मृतः ५
पूजयित्वा विशेषेण सर्वसंपत्सुखावहम्
कुंडमंडलहोमादि पूर्ववत्सर्वमाचरेत् ६
द्वारपूजां ततः कृत्वा लिंगशुद्धिं समाचरेत्
क्षीरं वा गंधतोयं वा पञ्चामृतमथापि वा ७
यथेष्टं स्नापयेद्धीमान्नवमंत्रमनुस्मरन्
पूर्वोक्तेन विधेनैव स्नपनं कारयेत्ततः ८
व्योमव्यापि समुच्चार्य तिलवज्रांकितं बुधः
शक्तिमंत्रं विशेषेण भूसुराणां जपेत्ततः ९
प्रभूतहविषन्दत्वा तांबूलञ्च निवेदयेत्
धूपदीपसमायुक्तमुपचारेण संयुतम् १०
इत्येवं शिवपूजायां शनिदोषनिकृन्तनम्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः ११
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात्

पूर्वाषाढनवनैवेद्यलक्षणपटलप्रारंभः

अथातस्संप्रवक्ष्यामि नवनैवेद्यलक्षणम्
कन्नयाकुंभकुळीरेषु चापमासे तु वर्जयेत् १
सितपक्षे द्वितीया च तृतीया पञ्चमी तथा
सप्तम्येकादशी चैव दशमी च त्रयोदशी २
एताश्च तिथयश्शस्ता हस्तश्रवणरेवती
आदित्यपुष्यमैत्रश्च चित्तात्रीण्युत्तरामखा ३
सोमप्रजापतिर्मूलविशाखा वसुवारुणाः
एते च शुभदाः प्रोक्ता मीनाजाळिकुळीरकाः ४

अशस्ताराशयश्चैते अन्ये सर्वशुभप्रदाः
लग्ने च दशमे चैव षष्ठे चैवाष्टमेऽपि च ५
चतुर्थे चाशुभाजीवष्षष्ठे च दशमेऽपि वा
एकादशे गुरुश्चैव शुक्रश्शुभकरस्मृतः ६
षष्ठे च सप्तमे चैव द्वादशे दशमेऽपि वा
शशांकः शुभदः प्रोक्तो नवमे दशमे तथा ७
षष्ठे च दशमे लग्ने सप्तमे न्यग्रहाश्च वै
अशुभास्त्विति विख्याताश्चान्ये तु शुभदा स्मृताः ८
बुधभार्गवसौम्या हि वाराश्रेष्ठतरास्मृताः
सुमुहूर्तं विनिश्चित्य कारयेदंकुरार्पणम् ९
मुखे दुन्दुभिनिर्घोषैर्गीतनृत्तादिसंयुतैः
नानाध्वजवितानैश्च धूपदीपांकुरैस्सह
ततो भक्तजनैस्सार्द्धं शूलेनैव समायुतम् १०
स्वक्षेत्रं प्रविशेत्तत्र भूतेभ्यस्तु बलिं क्षिपेत्
दद्ध्योदनं बलिं क्षिप्त्वा स्वस्वनाम्नाविशेषतः ११
क्षेत्रस्य पूर्वदिग्भागे शुळमस्त्रेण मन्त्रतः
लूत्वानेत्रेण बद्ध्वा तु संगृह्य बहुभारकान् १२
नानाविधफलैर्युक्तन्नानातण्डुलभारकैः
नानाभक्तसमायुक्तस्सुशालीभारकैर्युतम् १३
दद्ध्याज्यतैलकुंभैश्च पूगीफलसमायुतम्
नवभाण्डसमायु--ज्य कु--खासमन्वितम् १४
रात्रिशाखासमयुक्तं मातृशाखासमायुतम्
मरीचिलवणोपेतं मुद्गभिन्नसमायुतम् १५
गुळखंडसमायुक्तं नाळिकेरफलैर्युतम्
जनास्सर्वेवहित्वा तु कुर्यात् ग्रामप्रदक्षिणम् १६
उक्तालंकारसंयुक्तं प्रतिमान्तु प्रदक्षिणम्

कृत्वालयं प्रविश्याथ मंटपे तु विशेषतः १७
शूकशालिं विमुक्त्वा तु सन्तप्तं रविरश्मिभिः
भूमिशुद्धिं ततः कृत्वा गोमयालेपनं कुरु १८
विचित्रे शालिपिष्टेन भूतले स्थंडिले कृते
वस्त्रैरावेष्टय दर्भैश्च विन्यसेल्लूखलं हृदा १९
धान्येनापूर्य तत्रैव कुट्टयेच्छिवदासिभिः
निर्दोषं तंडुलं ग्राह्य पाषाणादीन्यपोह्य च २०
प्रक्षाळ्य गुळसम्मिश्रं नाळिकेरफलान्वितम्
नवनैवेद्यकाले तु काम्यनैमित्तिके तथा २१
शिवाग्रभूमिं संप्रोक्ष्य स्थंडिले शालिनिर्मिते
नवांबरेण संस्तीर्य रंभापत्रन्तदूर्ध्वके २२
संस्तीर्य तु विशेषेण नैवेद्यन्तु विनिक्षिपेत्
मुहूर्ते समनुप्राप्ते कुर्युश्शब्दसमाकुलम् २३
नृत्तगीतसमायुक्तं स्तोत्रमंगळसंयुतम्
जयघोषसमायुक्तं ब्रह्मघोषसमन्वितम् २४
निवेदयेत्तु तत्काले तंडुलं हृदयेन तु
प्रतिमाणाञ्च सर्वासान्दापयेत्तण्डुलन्ततः २५
ततस्त्वाचमनं दद्यान्निर्माल्यन्तु विसर्जयेत्
चण्डेशं पूजयित्वा तु निर्माल्यन्तु निवेदयेत् २६
नवपूगफलोपेतं तांबूलन्तु निवेदयेत्
तत्काले परिचाराणां भक्तानान्तु विशेषतः २७
दातव्यन्तण्डुलन्तत्र प्रभूतहविषन्ततः
पूर्वोक्तविधिनानेन पाचयित्वा निवेदयेत् २८
नित्याग्निन्तु ततः कुर्यात् नवनैवेद्यकैर्गुरुः
मूलेनैव तु मन्त्रेण चाष्ट----- हुनेत् २९
व्याहृतिञ्च ततो हुत्वा कुर्याद्वै परिषेचनम्

सर्वेषाञ्चैव भक्तानां नानान्नानि प्रदापयेत्  ३०
काम्यमेवं समाख्यातं नैमित्तिकमथोच्यते
सुमुहूर्ते सुलग्ने तु नैमित्तिकमथाचरेत्  ३१
आचार्यं पूजयेत्पश्चान् वस्त्रहेमांगुलीयकैः
ब्रांहणान्भोजयेत्तत्र माहेश्वरञ्च पूजयेत्  ३२
इति नवनैवेद्यपटलः पञ्चविंशत्युत्तरशततमः

आश्वीजघृतपूजाविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण घृतपूजाविधिक्रमम्
गव्यमाज्यं समादाय वस्त्रपूतेन शुद्धयति  १
सर्वादिपात्रे संपूज्य कुंभेशाग्रेऽधिवासयेत्
मंटपं कुंडवेदीञ्च पूर्ववत्पूजयेद्बुधः  २
होमयेदधिवासार्त्थं संपातार्त्थं समाचरेत्
उपहोमसमायुक्तं पूजाहोमसमन्वितम्  ३
प्रायश्चित्तादिकं होमं कारयेत्पूर्ववत्सुधीः
द्वात्रिंशत्प्रस्थमारभ्य यावत् भारद्वयान्तिकम्  ४
द्रोणद्वयेन संबुद्धय उत्तमादि द्वयं द्वयम्
कोणेनैव समायुक्तमुपकुंभन्नियोजयेत्  ५
द्वारपूजादिकं सर्वं पूर्ववत्कारयेद्बुधः
पश्चात्घृतेन संपूज्य मूलमंत्रमनुस्मरन्  ६
लिंगपीठं ततस्नाप्य गंधाद्यैरर्चयेद्बुधः
वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः  ७
नैवेद्यं पूर्ववत्कृत्वा तांबूलञ्च निवेदयेत्
धूपदीपसमायुक्तं नृत्तान्तं सम्यगाचरेत्  ८
संध्यान्ते चैव कर्तव्यं निर्माल्यापनयेत्कृते
नाळिकेरेण मुद्गं च मर्दयित्वा विचक्षणः  ९

उष्णोदकेन संस्नाप्य लिंगपीठस्थलं क्रमात्
कदळीदधिसंयुक्तं गुळखंडसमन्वितम् १०
लेपयित्वा विशेषेण मर्दयित्वा विचक्षणः
तुळसी बिल्वपत्रैश्च गंधैश्चैव विसृज्य च ११
यथेष्टं स्नापयेत्पश्चात् शेषं पूर्ववदाचरेत्
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् १२
इति आश्वीजघृतपूजाविधिः षड्विंशत्युत्तरशततमः

नवरात्रिविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि नवरात्रिविधिक्रमम्
आश्वयुक्शुक्लपक्षे तु प्रतिपन्नवम्यन्तके १
प्रतिपद्दिनमारभ्य व्रतोत्सवमथाचरेत्
देव्यग्रे दक्षिणे वापि मण्टपे समलंकृते २
ऐशान्ये चोत्तरे वापि लक्ष्मीन्दुर्गाञ्च भारतीम्
गौरीमिमायमंत्रेण बद्ध्वाप्रतिसरं बुधः ३
नानाशक्त्यादिसंयुक्तं नानायुधादि संयुतम्
प्रथमादिनवम्यन्तं दिनं प्रतिप्रपूजयेत् ४
तथातद्दिनमारभ्य नानाशक्तिजपं बुधः
मुलदेव्यग्रके वापि अन्ये च मण्टपादिके ५
अलंकृत्य च देव्याश्च विनोदालोकनन्नयेत्
यथावित्तानुसारेण नवनैवेद्यमेव च ६
धूपदीपोपचारैश्च मंत्रपूष्पैश्च दापयेत्
इष्टकाम्यार्त्थसिद्ध्यर्त्थं जनान्सर्वान्प्रदर्शयेत् ७
होमकार्यं द्विकालञ्च रात्र्याञ्चोत्सवमाचरेत्
अथवान्यप्रकारेण विना चोत्सवहोमकम् ८
केवलं व्रतकार्यन्तु दिनं प्रतिदिनं प्रति

यथा कल्पोक्तमार्गेण नानादेवीं प्रपूजयेत् ९
नानावाद्यसमायुक्तं नानागीतसमन्वितम्
नानानृत्तसमायुक्तं नानास्तोत्रसमन्वितम् १०
प्रतिपद्रात्रिमारभ्य पूजयेत्सर्वशक्तिकाः
नवाहं वाथ सप्ताहं पञ्चाहं वा त्रयाहकम् ११
एकरात्र्यामथारभ्य गजाश्वायुधपूजनम्
दशमीञ्च ततः प्रातः तत्कुंभञ्चैव पूजयेत् १२
धामप्रदक्षिणं कृत्वा नानावाद्ययुतैस्सह
पुण्याहं वाचयित्वा तु कुंभञ्चैवाभिषेचयेत् १३
नैवेद्यं धूपदीपञ्च रक्षासूत्रं विसृज्य च
नवम्म्यां पूजयेद्देवीं दशम्याञ्च शमीं यजेत् १४
अस्त्राणामर्चनं ह्येवं प्रत्यहं पूजयेत्सुधीः
राजराष्ट्राभिवृद्ध्यर्थं दशम्यां पूजयेच्छमीम् १५
तद्दिने च प्रभाते वा सायाह्ने चार्चयेच्छमीम्
चोत्तरे चैव पूर्वे वा शमीमण्टपसंस्थिते १६
शमीधामह्यलंकृत्य चतुर्द्वारसमन्वितम्
वितानैस्तोरणैर्भूष्य नानालंकारसंयुतम् १७
इन्दुशेखरमूर्तिञ्च तुरगारूढयेद्बुधः
नानालंकारसंयुक्तं नानाभक्तजनैस्सह १८
शमीस्थानं प्रविश्याथ पुण्याहं वाचयेत्ततः
खड्गखेटौ च चापञ्च स्थापयेत्तु शमी सह १९
शमीपूजा प्रकारेण आसनादीन्प्रपूजयेत्
तत्पश्चाच्छमीमूले तु काळरात्रेश्च काळ्यकैः २०
यमैश्च यमदूतैश्च ब्राह्म्याद्यैस्सप्तमातृकैः
महालक्ष्मीस्समभ्यर्च्य शमीमूलेन पूजयेत् २१
अस्त्रमन्त्रेण संपूज्य नैवेद्यं धूपदीपकैः

शमीशत्रुविनाशाय शमीपापप्रणाशिनी २२
शमीसंपत्करी चैव शमीञ्चैव नमोनमः
शक्त्यादानादिकन्दद्यात् ब्रांहणान्वेदपारगान् २३
ग्रामकर्तृनृपाणाञ्च सोष्णीषस्सुप्रसन्नवान्
चतुर्दिक्षु चतुर्बाणैर्गम्यते चैव बुद्धिमान् २४
शम्भोर्नीराञ्जनं दद्यात्तथा दुष्टमृगं हरेत्
ततो देवालयं गच्छेत्सपुण्यां गतिमाप्नुयात् २५
इति नवरात्रिविधिपटलः सप्तविंशत्युत्तरशततमः

अन्नपूजाविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि अन्नपूजाविधिक्रमम्
अन्नं प्राणात्मकं श्रेष्ठं सर्वजन्तु प्रतिष्ठितम् १
तस्मादन्नाभिषेकन्तु मम प्रीति करं शुभम्
अन्नरूपं विशेषेण मम रूपमिति स्मृतम् २
शाल्यन्नमुत्तमं प्रोक्तं व्रीह्यन्नम्मद्ध्यमं भवेत्
चरुपाकविधानेन अर्च्चनार्त्थं हि विग्रहे ३
सद्योधिवासनं कुर्यात्सर्वकर्म समाचरेत्
पयसा स्नापयेद्दद्ध्ना घृतेन मधुना ततः ४
खण्डशर्क्करया पश्चात्फलपुष्परसैस्ततः
स्नानं मूलेन कर्त्तव्यं प्रत्येकन्नववारिणा ५
शतमष्टोत्तरन्देयं कलशानां क्रमेण तु
संपूज्य धूपदीपादि दत्वाप्यञ्जलिपूर्वकम् ६
पश्चादन्नेन संपूर्य लिंगपीठं क्रमेण तु
दद्याद्वित्तानुसारेण भारादि दशभारकम् ७
संपूज्य मूलमन्त्रेण दत्वार्घ्यं हृदयेन तु
नैवेद्यन्दापयेत्पश्चाद्व्यञ्जनादि समन्वितम् ८

हस्तोद्वर्त्तनतांबूलं मुखवाससमन्वितम्
श्रीमत्पञ्चमहाशब्दन्दर्पणं छत्रचामरैः ९
गेयनृत्तकरस्तोत्रैस्सन्तोष्याप्यभिवन्द्य च
आचार्यं पूजयेत्पश्चात् दक्षिणां संप्रदाय च १०
अन्नपूजा विधिः प्रोक्ता दीपपूजा विधिं श्रुणु ११
इति अन्नपूजाविधिपटल अष्टाविंशत्युत्तरशततमः

दीपपूजाविधिपटलप्रारंभः

दीपपूजाविधिं वक्ष्ये सर्वरोगविनाशनम्
गर्भग्रहे मण्टपे वा कर्तव्यं वेदिकोपरि १
दीपदण्डोक्तवृक्षं वा क्रमुकं वापि कारयेत्
त्रयोविंशांगुलमारभ्य षडंगुलविवर्द्धनात् २
सप्तचत्वारिचान्तं यत् दण्डोच्चं पञ्चधा भवेत्
एकादशांगुलारभ्य षट्षडंगुलवर्द्धनात् ३
पञ्चत्रिंशांगुलं यावत् नाहं पञ्चविधं भवेत्
दण्डमूलमिति ख्यातमग्रमष्टांश हीनकम् ४
स्वतावनाहं क्रमुकं पूर्वाग्रञ्चोत्तराग्रकम्
दण्डोर्द्ध्वे यंत्रिकोपेतं दण्डाग्रस्य त्रिभागतः ५
विस्तारदण्डविस्तारन्तत्पटन्तु त्रियंगुलम्
तत्समन्तु चतुष्कीलं द्व्यंगुलं कीलविस्तृतम् ६
एवं संपाद्य दण्डन्तु दण्डकाले त्रिमेखला
त्रयंगुलन्तु विस्तारमुत्सेधन्तु द्वयांगुलम् ७
तदधो वेदिकोत्सेधं द्वादशांगुलमात्रतः
द्विहस्तन्तु प्रविस्तारमुपवेदिसमन्वितम् ८
उत्सेधं द्व्यंगुलं ख्यातञ्चतुरंगुलविस्तृतम्
उपवेदिरिति प्रोक्तं वेद्यूर्द्ध्वे दण्डमानकम् ९

दर्भमालासमायुक्तं पुष्पमाला समायुतम्
गन्धं संलिप्य दण्डन्तु वस्त्रयुग्मेन वेष्टयेत् १०
पुण्याहप्रोक्षणं कृत्वा तत्पूर्वे स्थण्डिलं कुरु
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिमार्गतः ११
समिदाज्य चरूञ्चैव मूलेनैव शतं हुनेत्
जयादिरभ्याधानाद्यैः स्विष्टाद्यैः पूर्ववद्बुधः १२
तदग्रे रोपयित्वा तु प्रस्थाज्यैश्शिवपावके
वामादिशक्तिं संपूज्य कुंभे शाग्रेऽधिवासयेत् १३
मण्टपं कुण्डवेदींश्च पूजयेत्पूर्ववत् बुधः
अग्निकार्योक्तविधिना चरुपाकसमन्वितम् १४
होमयेत्पूर्ववत्कृत्वा प्रभाते स्नानमाचरेत्
पुनर्मण्डलमाराध्य प्रायश्चित्तादिकञ्चरेत् १५
एवं सर्वं समापाद्य पूजयेत्सपराह्नके
गव्यादिस्नपनान्तञ्च यजेदावरणं प्रति १६
वस्त्राभरणमालाद्यैरलंकृत्य विशेषतः
सायाह्नसमये प्राप्ते सायरक्षां समाचरेत् १७
शंखद्ध्वनिसमायुक्तं स्वस्तिसूक्तसमन्वितम्
सर्वालंकारसंयुक्तं कुंभेशेनवदीपयुक् १८
धामप्रदक्षिणं कृत्वा प्रविशेन्मण्टपे ततः
पुण्याहं प्रोक्षणं कृत्वा यजेद्दण्डे सदाशिवम् १९
कुंभोदैश्चैव संप्रोक्ष्य गन्धपुष्पादिनार्च्चयेत्
दण्डोद्ध्र्वे विन्यसेत्पात्रं सर्वरौप्य विनिर्मितम् २०
कार्प्पासबीजसंयुक्तं तण्डुलं वाथ पुत्तळम्
दीपयेन्मद्ध्यदीपेन तद्दीपं पश्चिमे न्यसेत् २१
वेद्यूद्ध्र्वे स्थण्डिले न्यस्त्वा दीपान्वादीपदैवतान्
पूजयेत् गन्धपुष्पाद्यै स्वस्वमन्त्रैर्विशेषतः २२

ज्योतिर्लिंगमयं द्ध्यात्वा नैवेद्यन्दापयेत्ततः
धूपदीपसमायुक्तं पूजयेत्तु विशेषतः २३
देवाग्रे स्थापिते दराडे दीपारोहन्तु पूर्ववत्
कूटदाहं प्रकर्तव्यं हित्वा च सर्वमाचरेत् २४
शक्तीनां सर्वदेवानां दीपारोहं समाचरेत्
नैवेद्यं दापयेत्पश्चात्पानीयाचमनं ततः २५
अपूपूपं प्रथुकं दद्यात्तांबूलञ्च निवेदयेत्
नित्याग्नियजनं कुर्यान्नित्योत्सवसमन्वितम् २६
धूपदीपसमायुक्तं नृत्तान्तं सम्यगाचरेत्
एवं समाप्य विधिवत् चराडेशं पूजयेत्ततः २७
दराडपश्चिमदीपेन चराडेशाग्रे निवेदयेत्
पूजयेत्पूर्ववत्कृत्वा सर्वालंकारसंयुतम् २८
दीपपूजाविधिः प्रोक्तः लाजपूजाविधिं श्रुणु २९
इति दीपपूजापटल एकोनत्रिंशदुत्तरशततमः

## लाजपूजाविधिपटलप्रारंभः

अथ वद्त्ये विशेषेण लाजपूजा विधिक्रमम्
सर्वरोगनिवृत्यर्थं सर्वशान्तिकरं शुभम् १
विजयं मृत्युनाशञ्च सर्वाभीष्टसुखप्रदम्
लाजपूजासमायुक्तं भुक्तिमुक्तिप्रदं नृणाम् २
केवलं शुद्धलाजेन मुक्त एव विशेषतः
तुषान् व्यपोह्य वस्त्रेण भारादिदशभारकम् ३
प्रस्थं ह्यस्याष्टपूर्वं स्यात् तस्यार्द्धं वार्द्धमेव वा
योजयेदधिवासस्तु सद्य एव समाचरेत् ४
विज्ञाप्य देवदेवेशं पूजावत्सम्यगाचरेत्
विशेषस्नपनोपेतं गव्यं पञ्चामृतैस्ततः ५

विशेषहोमसंयुक्तं समिदाज्यान्नकैस्सह
पूर्ववत्पूजनं कृत्वा पश्चाल्लाजेन पूजयेत् ६
लिंगमूर्द्धादिपीठान्तं स्थलान्तं वा समाचरेत्
शिवमन्त्रं समुच्चार्य पूजयेत्तु विशेषतः ७
वस्त्राभरणमालाद्यैरलंकृत्य विशेषतः
नैवेद्यञ्चैव तांबूलं धूपदीपसमन्वितम् ८
आरात्रिकसमायुक्तं दर्पणं छत्रचामरैः
एवं संपूज्य विधिवत् सर्वपापनिकृन्तनम् ९
आचार्यं पूजयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः
भक्तांश्च पशिचारांश्च पूजयेत्तु विशेषतः १०
इति लाजपूजाविधिपटलस्त्रिंशदुत्तरशततमः

संक्रमविधिपटलप्रारंभः

संक्रमस्य विधिं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम्
पुष्यमासादिमार्गान्तं पूजयेत्परमेश्वरम् १
उत्तरे चायनेतीते भविष्यद्दक्षिणायने
मेषे चाश्वयुजे मासे मद्ध्ये काले तथैव च २
सिंहवृश्चिककुंभेषु वृषे चादौ समाचरेत्
कन्नयायां मिथुने मीने धनुष्यन्ते समाचरेत् ३
पुष्याषाढे प्रकर्तव्यं दीपारोहं विशेषतः
शिवाग्रे मण्टपे वाथ सर्वालंकारसंयुतम् ४
एकाद्यनेकदीपैश्च यथा वित्तानुसारतः
पूर्वतः परतश्चापि घटिकाषोडशस्ततः ५
पुण्यकालमिति प्रोक्तं सर्वदोषनिकृन्तनम्
पूजयेत्तु विशेषेण गव्यैः पञ्चामृतैस्तथा ६
नवकादिशतान्तानि कलशैस्स्नापयेत्ततः

जलधाराभिषेकं वा तत्तत्कालेऽप्यहर्निशम् ७
घृतं वा गंधतोयं वा क्षौद्रं वा दुग्धमेव वा
त्रिपादूर्ध्वे तथा कुर्याच्चतुष्पादार्धकेऽपि वा ८
स्नापयेत्परमेशानं पूर्वोक्तविधिना ततः
शान्तिहोमं ततः कृत्वा सर्वशान्तिकरं शुभम् ९
नैवेद्यं धूपदीपञ्च नृत्तान्तं सम्यगाचरेत्
एवं संक्रमपूजायां ग्रहणार्चामथ श्रुणु १०
इति संक्रमपूजाविधिपटल एकत्रिंशदुत्तरशततमः

ग्रहणपूजाविधिपटलप्रारंभः
अथ वक्ष्ये विशेषेण ग्रहणस्यार्च्चनं श्रुणु
पुष्यमासादिमार्गान्तं ग्रहणं चंद्रसूर्ययोः १
ज्येष्ठान्तं पुष्यमासादि ग्रहणस्य फलप्रदम्
उत्तराषाढमासादिमार्गान्तं ग्रहणस्य च २
सर्व एव फलञ्चैव राजराष्ट्रस्य दोषकृत्
प्राणपीडाञ्च कुरुते जन्मनक्षत्रके सति ३
तस्मात्सर्वप्रयत्नेन शिवपूजां समाचरेत्
सर्वोच्छिष्टं समारभ्य सूर्यग्रहणकं पुरा ४
सर्वोच्छिष्टान्तकं कृत्वा सोमग्रहणमारभेत्
स्नानदानजपं होमं यजनञ्चैव कथ्यते ५
ग्रहणस्यैव तत्काले पाकन्नैवाशनञ्च च
तत्काले चौषधं ग्राह्यं सफलं बलवर्द्धनम् ६
मंत्रविद्याजपो ग्राह्यः काम्यार्त्थञ्च फलप्रदम्
वृषस्य तु फलं नीहं मुसलाहतवृक्षवत् ७
वृक्षं बहुफलं सिद्धं सर्ववृक्षेषु योजयेत्
स्त्रीणां वाचाश्विनीनाञ्च संयोगं ग्रहणस्य तु ८

पुत्रवक्रसमुत्थञ्च सर्वमुद्भवमुच्यते
अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः ९
संक्रान्तौ बाह्यमावास्यां षडशीति मुखेऽपि च
सिनीवाल्यांकुहौ चैव कन्दके काळकण्ठके १०
एवमादिषु कालेषु शिवं संपूजयेत्ततः
पुण्याहं प्रोक्षणं कृत्वा गव्यैः पञ्चामृतैरपि ११
अष्टोत्तरशतैर्वापि एकाशीतिरथापि वा
पञ्चाशत्पञ्चविंशद्भिष्षोडशैर्न्नवभिस्तु वा १२
स्नापयेत्परमेशानं शान्तिहोमपुरस्सरम्
घृतस्नानं पयस्नानं क्षौद्रस्नानमथापि वा १३
एतैर्द्धाराभिषेकं वा जलधारान्तथैव च
नमकञ्चमकञ्चैव रुद्रसूक्तन्तथैव च १४
एकादशं तद्विगुणं त्रिगुणं वा पृथक्पृथक्
जपेयुर्ब्राह्मणाश्चैव युग्मसंख्यान्क्रमेण तु १५
आचार्येण जपित्वा तु मूलमंत्रञ्च संहिताम्
एवं संपूज्य विधिवन्नैवेद्यं व्यञ्जनैस्सह १६
पायसान्नं गुळान्नञ्च दत्वा पूपसमन्वितम्
पानीयाचमनन्दत्वा तांबूलञ्च निवेदयेत् १७
धूपदीपसमायुक्तमारात्रिकसमन्वितम्
नृत्तगीतसमायुक्तं दर्पणछत्रचामरैः १८
वेदादीन् ज्ञापयेत्तत्र चण्डपूजान्तमाचरेत्
नित्यं नैमित्तिकञ्चैव तंत्रेणैव समाचरेत् १९
सर्वपापहरञ्चैव सर्वशान्तिकरं शुभम्
आचार्यं पूजयेत्तत्र दक्षिणां संप्रदाव च २०
नैवेद्यपूतं सर्वाणि आचार्याय प्रदापयेत्
अपूपाष्टं समिद्युक्तं तांबूलञ्च निवेदयेत् २१

फलादिभद्दयद्रव्यैश्च दशांशन्दापयेत्ततः
इत्थं नैमित्तिके नित्ये काम्ये चैव प्रदापयेत्  २२
इति ग्रहणपूजाविधिपटलः द्वात्रिंशदुत्तरशततमः

विशेषपूजाविधिपटलप्रारंभः

विशेषयजनं वद्दये श्रुणुष्वकमलोद्भव
नित्यन्नैमित्तिकञ्चैव काम्यन्तेति त्रिधा भवेत्  १
नित्यन्तु त्रिविधं प्रोक्तं तद्विधानमिहोच्यते
नित्यन्तु नित्यपूजाञ्च संध्यां प्रतियजेत्क्रमात्  २
प्रत्यहं पूजयेच्छंभोर्नित्यपूजाविधानतः
नित्यनैमित्तिकं वद्दये श्रुणुष्वकमलासन  ३
अमावास्याष्टमी चैव नित्येन पूजयेत्क्रमात्
किञ्चिदस्मिन्विशेषोस्ति सितासितत्रयोदशी  ४
रवेरस्तमयात्पूर्वे पृथक्पूजां समाचरेत्
इत्येवं त्रिविधं प्रोक्तं पूजयेद्देशिकोत्तमः  ५
नैमित्तिकमथो वद्दये नित्यपूजानुकूलतः
संक्रान्तौ च चतुर्दश्यां पर्वणयुभयपद्मयोः  ६
अयने विषुवे राहुग्रसने मासपूजके
एतेष्वन्येषु सर्वेषु नैमित्तिकमिहोच्यते  ७
नैमित्तिकन्तु नित्यान्ते कर्तव्यमविरोधतः
नित्ये प्रवर्तमाने तु यदा नैमित्तिके भवेत्  ८
समाप्येकेन कालेन नित्यन्नैमित्तिकञ्चरेत्
सन्ध्याय परकाले वा पूर्वे वा विद्यते यदि  ९
नैमित्तिकं स्वकाले तु कृतनित्यविरोधतः
एकत्र चैवकालेन उभयत्रसमाचरेत्  १०
नैवेद्यान्तं वा दीपान्तं नैमित्तं नित्यमेव वा

विधाय प्राप्तकाले तु नैमित्तिकमथाचरेत्  ११
स्वकालानुष्ठिता त्वैषा क्रियासर्वार्त्थसाधनी
किञ्चिदस्तिविशेषोस्मिन् मासपूजाविधानके  १२
प्रातस्संध्यावसाने वा अन्यसंध्यावसानके
अन्नपूजादिकं कृत्वा विधिवद्देशिकोत्तमः  १३
मद्ध्याह्नयजने काले द्रव्यं लिंगाद्विसर्जयेत्
जलेनैव तु संस्नाप्य शेषं पूर्ववदाचरेत्  १४
उषः काले तु पूर्वाह्णे मद्ध्याह्ने वा पराह्नके
सायाह्ने च प्रदोषे तु संक्रमे संभवे सति  १५
तीर्त्थञ्च यजनं कृत्वा एकाहोत्सवमाचरेत्
रात्रौ वाथ दिवावापि ग्रहणे चंद्रसूर्ययोः  १६
तत्काले तीर्त्थमाश्रित्य पूजयेत्तु विशेषतः
नैमित्तिकमिदं प्रोक्तं काम्यपूजामथ श्रुणु  १७
यैः प्रार्त्थितप्रपूजास्तु सापूजाकामिकोच्यते  १८

अतः परं प्रवक्ष्यामि विशेषयजनं श्रुणु
सर्वरोगविनाशार्थमायुरारोग्य वर्द्धनम्  १
मोक्षदं कामदं पुण्यं सर्वशत्रुविनाशनम्
अनावृष्टौ च दुर्भिक्षे परराष्ट्रप्रवेशके  २
राजाभिषेकसमये युद्धारंभे तथैव च
विशेषपूजां यत्नेन इष्टकाम्म्यफलप्रदम्  ३
पूर्वाह्णे चैव मद्ध्याह्ने सायाह्ने च तथैव च
अथवा मद्ध्यसंध्यायां प्रशस्तन्दक्षिणोत्तरम्  ४
गोक्षीरेण तु संपूर्य क्रमेणैव विशेषतः
घृतेनैवाभिषेकन्तु तच्छ्रेष्ठञ्च विशिष्यते  ५
इक्षुसारफलं कृत्वा शालिभिर्विमलैस्तथा

गंधपुष्पादिनाभ्यर्च्य हृदयेनैव मन्त्रतः ६
शरावे ताम्रपात्रे वा स्थापयेत्तु ततोपरि
पञ्चगव्य विधिं स्थाप्य पञ्चामृतन्तु कल्पयेत् ७
पुरायाहं वाचयेत्तत्र पूजयित्वा विशेषतः
त्रियंबकेन मन्त्रेण कुर्यात्क्षीराभिषेचनम् ८
शिवांगैश्चैव विद्यांगैर्ब्रंहपञ्चकमुच्चरन्
शिवमन्त्रेण संपूज्य कुर्यात्तत्पञ्चगव्यकैः ९
व्योमव्यापि षडंगेन कुर्यात्पञ्चामृतन्तथा
जलेन स्नापयेत्पश्चात्प्रासादेन तु मन्त्रतः १०
आसनावरणादीनि पूर्ववत्परिकल्पयेत्
नित्यपूजावसानान्ते विशेषयजनन्ततः ११
पायसान्नन्ददेत्पश्चात्कदळीफलसंयुतम्
नैवेद्यन्दापयेत्पश्चात् यथाशास्त्रानुसारतः १२

इति विशेषपूजाविधिपटलस्त्रयत्रिंशदुत्तरशततमः

## जीर्णोद्धारविधिपटलप्रारंभः

जीर्णोद्धारविधिं वक्ष्ये सर्वारिष्टनिवारणम्
लिंगस्य पिण्डिकायाश्च प्रतिमायालयस्य तु १
तरुणाख्यस्य लिंगस्य परिवारालयस्य तु
प्राकारस्यैव चानेषामूर्द्धारञ्चोत्तरक्रियाम् २
स्फुटिते खण्डिते भिन्ने नाशिते शनिनाग्निना
उन्मत्तैरेवचोरैर्वा नाशिते शत्रुभिस्तु वा ३
सरित्स्रोतः करिभ्यां वा जीर्णकाले विपर्यये
क्षेत्रं जीर्णं यथा क्षेत्रन्त्यक्त्वान्यं प्रतिपद्यते ४
तथाजीर्णानि वस्त्राणि सद्यो मुञ्चन्ति देवताः
तदृष्ट्वाभूतवेताळापिशाचब्रंहराक्षसाः ५

प्रेताल्पसत्वशून्याश्च आश्रयन्ति न संशयः
राष्ट्रग्रामनृपाणाञ्च स्थापकस्यैव मंत्रिणः ६
कुर्वन्ति ते भयं ह्युग्रं दुर्भिक्षं मरणं ध्रुवम्
अर्चितञ्चेन्निहन्त्याशु नवाहन्याशुपूजिता ७
तस्मादुद्धारणञ्चाहुर्विधिदृष्टेन कर्मणा
आदिशैवकुलोद्भूतः प्रागुक्तलक्षणो गुरुः ८
सुस्नातस्सकळी कृत्वा गंधपुष्पैरलंकृतः
नववस्त्रधरोष्णीषो हेमपञ्चांगभूषितः ९
लिंगाग्रे स्थंडिलं कृत्वा हस्तमात्रेण देशिकः
अभ्यर्च्य देवदेवेशं गंधपुष्पादिभिः क्रमात् १०
जीर्णाद्धारन्तु विज्ञाप्य प्राणानायम्यदेशिकः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ११
मूलेन जुहुयाद्धीमान् समिधं ब्रह्मवृक्षजाम्
घृतं निक्षेति मन्त्रेण घृतं हुत्वा विशेषतः १२
हृदयेन चरुं हुत्वा लाजं वामेन होमयेत्
सर्षपन्नेत्रमन्त्रेण क्षीरं सद्येन होमयेत् १३
एकैकञ्जुहुयाद्धीमान् अष्टोत्तरशतं क्रमात्
द्रव्यान्ते चैव द्रव्यान्ते व्याहृतिञ्जुहुयात्ततः १४
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पूर्णाहुतिन्ततः कृत्वा स्विष्टमग्नेति मन्त्रतः १५
उद्धारयत्ततो लिंगं भुजेन वृषभेन वा
वृषभं श्वेतवर्णञ्च युवानञ्च बलं वरम् १६
सुस्नाप्य पुरश्रृंगाणि हेमपट्टञ्च वेष्टयेत्
मौंजीरज्जुं समादाय त्रिवृतं श्लक्ष्णकं परम् १७
रज्वाबद्ध्वा वृषग्रीवे लिंगमूले दृढं क्रमात्
उद्धारयेत्ततो लिंगं वृषेन हृदिना बुधः १८

गजेनोद्धारणञ्चेत्तु गोचर्म्मकृतरज्जुना
पिरिडकां घातयेत्तत्र कुन्दाल्याहैमजेन तु १९
पादशैलादिशैलाश्च जीर्णाश्च लक्षणान्विताः
सन्त्यज्य स्थापनोक्तेन लिङ्गं वै स्थापयेन्नवम् २०
जीर्णारवं समुद्धत्य शिबिकायां रथेऽपि वा
आरोप्य नृत्तवाद्यैश्च सर्वालंकारसंयुतम् २१
ततो भक्तजनैस्सार्द्धं स्तोत्रमंगळवाचकैः
समुद्रे निक्षिपेच्छैलं निक्षिपेदथवा पुनः २२
निक्षिपेन्मृगमयन्तोये क्षिपेदग्नौ च दारुजम्
आचार्यं पूजयेत्तत्र गोभूमिकाञ्च नादिभिः २३
आश्रच्छेदे च भिन्ने च घृतवारिविहीनके
अन्नन्येषां जीर्णकाले तु उद्धरेत्पिरिडकां पुनः २४
तदग्रे स्थरिडलं कृत्वा सिकतैस्सुसितैश्शुभैः
आदावन्ते च कर्तव्यं अग्निकार्योक्तमार्गतः २५
समिधं सद्यमन्त्रेण हृदयेन घृतं हुनेत्
अघोरेण चरुं हुत्वा लाजं वै शिखया हुनेत् २६
तिलमन्त्रेण मन्त्रेण सर्षपं कवचेन तु
तराडुलं वामदेवेन प्रत्येकं पञ्चविंशतिः २७
कुन्दल्याखातयेद्धीमान् वृषेणोद्धारणं विना
पिरिडकास्पर्शनोक्तेन स्थापयेन्नवपिरिडकाम् २८
जीर्णान्तस्यैव बिंबस्य उद्धारञ्चाधुना श्रुणु
शिरोबाहू तथा पादौ हीने स्यात्परिवर्जयेत् २९
जीर्णो लोहेन तत्कुर्यात्प्रमाणेन च पूर्ववत्
कृत्वा तु स्थापयित्वा तु पूर्ववत् सम्यगर्चयेत् ३०
भ्रूरेखा चक्षुरेखा च आस्यरेखा च नासिका
एतेषाञ्च क्षयन्दृष्ट्वा प्रतिमां परिवर्जयेत् ३१

तद्वेरन्तु परिग्राह्य समुद्रे तु विनिक्षिपेत्
मन्दिरे चोद्धृते चूर्णे लिंगे निर्दोषसंस्थिते ३२
बालहर्म्यन्ततः कुर्यात् बालस्थानोक्तमार्गतः
बाललिंगन्ततः कृत्वा स्थापयेत्तरुणालये ३३
प्रतिमस्य विमानस्य वृषेणोद्धारणं विना
स्तूप्याद्याद्येष्टकात्प्राग्वत् गर्भन्याससमन्वितम् ३४
आद्येष्टकांक्षिपेत्प्राग्वत् गर्भन्याससमन्वितम्
धामान्तराळपर्यन्तं तावत्कृत्वा सलक्षणम् ३५
यद्द्रव्येणोद्धृतं हर्म्यं यत्प्रमाणं यदा कृति
तत् द्रव्येण पुनः कृत्वा तत्प्रमाणेन बुद्धिमान् ३६
सर्वावयवसंपूर्णं यथा शोभं यथा बलम्
दार्वेष्टकशिलाञ्चैव जीर्णप्रासादकेऽपि च ३७
कर्मयोग्यस्तु संग्राह्या शेषास्संपरिवर्जयेत्
हीनमानोद्धृते धाम्नि शास्त्रोक्ते नाधिकं कुरु ३८
तस्माद्धीनन्नकर्तव्यमुत्कृष्टं शुभदं स्मृतम्
स्थूपिना च विशाला च कपोता कूटपारकाः ३९
एतेष्वेकं यदा हीनं कृत्वा तद्वद्यथा पुनः
जीर्णके बाललिंगे तु द्धारणन्तु तथा कुरु ४०
तस्याग्रे स्थंडिलं कृत्वा निर्दोषैस्सिकतैस्सितैः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ४१
समिधा सद्यमन्त्रेण घृतमीशानमंत्रतः
हृदयेन चरुं हुत्वा एषामीशेन लाजकम् ४२
सिताब्जं नेत्रमंत्रेण बिल्वपत्रन्तु वर्मणा
अष्टोत्तरशतं हुत्वा प्रत्येकन्तु विशेषतः ४३
द्रव्यान्ते व्याहृतिं हुत्वा आहुतिञ्जुहुयात्ततः
पूर्णाहुतिं ततः कृत्वा शिरोमंत्रेण देशिकः ४४

नवलिंगं प्रकुर्वीत पूर्ववत्तेन वस्तुना
तरुणस्थापनञ्चोक्तमार्गेणैव समाचरेत् ४५
स्थापनात्पूर्वकाले तु लिंगं हस्तेन चालयेत्
दक्षिणाञ्च गुरोर्दत्वा भूसुरान् भोजयेत्ततः ४६
परिवारालये जीर्णे आलयस्योक्तवत्कुरु
पूर्वाकृत्यापुनः कुर्याल्लक्षणेन विचक्षणः ४७
न्यूनाकृत्या कृतञ्चेत्तु सर्वदोषसमुद्भवम्
स्थापिते नोक्तदेशे तु तद्विनारंभतंत्रके ४८
उक्तस्थाने प्रकर्तव्यं परिवारादिकान् क्रमात्
जीर्णिते चात्र बिम्बे तु उद्धरेत्तु विशेषतः ४९
तत्तद्धामाग्रके पीठं कृत्वामूर्तिं समर्चयेत्
स्थापनोक्तक्रमेणैव बिंबं वै स्थापयेन्नवम् ५०
प्राकारे जीर्णिते तत्र कुर्यादुद्धारणं क्रमात्
एकदेशविहीनश्चेत् पुनस्संधानमाचरेत् ५१
आसमन्तात् द्वितीयञ्चेत्तन्मूलन्तत्ततोद्धरेत्
आद्येष्टकां ततः क्षिप्त्वा प्राकारन्तु समारभेत् ५२
तस्माद्धीनं न कर्तव्यं कर्तव्यमधिकं शुभम्
जीर्णिते गोपुरे तत्र प्रासादस्योक्तवत्कुरु ५३
अन्येषां मण्टपादीनां प्रासादस्योक्तवत्कुरु
एवं सामान्यमुद्दिष्टं विशेषमधुना श्रुणु ५४
इष्टकायां परं पीठं पीठादाभासमुत्तमम्
आभासादर्द्धचित्रन्तु अर्द्धचित्रात्तु दारुजम् ५५
दारुजान्मृण्मयं श्रेष्ठं तच्छ्रेष्ठं शैलजं स्मृतम्
शैलजाल्लोहजं श्रेष्ठं लोहजाद्रत्नजं तथा ५६
चलत्वाल्लोहरत्नैश्च मूललिंगन्न कारयेत्
द्रव्योत्कृष्टेन कर्तव्यं विपरीतन्न कारयेत् ५७

एवं यः कुरुते मर्त्या लभते मौलिकं फलम्
इहैव पुत्रवान् श्रीमान् सोन्ते सायुज्यमाप्नुयात् ५८
इति जीर्णोद्धारपटलश्चतुस्त्रिंशदुत्तरशततमः

बालस्थापनप्रतिष्ठाविधिपटलप्रारंभः
बालस्थानप्रतिष्ठान्तु प्रवक्ष्यामि विशेषतः
द्विधाबालालयं प्रोक्तं प्रथमञ्च द्वितीयकम् १
ग्रामे वा नगरे वापि पत्तने राजधानिके
एतेष्वन्येषु देशेषु मूलस्थानस्य वत्पुरा २
वास्तुनिर्देशनादान्ते कल्पितं प्रथमं भवेत्
षडष्टौ च तथा पीठे लिंगे च पतिते तथा ३
शिल्पिनाकारिते हर्म्ये भिन्ने च पतितेऽपि च
यन्नवीकरणार्थन्तु कर्तव्यं बालहर्म्यकम् ४
द्वितीयमिति विख्यातं बालालयं प्रजापते
मासपक्षर्क्षवारादीन् नान्यबालग्रहस्य तु ५
लिंगस्थापनकस्योक्तमार्गेणैव समाचरेत्
तेषु किञ्चिद्विशेषोस्ति श्रेष्ठा वै चरराशयः ६
मद्ध्यमो चोभयो ज्ञेयः अशस्तास्थिरराशयः
द्वितीयाख्यं प्रकर्तव्यं मासपक्षादिभिर्विना ७
निश्चित्य मूलहर्म्यन्तु कारयेत्तरुणालयम्
बाललिंगं प्रतिष्ठाप्य मूलन्तु स्थापयेत्ततः ८
बालहर्म्यं विनापूर्वं मूलस्थानन्न कारयेत्
विना चेद्बालहर्म्येन पुत्रपौत्रविनाशनम् ९
मूलस्थानाग्रके कुर्यादीशाने वाथ सौम्यके
प्राकारे तु तृतीये वा चतुर्थे पञ्चमेऽपि वा १०
मद्ध्यमे तु प्रकर्तव्यं बालस्थानं क्रमेण तु

त्रिहस्ताभ्यां समारभ्य द्वादशांगुलवर्द्धनात् ११
सार्द्धसप्तकरान्तन्तु बालालयमिति स्मृतम्
तेष्वेकन्तु समारभ्य कारयेत्तरुणालयम् १२
शिलादारूमृरामयं वा लिंगं बालग्रहस्य तु
अश्वत्थोदुंबरप्लक्षैश्शमी वृक्षश्च खादिरः १३
मधुकेनाथवा कुर्यात् बाललिंगं सलक्षणम्
विकारांगुलिमायाममधमाधममुच्यते १४
अंगुलांगुलवृद्ध्या तु रंध्रलिंगानि कल्पयेत्
लिंगोदयन्तु नाहं स्यात् सर्ववृत्तिमिहोच्यते १५
शिरो वा वर्तनं कुर्यात् छत्राकारं विशेषतः
सतुर्यश्राब्जवृत्तं वा त्रिधापीठा कृतिस्मृता १६
लिंगेनाहन्तु विस्तारमुत्सेधं स्यात्तदर्द्धकम्
इष्टकासु सुपक्वापि पीठं कुर्यात्तु तद्वयोः १७
रत्नन्यासं प्रकर्तव्यं पादशैलादिवर्जितम्
ब्रंहसूत्रं विना कुर्यात् देवस्य प्रथमस्य तु १८
रुद्रभागं प्रमायामनाहन्तेनैव कल्पयेत्
तन्नाहं पीठविस्तारं तस्यार्द्धं पिंडिका त्रयम् १९
शेषं पूर्वोक्तवत् प्रोक्तं द्वितीयस्यैवमाचरेत्
प्रागेव विधिना कुर्यात् विधिनाचांकुरार्पणम् २०
बालालयाग्रे कर्तव्यं मराटपञ्चतुरश्रकम्
विकारस्तंभसंयुक्तं भानुस्तंभयुतन्तु वा २१
पङ्क्तित्रयसमायुक्तं चतुर्द्वारं सतोरणम्
दर्भमाला समायुक्तं वितानद्ध्वजसंयुतम् २२
मद्ध्यांशे वेदिकां कुर्यात्तच्चतुर्त्थांशकोन्नताम्
वेदिकायाश्च परितश्चोपवेदिं प्रकल्पयेत् २३
वस्वंगुलन्तु विस्तारमुत्सेधञ्चतुरंगुलम्

तस्याश्च परितश्चाष्टदिक्षुकुण्डानि कल्पयेत् २४
दिशासु चतुरश्राणि कोणेष्वब्जानि कल्पयेत्
ईशानचक्रयोर्मद्ध्ये प्रधानं वृत्तकुण्डकम् २५
मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत्
ततश्शिल्पिनमुद्वास्य पुण्याहन्तत्र कारयेत् २६
जलमद्ध्ये प्रपां कुर्यात्सर्वालंकारसंयुताम्
प्रक्षाळ्य पञ्चगव्यैश्च लिंगञ्चास्त्रेण देशिकः २७
शुद्धतोयेन संस्नाप्य गन्धादिभिर्हृदार्चयेत्
वेष्टयेद्वस्त्रयुग्मेन लंबकूर्चसमायुतम् २८
जलेषु जायते लिंगं सद्यैनैव कुशोपरि
त्रिरात्रञ्चैकरात्रं वा वेदायाममथापि वा २९
जलाधिवासनं कुर्यात्कण्ठमात्रजलेषु च
ब्राह्मणान्भोजयेत्तत्र मण्टपे समलंकृते ३०
वास्तुहोमन्ततः कुर्यात्प्रासादे वाथ मण्टपे
पर्यग्निकरणं कुर्यात् वास्तुहोमाय वह्निना ३१
जलादानीय लिंगन्तु स्नानश्वभ्रोपरिन्यसेत्
वस्त्रं विसृज्य लिंगन्तु पूर्ववच्छुद्धिमाचरेत् ३२
कौतुकं बन्धयेद्धीमान्प्रागुक्तविधिना सह
वस्त्रेण वेष्टयेल्लिंगं मन्त्रेण नयनेषु च ३३
शालिभिर्वेदिकोद्ध्र्वे तु दशद्रोणैर्विनिर्मितः
तण्डुलैस्तिलदर्भैश्च पुष्पैश्चैव परिस्तरेत् ३४
शयनं कल्पयेन्मद्ध्ये चर्मजाद्यैर्यजेद्धदा
सर्वातोद्य समायुक्तं स्तोत्रमंगलवाचकैः ३५
प्रागुक्तलक्षणोपेतस्त्वादिशैवस्सशिष्यकः
दिव्यगन्धानुलिप्तांगः पुष्पमाला विभूषितः ३६
शुक्लवस्त्रधरोष्णीषश्शुक्लवस्त्रोत्तरीयकः

पञ्चांगभूषणैर्युक्तस्सकळीकृतविग्रहः ३७
प्रागुक्तलक्षणोपेतैर्वस्त्रांगुलीय धारिभिः
मूर्तिपैस्सहितो दक्षस्त्वाचार्यश्चोत्तराननः ३८
शयने शाययेल्लिंगं प्राक्शिरस्कमधोमुखम्
अभ्यर्च्य हृदयेनैव गन्धाद्यैरुपचारकैः ३९
द्रोणांबुपूरितं सूत्रवेष्टितं कूर्चसंयुतम्
पञ्चरत्नसमायुक्तं सापिधानं सवस्त्रकम् ४०
शिवकुंभं न्यसेत्तस्य मूर्ध्निभागे तु वर्मणा
वर्द्धनीं वामतस्थाप्य सूत्रादिभिस्समन्विताम् ४१
शिवमन्त्रं न्यसेत्कुंभे ध्यात्वा देवीं सदाशिवम्
अष्टत्रिंशत्कलोपेतं तस्य मूलेन पूजयेत् ४२
पूजयेत्तु स्वमन्त्रेण वर्द्धन्यान्तु मनोन्मनीम्
मुकुळीं पद्ममुद्राञ्च लिंगमुद्रां प्रदर्शयेत् ४३
अभितस्तु घटानष्टौ द्रोणगन्धोदपूरितान्
सूत्रादिभिस्समोपेतान् हेमटंकसमन्वितान् ४४
इंद्रादिषु क्रमेणैव स्थापयेद्देशिकोत्तमः
अनन्तादि शिखण्डयन्तान् स्वस्वमन्त्रैर्घटेषु च ४५
न्यस्त्वा तु गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदार्चयेत्
परिवारघटानष्टौ उपवेद्युपरिन्यसेत् ४६
सूत्रादिभिस्समोपेतान् द्रोणाद्योदकपूरितान्
स्वस्वमन्त्रैः क्रमान्न्यस्त्वा गंधादिभिर्हृदार्चयेत् ४७
द्वारकुंभांश्च संस्थाप्य सूत्रादिभिस्समन्वितान्
नवाग्निं वाथ पञ्चाग्निं कल्पयेद्देशिकोत्तमः ४८
विधायैवाब्जकुण्डानि पञ्चाग्निं कल्पयेत्ततः
ऋगाद्यध्ययनन्दिक्षु प्राक्कुर्यात् वेदपारगः ४९
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्

खदिराश्वत्थबिल्वश्चोदुंबरश्च वटस्तथा  ५०
मायूरार्क्कपलाशाश्च पूर्वादिसमिधः क्रमात्
पलाशस्य प्रधानस्य सर्वेषामिद्धममुच्यते  ५१
समिदाज्यान्न सिद्धार्त्थन्तिललाजयवास्तथा
सक्तुं माषञ्च शालिञ्च वैणवञ्च क्रमेण तु  ५२
सद्यादीशानपर्यन्तं मन्त्रैरेवं क्रमाच्चरेत्
शतमर्द्धन्तदर्द्धं वा प्रत्येकं होममाचरेत्  ५३
द्रव्यं प्रतिविशेषेण व्याहृत्याहुतिमाचरेत्
त्रयंबकेन मंत्रेण हुत्वा स्पृष्ट्वा तु लिंगकम्  ५४
आपोराजेति मंत्रेण हुत्वा लिंगं स्पृशेत्ततः
कद्रुद्रायेति मंत्रेण हुत्वा लिंगं स्पृशेत्ततः  ५५
पूर्णाहुतिञ्च शिरसा स्विष्टमग्नेति होमयेत्
स्तोत्रमंत्रजपद्ध्यानैरात्रिशेषं व्यपोह्य च  ५६
अपरे दिवसे धीमान् स्नात्वा तु मूर्तिपैस्सह
सकळीकरणं कृत्वा कुंभान्संपूज्य पूर्ववत्  ५७
पावकञ्चैव संपूज्य गन्धपुष्पादिभिः क्रमात्
जयादिरभ्याधानञ्च राष्ट्रभृच्चक्रमाद्धुनेत्  ५८
देवस्य त्वेतिमंत्रेण होमयेत्तदनन्तरम्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः  ५९
अधमं दशनिष्का च द्विगुणं मद्ध्यमं भवेत्
त्रिगुणं चोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा  ६०
दक्षिणान्दापयित्वा तु मूर्तिपानथ पूजयेत्
दैवज्ञं पूजयेत्पश्चादद्ध्येतॄनपि पूजयेत्  ६१
पूजयेन्मंत्रजप्तृंश्च पर्यष्टपरिचारकान्
मुहूर्तान्नाडिकात्पूर्वे लिंगस्थापनमारभेत्  ६२
उत्थाप्य शयनाल्लिंगं बालस्थानं प्रवेशयेत्

पीठस्यावटके देशे नवरत्नानि विन्न्यसेत् ६३
स्थापयेत्पिरिडका मद्ध्ये ईशानेन तु पूजयेत्
लिंगायामं त्रिधा कृत्वा भागं पीठे प्रदर्शयेत् ६४
स्थापने तु विशेषेण लिंगन्तु द्वारदिङ्मुखम्
शर्करा सर्जचूर्णञ्च समं संग्राह्य देशिकः ६५
माहिषन्नवनीतञ्च यथा युक्त्या तु योजयेत्
प्रक्षिप्योलूखले धीमान् विवरे तस्य योजयेत् ६६
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत्
शंखदुन्दुभिनादैश्च गीतनृत्तसमाकुलम् ६७
ब्रह्मघोषसमायुक्तं नानाभक्तजनैर्युतम्
छत्रध्वजवितानैश्च वीणापटहनादयुक् ६८
ढक्कापणववाद्यैश्च घटमद्दळनादयुक्
झल्लरी जर्झरी नादैर्धूपदीपसमायुतम् ६९
वर्द्धनी स्त्रावसहितं मंगळांकुरसंयुतम्
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ७०
कृत्वा तु गर्भगेहे तु स्थापयेत्स्थंडिलोपरि
आसनं कल्पयेत्तत्र पूर्वोक्तविधिना सह ७१
अष्टत्रिंशत्कलान्न्यासं कृत्वा लिंगे विशेषतः
ध्यायेत्सदाशिवं तत्र ईशानेनार्चयेद्बुधः ७२
कुंभात् बीजं समादाय लिंगमद्ध्ये तु विन्न्यसेत्
पिंडिकायां न्यसेच्छक्तिं बीजं लिंगस्य गोचरे ७३
लिंगं कुंभोदकैः स्नाप्य पिंडिकां करकोदकैः
अष्टविद्येश्वरांस्तत्र पीठे पूर्वादिषु न्यसेत् ७४
अर्चनोक्तं समभ्यर्च्य शेषं युक्त्या समाचरेत्
परिवारघटेभ्यस्तु स्वस्थानेषु क्रमान्न्यसेत् ७५
स्नपनं कारयेत्पश्चात् प्रभूतहविषन्ददेत्

नित्योत्सवादिकान्सर्वान् बालस्थाने तु कारयेत् ७६
मूलालयप्रतिष्ठाञ्च क्षणकालविधिक्रमम्
यात्राहोमन्तदर्द्धाभिर्जुहुयाद्देशिकोत्तमः ७७
एवं प्रथममाख्यातं द्वितीयमधुना श्रुणु
पूर्वोक्तलक्षणोपेतं मंटपं कारयेद्बुधः ७८
स्थापनादिवसात्पूर्वरात्रौ चैव विशेषतः
मूलाग्रे हाग्रहः सम्यक् पूर्ववत्स्थरिण्डले कृते ७९
कुंभान्संस्थाप्य पूर्वोक्तविधिना देशिकोत्तमम्
मूललिंगं समारभ्य गंधाद्यैर्हविषान्तकम् ८०
प्रणम्य देवदेवेशं कर्तृभिस्समनुज्ञकः
वत्सरत्रयमारभ्य यावत् द्वादशवत्सरम् ८१
तेष्वन्तरेनवी कृत्वा तं पुनः स्थापयाम्यहम्
इति विज्ञाप्य तत्कर्ता देशिकेन सहैव तु ८२
लिंगाद्देवं समावाह्य कुंभमद्ध्ये न्यसेद्गुरुः
पीठेदेवीं समावाह्य वर्द्धनीं मद्ध्यमे न्यसेत् ८३
--दग्रे होमकर्त्मार्त्थं स्थलं सकलकैश्शुभैः
कृत्वाग्न्याधानकादीनि प्रागुक्तविधिनाचरेत् ८४
मूलेनैव तु मन्त्रेण स्राषाढं समिधं हुनेत्
घृतं घृतेति मन्त्रेण घृतमन्त्रन्तु वर्मणा ८५
प्रत्येकं शतमर्द्धं वा तदर्द्धं वापि होमयेत्
द्रव्यान्ते व्याहृतिं हुत्वा प्रणवाहुतिमाचरेत् ८६
वारैरंगारवाराद्यैर्नक्षत्रैस्तुरगादिभिः
मेषाद्यैर्मासप्रमुखैः तिथिभिः प्रथमादिभिः ८७
स्रब्जान्तं जुहुयात्पश्चात् यावत्तावत्क्षणैष्टकम्
होमद्रव्यं तदन्ते तु क्षणहोममिति स्मृतम् ८८
कुंभानुद्धृत्य पूर्वोक्तमूर्तिपैस्सह देशिकः

संस्थाप्य देशिको यस्तु सर्वं पूर्ववदाचरेत् ८९
नित्यकार्याणि सर्वाणि तथानैमित्तिकानि तु
बालस्थाने तथा कुर्याद्यावन्मूलप्रदेशके ९०
सकळानान्तु सर्वेषां कर्तव्यो बालबिंबके
दारुणप्रतिमा वापि पीठं वा चेष्टकामयम् ९१
जान्वन्तं कन्नचसं प्रोक्तं बाह्वन्तं मद्धचमं भवेत्
तन्मानमुत्तमं प्रोक्तं बालबिंबस्य कीर्तितम् ९२
षोडशांगुलमानेन पीठञ्चेत्संप्रकल्पयेत्
विस्तारं तत्समं ज्ञेयं मेखलात्रयसंयुतम् ९३
एकैकं त्र्यंगुलन्तारमुत्सेधन्तु शरांगुलम्
वेदांगुलेन पद्मोच्चं द्व्यंगुलं कर्णिकोच्छ्रयम् ९४
कारयेदिष्टकाभिश्च सुस्निग्धासुधया सह
द्वितीयस्योक्तवत्सर्वं कुर्वंस्तं षड्विशेषकम् ९५
प्रतिमां वाथपीठं वा दैविके स्थापयेद्बुधः
मन्त्रभेदो भवेदत्र क्रियाभेदो न विद्यते ९६
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ९७
इति बालस्थापनविधिपटलः पञ्चत्रिंशदुत्तरशततमः

अष्टबंधनविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि चाष्टबन्धविधिक्रमम्
अकारं सृष्टिरूपन्तु ष्टकारं स्थितिरूपकम् १
बकारं संहृतिश्चैव तिरो भावन्धकारकम्
अनुग्रहन्नकारञ्च बिन्दुस्सर्वत्र साधकः २
इत्येवं मन्त्रतन्त्रञ्च भावनं सन्धिबन्धनम्
अष्टबन्धनशून्ये च पूर्वे राष्ट्रस्य दोषकृत् ३
आग्नेय्यामग्निदाहन्तु याम्ये वा मृतिरुच्यते

ग्रामनाशन्तु नैर्ऋत्यां वारुण्यां वर्षवर्जितम् ४
वायव्यां स्त्रीविनाशन्तु सौम्ये सुतविनाशनम्
ऐशान्यां धननाशन्तु सर्वदोषः प्रवर्त्तते ५
बिन्दुमात्रे च विच्छिन्न ज्वरमारी प्रवर्त्तते
यवांगुलन्तु विच्छिन्ने सद्यो बन्धनमिष्यते ६
द्वादशांगुले तु विच्छिन्ने सपादादष्टबन्धनम्
प्रमादात् बन्धहीने तु पूजानैवेद्य निष्फलम् ७
बलिन्नित्योत्सवञ्चैव प्रदक्षिणक्रमेण तु
स्थलञ्चैव प्रवेशन्तु विट्शूद्रसर्वनाशनम् ८
नन्द्यावर्त्तशिलाभागे दुर्भिक्षन्तु प्रवेशयेत्
प्रायश्चित्तमिति ख्यातं शान्तिहोमं समाचरेत् ९
अष्टबन्धनहीने तु पुनर्बन्धन्तु कारयेत्
लाक्षासर्जरपाषाणं माहिषं सीसबन्धनम् १०
त्रिबन्धनमिति ख्यातं सर्वसिद्धिकरं शुभम्
दिनवारमुहूर्त्तञ्च वर्जयेत्तु विचक्षणः ११
सर्वमासेषु कर्त्तव्यमष्टबन्धनकर्म च
स्वयंभूर्दैविकञ्चार्षमासुरं गाणवन्तथा १२
मानुषं भौतिकञ्चैव सप्तधा लिंगमुच्यते
अपक्वन्दैविके प्रोक्तं पक्वञ्चैव तु मानुषे १३
स्वायंभुवे त्रिबन्धं स्यादार्षे च पञ्चबन्धनम्
अष्टबन्धनकर्माणि मानुषे लिंगसंज्ञके १४
मनोन्मन्यादि शक्तीनां कारयेदष्टबन्धनम्
सर्वेषां परिवाराणं त्रिबन्धं वाष्टबन्धनम् १५
आर्षीकृत्याष्टबन्धन्तु बन्धयेल्लिंगपीठयोः
कार्पासतूलकञ्चैव महिषाज्यन्तु शर्करा १६
लाक्षाचूर्णं मधूश्चिष्टं कुन्दुरुस्कस्य चूर्णकम्

काषाय चूर्णं गौळञ्च द्रव्यं स्यादष्टबन्धनम् १७
एकभागन्तु कार्पासं माहिषाज्यन्तु तत्समम्
शिलाचूर्णञ्चतुर्भागं लाक्षा च ह्येकभागकम् १८
भागार्द्धन्तु मधूच्छिष्टं कुन्दुरुष्कं द्विभागकम्
काषाय चूर्णमेकार्द्धमेकार्द्धं गुळमुच्यते १९
द्रव्याण्यन्यानि सर्वाणि भागार्द्धार्द्धमिति स्मृतम्
पाषाणशर्कराचूर्णं मधूच्छिष्टञ्च गुग्गुलुम् २०
लाक्षा च शंखचूर्णञ्च पञ्चबन्धनमिष्यते
श्रीप्रदञ्चाष्टबन्धं स्यात् भुक्तिदं पञ्चबन्धनम् २१
मोक्षदन्तु त्रिबन्धं स्यात् बन्धयेत् लिंगपीठयोः
प्रासादस्याग्रतो वापि पूर्वस्यांशां करेऽपि वा २२
मण्टपस्योत्तरे भागे यागमण्टपमाचरेत्
श्रुतिद्वारसमायुक्तं वेदतोरणसंयुतम् २३
तन्मद्ध्ये वेदिकां कुर्यादष्टांगुलसमन्वितम्
विस्तारन्तु द्विहस्तं स्याद्दर्पणोदरसन्निभम् २४
अग्निकुण्डं समारभ्य स्थण्डिलेन समन्वितम्
निर्दोषैर्वालुकैश्शुभ्रैरग्नेरायतनं कुरु २५
शालिभिः स्थण्डिलं कुर्यादष्टद्रोणैश्च देशिकः
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैस्तु तिलैरपि २६
लाजपुष्पाक्षतैर्दर्भैर्विकिरेत्तु विशेषतः
गन्धादिभिस्समभ्यर्च्य स्थण्डिले स्थाप्य कुंभकान् २७
लिंगस्थं देवमावाह्य कुंभस्थं योजयेत् गुरुः
उत्तरे वर्द्धनीं स्थाप्य पीठाच्छक्तिं समावहेत् २८
स्थण्डिलन्तु ततो मद्ध्ये शिवकुंभञ्च वर्द्धनीम्
पाद्यमाचमनञ्चार्घ्यं कुशोदं पञ्चगव्यकम् २९
पयोदधिघृतञ्चाष्ट कुंभेष्वेवन्तु विन्यसेत्

अष्टकुंभन्तथा स्थाप्य पीठे तत्तद्दिशासु च ३०
अष्टमूर्त्तिं समावाह्य कुंभस्थान्स्वस्वबीजकैः
ससूत्रान् कूर्चसंयुक्तान् सवस्त्रान्सहिरण्यकान् ३१
नाळिकेरफलोपेतान् वस्त्रयुग्मेन वेष्टितान्
यात्रा होमन्तदग्रे तु कुण्डे वा स्थण्डिलेऽथवा ३२
आवाहनन्तथा देवं पूर्ववत्परिकल्पयेत्
गन्धपुष्पैस्समभ्यर्च्य धूपदीपनिवेद्यकम् ३३
तांबूलन्दापयेद्धीमान् देशिकस्य तु दक्षिणाम्
अष्टबन्धन्तथा पञ्च त्रिबन्धनमथापि वा ३४
तद्द्रव्येण समायुक्तं लूखले निक्षिपेत् बुधः
तद्द्रव्यं कुट्टयित्वा तु मुसलैः कुंभहस्तकैः ३५
सुपक्वञ्चाष्टबन्धानां लिंगपीठस्य रन्ध्रयोः
रन्ध्रेषु बन्धयेद्धीमान् लिंगपीठं सलक्षणम् ३६
अग्निबीजमनुस्मृत्य दग्ध्वाश्रक्षणं दृढं कुरु
तैलाभ्यंगन्तु देवस्य कुर्याद्धीमान् विशेषतः ३७
चन्दनागरुकर्पूरकुंकुमोशीररोचना
गन्धद्रव्ययुतं गन्धं लेपयेल्लिंगपीठयोः ३८
कुंभमद्ध्ये जलद्रोणमष्टकुंभसमन्वितम्
मद्ध्यकुंभन्तथा तोयं वर्द्धनीन्तस्य वामके ३९
सदाशिवं यजेन्मद्ध्ये वर्द्धन्यान्तु मनोन्मनीम्
अष्टकुंभेषु विद्येशानधिदेवाः प्रकीर्तिताः ४०
अग्निकार्योक्तमार्गेण पूजनं परिकल्पयेत्
समिदाज्य चरुञ्चैव होमयेत्तु विशेषतः ४१
अग्निकार्योक्तमार्गेण होमं कृत्वा विशेषतः
द्रव्यान्ते व्याहृतिं हुत्वा स्विष्टमग्नेति मंत्रतः ४२
जयादिरभ्याधानञ्च राष्ट्रभृश्चक्रमाद्धुनेत्

पूर्णाहुतिन्तु शिरसा कुंभमद्ध्ये तु मूर्तिमान् ४३
स्नपनन्तत्र कुर्वीत शास्त्रोक्तेनैव वर्त्मना
द्वारपूजान्ततः कृत्वा लिंगशुद्धिं समाचरेत् ४४
सुमुहूर्त्ते सुलग्ने च मन्त्रन्यासादिकञ्चरेत्
अष्टकुंभान् समादाय परिचारशिरोपरि ४५
शिवकुंभन्ततोद्धृत्य प्रासादस्य प्रदक्षिणम्
परितः स्थितकुंभन्तु लिंगमद्ध्येऽभिषेचयेत् ४६
वर्द्धनीं पिण्डिकामद्ध्ये चाष्टकुंभस्थले क्रमात्
घृतक्षीराभिषेकन्तु स्नपनं कल्पयेत्ततः ४७
फलपूजान्ततः कृत्वा नाळिकेरोदकैस्तथा
बिल्वोदैर्गन्धतोयैश्च फलोदैरिक्षुसारकैः ४८
सर्वगन्धसमायुक्तं सर्वपुष्पैरलंकृतम्
सर्वाभरणसंयुक्तं धूपदीपसमन्वितम् ४९
वेदद्ध्वनि समायुक्तं स्तोत्रमंगळवाचकैः
नैवेद्यन्दापयेत्तस्मै सोपदंशं सपूपकम् ५०
पञ्चवर्णहविः कृत्वा शुद्धान्नमपि दापयेत्
पायसान्नं निवेद्याथ तांबूलन्तु प्रकल्पयेत् ५१
बलिदानन्ततः कृत्वा प्रागुक्तेनैव मार्गतः
मुखवाससमायुक्तं हस्तोद्वर्त्तनमेव च ५२
तदग्रे शुद्धनृत्तं वा सौख्यनृत्तमथापि वा
सवंशं गेयसंयुक्तं कारयेन्मतिमान् ततः ५३
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः
मूर्तिपानान्ततो दत्वा सर्वेषामुपचारकैः ५४
भक्तानां परिचाराणां यथाशक्त्या तु दक्षिणा
ब्राह्मणान् भोजयेद्विद्वान् यथावित्तानुसारतः ५५
प्रायश्चित्तन्ततः कृत्वा पूर्ववत्परिकल्पयेत्

निराजनन्ततः कुर्यात्स्नापयेत्परमेश्वरम् ५६
मन्त्राणान्तु निवेद्याथ मन्त्रपुष्पन्ततो ददेत्
स्नपनं पञ्चगव्यञ्च शान्तिहोमपुरस्सरम् ५७
शंखाभिषेकं कर्त्तव्यं चत्वारिंशद्दिनावधि
श्रीकरं जयदं पुण्यमायुरारोग्य वर्द्धनम् ५८
सर्वशत्रुक्षयकरं सर्वोपद्रवनाशनम्
भुक्तिदम्मुक्तिदन्नृणां सर्वसौभाग्य वर्धनम् ५९

अथातस्संप्रवक्ष्यामि अष्टबंधविधिक्रमम्
लिंगपीठान्तरं योग्यं स्वस्तिकं चाष्टबंधनम् १
पक्वापक्वमपक्वन्तु त्रिविधं बंधयेत्क्रमात्
अष्टबंधनहीने च पूर्वे राष्ट्रं विनश्यति २
आग्नेय्यामग्निदग्धन्तु याम्ये च मृतिरुच्यते
ग्रामनाशन्तु नैर्ऋत्यां वारुण्यां वर्षवर्जितम् ३
सर्वनाशन्तु वायव्यां स्त्रीणां नाशन्तु सौम्यके
ऐशान्यां धननाशं स्यात् सर्वदोषं प्रवर्तते ४
बिन्दुकञ्चैव विच्छिन्ने ज्वरमारिसमुद्भवम्
यवमंगुळविच्छिन्ने सद्यबंधनमेव च ५
द्वादशांगुलविच्छिन्ने सपादादष्टबंधनम्
प्रमादात् बंधहीने तु पूजानैवेद्यमेव च ६
बलिं नित्योत्सवञ्चैव प्रदक्षिणन्तथा क्रमात्
नृत्तं गीतञ्च वाद्यञ्च नित्ये नैमित्तिकेऽपि च ७
उपचाराणि सर्वाणि निर्माल्यन्तु यथाविधि
विष्णुभागन्तु निर्माल्यं नृपायुष्यन्तु संहरेत् ८
ब्रंहभागन्तु निर्माल्यं ब्रंहवर्गविनाशनम्
शिवभागन्तु निर्माल्यं गर्भनाशकरं भवेत् ९

शिवभागन्तु निर्माल्यं सस्यनाशकरं भवेत्
तस्यभागशिलाग्रन्तु दुर्भिक्षन्तु प्रवेशयेत्  १०
पद्मबंधन्तु निर्माल्यं ज्वरमारीविनाशनम्
स्थलञ्चैव प्रवेशन्तु विट्छूद्रस्सर्वनाशनम्  ११
परितंद्रन्तु हीने तु वर्जयेदष्टबंधनम्
----- रं मुहूर्तञ्च वर्जयेत्तु विचक्षणः  १२
सर्वमासे तु कर्तव्यमष्टबंधन्तु कारयेत्
लाक्षासर्जरसंयुक्तं ससिद्धं गुरुबीजकम्  १३
गुग्गुलुं गैरिकञ्चैव गुळन्तैलमिहोच्यते
अष्टबंधनमेवन्तु मानुषं लिंगमुच्यते  १४
स्वयंभूदैविकञ्चैव आर्षं गाणवतन्तथा
त्रिबंधं पञ्चबंधञ्च अष्टबंधनमेव च  १५
प्रमादाद्बंधहीने तु राजराष्ट्रं विनश्यति
लाक्षासर्जरसञ्चैव शंखञ्च कदळीफलम्  १६
मधूच्छिष्टन्तु संयुक्तं बंधयेत्पञ्चबंधनम्
लाक्षागुग्गुलुपाषाणं महिषाज्येन बंधयेत्  १७
त्रिबंधमिति विज्ञेयं पक्वापक्वन्तु बंधयेत्
अपक्वं दैविकं प्रोक्तं अपक्वञ्चैव मानुषम्  १८
पर्वतं लिंगमेवन्तु दीर्घाकारन्तु दैविकम्
दैविकं मानुषञ्चैव गाणवम्मानुषन्तथा  १९
भूमितञ्चैव सर्वेषां ---- लिंगबंधनम्
लूखलं मुसलञ्चैव स्थण्डिलोपरिविन्न्यसेत्  २०
प्रासादाग्राम्य याम्ये च पावके तु विशेषतः
प्रासादाग्राह्य मूलेन द्वारपार्श्वसमायुतम्  २१
आग्नेय्यामग्निवामन्तु  बलिघोषसमायुतम्
ताम्रपात्रसमायुक्तमथवा पात्रमेव च  २२

शिवाग्निं पूजयेत्पूर्वं द्रव्यशुद्धिसमन्वितम्
अष्टद्रव्यसमायुक्तं लक्षणेन समन्वितम्  २३
विद्येश्वराणि बीजानि अद्रव्याणीव देवता
पञ्चमं पञ्चमूर्तिञ्च त्रिमूलञ्च त्रिमूर्तिनम्  २४
एतत्तन्मूलमन्त्रञ्च द्रव्याणि ह्यभिमन्त्रयेत्
लूखलं ब्रह्मदैवत्यं मुसलं विष्णुदैवतम्  २५
अर्चयित्वा विशेषेण कर्तव्यं देशिकोत्तमः
द्रव्यञ्च परिपक्वानां साधकाचार्यमेव च  २६
मानुषं लिंगमावाह्य दैविकं भयवर्जयेत्
गंधद्रव्याणि सर्वाणि नववस्त्राण्यलंकृतम्  २७
यागस्य मण्टपे लक्ष्ये श्रुणुष्वकमलासन
प्रतिष्ठायामुत्सवे च दीक्षायां प्रोक्षणे तथा  २८
स्नपनादिषु कार्येषु यागमण्टपमुच्यते
पूर्वमेवमयाप्रोक्तं भूमिसंग्रहणन्तथा  २९
पुण्याहं वाचयेत्तत्र तत्प्रासादं प्रसादतः
प्रासादं ग्राह्यकञ्चैव याम्ये च वारुणेऽपि वा  ३०
सौम्येशानदिशोर्वापि वह्नौ वापि विधीयते
प्रागग्रं दशसूत्रं वा ऊर्ध्वसूत्रन्तथैव च  ३१
एकाशीतिपदं कृत्वा प्रोक्षयेद्गंधवारिणा
मद्ध्ये नवपदं ग्राह्यं वेदिं तत्रैव कारयेत्  ३२
वेदिकारत्निमात्रेण दर्पणोदरसन्निभम्
षोडशस्तंभसंयुक्तं चतुर्द्वारसमन्वितम्  ३३
सर्वेषाञ्चतुरश्रं वा सर्वेषां वृत्तमेव वा
यावत्पीठोत्कृतिञ्चैव कुण्डं स्यात्तावदेव हि  ३४
ईशान इंद्रयोर्मद्ध्ये वृत्तकुंडमिति स्मृतम्
नवाग्निं वाथ पञ्चाग्निं कारयेत्तु विचक्षणः  ३५

चतुस्तोरणसंयुक्तं चतुर्द्वारसमन्वितम्
उत्तमं पञ्चहस्तन्तु मद्ध्यमञ्चतुर्हस्तकम् ३६
त्रिहस्तं तालसं युक्तमधमं शालमुच्यते
उत्सेधार्द्धञ्च विस्तारं फलकामुपरिन्यसेत् ३७
शूलमस्त्रसमायुक्तं शूलं तालोच्छ्रयं भवेत्
मात्रांगुलेन कर्तव्यं चतुर्दिक्ष्वपि विन्नयसेत् ३८
परितो दर्भमालाभिर्वेष्टयेत्तु विशेषतः
अथमन्त्राणि दर्भाश्च मद्ध्यमं पञ्चमेऽपि वा ३९
उत्तमं सप्तमेवन्तु दशमानं प्रलंबितम्
तस्याग्रञ्चैव रज्जुञ्च कुर्याद्वै देशिकोत्तमः ४०
विधानोपरिसञ्चिन्त्यमुक्तास्त्रग्दामसंयुतम्
अश्वत्थं प्लक्षपत्रञ्च नाळिकेरफलेन तु ४१
दिग्विदिग्विन्यसेत्तत्र पूर्वादीशानमन्त्रकम्
पूर्वायां श्यामवर्णन्तु चाग्नेय्यां रक्तवर्णकम् ४२
याम्यायां कृष्णवर्णन्तु मुक्ताभानैर्ऋते तथा
वारुणयां पश्चिमे भागे वायव्यां तिलमेव च ४३
सौम्यायां स्फटिकाभासमैशान्यां धूम्रमुच्यते
लोकपालस्वरूपन्तु ध्वजमद्ध्ये तु विन्नयसेत् ४४
दर्पणं पूर्णकुंभञ्च वृषभं युग्मचामरम्
श्रीवत्सं स्वस्तिकं शंखं दीपो देवाष्टमंगलम् ४५
वज्रं शक्तिञ्च दंडञ्च वृषं पाशं तथांकुशम्
गदात्रिशूलं चक्रञ्च पद्मञ्चैव दशायुधम् ४६
कारयेदर्चयेत्तत्र प्रोक्षयेत् शिवमन्त्रतः
वेदिमद्ध्ये न्यसेच्छूलं विकिरेत्पद्मसंयुतम् ४७
तस्योन्मंत्रं -- तस्योपकं न्यसेत्
------ मंत्रं विमलान्वितसंयुतम् ४८

अतः परं प्रवक्ष्यामि अष्टबंधविधिक्रमम्
अष्टबंधं त्रिबंधञ्च पञ्चबंधनमेव च १
लिंगपीठान्तरे चैव प्रतिमायान्तथैव च
बंधयेत्तद्विधानेन अष्टपञ्चत्रिबंधनम् २
प्रमादात् बंधहीने तु राजाराष्ट्रं विनश्यति
लाक्षाशर्करसंयुक्तं कुरु विन्दञ्च गुग्गुलुम् ३
गैरिकं गुळतैलञ्च कदळीफलसंयुतम्
अष्टबंधनमेवन्तु सर्वेषां बंधयेत्क्रमात् ४
लाक्षाशर्करपाषाणं मधूच्छिष्टन्तु गुग्गुलुम्
शंखचूर्णसमायुक्तं बंधयेत्पञ्चबंधनम् ५
लाक्षास्फटिकपाषाणं गुग्गुलुञ्च त्रिबंधनम्
स्वयंभुदैविके बाणे बंधयेच्च त्रिबंधनम् ६
दिव्ये च गाणवे चैव आर्षे चैव विशेषतः
पञ्चबंधनयोग्यं स्यात् मर्दयित्वा तु बंधयेत् ७
मानुषे राक्षसे चैव प्रतिमा पीठमेव च
अष्टबंधनयोग्यं स्यात् पक्वापक्वन्तु बंधयेत् ८
अपक्वं पक्वमेवन्तु द्विविधं बंधनक्रमम्
पक्वन्तु पाचयोग्यं स्यात् अपक्वं मर्दनं भवेत् ९
पक्वापक्वपदं ज्ञात्वा बंधयेत्सुदृढं पुनः
अष्टबंधनहीने तु पूजा नैवेद्यमेव च १०
बलिं नित्योत्सवञ्चैव नमस्कारं प्रदक्षिणम्
नृत्तगीतञ्च वाद्यञ्च नित्यनैमित्तिकन्तथा ११
उपचाराणि सर्वाणि निष्फलन्तु विधीयते
पूर्वे तु कलहं विद्यात् आग्नेय्यामग्निदाहकम् १२
याम्ये तु व्याधिपीडा च नैर्ऋत्यां ग्रामनाशनम्

वारुरायां वरुणनाशन्तु वायव्यां सस्य नाशनम् १३
सौम्ये तत्वर्त्थविनाशस्स्यादैशान्यां पुत्रनाशनम्
परितो बन्धहीने तु सर्वनाशन्धनक्षयम् १४
तस्मात्सर्वप्रयत्नेन अष्टबंधनमाचरेत्
एवमंगुष्ठविच्छिन्ने सद्यो बंधनमेव च १५
द्वादशांगुलविच्छिन्ने क्रमात् बंधनमुच्यते
शक्तिस्थानेषु निर्माल्य शैवस्त्रीवर्गनाशनम् १६
विष्णुभागे तु निर्माल्यं नृपवर्गविनाशनम्
ब्रह्मभागे तु निर्माल्यं ब्रह्मवर्गविनाशनम् १७
शिलाभागे तु निर्माल्यं गर्भनाशकरं भवेत्
नन्द्यावर्त्तशिलाभागे दुर्भिक्षन्तु प्रजापते १८
कूर्मासने तु निर्माल्यं सर्वन्नाशकरं भवेत्
स्थलञ्चैव प्रवेशन्तु विट्च्छूद्रौ सर्वनाशनम् १९
पीठान्तरेषु निर्माल्यं ज्वरमारि प्रवेशनम्
दिनं वारं मुहूर्तञ्च वर्जयेत्तु विचक्षणः २०
सर्वमासेषु कर्तव्यमष्टबंधनकर्म च
प्रायश्चित्तं पुरा कृत्वा दिशाहोमं समाचरेत् २१
प्रासादस्याग्र याम्ये तु पावकेऽपि विशेषतः
यागमराटपमेवोक्तं चतुर्द्वारसमन्वितम् २२
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव च
तन्मद्ध्ये वेदिकां कुर्याद्विस्ताराद्धन्तदुन्नतम् २३
नवपञ्चैककुराडं वा दर्पणोदरसन्निभम्
कूटं वापि प्रपां वापि निच्छिद्रं सुदृढं कुरु २४
अष्टद्ध्वजसमायुक्तं स्तंभवेष्टनसंयुतम्
वितानतोरणैर्युक्तं मंगळायुधसंयुतम् २५
निर्द्दिष्टदिवसात्पूर्वं अंकुरार्पणमारभेत्

वास्तुदेवान्समभ्यर्च्य बलिन्दत्वा विधानतः २६
प्रायश्चित्तं पुरा कृत्वा प्रार्थयेत्परमेश्वरम्
वेदिमद्ध्ये विशेषेण अष्टद्रोणैश्च शालिभिः २७
तदर्द्धन्तण्डुलं प्रोक्तं तदर्द्धन्तु तिलैरपि
लाजैः पुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः २८
पद्ममष्टदळं लिख्य पदं प्रतिसकर्णिकम्
मद्ध्ये तु शिवकुंभं स्यात् वर्द्धनीन्तस्य वामके २९
अष्टकुंभेषु विद्येशान् परितः पूजयेत् क्रमात्
यागपूजा प्रकारेण सर्वयागान्समर्च्चयेत् ३०
लिंगस्थदेवमावाह्य कुंभस्थाने तु योजयेत्
चलासनं समभ्यर्च्य धूपदीपसमन्वितम् ३१
नैवेद्यन्दापयेत्पश्चात् उपचारसमन्वितम्
यात्राहोमञ्च दानञ्च कृत्वा तद्विधिना ततः ३२
वाद्यघोषसमायुक्तं यागशालां प्रवेशयेत्
स्थिरासनं समभ्यच्चर्य प्रसन्नं पूजयेच्छिवम् ३३
अग्निकार्योक्तमार्गेण सर्वहोमं समाचरेत्
समिदाज्य चरून्लाजान् तिलं सर्षपमेव च ३४
भृंगमाषाढकञ्चैव गोधूमञ्चणकन्तथा
निष्पावं यवकञ्चैव गुळं तांबूलमेव च ३५
अपूपं कन्दमूलञ्च इक्षुकं पिष्टचूर्णकम्
क्षीरं दधिमधून्येव नाळिकेरफलत्रयम् ३६
अन्यांश्च होमयोग्यांश्च मन्त्रेणैव हुनेद्गुरुः
समिधा सद्यमन्त्रेण आज्यं वामेन हूयते ३७
अघोरेण चरुं हुत्वा लाजन्तत्पुरुषेण तु
तिवमीशानमंत्रेण सर्षपं हृदयेन तु ३८
शिरो मंत्रेण भृंगञ्च शिखया माषमेव च

आढकं कवचेनैव गोधूमन्नेत्रमंत्रतः ३९
चणकञ्चास्त्रमंत्रेण सद्यायास्त्रान्तकं पुनः
पश्चात्तरेण मंत्रेण अन्यद्रव्यांश्च होमयेत् ४०
द्रव्यान्ते व्याहृतिं हुत्वा मूर्तिमन्त्रेण तत्समम्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ४१
मृत्युञ्जयेन गायत्र्या प्रायश्चित्तन्तु होमयेत्
बलिनैवेद्यकन्दत्वा उपचारान्समर्पयेत् ४२
संप्रोक्षणविधानेन अन्यकर्माणि कारयेत्
अष्टबंधनपाकञ्च कृत्वा रंध्रेषु बंधयेत् ४३
कर्पूरञ्चन्दनेनैव लेपयेल्लिंगपीठिके
विशास्वद्धयनं विप्र चतुर्वेदान् शिवांकितान् ४४
कुर्यादुपनिषद्रौद्रं पुराणानि परे शिवे
नृत्तं गीतञ्च वाद्यञ्च नैवेद्यं विविधन्ददेत् ४५
एवं जागरणं रात्रौ प्रभाते विमले सति
स्नात्वा गुरुर्विधानेन नित्यकर्मसमापयेत् ४६
यागशालां प्रविश्याथ ऋत्विग्भिः परिचारकैः
यागपूजा प्रकारेण यागपूजां समाचरेत् ४७
आसनावरणेनैव शिवं सांगं प्रपूजयेत्
गंधं पुष्पञ्च धूपञ्च दीपन्नैवेद्यमेव च ४८
उपचाराणि सर्वाणि प्रत्येकन्तु समर्पयेत्
अग्निं प्रज्वाल्य संपूज्य होमं पूर्ववदाचरेत् ४९
पश्चात् गर्भगृहं प्राप्य पुण्याहं वाचयेद्बुधः
पञ्चगव्येन संस्नाप्य लिंगपीठान्तरं क्रमात् ५०
अष्टमृत्तिकया चैव कषायोदकुशोदकैः
पञ्चपल्लवबिल्वैश्च प्रत्येकमभिषेचयेत् ५१
मंत्रन्यासं ततो न्यस्त्वा नैवेद्यमुपचारकैः

यागशालां पुनर्गत्वा प्रायश्चित्तं हुनेत्क्रमात्  ५२
पूर्णाहुतिं हुनेत्पश्चात्सर्वकर्मसमापयेत्
सुमुहूर्ते त्वनुप्राप्ते यात्रादानं प्रदापयेत्  ५३
प्रधानकुंभमुद्धृत्य वर्द्धनीञ्च शिरोपरि
निधायविद्येश्वरानष्टौ क्रमेण परिचारकाः  ५४
वाद्यघोषसमायुक्तं छत्रचामरसंयुतम्
वेदध्वनिसमोपेतं स्तोत्रमंगळवाचकैः  ५५
हर्म्यप्रदक्षिणं कृत्वा सर्वभक्तजनैस्सह
धूपदीपं पुरा कृत्वा पुष्पलाजान् प्रसारयेत्  ५६
पदात्पदान्तरं गत्वा गर्भगेहं प्रवेशयेत्
लिंगे तु योजयेन्मूर्तिं वर्द्धनीं पीठके न्यसेत्  ५७
अष्टविद्येश्वरान् सर्वान् तत्तत्स्थानेषु योजयेत्
कुंभाभिषेचनं कुर्यादुपचारसमन्वितम्  ५८
आवाहनादिपूजान्तं विशेषेण समाचरेत्
धूपदीपन्ततो दद्यात् नैवेद्यं तदनंतरम्  ५९
अष्टोत्तरशतन्यासं कुर्यात्तत्तद्विधानतः
स्नपनं तत्र कुर्वीत अष्टोत्तरसहस्रकम्  ६०
अष्टोत्तरशतं वापि शान्तिहोमं समाचरेत्
महाभिषेकंकृत्वा तु चन्दनेन समर्पयेत्  ६१
वस्त्रं यज्ञोपवीतञ्च मालिकाभूषणं तथा
आसनावरणञ्चैव विशेषेणैव पूजयेत्  ६२
महाहविर्निवेद्याथ प्रसन्नं पूजयेच्छिवम्
नृत्तं गीतञ्च वाद्यञ्च स्तोत्रमंगळवाचकैः  ६३
प्रार्थयेत्परमेशानं क्षमस्वेत्यपि पातयेत्
दशदानं ततो दत्वा ब्रांहणान्भोजयेत्ततः  ६४
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः

होतृभ्यः परिचाराय यथा शक्तिश्च दक्षिणा ६५
यथा भक्तानुसारेण वित्तशाठ्यन्नकारयेत्
सर्वान्संतोषयेत्पश्चात् उत्सवञ्चैव कारयेत् ६६
एकपक्षं द्विपक्षञ्च त्रिपक्षञ्चाभिषेचयेत्
शान्तिहोमं हुनेन्नित्यं उपचारसमन्वितम् ६७
इति कारणे प्रतिष्ठातन्त्रे क्रियापादे अष्टबन्धनविधिः पटलः

अष्टबन्धविधिं वक्ष्ये समासेन प्रजापते
अपक्वं पक्वमित्युक्तं द्विविधञ्चाष्टबन्धनम् १
अपक्वं पूर्वमुद्दिष्टं पक्वञ्चैवाधुना शृणु
अष्टबन्धनहीने तु राजराष्ट्रस्य दोषकृत् २
तस्मात्सर्वप्रयत्नेन कारयेदष्टबन्धनम्
विशेषपूजनं कृत्वा गंधाद्यैस्तत्र देशिकः ३
तत्पूर्वे स्थण्डिलं कृत्वा निर्माल्यैरक्तशालिभिः
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि ४
लाजपुष्पैः परिस्तीर्य विधिवद्देशिकोत्तमः
नवशक्तिं यजेत्तत्र पुण्याहं वाचयेत्ततः ५
कुंभन्तु पूर्ववत् ग्राह्य तन्तुनाचित्रयेत्ततः
वर्द्धनीं संग्रहेत्तत्र शिवतोयेन पूरयेत् ६
अष्टविद्येशकुंभांश्च साधयेत् पूर्ववत्ततः
लिंगाद्देवं समावाह्य कुंभमद्ध्ये तु विन्नयसेत् ७
वर्द्धनीं मद्ध्यमे न्यस्य पीठाच्छक्तिं समावहेत्
रत्नानि विन्यसेत्तत्र कूर्चवस्त्रपिधानकान् ८
पूजयेदस्त्रमंत्रेण पूर्ववल्लक्षणान्वितम्
पूर्वादीशानपर्यन्तमष्टविद्येश्वरान्न्यसेत् ९
लिंगमुद्रां प्रदर्श्याथ पद्ममुद्रां प्रदर्शयेत्

तस्याग्रे स्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम्  १०
तस्योर्ध्वे विन्यसेत्कुंभं क्रमेणैव तु बुद्धिमान्
पूजयेदंधपुष्पाद्यैर्लिंगशुद्धिन्तु कारयेत्  ११
चन्दनैर्लेपनं कृत्वा लिंगपीठं विशेषतः
पुष्पमालाभिरावृत्य पटेनाच्छादयेत्ततः  १२
देवदेवं नमस्कृत्य पश्चात् बंधनमाचरेत्
त्रिविधं बंधनं विद्धि समासेनोच्यतेऽधुना  १३
अष्टबंधं त्रिबंधञ्च द्विबंधञ्च प्रजापते
द्रव्याणि चाष्टबंधस्य क्रमाद्वक्ष्ये विशेषतः  १४
तैलन्तु प्रथमं विद्धि द्वितीयं गौळमुच्यते
तृतीयं गैरिकं विद्याच्चतुर्थं गुग्गुलुं न्यसेत्  १५
पञ्चमं सिकतां विद्धि षष्ठं स्यात्स्निग्धमुच्यते
सप्तमं स्यात्सर्ज्जरसं लाक्षा चैवाष्टमं स्मृतम्  १६
स्थ ------  भूतपद्मर्षिपर्वताः
क्रमात्तैलादिभागानि पाकञ्चिक्कणवद्भवेत्  १७
पक्वाष्टबंधनं ह्येवमाद्यबंधनमुच्यते
त्रिबंधमाद्यमित्युक्तं गुग्गुलुं स्निग्धसंयुतम्  १८
नवनीतेन संयोज्यं बन्धनञ्चाद्यसंज्ञकम्
द्विबंधमिति विख्यातं प्रयोगमधुना श्रुणु  १९
पक्वाष्टबंधनं कुर्यात् मानुषस्य प्रजापते  २०
अर्षस्य दैविकस्यैव गाणवस्य तथैव च
मृदुपाकेन कर्तव्यं स्वयमुद्भूतलिंगके  २१
आर्द्रबंधनकं कुर्यादाचार्यस्सम्यगेव तु
द्रव्येषु तैलं सर्पिर्वा संयोज्य पाचयेत्क्रमात्  २२
अतिपक्वे प्रजानाशमपक्वे द्रव्यनाशनम्
पक्वं वै पाचयित्वाथ बंधयेल्लिंगपीठयोः  २३

लिंगपीठद्वयोर्मद्ध्ये बंधद्रव्याणि पूरयेत्
अस्त्रादीनि परित्यज्य शुद्धिं कृत्वा प्रपूजयेत् २४
कुंभाद्बीजं समुद्धृत्य लिंगमद्ध्ये निवेशयेत्
वर्द्धन्या बीजमादाय पीठमध्ये निवेशयेत् २५
विद्येशबीजमादाय दळेष्वष्टसु योजयेत्
विशेषपूजनं कृत्वा पश्चात्स्नपनमारभेत् २६
प्रभूतहविषन्दत्वा तांबूलन्तु निवेदयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः २७
अष्टबंधविधिः प्रोक्तः संप्रोक्षणविधिं श्रुणु २८

इति अष्टबन्धनविधिपटलः षट्त्रिंशदुत्तरशततमः

संप्रोक्षणविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि शिवसंप्रोक्षणं शुभम्
आवर्त्तञ्चेद्यनावर्त्तं पुनरावर्त्तकं स्मृतम् १
अंतरितं हि विज्ञेयं प्रोक्षणं तु चतुर्विधम्
आद्यंबालग्रहाद्देवं मूलस्थाने प्रतिष्ठितम् २
तदावर्त्तमिति ज्ञेयमनावर्त्तमथ श्रुणु
प्रायश्चित्तार्त्थकं यत्र प्रोक्षणं तु विधीयते ३
अनावर्त्तमिति ज्ञेयं पुनरावर्त्तकं श्रुणु
प्रासादे पतिते भिन्ने लिंगे च चलिते तथा ४
मूलालयात् समादाय स्थाप्यं बालग्रहे ततः
तस्मान्मूलप्रवेशं यत्पुनरावर्त्तकं स्मृतम् ५
वर्णस्फोटनविच्छिन्ने प्रत्यंगो पांगहीनके
वस्त्राभरणहीने तु पीठांबुजविहीनके ६
स्थलकर्मविहीने च प्रोक्षणञ्चांतरीतकम्
आवर्त्तस्यायनं पक्ष ऋक्षवारादिकान्क्रमात् ७

लिंगसंस्थापने प्रोक्तमार्गेणैव समाचरेत्
आवर्त्तस्यैवमाख्यातमनावर्त्तमथ श्रुणु  ८
न तिथिर्न्न च नक्षत्रो न कालोऽपि तथैव च
कालापेक्षा विना कुर्यादनावर्तमिति स्मृतम्  ९
पुनरावर्त्तकस्यैव मासपक्षर्क्षकादिभिः
पुनरावर्त्तकं कुर्यात्तथांतरितकं स्मृतम्  १०
यत्र होमयुतं कर्मत्वन्नत्र्येषां तु विहीनकम्
ततोंतरितकं यस्तु तत्पूर्वमेवं प्रजापते  ११
आसप्तदिवसात्पूर्वं क्रियते च घटस्थितम्
तदूर्द्ध्वे बालालयं गत्वा तस्मात्मूलप्रशेनं  १२
प्रासादाग्रे तु कर्त्तव्यं दक्षिणे चोत्तरेऽपि वा
विंशती हस्तविस्तारमुत्तमं मराटपं भवेत्  १३
द्वादशस्तंभसंयुक्तं मराटपं त्वधमं भवेत्
दिशश्च विदिशश्चैव निश्छिद्रं व्योमसंभवम्  १४
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानोपरिसञ्छिन्नमष्टदिक् ध्वजसंयुतम्  १५
दीपैः पुष्पैः फलैस्सार्द्धमंकुरैरष्टमंगलैः
स्तंभान्निवेष्टयेत्तत्र प्रतिपादं हि वस्त्रकैः  १६
मराटपन्तु त्रिधा कृत्वा मद्धयभागे तु वेदिकाम्
अरत्निमात्रमुत्सेधं दर्पणोदरसन्निभम्  १७
वेद्यां मूलेन परितश्चोपवेदिं प्रकल्पयेत्
युगांगुलसमुत्सेधं द्वियंगुलञ्च विस्तृतम्  १८
कुराडानि परितः कुर्यात् मानुषे तु पदे क्रमात्
नवाग्निं वाथ पञ्चाग्निमेकाग्निञ्चैव देशिकः  १९
दिशासु चतुरश्राणि विदिशासु कुशेशयम्
ईशानचक्रयोर्मद्धये वृत्तं प्राधानिकं कुरु  २०

पञ्चाग्न्यायतनञ्चेत्तु अब्जकुण्डानि वर्जयेत्
मण्टपस्योत्तरे भागे स्नानश्वभ्रं प्रकल्पयेत् २१
उद्वास्य शिल्पनं पश्चात् गोमयेनोपलेपयेत्
पुण्याहं वाचयित्वा तु ब्राह्मणान् भोजयेत्ततः २२
पश्चादुच्छिष्टमुद्वास्य पुनः पुण्याहमाचरेत्
द्विहस्तमानपर्यन्तं वेदिका विस्तरेण तु २३
तुंगतालसमं कुर्यात् दर्पणोदरसन्निभम्
समर्यकपदे सम्यक् वास्तुहोमन्तु कारयेत् २४
पर्यग्निकरणं कुर्यात् मण्टपन्तेन वह्निना
पूर्वोक्तलक्षणेनैव संयुक्तो देशिकोत्तमः २५
कृत्वा तु विधिना स्नानं शुक्लगन्धानुलेपनः
शुक्लवस्त्रधरोष्णीषश्शुक्लमाल्यैरलंकृतः २६
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
सकळीकरणं कृत्वा पुनर्द्वाराणि वान्यसेत् २७
गर्भगेहं प्रविश्याथ स्नानशुद्धिं ततः कुरु
लिंगशुद्धिं ततः कृत्वा स्नपयेत् गन्धतोयकैः २८
पुण्याहञ्च ततः कृत्वा शुद्धोदैरभिषेचयेत्
पञ्चगव्यैश्च संस्नाप्य बिल्वपत्रेण घर्षयेत् २९
दर्भमूले तु वल्मीके क्षेत्रे चैव मृदं हरेत्
यदा मृदा च लिंगं तु देशिकेन तु लेपयेत् ३०
गन्धोदकेन संस्नाप्य प्रोक्षयेद्धृदयेन तु
चन्दनागरुकुष्ठैश्च कुंकुमोशीरकेसरैः ३१
एलालवङ्गकर्पूरैरालोड्यालेपयेच्छिवम्
पिण्डिकाञ्च समालिप्य प्रोक्षयेत्पुरुषेण तु ३२
शिरसा बन्धयेल्लिंगे हैमकौतुकसूत्रकम्
अर्कपंकजबिल्वैश्च मधूराशोकपाटलैः ३३

त्ववीरनन्दिकावर्त्तपलाशकुसुमैरपि
बृहतीद्रोणकुसुमैर्व्याघातजातिचंपकैः ३४
पुन्नागकर्णिकारादिकुमुदोत्पलमल्लिकैः
लिंगोमांपूरयेद्धीमानुक्तपुष्पैर्विशेषतः ३५
नववस्त्रेण चावेष्ट्य लिंगपीठे क्रमेण तु
ततो बालगृहं गत्वा पूजयेच्छिवमादरात् ३६
यात्रा होमं प्रकर्त्तव्यं बालस्थानस्य चाग्रतः
स्थण्डिलं हस्तमात्रेण निर्दोषैस्सिकतैश्शुभैः ३७
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिधस्सद्यमंत्रेण घृतमीशानमंत्रतः ३८
अघोरेण चरुं हुत्वा प्रत्येकं पञ्चविंशतिः
प्रासादबीजमुख्यैश्च व्योमव्यापि पदैस्तथा ३९
शिवांगैश्चैव विद्यांगैः प्रत्येकं षोडशाहुतिः
स्पृष्ट्वास्पृष्ट्वा तु जुहुयात्त्र्यंबकेनैव मंत्रतः ४०
तस्याग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्तथा
स्थण्डिलेवन्नयसेत्कुंभं वर्द्धनं तस्य वामके ४१
ससूत्रौ गन्धपुष्पाद्यैस्सवस्त्रौ हेमरत्नकौ
सापिधानौ सकूर्चौ तु वर्द्धनी शिवकुंभकौ ४२
लिंगाद्देवं समावाह्य कुंभमद्ध्ये तु विन्नयसेत्
पीठाद्देवीं समावाह्य वर्द्धनीं मद्ध्यमे न्यसेत् ४३
स्थापयेद्वामदेवेनाघोरेणावकुंठयेत्
सान्निद्ध्यं पुरुषेणैव पञ्चमुद्रां प्रदर्शयेत् ४४
लिंगमुद्राञ्च मुकुळीं पद्ममुद्रां प्रदर्शयेत्
नमस्काराख्यमुद्राञ्च बद्ध्वास्त्रं दिक्षु योजयेत् ४५
सूत्रादिभिस्समोपेतानभितोष्टघटान्नयसेत्
इंद्राद्यैशानपर्यन्तमष्टविद्येश्वरान्क्रमात् ४६

कुंभमद्ध्ये समावाह्य तत्तत्बीजसमन्वितम्
पूजयेद्धृदयेनैव गन्धपुष्पादिभिः क्रमात् ४७
नैवेद्यन्तु तथा दत्वा तांबूलञ्च हृदा ददेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ४८
पूर्णाहुतिञ्च शिरसा घटमुद्धारयेत्ततः
अस्त्रेण चालयेल्लिंगं तरुणाख्यं सपिण्डकम् ४९
पञ्चगव्येन संप्रोक्ष्य वेदिकां हृदयेन तु
स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैर्विशेषतः ५०
तदर्द्धैस्तण्डुलैर्भूष्य तदर्द्धैश्च तिलैरपि
तन्मद्ध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ५१
गन्धाद्यैः पूरयेद्विद्वान् वामदेवेन मन्त्रतः
वेदिकोपरि संस्थाप्य वामदेवेन मन्त्रतः ५२
लाजैः पुष्पैस्तिलैर्दर्भै विकरेत्समलंकृतम्
शिरसावाह्य कुंभानि वर्द्धनीं सह मूर्तिपैः ५३
प्रदक्षिणन्ततः कुर्यात्प्रासादं गेयनृत्तकम्
सर्वातोद्य समायुक्तं ब्रह्मघोषसमन्वितम् ५४
शनैः प्रदक्षिणं कृत्वा प्रविशेन्मण्टपन्ततः
उत्तरे विन्नयसेत्तत्र वर्द्धनीं हृदयेन तु ५५
पूजयेत्तु प्रभुन्देवीं मूलेनैव तु मन्त्रतः
अभितः स्थापयेत्कुंभान् अष्टविद्येश्वरान्क्रमात् ५६
पूजयित्वा स्वनामैश्च गन्धपुष्पादिभिः क्रमात्
अग्रे तु परिवाराणां स्थण्डिलं शालिभिः कुरु ५७
प्रत्येकं विन्नयसेत्कुंभान् सूत्रादिभिस्समन्वितान्
तत्तन्मूर्त्याकृतिन्ध्यात्वा तत्तत् बीजेन कुंभके ५८
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु
परिवारघटाश्चैव चोपवेद्युपरिन्नयसेत् ५९

दिशास्वद्धययनं कुर्यात्पूर्वादिषु प्रदक्षिणम्
शिवं संकल्प्यपौर्षञ्च ततो मारुद्रसूक्तकम्  ६०
कद्रुद्रायत्वमग्ने च पूर्वभागे जपेत्बुधः
श्रीसूक्तं पवमानञ्च पुरुषसूक्तं त्रियंबकम्  ६१
शान्तिद्वयञ्जपेद्धीमान्दक्षिणे तु विशेषतः
कल्पसूक्तं चतुर्वर्गं विष्णुसूक्तन्तु वारुणम्  ६२
पश्चिमे तु जपेद्धीमान् पवमानं हिरण्यकम्
देवव्रतं पुरुषव्रतं ज्येष्ठसामन्तथैव च  ६३
कयानश्चित्ररूपाक्षञ्चोत्तरे तु विशेषतः
आचार्यो मूर्त्तिपैस्सार्द्धन्ततो होमं समाचरेत्  ६४
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिदाज्य चरून्लाजान्सर्षपञ्चयवन्तिलान्  ६५
होमद्रव्याणि सप्तैते जुहुयाद्वै क्रमेण तु
पलाशोदुंबराश्वत्थ बिल्वञ्चेति दिशासु च  ६६
शमीखादिरमायूर वटाश्चेति विदिक्षु वै
प्रधानस्य पलाशं हि सर्वेषामिध्वमेव च  ६७
सद्योजातेति मन्त्रेण समिधाहुतिमाचरेत्
मूलेन जुहुयादाज्यमघोरेण चरुं हुनेत्  ६८
लाजं वामेन मन्त्रेण सर्षपं कवचेन तु
यवं हुवा शिखायान्तु तिलमस्त्रेण होमयेत्  ६९
शतत्रयंशतं वापि तस्यार्द्धं वार्द्धमेव हि
प्रत्येकं जुहुयाद्धीमान्द्रव्यान्ते व्याहृतिं हुनेत्  ७०
समिदाहुतिं विनाधीमान् उपाहुतिमथाचरेत्
घृतमिक्षे घृतं हुत्वा देवस्य त्वा चरुं हुनेत्  ७१
यद्देवमेतिधोवालाशकृद्रुद्रायेति सर्षपम्
यवञ्च शन्नोदेवीति एषामीशतिलं हुनेत्  ७२

प्रत्येकं दशकं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत्
ब्रह्मजज्ञानमंत्रेण हुत्वा स्पृष्ट्वा त्वजांशकम् ७३
इदं विष्णवीति मंत्रेण हुत्वा विश्वांशकं स्पृशेत्
त्रियंबकेन मंत्रेण हुत्वा त्वीशांशकं स्पृशेत् ७४
सर्वद्रव्यसमायुक्तं हव्यवाहेति होमयेत्
एवं जागरणं रात्रौ प्रभाते प्रोक्षणं कुरु ७५
आचार्यो मूर्तिपैस्सार्द्धं स्नानं कृत्वा विशेषतः
अंगन्नयासकरन्नयासं पूर्वोक्तविधिना कुरु ७६
व्यपोह्योषितपुष्पाणि कौतुकं वस्त्रसंयुतम्
सद्यादिपञ्चमंत्रैश्च गव्यैश्चैवाभिषेचनम् ७७
मृदांभसा तु संस्नाप्य कुशतोयेन सेचयेत्
गंधोदकेन संस्नाप्य लिंगपीठस्थलं क्रमात् ७८
गंधादिभिस्समभ्यर्च्य हृदयेनैव मंत्रतः
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ७९
आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः
कन्यसन्दशनिष्कन्तु विंशन्निष्कन्तु मद्धयमम् ८०
त्रिंशन्निष्कोत्तमं प्रोक्तं देशिकस्य तु दक्षिणा
दक्षिणान्दापयेत्तत्र पञ्चांगभूषणैस्सह ८१
अर्द्धयेतृमूर्तिधारांश्च पूजयेत्पूर्ववद्बुधः
पूर्णाहुतिन्तु शिरसा हुत्वाग्निन्तु विसर्जयेत् ८२
शिवकुंभं वर्द्धनीञ्च उद्धरेन्मूर्तिकुंभकान्
शिरसा वाहयित्वा तु कृत्वा हर्म्यप्रदक्षिणम् ८३
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्
पुत्रपौत्रकळत्रैश्च यजमानोप्यनुव्रजेत् ८४
द्वारदेशं समानीय पूजयेद्गन्धपुष्पकैः
गर्भगेहं ततः प्राप्य स्थापयेत्तण्डुलोपरि ८५

मुहूर्तन्निरीक्ष्य दैवज्ञो गुरवे संनिवेदयेत्
ध्यात्वा सदाशिवं लिंगे त्वष्टत्रिंशत्कलान्वितम् ८६
कुंभान्मंत्रं समादाय लिंगमद्ध्ये तु योजयेत्
शक्तिबीजन्तु वर्द्धन्याः पिण्डिकायाञ्च विन्न्यसेत् ८७
कुंभोदैः स्नापयेल्लिंगं वर्द्धनीभिस्तु पिण्डिकाम्
अनन्तादिशिखण्ड्यन्तान् क्रमात्पीठे तु विन्न्यसेत् ८८
कुंभस्थैरुदकैर्लिंगं स्नापयेत्तु दशाक्षरैः
गंधपुष्पादिभिश्चैव पूजयेदीशमन्त्रतः ८९
स्नपनं कारयेदन्ते प्रागुक्तविधिना सह
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत् ९०
परिवारघटाभिस्तु स्वस्थानेष्वभिषेचयेत्
बीजानि विधिवन्न्यस्त्वा गंधपुष्पादिभिर्यजेत् ९१
उत्सवं कारयेत्पश्चात् यथावित्तानुसारतः
अत्रानावर्तकस्यैव विशेषं किञ्चिदस्ति हि ९२
पतिकैश्चोरकैश्चैव चंडाळैस्पर्शिते सति
पूजाहीनञ्च मासार्द्धं लिंगादावाहनं विना ९३
पूजाहीनन्तदूर्ध्वञ्चेत् तद्विधानमिहोच्यते
स्थानशुद्धिक्रमणैव लिंगशुद्धिं ततः कुरु ९४
गंधपुष्पादिभिर्लिंगमीशानेन तु पूजयेत्
लिंगाग्रे स्थण्डिलं कृत्वा कुंभं तस्योपरि न्यसेत् ९५
वर्द्धनीं तस्य वामे तु चाभितोष्टघटान् न्यसेत्
सूत्रादिभिस्समोपेतान् विन्यसेद्धृदयेन तु ९६
लिंगाद्देवं समावाह्य कुंभमद्ध्ये तु विन्यसेत्
विन्न्यसेत्पिण्डिकायास्तु वर्द्धन्यान्तु मनोन्मनीम् ९७
पूजयेत् गंधपुष्पाद्यैरीशानेन तु मन्त्रतः
दर्शयेल्लिंगमुद्राञ्च पद्ममुद्रां क्रमेण तु ९८

विद्येशानां स्वबीजन्तु कुंभमद्धये क्रमान्नयसेत्
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम् ९९
कुंभानुद्धृत्य शिरसा बाह्ये धामप्रदक्षिणम्
कृत्वैव वेदिकोद्धर्वे तु विन्नयसेत्पूर्ववत्सुधीः १००
अग्न्यादि सर्वकार्याणि प्रागुक्तविधिनाचरेत्
ततोन्तरितकक्षेत्तु बिंबाग्रे स्थरिडलं कुरु १०१
तन्मद्धये विन्नयसेत्कुंभं वर्द्धनीन्देशिकोत्तमः
ससूत्रौ गन्धतोयौ च रत्नहेमसमन्वितौ १०२
सवस्त्रौ कूर्चसंयुक्तौ सापिधानौ सपल्लवौ
अभितोष्टघटौ न्यस्त्वा सूत्रादिभिस्समन्वितम् १०३
बिंबान्महेशमावाह्य ध्यात्वा कुंभस्य मद्धयमे
महेशस्यैव बीजेन विन्यसेत्तु विशेषतः १०४
पीठाद्गौरीं समावाह्य वर्द्धन्नयां मद्धयमे न्यसेत्
गंधपुष्पादिभिश्चैव त्वीशानेन तु पूजयेत् १०५
दर्शयेत्तु महेशाख्यं पदमुद्रां क्रमेण तु
विद्येश्वराणां बीजैश्च पूर्वादिषु प्रविन्नयसेत् १०६
गंधपुष्पादिभिश्चैव हृदयेन तु पूजयेत्
अग्रे वा दक्षिणे वापि वामे वा मंटपे ततः १०७
स्थंडिले स्थापयित्वा तु पूजयेत्तु विशेषतः
पुनस्संधानकं कृत्वा संप्रोक्षणमथाचरेत् १०८
वेदिमद्धये न्यसेद्बिंबं प्राङ्मुखं हृदयेन तु
गंधपुष्पैर्हृदाभ्यर्च्य रक्तवस्त्रेन वेष्टयेत् १०९
पूर्वे तु स्थापितं कुंभं प्रतिमाग्रे तु विन्नयसेत्
अभितस्तु घटान्नयस्त्वा चाष्टविद्येश्वरान्पृथक् ११०
गंधपुष्पादिभिस्तत्राप्यैशानेन तु पूजयेत्
परिवारघटांश्चैव वर्जयेत्तु विशेषतः १११

स्वतःप्रधानकञ्चेत्तु तैर्युक्तं स्थापयेत्सुधीः
शेषाणि सर्वकार्याणि कुर्यात्पूर्वोक्तवर्त्मना ११२
गौर्यायास्थापने चैव सर्वं तस्यास्तु मंत्रकैः
कारयेत्तु क्रमेणैव मंटपस्य तु मद्ध्यमे ११३
नवाग्न्यायतनं कृत्वा योन्याकाराणि दिक्षु वै
वृत्तानीव तथा कुर्यात् प्रधानं योनिकुण्डकम् ११४
अभितोष्टघटेष्वत्र वामादिशक्तयो न्यसेत्
इदमेवं विशेषन्तु शेषं पूर्वोक्तवत्कुरु ११५
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
अप्रजाश्च प्रजावृद्धिं धनार्त्थीधनमाप्नुयात् ११६
जयार्त्थी जयमाप्नोति मोक्षार्त्थी मोक्षमाप्नुयात् ११७

संप्रोक्षणविधिं वक्ष्ये सर्वदोषनिकृन्तनम्
सर्वशत्रुक्षयकरं सर्वोपद्रवनाशनम् १
सौख्यं यशस्करं धन्यमायुरारोग्य वर्द्धनम्
आवर्तञ्चेत्यनावर्तं पुनरावर्तनन्तथा २
अन्तरितञ्च विज्ञेयं प्रोक्षणन्तु चतुर्विधम्
मूलबालालयाद्देवं मूलस्थाने प्रतिष्ठितम् ३
तदावर्तमिति ज्ञेयमनावर्तं ततश्शृणु
पतितैः पातकैर्नीचैश्चण्डाळैश्शिल्पिभिस्तु वा ४
पूजाहीने --------- स्थलकर्मणि
लिंगे पीठे च चलिते तदनावर्तमिष्यते ५
मूलालयात्समादाय स्थाप्यबालालये पुनः
तस्मात्संस्थापनं मूलं पुनरावर्तनन्तथा ६
प्रतिमाणाञ्च सर्वेषां शक्तीनामायुधा स्मृताः
स्फोटने भञ्जनेनांगसांगोपांगविहीनके ७

विशिष्टे पीठबन्धे च तदन्तरितमुच्यते
एकसन्ध्यार्चना हीने कुर्यात् गव्याभिषेचनम् ८
पक्षहीने दिशाहोमं स्नपनन्तत्र कारयेत्
मासादूर्ध्वविहीने तु जलसंप्रोक्षणं कुरु ९
यात्राहोमयुतावर्त ------ विहीनके
आवर्ते ---- मासपक्षर्क्षकादिकान् १०
लिंगसंस्थापनस्योक्तमार्गेणैव समाचरेत्
न तिथिर्न च नक्षत्रं न वारपरिकल्पनम् ११
कालक्षे--ओविना कुर्यात् शेषाण्यन्यानि सुव्रत
सर्वमासेषु कर्तव्यं संप्रोक्षणमथाचरेत् १२
एवं निश्चित्य दिवसे क्रमेणैवाभिषेचयेत्
लक्षणोद्धारणञ्चैव मन्त्रेण बहुनोक्तवत् १३
सर्वमावर्तवत्कुर्यादधिवासन्तथैव च
रत्नन्यासाक्षिमोक्षञ्च लक्षणोद्धारणन्तथा १४
कुर्यात्तथाधिवासञ्च विना वा बेरकर्मणि
मासनक्षत्रवारञ्च योगं करणं तिथिः १५
सर्वेषु देवकार्येषु निरपेक्षन्तु कारयेत्
आयुः कीर्तिञ्च पुष्टिञ्च धनधान्याभिवर्द्धनम् १६
अंगभेदमिति प्रोक्तं तच्चतुर्विधमुच्यते
अंगं प्रत्यंगसांगञ्च तथाचोपांगसंज्ञकम् १७
शिरोवक्त्रञ्च हृदयमंगञ्चेति प्रकीर्तितम्
कक्षेस्तनौ च बाहू च नाभिगुह्योदराणि च १८
ऊरुजानु द्वयञ्चैव प्रत्यंगञ्चेति कीर्तितम्
नेत्रे नासा च कर्णौ च पाणिपादतलांगुलीः १९
जटामकुटसंयुक्तं सांगञ्चेति प्रकीर्तितम्
वस्त्रोपवीतमाला च भूषणायुधमेव च २०

गंगा चंद्रमपस्मारं नागकूर्मं तथैव च
प्रभाभिन्नसमायुक्तं पद्मपीठन्तथैव च  २१
आसनावरणञ्चैवमुपांगञ्चेति कीर्तितम्
शिल्पिनास्पर्शिते वापि पूजाहीनेऽग्निलीढिके  २२
तस्करस्पर्शने भ्रान्तरोगार्तस्पर्शितेऽथवा
प्रमादात् भूमिपतिते वर्षसिक्तेऽथवा पुनः  २३
पूजाहीने तु पक्षार्द्धं प्रतिष्ठां कारयेद्बुधः
अन्यानि सर्वकार्याणि प्रागुक्तविधिना कुरु  २४
आषाढे मार्गशीर्षे च माघे प्रोष्ठपदेऽपि वा
दिव्यलिंगे विशेषेण संप्रोक्षणमथाचरेत्  २५
संप्रोक्षणं प्रकुर्वीत यजनं सम्यगाचरेत्
सितपक्षे तु पुण्यर्क्षे यजमानानुकूलके  २६
अंकुरार्पणपूर्वन्तु कल्पयेत्प्रोक्षणादिकम्
अनंकुरन्तु यत्कर्म तत्कर्म निष्फलं भवेत्  २७
नवाहे वाथ सप्ताहे पञ्चाहे वांकुरार्पणम्
त्रिदिने तद्दिने चैव कारयेदंकुरार्पणम्  २८
पर्यग्निकरणं पूर्वं वास्तुहोममतः परम्
पुण्याहं वाचयेत्तत्र प्रोक्षयेत्पञ्चगव्यकैः  २९
यश्शुद्धिं पवमानञ्च शान्तिं हिरण्यवर्णकम्
-------------------------------  ३०
अंकुरन्नयासकार्यन्तु प्रागुक्तविधिना चरेत्
मुद्गं माषकुळुत्थञ्च निष्पावं शिंबमाढकम्  ३१
तिलसर्षपशालिञ्च सिद्धार्त्थं नवबीजकम्
उत्तमं नवबीजानि मद्ध्यमं सप्तबीजकम्  ३२
अधमं पञ्चबीजानि यथालाभं प्रवापयेत्
प्रासादस्याग्रतो वापि पश्चिमे चोत्तरे तथा  ३३

ऐशान्ये मद्धयमे वापि मंटपञ्चतुरश्रकम्
नवहस्तं सप्तहस्तं पञ्चहस्तमथापि वा ३४
षोडश स्तंभकं वापि द्वादश स्तंभमेव वा
युगद्वारसमायुक्तञ्चतुस्तोरणभूषितम् ३५
मण्टपं नवधा भज्य मद्धयभागे तु वेदिका
मात्रांगुलेन कर्तव्यमन्यमाने नकारयेत् ३६
मद्धयमांगुलिपर्वेण यजमानानुकूलकः
चतुर्विंशतिसंख्यानामंगुलं हस्तमानकम् ३७
हस्तद्वयसमायुक्तं वेदिकामानमुच्यते
तत्समं तत्र विस्तारं वेदिकालक्षणन्तथा ३८
आयामविस्तरं प्रोक्तमुत्सेधलक्षणं श्रुणु
षोडशांगुलमुत्सेधं निम्नोन्नतविवर्जितम् ३९
वेदिमूलस्य परितश्चोपवेदिं प्रकल्पयेत्
उत्सेधं द्व्यंगुलं प्रोक्तं विस्तारं तत्समं भवेत् ४०
मुकुरोदरसंकाशं निम्नोन्नतविवर्जितम्
तद्व्योमपूर्वदिग्भागे स्वहस्तमाननिर्मितम् ४१
पूर्वे पदस्य मद्धये तु वह्नेरायतनं कुरु
आयामं हस्तमात्रन्तु विस्तारं तत्समं भवेत् ४२
मेखलात्रयसंयुक्तं श्रुत्यग्निद्वितयांगुलैः
तदूर्ध्वे योनिमाकल्प्य कुरु पिप्पलपत्रवत् ४३
चतुरंगुलविस्तीर्णं तद्दीर्घन्तु शरांगुलम्
उच्चद्वयांगुलं प्रोक्तं तद्दीर्घम्मोक्षमेव च ४४
तत्पादं वासुकी पुच्छं पूर्वे तु वलयं भवेत्
नवाग्निं वाथ पञ्चाग्निमेकाग्निमथवा पुनः ४५
दिशासु चतुरश्राणि विदिशास्वब्जकुण्डकम्
शक्रशंकरयोर्मद्धये वृत्तं प्राधान्यकं कुरु ४६

पञ्चाग्निं कारयेत्तत्र पद्मकुण्डं प्रकल्पयेत्
पूर्वे चाहवनीयाग्निर्दक्षिणे वैदिकं भवेत् ४७
पश्चिमे केवलाग्निश्च गार्हपत्यमुदक् दिशि
ईशाने च प्रधाने तु शिवाग्निं कल्पयेत्ततः ४८
अग्निरूपं विशेषेण श्रृणुष्वेवं प्रजापते
द्विमुखञ्च त्रिपादञ्च नासिका द्वयसंयुतम् ४९
त्रिमेखला समायुक्तं षण्णेत्रं पिंगळप्रभम्
चतुश्शृंगं वृषारूढं बालार्कसमकेशकम् ५०
सप्तजिह्वा समायुक्तं जटामकुटमंडितम्
सव्यवक्त्रे चतुर्जिह्वा वामवक्त्रे त्रयन्तथा ५१
सव्यभागे चतुर्हस्तं त्रिहस्तमपसव्यके
स्रुक्स्रुवा वक्षमालाञ्च शक्तिर्दक्षिणतः करे ५२
चामरं व्यजनञ्चैव घृतपात्रन्तु वामके
हिरण्या कनकारक्ता कृष्णा चैव तु सुप्रभा ५३
अतिरक्ता बहुरूपा सप्तजिह्वाः प्रकीर्तिताः
हिरण्यादि चतस्रस्तु जिह्वा दक्षिणवक्त्रके ५४
सुप्रभादयस्तथा तिस्रो जिह्वाश्च वामवक्त्रके
हिरण्या वारुणे जिह्वा कनका मद्धयमे स्थिता ५५
रक्ता चोत्तरजिह्वा स्यात्कृष्णायाम्य दिशि स्थिता
सुप्रभा पूर्वजिह्वा स्यादतिरक्ताग्निदिक्स्थिता ५६
बहुरूपेशदिक्स्था च जिह्वा सप्तकमुच्यते
अग्निकर्णे हुतं कुर्यात् व्याधिभिः परिभूयते ५७
नासिकायां हुतं रोगं नेत्रे होतुर्विनाशनम्
शिखास्थाने हुतं कुर्याद्राजराष्ट्रं विनश्यति ५८
तस्मात्सर्वप्रयत्नेन होममास्ये प्रकल्पयेत्
यत्र कोष्ठन्तु तत् श्रोत्रं यत्र धूमन्तु नासिका ५९

यत्राल्पज्वलिकन्नेत्रं यत्र भस्म तु तच्छिरः
यत्र ज्वलितजिह्वायां ततो होमं समाचरेत् ६०
पूर्ववद्रूपसंयुक्तां स्वाहा देवीञ्च भावयेत्
एवमावहवनीयाग्निं पूर्वकाष्ठापतिर्भवेत् ६१
एकवक्त्रं द्विनेत्रञ्च द्विभुजञ्च द्विपादकम्
कृष्णवर्णनिभं शान्तमजारूढं त्रिलोचनम् ६२
एवं वैदिकमग्निञ्च पूजयेत्तु विशेषतः
द्विनेत्रमेकवक्त्रञ्च द्विभुजञ्च द्विपादकम् ६३
शुक्लवस्त्रपरीधानं श्वेतवर्ण --
अभयं वरदोपेतं केवलाग्नेः स्वरूपकम् ६४
एवन्ध्यात्वा विशेषेण पूजयेद्देशिकोत्तमः
शोणांगं रक्तनेत्रं श्रुतिकरवदनं पक्षशृंगशं रक्तं वस्त्रावृतं स्यात्
दभयवरदं स्रुक्स्रुवोद्धर्वैवहन्तम् ।
हारं केयूरमालाभरणजटालंकृतं --- पादमेवारूढं -- शक्तिं -- ॥ ६५
अनलशतसहस्त्रं रूपभूतञ्च वक्त्रं स्त्रुवमभयपरशुं खड्गघण्ठाञ्च सव्ये ।
वरदमनलमंकुशं स्रुक्खेट --- हस्तन्द --- जनितरूपं
शैवमाहुश्शिवाग्निम् ६६
एवन्ध्यात्वा विशेषेण वह्नेरूपं विचिन्तयेत् ६७
अग्निं प्रज्वाल्य खड्गेन वायुबीजमनुस्मरन्
अग्निकार्योक्तमार्गेण होमं कृत्वा विशेषतः ६८
यागांगानि च सर्वा--------------
कलशान्लक्षणोपेतान् चतुःप्रस्थेन पूरितान् ६९
श्रेष्ठं शताष्टकं प्रोक्तं मद्ध्यमन्तु तदर्द्धकम्
षट्त्रिंशदधमं प्रोक्तं यथालाभं प्रकल्पयेत् ७०

कुंभं सलक्षणं कृत्वा षट्शिवं पूरयेज्जलम्
वर्द्धनीन्तु तदर्द्धेन पूरयेत्तु विशेषतः ७१
तन्तुनावेष्टयेत्कुंभान् गवाक्षसदृशान्तरान्
पक्वबिंबफलप्रख्यान् कांस्य द्ध्वनिसमन्वितान् ७२
प्राक् भूतकुंभन्तथैकाग्निकुंभन्दाक्षिरायवेदन्निर्ऋतित्रयञ्च वारुणयभूतं
तथाश्विन्य वायौ सोमे युगं स्यात्त्रयकुंभमीशे ७३
नन्दिशान्ती वलारातिर्महाकाळोरविश्शिखी
भृंगिर्विद्याकलाद्वारमन्तकश्च विनायकम् ७४
विष्णुश्च निर्ऋतिर्ब्रह्मा वृषभास्त्रं यथाक्रमम्
निवृत्तिः पाशपाणिश्च महालक्ष्मी च षरामुखः ७५
क्षेत्रपालश्च वायुश्च विघ्नेशः परमेश्वरी
प्रतिष्ठाधनदश्चराडो गुरवश्शंकरो विधिः ७६
तत्तत्स्थानेषु संपूज्य दिक्देवान् द्वारपालकान्
कुंभे शिवं समभ्यर्च्य वर्द्धन्यान्तु मनोन्मनीम् ७७
विद्येशान् लोकपालांश्च द्वारदेवान् प्रपूजयेत्
पूर्वे वास्तुबलिं कृत्वा पर्यग्निञ्च द्वितीयके ७८
तृतीये चांकुरन्यासं चतुर्थे मराडप ---
पञ्चमे स्थापनं प्रोक्तं षष्ठे त्वावाहनं भवेत् ७९
सप्तमे होमकर्माणि नैवेद्यमष्टमं भवेत्
नवमं बेरशुद्धिञ्च दशमे स्थापनं भवेत् ८०
मन्त्रन्यासाक्षरन्यासं मातृकान्यासमुच्यते
अष्टत्रिंशत्कलान्यासं विधिना कारयेत्ततः ८१
वस्त्रयुग्मेन संवेष्ट्य पुष्पमाल्यैरलंकृतम्
धूपदीपं हृदादत्वा शिवकूर्चन्तु दापयेत् ८२
यागं संपूज्य विधिवत् शेषं होमन्तु कारयेत्
प्रत्येकमाहुतिं हुत्वा स्रुवेणाज्यन्तु होमयेत् ८३

समिदाज्य चरून् लाजान् सर्षपं माषमुद्गकम्
तिलवेणुयवं क्षीरं सक्तुञ्च जुहुयात्क्रमात् ८४
पञ्चब्रह्मषडंगेन होमं कृत्वा पृथक्पृथक्
शतद्वयं शतं वाथ जुहुयाद्देशिकोत्तमः ८५
सद्येन समिधं हुत्वा घृतं वामेन हूयते
अघोरेण चरुं हुत्वा लाजञ्च पुरुषेण तु ८६
सर्षपं कवचेनैव माषमीशेन होमयेत्
मुद्गन्तु हृदयेनैव तिलञ्च शिरसा हुनेत् ८७
वैणवं शिखया हुत्वा यवन्नेत्रेण होमयेत्
दुग्धं वै चास्त्रमन्त्रेण सक्तुं मूलेन होमयेत् ८८
द्रव्याण्यन्यानि सर्वाणि मूलेन जुहुयात्सुधीः
द्रव्यान्ते व्याहृतिं हुत्वा प्रायश्चित्तार्त्थकं हुनेत् ८९
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
इध्माहुतिः प्रकर्त्तव्याप्यघोरास्त्रशतं हुनेत् ९०
पाशुपतेन चास्त्रेण हुनेदष्टशतं क्रमात्
गन्धपुष्पञ्च धूपञ्च दीपमर्घ्यं प्रदापयेत् ९१
वसुभ्यो रुद्रमन्त्रेण पूर्णाहुतिमथाचरेत्
परिषेचनन्ततः कुर्याददितेन्वादि मन्त्रतः ९२
आज्यमन्त्रेण पूर्वे वा दक्षिणे पश्चिमोत्तरे
परिधिस्थान्विष्टरस्थानुद्वास्य स्वस्वबीजकैः ९३
शिवकुंभन्ततोद्धृत्य वर्द्धन्या परिवारकैः
हर्म्यं प्रदक्षिणी कृत्य तस्याग्रे स्थापयेत् घटान् ९४
सकळी कृतदेहस्तु सुमुहूर्त्ते सुलग्नके
मंत्रन्यासन्ततः कृत्वा शिवमंत्रं समुच्चरन् ९५
उद्वास्य शिवकुंभन्तु लिंगे चैवाभिषेचयेत्
गौरी गायत्रिमंत्रेण वर्द्धनीमभिषेचयेत् ९६

विद्येशकुंभानुद्धृत्य तत्तस्थानेषु योजयेत्
वस्त्रेण वेष्टयेल्लिंगं पुष्पमाल्यैरलंकृतम्  ९७
पायसान्नन्ददेत्तस्मैरंभाज्य गुळखण्डयुक्
प्रभूतहविषन्दत्वा सापूपं सोपदंशकम्  ९८
बलिदानन्ततः कुर्यात् तांबूलं दापयेत्ततः
धूपदीपं हृदा दत्वा जयघण्टा समन्वितम्  ९९
नीराजनन्ततः कृत्वा दर्पणं दर्शयेत्ततः
नृत्तं गीतञ्च वाद्यञ्च शंखकूर्यादिनादयुक्  १००
वेदघोषवमायुक्तं खेटकैः स्वस्तिवाचकैः
देशिकं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः  १०१
विप्रेभ्यो दक्षिणान्दद्यात् अतिथीनाञ्च पूजयेत्
दीनान्धकृपणानाञ्च तदन्येषां प्रदापयेत्  १०२
भुक्तिदम्मुक्तिदन्दिव्यमायुरारोग्य वर्द्धनम्
सर्वयज्ञतपोदानं सर्वसंपत्समृद्धिदम्  १०३

संक्षेपमृत्संग्रहणविधिपटलप्रारंभः

मृत्संग्रहविधिं वक्ष्ये सर्वलोकहितावहम्
ग्रामशान्तिकरं पुण्यं राजराष्ट्रसमृद्धिदम्  १
प्रतिष्ठा प्रोक्षणे काले दीक्षा काले तथैव च
उत्सवे च पवित्रे च तत्कर्मादौ समाचरेत्  २
देवदेवन्तु संपूज्य विज्ञापनमथाचरेत्
चण्डेश्वरं समादाय कारयेत्तु विशेषतः  ३
आसनं मूत्तिमूलञ्च आवाहनादि पूर्ववत्
स्नपनं कारयेत्पश्चात्तांबूलन्दापयेत्ततः  ४
सर्ववस्त्रैरलंकृत्य गन्धपुष्पैरलंकृतम्
कुन्दालिमभिषिच्याथ अस्त्रमंत्रेण पूजयेत्  ५

त्रिशूलन्तु समभ्यर्च्य त्रयस्त्रिंशाधिदैवतम्
नववस्त्रधरोष्णीषमादिशैवो दृढव्रतः ६
हारनूपुरकेयूरकटकादि विभूषितः
शिबिकैश्च गजैश्चैव परिचारकमावृतः ७
ग्रामप्रदक्षिणं कृत्वा शंखकाळपुरस्सरम्
सर्ववाद्यैरलंकृत्य छत्रचामरसेवितम् ८
वाहयित्वाथ नारीभिस्तालवृन्तेन सेवितम्
चण्डेश्वरादिसंयुक्तं मृत्स्थानन्तु समाश्रयेत् ९
नदीतटाककेदारे दर्भमूले तु वल्मिके
पर्वताग्रे बिल्वमूले बृन्दे चोद्यानदेशके १०
ऐशान्यां स्वानसंयुक्तं निरीक्षादिविशेषतः
सम्मार्जनं समालेप्य प्रोक्षणन्तु यथाविधि ११
स्थण्डिलं कारयेद्धीमान् नवकोष्ठं प्रकल्पयेत्
विघ्नेश्वरं समभ्यर्च्य पुण्याहं कारयेत्ततः १२
मद्ध्ये ब्रह्माणमावाह्य अर्चयेन्नवमंत्रतः
अनन्ताविजया चैव जयन्ता भ्रमरी तथा १३
प्रस्थिता जंभशूलिन्या परिवाराष्टकं यजेत्
नाममंत्रैस्समभ्यर्च्य धूपदीपेन सेवितम् १४
दिग्विदिक्षु बलिं कुर्यात्पायसाद्यैर्विशेषतः
बाह्ये बलिं समुद्वास्य प्रोक्षयेदस्त्रमन्त्रतः १५
भूमिदेवीकुक्षिदेशे खातदोषनिवृत्तये
व्रणोपशमनार्त्थाय पूजयेत्सप्तवारिधिम् १६
स्थण्डिलं तत्र कल्प्याथ षट्कुंभं षड्दळे न्यसेत्
अथवा एककुंभे तु पूजयेत्सप्तवारिधिम् १७
उत्तराभिमुखस्थित्वा तद्देशे मृतमाचरेत्
स्तोत्रगीतञ्च वाद्यञ्च नृत्तघोषसमाकुलम् १८

सुमुहूर्ते सुनक्षत्रे मृद्ग्राहं कारयेद्बुधः
कुन्दालिं भूमिमन्त्रेण त्रिकृत्वो निखनेन्मृदम् १९
ललाटे स्थाननाशं स्यात् वक्त्रे ब्रांहणनाशनम्
गळे आचार्यनाशस्यात् बाहूक्षत्रियनाशनम् २०
स्तने स्त्रीनाशनं कुर्यादुरसि पुत्रनाशनम्
ऊरौ तु वैश्यनाशं स्यात्पादे च शूद्रनाशनम् २१
गृहीत्वा जठरे देव्या मृत्तिकां सर्वसिद्धिदाम्
स्वर्णादिपात्रे संग्राह्य आदिशैवेन वाहयेत् २२
सर्ववाद्य समायुक्तं शंखकाळपुरस्सरम्
दीपान्ते तु प्रकर्तव्यं धूपदीपेन सेवितम् २३
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः २४
इति मृत्संग्रहणविधिपटल अष्टत्रिंशदुत्तरशततमः

रक्षाबंधनविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि रक्षाबंधनमारभेत्
निर्दिष्टपूर्वरात्रौ वा क्रियापूर्वेऽथवा सुधीः १
तत्रोक्तदेवताग्रे तु शालायां वाधिवासयेत्
तिलतण्डुलमिश्रेण तन्मद्ध्ये नळिनं लिखेत् २
कुंभमेकं न्यसेन्मद्ध्ये कूर्चपल्लवसंयुतम्
तद्देवं स्थापयेत्कुंभे धूपदीपसमन्वितम् ३
कुंभस्य दक्षिणे पार्श्वे प्रत्येकं स्थंडिलं कुरु
तदूर्ध्वे यंत्रिकां क्षिप्त्वा तदूर्ध्वे पात्रसंयुतम् ४
तंडुलन्नाळिकेरञ्च तांबूलं भस्मसंयुतम्
कौतुकं शातकेनैव रजतेनैव तन्तुना ५
कारयेत्तु प्रमाणेन षोडशांगुलमानतः

लिंगनाहसमं सूत्रं पीठनाळसमन्वितम् ६
बिंबं वा देशिकं वापि प्रकोष्ठपरिणाहकम्
स्वल्पाधिकप्रमाणाढ्यं नागराजफणान्वितम् ७
तत्पुच्छसंयुतं सूत्रं पट्टाकारसमन्तु वा
संशोद्ध्य वारिणाश्वेतचन्दनेनोपलिप्य च ८
सुपुष्पेण समायुक्तं तंडुलोपरिविन्नयसेत्
पुण्याहं वाचयित्वा तु प्रोन्नयेद्धृदयेन तु ९
तंडुले पूजयेच्छक्तिं यंत्रिकायां त्रितत्वकम्
भमाधारे तु मायाख्यं भसिते लकुळीश्वरम् १०
अनन्तादींश्च सूत्रे तु गंधाद्यैरर्चयेत्क्रमात्
अधिवासनकुंभाग्रे होमकर्मसमाचरेत् ११
स्वतन्त्रदेवमावाह्य वह्निमद्ध्ये समर्चयेत्
तस्य देवस्य मूलेन समिदाज्य वरुं हुनेत् १२
स्वाहान्तं संहिता मन्त्रं संपातं सूत्रके हुनेत्
पात्रमाच्छाद्य पट्टाद्यैर्मालान्तदुपरिन्यसेत् १३
परिचारकमाहृत्य उष्णीषोन्तर्यकैस्सह
अग्निस्थन्देवमुत्थाप्य घटे संयोजयेत्क्रमात् १४
कौतुकादीन्विशेषेण वाहयित्वा शिरोपरि
सर्वालंकारसंयुक्तं सर्वातोद्य समन्वितम् १५
ग्रामप्रदक्षिणं वाथ प्रासादस्य प्रदक्षिणम्
देवेशमर्चयेत्तत्र घटान्बेरे सुयोजयेत् १६
तज्जलेन तु संप्रोक्ष्य नैवेद्यं धूपदीपकम्
देवानां दक्षिणे हस्ते देवीनां वामहस्तके १७
पूजकस्य करौ पूर्य तंडुलं फलसंयुतम्
लिंगे वा बेरहस्ते वा सूत्रं दत्वाथ सधारयेत् १८
बृहत्सामेति मन्त्रेण भस्मस्पृष्टा तु कौतुकम्

त्रिभिरावृतकन्नीत्वा दापयेत्तु मुखे मुखे १९
शिवलिंगस्य मूले तु पीठनाळे तु वेष्टनम्
स्राचार्यन्दक्षिणे हस्ते रक्षासूत्रन्तु धारयेत् २०
नैवेद्यं धूपदीपौ च जनेभ्यो भस्म दापयेत्
इत्येवमुत्तमं प्रोक्तं मद्ध्यमं होमवर्जितम् २१
होमकुंभं विना यत्र सूत्रधारन्तु कन्नयसम्
तत्कर्ममन्त्रसिद्ध्यर्थं रक्षाबंधनमाचरेत् २२
इति रक्षाबंधनविधिपटल एकोनचत्वारिंशत् शततमः

नित्योत्सवविधिपटलप्रारंभः

स्रथ वक्ष्ये विशेषेण नित्योत्सवविधिक्रमम्
सर्वशान्तिकरं पुरायं सर्वलोकहितावहम् १
नित्योत्सवाय बिंबन्तु कारयेल्लक्षणान्वितम्
सौवर्णमुत्तमं प्रोक्तम्मद्ध्यमं रजतं भवेत् २
स्रधमन्ताम्रमित्युक्तं कल्पयेत्कल्पवित्तमः
द्वारषोडशया कृत्वा पक्षांशमधमं भवेत् ३
मद्ध्यमन्तु द्वयं सार्द्धं गुणांशञ्चोत्तमं भवेत्
लिंगनाहविकारांशादग्नयंशमधमं भवेत् ४
वेदांशमधमं ज्ञेयं भूतांशं चोत्तमं भवेत्
धातुरन्धक--द्राख्याश्चांगुलाश्चाधमादयः ५
दशतालोत्तमेनैव एभिर्मानैश्च कारयेत्
चतुर्भुजं त्रिणेत्रञ्च शिखाकोटि समुज्वलम् ६
सर्वलक्षणवृत्तं वा मेखलात्रय संयुतम्
स्रग्निमात्रसुविस्तारन्तन्मानं बिलमुच्यते ७
पश्चिमे दक्षिणे वापि योनिरश्वत्थ पत्रवत्
कुराडेन्दुस्थापयेदग्निमविच्छिन्नन्तु कारयेत् ८

यावन्मूलोपचारन्तु तावदग्निं सुपूजयेत्
त्रिकालं वैककालं वा द्विकालं वा यजेत् गुरुः ९
मार्ज्जनं प्रोक्षणन्तत्र गोमयेनैव लेपयेत्
अघोरेणैव मन्त्रेण शोधयेत्तु विशेषतः १०
गन्धैः पुष्पैश्च धूपैश्च दीपैरर्घ्यैश्च पूजयेत्
परिस्तरेद्ध्मदर्भाभिः परिषेकमथाचरेत् ११
आज्यसंस्करणान्तन्तु पश्चादाघारमेव तु
प्रवेशने बहुत्वात्तु पश्चादिध्माहुतिर्भवेत् १२
चरून् हुत्वा तदन्ते तु व्याहृतिञ्चैव हूयते
ब्रह्मांगानि ततो हुत्वा स्विष्टान्तं हि च कारयेत् १३
प्रणीताधारसमिधा ब्रह्मकूर्च्चे विनाचरेत्
प्रतिपक्षं कुर्याद्धीमान्स्थालीपाकन्तदात्मिकम् १४
समिदाज्य चरूंश्चैव अष्टाविंशतिसंख्यया
होमयेत्तु विशेषेण स्थानभागं समाचरेत् १५
एकभागं निवेद्यं स्यात् भागैकेन हुतं भवेत्
शेषभागन्तु शल्यर्त्थं शेषमाचार्यभोजनम् १६
आवाहनन्ततो देवं वामदेवेन स्थापनम्
अघोरेण तु सान्निद्ध्यं पुरुषेण तु पूजयेत् १७
दर्शयेदस्त्रमुद्राञ्च नमस्काराख्यकान्तथा
तदग्रे प्राशमानाय पूजयेदिन्दुशेखरम् १८
परिचारौ समाहूय सोष्णीषञ्चोत्तरीयकम्
सर्वलक्षणसंपन्नौ सर्वाभरणभूषितौ १९
पवित्रपाणिनौ सर्वगन्धमाल्यैरलंकृतौ
तले मूर्ध्निन्यसेल्लिंगं प्रतिमाञ्च विशेषतः २०
वितानं छत्र संयुक्तं पिंछचामरसंयुतम्
सर्वातोद्य समायुक्तं गीतनृत्तसमाकुलम् २१

नानादीपसमायुक्तं नानाभक्तजनैर्युतम्
पूर्वाह्ने ब्रह्मणः प्रीतिर्मद्ध्यान्हे शिवमूर्त्तिनाम्  २२
विष्णोः प्रीतिकरं रात्रौ त्रिः कृत्वा तु प्रदक्षिणम्
तयोरौद्रन्तु पुरतस्तदन्ते शान्तमेव च  २३
प्रथमं प्रदक्षिणं कुर्यान्मंगणीताळसंयुतम्
परिवाराणां द्वितीये तु प्रदक्षिणमथाचरेत्  २४
वृषस्य वृषताळन्तु आग्ने मद्धावणन्तथा
मातृणां भृंगिताळं वै विघ्नेशस्य तु ढक्करी  २५
षण्मुखस्योद्धट्टनं गीतज्ञ्येष्ठायां बलिताळकम्
तटाप्रहायुदुर्गायामीशाने स्याद्धटं भवेत्  २६
गोपुरे वाद्यनिश्शब्दं शंखघोषसमन्वितम्
ततः पुरस्थितं पीठं त्रिष्कृत्वा तु प्रदक्षिणम्  २७
शबरी बलिपीठस्य प्रविश्याभ्यन्तरन्ततः
इंद्रस्य समताळन्तु आग्नेवद्धारणं भवेत्  २८
यमस्य भृंगिणी ताळन्निर्ऋतेर्मल्लताळकम्
वारुणे नवताळन्तु वायव्यां पुन्निताळकम्  २९
सोमस्य कोटकं प्रोक्तमैशान्नयांणंकिरीन्तथा
त्रीणि प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति  ३०
प्रमादात्पतितं यत्तु अघोरेण शतं हुनेत्
नवलिंगं प्रकर्तव्यं पूर्वोक्तविधिना सह  ३१
प्रदक्षिणन्ततः कृत्वा प्रविशेदालयं प्रति
द्वारदेशं समानीय पादप्रक्षाळनं कुरु  ३२
पादुकं वृषदैवत्यं पूजयेत् वृषमन्त्रतः
पाद्यादीनां समभ्यर्च्चर्य लिंगञ्च प्रतिमान्ततः  ३३
प्रविशेदालयं पश्चात् विन्यसेत्पूर्वदेशिके
लिंगे देवं समादाय मूलबिंबे तु विन्यसेत्  ३४

ततोपहारं चराडाय चराडमन्त्रेण दापयेत्
एवं शान्तिसमाख्यातं शैविकञ्च विधिं श्रुणु ३५
केवलं चास्त्रराजानं लिंगस्थं पूजयेत् रुरुः
पूर्वोक्तविधिनानेन कुर्यान्नित्योत्सवन्ततः ३६
एतत् शैविकमित्युक्तं लोकशान्तिमतः परम्
वर्षे शैवमहापाते स्थानकं वाद्यमाचरेत् ३७
लिंगप्रदक्षिणं कुर्यान्नित्योत्सवविशेषतः
पाशुपतेन चास्त्रेण घृतेनाष्टशतं हुनेत् ३८
तदन्ते सौख्यकं कुर्यात् गीतवाद्य समाकुलम्
बलिवाद्यन्ततः कृत्वा भूतानागाश्च राक्षसाः ३९
ग्रामबाह्यन्ततो गत्वा धनधान्यसमृद्धिदम् ४०
इति नित्योत्सवविधिपटलश्चत्वारिंशदुत्तरशततमः

महोत्सवविधिपटलप्रारंभः

उत्सवस्य विधिं वक्ष्ये सर्वविद्धिप्रदं शुभम्
सव इत्युच्यते सृष्टिस्तदुत्स्याच्छब्दभाषितम् १
उद्भूतसृष्टिकारत्वात् उत्सवं कथितो मया
उत्सवं षड्विधं ज्ञेयं तेषां भेदं निबोधत २
पैतृकं द्वादशाहन्तु नवाहं सौख्यमुच्यते
सप्ताहं श्रीकरं प्रोक्तं पञ्चाहं पार्थिवं स्मृतम् ३
सात्विकन्त्यहं प्रोक्तमेकाहं शैवमुच्यते
उत्सवं कारयेद्धीमान् पुष्यर्क्षान्तं हि पुष्यके ४
माखमासे मखान्तं वा षष्ठ्यन्तं वा प्रजायते
उत्तरान्तन्तु फल्गुन्नयां चित्तान्तञ्चैत्रमासके ५
विशाखान्तं हि विशाखे ज्येष्ठके मूलभान्तकम्
तन्मासे चैव कर्त्तव्यं कृष्णाष्टम्यान्तु उत्सवम् ६

उत्तराषाढमाषाढे श्रावणे वैष्णवान्तकम्
पूर्वाषाढं हि तन्मासे चाश्वयुङ्मासिचाश्विनीम्  ७
कृत्तिकान्तं हि कार्त्तिक्यामार्द्रान्तं मार्गशीर्षके
सर्वमासेषु कर्तव्यमार्द्रान्तमुत्सवं परम्  ८
सौरमासं प्रशस्तं हि चांद्रमासो प्रशस्तकम्
प्रतिष्ठाभागमारभ्य यदृक्षञ्चोत्सवान्तकम्  ९
प्रतिष्ठोत्सवमेतद्धि तद्वा प्रत्यब्दमाचरेत्
नृपाणाञ्जन्मभान्तं वा मरणर्क्षान्तमेव वा  १०
आरंभं त्रिविधन्तेषां केतुरोहणपूर्वकम्
भेरी ताडनपूर्वं स्यादंकुरार्पणपूर्वकम्  ११
पूर्वन्तु ध्वजमारोप्य भेरीन्तु ताडयेन्क्रमात्
ततोंकुरार्पणञ्चैव केतुरोहणपूर्वकम्  १२
भेरीमादौ समुत्ताड्य द्ध्वजारोहणमारभेत्
अंकुराणयर्पयेत्पश्चात् भेरीताडनपूर्वकम्  १३
पूर्वेंकुरार्पणं कुर्यात् पश्चात् भेरीन्तु ताडयेत्
द्ध्वजमारोपयेत्पश्चात्कुर्वेवं प्रथमे निशि  १४
पार्त्थिवे सात्विके शैवे वर्जयेत्केतुरोहणम्
तद्दिनत्रितये वापि द्वितीये चोत्सवादिके  १५
ध्वजमारोपयित्वा तु तीर्त्थान्तं श्रावयेत्सुधीः
ताये चोत्सवमारभ्य प्रातरे वावभृथं कुरु  १६
रात्रिशाधमिति प्रोक्तं दिवाः प्रातः प्रकीर्तिताः
उत्सवं द्विविधं ज्ञेयं पुष्कलं विजयंत्विति  १७
अन्नयोत्सवन्दिनन्तेषां पूर्वरात्रौ समारभेत्
अश्विनीकौशिकोनाडीमनुशैवस्मृतिस्तथा  १८
चतुर्विंशत्क्रमेणैव बलिसंख्याः प्रकीर्तिताः
शैवादि चैत्रकान्तानां पुष्कलस्य विधीयते  १९

निर्द्दिष्टदिवसाद्रात्रिमारभ्योत्सवमाचरेत्
व्योमवेदाष्टकादित्याः कलापाविंशतिः क्रमात् २०
शैवादि पैतृकान्तानां दिवसानां क्रमेण तु
बलिसंख्या इति प्रोक्ता विजयस्य प्रकीर्तिताः २१
शैवोत्सवे तु यत्सर्वं प्रातःकाले समारभेत्
अधिवासे वृषां केतुरोहणं पूर्वरात्रके २२
संपूज्य देवदेवेशं ज्ञापयेदुत्सवं कुरु
वृषभं पूजयेत्तत्र गन्धपुष्पादिभिः क्रमात् २३
मुद्गान्नन्दापयेत्तस्मै तस्याग्रे स्थण्डिलं कुरु
शालिभिस्तण्डुलैर्दर्भैस्तन्मद्ध्ये नळिनं लिखेत् २४
नवकुंभान् समादाय क्षाळयेच्छुद्धवारिणा
ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् २५
सकूर्चान्पल्लवोपेतान् स्थापयेत्स्थण्डिलोपरि
मद्ध्यमे वृषकुंभन्तु अभितोष्टघटान्न्यसेत् २६
वृषभे सुमगन्धाद्यैः पूजयेत्तु विशेषतः
इंद्रादीशानपर्यन्तान् लोकपालान्समन्त्रकान् २७
गन्धपुष्पादिभिः पूज्य अस्त्रमुद्रां प्रदर्शयेत्
श्लक्ष्णं शुक्लन्तथा सूक्ष्मरन्ध्राष्टकरणानि च २८
उत्तमादीनि वस्त्राणि भूतभागैकविस्तृतम्
तारार्द्धं शिखरं ज्ञेयं पुच्छं तारसमं भवेत् २९
पक्षवेत्रसमायुक्तं पुच्छद्वयसमायुतम्
तत्पटं पञ्चथाभज्य मद्ध्यभागे वृषं लिखेत् ३०
वृषभः श्वेतवर्णस्तु रक्तास्सर्वेंकुरास्मृताः
सितकृष्णमयीचाक्षि हेमाभौ शृंगवर्णकौ ३१
कर्णे तु रत्नवर्णाभौ वालं पीतेन शोभितम्
घण्टामाला सुवर्णाभा स्थिता वा शयितन्तु वा ३२

चित्रञ्च चामरौ चैव ऊर्द्ध्वभागे लिखेद्बुधः
मद्ध्यभागा दधो भागे चाब्जपीठं समालिखेत् ३३
दीपाधारे लिखेद्दीपं युक्तौ तौ पार्श्वयोरपि
संप्रोक्ष्य हृदयेनैव गन्धपुष्पादिभिर्यजेत् ३४
स्थरिडलं कारयेत्पश्चात् वृषकुंभाग्रके ततः
तत् घतं हृदयेनैव स्थरिडलस्योपरिन्नयसेत् ३५
वृषगायत्रिमन्त्रेण यजेत् गन्धादिभिस्तथा
अग्नेरायतनं कुर्यात् वालुकैश्च तिलैस्तथा ३६
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
पलाशसमिधं सद्यमन्त्रेणैव तु होमयेत् ३७
हुत्वाज्यं वृषमूलेन चरन्तं हृदयेन तु
प्रत्येकं शतमर्द्धं वा हुत्वा स्विष्टान्तमाचरेत् ३८
अपरे दिवसे धीमान्द्ध्वजरोहणमारभेत्
पूर्वाह्ने वाथ मद्ध्याह्ने रात्रौ वा सुमुहूर्त्तके ३९
पीठगोपुरयोर्मद्ध्ये वीठाग्रे वा विषाग्रके
महामर्याधिमद्ध्ये वा द्ध्वजस्थानं विधीयते ४०
वन्दनं चंपकञ्चैव क्रमुकं वैष्णवन्तथा
बिल्वञ्च देवदारुञ्च आसनं खदिरन्तथा ४१
वक्रं भिन्नञ्च सुषिरं कृमिकोटरसंयुतम्
वर्जयेत्तान्प्रयत्नेरग्राहयेल्लक्षणान्वितम् ४२
स्थूप्यन्तं वा गळान्तं वा वक्षस्थलसमन्तु वा
त्रिकालस्य समं वापि गोपुरस्य समन्तु वा ४३
तत् ग्रीवस्यान्तकं वापि दराडायामं विधीयते
ऋक्षांगुलन्तु नाहं स्यात् दराडमूलमथोत्तमम् ४४
अन्नयसन्तु कलांगुल्यं विंशत्यंगुलमद्ध्यमम्
तन्नाहमष्टधा कृत्वा एकभागन्तु हीनकम् ४५

तद्दण्डाग्रस्य नाहन्तु अनुकूल्यं कुरु क्रमात्
स्कन्दत्रयन्तु दण्डाग्रे त्रिप्रादेशमथान्तकम् ४६
कलांगुलसमायामं रुद्रांगुलन्तु विस्तृतम्
अग्न्यंगुलघनं प्रोक्तं स्कन्दं वै दर्विका कृतिः ४७
द्वयं सुषिरसंयुक्तमर्द्धचित्रपथे कृतम्
मुनिषट् भूतमात्रं स्यात् वेणुदण्डस्य नाहकम् ४८
रन्ध्रप्रादेशमात्रन्तु ध्वजयष्ट्यास्तु दैर्घ्यकम्
स्कन्दत्रयाणामग्रे तु सुषिरन्तन्निवेदयेत् ४९
योजयेद्ध्वजयष्ट्यूर्द्ध्वे स्कन्दमेकन्निवेशयेत्
अनामिकांगुलायामं तदर्द्धञ्चैव विस्तृतम् ५०
सुषिरद्वयाञ्चितञ्चैव स्कन्दवत्कारयेद्बुधः
सुषिरे योजयेद्रज्जुं द्विगुणं मूलमाश्रितम् ५१
आयसं वलयं वापि बन्धयेद्देशिकोत्तमः
अनिष्ठांगुलिपरीणाहं समन्तात् कारयेद्बुधः ५२
परिचारकान् समाहूय सोष्णीषञ्चोत्तरीयकम्
ध्वजं संवाहयित्वा तु नानाध्वजसमायुतम् ५३
नानावाद्य समायुक्तं पिञ्छचामरसंयुतम्
ततो भक्तजनैस्सार्द्धं कुर्यात् ग्रामप्रदक्षिणम् ५४
प्रविशेदालयं पश्चात् ध्वजस्थानं समाश्रयेत्
दण्डशुद्धिन्ततः कुर्यात्प्रोक्षयेद्धृदयेन तु ५५
प्रदक्षिणक्रमेणैव दर्भमालान्तु विन्नयसेत्
वृषभं षण्मुखं वायुं मूलमद्ध्ये तदग्रके ५६
गन्धपुष्पादिभिश्चैव तत्तत् बीजमनुस्मरन्
चतुस्तालप्रमाणेन खातयेत्प्रथिवीन्ततः ५७
शातकुंभमयेनैव कच्छपन्तत्र निक्षिपेत्
पूजयेद्धृदयेनैव गन्धपुष्पादिभिर्बुधः ५८

हर्म्यस्यापि मुखास्तत्र कर्माणि स्थाप्य दण्डकम्
सुस्निग्धं कारयित्वा तु तन्मूले वेदिकां कुरु ५९
हस्तद्वयन्तु विस्तारमुत्सेधन्तु तदर्द्धकम्
त्रिमेखलासमायुक्तमेकैकं पर्वतांगुलम् ६०
तत्समञ्चैव विस्तारं वेद्यूर्द्ध्वेब्जन्तु कारयेत्
अथवान्यप्रकारेण वेदिकालक्षणं श्रुणु ६१
हस्तमात्रप्रविस्तारन्तत्समञ्चोच्छ्रयं भवेत्
षडंगुलोच्छ्रयमानेन अब्जन्तत्रैव कल्पयेत् ६२
गोमयालेपनं कृत्वा कुर्याच्छिल्पिविसर्जनम्
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः ६३
संग्रह्य सापितान्कुंभान् वृषदिक्फलकामिकान्
वृषमन्त्रं न्यसेद्धीमान् पटमद्ध्ये वृषा कृति ६४
शुद्धतोयेन संप्रोक्ष्य गन्धपुष्पादिभिर्यजेत्
सर्वातोद्य समायुक्तं मंगलां कुरु शोभितम् ६५
पूज्य संहितयायुक्तन्नानादीपैरलंकृतम्
गीतद्ध्वनिसमायुक्तन्नृत्तं कुर्याच्चतुर्दिशः ६६
आरोपयेत्ततो मंत्री वृषगायत्रिणाद्ध्वजम्
दण्डसैव्य क्रमेणैव मूले रज्जुं समन्नयेत् ६७
दिक्पालाधिपकुंभैश्च दण्डमूलेऽभिषेचयेत्
वृषभं पूजयेन्मूले गन्धपुष्पादिभिर्हृदा ६८
नैवेद्यन्दापयेदाज्यं गुळदद्ध्युपदंशकैः
वृषगायत्रिमन्त्रेण दापयेद्देशिकोत्तमः ६९
तत् भुक्त्वा चात्रया भज्य लभेत्पुत्रान्नसंशयः
एवं कृत्वा ततो रात्रौ भेरी ताडनमारभेत् ७०
द्ध्वकाग्रे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः
तण्डुलैश्च तिलैर्दर्भैर्न्निर्मितं पद्मलांछितम् ७१

तस्योपरिन्यसेद्भेरीन्नववस्त्रेण वेष्टयेत्
रुद्रं संपूज्य विधिवत् विष्णुं वामे तु पूजयेत् ७२
तस्योद्ध्वे स्थण्डिलं कुर्यादष्टपत्रं सकर्णिकम्
शूलास्त्रं हि यजेत्तत्र गन्धपुष्पादिभिः क्रमात् ७३
देशिकस्ताडयेद्भेरीं प्राङ्मुखो वाप्युदङ्मुखः
त्रयंबकेन मन्त्रेण पूर्वघोषेन ताडयेत् ७४
इदं विष्णवादिमन्त्रेण ततो भेरीन्तु ताडयेत्
ब्रह्मजज्ञानमन्त्रेण तृतीयन्ताडयेत्क्रमात् ५५
आहूयवाद्यकं पश्चात्पुष्पं हस्ते च दापयेत्
पुष्पन्निक्षेपयेद्भेर्यां नमस्कृत्वा तु वाद्यकम् ५६
भेरीमुद्धृत्य घोषेन वादयेत्ताडयन्क्रमात्
पश्चादाहूय देवांश्च देशिकं शिष्य एव वा ५७
सर्वातोद्य समायुक्तं पिंछचामरसंयुतम्
नृत्तगेय समायुक्तं स्तोत्रमंगलवाचकैः ५८
अन्नलिंगसमायुक्तं त्रिशूलेन समायुतम्
ग्रामप्रदक्षिणं कुर्यात् सन्धिदेवान्समाह्वयेत् ५९
ब्रह्माद्यैशानपर्यन्तमिंद्राद्यैशानमेव वा
गन्धपुष्पादिभिश्चैव पूजयेद्देशिकोत्तमः ६०
शुद्धोदनं गुळान्नं वा बलिन्दद्याद्विशेषतः
स्तुत्वा दिक्पालमंत्रैश्च उत्सवं श्रावयेत्ततः ६१
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
द्ध्वजांकुरार्पणं पूर्वं द्वितीये चोत्सवांकुरम् ६२
तीर्थांकुरं तृतीयन्तु त्रिविधश्चोत्सवांकुरम्
सर्वेषु गायपूर्वेषु कारयेद्विधिना सह ६३
द्ध्वजारोहणपूर्वं स्यादेवमंकुरमुच्यते
भेर्यांकुरार्पणं पूर्वं द्वितीये चोत्सवांकुरम् ६४

तीर्थांकुरं तृतीयन्तु त्रिविधन्नांकुरार्पणम्
अथवान्यप्रकारेण नेष्टमंकुरमंकुरम् ८५
अनंकुरन्तु यत्कर्म तत्कर्मन्निष्फलं भवेत्
तस्मात्सर्वप्रयत्नेन सांकुरार्पणमारभेत् ८६
सर्वेषु गायपूर्वेषु कारयेद्विधिना सह
ऐंद्रे वा दक्षिणे वापि पश्चिमे चोत्तरेऽपि वा ८७
ऐशान्ये पावके वाथ कारयेद्यागमण्टपम्
रुद्ररंध्रैर्विधिर्वाथ सहस्तञ्चतुतारकम् ८८
युगाग्रन्तु कलास्त्रैश्च श्रुतिद्वारसमायुतम्
तालमात्रन्तु तालोच्चं दर्पणोदरसन्निभम् ८९
तन्मद्ध्ये वेदिकां कुर्यात् गृहभागैकभागतः
रत्निमात्रसमुत्सेधम्मुष्टिमात्रमथापि वा ९०
कुण्डानि परितः कुर्याद्दिशासु विदिशासु च
चतुरश्राणि वृत्तानि दिशासु विदिशासु च ९१
ईशानशक्रयोर्मद्ध्ये वृत्तं प्राधानकं कुरु
हस्तमात्रप्रविस्तारं प्रागुक्तलक्षणं कुरु ९२
पञ्चाग्न्यावाथ कुर्वीत चतुर्दिक्षु तथापि वा
पूर्वे वा पश्चिमे वापि दक्षिणे चोत्तरेऽपि वा ९३
कारयेच्चतुरश्रन्तु ऐकाग्नेस्तु विधीयते
गोमयालेपनं कृत्वा पर्यग्निकरणं कुरु ९४
युगतोरणसंयुक्तं दर्भमालासमायुतम्
अष्टदिक् ध्वजसंयुक्तं वितानोपरिशोभितम् ९५
पुष्पदामैरलंकृत्य मुक्तादामैः प्रलंबयेत्
प्रोक्षयेत्पञ्चगव्यैश्च पुनः पुण्याहमाचरेत् ९६
द्वारपूजादिकं सर्वं पूर्वोक्तविधिनाचरेत्
यागस्य दिवसात्पूर्वरात्रौ कुर्वधिवासनम् ९७

शिवाग्रे स्थण्डिलं कृत्वा साष्टपत्रं सकर्णिकम्
स्थलिकां तण्डुलैः पूर्य कर्णिकोर्ध्वे तु विन्यसेत् ९८
सौवर्णमूर्णसूत्रं वा क्षौमकार्पासकन्तु वा
तत्सूत्रं भस्मसंयुक्तं तंडुलोपरिविन्न्यसेत् ९९
गंधपुष्पादिभिः पूज्य अघोरेणैव दर्शनम्
भवानी सहितं शान्तं प्रतिमाञ्चोत्सवाय च १००
पूजयेद्गंधपुष्पाद्यैस्तदीशानेन मन्त्रतः
पुण्याहं वाचयित्वा तु शान्तिसूक्तसमन्वितम् १०१
त्रियंबकेन मंत्रेण कौतुकं बंधयेद्बुदा
तथास्त्राणि च शूलानि कौतुकं बंधयेत्क्रमात् १०२
अघोरास्त्रेण मन्त्रेण भस्मन्दत्वा पृथक्पृथक्
नित्योत्सवं ततः कुर्यादन्नलिंगसमन्वितम् १०३
प्रदक्षिणत्रयं कृत्वा पश्चात् ग्रामप्रदक्षिणम्
प्रविशेदालयं पश्चात् हर्म्यप्रदक्षिणं कुरु १०४
प्रविश्य गर्भगेहन्तु शेषं पूर्ववदाचरेत्
अपरे तु दिने रात्रौ चास्त्रयागं समाचरेत् १०५
प्रागुक्तलक्षणोपेतस्त्वादिशैवोऽथ मूर्तिपैः
विधिनास्नानकं कृत्वा देशिकः शिष्यसंयुतः १०६
यागशालां प्रविश्याथ सकळीकरणं कुरु
स्थण्डिलं वेदिकोर्ध्वे तु चाष्टद्रोणैश्च शालिभिः १०७
तण्डुलैश्शोभितं कृत्वा तस्योर्ध्वे नळिनं लिखेत्
दर्भैश्चैव परिस्तीर्य पुष्पैर्लाजैश्च शोभितम् १०८
गंधाद्यैरर्चयेत्तत्र हृदयेन तु देशिकः
ससूत्रान्सापिधानांश्च द्रोणोदकप्रपूरितान् १०९
सवस्त्रान् नवकुंभांश्च वर्द्धनीं तण्डुलोपरि
मद्ध्यमे शिवकुंभन्तु वर्द्धनीं तस्य वामके ११०

परितश्चाष्टकुंभांश्च विन्यसेत्तु क्रमात्सुधीः
प्रत्येकं वस्त्रयुग्मैश्च वेष्टयेद्धृदयेन तु १११
शिवाख्यं पञ्चरत्नञ्च वर्द्धनीं काञ्चनीं क्षिपेत्
ध्यायेत्सदाशिवं रूपं शिवकुंभस्य मद्ध्यमे ११२
शिवमन्त्रन्न्यसेत्तत्र यजेद्गंधादिभिर्हृदा
ध्यात्वा संपूजयेन्मद्ध्ये वर्द्धन्यान्तु मनोन्मनीम् ११३
अभितश्चाष्टकुंभेषु लोकपालान्स्वमंत्रकैः
गंधपुष्पादिभिश्चैव पूज्य चास्त्रान् प्रदर्शयेत् ११४
अस्त्राणि विन्यसेद्धीमात् पद्मबाह्ये क्रमेण तु
अस्त्रादिशूलपर्यन्तमिंद्रादीशानमन्त्रकम् ११५
गंधपुष्पादिभिः पूज्य अस्त्रबीजेन बुद्धिमान्
ऐशाने यागशालायां स्थण्डिलं शालिभिः कुरु ११६
तन्मद्ध्येऽब्जं लिखेद्धीमान् त्रिशूलन्तत्र विन्न्यसेत्
नववस्त्रेण संवेष्ट्य गंधपुष्पादिभिर्यजेत् ११७
मंगळाष्टकरूपाणि वेदिबाह्ये तु पूजयेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ११८
समिदाज्य चरून् लाजान्माषशालियवास्तथा
तिलसर्षपदुग्धानि गुळखण्डोदशस्तथा ११९
सद्यादीशानपर्यन्तं मन्त्रैश्चैव क्रमाद्धुनेत्
शतमर्द्धं तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात् १२०
अश्वत्थोदुंबरप्लक्षवटं पूर्वादि दिक्षु वै
शमीखदिरबिल्वार्कविदिक्षु क्रमशस्तथा १२१
प्रधानस्य पलाशन्तु द्रव्यान्ते व्याहृतिं हुनेत्
घृतम्मूलेन मंत्रेण हुनेदष्टशतं सुधीः १२२
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
पश्चान्मन्त्रेण शिरसा स्रुचिपूर्णाहुतिं हुनेत् १२३

नैवेद्यन्दापयेद्धीमान् होमान्ते यागमूर्तिनाम्
सायं प्रातर्बलिन्दद्याद्धोमांते विधिना पुरा १२४
द्रोणं वापि तदर्द्धं वा बल्यर्त्थन्तण्डुलं पचेत्
कटाहं स्थालिकं वापि पात्रं प्रक्षाळ्यनिक्षिपेत् १२५
तत्पात्रे निक्षिपेदन्नमन्नद्रव्य समायुतम्
पात्रतण्डुलकं पक्वमन्नलिंगाय बुद्धिमान् १२६
बलिपात्रं समादाय प्रोक्षयेदस्त्रमंत्रतः
तेन चान्नेन लिंगं तु कारयेल्लक्षणान्वितम् १२७
द्वादशांगुलमायामन्नाहं तु द्विगुणं भवेत्
अग्रे पक्षांगुलं तारमापूर्य कुशलस्तथा १२८
तल्लिंगस्थं ततो द्ध्यात्वा रौद्रं पाशुपतं यजेत्
परिचारान् समाहूय सुस्नातान् शुक्लवस्त्रकान् १२९
सोष्णीषञ्चोत्तरीयञ्च पवित्रपाणिकश्शुचिः
शूलास्त्रञ्चान्नलिंगञ्च बलिपात्रन्तथायुधान् १३०
गन्धपुष्पादिभिश्चैव धूपदीपसमायुतम्
यन्त्रोपरिनयेद्वाथ वाचयित्वा गळैरपि १३१
कितानच्छत्र संयुक्तं पिंछचामरसंयुतम्
ताळकाहळसंघैश्च वाद्यैर्द्ध्वजैश्च संयुतम् १३२
द्ध्वजादि बलिपीठान्तं बलिन्दद्याद्विशेषतः
हस्तमात्रप्रविस्तारमुत्सेधं द्वादशांगुलम् १३३
मेखलात्रयसंयुक्तं प्रत्येकञ्चतुरंगुलम्
उत्सेधन्तत्समंज्ञेयन्तन्मद्ध्ये कर्णिकां कुरु १३४
कारयेत् बलिपीठन्तु प्रतिसन्ध्यं यथा क्रमम्
दारुणायन्त्रपीठं वा लेपनं वापि कारयेत् १३५
प्रथमं विघ्नराजं स्यात् पैशाचं स्यात् द्वितीयकम्
तृतीयं ब्रह्मरात्रिः स्यात् गन्धर्वायाश्चतुर्त्थकम् १३६

पञ्चमं भूतरात्रिः स्यात् षष्ठमं गुहरात्रकम्
सप्तमं ऋषिरात्रं स्यादष्टमन्नागरात्रकम्  १३७
नवमञ्चंद्ररात्रं स्यात् दशमं विष्णुरात्रकम्
राक्षसं रुद्ररात्रन्तु द्वादशं शिवरात्रकम्  १३८
दिनाधिदेवतास्त्वेवं पैतृकस्योत्सवस्य तु
गन्धर्वदिवसादिः स्यात्सौख्यस्येवं विधीयते  १३९
श्रीकरं गुहरात्रादि नागरात्रादि पार्त्थिवम्
सात्विकं विष्णुरात्रादि शिवमेकं शिवं स्मृतम्  १४०
एतेषान्देवतानान्तु बलिभोज्य क्रमं श्रुणु
उत्सवादौ समारभ्य सायं प्रातः क्रमेण तु  १४१
रात्रयश्च सुविज्ञेयं पुष्कलस्यैवमाचरेत्
उत्सवादा तु साधायत् रात्रमेवं प्रकीर्तितम्  १४२
अन्तराणाञ्च देवानामहोरात्रन्तु रात्रिकम्
विजयस्यैव क्रमेणैव कल्पयेद्देशिकोत्तमः  १४३
मुद्गान्नं लड्डुकं सर्पिः कदळी गुळसंयुतम्
प्रथमेहनिदातव्यं विघ्नमंत्रमनुस्मरन्  १४४
रक्तान्नं मांससंयुक्तं कृसरा पूपसंयुतम्
सघृतं मत्स्यसंयुक्तं जपाकुसुमसंयुतम्  १४५
द्वितीये हनिदातव्यं पैशाचं मन्त्रमुच्चरन्
पायसान्नञ्च सघृतं पद्मपुष्पसमायुतम्  १४६
तृतीये हनिदातव्यं ब्रह्ममन्त्रमनुस्मरन्
कृसरान्नञ्च सक्तुश्च सघृतं लड्डुकैर्युतम्  १४७
चतुर्त्थे हनिदातव्यं गन्धर्वं मन्त्रमुच्चरन्
इंद्रवल्लिहरिद्रान्नं सघृतं लाजसंयुतम्  १४८
पञ्चमे हनिदातव्यं स्कन्दमन्त्रमनुस्मरन्
कुशाग्रे घृतसंयुक्तं शुद्धान्नं दधिसंयुतम्  १४९

सप्तमे हनिदातव्यं ऋषीणां मन्त्रमुच्चरन्
क्षीरान्नं शालिपिष्टञ्च इक्षुखराडसमायुतम् १५०
अष्टमे हनिदातव्यन्नागमन्त्रमनुस्मरन्
दद्ध्यन्नञ्च गुळोपेतं मातुलुंगफलैर्युतम् १५१
नवमे हनिदातव्यमैंद्रमन्त्रमनुस्मरन्
गुळोदनं घृतोपेतं कदळीफलसंयुतम् १५२
दशमे हनिदातव्यं विष्णुमंत्रमनुस्मरन्
रक्तान्नं माससंयुक्तं सापूपन्तिलचूर्णयुक् १५३
एकादशाहे दातव्यं राक्षसं मन्त्रमुच्चरन्
शाल्यन्नं दधिसंयुक्तं गुळखराडफलैर्युतम् १५४
द्वादशाहे तु दातव्यं शैवं मंत्रमनुस्मरन्
कपित्थफलमात्रेण बलिरेवं प्रकीर्तितम् १५५
द्रव्याणामप्यलाभे तु दद्ध्यन्नञ्च बलिं क्षिपेत्
ब्रंहाद्यैशानपर्यंतमिंद्रादीशानमेव वा १५६
तत्तत्स्थानेषु सर्वेषु विघ्नराजादिमंत्रकैः
अर्चयित्वा तु पूर्वोक्तमिंद्रस्यैव बलिं क्षिपेत् १५७
प्रणवादि चतुर्थ्यंतं स्वनामपदमद्ध्यमम्
स्वाहांते बलिनिर्देशं सर्वेभ्य इति योजयेत् १५८
सर्वदेवालयाग्रेषु बलिन्दद्याद्विशेषतः
एवं बलिक्रमं कुर्यात् बलिपीठे बलिं क्षिपेत् १५९
यागशालां प्रविश्याथ अस्त्रादीन् स्थापयेत्क्रमात्
लिंगमूर्तिं विसृज्यान्न लिंगञ्चैव क्षिपेज्जले १६०
अतिवृष्टौ महावाते परराजविधौ तथा
ग्रामादिदेवानाहूय ध्वजमूले विशेषतः १६१
तत्रैवबलिदानं स्यात् कुर्यात्ग्रामबलिं विना
ग्रामप्रदक्षिणं कृत्वा बल्यन्तञ्चैव कौतुकम् १६२

सम्मार्जनविधिं कृत्वा प्रोक्षयेच्छुद्धवारिभिः
कदळीक्रमुकैश्चैव सफलैः पूर्वकुंभकैः  १६३
मुक्तादामैश्च दीपैश्च भवनं प्रतिभूषयेत्
ध्वजैश्च विविधैश्चैव पताकाभिस्तथैव च  १६४
नानादीपैस्समायुक्तं व्रजेयुस्तद्भटाः पुरा
तदन्ते वारणारूढास्तदन्ते वाजिवाहनाः  १६५
वाजियन्त्रस्तदन्ते तु डोळायन्त्रास्तदन्तके
दीपयन्त्रस्तदन्तेषु नृत्तयन्त्रास्तदन्तके  १६६
नानातोद्यसमायुक्तं नृत्तगेयसमाकुलम्
छत्रैः पिञ्छैश्च विविधैः चामरव्यजनैर्युतम्  १६७
रथे वारंगके वापि शिबिकां रोप्य बिंबकान्
नानावस्त्रसमायुक्तान् नानापुष्पोपशोभितान्  १६८
पुष्पप्रभासमायुक्तान्सर्वालंकारसंयुतान्
कौतुकं शक्तियुक्सौधमन्ते गच्छेत् शनैः क्रमात्  १६९
प्रतिमाष्टादशानान्तु एकं वापि द्वयन्तु वा
त्रयं वाप्यथवा सर्वं यथा वित्तानुसारतः  १७०
महाशैवास्तदन्ते तु तदन्ते भूसुरास्तथा
सर्वेषां पृष्ठंतो गच्छेत्तथा चण्डेश्वरं ततः  १७१
सर्वालंकारसंयुक्तं चण्डयागां तमुच्यते
चातुर्वर्णोद्भवाभक्ता व्रजेयश्चक्रमेण तु  १७२
ये तत्रैवानुगच्छन्ति भक्तियुक्तामहाजनाः
प्राप्नुवन्त्यश्वमेधस्य फलमेवन्न संशयः  १७३
कृत्वा प्रदक्षिणं ह्येवं प्रविश्यास्थानमंटपम्
देशिकस्सर्वभागे तु स्वासने वामके नृपः  १७४
तयोः पृष्ठप्रदेशे तु शिष्यभृत्याश्च संस्थिताः
महाशैव द्विजाश्चैव सव्यभागे तु संस्थिताः  १७५

देवस्याग्रे विशेषेण नृत्तं कुर्यात् सगेयकम्
सर्वालंकारसंयुक्तं कारयेत्तु विशेषतः १७६
पटं तत्रापनीयाथ शंखघोषसमायुतम्
तत्काले चात्मतत्वञ्च पूजयेत्प्रतिमन्त्रतः १७७
नीराञ्जनन्ततः कुर्यात्तद्रात्रौ परिवेष्टके
ततो नैवेद्यकं पश्चात्तांबूलं दापयेद्बुधः १७८
सायंप्रातः क्रमेणैव बल्यन्ते तु दिनं प्रति
उमया सहितं चंद्रशेखरं प्रथमे हनि १७९
सुखासनञ्च हर्यर्द्धं द्वितीये दिवसे ततः
तृतीये चार्द्धनारी च गंगाधरन्तथैव च १८०
कल्याणसुन्दरञ्चैव वृषारूढञ्चतुर्थके
चण्डेश्वरानुग्रहञ्च उमासंवादमूर्तिनम् १८१
नन्दिकेशसमारूढं पञ्चमे दिवसे विदुः
उन्मत्तं भैरवाकारं वृषयन्त्रपुरान्तकम् १८२
षष्ठमे दिवसे विद्धि उत्सवं तत्र कारयेत्
कलाभ्यां कालहारिञ्च गजोद्भिश्चार्द्धकं हरम् १८३
सप्तमे दिवसे ब्रंहविशेषञ्चोत्सवं कुरु
अष्टमे वा नवाहे वा शंभोत्सवमथाचरेत् १८४
भुजंगत्रासमारूढपंकजं लळितन्तु वा
भुजंगभैरवं वाथ भुजंगवलयन्तु वा १८५
भुजंगकुञ्चितं नृत्तं पञ्चभेदमिहोच्यते
पूर्ववत्कौतुकं बध्वा देशिकेन विचक्षणः १८६
अपरे दिवसे धीमान्देवदेवीमलंकृतम्
सुमुहूर्ते सुलग्ने तु गंधमालेपनं द्विजम् १८७
पूजयेद्गंधपुष्पाद्यैर्मुद्गान्नं दापयेद्बुधः
मुखवासञ्च तांबूलं दापयेद्धृदयेन तु १८८

रथे वा शिबिकायां वा रोपयेत्तु विशेषतः
विमानप्रदक्षिणं कुर्यात्सभास्थाने प्रदक्षिणम् १८९
दिवाकाले चरेदेवमास्थाने संप्रवेशयेत्
स्नपनं कारयेत्पश्चान्महाहविर्निवेदयेत् १९०
नृत्तगेयैश्च वाद्यैश्च स्तुत्यैस्तोत्रैश्च पूजयेत्
रथमारोपयेद्रात्रौ कुर्यात्ग्रामप्रदक्षिणम् १९१
पुनः स्थापनं कर्तव्यं स्नापनं कारयेत् द्विज
प्रभूतहविषन्दत्वा स्थापयेद्देशिकोत्तमः १९२
तीर्थाहात् पूर्वदिवसे मृगयात्रां समारभेत्
किरातार्जुनरूपं वा त्रिपुरान्तकमेव वा १९३
किरातरूपवत्सर्वान् विशेषान्वेषधारयेत्
केचिद्वायुसमारूढाः केचिद्वा युधवाहनाः १९४
केचित्खड्गधराश्चैव केचिच्चापधरास्तथा
केचित्कुन्दधराश्चैव केचित्पाशधरास्तथा १९५
महाजनसमायुक्ताः केचिद्युद्धोन्मुखानराः
गजञ्चैव मृगञ्चैव वराहं वा कपिं पुनः १९६
मयूरकुक्कुटादीनि पक्षिणो विविधान् ग्रहेत्
दिवाकाले प्रकर्तव्यं निशिकौतुकबन्धनम् १९७
सौवर्णमुत्तमं सूत्रं तारेण मद्ध्यमं भवेत्
कार्पासन्तु कनिष्ठन्तु रक्षासूत्रं विधीयते १९८
तण्डुलैस्थालिकां पूर्य विन्यसेत्कौतुकं हृदा
गंधपुष्पादिभिश्चैव पूजयेत्तान् स्मृतान्सुधीः १९९
शूलञ्च प्रतिमाञ्चैव अस्त्राणि यागमूर्तिनाम्
कौतुकं बन्धयेद्धीमान् हृदयेन विशेषतः २००
स्वस्तिसूक्तसमायुक्तं पुण्याहं वाचयेत्ततः
भस्मन्दत्वा हृदा तेषां कुर्यात्तीर्थाधिवासनम् २०१

मराटपस्य तु मद्ध्ये तु स्थंडिलं शालिभिः कुरु
ससूत्रान्सापिधानांश्च सकूर्चान्वस्त्रवेष्टितान् २०२
सोदकान्पल्लवोपेतान् कलशान्वसुसंख्यकान्
स्थरिडलोपरिविन्यस्त्वा पूजयेदधिदेवतान् २०३
मद्ध्ये मनोन्मनीं पूज्य ऐंद्राशाद्युत्तरान्तकम्
गंगादिसप्ततीर्थानि ऐशे दुर्गाञ्च विन्नयसेत् २०४
सर्वातोद्य समायुक्तं सर्वालंकारसंयुतम्
साधनैः कलशैर्युक्तं शूलेनैव समायुतम् २०५
ग्रामप्रदद्विणं कृत्वा तीर्त्थस्थानं समालिखेत्
अंभोधौ वा तटाके वा नद्यां वा वापिके तथा २०६
तीरे समतलं कृत्वा प्रपां कृत्वातिसुन्दराम्
तन्मद्ध्ये स्थरिडलं कृत्वा कलशान्स्थाप्यपूर्ववत् २०७
तस्यैव पश्चिमे भागे शूलन्तु स्थंडिलोपरि
संस्थाप्य कलशांश्चैव गंधपुष्पादिभिर्यजेत् २०८
बीजानि सप्ततीर्त्थानामर्णापाद्यप्सुविन्यसेत्
आहूय सर्वदेवांश्च शूलं वै स्थापयेत्ततः २०९
प्रविशेदालयं पश्चात् देवतीर्त्थाधिवासनम्
अपरे दिवसे चैव चूर्णोत्सवं समाचरेत् २१०
आस्थानमंटपाग्रे वा प्रासादस्याग्रकेऽपि वा
गोमयालेपनं कृत्वा स्थरिडलद्वितयं कुरु २११
कुशपुष्पैः परिस्तीर्य स्थरिडलं चार्चयेद्बुदा
सर्वातोद्य समायुक्तं मंगळांकुरशोभितम् २१२
प्राक्स्थंडिलं न्यसेद्विद्वान्लूखलं मुसलं तथा
दूर्वाया सह देव्याश्च वस्त्रेणाच्छाद्यलूखलम् २१३
मुसलं लूखलञ्चैव प्रोन्नयेत्तु शिवांभसा
तस्य पश्चिमभागे तु शूलं तत्स्थंडिलोपरि २१४

विन्नयस्य हृदयेनैव गंधादिभिरथार्चयेत्
घृतं शिरोर्पणं कुर्याद्धेमदूर्वांकुराक्षतैः  २१५
शूलञ्च मुसलञ्चैव लूखलञ्च विशेषतः
द्रोणं वापि तदर्द्धं वा सुशुष्करजनीन्तथा  २१६
निक्षिप्य लूखले तत्र चूर्णयेन्मुसलेन तु
व्योमव्यापि समुच्चार्य ततो भक्तजनैस्सह  २१७
तच्चूर्णं हृदयेनैव निक्षिपेल्लिंगमूर्द्धनि
गंधपुष्पादिभिः पूज्य पद्ममुद्रां प्रदर्शयेत्  २१८
भवानी सहितं देवं यष्ट्वा चूर्णञ्च दापयेत्
तैलेनैव त्रिशूलन्तु कृत्वात्वभ्यञ्जनन्ततः  २१९
चूर्णन्तु दापयेत्पश्चादाचार्याय प्रदापयेत्
तत्पश्चाद्दापयेद्राज्ञो भक्तानान्दापयेत्ततः  २२०
पात्रे चूर्णन्तु संगृह्य त्रिशूलेन समायुतम्
चूर्णं ग्रामजनानान्तु दत्वा शीघ्रं प्रदक्षिणम्  २२१
प्रविश्य भवनं पश्चात् तीर्थस्नानं समाचरेत्
सर्वातोद्य समायुक्तं गीतनृत्तसमायुतम्  २२२
सर्वालंकारसंयुक्तं शूलेन कौतुकेन तु
गच्छेत् भक्तजनैस्सार्द्धं तीर्थस्नानं समाचरेत्  २२३
स्थाप्य बिंबं प्रपामद्ध्ये चाष्टद्रोणैश्च शालिभिः
स्थंडिलद्वितयं कुर्यात् दर्भैः पुष्पैः परिस्तरेत्  २२४
संगृह्य रंध्रकलशान् सूत्रेणैव तु वेष्टयेत्
तीर्थोदकैश्च संपूज्य स्थापयेत्स्थंडिलोपरि  २२५
कूर्चानि विन्यसेत्पश्चात् विधानैश्च विधाय च
सदाशिवं यजेन्मद्ध्ये विद्येशानभितो यजेत्  २२६
दर्शयेत्सुरभीमुद्रां नमस्काराख्यमेव वा
अष्टादशगणांश्चैव त्रयस्त्रिंशच्च देवताः  २२७

आहूयलोकपालांश्च शिष्यस्तु प्रतिमानसम्
त्यक्त्वा कौतुकसूत्रन्तु शूलन्तु कलशोदकैः २२८
संस्थाप्य तु तथातीर्त्थे जलस्नानं समाचरेत्
त्रिशूलेन सहस्नानं मर्त्याः कुर्वन्तु येऽत्र तु २२९
सर्वपापात्प्रमुच्यन्ते निर्मुक्तारूपपन्नगात्
उद्वास्य सप्ततीर्त्थानि प्रविशेदालयं प्रति २३०
वेदध्वनिसमायुक्तं स्वस्तिवाचकसंयुतम्
नृत्तगेयादिसन्त्यज्य अन्नद्यत्सर्वं समाचरेत् २३१
प्रागुक्तविधिना धीमान् कुर्यादग्निविसर्जनम्
कृत्वा तीर्त्थं दिवाकाले रात्रौ केत्ववरोहणम् २३२
त्रिरात्रौ भूतरात्रे वा धातुरात्रे प्रजापते
कृत्वात्वारोहणं पश्चात् वृषभे वृक्षविन्यसेत् २३३
वृषभं स्नपनं पश्चात् गंधपुष्पादिभिर्यजेत्
रत्नानां दधिसंयुक्तं माषयुक्तं घृतप्लुतम् २३४
त्रिशूलेन समायुक्तं चान्नलिंगसमायुतम्
ततो ग्रामबलिन्दद्यात् मद्ध्यरात्रे विशेषतः २३५
बलिकाले घोष्यवाद्यं नान्यत्र दीपहीनकम्
मौनं प्रतिधरास्सर्वे संधिदेवान्विसर्जयेत् २३६
एवं प्रदक्षिणं कृत्वा बलिपीठे बलिं क्षिपेत्
प्रविश्यालयं यथास्थाने शूलास्त्रं विन्यसेत्ततः २३७
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
दक्षिणान्दापयेत्तस्मै गोभूमिकाञ्चनैस्सह २३८
पञ्चनिष्काधमा प्रोक्ता द्विगुणामद्ध्यमा भवेत्
त्रिगुणञ्चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा २३९
उत्सवं सकळानान्तु एवमेवं समाचरेत्
किञ्चिदस्मिन् विशेषोऽस्ति बिंबाग्रे स्थापयेत् द्ध्वजम् २४०

उत्सवञ्च तेन कुर्यात् बिंबान्वाथ प्रजापते
भवान्यासहिते चैवं बिंबे चैवोत्सवः कुरु २४१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
इहैव धनवान्श्रीमान् सोन्ते सायुज्यमाप्नुयात् २४२

अष्टादशदिनोत्सवविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण अष्टादशदिनोत्सवम्
तीर्थमादौ विनिश्चित्य पूर्वोक्तविधिना सह १
नवाहत्रितये वापि सप्ताहत्रितयेऽपि वा
द्विगुणे नवदिने वापि द्ध्वजारोहणमारभेत् २
कंकुरार्पणपूर्वञ्च भेरी ताडनपूर्वकम्
ध्वजारोहणपूर्वञ्च त्रिविधं तदुदाहृतम् ३
अंकुरार्पणपूर्वञ्च सर्वसंपत्समृद्धिदम्
भेरीताडनपूर्वं स्यात् देवानां तु प्रियावहम् ४
ध्वजारोहणपूर्वञ्चेत् सर्वप्राणिसुखावहम्
ब्रांहणादित्रयाणाञ्च शूद्रो वांकुरपूर्वकम् ५
नगरे ध्वजपूर्वं वा मंगळे भेरिपूर्वकम्
वर्तनेंकुरपूर्वं वा तद्वत्ब्रंहन्प्रकीर्तितम् ६
उत्सवेषु च सर्वेषु अष्टादशक्रमं श्रुणु
आयुष्करं यशस्करं श्रीसौभाग्य विवर्द्धनम् ७
पुत्रपौत्रविवृद्धिञ्च सर्वकामफलप्रदम्
राज्ञां विजयवृद्धिञ्च सर्वकामफलप्रदम् ८
राज्ञां विजयवृद्धिञ्च सर्वलोकसुखावहम्
अथोत्सवक्रियास्सर्वाः कत्थन्ते क्रमशोऽधुना ९
विघ्नेश्वरस्य पूजाञ्च मूलदेवस्य पूजनम्
वास्तुहोमं ततः कृत्वा मृत्संग्रहमतः परम् १०

वृषांकुरं ततः कृत्वा वृषयागं समाप्य च
सोमयारिं समुत्थाप्य वाद्यगीतसमन्वितम् ११
विघ्नेशञ्चास्त्रराजञ्च स्कन्दञ्चराडसमन्वितम्
ध्वजस्थानन्तु संप्राप्य भेरीताडनकन्ततः १२
प्रधानध्वजमारोप्य देवतावाहनन्नयेत्
स्राशीर्वादं ततः कृत्वा ब्रह्मघोषसमन्वितम् १३
स्रास्थानमराटपे देवं संस्थाप्य तदनन्तरम्
सर्वेषु यागपूर्वेषु यागांकुरन्तु कारयेत् १४
गणयागन्तु संपूज्य होमकर्मसमन्वितम्
रक्षाबंधं ततः कृत्वा धूपदीपसमन्वितम् १५
ततो देवान्समुत्थाप्य स्रन्नलिंगसमन्वितम्
संधिदेवान्समावाह्य बलिन्तत्र प्रदापयेत् १६
यागदीक्षां गणेशस्य नीराजनमतः परम्
स्कन्दयागन्ततो दद्यात् भक्तयागं तदन्तकम् १७
यागकुंभान् गणेशस्य स्रभिषेकं समाचरेत्
स्रस्त्रयागं ततः कल्प्य स्रस्त्रकुंभाभिषेचनम् १८
नवाहस्य दिने प्रातः वृषाधिवासनं कुरु
वृषदेवान् समावाह्य दिक्पटान्संप्रपूजयेत् १९
ध्वजस्तंभांश्चतुर्दिक्षु विन्यस्य सुरसत्तमाः
नरादिदेवमावाह्य चतुर्दिक्षु प्रपूजयेत् २०
सोमस्कन्दादिमूर्तीनां विशेषयजनन्ततः
तद्रात्रौ ध्वजमारोप्य पूर्वादिक्रमशस्तथा २१
महायागे विशेषेण तीर्त्थांकुरन्तु कारयेत्
यागार्चनन्ततः कृत्वा वह्निकार्यमतः परम् २२
यात्रार्त्थं स्नपनं पश्चात् विशेषयजनं ततः
तैलाभ्यंगं विशेषेण नटेशोत्सवमाचरेत् २३

मृगयात्रां ततश्चैव तीर्थाधिवासनं ततः
तीर्थाह्नः पूर्वरात्रौ च पुनः कौतुकबंधनम्  २४
चूर्णोत्सवमहातीर्थं पूर्णाहुतिमनंतरम्
यागकुंभाभिषेकञ्च अवरोहं ततः परम्  २५
लोकपालविसर्जञ्च मौनोत्सवं तदंतके
शक्त्युत्सवं ततः कुर्यादुडुपारोपणं ततः  २६
चंडयागं ततः कुर्याद्दक्षिणादारमंतके
उत्सवस्य क्रमं ह्येवं यागदीक्षाक्रमं श्रुणु  २७
प्रथमं गणयागं तु द्वितीयमस्त्रमिष्टिकम्
महायागं तृतीयं तु यागं त्रिविधमुच्यते  २८
षट् दिनं गणयागे तु स्कन्दभक्तदिनत्रयम्
अस्त्रयागं तृतीये च नवाहञ्चेति कीर्तितम्  २९
प्रधानध्वजमारोप्य नवद्विगुणमाचरेत्
प्रथमां रात्रिमारभ्यं नवाहप्रहरांतकम्  ३०
कालञ्च षोडशप्रोक्तं वह्नियागमथ श्रुणु
गणयागोक्तकालस्स्यात् सप्ताहप्रातरांतकम्  ३१
स्कन्दभक्ताश्चमूर्तीनां गणयागे तु दीक्षिताः
षट्कालं गणयागं तु स्कन्दयागं त्रिकालकम्  ३२
संबन्धे सुन्दरश्चैव पित्रन्नामत्रयस्तथा
भक्तयागं त्रिकालञ्च द्वादशं परिकीर्तितम्  ३३
यागं समाप्य तत्काले गणेशायाभिषेचयेत्
सप्ताहं सायमारभ्य नवाहं प्रातरांतकम्  ३४
चतुष्कालमिदं प्रोक्तमस्त्रयागं प्रकीर्तितम्
यागकुंभेऽस्त्रमावाह्य यागदीक्षेन्दुशेखरः  ३५
यागं समाप्य यागान्ते अस्त्रराजाभिषेचयेत्
यागकाले विशेषेण तत्तन्मूर्तिं समाचरेत्  ३६

इन्दुशेखरयुक्तो वा न युक्तो यागमाचरेत्
आदिमद्ध्यावसाने तु भक्तोत्सवविधिक्रमम् ३७
तस्योद्धर्वे तु महायागः पूर्वोक्तविधिना सह
नवाहरात्रिमारभ्य दशाष्टप्रातरन्तकम् ३८
यागमष्टादशप्रोक्ताः नटेशस्य द्विकालकम्
सोमास्कन्देश्वरं प्रोक्तं शेषयागं प्रजापते ३९
यागत्रयक्रमं वक्ष्ये शृणुष्वकमलोद्भव
ऐन्द्रे वा दक्षिणे वापि चैशाने पावके तथा ४०
पश्चिमे चोत्तरे वापि कारयेद्यागमण्टपम्
रुद्ररन्ध्रमुनिर्वाथ रसहस्तञ्च तारकम् ४१
युगाश्रं वा कलाहस्तं श्रुतिद्वारसमन्वितम्
चतुस्तालमथोच्चन्तु दर्पणोदरसन्निभम् ४२
तन्मद्ध्ये वेदिकां कुर्यात् गृहभागैकभागतः
अरत्निमात्रमुत्सेधं मुष्टिमात्रमथापि वा ४३
परितो वेदिकामूले उपवेदीं प्रकल्पयेत्
युगांगुलप्रविस्तारं तदर्द्धं चोछ्र्यं भवेत् ४४
कुण्डानि परितः कुर्यात् दिशासु विदिशासु च
दिशासु चतुरश्राणि वृत्तानि विदिशासु वै ४५
ईशानशक्रयोर्मद्ध्ये वृत्तं कुर्यात्प्रधानकम्
हस्तमात्रप्रविस्तारं प्रागुक्तैर्लक्षणैः कुरु ४६
पञ्चाग्निन्त्वथ कुर्वीत चतुर्दिक्ष्वीशकेऽपि च
पूर्वे वा पश्चिमे वापि दक्षिणे चोत्तरेऽपि वा ४७
कारयेच्चतुरश्रन्तु एकाहस्तु विधीयते
गोमयालेपनं कृत्वा पर्यग्निकरणं कुरु ४८
युगतोरणसंयुक्तमष्टमंगलसंयुतम्
दशायुधसमायुक्तं दर्भमाला समायुतम् ४९

अष्टद्ध्वजसमायुक्तं वितानैः परिशोभितम्
अलंकृतं पुष्पमुक्तादामभिस्सर्वतश्शुभम् ५०
स्थरिडलं वेदिकोद्ध्वें तु अष्टद्रोणैश्च शालिभिः
तरडुलैश्च तिलैर्लाजैस्तदूद्ध्वें नळिनं लिखेत् ५१
दर्भैः पुष्पैः परिस्तीर्य पुरयाहं प्रोक्षयेत् गुरुः
ससूत्रान् पल्लवोपेतान्सवस्त्रान्सापिधानकान् ५२
सकूर्चान् रत्नसंयुक्तान् ग्राहयेद्विधिवद्धटान्
पूर्वञ्च गणयागं स्यात् वेद्यूद्ध्वें विघ्ननायकम् ५३
वल्लभान्तस्य वामे तु परितोष्टघटान्न्यसेत्
वरदं पूर्वदेशे तु वीरमाग्नेयगोचरे ५४
विघ्नेशन्दक्षिणे पार्श्वे नैर्ऋत्यान्तु गजाननम्
भक्तप्रियन्तु वारुरयां गजरठन्तथानिले ५५
विनायकन्तु सौम्यायां लंबोष्ठमीशगोचरे
तत्तत्स्वनाममन्त्रेण अर्चयेत्तु यथाक्रमम् ५६
द्वारादियागपूजान्तं पूजयेद्विधिवत्क्रमात्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ५७
पञ्चकुरडन्ततो हुत्वा एककुरडमथापि वा
समिदाज्य चरून्लाजान् अपूपान्लड्डुकन्तथा ५८
पनसाम्रकदळ्यादि नाळीकेरेक्षुखरडकान्
विघ्नेशम्मूलमुच्चार्य होमयेद्विधिना गुरुः ५९
त्रिशतं द्विशतं वापि यथा शक्त्या घृतं हुनेत्
शतमर्द्धन्तदर्द्धं वा प्रतिद्रव्यं हुनेत्क्रमात् ६०
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिमथाचरेत्
होमान्ते तु बलिन्दत्वा बल्यन्ते चोत्सवं क्रमात् ६१
गणयागमिति प्रोक्तं अस्त्र इष्टिमथ श्रुणु
अस्त्रयागेऽस्त्रमूर्त्तिञ्च गंभनीं वामतो न्यसेत् ६२

परितोऽष्टघटानष्टौ भवादींश्च प्रपूजयेत्
पूर्वोक्तेन विधानेन अस्त्रयागं समाचरेत् ६३
महायागे विशेषेण वेदिमद्ध्ये शिवं यजेत्
वर्द्धनीं तस्य वामे तु विद्येशान्परितो न्यसेत् ६४
शक्त्यादिशक्तिपर्यन्तं पूजयेत्परमेश्वरम्
नैवेद्यं धूपदीपञ्च तोषयेत्परमेश्वरम् ६५
यागपूजादिकं सर्वं पूर्वोक्तेन विधानतः
अग्निकार्यमधः कृत्वा नवकुंडन्तु होमयेत् ६६
समिद्रव्यादिकं सर्वं दिशाहोममथाचरेत्
यत्रनित्योत्सवो नास्ति तत्र नास्ति महोत्सवः ६७
अर्चनं विधिना कुर्यात्सायंप्रातर्दिने दिने
होमान्ते तु बलिन्दद्यात् बल्यन्ते चोत्सवं बुधः ६८
बलिबेरसमायुक्तमन्नलिंगसमन्वितम्
अस्त्रदेवसमायुक्तं बलिद्रव्यसमन्वितम् ६९
नित्योत्सवबलिन्दत्वा पश्चात् ग्रामबलिं क्षिपेत्
ध्वजादिबलिपीठान्तं उत्सवे बलिमाचरेत् ७०
इंद्रादिबलिपूर्वन्तु दिनदेवान् ततः परम्
वामनं शंखपालञ्च वीरेशञ्चोग्ररूपकम् ७१
विजयञ्चैव विकटं गणयागे प्रकीर्तिताः
राक्षसञ्चेंद्रनागञ्च चास्त्रयागे समीरिताः ७२
मुद्गान्नं घृतसंयुक्तं नाळिकेरफलंगुळम्
अब्जपुष्पसमायुक्तं जपाकुसुमचन्दनम् ७३
गणयागास्त्रयागान्तं नवसंख्या दिनाधिपान्
तत्तत्स्वनाममन्त्रेण बलिं कुर्याद्विशेषतः ७४
तदूर्ध्वं शिवयागे तु नवाहोक्तदिनाधिपान्
पूर्वोक्तेन विधानेन विधिवत् बलिमाचरेत् ७५

बलिदानमिदं प्रोक्तं यागवीक्षणमाचरेत्
उत्सवे शंभुदीक्षायां सकृद्दर्शनमात्रतः ७६
सर्वाभीष्टप्रदं नृणां यागे पूर्णाहुतिं हुनेत्
यागदीक्षाक्रमं प्रोक्तं यागात् ग्रामप्रदक्षिणम् ७७
प्रथमे शिबिकाञ्चैव द्वितीये कल्पपादपम्
भूतरूपं तृतीयन्तु चतुर्थे गजवाहनम् ७८
पञ्चमे वृषभं प्रोक्तं कैलासञ्चैव षष्ठके
सप्तमे रथमारोप्य अष्टमे तुरगं भवेत् ७९
नवमे तु विमानञ्च दशमे तीर्थमाचरेत्
षट् दिने परसंध्ये तु यानन्तु भाव्यकारणम् ८०
श्रुणु ब्रह्मन्ब्रंहपुरे विप्रपुत्रः प्रकीर्तितः
उमांबुजस्तनक्षीरं प्रदद्यादादरात्ततः ८१
तस्य लीलान्तु संभाव्य सुप्रीतापरमेश्वरी
नाशनं क्षमणानानान्तु स्तंभाग्रे चैव भावयेत् ८२
इत्येवं भावयेद्यानं क्षमणान्तकविग्रहम्
तस्यावदाचरेत्सर्वं भावयेदुत्सवे सुधीः ८३
सप्ताहे तु विशेषेण भिक्षाटनकथाञ्चरेत्
भिक्षुमूर्तिमलंकृत्य आसनोपरिविन्यसेत् ८४
दासीदासाद्यकं सर्वं भिक्षुवेषं समाचरेत्
विप्रश्रेष्ठाश्रमे ग्रामे शिवभक्ताश्रमे तथा ८५
आनन्दबाष्पनृत्ताभिः भिक्षासंग्रहमाचरेत्
अष्टमस्यापराह्णे तु ह्यर्जुनस्तपशोधनम् ८६
यागक्रियादिचिच्छेकाद्यारोहणमश्ववाहने
मृगयात्राक्रमं शंभोः युद्धारंभन्तु भावयेत् ८७
अभ्यंगोचितवारेषु तैलाभ्यंगं विशेषतः
सप्ताहे च नवाहे च नटेशोत्सवमाचरेत् ८८

तीर्थाह्नः पूर्वदिवसे महातीर्थन्तु संग्रहेत्
पूर्वरात्रौ तु विधिवत् पुनः कौतुकबंधनम् ८९
तीर्थसंग्रहदिवसादपरस्य दिने बुधः
बलिदानं पुराकृत्वा पश्चाच्चूर्णोत्सवं भवेत् ९०
सर्वेस्पृर्शनशुद्ध्यर्थं सर्वतीर्थरियावहम्
शिवतीर्थाद्ददेत्सौख्यं तीर्थस्नानं समाचरेत् ९१
पूर्णाहुतिं ततो हुत्वा दक्षिणादानमन्तके
शिवयज्ञस्य पूर्णार्थं लोकानां स्थितिकारणम् ९२
इंद्रादियागमूर्तीनां पुनस्समीपसिद्धिदम्
शिवयज्ञात्प्रसन्नार्थं घटस्नानं समाचरेत् ९३
दुष्टनिग्रहसिद्ध्यर्थं शिष्टानां परिपालनम्
उत्सवस्य तु पूर्णान्ते रात्रावावरोहणम् ९४
ब्रंहादिलोकपालानां हविर्भागं व्रतान्तके
तत्तत्स्वनामभूतानां मौनोत्सवन्तु कारयेत् ९५
शक्त्युत्सवमतः कृत्वा दडुपारोहणं ततः
चंडोत्सवं तदन्ते तु आचार्योत्सवमाचरेत् ९६
कृते महाध्वजारोहे तत्कोटिगुणितं फलम्
यदेतत्क्रियते राष्ट्रे ध्वजयष्टिनिवेशनम् ९७
नाकालमृत्युस्तत्रास्तिनालक्ष्मीः पापकृच्चन
लोभसर्गभयं तत्र नोपरोगो न विभ्रमम् ९८
विपरीतञ्च दुर्भिक्षं रोगञ्चैवमहातपाः
काले वर्षतिपर्जन्यः स्वभीष्टं लभते जनाः ९९

## सप्तविंशति उत्सवविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि सप्तविंशति उत्सवम्
उत्तमं मद्ध्यमञ्चैव अधमञ्च त्रिधा भवेत् १

उत्तमन्नवकेकुर्वै मद्धमं पञ्चकेतुकम्
त्रयकेत्वधमं ब्रह्मन् उत्सवे तु त्रिधामतः २
अथोत्सवक्रियास्सर्वाः कत्थ्यन्ते क्रमशोऽधुना
विघ्नेश्वरस्य पूजाञ्च मूलदेवस्य पूजनम् ३
वास्तुशान्तिन्ततः कृत्वा मृत्संग्रहमतः परम्
द्ध्वजारोहणपूर्वेद्युः द्ध्वजांकुरन्तु कारयेत् ४
वृषाधिवासनं पश्चात् दण्डस्थापनकन्ततः
अपरेद्युर्दिने प्रांतः वृषयागं समाप्य च ५
पटं प्रदक्षिणी कृत्य पटं सूत्रे निबन्धयेत्
वृषकुंभन्तु संयोज्य मद्ध्याह्ने द्ध्वजमारभेत् ६
आरोहतीर्थन्तत्काले स्नानकर्मसमाचरेत्
सर्वेषु यागपूर्वेषु यागांकुरन्तु कारयेत् ७
यागपूजान्ततः कृत्वा होमकर्मसमाचरेत्
ततस्सूत्राधिवासञ्च सूत्रधामप्रदक्षिणम् ८
इन्दुशेखरमूर्त्यादि ततः कौतुकबन्धनम्
ततो देवं समुद्धृत्य वाद्यगीतसमन्वितम् ९
द्ध्वजस्थानन्तु संप्राप्य भेरीताडनकन्ततः
अस्त्रराजन्तु संपूज्य देवतावाहनन्नयेत् १०
आशीर्वादन्ततः कृत्वा ब्रह्मघोषसमन्वितम्
अस्त्रेण वाद्य घोषेण सार्द्धं ग्रामप्रदक्षिणम् ११
सन्धिदेवान् समावाह्य बलिन्तत्र प्रदापयेत्
द्वादशं गणयागन्तु पञ्चाहमस्त्र इष्टिकम् १२
शिवयागो नवाहं स्यात् यागत्रयमिहोच्यते
आरोहाद्दिनमारभ्य त्रिदशप्रातरान्तकम् १३
गणयागमिति प्रोक्तं अस्त्रयागमतः परम्
तद्रात्र्याश्च समारभ्य प्रातरष्टदशाहकम् १४

अस्त्रयागमिति प्रोक्तं महायागमतः परम्
तद्रात्र्याश्च समारभ्य सप्तविंशद्दिनान्तकम् १५
महायागदिनं प्रोक्तं दिनसंख्या प्रकीर्तिताः
यागदीक्षां गणेशस्य नीराजनमतः परम् १६
स्कन्दयागं ततो दद्यात् भक्तयागं तदंतके
यागकुंभान्गणेशस्य अभिषेकं समाचरेत् १७
अस्त्रयागं ततः कल्प्य चंद्रशेखरवीक्षणम्
अस्त्रदेवे विशेषेण अस्त्रकुंभाभिषेचयेत् १८
अष्टादश दिने रात्रौ ध्वजानष्टौ समाचरेत्
महायागे विशेषेण तीर्थांकुरं तु कारयेत् १९
यागार्चनं ततः कृत्वा वह्निकार्यमतः परम्
सोमास्कन्दादिदेवानां ततः कौतुकबन्धनम् २०
चूर्णोत्सवं महातीर्थं पूर्णाहुतिमनंतरम्
यागकुंभाभिषेकञ्च अवरोहान्ततः परम् २१
लोकपालविसर्गञ्च मौनोत्सवन्तदन्तके
शक्त्युत्सवन्ततः कुर्यात् उडुपारोहणन्ततः २२
चण्डयागन्ततः पश्चात् दक्षिणादानमन्तके
एकोनषष्टिकं कर्मक्रियास्सर्वास्समाचरेत् २३
इति महोत्सवपटल एकचत्वारिंशदुत्तरशततमः

## रथसंग्रहणविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि रथसंग्रहणं परम्
सर्वपापहरं पुण्यं सर्वदुःखनिवारणम् १
जयदं भूपतेश्चैव सर्वेषां रक्षणार्थकम्
अंगप्रत्यंगसंयुक्तं स्यन्दनं प्रेक्ष्य देशिकः २
गत्यागतिन्ततो ज्ञात्वा स्थिरत्वञ्चाथ शिल्पिना

तदंगानि पुनश्शोद्धय स्थपतिः स्थापका ज्ञया ३
रथस्थितन्तु तद्रव्यं निवेदयेद्गुरवे ततः
यात्रा योग्यमिदं शंभोः कृत्वा संस्कारमारभेत् ४
पांगानि तस्य चांगानि शोधयेदंभसा पुनः
मूलेन शिवतोयैश्च स्यन्दनं प्रोन्द्य संस्पृशेत् ५
रथसंस्कारसंयुक्तं सर्वकामफलप्रदम्
अथ देवं समावाह्य रथस्यांगेषु योगतः ६
चक्रचण्डद्वयोर्माया चक्रेषु शशिभास्करौ
आधारशक्तिराख्याता वाराख्ये दण्डका द्वये ७
वृषरूपधरो विष्णुर्वद्धयदण्डाधिदेवता
परितः पट्टिकाशाले शतरुद्राः प्रकीर्तिताः ८
गात्रेषु गात्रबन्धेषु धर्ममाख्येतकामिकाम्
गात्रात् गात्रान्तरे वायुश्शैत्यादिगुणसंयुतम् ९
रथप्रासादिका चोर्द्ध्वस्थूपिकाया यदाशिवः
स्कन्दो वै दक्षिणामूर्तिर्विष्णुर्ब्रह्मा तथैव च १०
पूर्वादिषु चतुर्दिक्षु न्यस्तव्यास्तत्र यत्नतः
चतुर्वेदमयाश्वेषु वरुणाग्निस्थितानिलः ११
ज्ञातव्यापि क्रमेणैव तन्मुखे जठरेंघ्रिके
युगेनाग्रे नियोक्तव्या वेदात्मा धर्महेतवः १२
ब्रह्मासारथ्य रूपेण अग्रे चैवाश्वतत्भवेत्
अतः प्रोक्तं समाश्रित्य लोकपाला व्यवस्थिताः १३
अग्रे च पार्श्वयोश्चैव जया च विजया तथा
एवं संकल्प्य देवांश्च रथपूर्वां क्रमाद्यजेत् १४
स्यन्दनं गन्धमालाभिश्चित्रमार्गेण भूषितम्
देवेशं प्रार्थयेत्पूज्य रथस्यारोहणं प्रति १५
उत्सवे स्थापने चैव चायने विषुवे तथा

दिनच्छिद्रेषु संक्रान्तौ त्वमावास्यामथापि वा १६
राज्ञो जन्मदिने वाथ रथमारोपयेत्प्रभुम्
रथरोहणपूर्वे तु रात्रौ कौतुकबन्धनम् १७
सौवर्णं रजतं वापि सूत्रं कार्प्पासकन्तु वा
शिवाग्रे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः १८
तन्मद्ध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम्
तस्योद्ध्वें स्थालिकौ न्यस्त्वा तण्डुलैनैव पूरयेत् १९
तन्मद्ध्ये विन्यसेत् सूत्रं यजेत्तत्रैव वासुकिम्
परिचारकमाहूय सोष्णीषञ्चोत्तरीयकम् २०
वस्त्राभरणसंयुक्तं गन्धमाल्यैरलंकृतम्
स्थालिकां विन्यसेत्तस्य मूर्द्धन्नयस्त्रेण देशिकः २१
नानालंकारसंयुक्तन्नानादीपसमायुतम्
सर्वातोद्य समायुक्तं नृत्तगेय समाकुलम् २२
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
सुमुहूर्त्ते सुलग्ने च कौतुकं बन्धयेद्धृदा २३
पूजयेद्देवदेवेशं तांबूलं तु निवेदयेत्
ततः प्रभाते विमले त्वभिषेकं समाचरेत् २४
धौतवस्त्रेति मन्त्रेण नववस्त्रं प्रदापयेत्
उत्तरीयं हृदा दत्वा प्रागुक्तविधिना यजेत् २५
पञ्चाग्निं तत्र कुर्वीत पञ्चमूर्त्यधिदैवतम्
स्थण्डिलं वालुकैः कुर्यात् एकाग्निं वा शिवाधिपम् २६
कृत्वाग्निमुखसंस्कारमग्निकार्योक्तमार्गतः
समिदाज्य चरुं लाजं तिलं गौळञ्च वस्त्रकम् २७
समिधाधि च मन्त्रेण आज्यं मूलेन होमयेत्
चरुं हृदयमन्त्रेण लाजं वामेन होमयेत् २८
वर्मणातिलमन्त्रेण गौळन्नेत्रेण वस्त्रकम्

द्रव्याणि जुहुयादत्र एकैकं पञ्चविंशतिः २९
वस्त्रमेकं हुनेद्धीमान् द्रव्यान्ते व्याहृतिं हुनेत्
स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ३०
जयादिरभ्याधानञ्च राष्टभृच्च क्रमाद्धुनेत्
पूर्णाहुतिञ्च शिरसा हुत्वाग्निन्तु विसर्जयेत् ३१
आचार्यं पूजयित्वा तु वस्त्रहेमांगुलीयकैः
मूर्तिपान्पूजयेद्धीमान्पूर्वोक्तविधिना सह ३२
धेनुकां शातकुंभञ्च कांस्य पात्रञ्च वस्त्रकम्
नीलञ्चैव विशेषेण देशिकाय प्रदापयेत् ३३
तद्दानं शिवदानं स्यात् कर्त्तुरिष्टं प्रदापयेत्
योगिनाद्ध्यानसंयुक्तं शिवज्ञानार्त्थवेदिनाम् ३४
वस्त्रञ्च काञ्चनोपेतन्दापयेच्छिवसन्निधौ
विघ्नेशं विघ्नराजाय गन्धपुष्पादिभिर्यजेत् ३५
भक्ष्याणि विविधानीह भोज्यानि विविधानि च
पात्रेषु विधिना पूर्य गणानाञ्चेति मन्त्रतः ३६
गणेशस्य निवेद्याथ अविघ्नं प्रार्त्थयेत्ततः
प्रयत्नेन गणेशाख्यां शिरसाग्राह्य देशिकः ३७
भूषयेद्देवदेवेशं नानाभरणसंयुतम्
नानावस्त्रसमायुक्तं परितः क्षुरिकायुतम् ३८
नानापुष्पसमायुक्तन्नानागन्धसमायुतम्
पूजयेत्तु विशेषेण पायसान्नन्ददेत्ततः ३९
रौप्यं कटाहमानीय शिवाग्रे स्थण्डिले न्यसेत्
चन्दनागरुकर्प्पूरं श्लक्ष्णपिष्टं सकुंकुमम् ४०
कटाहे वरुणे योज्यमत्वोखैकन्तवद्यथा
मल्लिका फलपुष्पाणि जातिपुन्नागचंपकैः ४१
पदे निक्षिप्य संपूज्य कामबीजेन मन्त्रवित्

ग्रार्द्रपंकं ददेत्कर्त्तुर्देशिकश्शंकराज्ञया ४२
ग्रार्द्रपंकञ्जनौ घस्य दापयेत्परितस्तदा
सुमुहूर्त्ते सुलग्ने तु स्वस्तिसूक्तं समुच्चरन् ४३
रथस्थानं शनैर्नीत्वा तस्मिन्नारोपयेत्प्रभुम्
तुंगं वापि पुपाश्चापि रत्ये सन्नरताहकम् ४४
सर्वालंकारसंयुक्तं कारयेत्तु यथा विधि
स्यन्दनस्य समन्तात्तु सौवर्णं भूष्य यत्नतः ४५
ग्राचार्यो रत्नदामैश्च पुष्पमालैः प्रलंबयेत्
रथमद्ध्ये पशुपतिं लोकरक्षार्थकं यजेत् ४६
तरंगेण समावेष्टय नैवेद्यञ्च ततः कुरु
नैवेद्य कर्मसंपूर्णे पटन्तत्रापनीय च ४७
ऊद्ध्र्वकं पुष्पमोक्षं स्यात् गन्धवारिविमिश्रितम्
देशिकेन प्रयुक्तञ्च द्यौकसान्सुप्रियान्भवेत् ४८
नभश्चरणमापीत्वा विकिरेत्पुष्परत्नकम्
भूतानाञ्चैव तुष्टयर्थं हैमरत्नानि निक्षिपेत् ४९
ग्रन्योन्य विभवेनैव ग्रागत्यात्रैव सादरात्
देवं सर्वांगमालिप्य ग्रार्द्रपंकं हृदा बुधः ५०
तांबूलन्दापयेत्पश्चात् सकर्प्पूरं विशेषतः
मंत्रीयन्ते यजेत्तत्र तत्प्रमादार्थकांक्षया ५१
दिवं प्रयान्त्य सन्देहं प्रमादात्परमेष्ठिनम्
षट् तत्वदर्शनञ्चैव समयाचारपालकम् ५२
ग्राचार्यं वस्त्रहेमाद्यैः पूजयित्वा तु भक्तितः
उपादानार्हकूटे तु रथमारोपितन्नयेत् ५३
सर्वातोद्य समायुक्तं गेयनृत्तादिभिर्युतम्
नानादीपसमायुक्तं दर्शयेच्छिवसन्निधौ ५४
ग्रामादिषु विशेषेण रथयात्रां शिवस्य तु

इह भोगानवाप्नोति तत्प्रसादाच्छिवस्य तु ५५
एकविंशत्कुलोपेतं शिवलोके वसेच्छिवम्
मुच्यते सर्वपापेभ्यो रथसेवा परोजनः ५६
स्यन्दनारोहणं ह्येवं स्यन्दनप्रोक्षणं श्रुणु
रथसंपन्नकाले तु संप्रोक्षणमथाचरेत् ५७
सुमुहूर्त्ते सुलग्ने तु नक्षत्र करणान्विते
तक्षकं वस्त्रहेमाद्यैः पूजयित्वा विसर्जयेत् ५८
पञ्चगव्यैश्च संप्रोक्ष्य पवमानमुदीरयन्
पुण्याहं वाचयित्वा तु शान्तिहोमन्तु कारयेत् ५९
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
भूषयेत्स्यन्दनं पश्चात् रथारोहणमारभेत् ६०
इति रथसंग्रहणविधिः द्विचत्वारिंशदुत्तरशततमः

नीराञ्जनविधिपटलप्रारंभः

अथ वक्ष्ये विशेषेण नीराञ्जनविधिक्रमम्
सर्वकृत्रिमनाशार्थं सर्वलोकहितावहम् १
नित्यं नैमित्तिकञ्चैतत् द्विविधन्तदुदाहृतम्
रात्रौ लिंगाय नृत्तान्ते कर्त्तव्यं नृत्तमुच्यते २
अन्ये च मंगले कार्ये चोत्सवं परिवेष्टके
रात्रौ बिंबाय कर्त्तव्यं नैमित्तिकमिति स्मृतम् ३
प्रासादस्याग्रतः कुर्यान्मण्टपञ्चतुरश्रकम्
संप्रोक्ष्य हृदयेनैव पात्रन्तत्रैव विन्यसेत् ४
पूर्वोक्तलक्षणोपेतं नीराजनाय पात्रकम्
संप्रोक्ष्य पुरुषेणैव दीपमारोपयेत्ततः ५
रन्ध्राधारे शराधारे चैकाधारे तथैव च
कपिलाज्येन दीपन्तु च्छिन्नवर्णसमायुतम् ६

रोपयेद्धृदयेनैव अग्निबीजेन बुद्धिमान्
दर्शयेत्पद्ममुद्राञ्च शूलमुद्रान्तथैव च ७
दीपपात्रं समुद्धृत्य प्रविशेत् गर्भगेहकम्
देवेशं गन्धपुष्पाद्यैः पूजयित्वा विशेषतः ८
लिंगस्य मूर्ध्निदीपैश्च त्रिधासंभ्राम्य वर्मणा
दर्शयेल्लिंगमुद्राञ्च बीजमुद्रान्तथैव च ९
नित्यमेवं समाख्यातं नैमित्तिकमथ श्रुणु
प्रासादाग्रे तु कर्त्तव्यं मण्टपञ्चतुरश्रकम् १०
पात्राणि शुद्धतोयैश्च संप्रोन्द्य हृदयेन तु
विन्यसेन्मण्टपे मद्ध्ये नीरांजनाय पात्रकम् ११
गन्धपात्रन्तथाग्नौ तु निर्ऋृते त्वर्घ्यपात्रकम्
वायव्ये पुष्पपात्रन्तु ईशाने भस्मपात्रकम् १२
दीपञ्चारोपयेत्पश्चात् अग्निबीजेन पूजयेत्
रुद्रस्य गणिकाभिर्वा ब्राह्मणैर्वा विशेषतः १३
तापयित्वा तु पात्राणि सर्वातोद्य समायुतम्
स्वस्तिसूक्तसमायुक्तन्तेषाम्मंगलवाचकैः १४
हर्म्य प्रदक्षिणं कृत्वा प्रविश्यास्थानमण्टपम्
विज्ञाप्य देवदेवाय देवस्याग्रे विशेषतः १५
स्थापयेद्दीपपात्रादि पूजयेन्मण्डपोपरि
पाद्यन्दत्वा तु सद्येन हृदाचाचमनन्ददेत् १६
गन्धन्दद्यात्तु शिरसा चाप्यमीशेन दापयेत्
पुष्पन्तु शिखया दद्याद्धूपन्नेत्रेण दापयेत् १७
अस्त्रमुद्राञ्च शूलाख्यां पद्ममुद्रां प्रदर्शयेत्
पुनराचमनन्दत्वा दिक् बन्धञ्चास्त्रमन्त्रतः १८
पात्रेण दीपमादाय देवस्य तु शिरोपरि
परिगृह्य त्रिधामंत्री शिखामन्त्रमनुस्मरन् १९

तदन्ते दापयेत् भस्म नेत्रमंत्रं समुच्चरन्
दर्पणन्दर्शयेत्पश्चात्प्रणम्य विधिपूर्वकम्  २०
तांबूलन्दापयेत्तस्मै मुखवाससमन्वितम्
पीठाग्रे वास्थलाग्रे वा दीपञ्चैव विवर्जयेत्  २१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्  २२
इति नीराञ्जनविधिपटलस्त्रिचत्वारिंशदुत्तरशततमः

प्रायश्चित्तविधिपटलप्रारंभः

प्रायश्चित्तविधिं वक्ष्ये सर्वदोषनिकृन्तनम्
प्रायो विलय इत्युक्तश्चित्तराहित्यकृत्ततः  १
लयराहित्य हेतुत्वात् प्रायश्चित्तमिति स्मृतम्
सर्वेषामेवकार्याणां त्रिया वै कल्यसंभवे  २
प्रायश्चित्तं पुराकुर्यादात्मनः शुद्धिहेतवे
अन्यधापतनं तस्य सर्वशास्त्रेषु निश्चितम्  ३
मन्दिरे पतिते भिन्ने चलिते स्फुटिते तथा
पिण्डिका चलिते वक्रे लिंगे च चलिते तथा  ४
गजचोरैश्च चलिते नदी स्रोतसि संभवे
लिंगे वा प्रतिमायां वा संगृहीते च शत्रुणा  ५
अष्टबंधनहीने च सुधाकर्मविहीनके
स्थलकर्मविहीने वा शूले च पतिते भुवि  ६
भवने चाग्निदग्धे च दग्धे लिंगे च बिंबके
परिवारविहीने च बलिपीठविहीनके  ७
प्रासादबलिहीने च वृषपीठविहीनके
द्वारदेवविहीने तु वृषभे च विहीनके  ८
कुक्कुरैः कुक्कुटैश्चैव खरसूकरवानरैः
भेकचोर ऋतुस्त्रीभिः प्रेतकैश्चैव पातकैः  ९

गर्भगेहे प्रविष्टे च स्पृष्टे लिंगे च कौतुके
पतितैश्चैव संस्पृष्टे तस्करैः पापरोगिभिः १०
स्पर्शने चानुलोमैश्च प्रतिलोमैर्विलोमकैः
हर्म्येषु च मृते जाते तिर्यक् जातौ मृते तथा ११
मन्दिरे गर्भगेहे तु परिवारालयेऽपि वा
प्राकारे गोपुरे चैव वल्मीके तु समुद्धृते १२
नृत्तकाले तु गणिका पतिते श्लोकहीनके
हीने निर्वाणहीनन्तु मन्त्राणाञ्च विहीनके १३
नैवेद्यादिविहीने च संध्यातिक्रमणेऽपि वा
नैवेद्योत्थापने काले लंघिते तु नरैस्तथा १४
मार्जनप्रोक्षणे हीने रंगवल्यादिहीनके
रक्षादीपविहीने तु शंखघोषविहीनके १५
लिंगे च प्रतिमामूर्ध्नि पुष्पहीने तु संभवे
बलिदानविहीने तु स्नपनांगविहीनके १६
स्पृष्टे दीक्षान्तरैर्बिंबं गर्भगेहे प्रविष्टके
अब्देनोत्सवहीने च नवनैवेद्यहीनके १७
पवित्रारोहणे हीने कृत्तिकादीपहीनके
तन्त्राणां संकरे चैवाप्याचार्यसंकरे तथा १८
एवमादि समुत्पन्ने यथाकृत्यं विधीयते
तथाप्रतिक्रियां कुर्यात्सर्वदोषनिकृन्तनम् १९
मन्दिरे पतिते यत्र राजराष्ट्रक्षयो भवेत्
बालस्थानं ततः कृत्वा स्थापयेद्विधिपूर्वकम् २०
पूर्ववत् भवनं कृत्वा संप्रोक्षणमथाचरेत्
भवने स्फुटिते भिन्ने कूटशालाविहीनके २१
सिंहकूटमहानासि कपोते च विहीनके
ग्रीवाप्रस्तरहीने चाप्यनुनासिविहीनके २२

अनावृष्टिर्भवेत्पश्चात्पुनस्संधानमाचरेत्
स्नपनं कारयेच्छंभोश्शान्तिहोमं समाचरेत् २३
पिंडिका चलिते चैव विश्लिष्टे बन्धनादिभिः
जायानां नाशनं प्रोक्तं सुस्थितां पिंडिकां कुरु २४
विधिनाकारयेदष्टबंधनं देशिकोत्तमः
लिंगे च चलिते वक्रे स्फुटिते च प्रजापते २५
नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते भुवि
जीर्णोद्धारोक्तमार्गेणाप्युद्धृत्य स्थापयेन्नवम् २६
तस्करैश्चलिते लिंगे नदीस्रोतेन वा पुनः
भूपतिस्त्वन्यधाज्ञेयः स्थापयेन्निर्वृतन्तु च २७
स्रोतसाचलितं लिंगं शतदण्डं व्यपोह्य च
तत्स्थानस्योत्तरे चैन्द्रे शांकरे वा विशेषतः २८
स्थाप्यलिंगं शुचौ देशे भवनं कारयेद्बुधः
जलाधिवासनञ्चैव लक्षणोद्धारणं विना २९
प्रागुक्तविधिना धीमान्प्रतिष्ठां कारयेत्ततः
स्थापितस्यैवलिंगस्य पीठस्य बन्धनं कुरु ३०
तावत्प्रतिदिनं कुर्याच्छान्तिहोमं विशेषतः
रिपुणा संगृहीहितञ्चेत् लिंगं वा प्रतिमान्तु वा ३१
तद्राष्ट्रदाशनं प्रोक्तं भूपतेश्च विनाशनम्
बालालयं प्रकर्तव्यमेकाब्दस्यैव चोत्तरे ३२
यानेनैव गृहीत्वा तं स्थापयेत्पूर्वदेशके
एकाब्दे च तथालब्धे लिंगं वा प्रतिमान्तु वा ३३
तदूद्ध्र्वेन्यंपरिग्राह्य स्थापयेत्पूर्वदेशके
लिंगं वा प्रतिमां वापि ततो विच्छेदने कृते ३४
कृत्वा शीघ्रन्तदाकारं सर्वलक्षणसंयुतम्
कुर्यात् संस्थापनञ्चैव मासपक्षादिभिर्विना ३५

अष्टबन्धविहीने तु लोके तु जलवर्जितम्
ततोष्टबन्धनं कुर्यात् तैलंगौळञ्च गैरिकम् ३६
गुग्गुलं सिकतं सिद्धं शङ्खं लाक्षा तथैव च
व्योमपक्षाग्नि ऋक्बाणा रसमन्यत्रिभागिकाः ३७
तैलात्प्रोक्तं क्रमात् भागात् एवञ्चिक्कणवद्भवेत्
पक्वाष्टबन्धनं ह्येवं विवरे तस्य योजयेत् ३८
स्नपनं कारयित्वा तु पूजयेत्तु विशेषतः
सुधा कर्मविहीने च स्थलकर्मविहीनके ३९
प्रवर्तते महामारी पुनस्सन्धानमाचरेत्
पुण्याहं वाचयेत्पश्चात् गव्यैरेवाभिषेचयेत् ४०
शूलञ्च पतिते चैव चलिते चांगहीनके
भग्ने च वर्णहीने च चर्मच्छेदे विवर्णके ४१
पीठबन्धनहीने च ग्रामनाशं विनिर्दिशेत्
पतिते चलिते चैव बालस्थानन्तु कारयेत् ४२
शूलञ्च स्थापयेत्पश्चात्पूर्वोक्तविधिना सह
बेरन्तु विधिवत्कृत्वा संप्रोक्षणमथाचरेत् ४३
अंगोपांगञ्च प्रत्यंगं शरीरांगं तदुच्यते
अंगं प्रधानशूलं स्यात् ब्रह्मदण्डमिहोच्यते ४४
वक्षो दण्डकटीदण्डबाहुकूर्परकोष्ठकम्
ऊरूश्च जानुजंघे च उपांगमिति कीर्तितम् ४५
शेषाणि च विजानीयात्प्रत्यंगमिति बुद्धिमान्
ब्रह्मदण्डविहीनञ्चेच्छूलस्थापनमारभेत् ४६
प्रत्यंगोपांगहीनञ्चेत्पुनस्सन्धानकं कुरु
भवने चाग्निदग्धे च पापकेन भयं भवेत् ४७
व्यपोह्यंगाटकान् सर्वान्पश्चाद्बन्धनमाचरेत्
पुण्याहं वाचयित्वा तु शान्तिहोमन्तु कारयेत् ४८

दग्धे च प्रतिमालिंगे राज्ञो मरणमादिशेत्
वह्निना स्फुटिते भिन्ने लिंगे वा प्रतिमादिके ४९
जीर्णोद्धारविधानोक्तमार्गेणैव समुद्धरेत्
वह्निना दूषितं बिंबं कुर्यात्तेनैव वर्त्मना ५०
तत्प्रमाणेन तद्रूपं कारयेत्तु विशेषतः
पूर्वोक्तविधिना धीमान्प्रतिष्ठां कारयेत्ततः ५१
प्रत्यंगोपांगहीने च वस्त्राभरणहीनके
पुनस्संधानकं कृत्वा पूर्वोक्तेनैवमार्गतः ५२
तत्तन्मन्त्रेण मतिमान्सर्पिषा चरुणा ततः
मधुना जुहुयाद्धीमान्प्रत्येकन्तु शतं क्रमात् ५३
पुष्पहीनन्तु गंधाद्यैः पुण्याहं वाचयेत्ततः
बलिपीठविहीने च गोनाशं भवति ध्रुवम् ५४
पूर्ववत्कल्पयेत्पीठं स्थापयेद्विधिना ततः
स्नपनं कारयेच्छंभोः पूजयेत्तु विशेषतः ५५
कुक्कुरैः कुक्कुटैश्चैव खरसूकरवानरैः
स्पर्शितं लिंगबिंबे च प्रविष्टे गर्भगेहके ५६
प्रवर्तते महामारी तद्ग्रामञ्च विनश्यति
मृद्भाण्डानि विसृज्याथ स्थानशुद्धिं ततः कुरु ५७
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः
स्नपनं कारयित्वा तु शान्तिहोमन्ततः कुरु ५८
लिंगं वा प्रतिमां पृष्ठे ऋतुस्त्रीभेकतस्करैः
गर्भगेहप्रविष्टे वा जनानां नाशनं भवेत् ५९
मृद्भाण्डानि विसृज्याथ गोमयेनोपलेपयेत्
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः ६०
स्नपनं कारयेत्पश्चात् बिल्वपत्रेण घर्षयेत्
मूर्तिहोमन्ततः कृत्वा ब्राह्मणान्भोजयेत्ततः ६१

अन्तर्मण्डलशालादिरभिस्पृष्टे विशेषतः
संप्रोक्ष्य पञ्चगव्येन पुण्याहं वाचयेत्ततः ६२
स्पृष्टे सूतिकया बिंबे गर्भगेहे प्रविष्टके
दुर्भिक्षञ्जायते लोके बालानानाशनं भवेत् ६३
मृद्भाण्डानि विसृज्याथ गोमयेनानुलेपयेत्
पर्यग्निकरणं कृत्वा ब्राह्मणान्भोजयेत्ततः ६४
मूर्तिहोमन्ततः कृत्वा शस्त्रेणैव शतञ्जपेत्
ब्राह्मणान्भोजयेत्तत्र सावित्रीञ्च शतञ्जपेत् ६५
प्रेतकैः स्पर्शने चैव प्रविष्टे गर्भगेहकम्
पुत्रपौत्रविनाशं स्यात्तत् ग्रामञ्च विनश्यति ६६
वर्जयेदत्रमृत्पात्रं गोमयेनोपलेपयेत्
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ६७
पञ्चशुद्धिक्रमं कृत्वा स्नपनं कारयेद्बुधः
शान्तिहोमन्ततः कृत्वा मूलेनैव शतं हुनेत् ६८
ब्राह्मणान्भोजयेत्तत्र पुण्याहं वाचयेत्ततः
अन्तर्मण्डलशालादीन्प्रविशेदविचारतः ६९
पुण्याहं वाचयित्वा तु शान्तिहोमन्तु कारयेत्
चोरैश्च पातकैश्चैव हीनयोनिनिषेवकैः ७०
गुरुनिन्दापरैर्मूर्खैः पतितैः पापरोगिभिः
गर्भगेहे प्रविष्टे च स्पृष्टे लिंगे तथापि च ७१
परचक्रात् भयं राज्ञो महामारी प्रवर्तते
उद्वास्य मृण्मयं पात्रं गोमयेनानुलेपयेत् ७२
पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत्
लिंगं प्रक्षाळ्यशुद्धोदैः पीठञ्चैव स्थलं क्रमात् ७३
तुळसी पत्रबिल्वैश्च घर्षयेदस्त्रमन्त्रतः
जलसंप्रोक्षणं कुर्यात्प्रागुक्तविधिना सह ७४

स्पर्शिते चानुलोमैश्च लिंगं वा कौतुकन्तु वा
सस्यानान्नाशनं विद्धि पुण्याहं वाचयेत्ततः ७५
स्नपनं कारयित्वा तु पूजयेत्तु विशेषतः
प्रतिलोमैरथ स्पृष्टे लिंगञ्च प्रतिमान्तु वा ७६
प्रविष्टे गर्भगेहे तु ह्यनावृष्टिर्न संशयः
तन्मण्डलाधिपो भूपो ग्रामोराज्यञ्च नश्यति ७७
पञ्चशुद्धिक्रमं कृत्वा मृत्पात्राणि विसर्जयेत्
गोमयालेपनं कृत्वा पर्यग्निकरणं कुरु ७८
पुण्याहं वाचयित्वा तु स्नपनं कारयेद्विभोः
मूर्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत् ७९
विलोमैस्संकरैरन्यैस्स्पृष्टे लिंगे च पीठके
प्रविष्टे गर्भगेहे वा महामारीप्रकोपनम् ८०
धावत्येवनृपोऽन्यत्र राष्ट्रञ्चापि विनश्यति
मृद्भाण्डानि विसृज्याथ पञ्चशुद्धिक्रमाद्यजेत् ८१
गोमयेनोपलिप्याथ पुण्याहं वाचयेत्क्रमात्
स्नपनं कारयेत्तत्र मूर्तिहोमं ततः कुरु ८२
प्रागुदीरितमार्गेण संप्रोक्षणमथाचरेत्
लिंगे च प्रतिमायां वा गर्भागारे मलेन तु ८३
व्याप्ते सत्येव नृपतेस्सद्योमरणमादिशेत्
गोनाशं सस्यनाशञ्च प्रजानाशं न संशयः ८४
अतः कृत्वा पञ्चशुद्धिं पुण्याहप्रोक्षणं कुरु
मूर्तिहोमं ततः कृत्वा शोधयेन्मलवर्जितम् ८५
शुद्धोदैरभिषिच्याथ बिल्वपत्रैस्तु घर्षयेत्
प्रमृज्य शुष्कवस्त्रेण प्रतिमालिंगयोस्तु वा ८६
प्राकाराभ्यन्तरे गेहे मृतिर्जाते नरस्य तु
प्रवर्तते महामारी पुत्रपौत्रविनाशकृत् ८७

हस्तमात्रेण तद्देशं खातयित्वा विशेषतह्
तत्पांसूंश्च परित्यज्य पूरयेच्छुद्धवालुकाम् ८८
सम्मार्जनं ततः कृत्वा गव्येन प्रोक्षणं कुरु
पुरयाहं वाचयित्वाथ ब्रांहणान् भोजयेत्ततः ८९
मूर्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत्
तिर्यक् जातेर्मृतेनैव वाहनानां भयं भवेत् ९०
पूर्ववत्प्रोक्षणं तत्र पुरयाहं वाचयेत्ततः
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन् ९१
मूर्तिहोमं ततः कृत्वा स्नपनं कारयेत्प्रभोः
विशेषपूजनं कृत्वा ब्रांहणान्भोजयेत्ततः ९२
स्थानभ्रंशो भवेद्राज्ञो नित्यपूजा विहीनके
तस्यां संध्यां विहीनायां द्विगुणञ्चान्यसंधिके ९३
संधिद्वयार्चना हीने शान्तिहोमन्तु कारयेत्
पक्षहीने दिशाहोमं स्नपनं तत्र कारयेत् ९४
पञ्चाहे स्नपनं कुर्यात् मूर्तिहोमन्तु कारयेत्
संधित्रयविहीने च कुर्यात् गव्याभिषेचनम् ९५
अहोरात्रविहीने तु स्नपनं शान्तिहोमयुक्
मासादूर्ध्वविहीने तु जलसंप्रोक्षणं कुरु ९६
नित्यहोमविहीनं स्यादनावृष्टिर्भविष्यति
एकसंधिविहीने तु हुत्वा पाशुपतं शतम् ९७
संधिद्वयविहीने तु मूलेनैव शतं हुनेत्
संधित्रयविहीने च घोरेण जुहुयाच्छतम् ९८
तथा त्रियंबकेणैव शेषं पूर्ववदाचरेत्
एकाहं होमहीने च पञ्चब्रंहषडंगकैः ९९
अष्टोत्तरशतं हुत्वा मन्त्रैरेतैः पृथक्पृथक्
विहीने चैव पञ्चाहे स्नपनं कारयेत्ततः १००

मूलेनैव शतं हुत्वा शतद्वयं शतञ्जपेत्
दशाहे तु विहीने च पञ्चाग्निमाकलय्य च १०१
तत्र होमो विधातव्यः प्रत्येकन्तु शतं क्रमात्
ततः पाशुपतेनैव जपेत्पञ्चाशतं परम् १०२
पत्तहोमविहीने तु मुर्तिहोमन्तु कारयेत्
स्नपनं कारयेदन्ते शस्त्रं पञ्च शतञ्जपेत् १०३
मासहोमविहीने तु पञ्चब्रह्मषडंगकैः
त्तुरिकाबीजमुख्यैश्च मन्त्रैश्चैव दशात्तरैः १०४
प्रत्येकन्तु शतं हुत्वा मूलमन्त्रं शतञ्जपेत्
स्नपनं कारयेत्पश्चात्पूजयित्वा विशेषतः १०५
मासादूर्द्ध्वविहीने तु दिशाहोमन्तु कारयेत्
कृत्वा स्नपनमभ्यर्च्य प्रभूतन्तु हविर्ददेत् १०६
उपसन्धिविहीने च प्राणीनान्नाशनं भवेत्
मूर्तिहोमन्ततः कृत्वा स्नपनैरभिषेचयेत् १०७
सायरत्ताविहीने च बालानान्नाशनं भवेत्
स्नापयेत्पञ्चगव्येन ह्यर्चनोक्तं समाचरेत् १०८
मूलमन्त्रं शतञ्जप्त्वा द्विगुणान्तं समर्चयेत्
नीराञ्जनविहीने तु त्तुद्बाधाग्रामवासिनाम् १०९
लिंगं वा प्रतिमां वापि स्नापयेत्पञ्चगव्यकैः
अर्चनोक्तं समभ्यर्च्य पुरायाहं वाचयेत्ततः ११०
शिवमन्त्रं शतञ्जप्त्वा पश्चान्नीराञ्जनं कुरु
द्वारपूजा विहीने च सस्यानान्नाशनं भवेत् १११
द्वारस्थदेवतानाञ्च मन्त्रेणैव शतं जपेत्
गन्धपुष्पादिभिश्चैव पूर्ववत्संप्रपूजयेत् ११२
नित्योत्सवविहीने तु धान्यनाशं भवेद्ध्रुवम्
सन्ध्यैकेन विहीने तु स्नापयेत्पञ्चगव्यकैः ११३

मूलमन्त्रं शतञ्जप्त्वा चोत्सवं पूर्ववत्कुरु
सन्धिद्वयविहीने तु शान्तिद्वयञ्जपेत् गुरुः ११४
एकाहोत्सवहीने च स्नपनं कारयेत्प्रभोः
पञ्चाहे चोत्सवे हीने मूलेनैव शतं हुनेत् ११५
स्नपनं कारयेच्छंभोः पूजयेद्विधिपूर्वकम्
दशाहे स्नपनं कुर्याच्छान्तिहोमन्तु कारयेत् ११६
पन्ताहे चोत्सवे हीने मूर्तिहोमन्तु कारयेत्
स्नपनं कारयेच्छंभोः पूजयित्वा विधानतः ११७
मासे नित्योत्सवे हीने विद्यांगैः ब्रंहपञ्चकैः
मासादूद्ध्र्वविहीने तु दिशाहोमन्तु कारयेत् ११८
कृत्वा संपूज्यदेवेशं मूलेनैव शतञ्जपेत्
षरामासाद्वत्सरान्तं वा नीत्योत्सवविहीनकम् ११९
चोरबाधा भवेल्लोके दुर्भिन्तं स्यात्प्रजापते
षडंगैर्बीजमुख्यैश्च शिवार्णैश्च दशान्तरैः १२०
प्रत्येकं त्रिशतं हुत्वा मूलेनैव शतं हुनेत्
तत्संख्यातैर्जपं कुर्यात्स्नपनं कारयेद्विभोः १२१
अष्टोत्तरशतैः कुंभैस्सहस्रकलशैर्यजेत्
एकाहे सौख्यहीने तु षोडशस्नपनन्नयेत् १२२
सन्धिद्वयविहीने तु शान्तिहोमञ्च कारयेत्
पञ्चाहे स्नपनं कुर्याच्छान्तिहोमपुरस्सरम् १२३
दशाहे च विहीने तु स्नपनं मूर्तिहोमयुक्
पन्ताहे च विहीने च स्नपनं मूर्तिहोमकम् १२४
एकमासविहीने च पञ्चब्रंहषडंगकैः
त्रियंबकेन मन्त्रेण मूलेनैव तु देशिकः १२५
प्रत्येकं त्रिशतं हुत्वा तत्सौख्यादेर्जपं कुरु
स्नपनन्तु ततः कृत्वा प्रभूतहविषन्ददेत् १२६

गेयवंशविहीने तु ताळवाद्यविहीनके
सस्यानान्नाशनं प्रोक्तं सन्ध्यैके तु विहीनके १२७
पूजयेद्देवदेवेशं गव्यैरेवाभिषेचयेत्
गन्धद्रव्यविहीने च द्रोणं क्षीराभिषेचनम् १२८
सन्धित्रयविहीने च शान्तिहोमञ्च कारयेत्
अहोरात्रविहीने च शान्तिहोमं समाचरेत् १२९
स्नपनं कारयेच्छंभोः पूजयेत्तु विशेषतः
सौख्यदीपविहीने च क्षुद्भयं ग्रामवासिनाम् १३०
आरोप्य द्विगुणन्दीपमघोरेण शतञ्जपेत्
गणिकानृत्तकाले तु पतिता चेद्विशेषतः १३१
राजादुर्जयमाप्नोति शान्तिहोमन्ततः कुरु
पूजयेद्देवदेवेशमर्चनोक्तन्तु देशिकः १३२
सौख्यश्लोकविहीने तु बधिरत्वं प्रवर्त्तते
सन्ध्यैका श्लोकहीने तु शिवक्षीराभिषेचनम् १३३
सन्धिद्वयविहीने च कुर्यात् गव्याभिषेचनम्
एकाहे श्लोकहीने च द्रोणक्षीराभिषेचनम् १३४
पञ्चाहे शान्तिहोमञ्च दशाहे स्नपनं कुरु
मासार्द्धे तु विहीने च मधुनास्नापयेच्छिवम् १३५
मासैकेन विहीने तु मूर्तिहोमञ्च कारयेत्
मासादूद्ध्र्वविहीने च कारयेच्छान्तिहोमकम् १३६
स्नपनं कल्पयित्वाथ प्रागुक्तेन समाचरेत्
जलद्रव्यविहीने तु दाराणान्नाशनं भवेत् १३७
अघोरेण शतञ्जप्त्वा तद्द्रव्यं द्विगुणन्ददेत्
पुष्पार्घ्यधूपहीने चाप्यनावृष्टिर्भविष्यति १३८
मूलमन्त्रं शतञ्जप्त्वा तद्द्रव्यं द्विगुणन्ददेत्
धूपार्घ्यपाद्याचमनद्रव्ये चैव विहीनके १३९

अक्षिरोगाणि जायन्ते ततस्तत्द्विगुणन्ददेत्
विशेषार्घ्यादिहीने च सर्पेणैव भयं भवेत् १४०
विशेषार्घ्यादिद्रव्येषु हीनेषु क्षुद्भयं भवेत्
अर्घ्यादिपात्रहीनेषु परचक्रात् भयं भवेत् १४१
उक्तलक्षणहीने च नृपाणाञ्च क्षयं भवेत्
खट्गेन द्विशतं हुत्वा द्विगुणन्दापयेद्विभोः १४२
पात्रं सलक्षणं कृत्वा पूर्ववत्स्थापयेत्क्रमात्
हीने निर्वाणदीपन्तु लोकोन्मत्तं समाचरेत् १४३
एकाहे तु विहीनं स्यात् द्विगुणं रोपयेत्ततः
पञ्चाहे शान्तिहोमञ्च दशाहे स्नपनं कुरु १४४
अर्द्धमासे विहीने च स्नपनं शान्तिहोमयुक्
एकमासे विहीने च दुर्भिक्षञ्जायते ध्रुवम् १४५
स्नपनम्मूर्त्तिहोमञ्च कारयेत्तु विशेषतः
मासादूर्द्ध्वविहीने च शान्तिहोमन्तु कारयेत् १४६
पवमानञ्जपित्वाथ मूलेन त्रिशतञ्जपेत्
स्नपनं कारयित्वाथ विधिना पूजयेच्छिवम् १४७
सन्ध्यादीपविहीने तु द्विगुणं रोपयेत्ततः
व्यतिक्रमेण मन्त्राणां तत्सर्वं निष्फलं भवेत् १४८
शान्तिहोमन्ततः कृत्वा मूलमन्त्रं शतञ्जपेत्
निवेद्ये दीपहीने च दुर्भिक्षञ्जायते ध्रुवम् १४९
एकसन्न्ध्या विहीने च तद्दीपं द्विगुणं भवेत्
सन्धिद्वयविहीने च कुर्यात् गव्याभिषेचनम् १५०
सन्धित्रयविहीने च शान्तिहोमञ्च कारयेत्
अहोरात्रविहीने च स्नपनं कारयेत्ततः १५१
पञ्चाहे स्नपनं कुर्यात्कारयेच्छान्तिहोमकम्
दशाहे स्नपनं गव्यं मूर्तिहोमन्तु कारयेत् १५२

एकमासविहीने तु दिशाहोमन्तु कारयेत्
स्नपनं कारयेच्छंभोः पूजयेत्तु विशेषतः १५३
मासादूर्ध्वविहीने तु जलसंप्रोक्षणं कुरु
पूर्वे च निश्चितं द्रव्यं यावत्कालं विहीनके १५४
एकी कृत्य तु तद्द्रव्यं शिवाय विनिवेदयेत्
संध्यातिक्रमणादेव ग्रामनाशं धनक्षयम् १५५
शान्तिहोमं ततः कृत्वा मूलन्तु द्विशतं जपेत्
नैवेद्योत्थापनेकाले लंघने च नरैर्द्विजैः १५६
सस्यानां नाशनं प्रोक्तं निर्माल्यञ्च तदाहृतम्
तद्द्रव्यं वर्जयित्वा तु मूलमंत्रं शतं जपेत् १५७
पश्चात्पक्वं ब्रवीद्धीमान् शिवाय च निवेदयेत्
शर्कराकेशकीटादिनिखकंबुतुषादयः १५८
निवेदिते तथान्नेन बधिरत्वं प्रवर्तते
नृपाणां नाशनं शीघ्रं स्नपनं मूर्तिहोमयुक् १५९
मूलेन त्रिशतं जप्त्वा पुनरन्नन्निवेदयेत्
नैवेद्ये च विहीने तु मूकत्वञ्च प्रवर्तते १६०
वर्षहीनं भवेल्लोके पञ्चाशत्कलशैर्यजेत्
मूलेन षट्शतं जप्त्वा प्रभूतहविषन्ददेत् १६१
उपदंशघृता पूपसूपहीनं निवेदिते
तत्ग्रामस्य क्षयं प्रोक्तं षोडशैः कलशैर्यजेत् १६२
अघोरं द्विशतं जप्त्वा सोपदंशं निवेदयेत्
उपचारविहीने च लोके चोन्मत्तमादिशेत् १६३
यष्ट्वा गव्यैश्च स्नपनं मूर्तिहोमं समाचरेत्
प्रागुक्तजलसंख्याया हीने चोरभयं भवेत् १६४
दिशाहोमं ततः कृत्वा मूलं तत् द्विशतं जपेत्
द्विगुणैस्तु जलैर्देवं पूजयेत्तु विधानतः १६५

जलद्रोणी विहीने च तद्राष्ट्रं जलवर्जितम्
स्नपनं मूर्तिहोमञ्च कृत्वा द्रोणीं सलक्षणाम् १६६
मूलेन द्विशतञ्जप्त्वा पुनश्शुद्धं समाचरेत्
अभिषेकस्य पूर्वोक्तद्रव्यमानविहीनके १६७
प्रवर्तते त्वनावृष्टिस्तस्करैर्भयमादिशेत्
मूर्तिहोमं ततः कृत्वा स्नपनं कारयेत्ततः १६८
पुनर्यथोक्तमादाय द्विगुणं चाभिषेचयेत्
बिंबस्य मार्जनार्त्थाय वस्त्रहीने तथैव च १६९
तत्तत्संधिषु पूर्वोक्तवस्त्रे चैव विहीनके
पूर्वोक्तगंधपुष्पादि भूषामानविहीनके १७०
अनावृष्टिर्भवत्येवज्वरबाधाप्रवर्तते
दिशाहोमं ततः कृत्वा घोरेण त्रिशतं जपेत् १७१
यथोक्तवत्प्रमाणेन तानि तानि समर्पयेत्
आसनार्चनहीने च तथैवावरणार्चने १७२
आवाहनोद्वासने च भावनाद्ध्यानहीनके
मन्त्रपुष्पविहीने च मन्त्रान्ते च विहीनके १७३
पञ्चशुद्धिविहीने च मन्त्रहीने तथैव च
तत् ग्रामस्य क्षयं प्रोक्तं नृपतिस्त्वन्यथा भवेत् १७४
तद्दोषशमनार्त्थाय स्नपनं मूर्तिहोमकम्
अभिषिच्य च गव्येन द्विगुणञ्चार्चयेद्बुधः १७५
मुद्रादर्शनहीने च होमरक्षादियोजने
प्रच्छन्नपटहीने च घंटारवविहीनके १७६
प्रवर्तते चाक्षिरोगं पूजानाशन्तथैव च
संहिता होममाकल्प्य शस्त्रन्तु द्विगुणञ्जपेत् १७७
सम्मार्जनप्रोक्षणे हीने शंखघोषविहीनके
गवाञ्च नाशनं विद्धि व्योमव्यापिशतञ्जपेत् १७८

लिंगप्रतिम--र्मूर्ध्नि पुष्पहीने विशेषतः
ज्वरमारी प्रवर्त्तते मूलमन्त्रं शतञ्जपेत् १७९
ईशानेन तु मन्त्रेण पुष्पं मूर्द्धनिदापयेत्
बलिदानविहीने च भयन्तत् ग्रामवासिनाम् १८०
शान्तिहोमन्ततः कृत्वा बलिदानं समाचरेत्
पलिपीठे विहीने च ग्रामनाशं धनक्षयम् १८१
पीठं सलक्षणं कृत्वा बलिं तत्र प्रदापयेत्
परिवारार्चने हीने प्रासादबलिहीनके १८२
द्वारे बलिविहीने तु वृषपीठार्चनादिके
वृषपूजा विहीने च प्रभूते बलिहीनके १८३
विघ्नेशपूजा हीने च सकळानान्तु पूजयेत्
दुर्भिक्षञ्जायते लोके ग्राम--विपवकारकम् १८४
स्नपनं कारयित्वाथ संहिता होममाचरेत्
द्विगुणं यजनं कृत्वा तथैव दापयेत् बलिम् १८५
एकाहबलिहीने च स्नपनं शान्तिहोमकम्
त्रयाहबलिहीने च संहिता होममाचरेत् १८६
पञ्चाहबलिहीने च शस्त्रेणैव शतं हुनेत्
दशाहबलिहीने च गव्यैर्यष्ट्वा शतं हुनेत् १८७
मासार्द्धं बलिहीने च क्षीरेणैवाभिषेचयेत्
स्नपनं कल्पयित्वाथ मूलेन त्रिशतञ्जपेत् १८८
एकमासविहीने तु मधुना स्नापयेद्विभुम्
स्नपनम्मूर्तिहोमञ्च कृत्वा तु द्विशतञ्जपेत् १८९
मासोद्ध्र्वे शान्तिरित्युक्तमष्टोत्तरशतं यजेत्
स्नपनांगविहीने तु सस्यानान्नाशनं भवेत् १९०
तदप्रतिनिधिं ग्राह्य शस्त्रेणैव शतञ्जपेत्
पूजयित्वा विशेषेण द्रव्येणैवाभिषेचनम् १९१

साधितैः कलशैर्भिन्नैः पतितैः स्फुटिते ---
स्नापयेत्पञ्चगव्यैश्च पूजयित्वा तु पूर्ववत् १९२
तन्मन्त्रेण शतञ्जप्त्वा पद्ममुद्रां प्रदर्शयेत्
पञ्चगव्यविहीने च यजनं द्रव्यहीनके १९३
कर्त्तुश्च नाशनं प्रोक्तं परचक्रात् भयं भवेत्
मूर्तिहोमन्तथा कृत्वा संस्नाप्य कलशोदकैः १९४
जप्त्वा तु द्विशतं पश्चात् गव्याद्यैरभिषेचयेत्
रंगवल्लिविहीने तु पुष्पालंकारहीनके १९५
वेदद्ध्वनि विहीने च स्तोत्रखेटकहीनके
ग्रामश्रीस्त्वन्यथा ज्ञेया बाधा स्यात् स्फोटकादिभिः १९६
गव्येन स्नाप्य देवेशं मूलार्णन्तशतञ्जपेत्
उपलेपविहीने च धामश्रीस्त्वन्यथा भवेत् १९७
संहिता होममाश्रित्य मूलेनैव शतञ्जपेत्
स्पृष्टे दीक्षान्तरैर्बिंबे गर्भगेहे प्रविष्टके १९८
परचक्रात् भयं पूजौ राजादुर्जयमाप्नुयात्
पुण्याहं वाचयित्वाथ शान्तिहोमन्तु कारयेत् १९९
पञ्चशुद्धिक्रमं कृत्वा बिल्वपत्रैस्तु घर्षयेत्
नवनैवेद्य हीने च दुर्भिक्षञ्जायते भुवि २००
मूर्तिहोमन्ततः कृत्वा ब्रांहणान् भोययेत्ततः
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत् २०१
पवित्रारोहणे हीने महामारी प्रवर्तते
दिशाहोमं ततः कृत्वा स्नपनं कारयेत्प्रभोः २०२
पवित्रा रोहणेनैव लब्ध्वा मासे तु बुद्धिमान्
कृत्तिकादीपहीने च त्वनावृष्टिर्भविष्यति २०३
दिशाहोमं ततः कृत्वा कारयेत्स्नपनं विभोः
अर्चनोक्तन्तु संयष्ट्वा प्रभूतहविषन्ददेत् २०४

लब्धमासेऽग्निनक्षत्रे कृत्तिकादीपमाचरेत्
-----तने यत्रराज्ञो राष्ट्रस्य दुष्कृतिः २०५
----दापयित्वा तु मूर्तिहोमं समाचरेत्
----- त्रिशतं जप्त्वा शुधोदैरभिषेचयेत् २०६
तन्त्रसंकरदोषेण राजाराष्ट्रं विनश्यति
संप्रोक्षणं ततः कृत्वा पुण्याहं पुनराचरेत् २०७
--------करो यत्र कर्तुर्ग्रामस्य नाशकृत्
दर्विहोमं ततः कृत्वा स्नपनं कारयेत्ततः २०८
पूर्वाचार्येण तत्सर्वं कर्तव्यं विधिपूर्वकम्
वस्त्रांगुलीय हेमाद्यैर्गोभूमीधनधान्यकैः २०९
आचार्यं पूजयेत्तत्र क्रियां प्रतिक्रियां प्रति
अनुक्तं यद्भवेत् किञ्चित् शान्तिहोमेन शाम्यति २१०
मन्त्रानुक्तं क्रियाणान्तु हृदयेनैव दापयेत्
अग्न्याधानादिकं सर्वं पूर्वोक्तविधिना कुरु २११
समिधं हृदयेनैव वामेनैव घृतं हुनेत्
चरुं हुनेदघोरेण प्रत्येकं षोडशं क्रमात् २१२
पञ्चब्रंहषडंगैश्च विद्यांगैश्च दशाक्षरैः
क्षुरिका बीजमुख्यैश्च प्रत्येकं षोडशं हुनेत् २१३
शान्तिहोममिति ख्यातं सर्वदोषनिकृन्तनम्
भवनस्य चतुर्दिक्षु कुंडं वा स्थंडिलन्तु वा २१४
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
वकुळं बिल्वमश्वत्थमर्कं पूर्वादिदिक्षु वै २१५
समिधं सद्यमन्त्रेण मूलेनाज्येन होमयेत्
अस्त्रेणैव चरुं हुत्वा सर्षपं कवचेन तु २१६
तिलमीशानमन्त्रेण प्रत्येकं षोडशं क्रमात्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् २१७

पूर्णाहुतिञ्च शिरसा शेषं प्रागुक्तवत्कुरु
दिशाहोममिति ख्यातं सर्वकृत्रिमनाशनम्  २१८
हर्म्याग्रे स्थंडिलं कृत्वा शालिभिर्विमलैस्तथा
शिवकुंभं न्यसेन्मद्ध्ये वर्द्धनीं तस्य वामतः  २१९
अष्टदिक्षु क्रमादष्टमूर्तिकुंभांस्तु विन्नयसेत्
ससूत्रान्सापिधानांश्च सवस्त्रोदकपूरितान्  २२०
सकूर्चान्पल्लवोपेतान् हेमरत्नादिगर्भितान्
मातुळंगफलोपेतान् हृदयेनैव विन्यसेत्  २२१
कुंभे सदाशिवं पूज्य वर्द्धन्यान्तु मनोन्मनीम्
भवादीनां स्वस्वबीजैर्न्यस्त्वा कुंभेषु संयजेत्  २२२
तस्याग्रे स्थंडिलं कृत्वा निर्दोषैस्सिकतैस्सितैः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्  २२३
समिधं सद्यमन्त्रेण मूलेनाज्यन्तु होमयेत्
चरुमीशानमन्त्रेण प्रत्येकं षोडशं हुनेत्  २२४
मूलेनैव तु मंत्रेण जुहुयाद्देशिकोत्तमः
जुहुयान्मूर्तिमंत्रेण प्रत्येकन्तु शताहुतिः  २२५
पूर्णाहुतिन्तु शिरसा प्रायश्चित्तान्तकं हुनेत्
मूर्तिहोममिति ख्यातं सर्वदोषनिवारणम्  २२६
भोगांगे च विहीने तु स्त्रीणां नाशं भविष्यति
भोगालयं प्रकल्प्याथ पूर्ववत्पूजयेत्क्रमात्  २२७
मूर्तिहोमं तथा कृत्वा घोरेण द्विशतञ्जपेत्
शय्यागारे तु पर्यंकदीपमाला विहीनके  २२८
शर्करादुग्धतांबूलफलपुष्पविहीनके
सूपापूपोपदंशाज्य युक्तेनैवेद्यवर्जिते  २२९
दुकूलभूषणे हीने चोपधने तथैव च
प्रजानां नाशनं सद्यो सौख्यहानिर्भवेन्नृणाम्  २३०

मूर्तिहोमन्तथा कृत्वा गव्येनैवाभिषेचयेत्
ततस्सर्वोपचाराणि कल्पयेद्देशिकोत्तमः  २३१
क्षेत्रपालार्चने हीने चोरबाधाभवेन्नृणाम्
स्नपनं कल्पयित्वाथ कृत्वा तु संहिता हुतिम्  २३२
परेद्युर्द्विगुणञ्चैव कल्पयेद्देशिकोत्तमः
चण्डेशाराधने हीने सर्वेषाञ्च क्षयं भवेत्  २३३
चण्डहोमन्ततः कृत्वा जप्त्वा तु द्विशतं हुनेत्
निर्माल्य पुष्पस्त्रक् गन्धवस्त्रादौ तु विहीनके  २३४
वाहनानां क्षयं प्रोक्तन्तस्यामूलेन होमयेत्
शतञ्जप्त्वा विधानोक्तं द्विगुणन्दापयेत्ततः  २३५
मद्ध्यवास्तौ महावास्तौ उपवास्तौ मृते यदि
परित्यज्यशवं शीघ्रमर्चनं कारयेत् बुधः  २३६
कालातिक्रमणे प्राप्ते शान्तिहोमन्तु कारयेत्
शिवार्णं द्विशतञ्जप्त्वा विशेषात् द्विशतं कुरु  २३७
हर्म्येकादशयष्ट्यन्ते मृयते ब्रह्मवास्तुना
तिरो हितो न दोषोस्ति प--जां कुर्याद्विधानतः  २३८
क्षामे चैव महावाते परराजभयादिके
अतिवृष्टौ च संग्रामे मृतिदोषो न विद्यते  २३९
यजनं वाद्यनिश्शब्दं प्रकूर्वीतविचक्षणः
धाम्नोर्द्वादशदण्डान्ते वास्तुमद्ध्ये मृतिर्यदि  २४०
परित्यज्यशवं शीघ्रन्नित्यनैमित्तिकञ्चरेत्
ग्रामे प्रेतं बहिः कृत्वा शिवपूजां समाचरेत्  २४१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमप्नुयात्
इहैव धनवान् श्रीमान् पुत्रपौत्रयुतस्सुखी  २४२

उत्सवप्रायश्चित्तविधिपटलप्रारंभः

प्रायश्चित्तविधिं वक्ष्ये उत्सवस्य विशेषतः
वृषयागविहीने तु ध्वजारोहणहीनके १
ध्वजलक्षणहीने तु दण्डमानविहीनके
दंडमानविहीने तु ध्वजवेदिविहीनके २
दण्डच्छेदे रथच्छेदे रज्जुच्छेदे पतद्ध्वजे
ध्वजघण्टाविहीनायां पतितायां क्षितौ त्वसौ ३
भेरीताडनहीने च घोषकाले तथैव च
घोणेच्छदे तु पतिते छिन्ने भेर्याजिनेऽपि च ४
यागशालाविहीने तु कुंडवेदीविहीनके
वेद्यास्थंडिलहीने तु यागशालाग्निदग्धके ५
वितानध्वजहीने च तोरणं स्रुक्स्रुवे तथा
दर्भमालाविहीने च होमद्रव्य विहीनके ६
दिव्यायुधविहीने च अष्टमंगलहीनके
अंकुरार्पणहीने च अस्त्रयागविहीनके ७
कलशस्थापने हीने कुंभबिंबे च निर्जले
रत्नहेमविहीने तु सूत्रवेष्टविहीनके ८
कूर्चापिधानहीने च वस्त्रहीने तथैव च
नैवेद्यादिविहीने च यागदीपविहीनके ९
कुंडेष्वग्निविहीने तु प्रणीता च विहीनके
मंत्रहीने क्रिया हीने दर्भापरिधिहीनके १०
बलिद्रव्यविहीने च बलिदानविहीनके
बलिभ्रमणकालेषु बलिलिंगविहीनके ११
तद्भिन्ने पतिते भग्ने शूलादिपतितेऽपि च
बलिपात्रविहीने च बलिताळविहीनके १२
बलिदीपविहीने तु कालाति क्रमणेऽपि च
उत्सवे यागहीने च तत्काले कलहेऽपि च १३

पूजापर्युषितद्रव्यैस्संस्कारे लिंगबिंबयोः
प्रतिमायानकाले तु पतिते चांगहीनके १४
दीक्षाहीने तथा शूद्रे प्रतिमास्पर्शनेऽपि च
तैरेव यागशालान्तस्पृष्टेशुना तथैव च १५
उत्सवे चैव तत् ग्रामे मृते चैव मनुष्यकाः
परिवेष्टविहीने च नीराजनविहीनके १६
प्रवादयोनिदग्धे च युद्धारंभविहीनके
रक्षासूत्रे विहीने तु कौतुकस्नानहीनके १७
चूर्णोत्सवविहीने च तीर्त्थकर्मविहीनके
वेद्यास्थापितकुंभैश्च अभिषेकविहीनके १८
ध्वजावरोहणे हीने शुद्धस्नानविहीनके
दिनाह्निके तथान्यूने उत्सवञ्चान्यकालके १९
पीठो द्वासनहीने च चंडयागविहीनके
आरंभाद्यन्यतंत्रेण शिवयागं कृते सति २०
मंत्राणां संकरञ्चैव हीने त्वाचर्यदक्षिणे
ग्रामकर्तृनृपाणाञ्च लग्नर्क्षवृतकूलके २१
एवमादिसमुत्पन्ने निष्कृतिञ्च विधीयते
वृषयागविहीने तु गावो नश्यन्त्यसंशयः २२
वृषभस्नपनं कृत्वा गंधपुष्पादिभिर्यजेत्
निवेदयेत्तु मुद्गान्नं शन्तिहोमन्तु कारयेत् २३
वृषयागं ततः कुर्यात्प्रागुक्तविधिना सह
ध्वजारोहणहीने तु ध्वजलक्षणहीनके २४
राजादुर्जयमाप्नोति राष्ट्रक्षोभं भविष्यति
शान्तिहोमन्ततः कृत्वा तद्दोषस्यापनुत्तये २५
ध्वजं सलक्षणं कृत्वा विधिना रोपयेत्ततः
ध्वजदंडादिके हीने ध्वजवेदिविहीनके २६

परचक्रात् भयं भूमौ शिल्पिनं हन्तिदेशिकम्
पुनस्सलक्षणं दण्डं स्थाप्य शान्तिद्वयं जपेत् २७
सर्वलक्षणं युक्तां वेदिं संकल्प्य पूजयेत्
ध्वजदंडन्तु विच्छिन्ने परनृपात् भयं भवेत् २८
शान्तिहोमं ततः कृत्वा पुनस्संधानमाचरेत्
रज्जुच्छेदे ध्वजच्छिन्ने नष्टे च पतिते तथा २९
ध्वजयष्टिविहीने च ध्वजवेत्र विहीनके
प्रवर्तते महामारी पुण्याहं वाचयेत्ततः ३०
शान्तिहोमं ततः कृत्वा पुनस्संधानमाचरेत्
घण्टाहीने च पतिते बालानाञ्च क्षयं भवेत् ३१
पुण्याहं वाचयित्वा तु मूलेनैव शतं जपेत्
घण्टां मन्त्रेण संप्रोक्ष्य पुनस्सन्धानमाचरेत् ३२
भेरी ताडनहीने तु बधिरत्वं प्रवर्तते
स्नपनं कारयेच्छंभोः भेरीन्तु ताडयेत्ततः ३३
घोषकाले तथा घोषे छेदे च पतितेऽपि च
चर्मच्छेदविशेषेण सस्य नाशं विनिर्दिशेत् ३४
मतिमन्त्रमनुस्मृत्य हुत्वा जप्त्वा शतन्ततः
नवमन्नचे परिग्राह्य विधिना ताडयेत्सुधीः ३५
यागशाला विहीने तु कुण्डवेदिविहीनके
एतेषां लक्षणैर्युक्तैस्तत् ग्रामस्य क्षयं भवेत् ३६
प्रमाणेन पुनः कुर्यात्पुण्याहं वाचयेत्ततः
शान्तिहोमन्ततः कृत्वा तत्तत्कर्मसमापयेत् ३७
वेद्यास्थण्डिलहीने च सस्यनाशं न संशयः
पञ्चगव्येन संप्रोक्ष्य मूलं मत्रशतञ्जपेत् ३८
विधिना स्थण्डिलं कृत्वा तत्रैव स्थापयेद्धटान्
यागशालाग्निना दग्धस्थापितन्तु घटस्तथा ३९

परचक्रात् भयं भूमौ राजामरणमाप्नुयात्
तान्विसृज्याथ सर्वांश्च पुनस्संधानमाचरेत् ४०
पुनरुत्सवमारभ्य तद्दिनादिविशेषतः
केवलं यागशालाग्निदग्धे च पूर्ववत्कुरु ४१
पुण्याहं वाचयित्वाथ शान्तिहोमं समाचरेत्
स्नपनं कारयेच्छंभोः पूजयेत्तु विशेषतः ४२
वितानद्ध्वजहीने च तोरणार्ध्वविहीनके
राष्ट्रन्नश्यति कल्याणि महामारी प्रवर्तते ४३
पूर्वोक्तविधिना कुर्याच्छान्तिहोमन्तु कारयेत्
स्रुक्स्रुवौ च विहीने च एता वै लक्षणैर्युतम् ४४
ज्वरमारी प्रवर्त्तन्ते नित्यं ग्रामविनाशनम्
शान्तिहोमन्ततः कृत्वा कारयेल्लक्षणान्वितम् ४५
दर्भमाला विहीने च अस्त्रबाधा करं नृणाम्
मूलमंत्रशतञ्जप्त्वा दर्भमालान्तु योजयेत् ४६
होमद्रव्य विहीने च अनावृष्टिर्न संशयः
अस्त्रेणैव शतं हुत्वा महाव्याहृतिकन्तथा ४७
तत् द्रव्यं होमयेद्धीमान् पूर्वोक्तविधिना सह
आयुधाश्च विहीने च तस्करात्तु भयं भवेत् ४८
दशाक्षरेण मंत्रेण होमयेच्छतसंख्यया
कृत्वा सलक्षणेनैव प्रोक्षयेत्तु शिवांभसा ४९
अष्टमंगळहीने च जायाश्चैव तु नाशनम्
शान्तिहोमन्ततः कृत्वा कारयेल्लक्षणान्वितम् ५०
पञ्चगव्येन संप्रोक्ष्य स्नापयेद्विधिपूर्वकम्
अंकुरार्पणहीने च पालिकादिविहीनके ५१
सर्वैर्वा लक्षणैर्युक्ते सस्य नाशन्न संशयः
शान्तिहोमन्ततः कृत्वा पुण्याहं वाचयेत्ततः ५२

अंकुरार्पणकं कुर्याल्लक्षणैः पालिकादिभिः
अस्त्रयानविहीने च महामारिप्रवर्त्तते ५३
मूर्तिहोमन्ततः कृत्वा मूलेनैव शतं हुनेत्
ततोनुच समापाद्य सर्वकर्मसमाचरेत् ५४
यागे दीपविहीने च उन्मादञ्जायते ध्रुवम्
शान्तिहोमन्ततः कृत्वा दीपमारोपयेत्ततः ५५
दुर्भिक्षञ्जायते कुण्डे वह्निविच्छेदनेऽपि च
भस्मांगारन्ततो द्वास्य निधायाग्निस्तुपूर्वकम् ५६
समिदाज्येन चरुणा जुहुयान्मूलमन्त्रतः
प्रत्येकन्तु शतं हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ५७
प्रणीता चलिता हीने ज्वरव्याधिस्तु जायते
जुहुयादस्त्रमन्त्रेण शतं वै षोडशाधिकम् ५८
मन्त्रहीने क्रियाहीने महोन्मादस्तु जायते
मूर्तिहोमन्ततः कृत्वा मूलेनैव शतं हुनेत् ५९
उक्तद्रव्यैश्च मन्त्रैश्च विधिना होममाचरेत्
दर्भाः परिधिहीने च जना दुःखमवाप्नुयात् ६०
शान्तिहोमं ततः कृत्वा पुनस्संधानमाचरेत्
बलिद्रव्यविहीने च पतिते च विशेषतः ६१
सस्यानां नाशनञ्चैव गवानां नाशनं भवेत्
द्रव्यन्तु हि विसृज्याथ नवद्रव्यं परिग्रहेत् ६२
मूलमन्त्रं शतञ्जप्त्वा ------------
बलिदानविहीने च क्षुद्बाधा जायते नृणाम् ६३
मूर्त्तिहोमन्ततः कृत्वा प्रभूतहविषा हुनेत्
बलिद्रव्यं समापाद्य बलिदानं समाचरेत् ६४
बलिलिंगविहीने च भिन्ने च पतितेऽपि च
भग्ने चैव तथा कर्त्तुर्विनाशं भवति ध्रुवम् ६५

कृत्वा तु शान्तिहोमन्तु मूलेनैव शतं हुनेत्
नवलिंगं प्रकुर्वीत पश्चात् बलिं समाचरेत्  ६६
शूलास्त्रे पतिते चैव भिन्ने नष्टे तथैव च
तत् ग्रामस्य च राष्ट्रस्य शत्रुभिर्भयमादिशेत्  ६७
पतितेऽभिषेचनं कुर्याच्छान्तिहोमन्तु कारयेत्
अस्त्रमन्त्रेण मतिमान् जुहुयाच्छतसंख्यया  ६८
शेषस्थाने बलिन्दद्यात् प्रविशेद्यागमण्टपम्
शूलस्य दण्डविच्छिन्ने वर्जयेत्तामयत्नतः  ६९
अस्त्रमन्नचं प्रतिग्राह्य यागशेषं समाचरेत्
शूलास्त्रन्तु पुनः कृत्वा स्थापयेद्विधिपूर्वकम्  ७०
अन्यांगानि विहीने च पुनस्सन्धानमाचरेत्
तदस्त्राब्जेन लोहेन पूर्ववत्कारयेत्सुधीः  ७१
प्रतिष्ठा तु प्रकर्तव्या जलाधिवासनं विना
आयुधानि प्रणष्टे तु भिन्ने वा पतितेषु वा  ७२
प्रवर्तते महामारी गावो नश्यन्त्यसंशयः
बिन्दूद्धर्वेन तु मन्त्रेण जपेदष्टशतं सुधीः  ७३
नष्टे भिन्ने च कर्तव्यं पूर्ववल्लक्षणान्वितम्
बलिपात्रविहीने च क्षीयेते धनधान्यकौ  ७४
शान्तिहोमन्ततः कृत्वा नवपात्रन्तु निक्षिपेत्
बलिताळविहीने च सर्वदेवा प्रियं भवेत्  ७५
मूर्तिहोमन्ततः कृत्वा नन्दिमंत्रं शतञ्जपेत्
बलिदीपविहीने च लक्ष्मीर्ग्रामात् गता भवेत्  ७६
क्षुरिकाबीजमुख्यैश्च प्रत्येकन्तु शतञ्जपेत्
द्विगुणं दीपमारोप्य बलिशेषं समाचरेत्  ७७
कालातिक्रमणे प्राप्ते बलिदाने च यानके
तत् ग्रामस्य क्षयं प्रोक्तं शान्तिहोमन्तु कारयेत्  ७८

पुरयाहं वाचयित्वा तु बलिदाने नयेत्पुनः
उत्सवे यानहीने च पुनस्सन्धानमाचरेत् ७९
मूर्तिहोमन्ततः कृत्वा बिंबन्तु स्नपनं प्रभोः
पुनर्यानक्रमेरौव कुर्यात् ग्रामप्रदक्षिणम् ८०
तत्ताले कलहन्तत्र तस्करेण भयं भवेत्
शान्तिहोमन्ततः कृत्वा प्रविशेदालयं प्रति ८१
पूजापर्युषि तद्रव्यैस्संस्कारे लिंगबिंबयोः
परचक्रात् भयञ्चैव महामारी प्रवर्तते ८२
मूर्तिहोमन्ततः कृत्वा स्नपनं कारयेत्प्रभोः
पुरयाहं वाचयित्वा तु यजेत्पाशुपतं शतम् ८३
प्रतिमे यानकाले तु पतिते चांगहीनके
वास्तुराष्ट्राधिपानाञ्च नाशनं भवति ध्रुवम् ८४
स्नपनन्तत्र कुर्वीत पुरयाहं वाचयेत्ततः
शान्तिहोमन्ततः कृत्वा पुनर्यानं समाचरेत् ८५
शिरोबाहु तथापादौ हीनस्यापि विवर्जयेत्
नखकर्णांगुलीहीने भूषणास्त्रविहीनके ८६
पद्मबन्धविहीने तु जटाहीने प्रजापते
पुनस्सन्धानकं कृत्वा तदर्थं प्रोक्षणं कुरु ८७
दीक्षान्तरे तथा शूद्रैः प्रतिमास्पर्शने यदि
तैरेव यागशालान्तु स्पृष्टेशुना तथैव च ८८
तत् ग्रामवासिनां नृणां स्थानभ्रंशं न संशयः
पञ्चगव्यैश्च संप्रोक्ष्य पुरयाहं वाचयेत्ततः ८९
स्नपनं कारयेत् बिंबं शान्तिहोमन्तु कारयेत्
उत्सवे चैव तत् ग्रामे मृते चैव मनुष्यकाः ९०
राष्ट्रस्य दूषणोत्पत्तिश्शीघ्रन्नीत्वा तु तश्शवम्
मूर्तिहोमन्ततः कृत्वा अस्त्रेणाष्टशतं हुनेत् ९१

परिवेष्टविहीने च लोकोन्मत्तं समादिशेत्
शिवमन्त्रं शतञ्जप्त्वा व्योमव्यापि तथैव च  ९२
नीराञ्जनविहीने तु वह्निना तु भयं भवेत्
महेश्वरस्य बीजेन शतं जप्त्वा विशेषतः  ९३
निराञ्जनन्ततः कुर्यात्पूर्वोक्तविधिना सह
प्रपादयो निदग्धे च ज्जुद्भयं ग्रामवासिनाम्  ९४
तत्रांगारं विसृज्याथ पूर्ववत्कारयेत्सुधीः
मूर्तिहोमन्ततः कृत्वा बिंबन्तु स्नपनं कुरु  ९५
युद्धारंभविहीने तु सस्यानान्नाशनं भवेत्
मूर्तिहोमन्ततः कृत्वा युद्धारंभमथाचरेत्  ९६
रज्ञासूत्रविहीने तु बालानान्नाशनं भवेत्
पुरायाहं वाचयित्वा तु कौतुकं बंधयेत्सुधीः  ९७
गन्धोत्सवविहीने तु राजराष्ट्रं विनश्यति
उत्सवं पुनरारभ्य शान्तिहोमन्तु कारयेत्  ९८
पश्चाद्गंधोत्सवं कुर्यात्पूर्वे तैलाभिषेचनम्
मूर्तिहोमं ततः कृत्वा स्नपनं कारयेत्प्रभोः  ९९
अपरे दिवसे चैव पूर्वतीर्थमथाचरेत्
न्यूने चैव तथाराष्ट्रग्रामयोर्नाशनं भवेत्  १००
प्रागुक्तविधिनाधीमान् पुनरुत्सवमाचरेत्
आदौ व्यवस्थितान्त्याज्य मासभाग्यान्तथोग्ययोः  १०१
उत्सवे त्वकृते तस्य ग्रामस्य नाशनं भवेत्
दशाहोमन्तु कर्तव्यं स्नपनं कारयेत्प्रभोः  १०२
पूर्वोक्तविधिना चैव पुनरुत्सवमाचरेत्
पीठोक्तासनहीने तु न प्रीतास्सन्ति देवताः  १०३
मूलेनैव शतं हुत्वा पश्चादूर्ध्वासनं कुरु
चराडयागविहीने तु परचक्रात् भयं भवेत्  १०४

स्नपनं कारयेच्छंभोश्चरण्डयागं समारभेत्
आरब्धादन्यतन्त्रेण शिवयागे कृते सति १०५
तन्त्रहानिर्भवेदाज्यस्तद्यज्ञं पुनराचरेत्
मंत्रसंकरदोषेण मारी व्याधिस्तु जायते १०६
समिद्भिश्च पलाशैश्च सर्पिषा चरुणा ततः
तन्मंत्राष्टशतं हुत्वा तत्संख्या जपमाचरेत् १०७
आचार्यदक्षिणे हीने कर्ताभर्ता विनश्यति
अत्र यागफलं सर्वं निष्फलं भवति ध्रुवम् १०८
दत्वा तु द्विगुणं पश्चात् देशिकं तृप्तमानसम्
शान्तिहोमं ततः कृत्वा मूलेनैव शतं जपेत् १०९
दत्वा तु द्विगुणं पश्चात् देशिकं तत्र तोषयेत्
ग्रामादीनान्तु लक्षन्तु प्रतिकूले तु संभवे ११०
ग्रामकर्तृनृपाणाञ्च मनःक्लेशं भविष्यति
तत्रान्नयत्स्थापितं बिंबं तद्दोषस्य निवृत्तये १११
शान्तिहोमं ततः कृत्वा तत्तत्स्थापनमाचरेत्
यागोपकरणं सर्वं न दद्यात् देशिकस्य तु ११२
तद्यागं निष्फलन्तु स्यात्तस्मात्तस्मै प्रदापयेत्
अनुक्तं यत् भवेत्तत्र शान्तिहोमेन शाम्यति ११३
मूर्तिहोमं दिशाहोमं हुत्वा निष्कळयोग्यकम्
यागाग्नौ जुहुयाद्धीमान् प्रागुक्तविधिना सह ११४

संप्रोक्षणप्रायश्चित्तविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि संप्रोक्षणविधिक्रमम्
सर्वशान्तिकरं पुण्यं सर्वरोगविनाशनम् १
सर्वधान्यसमृद्धिस्स्यात्सर्वसंपत्सुखावहम्
स्थापनांगविहीने तु नैवेद्यादिविहीनके २

नित्योत्सवविहीने तु नित्यपूजा विहीनके
नित्याग्निकार्यहीने तु चुबुकोदकहीनके ३
सदादीपविहीने तु सन्ध्यादीपविहीनके
सन्ध्यानृत्तविहीने तु सन्ध्याशंखविहीनके ४
गीतवाद्यविहीने तु प्रभूतबलिहीनके
चंद्रचन्दनकस्तूरि अर्घ्यपाद्यविहीनके ५
छिन्नवस्त्रादिवेष्टयंग गन्धपुष्पविहीनके
अष्टबन्धनहीने तु वर्षपूजा विहीनके ६
वत्सरोत्सवहीने तु पवित्रोत्सवहीनके
नवनैवेद्यहीने तु कृत्तिकादीपहीनके ७
परिवेष्टविहीने तु मासपूजा विहीनके
पञ्चगव्यविहीने तु नित्यवाहनहीनके ८
मासोद्ध्र्वपूजा हीने तु स्विष्टकृत्स्थलकर्मणि
सर्वेष्वेतेषु कालेषु विहीनेषु प्रजापते ९
मृत् भाण्डानि विसृज्याथ गोमयालेपनं क्रमात्
पुण्याहं वाचयित्वा तु पर्यग्निकरणन्तथा १०
पञ्चगव्येन संप्रोन्द्य स्नपनं कल्पयेद्विभोः
दिशाहोमं समाश्रित्य कारयेत्तु विचक्षणः ११
समिदाज्य चरुं लाजान् माषशालियवांस्तथा
सर्षपन्तिलमुद्गन्तु गोधूमञ्च यथाक्रमम् १२
समिधम्मूलमन्त्रेण घृतं गायत्रिमन्त्रतः
चरुं हृदयमन्त्रेण लाजं वामेन हूयते १३
माषन्तु सद्यमन्त्रेण शालिं पुरुषमन्त्रतः
यवं घोरेण मन्त्रेण ईशानेनैव सर्षपम् १४
तिलञ्च मूलमन्त्रेण मुद्गन्तु शिखया हुनेत्
गोधूमञ्चास्त्रमन्त्रेण क्षीरं प्रासादमन्त्रतः १५

सक्तुश्च शिरसा चैव हुनेदष्टाधिकं शतम्
द्रव्याणयेतानि सर्वाणि मूलेनैव तु होमयेत्  १६
पर्यग्निकरणं कृत्वा पुणयाहं वाचयेत्ततः
स्नपनं कारयेत् शंभोर्न्नववस्त्रेण वेष्टयेत्  १७
पञ्चमुखीं समाच्छाद्य सर्वपुष्पैरलंकृतम्
पञ्चवर्णहविर्दत्वा बलिदानावसानके  १८
नित्याग्निना सुसंपूज्य धूपदीपसमन्वितम्
शान्तिहोमन्ततः कृत्वा सर्वसंभारसंयुतम्  १९
प्रतिष्ठायागवत्कुर्यात्सर्वदेवसमावृतम्
शिवास्त्रमूर्तिं संपूज्य तीर्थान्तं हि समाचरेत्  २०
उमास्कन्देश्वरन्देवमभिषिच्य तु वेष्टयेत्
सर्वमाल्यैरलंकृत्वा सर्वगन्धानुलेपनम्  २१
नैवेद्यन्दापयेत्पश्चादपूपं दापयेत्ततः
वास्तुहोमन्ततः कृत्वा  समिदाज्यान्न सर्षपैः  २२
शंखदुन्दुभिनिर्घोषैः स्तोत्रमंगळवाचकैः
ग्रामप्रदक्षिणं कुर्यादुमास्कन्देन्दुशेखरान्  २३
हेमवान्धान्यवान् श्रीमान्सोऽन्ते रुद्रपदं लभेत्

शान्तिहोमविधिप्रारंभः

अथातस्संप्रवक्ष्यामि शान्तिहोमविधिक्रमम्
सर्वदोषविनाशार्त्थं सर्वसंपत्सुखावहम्  १
भवनस्याग्रतः कुर्यात् मंटपञ्चतुरश्रकम्
भूमिशुद्धिं पुरा कृत्वा गोमयेनोपलेपयेत्  २
प्रोक्षयेच्छिवमंत्रेण शालिपिष्टैर्विचित्रयेत्
तन्मद्धये स्थंडिलं कुर्यात् शुद्धतोयेन पांसुना  ३
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्

पलाशसमिधं सद्यो जातमंत्रेण हूयते ४
आज्यं हुत्वा तु वामेन चरुं वै घोरमन्त्रतः
पुरुषेण हुनेल्लाजं श्रीपत्रं शिखया हुनेत् ५
सहस्रं वा तदर्द्धं वा तदर्द्धार्द्धमथापि वा
अष्टोत्तरशतं वापि प्रत्येकं जुहुयात्क्रमात् ६
द्रव्यान्ते व्याहृतिं हुत्वा यदस्येति ततो हुनेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ७
पूर्णाहुतिं ततो दत्वा शिवमन्त्रेण देशिकः
सद्योजातेन मन्त्रेण पावकन्तु विसर्जयेत् ८
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः
शान्तिहोममिति ख्यातं सर्वदोषनिकृन्तनम् ९

दिशाहोमविधिप्रारंभः

अथ वक्ष्ये विशेषेण दिशाहोमविधिक्रमम्
सर्वदोषहरं पुण्यं सर्वोपद्रवनाशनम् १
मन्दिरस्य चतुर्दिक्षु मंटपं कारयेत्ततः
प्रोक्षयेत्पुरुषेणैव गोमयेनोपलेपयेत् २
पुण्याहं वाचयेत्तत्र पिष्टचूर्णैर्विचित्रयेत्
प्रोक्षयेच्छिवतोयेन स्थण्डिलं वालुकैः कुरु ३
आदावन्ते च कर्तव्यमग्निकार्योक्तमार्गतः
अश्वत्थं पूर्वदिग्भागे याम्ये वोदुंबरं हुनेत् ४
वटहोमन्तु वारुण्यां ब्रंहशाखा तु चोत्तरे
समिदाज्य चरून्लाजान् सर्षपञ्च यवन्तिलम् ५
वैणवं माषमुद्गञ्च श्रीपत्रं कदळीफलम्
समिधं सद्यमन्त्रेण वामे नाज्यञ्च हूयते ६
अघोरेण चरुं हुत्वा लाजं हुत्वा नरेण तु

सर्षपं बहुरूपेण हृदयेन यवं हुनेत् ७
तिलं हुत्वा तु शिरसा वैणवं शिखया हुनेत्
माषं कवचमन्त्रेण मुद्गन्नेत्रेण होमयेत् ८
श्रीपत्रमस्त्रमन्त्रेण मूलेन कदळीफलम्
शतमर्द्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ९
द्रव्यान्ते व्याहृतिं हुत्वा यदस्येति ततो हुनेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च ग्रमाद्धुनेत् १०
पूर्णाहुतिं ततो दद्यात्सद्योजातेन देशिकः
प्रायश्चित्तादिकं सर्वं जुहुयात् घोरमन्त्रतः ११
तत्पुरुषेण मन्त्रेण पावकन्तु विसर्जयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः १२
दिशाहोममिति ख्यातं सर्वकृत्रिमनाशनम् १३

मूर्तिहोमविधिप्रारंभः

अथ वक्ष्ये विशेषेण मूर्तिहोमविधिक्रमम्
सर्वदोषनिवृत्यर्थं सर्वसिद्धिप्रदायकम् १
सदनस्याग्रतः कुर्यात् मंटपञ्चतुरश्रकम्
तन्मद्धये स्थंडिलं कुर्यादष्टद्रोणैश्च शालिभिः २
मद्धये सरोरुहं लिख्य दर्भैः पुष्पैः परिस्तरैः
प्रोक्षयेत् शिवतोयेन स्थंडिलन्तु यजेद्धृदा ३
शिवकुंभं न्यसेन्मद्धये वर्द्धनीं तस्य वामके
ससूत्रौ सापिधानौ च सकूर्चौ वारिपूरितौ ४
रत्नहेमादिसंयुक्तौ नाळिकेरफलान्वितौ
पल्लवेन समायुक्तौ वस्त्रयुग्मेन वेष्टितौ ५
सदाशिवं यजेत्कुंभे वर्द्धन्यान्तु मनोन्मनीम्
पूजयेद्गंधपुष्पाद्यैर्नैवेद्यान्तं क्रमेण तु ६

परितोष्टघटान्नयस्त्वा ससूत्रान्सापिधानकान्
सकूर्चान्पल्लवोपेतान् वस्त्रयुग्मेन वेष्टितान् ७
हेमशूलसमायुक्तान् स्थापयेत्स्थापकोत्तमः
पूर्वादिषु क्रमेणैव विद्येशान्संप्रपूजयेत् ८
तत्पूर्वे स्थण्डिलं कुर्यान्निर्दोषैर्वालुकैस्सितैः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ९
समिदाज्य चरून्लाजान्सर्षपञ्च यवन्तिलम्
श्रीपत्रं वैणवं शालिं शर्कराकदळीफलम् १०
गोधूमञ्चणकञ्चैव दधिक्षीरं क्रमाद्धुनेत्
समिधं सद्यमन्त्रेण चरुं वामेन हूयते ११
अघोरेण हुनेल्लाजं सर्षपं पुरुषेण तु
ईशानेन यवं हुत्वा हृदयेन तिलं हुनेत् १२
श्रीपत्रं शिरसा हुत्वा वैणवं शिखया हुनेत्
शालिं वैकवचेनैव शर्करान्नयनेन तु १३
खड्गेन कदळीं हुत्वा गोधूमञ्चास्त्रमन्त्रतः
चणकं बीजमुख्येन प्रासादेन हुनेद्दधि १४
दुग्धन्तु मूलमन्त्रेण मूलतोऽन्यानि होमयेत्
प्रत्येकं व्याहृतिं हुत्वा प्रायश्चित्तार्थकं हुनेत् १५
अयुतं वा तदर्द्धं वा तदर्द्धार्द्धमथापि वा
सहस्रं वा तदर्द्धं वाप्यष्टोत्तरशतन्तु वा १६
तस्यार्द्धं वा तदर्द्धं वा प्रत्येकञ्जुहुयात्क्रमात्
विद्येशानान्तु बीजेन प्रत्येकं षोडशं हुनेत् १७
त्रियंबकेन मंत्रेण जुहुयाद्वै पृथक्पृथक्
अघोरास्त्रेण मंत्रेण तत्संख्याहुतिमाचरेत् १८
जयादीन् जुहुयान्मंत्री पूर्णान्तु शिरसा हुनेत्
वह्निबीजमनुस्मृत्य ----- विसर्जयेत् १९

कुंभस्थान्सर्वदेवांश्च पूजयेत्तु पृथक्पृथक्
उक्तालंकारसंयुक्तं सर्वातोद्यसमन्वितम्  २०
कुंभानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम्
गर्भगेहं प्रविश्याथ स्नापयेत्तु सदाशिवम्  २१
वर्द्धनीमभिषिच्याथ विद्येश्वरघटैस्समम्
अर्चनोक्तं समभ्यर्च्य प्रभूतहविषन्ददेत्  २२
धूपदीपौ हृदा दत्वा तांबूलन्तु निवेदयेत्
प्रार्थयित्वा ततो देवमष्टपुष्पं प्रदापयेत्  २३
मूर्तिहोमं समाख्यातं सर्वदोषनिकृन्तनम्  २४

अद्भुतशान्तिविधिप्रारंभः

वक्ष्ये अभुतशान्तिस्तु राजराष्ट्रहिताय च
अद्भुतं द्विविधं प्रोक्तं सामान्यञ्च महाद्भुतम्  १
सामान्यं दीर्घफलदं सद्य एव महाद्भुतम्
तत्तत्प्रतिक्रिया सम्यक् कर्त्तव्या दोषनाशिनी  २
अकर्तव्ये तु या सद्यस्सर्वदोषावहन्नृणाम्
ब्राह्मणानान्नृपाणाञ्च विशेषाद्दोषदम्महत्  ३
तस्मात्प्रतिक्रिया सद्यो नृपणैवावलंबिकम्
भास्करस्योदये रात्रावमावास्येन्दुदर्शने  ४
भूमिकंपे नदीक्षोभे कूपक्षोभे तटाकके
प्रतिमारोदने चैव ततश्शोणितवर्षके  ५
पाषाणपांसुवर्षे च तथैव मधुवर्षके
क्षीरासृक् वर्षसंभूते वृक्षाच्छोणितवर्षके  ६
पतिते पादुकान्तं ये देवालयमकारणात्
वृक्षात्स्थानान्तरप्राप्तौ वृक्षेऽन्यफलसंभवे  ७
तदन्यपुष्पसंभूते रसगन्धान्यसंभवे

लिंगकेत्युष्णसंभूते प्रतिमे तु तथैव च ८
अरडजा स्वेदजाशैव चतुष्पादा नरास्तदा
स्वजात्यन्यप्रसूते च प्रासादभ्रमणे तथा ९
श्वेतवायससंभूते पर्वद्वये च युद्धके
आर्द्रवृक्षे स्वयन्दग्धे प्रतिमा कंपने तथा १०
भिन्ने शस्य तु तद्धर्म्ये लिंगप्रतिमयोस्तथा
प्रतिमा स्वेदसंभूते लिंगस्वेदोद्भवेऽपि च ११
प्रतिमोन्मीलने भ्रष्टे करिणी मदसंयुते
अनग्नावुत्थिते धूमे लिंगे वर्णान्तरे सति १२
अंगादिकसमुत्पन्ने चतुष्पात्सु तथैव च
भेरी घोषे स्वयं भूते प्रोक्ताश्चेत्तु महाद्भुताः १३
दिने तु प्रतिसूर्यस्य चंद्रस्य प्रतिदर्शने
रात्राविंद्रधनुर्दिष्टे त्वह्निनक्षत्रदर्शने १४
ग्रहनक्षत्रपाते च सप्तधा शनिसंकुले
नैरन्तरे च सप्ताहे परिवेषेऽर्कचंद्रयोः १५
महावातप्रकोपे च दिशांदासमुद्भवे
लिंगेषु पूजितं पुष्पं प्राप्ते वर्णान्तरे सति १६
अकस्मात्पतिते पुष्पे ---- सिते सति
अतीवशलभोत्पन्ने उन्मत्तोपहते सति १७
शुक्लमूषिकसंभूते विषसर्वादिकोद्भवे
प्रासादेऽथ सभास्थाने गोपुरे मंटपेऽपि च १८
परिवारालये चैव मधुनीडे समुद्भवे
अतिवृष्टावनावृष्टौ युद्धेऽभ्योगे नृपस्य तु १९
पतिते कारणाद्धामवृक्षके तत्समीपतः
राज्ञांप्रधानमहिषी प्रधाने च गजे मृते २०
ऋतुस्त्रीवायसोलूकजंबुगृद्ध्रश्च पिंगली

नृपवेश्मप्रविष्टे च प्रविष्टे च सुरालये २१
देवालयोपरिष्टात्तु नृपस्य भवनोपरि
श्वारोहे रुदते तत्र तत्रजातिक्रयास्तथा २२
लिंगे च प्रतिमे चैव खद्योतारोहणे सति
केचिद्व्योमे तु केतुभ्यां नानारूपेण दर्शिते २३
लिंगमूले तु निबिडे जन्त्वा रोहणकेऽपि च
व्यतिरिक्तक्रियाकार्ये सामान्यास्त्वद्भुतास्मृताः २४
तेषान्दोषनिवृत्यर्थं प्रवक्ष्यामीह प्रक्रियाम्
रात्रौ भानु प्रदृष्टे च प्रविष्टे च नृपाद्भयम् २५
दिशाहोमन्ततः कृत्वा महास्नपनमुत्तमम्
कृत्वा संपूज्य देवेशं प्रभूतहविषन्ददेत् २६
ब्रांहणान्भोजयेत्तत्र प्रतिसर्वांश्च भोजयेत्
एवमेवन्तु सप्ताहं दिनं प्रतिदिनं प्रति २७
चंद्रोदयेऽप्यमावास्यां गोनाशं सस्यनाशनम्
पूर्ववत्कारयेत्सर्वं तद्दोषशमनाय च २८
संभवे भूमिकंपे च राजराष्ट्रस्य दोषकृत्
क्षीरप्रस्थसहश्रैश्च मधुसर्पिसहस्त्रकैः २९
संस्नाप्य च शिवं सम्यक् महाव्योमेतिमन्त्रतः
पलाशसमिधा चैव शान्तिहोमञ्च कारयेत् ३०
ब्राह्मणान्भोजयेन्नित्यमेकविंशद्दिनान्तकम्
नदीक्षोभे तथा कूपतटाकक्षोभके तथा ३१
दुर्भिक्षं जायते लोके महामारी तथैव च
नदी तीरे मंटपं तु नवहस्तप्रमाणतः ३२
मंटपे मंटपं सम्यक् तन्मद्ध्ये स्थंडिलं कुरु
पञ्चाग्निं कल्पयेत्तस्मिन् अग्निकार्योक्तमार्गतः ३३
व्याहृत्या समिधं हुत्वा चास्त्रमन्त्रेण देशिकः

हृदयेन घृतं हुत्वा चरुं पाशुपतेन च ३४
शतमर्द्धं तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात्
मन्त्राहुतिञ्च कुर्वीत व्याहृतिञ्च हुनेत्क्रमात् ३५
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत्
शिवं संपूज्य विधिवत् ब्रांहणान् जोभयेत्ततः ३६
एवं कुर्यात्तु पञ्चाहमन्ते चोत्सवमाचरेत्
प्रतिमा रोदने चैव गोनाशं धान्यनाशनम् ३७
तन्मण्डलाधिपो राजा ग्रामं राष्ट्रं विनश्यति
कृत्वा तु प्रतिमा शुद्धिं संप्रोक्षणमथाचरेत् ३८
पक्षं पक्षद्वयं वार्कसमिद्भिश्शान्तिहोमकम्
स्नपनं कारयेन्नित्यं दिशाहोमसमन्वितम् ३९
ब्रांहणान् भोजयेन्नित्यं दिननाधांश्च पूजयेत्
ततश्शोणितवर्षे तु प्राणिनां नाशनं महत् ४०
प्रासादमण्टपादीनि तोयेन क्षाळयेत्ततः
आलयन्तु समन्ताच्च गोमयेनोपलेपयेत् ४१
मध्वृष्टौ क्षीरवृष्टौ विप्रक्षत्रियदोषकृत्
तत्तत्प्रस्थसहस्रैश्च स्नापयेद्देशिकोत्तमः ४२
पूजयेत्तु विशेषेण प्रभूतहविषन्ददेत्
अशोकसमिधश्चैव शान्तिहोमञ्च कारयेत् ४३
एवं कुर्यात्तु सप्ताहं पश्चात् ब्राह्मणभोजनम्
द्रुमात् शोणिसमुद्भूते परचक्रात् वयं भवेत् ४४
वृक्षमूले दिशाहोमं कारयेद्देशिकोत्तमः
ब्रांहणान्भोजयेत्तत्र वास्तुदेवान्प्रपूजयेत् ४५
पूजयेत्तु शिवं पश्चात्कुर्याच्च स्नपनम्महत्
पूजयेत्तु विशेषेण प्रभूते हविषन्ददेत् ४६
पतिते पादुकान्तं ये देवालयमकारणात्

स्त्रीणाञ्चैव तु बालानां क्षत्रियाणान्तु नाशनम् ४७
प्रासादं पूर्ववत्कृत्वा जीर्णबिंबान्समुद्धरेत्
पुनः बिंबं समापाद्य पूर्ववत्स्थापयेत् गुरुः ४८
स्थापनर्क्षात्समारभ्य सप्तविंशद्दिनान्तकम्
यथा गत्यन्तथा गव्यैरभिषेकं समाचरेत् ४९
देवतास्थापनं प्राग्वत्पूजयेत्तु विशेषतः
गव्याभिषेचनं कृत्वा ब्राह्मणान्भोजयेत्ततः ५०
उत्सवं कारयेद्धीमान् शिवकुंभन्तदन्तके
तद्राष्ट्रे देवतानाञ्च स्नपनं हविषम्महत् ५१
कारयेद्विधिवद्राजा भक्तियुक् दोषशान्तये
द्रुमस्थानान्तरप्राप्तौ वृक्षे चान्यफलोद्भवे ५२
तदन्यकुसुमोत्पन्नरसगन्धान्यसंभवे
भक्तानाञ्चैव सर्वेषान्दुःखन्तद्राष्ट्रवाहिनाम् ५३
तज्जातितरुसंस्थाप्य पूर्वस्थाने विशेषतः
शान्तिहोमन्तु तत्रैव मधूरसमिधा तथा ५४
शिवं संपूज्य विधिवत्सप्ताहं स्नपनं कुरु
क्षीराभिषेचनं कृत्वा वास्तुदेवान्सुपूजयेत् ५५
तदेतत्फलानि सर्वाणि पुष्पैस्सर्वैर्यजेच्छिवम्
सर्वगन्धसमायुक्तं पूजयेत्तु विशेषतः ५६
लिंगे चैवोष्णसंभूते प्रतिमे तु तथैव च
मर्त्यानाञ्चैव सर्वेषान्नानारोगसमुद्भवः ५७
गोनाशञ्चैव दुर्भिक्षन्तद्राष्ट्रे जायते ध्रुवम्
क्षीरप्रस्थसहस्रैश्च मधुसर्पिसहस्रकैः ५८
नाळिके रोदकेनैव स्नापयेत्तु शिवं बुधः
स्नपनन्तत्र कर्त्तव्यं महाव्योमेतिमंत्रतः ५९
पूजयेत्तु विशेषेण चन्दनोशीरकुंकुमैः

कुष्ठैर्लवंगकर्पूरैरालोड्यालेपयेच्छिवम् ६०
महाहविः प्रदातव्यन्दिशाहोमञ्च कारयेत्
एवं कुर्यात्तु सप्ताहं शीतकुंभं तदन्तके ६१
अण्डजास्वेदजाश्चैव चतुष्पादा नरास्तथा
स्वजात्यन्यप्रसूते च नृपतेर्मरणन्ध्रुवम् ६२
गोभूमिकाञ्च नादीनि दापयेत्तु प्रयत्नतः
स्नपनं कारयेदर्कसमिधा शान्तिहोमकम् ६३
एवं कुर्यात्तु सप्ताहमन्ते चोत्सवमाचरेत्
प्रासादभ्रमणोत्पन्ने राष्ट्रस्योपप्लवं भवेत् ६४
प्रत्येकं प्रस्थसाहस्त्रैर्गव्यैः प्रासादकेन तु
पञ्चब्रह्मषडंगैश्च स्नापयेत्परमेश्वरम् ६५
प्रासादं प्रोक्षयेद्धीमान्पूर्वोक्तविधिना सह
स्नपनन्तत्र कुर्वीत ब्राह्मणान्भोजयेत्सुधीः ६६
सितकाकसमुद्भूते राष्ट्रक्षोभं भवेत्सदा
स्नपनन्तत्र कुर्वीत ब्राह्मणान्भोजयेत्ततः ६७
---------- पूजयेत्तु विशेषतः
वैकंकतेन समिधा शान्तिहोमं समाचरेत् ६८
विशेषात्पूजनं कुर्यात्तदन्ते चोत्सवं कुरु
आर्द्रवृक्षे स्वयन्दग्धे बालानान्नाशनं भवेत् ६९
अनिन्दा तु भयञ्चैव तद्राष्ट्रे भवति ध्रुवम्
ग्रामस्यैव चतुर्दिक्षु होमं कुर्याद्विशेषतः ७०
समिदाज्य चरून्लाजं सर्षपं होमयेत्ततः
तद्वृक्षसमिधा चैव पञ्चब्रह्मक्रमाद्धुनेत् ७१
शतमर्द्धन्तदर्द्धं वा प्रत्येकं जुहुयात्क्रमात्
पञ्चब्रह्मषडंगैश्च प्रासादेनैव मंत्रतः ७२
प्रत्येकन्तु सहस्त्रं वा तदर्द्धञ्जुहुयात्क्रमात्

मन्त्राहुतिन्ततः कृत्वा जयादिजुहुयात्क्रमात् ७३
कृत्वा तु स्नपनं पश्चाद्विशेषेणैव पूजयेत्
औदुंबरेण समिधा शान्तिहोमञ्च कारयेत् ७४
प्रतिमा कंपने शीघ्रं राजामरणमाप्नुयात्
कृत्वा तत्प्रतिमा शुद्धिं गव्येनैवाभिषेचयेत् ७५
स्नपनं कारयेद्देवमर्च्चनोक्तं यजेत् गुरुः
दिशाहोमन्ततः कृत्वा पुण्याहं वाचयेदथ ७६
एवं कुर्याच्च सप्ताहं तदन्ते चोत्सवं कुरु
भिन्ने शस्य तु तद्धर्म्ये लिंगप्रतिमयोस्तथा ७७
परचक्रात् भयं भूमौ महामारी प्रवर्त्तते
बालस्थानन्ततः कृत्वा प्रासादं पूर्ववत्कुरु ७८
प्रासादप्रोक्षणं कृत्वा पूर्वोक्तविधिना सह
प्रत्यंगे वांगहीनेन सा सा भरणहीनके ७९
पुनस्सन्धानकं कृत्वा संप्रोक्षणमथाचरेत्
दिशाहोमन्ततः कृत्वा महास्नपनमाचरेत् ८०
पञ्चमृत्पञ्चगव्यैश्च चाभिषेकं समाचरेत्
क्षीरप्रस्थसहस्रैश्च मधुसर्प्पिसहस्रकैः ८१
स्नापयेत्परमेशानं महाव्योमेति मन्त्रतः
स्नपनं कारयित्वाथ ब्राह्मणान्भोजयेत्ततः ८२
समिधाखादिरेणैव शान्तिहोमं समाचरेत्
एवं कृत्वा तु सप्ताहमन्ते चोत्सवमाचरेत् ८३
प्रतिमोन्मीलनञ्चैव राष्ट्रग्रामस्य नाशनम्
पक्षं पक्षद्वयावार्कसमिधाशान्तिहोमकम् ८४
स्नपनं कारयेन्नित्यं दिशाहोमसमन्वितम्
ब्राह्मणान्भोजयेत्तत्र दीनानाथांश्च भोजयेत् ८५
करिणीमदसंयुक्ते महावात्रप्रकोपने

वाहनानां त्तयञ्चैव स्त्रीजनानां त्तयं भवेत्  ८६
शिवं संपूज्य विधिवत्स्नपनं कुरु नित्यशः
शिवांगैश्चैव विद्यांगैश्शिवमन्त्रैश्च होमयेत्  ८७
एवं सप्तदिनं नीत्वा महाहविर्निवेदयेत्
अनग्नावुत्थिते धूमे वाहनानां त्तयं भवेत्  ८८
परचक्रात् भयं तत्र भूमौ संभवति ध्रुवम्
तत्प्रदेशं खनित्वा तु पञ्चमृद्भिस्सुपूरयेत्  ८९
व्याघातं समिधाञ्चैव शान्तिहोमञ्च कारयेत्
ब्रांहणान्भोजयेत्तत्र दीनानाधांश्च पूजयेत्  ९०
त्तीरप्रस्थसहस्त्रैश्च स्नापयेत्परमेश्वरम्
तदन्ते स्नपनं कुर्यात् शीतकुंभं तदन्तके  ९१
लिंगे वर्णान्तरप्राप्ते जातिदूषणमादिशेत्
एलालवंगकर्पूरं श्रीपूगादिफलं मुरैः  ९२
पेषयित्वा यथामंत्री लिंगमालेपयेत्ततः
स्नपनं कारयेदन्ते सप्ताहं शान्तिहोमकम्  ९३
अशोकसमिधा हुत्वा त्र्यंबकेन तु मन्त्रतः
पत्तं पत्तद्वयं वाथ एवमेवं समाचरेत्  ९४
एवं महाद्भुतं प्रोक्तं सामान्याद्भुतकं श्रुणु
अथ वत्त्ये विशेषेण सामान्याद्भुतदर्शनम्  ९५
आदित्योदयकाले तु प्रतिसूर्यस्य दर्शने
परचक्रात् भयं भूमौ ज्वरग्रस्तानरास्तथा  ९६
अश्वत्थसमिधानेन शान्तिहोमञ्च कारयेत्
तदन्ते स्नपनं कुर्यात्पूजयेत्तु विशेषतः  ९७
दत्वा प्रभूतहविषमेवं सप्ताहमाचरेत्
यथाचंद्रोदये काले प्रतिचंद्रस्य दर्शने  ९८
दुर्भित्तञ्जायते लोके महामारी प्रवर्तने

प्रत्यर्कदर्शनस्योक्तमार्गेणैव समाचरेत् ९९
रात्राविंद्रधनुर्दृष्टे वह्निनक्षत्रदर्शने
ग्रहनक्षत्रपाते च अनावृष्टिर्न संशयः १००
ज्वरग्रस्तानरास्सर्वे वाहनानां क्षयं भवेत्
पूजयित्वा शिवं तत्र कुर्यात्स्नपनकं ततः १०१
शान्तिहोमं ततः कृत्वा अश्वत्थसमिधा ततः
एवं कृत्वा तु सप्ताहं शीतकुंभं ततः कुरु १०२
सप्तधा शनिसंभूते नैरन्तर्यक्रमेण तु
अतितृष्णा नराणाञ्च रोगं संभवति ध्रुवम् १०३
एवसाने घृतक्षीरे प्रस्थानान्तु सहस्रकैः
स्नापयेत्परमेशानं पूजयेत्तु विशेषतः १०४
तदन्ते स्नपनं कुर्यात्प्रभूतहविषन्ददेत्
भास्करं वापि सोमं वा सप्ताहे परिवेष्टिते १०५
तन्मण्डलाधिपो राजा युद्धे मरणमाप्नुयात्
भूदानञ्चैव गोदानं हेमं रजतदानकम् १०६
कृत्वा प्रस्थसहस्रेण क्षीरेणैव महेश्वरम्
स्नापयेत्तु विशेषेण तदन्ते स्नपनं कुरु १०७
दिशाहोमं ततः कृत्वा एवं सप्ताहमाचरेत्
लिंगे सुपूजिते पुष्पे प्राप्ते वर्णान्तरे सति १०८
वस्त्रानुपानहन्तद्वत् ग्रामे दूषणमादिशेत्
शिवं संपूज्य विधिवत्प्रभूतहविषन्ददेत् १०९
अतीवशलभोत्पाते उन्मत्ते वाहने तथा
शुकानां मूषिकानाञ्च सर्षसर्पिषिके भवेत् ११०
प्राणीनां नाशसंभूते मनावृष्टिर्न संशयः
प्रासादाग्रं ततः कुर्यात् मंटपञ्चतुरश्रकम् १११
दशद्वादशहस्तं वा दर्पणोदरसन्निभम्

स्तंभैष्षोडशभिर्युक्तं सर्वालंकारसंयुतम् ११२
हस्तद्वयप्रमाणेन वृत्तकुंडन्तु मद्धयमे
मेखला त्रयसंयुक्तमेकैकन्तु षडंगुलम् ११३
नाभियोनिसमायुक्तं कारयेद्देशिकोत्तमः
प्रासादे च सभास्थाने गोपुरे मंटपे ततः ११४
परिवारालये चैव मधुनीडे समुद्भवे
ग्रामस्य नाशनञ्चैव नृपतेर्मरणं ध्रुवम् ११५
व्यपोह्य मधुनीडन्तु प्रोक्षयेत् शुद्धवारिणा
शिवं संपूज्य विधिवद्दिशाहोमञ्च कारयेत् ११६
मध्वाज्य पयसा धीमान्स्नापयेद्देवमादरात्
समिद्भिर्निंबसंभूतैश्शान्तिहोमञ्च कारयेत् ११७
तदन्ते स्नपनं कुर्यात् एवं सप्ताहमाचरेत्
उत्सवं कारयेदन्ते पञ्चाहं वा त्र्यहन्तु वा ११८
अनावृष्टिसमुत्पन्ने गोनाशं सस्य नाशनम्
समिधा खादिरेणैव शान्तिहोमञ्च कारयेत् ११९
क्षीराभिषेचनं कृत्वा तदन्ते स्नपनं भवेत्
कुर्यादेवन्तु सप्ताहं शीतकुंभं ततः कुरु १२०
अतिवृष्टिसमुद्भूते दुर्भिक्षं भवति ध्रुवम्
मधुप्रस्थसहस्रैश्च घृतप्रस्थसहस्रकैः १२१
स्थापयेत्परमेशानं तदन्ते स्नपनं महत्
आलोढय रजनीं पश्चात्कर्पूरेण विमिश्रितम् १२२
षडंगुलप्रमाणेन वेष्टयेल्लिंगपीठिकाम्
कनिष्ठांगुलिनाहं वै कर्पूरेण विवर्तितम् १२३
गोघृतेन समायुक्तं वेदांगुलिप्रमाणतः
सहस्रं वा तदर्द्धं वा दीपान्यारोपयेत्क्रमात् १२४
मुद्गभिन्नसमायुक्तं प्रभूतहविषन्ददेत्

शान्तिहोमं ततः कृत्वा पलाशसमिधा तथा १२५
विशेषात्पूजनं कुर्यादेवं च त्र्यहमाचरेत्
युद्धोद्योगे नृपस्यैव स्वगृहं वा द्रुमन्तु वा १२६
पतिते कारणात् भूमौ प्रधानमहिषीवरा
प्रधानाश्वं गजं वापि मरणं यत्र संभवः १२७
नृपतेर्मरणञ्चास्त्रसिद्धिर्भवति तद्ध्रुवम्
तत्प्रयाणन्निवार्यात्र दानं कृत्वा विशेषतः १२८
पूजयित्वा महादेवं प्रकुर्यात्स्नपनं महत्
महाहविन्ततः कृत्वा वास्तुदेवान्प्रपूजयेत् १२९
देवानामालये वाथ नृपस्यैव गृहे तथा
विद्याभियोगशालायां सभास्थाने च चत्वरे १३०
मठे तटाकतीरे च रत्थ्यांकूपस्य तीरके
प्रतिक्रिया च कर्तव्या रक्तकन्यासमुद्भवे १३१
देवानामालये जाते राजामरणमाप्नुयात्
सञ्जाते राजभवनेनद्राष्ट्रस्यैव नाशनम् १३२
विद्याभियोगशालायां रक्तकन्यासमुद्भवे
तदा मुञ्चति तत् ग्रामं वाग्देवता प्रजापते १३३
सभास्थाने समुत्पन्ने ग्रामनाशं न संशयः
चत्वरे च समुत्पन्ने प्राणिनां नाशनं भवेत् १३४
मठे चैव समुत्पन्ने ग्रामदूषणमादिशेत्
तटाकतीरे सञ्जाते तदा मुञ्चति पद्मतः १३५
रत्थ्या समुद्भवे स्त्रीणां बालानां नाशनं भवेत्
कूपतीरे तु सञ्जाते दुःखार्ताः ग्रामवासिनः १३६
तत्प्रदेशं खनित्वा तु पूरयेच्छुद्धवालुकैः
पुण्याहं वाचयित्वा तु ब्राह्मणान्तत्र भोजयेत् १३७
पञ्चगव्येन संप्रोक्ष्य पवमानमुदीरयन्

शान्तिहोमन्ततः कृत्वा पलाशसमिधा ततः  १३८
तदन्ते स्नपनं कुर्यादेवं सप्ताहमाचरेत्
गोमायूपिंगलीगृध्रलूकाश्चैवाथ वायसः  १३९
आलयान्तः प्रविष्टे च नृपवेश्मान्तरेऽथ वा
बालानां स्त्रीगणानाञ्च नाशनञ्च समादिशेत्  १४०
शीतकुंभं ततः कृत्वा शान्तिहोमञ्च कारयेत्
ब्राह्मणान्भोजयित्वा तु तदन्ते स्नपनं कुरु  १४१
देवालयोपरिष्टात्तु नृपस्य भवनोपरि
श्वारोहे तत्र रुदिते राजामरणमाप्नुयात्  १४२
तं हत्वात्र विसृज्याथ पुरायाहं वाचयेद्बुधः
अश्वत्थसमिधा चैव शान्तिहोमञ्च कारयेत्  १४३
ब्रांहणान्भोजयेत्तत्र कुर्यात्तु स्नपनं महत्
तदन्ते चोत्सवं कुर्यात् वास्तुदेवान्प्रपूजयेत्  १४४
लिंगे च प्रतिमे चैव खद्योतारोहणे सति
नृणाञ्चैव तु सर्वेषां रोगवृद्धिर्ध्रुवं भवेत्  १४५
तं प्रहत्वाथ सद्योऽत्र तद्देवान्स्नापयेत्ततः
पूर्वाया समिधा चैव शान्तिहोमञ्च कारयेत्  १४६
स्नपनन्तु ततः कुर्यात् महाहविर्निवेदयेत्
लोके पताककेतुभ्यां पतने गूढचारिणि  १४७
नानारूपाणि चाश्रित्य पतते केचिदत्र तु
शलभस्योक्तमार्गेण प्रायश्चित्तं समारभेत्  १४८
लिंगमूलादिनिबिडे जंत्वारोहणके सति
राष्ट्रक्षोभन्तु दुर्भिक्षं जायते नात्र संशयः  १४९
पूजयेद्देवदेवेशमष्टबंधन्तु कारयेत्
शान्तिहोमन्ततः कृत्वा समिधा खादिरेण तु  १५०
शीतकुंभं ततः कृत्वा प्रभूतहविषन्ददेत्

व्यतरिक्तक्रिया कार्या शान्तिहोमेन शाम्यति १५१
आदिशैवेन कर्तव्या न चान्यैश्च विशेषतः
अन्यैश्चैव कृता चेत्तु निष्फलत्वं भवेत्तदा १५२
आचार्यं पूजयेत्तत्र क्रियां प्रतिक्रियां प्रति
वस्त्रांगुलीयकैश्चैव गोभूमिधनधान्यकैः १५३
अधमादशनिष्का स्याद्विगुणा मद्ध्यमा भवेत्
त्रिगुणा चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा १५४
यागोपयोगद्रव्याणि देशिकाय प्रदापयेत् १५५

इति अद्भुतशान्तिविधिपटलः

इति प्रायश्चित्तविधिश्चतुश्चत्वारिंशदुत्तरशततमः

## शिवदीक्षाविधिपटलप्रारंभः

अतः परं प्रवक्ष्यामि शिवदीक्षाविधिक्रमम्
नराणां मोक्षसिद्ध्यर्थं सर्वपापहरं परम् १
सर्वरोगविनाशार्थं धनधान्नच समृद्धिदम्
शुद्धश्शिवद्विजैर्मुख्यैराचार्यस्य प्रकीर्तितम् २
अखलं खलमित्युक्तं शैवमेवेति चोच्यते
अखलं ऋषिगर्भं स्यात्खलं वै शिवगर्हितम् ३
भिक्षाटनस्य तत्काले खलञ्च शिवगर्हितम्
तत्काले नारिगर्भा च रुद्रस्य गणिका भवेत् ४
अखिलं गर्भतो वापि बोधान्ये गर्भसंज्ञिकम्
श्रेष्ठे खलञ्चैव अथवा च खलस्तथा ५
ग्रामविप्रं समुद्धृत्य परस्य कुलमेव च
पञ्चैते तु प्रकर्तव्यं भूतमेवेति चोच्यते ६
विप्रो नृपन्तु वैश्यं शूद्रजातिस्तु दीक्षयेत्
एते चतुर्विधे जाते अखलीञ्च परीक्षयेत् ७

खिलो च क्रिया द्वे च खलञ्चैवोपदर्शिनः
अन्येषाञ्चैव कर्तव्यं देशिकं सर्वतोमुखम् ८
तिथिवारेषु नक्षत्रे सुमुहूर्ते सुलग्नके
देवालये मठे चैव गुरुशिष्यगृहेस्तथा ९
दीक्षास्नानेषु कर्तव्यं मण्डपन्तु प्रकल्पयेत्
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव च १०
नवाग्निञ्चैव पञ्चाग्निं एकाग्निं वा प्रकल्पयेत्
कर्तव्यमग्निदेशे तु सुप्रमाणमिति स्मृतम् ११
द्विहस्तं वेदिविस्तारं एवमेवन्तु शास्त्रवत्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १२
दर्भमालाभिरावेष्ट्य मुक्तासृक् दामलम्बितम्
प्रोक्षयेत् पञ्चगव्येन पुण्याहं वाचयेत्ततः १३
प्रोक्षयेत् गन्धतोयेन नारा च मुद्रया सह
शालिपिष्टमयन्तत्र पदविन्यासमुच्यते १४
षट्त्रिंशत्सूत्रविन्यासं पूर्वाग्रचोत्तराग्रकम्
नन्दनन्दपदमध्ये तु पद्माकारं समालिखेत् १५
तत् बाह्ये पदसंयुक्तं पदमेकं परित्यजेत्
चत्वारात्मतारूपं पञ्चपञ्चदन्त्यजेत् १६
लता पार्श्वद्वयञ्चैव लिङ्गञ्चैव चतुर्दिशि
मध्ये श्वेतमयं पद्मं श्यामवह्निविधिः क्रमात् १७
द्वारेषु संकल्प्य नानावर्णविचित्रके
हेमकृष्णासुरक्तञ्च सितवर्णमयन्तथा १८
लिङ्गवर्णं प्रकुर्वीत विचित्रेण समाद्विधि
अर्धलिङ्गेषु चाष्टेषु वर्णभेदं विधीयते १९
प्रोक्षयेत् कुशतोयेन शंखसन्निभमुद्रया
मण्डलं तत्समानन्तु लिङ्गाम्बुजं विधीयते २०

कोणे कोणे विधिप्रोक्तं श्वेताब्जन्तु विधीयते
मण्डपशुद्धिविन्यासं वास्तुहोमं विनिक्षिपेत् २१
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः
पूर्वोक्तं विधिवत्स्थाप्य घटेषु कलशेषु च २२
पूर्वादिपर्यन्तद्वारणतोरणकल्पयेत्
मण्डपस्यैशदिक्भागे मण्डपं चतुरश्रकम् २३
दर्भं पुष्पं परिस्तीर्य पद्ममध्येषु विन्यसेत्
शिवकुम्भेषु वर्धन्यां स्थापयेत्पद्ममध्यमे २४
पाद्यमाचमनचार्घ्यं पञ्चगव्यं चतुर्दिशि
विद्याचाष्टन्तु संपूज्य स्थापयित्वानुक्रमात् २५
देशिको मूर्त्तिवैस्सार्धं स्नात्वा वस्त्रेण वेष्टयेत्
आत्मार्थं विधिमभ्यर्च्य विशेषं कल्पयेत्ततः २६
तर्पणान्ते विधिप्रोक्तं सर्वालङ्कारसंयुतम्
पञ्चाङ्गभूषणोपेतं उत्तर्येण तु वस्त्रकम् २७
प्रविशेत् मण्डपस्यैव पुण्याहं वाचयेत्ततः
पश्चात्स्थापकं प्रकर्तव्यं निरीक्षणांकुरमेव हि २८
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
भूतशुद्धिन्तु विन्यासं करशुद्धिन्तु विन्यसेत् २९
अङ्गमक्षरविन्यासं पूजयेत् मण्डपं हृदा
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिं चतुर्दिशि ३०
भूत्याबलिस्तु चारोग्यं शान्तिं चोत्तरणादिषु
नन्दिकालेन्द्रतथा गङ्गा यमुने चैव पूजयेत् ३१
पुष्पोदकं कुशोदकञ्च गन्धादकन्तु बिल्वकम्
विदिक्षु स्थापयेत्तत्र क्रमेणैव तु देशिकः ३२
शिवकुंभे शिवं पज्य वर्धन्यान्तु मनोन्मनीम्
इन्द्राग्नियोस्तु च तन्मध्ये सौरत्येग्रियाय च ३३

अग्निकुम्भे तथाचाग्नि दण्डिमुण्डन्तु दक्षिणे
मूर्त्तौ तु मयमुत्युक्तं पूजयेत्सह मेदके ३४
वायुकुम्भं तथा वायु ज्येष्ठाया वृषभं स्मृतम्
उत्तरे तु यजेत् सद्यं सोमं वै वाह्यमेव च ३५
ऐशे तु ब्रह्मविष्णुश्च रुद्रमेवं प्रकल्पितम्
धूपदीपं हृदा हत्वा गन्धपुष्पादिभिर्यजेत् ३६
स्वनामादेव संपूज्य नमोन्तमुच्चरन् क्रमात्
स्वाहान्तेन हृदा प्रोक्तं निवेद्यादि निवेदयेत् ३७
शिवकुम्भे शिवं पूज्य वर्धन्यान्तु मनोन्मनीम्
विद्येश्वराष्टक्रमात्पूज्य स्वनामेनैव देशिकः ३८
मण्डलान् सर्वदैवत्यं पूजयेत् गन्धपुष्पकैः
ईशानादिसद्यपर्यन्तं लिङ्गमेतत्प्रकीर्तितम् ३९
विधैशाष्टसु संपूज्य मध्यलिङ्गेषु चैव हि
लतञ्च पिष्टयञ्चैव चतुष्पंकजमेव हि ४०
वामादिशक्तयश्चाष्टौ पूजयेत् गन्धपुष्पकैः
लिङ्गे लिङ्गे तथा कर्णे वससो नागमष्टकम् ४१
विदिर्गृहे चतुर्दिक्षु चतुर्वेदं प्रपूजयेत्
मण्ठपात्पूजयेत्तत्र विद्यादेहात् सुदृढं सुधीः ४२
धूपदीपं हृदा दत्वा मुद्रया शंखसन्निधौ
साक्षतन्तु मण्डले कर्म कलशे रक्तकूर्चकम् ४३
आप्लाव्य प्लवमाप्नोति जयेन्मण्डपं हृदम्
यावत्संपूज्य विधिवत् मन्त्रमेतन्नमोन्तकम् ४४
पूजाकर्मान्ते शिष्यमाकृष स्नानवस्त्रेण पोह्यकम्
प्रविशेत् मण्डपद्वारे पादप्रक्षालनं कुरु ४५
भस्माग्रे लेपनञ्चाङ्गं मण्डपन्तु प्रवेशयेत्
होमकर्मं समाश्रित्य देशिको मूर्तिवैस्सह ४६

आज्यस्थालीं चरुं गृह्य कुण्डं दक्षिणस्थितम्
गुरोश्चाभिमुखोग्निं विधिना कारयेत् बुधः ४७
गुरोर्निरीक्षणे शिष्यः ज्ञानदृष्ट्यावलोकयेत्
उष्णीषं चोत्तरीयञ्च परिचारकमाचरेत् ४८
तत् हस्ते कुंभवर्धन्योः मण्डपन्तु प्रदक्षिणम्
स्थण्डिलोपरि संस्थित्वा होमकर्मसमाचरेत् ४९
वागीश्वरी वागीशं पूजयेत् कुण्डमध्यमे
अन्तः दिक्पालमित्युक्तं कुण्डेनैव तु पूजयेत् ५०
समिधाज्य चरुं लाजान् सर्षपास्तु तिलन्तथा
वेणुमुद्गं तथामाषनिष्पावं शिम्बमाढकम् ५१
समिधं मूलमन्त्रेण आज्यं गायत्रिमन्त्रकम्
अघोरेण चरुं हुत्वा लाजं वामेन हूयते ५२
सर्षपं कवचेनैव सक्तुकं पुरुषेण तु
तिलमीशानमन्त्रेण वर्णुकं सद्यमन्त्रकम् ५३
मुद्गन्तु शिरसा मन्त्रं मासञ्चैव शिखा भवेत्
शिम्बं वै हृदयेनैव आढकं नेत्रमुच्चरन् ५४
निष्पावन्तु हुनेत्पञ्च त्र्यम्बकमथाचरेत्
शतमर्धं तदर्धं वा जुहुयात्तत्क्रमशः पुनः ५५
धूपं दीपं हृदा दत्वा कुण्डस्योर्ध्वे बलिं ददेत्
चक्रादिलोकपालांश्च स्वनामेनैव देशिकः ५६
कुण्डं दक्षिणपार्श्वे तु मण्डलद्वितयेऽपि च
अन्तर्बहिः बलिं कुर्यात् पूर्वोक्तविधानतः ५७
धूपं समादाय चुबुकोदकमादिशेत्
शिष्यान् तिष्ठन्ति तत्काले गोमये मण्डलासिते ५८
प्रोक्षयेदस्त्रतोयेन धूपं दीपं ददेत् क्रमात्
मलमायादिपाशानां विशिष्टं क्रियते मया ५९

ज्ञानञ्च अन्यते शिष्यां कारयेत् विधिहोमयेत्
पशश्चेदप्रकर्तव्यं हुंफट् पाशुपतस्त्रकम्  ६०
आहुतित्रयं दद्यात् गायत्रीणाञ्च होमयेत्
देशिकेन प्रकर्तव्यं शिष्यापाङ्गं प्रकीर्तितम्  ६१
बीजमुख्यं समन्त्रेण स्पर्शाहुतिं विभावयेत्
धूपदीपं हृदा दत्वा शिष्यं हृदयसञ्चयम्  ६२
त्तालयेत् शिष्यहस्तन्तु स्थण्डिलं संपूरितम्
पादाङ्गुष्ठशिरोसृष्टि शिष्यं सममुखमेव हि  ६३
त्र्यम्बकेन मन्त्रं सञ्छिष्यं कौतुकबन्धनम्
धूपदीपं हृदा दत्वा ततो भस्मञ्च दापयेत्  ६४
------ श्चतुर्भागमेकभागं निवेद्यकम्
एकभागं बलिप्रोक्तं गुरवे त्वेकभागिकम्  ६५
एकभागे तु शिष्याय प्राशयेत्सहमेव तु
गुरोः मण्डपशायञ्च गुरुपापैः शिष्यवत्  ६६
शयने चैव तत्कार्यं शुभकर्मं विलेप्य च
दुःस्वप्नेशयवर्तञ्च प्रायश्चित्ताहुतिमयथा  ६७
पञ्चाहुतदिवा पञ्च ब्रह्मषडङ्गवत्
द्वितीये दिवसे चैव गुरुशिष्य विधीयते  ६८
शमीकेतु सकृत् चूर्णं मधूकं कुशभस्मना
जले च लेपयेद्देहं स्नापयेत् शिष्यदेहिकम्  ६९
स्नाप्य शुद्धसर्वाङ्गं गुह्ये स्फिक् द्वयशुद्धये
तर्पयेत् विधिवत्पूर्वं विशेषेण तर्पणमेव हि  ७०
मण्डपा परे द्वापि पादप्रत्तालनं यजेत्
प्रविशेत् मण्डपे मध्ये उद्धूल्यं भस्मनो गुरुः  ७१
पूजयेत् पूर्वमात्मार्थं विशेषं पूजयेत् शिवम्
हविर्निवेद्य ताम्बूलं नित्यनैमित्तिकन्तथा  ७२

पूजान्ते तु जपेन्मूलं पूजयेत्पञ्चपञ्चकम्
ततो वै रथसर्वांश्च पादप्रक्षालनं कुरु ७३
भस्मानुलेपयेत् स्वाङ्गैः प्रविशेत् मण्डपालये
मण्डले स्थले चैव मण्डलादीन् प्रपूजयेत ७४
आचार्यो मूर्त्तिवैस्सार्धं सर्वगन्धानुलेपयेत्
पश्चाग्रे भूषणैर्युक्तं गन्धमाल्यैः विभूषणम् ७५
नववस्त्रपरीधानं उत्तर्यं तथैव च
प्रोक्षयेत् कुंभतोयेन पुनः पुण्याहं वाचयेत् ७६
अग्निकार्योक्तमार्गेण देशिको मूर्त्तिवैस्सह
समिधाज्यचरुं लाजान् सर्षपांश्च यवांस्तिलान् ७७
निष्पावं शिम्बमेवोक्तं सकृच्च वेणुमेव च
गुलं मधुं पूपञ्च कन्दञ्च कदलीफलम् ७८
अपामार्गन्तु नीवारं कारयेत्तु ततो हुनेत्
पलाशवटमश्वत्थं शमीमायूरखादिरम् ७९
प्लक्षोदुम्बरबिल्वञ्च विंशतिर्हूयते
सिमिमूलन्तु हुत्वा तु आज्यं तत्पुरुषेण तु ८०
गायत्रिकं चरुं हुत्वा लाजाघोरन्तु रूपिणम्
माषं वै वामदेवन्तु कदलीनां सममेव च ८१
यवमीशानमन्त्रेण हृदयेषु च सर्षपम्
शिरसा तिलमाह्ना शिखामन्त्रेण मुद्गकम् ८२
गुलमस्त्रेण चाहुत्या मधुञ्चैव सदा शिवः
ब्रह्मज्ञानमन्त्रेण पूर्वपं पञ्चहुतेतः ८३
शुद्धं शुध्यति मन्त्रेण कदलीफलमेव च
वर्ममन्त्रमपामार्गं नीवारं सोममन्त्रकम् ८४
द्रव्य प्रयश्चापि होमयेत्तु शताहुतिः
शिष्यदेहं कर्तव्यं सोमस्यापि पदैरपि ८५

धूपदीपं तदा तस्मै भस्मना दापयेत्ततः
शिवकुम्भं ततो धृत्य शिष्यश्च स्थापयेत् भुवि  ८६

इति पूर्वकारणागमे प्रतिष्ठातन्त्रे संपूर्णम्

Reference:
*Karaṇāgama*, vol. 1: Pūrvakaraṇāgama, Mayilai Alagappa Mudaliyar (publisher): Chennai, 1921.

# कारणागम

शिवमयम्

उत्तरकारणागमे प्रतिष्ठातन्त्रे

तन्त्रावतारपटलप्रारंभः

अज्ञानतिमिरांधस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः १
तीर्थसंग्रहणे काले पर्वतस्यापि संभवे
तस्मिन्काले तु तीर्थं स्यात्सर्वसंपद्विवर्द्धते २
श्रीकण्ठं देवदेवेशं मन्त्रसिह्मासनेश्वरम्
प्रणम्यपादकमलौ स्कन्दो वचनमब्रवीत् १
नीलकण्ठसुरेशानदेवदेवेश्वरप्रभो
असंख्यासर्वशास्त्रेषु संक्षेपं वदमे प्रभो २
ईश्वर उवाच
योगिनां ध्यानपूजार्थं ज्ञानानां मुक्तिकारणम्
सर्वलोकहितं पुण्यं सर्वानुग्रहकारणम् ३
सर्वैश्वर्याभिवृद्ध्यर्थं पुत्रपौत्रविवृद्धिदम्
कारणाख्ये महातन्त्रे वक्ष्येऽहन्तु षडानन ४
आदौ तं कारणं तन्त्रं लोकेशस्योदितं पुरा
कोटिग्रन्धसमायुक्तं कर्षणादर्चनान्तकम् ५
मूलभेदोपभेदैश्च वक्ष्ये श्रुणु षडानन
कारणं कामिकं चिन्त्यं अजितं योगजन्तथा ६
सहस्त्रं सूक्ष्मदीप्तौ च सुप्रभेदोंशुमान्भवेत्
निश्वासं विजयञ्चैव स्वायंभुवमथानलम् ७
विमलं मकुटञ्चैव वीरञ्च रौरवं तथा
चंद्रज्ञानञ्च बिंबञ्च लळितं प्रोद्गीतन्तथा ८
सन्तानं सिद्धशार्वोक्तं पारमैश्वर्यमुच्यते
वातुळं किरणञ्चैव त्वष्टाविंशतिसंख्यया ९
पूर्वे तेषु दशप्रोक्तं शिवभेदेति संज्ञितम्
तथापराष्टदशकं रुद्रभेदमिति स्मृतम् १०
महेशात् शिवभेदानां श्रोतारस्तु त्रयं स्त्रिया

रुद्रभेदो महेशाय श्रोतारौ द्विद्विको मतौ ११
महेशात्प्रणवः प्राप्तः प्रणवात्त्रिकलस्तथा
त्रिकलाच्च हरः प्राप्तं श्रोतारः कामिकस्य तु १२
सादाख्य भस्मसंप्राप्ते भस्मानञ्च विभुस्तथा
योगमन्त्रस्य विख्यातं सुदीप्ता गोपतिस्मृतः १३
गोपतेरंबिकाख्याता चिन्त्याख्यस्य प्रकीर्तिताः
कारणात् शर्वरुद्रस्तु शर्वरुद्रात्प्रजापतिः १४
कारणस्य तु विख्याता सुशिर्वच्यौ शिवस्मृतः
तच्छिवादच्युतः प्राप्तः स्वजिताख्यस्य कीर्तितः १५
कालभीमस्ततः प्राप्तो भीमाद्धर्म इति स्मृतः
प्रप्तात्सहस्रतन्त्रन्तु उग्राख्यस्तंत्र संज्ञकम् १६
उग्रात्प्राप्तो रवीतंत्रं अंशुमान्परिकीर्तितम्
विघ्नप्राप्ते दशैकं च विघ्नेशाच्च शिवस्मृतम् १७
प्राप्तास्ते सुप्रभेदन्तु शिवभेदाः प्रकीर्तिताः
अनाद्यः परमेशस्तु विजयस्य प्रकीर्तितः १८
दशार्णात् गिरिजः प्राप्तो निश्वासस्य फलं भवेत्
पद्मोद्भवस्तु निधनात्स्वायंभुवविशेषतः १९
अग्निव्योमार्चसंभूतिराग्नेयस्य प्रकीर्तितम्
कश्चित्प्रजापतिः प्राप्तो वीरतन्त्रं प्रकीर्तितम् २०
नन्दीशो ब्रंहणेशाश्च रौरवं परिकीर्तितम्
शिवाख्यस्य महादेवमकुटं कीर्तितं भवेत् २१
सर्वात्मदेवान्संप्राप्तो विमलं वीरभद्रकम्
चंद्रभासामनन्दश्च संप्राप्तश्चेत् बृहस्पतिः २२
मुखबिंबं प्रशान्तश्च संप्राप्ते दधिच स्मृतः
प्रोद्गीतं शूलिना प्राप्तस्त्वचाख्यो मुनिसत्तमः २३
आलया वलितः प्राप्तो रुद्रभैरव एव च
बिन्दोश्चण्डेश्वरः प्राप्तो साद्ध्याख्यन्तंत्रकस्य तु २४
स्नानं निशिपिष्टाच्च संप्राप्तस्त्वं सवायसः
शर्वोक्तं सोमदेवाच्च नृसिंहः प्राप्तवांस्तथा २५

श्रीदेवास्तूशनप्रोक्ता पारमेश्वरमेव च
देवोपितुश्च किरणं संवर्तः प्राप्तवांस्तथा २६
शिवात्प्राप्तो महाकाळो वातुळं तंत्रमुत्तमम्
रुद्रभेदमिति प्रोक्तं मूलभेदाः प्रकीर्तिताः २७
कामिकन्तु परार्द्धं स्यात् योगजं लक्षसंख्यया
चिन्त्यं शतसहस्त्रञ्च कारणं कोटिसंख्यया २८
अजितं अयुतं प्रोक्तं दीप्तञ्च नियुतं भवेत्
सूक्ष्मञ्च पद्मसंख्या तु सहस्त्रं शंखसंख्यया २९
अंशुमान्पञ्चलक्षञ्च सुप्रभेदं त्रिकोटिकम्
विजयं भानुकोटिञ्च निश्वासं सार्द्धकं भवेत् ३०
कोटित्रयोदशञ्चैव स्वायंभुवयुतं भवेत्
अनलं नियुतं प्रोक्तं वीरं वै अर्बुदाष्टकम् ३१
मकुटं शतसाहस्त्रञ्च त्रिलक्षं विमलं भवेत्
चंद्रज्ञानं त्रिकोटी स्यात् सहस्त्रं बिंबसंयुतम् ३२
त्रिलक्षञ्चैव प्रोद्गीतं लळिताष्टसहस्त्रकम्
सिद्धं वै सार्द्धकोटिः स्यात् विशेषेण प्रकीर्तितम् ३३
सन्तानं षट् सहस्त्रञ्च शार्वोक्तन्तु द्विलक्षकम्
पारमेश्वरतंत्रं स्यात् द्वादशं लक्षमुच्यते ३४
क्रिरणं पञ्चकोटिस्स्यात् शतसहस्त्रन्तु वातुळम्
तंत्राणां कामिकादीनां ग्रंधसंख्याः प्रकीर्तिताः ३५
नारसिह्मञ्च वक्तारं भैरवोत्तरमेव च
कामिकस्य त्रयोभेदा सुधासन्तादितारकौ ३६
वीणाशिखोत्तरञ्चैव आत्मयोगन्तथैव च
योगजस्य तु भेदानि पञ्चधा कीर्तितानि वै ३७
पापनाशं परोद्भूतं सुचिन्त्यममृतान्वितम्
सुभगं वामसंज्ञन्तु चिन्त्यभेदास्तु षड्विधा ३८
महान्तं कारणं तंत्रं पावनं भीमसंहिता
विद्वेषं मारकञ्चैव सप्तधाकारणस्य तु ३९
पार्वती च परोद्भूतं प्रभूतं पद्मसंहिता

अजितस्य चतुर्भेदा अमेयाख्यमतः परम् ४०
असंख्यमब्जमश्वाद्यं आनन्दममितौजसम्
अद्भुतं मानवोद्भूतं अक्षयं दीप्तमेव च ४१
सूक्ष्मस्य सूक्ष्ममेकन्तु अजितं मण्डलन्तथा
प्रमेयाजातिभागञ्च प्रबुधं विबुधन्तथा ४२
हस्तशुद्धमलंकारं बोधं साहस्रको दश
काश्यपं वासवं नीलं लोहितं भूततंत्रकम् ४३
विद्यापुराणमैन्दञ्च आत्मालंकारमेव च
वासिष्ठं गौतमं ब्राह्मं ईशानोत्तरमेव च ४४
प्रकारणं तथा चांशुमानो द्वादशभेदकम्
सुप्रभेदं महाशास्त्रं अभेदमिति कीर्तितम् ४५
कौबेरञ्चाथ विमलं सौम्यञ्चैव तथोद्भवम्
मृत्युनाशमघोरञ्च महाघोरमतः परम् ४६
परमेश्वराच्च विजयं विजयस्याष्टभेदकः
निश्वासोत्तरतंत्रञ्च मनो निश्वासमेव च ४७
निश्वासाख्यं महातंत्रं निश्वासोर्ध्वमुखोदयम्
निश्वासनिधनञ्चैव मंत्रे निश्वासमेव च ४८
निश्वासकारिका चैव निश्वासं घोरमेव च
निश्वासञ्चाष्टधा प्रोक्तं प्रजापतिमतं तथा ४९
पद्मञ्च द्विविधं विद्यात्स्वायंभुवविशेषतः
आग्नेयं व्योमतंत्रन्तु आग्नेयस्य द्विधामतम् ५०
प्रस्तरं फुल्लनयनं प्रबोधं बोधकन्तथा
शकटं मोहविजयं प्रमोहं शकटासिकम् ५१
विले घनं विले भद्रं वीरतंत्रं त्रयोदश
कालाख्यं कलदहनं रौरवं रौरवोत्तरम् ५२
महाकाळमतञ्चांद्रं रौरवे षड्विधं स्मृतम्
मकुटोत्तरञ्च मकुटं मकुटस्य द्विधा स्मृतम् ५३
वृषगुह्यं यथाक्रान्तं वृषभं वृषभोत्तरम्
सुदन्तमिति भेदञ्च रौद्रभेदं तथैव च ५४

आरेवतं सुभद्रञ्च अतिक्रान्तमलंकृतम्
अर्चितं त्वट्टहासञ्च अनन्तं मारणं तथा ५५
भेदा विमलतन्त्रस्य षोडशोपरिकीर्तिताः
एकादशपुराणञ्च स्थाणवाख्या नन्दिकेश्वरम् ५६
स्थिराख्यं शंकरप्रोक्तं श्रीमुखं शिवभक्तकम्
कल्पभेदमिति प्रोक्तं शिवसन्तानमेव च ५७
देव्यामताख्यतंत्रञ्च शिवशेखरमेव च
वारुणञ्चैव वायव्यं चंद्रज्ञानञ्चतुर्विधम् ५८
चतुर्वक्त्रञ्च संस्तोभं प्रतिबिंबमयोगजम्
तुटिनीलञ्च तौटीञ्च अर्द्धालंकारमेव च ५९
तुला वृत्ययमेवञ्च कुट्टिमाख्यलयोगतम्
पट्टशेखरमेवञ्च महाविद्यामहासुरम् ६०
नैर्ऋृती तिथिविख्याञ्च मुखबिंबस्य भेदकम्
पिंगलामृद एवञ्च दंडयौपाशबंधकम् ६१
परागं कवचं कौरं शिवज्ञानं धनुर्धरम्
कालज्ञानञ्च विज्ञानं आयुर्वेदञ्च गन्तकम् ६२
भरतञ्च धनुर्वेदं मानोद्यं सर्वदंष्ट्रकम्
प्रोद्गीताख्यस्य तंत्रस्य भेदं षोडश एव च ६३
लळितोत्तरकौमारं लळिताख्यमतः परम्
लळितस्य त्रयोभेदाः शलाख्यं शक्तिमंडलम् ६४
सारोत्तरञ्च मैशान्यं सिद्धतंत्रं चतुर्विधम्
अमरेशं सुराद्ध्यक्षं लिंगाद्ध्यक्षमसंख्यकम् ६५
अनिलं शांकरं द्वंद्वं सन्ताने सप्तभेदकाः
ईशानं शिवधर्मञ्च शिवधर्मोत्तरं तथा ६६
दिव्य प्रोक्तं कुबेराख्यं शार्वोक्तस्यैह पञ्चकम्
हंसं पद्मञ्च मातंगं सामान्यं यक्षणं तथा ६७
पुष्कलं सुप्रिया योगं सप्तधा परमेश्वरे
गारुडं नैर्ऋृतं नीलं रूक्षं भानुकमेव च ६८
प्रबुद्धं येनकं बुद्धं कालाख्यं किरणेन च

वातुळोत्तरतंत्रञ्च कालज्ञानं पुरोहितम् ६९
श्रेष्ठं सर्वात्मकं शर्वं शुद्धं नित्यमहारमम्
विश्वं विश्वात्मकं तत्वं वातुले द्वादशा स्मृता ७०
मूलभेदोपभेदाश्च समासात्परिकीर्तितम्
त्रिभेदं कामिकं प्रोक्तं योगजे भूतसंख्यया ७१
चिन्त्यभेदं तथा षष्ठं कारणं सप्तमेव च
अजिते वेदसंख्या च दीप्तेन विविधं भवेत् ७२
सूक्ष्मस्य सूक्ष्ममेकन्तु सहस्रे दशभेदकम्
अंशुमान् द्वादशं प्रोक्तं अभेदं सुप्रभेदकम् ७३
विजयस्याष्टभेदन्तु निश्वासे चाष्टभेदकम्
स्वायंभुवञ्च भेदन्तु अनले द्वयमेव च ७४
वीरं त्रयोदशं भेदं रौरवं षष्ठमेव च
मकुटद्वयमेवोक्तं विमलं षोडशन्तथा ७५
चंद्रज्ञानं द्विसप्तन्तु बिंबं वै षोडशन्तथा
प्रोद्गीतं षोडशं प्रोक्तं लळितं तंत्रमेव च ७६
सिद्धतंत्रं चतुर्थन्तु सन्ताने सप्तमं भवेत्
सर्वोक्तं पञ्चधा प्रोक्तं पारमेश्वरसप्तकम् ७७
किरणन्नयनञ्चैव वातुळे द्वादशन्तथा
एतैव चोपभेदानि सप्तमं द्विशतं भवेत् ७८
कामिकाद्युपभेदानि सहस्रगणना भवेत्
द्विशतं सप्तसंख्यानि उपभेदः पृथक्पृथक् ७९
सहस्रसंख्यया ग्रंधं तस्योपरि न षण्मुख
सादाख्येशानने दिव्ये महेशानं पुराश्रया ८०
कामिकाद्यजितान्तञ्च सद्योजातमुखोद्भवम्
दीप्तादिसुप्रभेदान्ता वामदेवमुखे ध्रुवम् ८१
विजयारभ्यवीरान्ताः पञ्चते घोरमूर्तये
रौरवान्तञ्च बिंबान्तं पुं वक्त्रे च समुद्भवम् ८२
प्रोद्गीताद्यष्टतंत्राणि ईशं नाननसंभवम्
यथोक्तेन च तंत्रेण कुरुते दीक्षया तथा ८३

कर्षणाद्यर्चनान्तञ्च तत्तंत्रेण शिवस्य ह
कुर्यात्सर्वं तदुद्दिष्टं अनुक्तञ्चेत्तथान्यके ८४
पाशुपतानि तंत्राणि सिद्धान्तानि विदुर्बुधाः
शैवतंत्राधमे प्रोक्ता शैवं पाशुपतानि च ८५
वातुळन्तु चतुर्भेदा सोमसिद्धान्तकं तथा
तेषां संकरदोषाणि संकरे कर्तृनाशनम् ८६
तेषु तेषु प्रकर्तव्यं न तु संकरदोषभाक्
यस्सिद्धान्ताख्य तंत्रेण दीक्षितश्चादिशैवकः ८७
शैवेषु आदिशैवश्च तथा पाशुपतादिषु
यजनं स्थापनं कुर्यात् सिद्धान्तोक्तविधानतः ८८
तत्सौम्यफलदत्वानि न कुर्यादर्चनादिके
शैवं सौम्यमिति प्रोक्तमिमे रौद्रं तथापि च ८९
सौम्येन रौद्रधर्माणि सौम्यरौद्रेण वर्जितम्
अष्टाविंशति तंत्राश्च मंत्रदेहा कृतिर्भवेत् ९०
मकुटात् पादपर्यन्तं कामिकाद्य नवान्तकम्
मंत्रावतारभेदानि श्रुणुष्व शरवणोद्भव ९१

इत्युत्तरकारणागमे प्रतिष्ठातन्त्रे तन्त्रावतारविधिपटलः प्रथमः

## मन्त्रावतारविधिपटलप्रारंभः

मन्त्रावतारं यद्वक्ष्ये आदौ पञ्चाक्षरं स्मृतम्
पञ्चसादाख्य रूपाणि पराशक्त्यादिरूपकम् १
शिकारन्तु शिवाकारं वकारं शक्तिसंज्ञितम्
यकारं मूर्तिरूपाणि नकारं निष्कळन्तथा २
मकारं कान्तभेदानि पृथिव्यादीनि वर्णकम्
पञ्चवक्त्रेषु नामानि ईशानादीनि मन्त्रतः ३
हृच्छिरो शिखया चैव कवचन्नेत्रमस्तके
प्रत्येकमुद्भवं कान्तं शुक्लकुंकुमसन्निभम् ४
कृष्णश्वेतप्रभं विद्यात् वामं शुक्लप्रभाविदुः
हृदयं सूर्यसंकाशं तप्तकाञ्च निभं शिरः ५

शिखां सिन्दूरसदृशां कवचं मेघसन्निभम्
नेत्रं रक्तप्रभं विद्यात् अस्त्रं विद्युत्प्रभं तथा ६
सादाख्य तत्वं शुक्लाभं नवोनवपदं भवेत्
मद्ध्ये सदाशिवं प्रोक्तं केष्टशीति चतुर्दशम् ७
द्विपादञ्च तनूरेकं त्रिणेत्रं शुक्लवर्णकम्
जटामकुटसंयुक्तं अभयं वरदं तथा ८
पाशांकुशधरञ्चैव शुद्धज्योतिस्वरूपकम्
एवं प्रणवमित्युक्तं व्यक्ता व्यक्तमिहोच्यते ९
त्रिणेत्रं चतुर्भुजं शान्तं शूलासुज्ञानमुद्रिकाम्
वरदं धूर्जटिन्नीलं व्योमव्यापि नमीश्वरम् १०
विकुण्डलं भाण्डशान्तं व्याळयज्ञोपवीतिनम्
अंकाक्षमभयन्नागं व्योमरूपाय शंभवे ११
श्वेताभ्रं रक्तवस्त्राभं खट्वांगमभयं तथा
किरीटमकटं शान्तं सर्वव्याळनमीश्वरम् १२
बद्धवेणिकिरीटञ्च ऊरुहस्ताभयन्तथा
दुकूलवसनं धृत्वा शिवाय पदमूर्तये १३
भीमाक्षं श्मश्रुकेशं च कपालं शूलमेव च
किंकिणी मालयाभूष्यं अनन्ताय नमाम्यहम् १४
नीलाभं नीलवस्त्राङ्गं योगपट्टिकसंयुतम्
कपालं चण्डहस्ताभ्यां अनाधाय नमोनमः १५
त्रिणेत्रं मुद्गरं भीमं अभयं वरदं मणिम्
भीमनादं कराळास्यं अनाश्रयशिवं स्मृतम् १६
नीलकंधरभीमांगं उग्रं दंष्ट्राभयं करम्
ज्ञानमुद्राक्षमालां च ध्रुवाय परहेतवे १७
कुंकुमाभं द्विनेत्रं च द्विपादं जटिलन्तथा
खड्गखेटं च नागं च वरदं शाश्वताय च १८
द्विजानुसमयोगाभ्यां जान्वौ लंबकरौ तथा
कृष्णामृगं च टंकं च योगपीठं च संस्थितम् १९
शार्ङ्गशरं तोमरं च शूलविद्या त्रिणेत्रकम्

नागाभरणसंयुक्तं नमामीति च योगिने २०
शान्तं कुण्डलकर्णौ च वृश्चिका भरणोज्वलम्
गण्डिकावरदञ्चैव वन्दे द्ध्यानहराय च २१
भस्मोद्धूळितसर्वाङ्गं जटामण्डलमण्डितम्
अक्षमाला मूलखड्गं विद्युन्नमश्शिवाय च २२
गजचर्म च सुश्लेष्य शयनं लंबितं पदम्
नीलोत्पलं शूलहस्तं सर्वप्रवरमूर्तये २३
पद्मासनस्थं नीलाभं उग्रदंष्ट्राकराळिनम्
खट्वाङ्गं लंबहस्तञ्च शिवाय प्रणमाम्यहम् २४
स्फटिकाभं त्रिणेत्रञ्च जटाखण्डेन्दु मण्डितम्
शूलाभयं विशालाक्षं वन्दे मूर्द्धानमीशजम् २५
पीताभं पीतवस्त्राभं कुण्डला भरणोज्वलम्
अभयं चाक्षसूत्रञ्च वन्दे तत्पुरुषाननम् २६
ज्वालाकेशं त्रिणेत्रञ्च विकृताननहुंकृतिम्
कपालं शूलसंयुक्तं अघोरहृदयं तथा २७
रक्ताभं जटिलं नेत्रं वरदं चांकुशन्तथा
गङ्गाखण्डेन्दु संयुक्तं वामदेवञ्च गुह्यकम् २८
गवांक्षीरसमप्रख्य कह्लारमालयावृतम्
नागपाशन्तथा चैव सद्योजातादिमूर्तये २९
प्रवाळकान्तिसप्रख्यं मुक्तामणिविभूषितम्
घण्टां वज्रधरं वन्दे ओन्नमः परमात्मने ३०
अञ्जनप्रख्यसंकाशं शूलं शंखसुधार्यकम्
व्याघ्रचर्मोत्तरीयञ्च गुह्यातिगुह्यकाय च ३१
श्वेताभं नीलवस्त्राभं सर्वाभरणभूषितम्
अंककृष्णमृगञ्चैव गोपते प्रणमाम्यहम् ३२
चतुर्भुजसमायुक्तं वारिराशिसमप्रभम्
मुक्ताभरणसंयुक्तं निधनायावधे स्मरेत् ३३
सूर्यकोटिसमप्रख्यं जटाखण्डेन्दुमण्डितम्
पद्माक्षमभयञ्चैव सर्वविद्याधिपाय च ३४

जपापुष्पसमप्रख्यं भस्मोद्धूळितविग्रहम्
असिखेटञ्च मुसलं योगाधिकृतये नमः ३५
स्फटिकाभं त्रिणेत्रञ्च चर्मांबरधरं शिवम्
अंजली पद्महस्ताभ्यां ज्योतीरूपवराय च ३६
ज्वलिताग्निसमप्रख्यं अग्निनागाभयांकुशम्
पादे वामकपुष्यञ्च परमेशवराय च ३७
त्रिणेत्रञ्च चतुर्हस्तं काळमेघसमप्रभम्
शक्तिवक्त्रवराभीतिं व्योमात् व्योमं स्मराम्यहम् ३८
षड्भुजं राजसोदण्डं नीलोत्पलसमप्रभम्
राजसंनेत्रयुग्मञ्च व्यापिन्व्यापिन्महेश्वरम् ३९
वेणींजटां त्रिणेत्रञ्च भुजत्रयसमन्वितम्
प्रसार्यशूलहस्ताभ्यां वन्दे रूपिन्नरूपिनम् ४०
एकवक्त्रं त्रिणेत्रञ्च तप्तकाञ्च न सन्निभम्
गदाहस्ताभयं वन्दे प्रथमप्रथमं तथा ४१
विद्युत्सन्निभसंकाशं चक्राब्जं गण्डिकाभयम्
पद्मासनस्थं खण्डेन्दु तेजस्तेजो नमाम्यहम् ४२
जटामकुटशोभाढ्यं नवकुण्डलमण्डितम्
चतुर्भुजसमायुक्तं ज्योतिर्ज्योतिर्नमाम्यहम् ४३
अरूपविधृतं भूष्यं खण्डमालाधरं शिवम्
भृकुटीवदनं भीमं खण्डवज्रधरं तथा ४४
अनग्ने काञ्चनाभासं योगासनपतेश्वरम्
शंखनादं पिण्डिपालं अंजलीकरसंयुतम् ४५
प्रवाळवर्णसंकाशं जटाभागेन्दुमण्डितम्
चक्रटंकाक्षशूलञ्च अधूमं प्रणमाम्यहम् ४६
विद्युत्कोटिसमप्रख्यं श्मश्रुकेशसमन्वितम्
अभयं सूचिहस्तञ्च अभस्मविधृताह्वयम् ४७
अंकाब्जं खण्डमालञ्च मुसण्डिमुसलन्तथा
चित्रवस्त्रसमायुक्तं अनादेवस्मराम्यहम् ४८
परमात्मन्महेशानञ्चक्रपाण्यब्जकुण्डिका

व्याघ्रचर्मोत्तरीय्यञ्च नीलवर्णंतथैव च ४९
बालसूर्यसमानाभं शशिखंडितमस्तकम्
अभयं शुराडहस्तञ्च महेश्वरसमं तथा ५०
कृष्णवर्णसमानाभं छत्रवस्त्रोत्तरीय्यकम्
गंडिकासुस्त्रवञ्चैव महातेजन्नमाम्यहम् ५१
कपालनागखट्वाङ्गं अक्षमालाधरं शिवम्
शरत् घननिभं देहं सद्भागेश्वरतः प्रभो ५२
महातेजामहाकान्तं भ्रुकुटीवदनन्तथा
द्विपादन्नतरीरेकं त्रिनेत्रं द्विभुजान्वितम् ५३
सद्भावेश्वरसंयुक्तं कुंकुमाभं समप्रभम्
ऊरुहस्ताभयञ्चैव पद्मपीठोपरिस्थितम् ५४
महातेजशिवाकाशं घराटां खड्गधरं तथा
पीतवर्णसमानाङ्गं पादकिंकिणि शोभितम् ५५
योगाधिपतये सूक्ष्मकर्णौ वेदविदुत्तमम्
विमानपीठयोगस्थं विद्रुमाभसमप्रभम् ५६
पाशांकुशधरं देवं नानार्ककमलेक्षणम्
वीरासनस्थितं देवं शरच्चंद्रप्रभान्वितम् ५७
नीलोत्पलञ्च कुमुदं धूधूधूविभजते शिवम्
रक्तपद्मासनस्थञ्च जटा चूडितविग्रहम् ५८
कुराडलञ्चोत्तरीरञ्च ओंभू स्वाहानुकूलितम्
व्याघ्रचर्मोत्तरीयञ्च नक्रकुराडलमरिाडतम् ५९
शूलं कपालं खाट्वाङ्गं अभयं ओंभूवः स्तथा
नागयज्ञोपवीताङ्गं मंडितं फणकंकणम् ६०
ज्वालाकेशत्रिणेत्रञ्च ओंभुवः परमात्मने
नक्षत्रगणसंकाशं जटालंबितमस्तकम् ६१
लग्नरूपं त्रयक्षञ्च अनिथन् अनिथन् तथा
हरितालसमप्रख्यं कुंडलाभरणोज्वलम् ६२
नागाक्षगरिाडकाभीतं निधनोत्सवशाश्वतम्
जानुन्येकोञ्च पादञ्च अभयं ज्ञानमुद्रिकाम् ६३

पादे किंकिणिसंघट्य शिवाख्यं प्रणमाम्यहम्
कुसुंभपुष्पवद्वर्णं सूर्याग्निन्तु त्रिलोचनम् ६४
गंगेन्दु चूडितजटं शर्वरुद्रं तथैव च
विकृताननसंबंधं प्रणमामि सुराधिपम् ६५
मंजुमंजूसृणीकेशं वेताळं खड्गहस्तकम्
प्रणवासनमारूढं शिवरूपं नमाम्यहम् ६६
प्रथमं प्रथमं घोरं किञ्चिद्दंष्ट्राकराळनम्
पाशशक्तिसमायुक्तं बंध---सलस्थितम् ६७
शर्वशर्ववराभीतिं खट्वाङ्गं नृत्तपालकम्
गंडिकं ज्ञानमुद्राञ्च नीलपद्मसुशोभितम् ६८
तप्तकाञ्च न संकाशं सर्वाभरणभूषितम्
आबद्धमौळिखंडेन्दुं वन्दे भवभवस्तथा ६९
मिश्रवर्णनिभं भीमं पुस्तकं ज्ञानमुद्रिकाम्
किंकिणीमालया वेष्ट्य भवोद्भवसुधानन ७०
कुन्दपुष्पसमप्रख्यं मुक्तामणिविभूषितम्
अंजलीकरसंयुक्तं सर्वभूतसुखप्रदम् ७१
इम्द्रगोपसमानांगं नवरत्नैश्च शोभितम्
सिंहचर्म च संवेष्ट्य सर्वसान्निद्ध्यकारणम् ७२
चंद्रकोटिसमप्रख्यं भस्मोद्धूळितविग्रहम्
निर्मलं जटिलं ब्रंहविष्णुरुद्रपरं तथा ७३
भृंगप्रभसमानांगं पिञ्छचूडितमस्तकम्
कपालशंखहस्ताभ्यां अर्चितानर्चितं तथा ७४
नेत्रत्रयं चतुर्बाहुं कांचप्रभसमन्वितम्
क्षेद्वासिकतलं भीतिं संस्थितस्संस्थितं चरेत् ७५
एकवक्त्रं त्रिणयनं चतुर्दोर्दण्डमंडितम्
नागं घण्टाञ्च मुसलं स्थिरपूर्वस्थितिं महत् ७६
पद्मनाळसमानाङ्गं कुन्दरूक्षञ्च लेपनम्
जटा मकुटसंबद्धं साक्षिं साक्षिं विशेषितम् ७७
चक्रपद्मधरं भीमं नागाभरणभूषितम्

बाणचापधरं विद्यात् नमस्तुरुतुरुस्तथा ७८
इंद्रनीलसमप्रख्यं भस्मोद्धूळितविग्रहम्
ध्वजवज्रधरं वीर्यं पतंगपतिमुद्धृतम् ७९
स्फटिकाभं त्रिणयनं चतुर्भुजसमायुतम्
गदात्रिशूलहस्तेन पिंगपिंगन्तथैव च ८०
अतिरक्तप्रभं विद्यात् अंगरागसमायुतम्
अभयं वरदं दत्वा ज्ञानात् ज्ञानसमीरितम् ८१
जटिलं नेत्रयुग्मञ्च पीताभं पुंडरीक्षणम्
अक्षमालाभयं विद्यात् शब्दशब्दचरूपिणम् ८२
सरत्नमकुटं दीप्तं प्रभामंडलसंस्थितम्
अभयं ऊरुहस्तञ्च सूक्ष्मसूक्ष्मनिरूपिणम् ८३
सव्येकमंडलधरं दक्षिणे अभयप्रदम्
वीरासनस्थितं देवं शिवरूपमिहोच्यते ८४
योगासनस्थितं देवं अंकञ्चेत् ज्ञानमूर्तिका
विद्युत्कोटिसमप्रख्यं सर्वदाशिवमूर्तये ८५
पद्मपीठोपरिस्थञ्च पीतांबरधरं शिवम्
वृषभं दक्षिणे पार्श्वे ओन्नमो नम इत्यपि ८६
शिवाय विभवे शान्तं रागद्वेषो निरामयम्
कुण्डलं पत्रकर्णौ च सूचिहस्तन्तु मुद्रिकाम् ८७
डमरुं दक्षिणे पार्श्वे वह्निं वै वामपार्श्वके
शयनं लंबितं पादं ओन्नमोऽपि नमो नमः ८८
श्रीकण्ठधूर्जटी भीमं शिवं सूक्ष्मेक्षणंबकम्
कराळो वीरचण्डञ्च रूद्रो नायकसंहरम् ८९
उपलंबविरागञ्च भूरिशो वीरपालकः
खट्वको बलिसंयुक्तो गिरिश्रेष्ठो वने चरः ९०
गंगा चूडोवीररुद्रोसाकल्यो हट्टहासकः
रमणोपिकराळश्च निलकेशो विशालतः ९१
उन्मत्तो बालवेषश्च नीलकण्ठो कठोरकः
घोरकालश्च सिंहास्योपक्षिदाह्यो महामुनिः ९२

मतिश्चरणकोपश्च गणाचार्योपराशिवः
मलक्षीनिर्मलीपाशी व्यंगरो भयकराटकः ९३
मेघशिष्टो विहासश्च हाटको नन्दकाहळः
शक्तो समार्कसंकाशो जटिलाभिश्च धार्यकः ९४
निश्चलो नागधारी च एकवक्त्रो निरामयः
डकोधिरुद्रभूतश्च वैशेषो सकळोकळः ९५
अग्निकेशो हुंकृतिश्च हेतुको करणेश्वरः
अशेषो रंजको वल्को मन्दरो माल्यवक्त्रकः ९६
वीरभद्रो बिलाळश्च नृत्तगोरुणतुंगकः
शंकरोति इति ज्ञेयः एकाशीति पदे स्थिताः ९७
पदमूर्तिरिति ज्ञेयः वर्णान्वक्ष्ये षडानन
अकारं रक्तवर्णं स्यात् आकारं नीलमुच्यते ९८
इकारं तटित्प्रभं विद्यात् ईकारं मिश्रवर्णकम्
उकारं काञ्चनाभासं ऊकारं पीतवर्णकम् ९९
ऋकारं स्फटिका भासं ॠकारं मेघमुद्भवम्
ऌकारं हरिवर्णाभं ॡकारं ऋक्षसमप्रभम् १००
एकारं इंद्रकोपाख्यं ऐकारं जलसप्रभम्
ओकारं पद्मसकाशं औकारं निलसप्रभम् १०१
अंकारं पुष्पसप्रख्यं अः विसर्गतटित्प्रभम्
ककारं रक्तवर्णं स्यात्खकारं नळिनोपमम् १०२
गकारं मधुरं विन्द्यात् घकारं मिश्रवर्णकम्
ङकारं कुन्दपुष्पाभं चकारमळिवर्णकम् १०३
छकारं रक्तसंकाशं जकारं पीतसन्निभम्
स्फटिकाभं झकारं स्यात् ञकारं मणिसन्निभम् १०४
टकारं रुद्रपुष्पाभं ठकारं शशिसप्रभम्
डकारं कृष्णवर्णं स्यात् ढकारं शुक्लवर्णकम् १०५
णकारं मधुराभासं तकारं विद्युतप्रभम्
थकारं लिकुचप्रख्यं दकारं हारसप्रभम् १०६
धकारमिन्दुसंकाशं नकारं कुंकुमप्रभम्

पकारं लोहसंकाशं फकारं नीलवर्णकम् १०७
बकारं मिश्रवर्णाभं भकारं शशिसप्रभम्
मकारं स्वर्णसंकाशं यकारं शुक्लवर्णकम् १०८
रकारं रक्तवर्णाभं लकारं पीतभास्वरम्
वकारं कृष्णवर्णं स्यात् शकारं नीलमुच्यते १०९
षकारं कुंकुमप्रख्यं सकारं कुन्दरागकम्
हकारमरुणप्रख्यं ळकारमशनिप्रभम् ११०
क्षकारं स्फटिकाभासं श्रुणु वर्णेश्वरन्तथा
स्फटिकं कुण्डलञ्चैव नीलांगं टंकधारिणम् १११
वज्रप्राशांकुशं धार्यं श्रीकण्ठेशं नमाम्यहम्
पाशाभञ्च विशालाक्षं फणिभूषितविग्रहम् ११२
त्रिणेत्रं ज्ञानमुद्राञ्च अनन्तेशं भजोत्तमम्
चतुर्भुजं महाबाहुं मंडितं फणिकंकणम् ११३
अभयं पद्महस्ताभ्यां सूक्ष्मेरं प्रणमाम्यहम्
ज्वलिताग्निसमप्रख्यं किंचित्प्रहसिताननम् ११४
पुस्तकं ज्ञानमुद्राञ्च त्रिमूर्तिं पद्मसंस्थितम्
रक्तवर्णं द्विबाहुञ्च कंकणाभरणोज्वलम् ११५
शूलं डमरुकं पाशमभयं अमरेश्वरम्
वीरासनस्थं पद्माभं कर्मधुर्तूरचूडितम् ११६
नीलोत्पलं पंकजाभ्यां जंघीशञ्च कराळकम्
कृष्णाद्री च समानाङ्गं विकृताननविग्रहम् ११७
अंकस्थं अंजलीहस्तं हारभूतीशसंज्ञकम्
शुक्लाभं शुभनेत्राभं वीणापुस्तकधारिणम् ११८
द्विपादञ्च तनूरेकं तिथीशं शान्तरूपकम्
स्थाणुं स्वांशं महाबाहुं नीलवर्णं द्विनेत्रकम् ११९
पाशं टंकाक्षमभयं पद्मपीठे स्थितासनम्
पद्माक्षमभयं भीमं नीलकंधरसंक्रमम् १२०
पादनूपुरसंघट्टहरेशं विकृताननम्
जटिलं चंद्रचूडञ्च ऊर्ध्वज्वालासुकेशिनम् १२१

स्त्रक्कमंडलरक्ताभं चंडीशं प्रणमाम्यहम्
व्याघ्रचर्मांबरधरं पादौ पादुकभूषितम्  १२२
कञ्चुकाभरणञ्चैव भौतिकेशं विशेषतः
द्विमुखस्सोपवीताङ्गो चतुर्दोर्दण्डमंडितम्  १२३
श्यामवर्णं महायोगं सद्योजातेश्वरं प्रभुम्
कुंकुमाभसमानाङ्गं एकवक्त्रं त्रिणेत्रकम्  १२४
सर्वाभरणसंयुक्तं अनुग्रहेश्वरशालिनम्
शुकपुष्पसमानाभं नयनं पद्मकान्तिवत्  १२५
अभयोज्वलितप्रख्यं महासेनवरप्रदम्
रत्नपीठे स्थितं विद्यात् इंद्रकोपनिभन्तथा  १२६
जटामकुटसंयुक्तं अभयं श्रीवरप्रदम्
कमण्डलधरं शान्तं नागयज्ञोपवीतिनम्  १२७
द्विपादं नीलदेहाङ्गं क्रोधीशं भस्मकुंठितम्
गजचर्मपरिच्छन्नं किरीटमकुटोज्वलम्  १२८
विकृताननसंभूष्यं फणीशं परमेश्वरम्
वृश्चिकाभरणोपेतं सरत्नमकुटान्वितम्  १२९
पाशदन्तवराभीतं प---मुनाद्धृतम्
------------ त्रिशूलं शंखचक्रिकम्  १३०
टंकं वामे सुधार्यञ्च कुन्दमन्दस्मितं मनाक्
पद्मासनस्थिता चैव प्रतिष्ठावष्टलोचना  १३१
हेमप्रभां चतुर्वक्त्रां किरीटमकुटोज्वलाम्
हेमयज्ञोपवीतञ्च मुक्तामाणिक्कभूषितम्  १३२
वज्रं शूलञ्च पद्मञ्च स्त्रक् धारा नीलवस्त्रकम्
प्रकृत्योपरिसंस्थित्वा निवृत्तिं प्रणमामिते  १३३
इत्युत्तरकारणे प्रतिष्ठातन्त्रे मन्त्रावतारपटलो द्वितीयः

कर्षणविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि उत्तमं कर्षणं विधिम्
स्वयंभुर्दैविकञ्चैव दिव्यमार्षं च मानुषम्  १

राक्षसं गाणवञ्चैव सप्तधा लिङ्गमुच्यते
कन्तकान्तकसर्वेश इच्छामि वदमे प्रभो २
लिङ्गानां लक्षणं वक्ष्ये श्रुणुष्वच षडानन
लिंकारं लयमित्युक्तं गकारं सृष्टिरुच्यते ३
लयनादुदयं प्रोक्तं लिङ्गशब्दमितीरितम्
नादं लिङ्गमिति ज्ञेयं पीठं बिन्दुरितीरितम् ४
महार्त्थसंहृतौ काले अशनी पतितो भुवि
कालाग्निरुद्रमूर्द्धानं पतितः कोपमात्रतः ५
ज्योतिस्तंभाकृतिं विद्यात् रुद्रात् भूमिरिहस्तथा
चकाराकारमित्युक्तं पर्वताकारमेव च ६
तालवृक्षाकृतिञ्चैव पनसस्य फलाकृतिम्
वेणवङ्कुरवदाकारं रुद्राक्षाकृतिमुच्यते ७
सूत्रहीनं महालिङ्गं अखण्डं लिङ्गमुच्यते
दैविकं लक्षणं वक्ष्ये श्रुणुष्व पार्वतीप्रिय ८
त्रयस्त्रिंशत्सुरैश्चैव निर्मितं लिङ्गमुत्तमम्
तस्य दैविकमेवोक्तं दिव्यलिंगान्तरं श्रुणु ९
यैकारुणैरुहं लिङ्गं प्रमाणं पञ्चपूरुषम्
पौरुषं एकपौरुषं कुब्जाकारविशेषतः १०
सूत्रहीनं महालिङ्गं आर्षलिंगमिहोच्यते
आर्षं च मानुषञ्चैव गाणवं च विधिं भवेत् ११
वृषभैः पूजितं लिंगं मानुषैः पूजितन्तथा
गाणवैः पूजितञ्चैव सप्तधा लिङ्गमुच्यते १२
नवैः प्रतिष्ठितं लिंगे सविशेषं निरूप्यते
प्रतिष्ठितं द्विजेनैव क्षत्रियेण प्रतिष्ठितम् १३
सर्वलोकहितं पुण्यं सर्वदर्शनमुत्तमम्
उत्सवादीन्विशेषेण न दोषः षण्मुख श्रुणु १४
प्रतिष्ठितन्तु वैश्येन अष्टवर्षं न दर्शयेत्
प्रतिष्ठितन्तु शूद्रेण द्वादशं वत्सरोपरि १५
दर्शनं कारयेद्धीमान् एतन्मद्ध्ये विवर्जयेत्

पूजान्ते साधको यत्र पुनः स्नानं समाचरेत् १६
दासीदासाः परिजनाः पुनः स्नानेन शुद्ध्यति
बाणलिङ्गं प्रतिष्ठाप्य न दोषं कश्चिदुच्यते १७
वृषभं पीठसंयुक्तं दक्षिणामूर्तिमेव च
गणेशः षण्मुखश्चैव पार्वती चंडिकारविः १८
मातरो लक्ष्मिदुर्गाञ्च शूद्रेणैव प्रतिष्ठितम्
कथं प्रभो विशेषेण न दोषो यं षडानन १९
ब्रह्मक्षत्रियवैश्येन शूद्रेणैव प्रतिष्ठितम्
तत्तन्नाम्निप्रतिष्ठान्तु न कदा च न दर्शनम् २०
अथवा दर्शनं कृत्वा ब्रह्महत्या समं भवेत्
स्त्रीशूद्रैः पूजितं लिङ्गं बिंबं वापि न दर्शयेत् २१
वक्ष्यामि कर्षणा वृद्धिं स्थलं यत्र विशेषतः
अशनिः पतितो यत्र चतुस्सन्धित्रिसंधिषु २२
द्विसन्धीमेकसन्धीञ्च नाराचेवीधिपार्श्वके
श्रेणी स्थाने सैकते च अग्रौ च कर्दमस्थले २३
एताश्च वर्जयेच्चैव नदीतीरे विशेषतः
पुण्यतीर्थसमीपे च होमस्थाने विशेषतः २४
पुण्यवृक्षसमीपे च वने चोपवने तथा
ग्रामस्य पूर्वदिक् भागे राजराष्ट्रविवर्द्धनम् २५
आग्नेये अग्निदग्धं स्यात् याम्ये च सर्वसंपदम्
नैर्ऋतौ व्याधिपीडाञ्च वारुणे राज्यवर्धनम् २६
वायव्ये पुत्रसंपत्तिः उत्तरे ग्रामनाशनम्
ऐशान्ये सर्वसौभाग्यं ग्राममद्ध्ये प्रजाक्षयम् २७
देवालयं पूर्वमेव यथास्थानेषु कल्पयेत्
पूर्वदेवालयं यत्र स्थानशुद्धिं विवर्जयेत् २८
सुमुहूर्ते सुनक्षत्रे स्थानशुद्धिं विशेषतः
सुमुहूर्तमहं वक्ष्ये श्रुणुष्वपार्वती प्रिय २९
शुक्लवर्षे विरोधी च मन्मथे कीलके तथा
विषुश्च दुर्मुखी चैव वत्सरांश्च विवर्जयेत् ३०

अाषाढं मार्गशीर्षञ्च माघं भाद्रपदं तथा
अाषाढं धननाशं स्यात् मार्गशीर्षन्तु रोगदम्  ३१
माघं तु पुत्रहानिस्स्यात् भाद्रे चैव कुलक्षयम्
चैत्रे संपत्करं विद्धि वैशाखे व्याधिनाशनम्  ३२
ज्येष्ठे च सर्वसिद्धिस्स्यात् श्रवणे मोक्षदं भवेत्
अाश्वीजेकर्मसा फल्यं कार्तिके ग्रामवर्द्धनम्  ३३
पौष्ये च दीर्घमायुष्यं फाल्गुने शत्रुनाशनम्
एते मासफलं कृत्वा शुक्लपक्षे विशेषतः  ३४
मद्ध्यमं कृष्णपक्षे च प्रथमा च चतुर्दशी
षष्ठ्यष्टमी नवम्याञ्च अमायाञ्च चतुर्दशी  ३५
वर्जयेत्तु विशेषेण द्वितीये सर्वसंपदम्
तृतीये लोकवश्यञ्च पञ्चम्यां रोगनाशनम्  ३६
सप्तम्यां ग्रामवृद्धिस्स्यात् दशम्यामायुवर्द्धनम्
एकादश्यामष्टभाग्यं द्वादश्यां शत्रुनाशनम्  ३७
त्रयोदश्यां कर्मवृद्धिः पौर्णिमायां सुखं भवेत्
एते तिथिफलं प्रोक्तं वाराणां फलमुत्तमम्  ३८
भौमार्किवारं वर्जित्वा रविवारं सुखप्रदम्
इन्दुवारे च सौभाग्यं सौम्यवारं सुखप्रदम्  ३९
गुरुवारे प्रजावृद्धिः भृगुवारे चिरायुषम्
सप्तवारफलं प्रोक्तं अश्विन्यादिफलं श्रुणु  ४०
ग्रामाभिवृद्धिमाश्विन्यां भरणी मृत्युशीघ्रदम्
कृत्तिका चार्त्थनाशं स्यात् रोहिणी च सुखप्रदम्  ४१
मृगशीर्षं प्रजावृद्धिरार्द्रायां सर्वनाशनम्
पुनर्वसुः पापनाशं पुष्यं वै शान्तिकं भवेत्  ४२
अाश्लेषाञ्च विनाशं स्यात् मखं वै तु प्रजाक्षयम्
पूर्वफल्गुन्यां मानहानिः उत्तरं सुखसंपदम्  ४३
अायुर्द्धानञ्च हस्तञ्च चैत्रे वै शत्रुनाशनम्
स्वाती च राजसम्मानं विशाखं कर्मसत्फलम्  ४४
अनुषं बिंबवृद्धिः स्यात् ज्येष्ठां वै ज्येष्ठमाचरम्

मूलं वै बिंबनाशं स्यात् पूर्वाषाढं विदुः क्षयम् ४५
उत्तराषाढं वृद्धिस्स्यात् श्रवणं मोक्षसंभवम्
श्रविष्ठादारनाशं स्यात् शतभिषक् मृत्युनाशनम् ४६
पूर्वाभाद्रं प्रजानाशं उत्तरो धनसंपदम्
रेवती वाक्पद्रं प्रोक्तं राशीनाञ्च फलं श्रुणु ४७
मेषे तु कार्यवृद्धिस्स्यात् सौभाग्यं वृषभे तथा
मिथुने कार्यनाशं स्यात् कर्कटे राष्ट्रशोभनम् ४८
सिंहे तु कर्मसाफल्यं कन्यायान्तु विलक्षणम्
तुलायामतुलं प्रोक्तं वृश्चिके वित्तन्नाशनम् ४९
चापं ज्ञानप्रदं विद्यात् मकरे मानहानिकृत्
कुंभे तु शत्रुनाशं स्यात् मीने सर्वसुखप्रदम् ५०
देवानां च हितार्त्थाय दिवा चेत्सुमुहूर्तके
निशिकुर्याद्ययुश्चैव मसुराणां जयप्रदम् ५१
पूर्वयामे कार्यसिद्धिर्द्वियामे सफलं भवेत्
त्रियामे सर्वहानिस्स्यात् चतुर्यामे तु तामसम् ५२
सुमुहूर्ते सुलग्ने च कर्षणं विधिमुत्तमम्
काळञ्चेत् मिश्रवर्णञ्च कर्णशून्यं तथैव च ५३
दन्तहीनं खुरैर्हीनं व्याधिनापीडितन्तथा
त्रिणेत्रं चतुर्भुजं शान्तरूपं जटिलन्तथा ५४
शूलदण्डञ्च पाशञ्च अक्षमालाधरन्तथा
पद्मपीठोपरिस्थाङ्गं गजचर्मपरिच्छदम् ५५
एवं ध्यात्वा विशेषेण यजेच्छक्तिमहेश्वरम्
दशबाहुं त्रिणेत्रञ्च पञ्चमूर्ध्निसमन्वितम् ५६
वक्त्रं प्रतिविशेषेण शुद्धस्फटिकसन्निभम्
शूलं वक्त्रञ्च खड्गञ्च पाशपट्टसमेव च ५७
नागं घण्टाञ्च वह्निञ्च अक्षमालाधरन्तथा
सादाख्येश्वररूपन्तु ध्यायेत्तु देशिकोत्तमः ५८
विद्युत्पंक्ति निभाकारं शूलं टङ्कं तथैव च
अभयं वरदोपेतं जटामकुटसंयुतम् ५९

त्रिणेत्रं पीतवस्त्राभं अनन्तेशं भवोत्तमम्
कालाग्निसदृशप्रख्यं त्रिणेत्रं भीमरूपिणम् ६०
मृगटंकसमायुक्तं शूलाभयकरं तथा
सिह्मचर्मसमायुक्तं ईश्वरं प्रणमाम्यहम् ६१
दंष्ट्राकराळवदनं भृकुटीमदभीषणम्
जटामकुटखण्डेन्दु नेत्रत्रययुताननम् ६२
खड्गखेटञ्च परशुं मुसलं वरदाभयम्
गगनेशं यजेत्तत्र कालनाम ततः श्रुणु ६३
द्विपादञ्च द्विनयनं किरीटमकुटोज्वलम्
कुण्डलं कर्णपत्रौ च शुद्धस्फटिकसंनिभम् ६४
शूलं घण्टाञ्च वामे तु कालनामेश्वरं भजे
कृष्णवर्णं चतुर्बाहुं टङ्ककृष्णमृगं तथा ६५
अक्षमालाकरञ्चैव ज्ञानबिन्दवमुच्यते
तप्तकाञ्च न सङ्काशं हेमयज्ञोपवीतिनम् ६६
व्याघ्रचर्मांबरधरं पादकिङ्किणिशोभितम्
ज्ञानमुद्राक्षमालाञ्च वज्रनागं तथैव च ६७
भजे यमकरं प्रोक्तं विशेषेण तदुच्यते
शरच्चन्द्रनिभाकारं किरीटं हेमनिष्ठितम् ६८
अङ्कुशं वज्रनागञ्च वेदविज्ञानमुच्यते
पद्मासनस्थं नीलाभं जटाखण्डेन्दु मण्डितम् ६९
परशुं मुसलं पाशमभयं सूक्ष्मभेदकम्
काळमेघसमप्रख्यं कृष्णपीतांबरं धरम् ७०
नागयज्ञोपवीताङ्गं अभयं वरदं तथा
कामदं रूपमाख्यतं प्रधानं च ततश्शृणु ७१
सूर्यकोटिप्रतीकाशं त्रयक्षञ्च चतुर्भुजम्
कुण्डलाभरणैर्युक्तं किङ्किणी मालया वृतम् ७२
नागं पाशाङ्कुञ्चैव घण्टाञ्चैव तु वामके
सर्वलक्षणसंयुक्तं प्रधानकं यजेत्तदा ७३
स्फुरत्तारकसप्रख्यं जटिलं भीमरूपिणम्

तोमरं पट्टसंयुक्तं त्रिदेहमधुनोच्यते ७४
शंखप्रभसमायुक्तं पीतवस्त्रोत्तरीयकम्
शंखकार्मुकसंयुक्तं बुद्धाय प्रणमाम्यहम् ७५
तापिञ्छनिभसं युक्तं रत्नकुण्डलमण्डितम्
भीमरूपं त्रयक्षञ्च चतुश्शूलवराब्जधृक् ७६
शार्दूलचर्मधार्यञ्च अहंकृतनमोस्तुते
त्रयक्षं चतुर्भुजं शान्तं सर्पयेज्ञोपवीतिनम् ७७
डमरुं पाशखड्गञ्च अभयं कल्पमूर्ति च
सव्ये पाशवराटङ्कं वामे शूलाभयाब्जकम् ७८
मुक्ताभरणभूष्यं च जटामकुटशोभितम्
त्रिणेत्रं जटिलं भीमं भजे व्योमधरं तथा ७९
चन्द्रबिंबसमप्रख्यं केयूरकटकान्वितम्
पीतांबरधरञ्चैव सर्वाभरणभूषितम् ८०
उग्रतोमरशूलं च सर्वाङ्गिश्वरमूर्तये
पीतवर्णं चतुर्बाहुं रक्तमृष्टिभयङ्करम् ८१
अक्षमालां त्रिशूलं च वरदाभयपाणिनम्
किरीटमकुटोपेतं अप्रकाशमहं भजे ८२
राजसंख्यामवर्णञ्च जटागङ्गेन्दुमण्डितम्
त्रिणेत्रं चतुर्भुजोपेतं किङ्किणी मालयावृतम् ८३
टङ्ककृष्णमृगञ्चैव त्रिशूलाभयमेव च
सर्वाभरणसंयुक्तं महावक्त्रं तथैव च ८४
कुङ्कुमाभं द्विनेत्रञ्च जटालंबितपार्श्वयोः
खण्डेन्दुमकुटोपेतं अक्षमालात्रिशूलिनम् ८५
पादनूपुरसंघट्टं गजचर्मपरिच्छदम्
शुक्लयज्ञोपवीताङ्गं बलिभुक्तं महेश्वरम् ८६
तप्तकाञ्च न संकाशं नागयज्ञोपवीतिनम्
त्रिशूलाभयपाणिञ्च दुन्दुभेश्वरमेव च ८७
द्विपादं च द्विनेत्रं च करण्डमकुटोज्वलम्
कृष्णपीतांबरोपेतं टङ्कं कृष्णाब्जभीतिकम् ८८

हेमयज्ञोपवीताढ्यं सामदाय नमाम्यहम्
श्यामवर्णसमायुक्तं जटालंकृतमस्तकम्  ८९
किङ्किणीमालयाभूष्यं मुसलं ज्ञानमुद्रिकाम्
योगासनस्थं पद्माक्षं रमणाय सुबाहवे  ९०
चतुर्भुजसमोपेतं कुण्डलालंकृतं तथा
अभयं वरदोपेतं द्वात्रिंशल्लक्षणान्वितम्  ९१
पद्माक्षं पद्मपीठस्थं भजेत्कर्णकृतेश्वरम्
योगासने स्थितं देवं योगपट्टिकवेष्टितम्  ९२
व्याख्या मुद्रानलञ्चैव शूलहस्तञ्चतुर्भुजम्
सर्वालङ्कारसंयुक्तं घनानन्देश्वरं तथा  ९३
पादेनाक्रम्यभूतञ्च काचवस्त्रसमायुतम्
पादकिङ्किणिशोभाढ्यं चतुष्पद्मं सुधारिणम्  ९४
शुक्लयज्ञोपवीताङ्गं सूक्ष्ममूर्तिं विशेषतः
हेमपद्मोपरिस्थाङ्गं रत्नमालाविभूषितम्  ९५
व्याळयज्ञोपवीतञ्च ऊर्ध्वज्वालासुकेशकम्
किरीटमकुटोपेतं ईश्वरं बलवत्तरम्  ९६
कुन्देन्दुस्फटिकाभासं त्रिणेत्रञ्च चतुर्भुजम्
नागखड्गञ्च दण्डञ्च पाशं वै धारिणं करे  ९७
पीतवस्त्रोत्तरीयाङ्गं योगं भानुमतेश्वरम्
कुशपुष्पसमानाङ्गं मुक्ताभरणभूषितम्  ९८
व्याळयज्ञोपवीतञ्च ऊर्ध्वज्वालासुकेशकम्
शङ्खकार्मुकसंयुक्तं जलदाय नमोऽद्य च  ९९
वक्त्राळकं श्यामतनुं द्विनेत्रं सव्ये भयं चारुत्रिशूलसंयुतम्
हेमोपवीताङ्गं शशिचूडशीर्षं गण्डाङ्गमूर्तिं ततविद्रुमप्रभम्  १००
त्रिणेत्रं चतुर्भुजञ्चैव अभयं वरदान्वितम्
मृगटङ्कसमायुक्तं नागयज्ञोपवीतिनम्  १०१
जटामकुटसंयुक्तं सूक्ष्मं विद्यात् विशेषतः
द्विपादञ्च त्रिणयनं करण्डमकुटान्वितम्  १०२
खड्गखेटन्तथा चैव चापश्शरधृतं यथा

खरडेन्दुमकुटञ्चैव मातरिश्वसमूर्तये १०३
जपापुष्पसमप्रख्यं धूर्जटीनीललोहितम्
पाशाङ्कुश्च धरं विद्यात् त्विषान्वितमहेश्वरम् १०४
करुणान्तं स्मरेन्नित्यं रक्तवस्त्रञ्च धारकम्
कान्तनूपुरसंयुक्तं जटामकुटशोभितम् १०५
अर्कधुर्तूरपुष्पञ्च जलेशं विस्मिताननम्
सूर्यकोटिसमप्रख्यं बालरूपदिगन्तरम् १०६
चतुर्भुजसमायुक्तं वामपादन्तु लंबितम्
शयनं सव्यपादन्तु वामे गौरिसमायुतम् १०७
मृगटङ्कसमायुक्तं वरदाभयपाणिनम्
कुन्दमन्दस्मितं शान्तं श्रीकराठं परमेश्वरम् १०८
पञ्चवक्त्रं दशभुजं प्रतिवक्त्रत्रिलोचनम्
पाशाभयवरञ्चैव शंखकार्मुकगंडिका १०९
घराटानारा च मुद्राञ्च अभयं वरदान्वितम्
रक्तवस्त्राङ्गशोभाढ्यं शान्त्यतीतं विशेषतः ११०
चतुर्भुजाञ्चैकवक्त्रां कुन्दळाभरणोज्वलाम्
ज्ञानमुद्राक्षमालाञ्च पाशतोमरसंयुतम् १११
पीतांबरोत्तरीयाङ्गं सान्निद्ध्येयं षडानन
शंखचक्रवराभीता करराडमकुटान्वितम् ११२
मुक्ताभरणभूष्याङ्गं अनेकैः परिवारितम्
कार्तनूपुरसंबन्धा विद्याशक्तिमिहोच्यते ११३
चतुर्वक्त्रा चतुर्बाहूयक्तवर्णामहाबला
सुरत्नमकुटोपेता -------------- ११४
किङ्किणीमालयाभूष्यं केशयज्ञोपवीतिनम्
शक्तिवज्रधरं स्मृत्वा शिवोत्तमशिवं बुधः ११५
एकाननं चतुर्बाहुं खट्वाङ्गं नृकपालकम्
सर्वाभरससंयुक्तं एकरुद्रासमन्वितम् ११६
हरितालसमानाभं सर्वाभरणभूषितम्
पीतांबरधरं बुध्वा क्रमेशं मंत्रशक्तिदम् ११७

दाडिमीकुसुमाभासं चित्रवस्त्रोत्तरीयकम्
अक्षमालां गदाहस्तं एकनेत्रं भजेत्ततः ११८
अकळङ्कशरत्पूर्णचंद्रकोटिसमप्रभम्
चिन्मुद्रामूरुहस्तञ्च वपुराननमूर्तयः ११९
अजेशं प्रळयाभासं नीलोत्पलधरांबुजम्
गङ्गाखण्डेन्दुमकुटं पद्माक्षालोकधारिणम् १२०
सर्पक्रूरत्वसङ्काश अपस्मारस्थिते पदम्
शार्ङ्गबाणेन संयुक्तं बालवेषं दिगन्तरम् १२१
सोमेशं जटकूटस्थं नक्षत्रगणसंभ्रमम्
अञ्जलीकरहस्ताभ्यां शिवरूपं स्मराम्यहम् १२२
मातुळङ्गाक्षसूत्रञ्च पुण्डरीकवदीक्षणम्
जटामकुटसंयुक्तं लाङ्ग्यशं प्रणमाम्यहम् १२३
मिश्राभं दण्डखड्गञ्च करण्डमकुटं भवेत्
पद्मपीठोपरिस्थञ्च मारुकेशं महामतिम् १२४
पीताभं पीतवस्त्राभं नक्रकुण्डलमण्डितम्
लंबकेशं सुदन्तञ्च अर्द्धनारीश्वरं तथा १२५
सुरत्नमकुटं भीमं जटालंबितपार्श्वयोः
वदनं ज्ञानमुद्राञ्च होमेशं पीतवर्णकम् १२६
कञ्चुकाभरणं भीमं सर्पयज्ञापवीतिनम्
उन्मत्तवेषनीलाभं बालरूपं त्रिलोचनम् १२७
फणिखट्वाङ्गसंयुक्तं आषाढे च विशेषतः
कञ्जळाभं त्रिनेत्रञ्च ज्वालकेशं कराळकम् १२८
निर्विकारं महेशानं दण्डीशं सार्द्धविग्रहम्
उग्ररूपं महायोगिं मुसलाभयसंयुतम् १२९
पादुकोपरिसंयुक्तं अत्रीशं विकलेश्वरम्
सव्यपादन्तु शयनं वामपादन्तु लंबितम् १३०
पर्यङ्के देविमालिङ्ग्य कुण्डलाभरणोज्वलम्
अभयं ज्ञानमुद्राञ्च मीनेशं प्रणमाम्यहम् १३१
उलूखमुसलञ्चैव वृश्चिकाभरणोज्वलम्

उग्रदंष्ट्रं कराळञ्च मेषेशं सरसंस्थितम् १३२
शुद्धस्फटिकसंकाशं गजचर्मपरिच्छदम्
पद्मोत्पलधरं देवं लोहितेशं यजेत्ततः १३३
शिखिनीशं महाबाहुं कृष्णाभं लंबधूर्जटिम्
वेदबाहुञ्च खण्डासिं नागखेटधरं शिवम् १३४
चतुर्भुजं त्रिणेत्रञ्च कुण्डलाभरणोज्वलम्
वृश्चिकाभरणैर्भूष्यं शूलटङ्ककपालिनम् १३५
एकवक्त्रसमायुक्तं मंगलाभं भजेत्ततः
कृष्णकञ्चुकसंयुक्तं केशाळकविभूषितम् १३६
पादनूपुरसंघट्टं निर्वाणं टंकधारिणम्
कराळवदनोपेतं द्विरण्डेशं विशेषतः १३७
दंष्ट्राकराळवदनं क्रूरदंष्ट्री भयं करम्
नागासिवरदं पाशं अभयं टंकवज्रिणम् १३८
सर्वाभरणसंयुक्तं महाकाळं प्रपूजयेत्
रथाङ्गं शूलपाणिञ्च भिण्डपालञ्च तोमरम् १३९
योगासनस्थितन्देवं बालीशं विदुषं भजेत्
सुमुखं चंद्रबिंबं वा नवरत्नैरलंकृतम् १४०
मुद्रापुस्तकटंकासिं भुजंगेशं प्रपूजयेत्
चंद्रचूडं द्विपादञ्च तटित् ज्वलनसप्रभम् १४१
डमरुं पाशहस्तञ्च दण्डञ्चैव पिनाकिनम्
कृष्णाधरमृगं भीमं वरदाभयपाणिनम् १४२
पद्मासनस्थितं देवं खड्गेशं भावयेत्ततः
सव्येकपालखट्वाङ्गं वामेदण्डधरं तथा १४३
किरीटकुण्डलोपेतं सकेशं शशिचूडकम्
द्विनेत्रं द्विभुजं श्यामं अक्षमालाभयं तथा १४४
पूर्णचंद्रनिभाकारं चेतेशं त्रिदशाधिपम्
पद्मासनस्थितं शान्तं टङ्काक्षं पुस्तकं तथा १४५
मुसलं वज्रशंखञ्च लकुळीशं यजेत्तदा
कृष्णं मृगधरं घोरं पाशटंकाक्षसूत्रिणम् १४६

नीलग्रीवं महावीर्यं शिवेशं विधिना तथा
त्रिणेत्रं शुक्लवर्णाभं पीतवस्त्राङ्गरागकम् १४७
उपवीतं चोत्तरीयं शयनं लंबपादकम्
पद्मपीठोपरिस्थञ्च संवर्तेश्वरमाननम् १४८
ज्ञात्वा वर्णेश्वरान्प्रोक्तं भुवनेशाञ्शृणुष्विह
अद्धिकारं मलास्तीति शक्त्यानुग्रहकं विना १४९
तस्मात् भुवनमूर्तिञ्च वर्णान्वक्ष्ये षडानन
शान्त्यतीतकले स्थित्वा भुवनाख्यारविप्रभाः १५०
शान्त्यौ स्मभुवनाख्यानि शरच्चंद्रप्रभां विदुः
विद्याभुवनसर्वाणि विद्युत्पुञ्जनिभा कृतिम् १५१
प्रतिष्ठाभुवनास्सर्वे धूम्रवर्णनिभा कृतिम्
निवृत्यौ भुवनाश्चैव नीलमेघप्रभां विदुः १५२
शान्त्यतीतौ पक्षसौ ख्यशान्त्यौ सप्तदशा भवेत्
सप्तलिङ्गञ्च विद्यौ च षट्पञ्चाशत्प्रतिष्ठितौ १५३
अष्टोत्तरशतञ्चैव निवृत्तौ भुवनानि वै
भुवनेशानरूपाणि श्रुणुष्व पार्वतीप्रिय १५४
ज्योतिं धरनिराकाशं शरच्चन्द्रनिभप्रभम्
अन्येनाश्रतमं किंचित् अन्याश्रितशिवां स्मरेत् १५५
पीतवर्णनिभं शान्तं निर्विकल्पं निरामयम्
सदासूर्योगभावेन अनाथं शक्तिरूपिणीम् १५६
नीलप्रभनिभञ्चैव किंचित्प्रहसिताननम्
अनन्तासंज्ञिका चैव ध्यायेत्त्वां सर्वसंपदाम् १५७
शुभप्रभनिभां विद्यात् व्योमरूपां विशेषतः
रक्तवर्णनिभां शक्तिं व्यापिनीं सर्वकामदाम् १५८
मिश्रवर्णनिभाकारां भुवनेशोर्ध्वगामिनीम्
मोचिकापीतवर्णं स्यात् अनुग्राह्यार्त्थकारिणाम् १५९
हरिदाभसमप्रख्यं किंचिद्रूपां सयौवनाम्
रोचिकान्तु विशेषेण ध्यायेत्त्वां विधितत्पराम् १६०
मत्ताळिकृष्णसप्रख्यां पीतनेत्रां सुयौवनाम्

करगडमकुटोपेतां दीप्तिकामञ्जली कृताम्  १६१
शरच्चंद्रप्रभाकारां चतुर्भुजसमायुताम्
सुरत्नमकुटप्रख्यां ज्ञानमुद्राक्षमालिकाम्  १६२
अंजलीकरसंयुक्तां ऋद्धिकेशीं प्रपेदिरे
पञ्चवक्त्रं चतुर्बाहुं -------------  १६३
पाशाभयविशालाक्षां गदाब्जधरसुन्दराम्
अरूपां रूपिकाञ्चैव शान्त्यतीतामनुग्रहाम्  १६४
पीताभवस्त्रधार्यं च ईशानं भुवनेश्वरम्
चतुर्वक्त्रं चतुर्बाहुं कृष्णवर्णामहाबला
अभयं शूलहस्तं च गंडिकामक्षमालिकाम्  १६५
आस्य त्रयं चतुर्बाहुं चतुर्दोर्दगडमगिडतम्
अभयं शक्तिहस्तं च गदापद्मधरं भवेत्  १६६
एकाननं चतुर्बाहुं चक्रबाणगदाधरम्
अभयं चित्रवस्त्राङ्गं प्रतिष्ठां भुवनेश्वरीम्  १६७
विपादं च तनूरेकं चतुर्मूर्ध्निसमन्वितम्
चतुर्बाहुमुदाराङ्गं किरीटमकुटोज्वलम्  १६८
निवृत्तिं च विरूपाक्षां सर्वाभरणभूषिताम्
पद्मासनस्थितं देवं जटामकुटसंयुतम्  १६९
हेमयज्ञोपवीताङ्गं शूलटङ्काभयन्तथा
वरदं इन्दुकान्तिस्थं शिखगिडपरमेश्वरम्  १७०
श्यामवर्णं त्रिणेत्रञ्च टंककृष्णमृगं तथा
अभयं चाक्षसूत्रञ्च श्रीकगठन्तु विशेषतः  १७१
त्रिमूर्तिं पीतकृष्णाङ्गं रक्तदृष्टिं त्रिणेत्रकम्
गगिडकौतोमरं चैव शूलखगडं भुजेधरम्  १७२
त्रिणेत्रं चतुर्भुजं शान्तं कुंडलाभरणोज्वलम्
चंद्रचूडाननं खेटं वज्रनागं च धारयेत्  १७३
रुद्रमूर्तिं विशेषेण एकनेत्रं ततश्शृणु
शुक्लाभं शान्तरूपं च सरत्नमकुटान्वितम्  १७४
खड्गखेटाभयं चैव एकनेत्रं भजेत्ततः

द्विपादं चतुर्भुजं शान्तं बालरूपं महोज्वलम् १७५
खण्डेन्दु चूडितं पिञ्छं धुर्तूरं धार्यविग्रहम्
बाणासिशूलखट्वाङ्गं शिवोत्तममहं भजे १७६
शरच्चंद्रनिभाकारं एकवक्त्रं त्रिलोचनम्
अंगवज्रधराभीतिं सूक्ष्मेशं विधृतन्तथा १७७
कुन्दपुष्पसमानाङ्गं जटावेणिसमन्वितम्
कमण्डल्वक्षसूत्रं च टङ्ककृष्णमृगं तथा १७८
नागाभरणसंभूष्यं अनन्तेशं भजेत्ततः
विद्युत्प्रभनिभाकाशं ----------- १७९
रक्तवस्त्रधरां देवीं अभयं वरदान्विताम्
चामरं पञ्चहस्तञ्च विमानस्थां मनोन्मनीम् १८०
चतुर्भुजां द्विपादाञ्च करण्डमकुटान्विताम्
पद्मचामरहस्तञ्च वराभीतिं द्विधैव च १८१
एते रूपाद्य दृश्यैते सर्वभूतदमनीं भजे
मिश्रवर्णाञ्च दिव्याङ्गां गण्डिकाचाभयप्रदाम् १८२
चामरं पद्महस्तञ्च बलप्रमथिनीन्तथा
शुभ्रवर्णा विशालाक्षी अङ्गरागविभूषिता १८३
ज्ञानमुद्राक्षमालाञ्च पद्मचामरसंयुता
पद्मचामरहस्ता च पाशांकुशधरा तथा १८४
काळी चतुर्भुजा कारा सर्वाभरणभूषिता
पद्मचामरसंयुक्ता पाशटंकधराभृता १८५
करण्डमकुटोपेता सर्वावयवसुन्दरा
सर्वलक्षणसंयुक्ता चामरापद्मसंयुता १८६
गण्डिकामक्षमालाञ्च रौद्री व्याळविशेषतः
तप्तकाञ्च न संकाशा द्विपादा च चतुर्भुजा १८७
पाशशूलवरा चैव चामरा छत्रसंयुता
वामा च कुंकुमप्रख्या केयूरमकुटान्विता १८८
उन्मत्तबालवेषाढ्या चामराभयधारिणीम्
पद्मरागसमप्रख्यामुक्ताभरणभूषिता १८९

त्रिणेत्रं चतुर्भुजं चैव रत्नकुराडलशोभितम्
ज्ञानमुद्रा त्रिशूलं च गरिडकाब्जं तथैव च १९०
श्वेताङ्गं पद्मपीठस्थं ग्रङ्गुष्ठेशं भजेत्ततः
त्रिणेत्रं चोपवीष्टाङ्गं सर्वाभरणभूषितं १९१
शिखिपिञ्छजटाचूडं टंकशूलं वराभयम्
त्रिणेत्रं चारुवदनं भुवनेश्वरमाश्रये १९२
द्विपादं च तदूर्वेकं नागाभरणभूषितम्
खराडेन्दुचूडमकुटं पद्मखट्गत्रिशूलकम् १९३
पीताभवस्त्रधार्यं च ईशानं भुवनेश्वरम्
ए--------------------------- १९४
उग्रदंष्ट्राकराळं च वरदाभयधारिणम्
शुक्लयज्ञोपवीताङ्गं एवं द्ध्यायेद्विशेषतः १९५
हेमाभमिन्दुखराडं च मुक्तामाणिक्य भूषितम्
कमराडल्वक्षमालां च स्त्रगक्षमालिकां तथा १९६
पद्मासनस्थितं देवं उत्भावमिति कथ्यते
सूचीहस्तं वरकरं प्रसन्नवदनन्तथा १९७
किंकिणी मालया युक्तं भवमूर्त्तिरिति स्मृतम्
स्फटिकाभं त्रिणयनं जटाखराडेन्दुमरिडतम् १९८
तोमरव्यञ्जनं चैव भवेश्वरमहं भजे
शक्तिवज्रधराभीतिं कुराडलाभरणोज्वलम् १९९
मुक्ताभरणभूष्यं च वामदेवं स्मरेत्ततः
महातेजसपिंछाभं हेमाब्जस्थं सुयौवनम् २००
ग्रक्षमालासुदराडं च पिञ्छचूडितविग्रहम्
नीलपद्मनिभं भीमं भृकुटी वदनान्वितम् २०१
पद्माक्षसूत्रिकायुक्तं शिखेदं मतिधीर्यते
कराळवदनं भीमं उग्रकेशं त्रिलोचनम् २०२
वरदाभयहस्तं च एकवीरेश्वरं प्रभुम्
पंचाङ्गं भृकुटीप्रख्यं नागयज्ञोपवीतिनम् २०३
खट्गपाणिं त्रिणेत्रं च पद्मपीठोपरिस्थितम्

हेमाभं इंद्रखड्गं च हेमयज्ञोपवीतिनम्  २०४
शूलं खड्गं त्रिणेत्रं च शूरेशं भुवनं यथा
सुवक्त्रं कुंकुमाभासं बलरूपदिगन्तरम्  २०५
चापचक्रवराभीतान्दधानं गणसेवितम्
रत्नाभं फालनेत्रं च चक्रशूलवराभयम्  २०६
मुक्तामाणिक्य भूष्यं च ज्योतिषं भुवनेश्वरम्
राजसंकांचनाभासं पट्टसंमुत्गरन्तथा  २०७
व्याघ्रचर्मांबरधरं चण्डमूर्त्तिं यजेत्ततः
विद्रुमाभं द्विनेत्रं च द्विपादञ्जटिलन्तथा  २०८
व्यञ्जनं ज्ञानमुद्रां च क्रोधमूर्त्तिधरं शिवम्
गजचर्मपरिच्छन्नं खण्डमूलविभूषितम्  २०९
पट्टसंखेटकं चैव भजेत्तु केशवन्तथा
सिह्मास्यं धूम्रनेत्रं च किरीटमकुटोज्वलम्  २१०
अञ्जलीकरसंयुक्तं अनन्तं प्रणमाम्यहम्
अजं तटित्प्रभाकारं करण्डमकुटान्वितम्  २११
ज्ञानचंद्रकलाचूडं अजं मूर्त्तिं महेश्वरम्
उमापतिं सुरक्ताभं सिह्मचर्मसुवेष्टितम्  २१२
--स्मोद्धूळितसर्वांगं शुक्लयज्ञोपवीतिनम्
प्रचण्डं कृष्णवर्णाभं जटामकुटमण्डितम्  २१३
मुक्ताभरणसंपूज्यं शूलदण्डकरं भजे
त्रियक्षं त्रिभुजं विद्यात्तप्तकाञ्चनसन्निभम्  २१४
अभयं वरदं चैव सूर्यहस्तं भजेत्ततः
ईशानं टंकहस्तं च मिश्रवर्णं तथैव च  २१५
जटामकुटसंयुक्तं त्रिनेत्रं प्रणमाम्यहम्
भवव्यासस्य मूर्तं स्यात् ज्ञानमुद्रां च पुस्तकम्  २१६
काचवस्त्रसमोपेतं स्फाटिकं कुण्डलन्तथा
उग्रं भीमं महाबाहुं शरच्चन्द्रनिभाननम्  २१७
रत्नकुण्डलपत्रौघं पद्मपीठे सुखासनम्
भीमं चंद्रनिभं चैव व्याळयज्ञोपवीतिनम्  २१८

नवकुराडलसंभूष्यं जटामकुटमरिाडतम्
वामं रत्ननिभाकारं किञ्चित्स्मितमुखाननम् २१९
जटिलं भस्मलेपं च पद्मपीठोपरिस्थितम्
श्रीकराठपट्टहासान्ताश्यामवर्णनिभाकृतिम् २२०
पितांबरधरास्सर्वे मुक्तामणिविभूषिताः
जटामकुटखराडेन्दुज्योत्स्ना विधृतभूषिताः २२१
कुराडलं पद्मखराडेन्दुव्याळयज्ञोपवीतिनम्
शूलखट्वांगमुसलं खेटकं सर्पधारिणम् २२२
एते मूर्त्तिविरूपाणि पूजयेत्तु षडानन
उग्रज्वालासुकेशं च कराळवदनान्वितम् २२३
किंकिणीमालयाभूष्याभ्रुकुटीवदनान्विता
भद्रकाळी च विख्याता वीरभद्रं ततश्शृणु २२४
कृष्णवर्णं महाबाहुं जटामकुटमरिाडतम्
खड्गखेटं च मुसलं भिरिाडपालं तथैव च २२५
वीरभद्र इति ख्यातस्त्रिलोचनान्ततः शृणु
त्रिलोचनकपालांश्च रक्तवर्णनिभाकृतीन् २२६
त्रिलोचनान्चतुर्बाणान्सर्वाभरणभूषितान्
शूलटंकवराभीति जटाखराडेन्दुमरिाडतान् २२७
पद्मपीठोपरिस्थं च ध्यायेत्तं साधकोत्तमः
रुद्रान्कालाग्निरुद्रान्तं नाभिखट्गं सुखेटकम् २२८
शूलपट्टं च घराटां च धत्ते वज्रधरास्तथा
भुवनेशान् यथाप्रोक्तं ईशांतश्च ततश्शृणु २२९
कोटयेन्दु किरणाभासं जटामकुटमरिाडतम्
अरूपं रूपकं किंचित् चतुर्भुजसमायुतम् २३०
सायुधं योगपीठस्थं चंद्रबिंबसमाननम्
परावरं शिवं सूक्ष्मं शिवतत्वेश्वरं भजे २३१
शेषाश्च मिश्रवर्णानि अधमं परिकीर्तितम्
चर्मणोन्तर्गतं विद्यात्कपालं परिकीर्तितम् २३२
कापालान्तर्गतं क्रान्तं क्रान्तादन्तर्गतं जलम्

सुपक्वफलकञ्चैव उत्तमं परिकीर्तितम् २३३
अपक्वफलकञ्चैव मद्ध्यमं परिकीर्तितम्
कपालं बालसंज्ञेयं कन्न्यसं परिकीर्तितम् २३४
कुंभोर्ध्वे निक्षिपेत्काले अतिपक्वफलोत्तमम्
क्रान्तात्पूर्वं समादाय अभिषिच्य विशेषतः २३५
क्रान्तादर्शनमात्रेण अभिषिच्य विशेषतः
कारयेद्यदिमोहेन कारयित्वा तु रौरवम् २३६
क्रान्तेन सहितं ग्राह्यं नैवेद्यन्तु विशेषतः
अतिक्रान्तं विशेषेण नैवेद्यं चोत्तमोत्तमम् २३७
अभावेनाळिकेरञ्च क्रान्तेन सहितं जलम्
अभिषिच्य विशेषेण मद्ध्यमं परिकीर्तितम् २३८
मद्ध्यपक्वं जलं स्नाप्य सुरास्नानसमं भवेत्
चर्मणासहितं कुंभे सूर्यवृक्षफलं सति २३९
अतिदीर्घं अतिह्रस्वं वर्जयित्वा विशेषतः
स चर्म्मरहितञ्चैव शिखासहितमुत्तमम् २४०
त्रिणेत्राणि च तन्मद्ध्ये शिखां कृत्वा विशेषतः
कनिष्ठाङ्गुलं तन्नाहं कुंभोर्ध्वे वा विशेषतः २४१
आमूलाग्रफलञ्चैव कपित्थं फलमद्ध्यमम्
कथं मूलाग्रकं शंभो विशेषेण षडानन २४२
शिखां त्रिणेत्रसहितां अग्रञ्चैव प्रकीर्तितम्
रेखा त्रीणि च संयुक्तं मूलञ्चैव प्रकीर्तितम् २४३
ब्रह्माविष्णुश्च रुद्रश्च त्रिरेखा च प्रकीर्तितम्
त्रिणेत्रन्तु विशेषेण तत्वत्रयपदा कृतिम् २४४
शिखाञ्चैव शिखाशक्ति आमूलाग्रञ्च मद्ध्यमम्
मण्डलत्रयरूपञ्च नाडीत्रयमुदाहृतम् २४५
सुमुहूर्ते सुलग्ने च नाळिकेरञ्च ताडनम्
नाळिकेरं समादाय ऊर्ध्वमूलमथोग्रकम् २४६
अधश्शिखाप्रकुर्वीत ताडयेच्च द्विखण्डकम्
शिथिलं कर्मवैकल्यं द्विखण्डं सर्वसिद्धिदम् २४७

सलिलं सहितञ्चैव मूलेनैव निवेदयेत्
विघ्नेशं प्रार्थयेच्चैव दिव्यमुद्रासु योजयेत् २४८
खट्वाङ्गञ्च समादाय गुरुणा दत्तमुद्धृतम्
प्रतिगृह्यस्थपतिभिः पर्वतं ताडयेत्ततः २४९
घण्टानादसुशब्दैव पुंशिला च प्रकीर्तिता
मण्डूकस्वरवच्छब्दं स्त्रीशिला च प्रकीर्तिता २५०
अशनी शब्दमात्रेण न पुंसकशिलास्मृता
पुंशिला शिवभेदानां स्त्रीशिला शक्तिभेदका २५१
प्राकारगोपुरादीनि न पुंसकशिला भवेत्
शिवभेदानि सङ्कल्प्य पुंशिला शिवमन्दिरम् २५२
उत्तमोत्तममित्युक्तं आलयं परिकीर्तितम्
अथवा स्त्रीशिलाञ्चैव कल्पयेच्छिवमन्दिरम् २५३
शिवभेदानि संकल्प्य मन्दिरं शून्यमाप्नुयात्
अथवा पुंशिलाञ्चैव कल्पयेच्छक्तिमन्दिरम् २५४
शक्तिभेदानि सङ्कल्प्य तत्ग्रामं शून्यमाप्नुयात्
नपुंसकशिलायाञ्च आलयं परिकीर्तितम् २५५
बिंबं कल्प्य विशेषेण भिन्नञ्चेत् शून्यमाप्नुयात्
तटित्प्रभा विशेषेण मण्डूकाश्मेति सुस्मृता २५६
त्यक्त्वा सर्वं विशेषेण शिलां विज्ञाय बुद्धिमान्
शिला भेदञ्च सुज्ञात्वा ग्रामाभिवृद्धिकारणम् २५७
देवसान्निद्ध्यमेवोक्तं राजराष्ट्रविवर्द्धनम्
अग्रपार्श्वं प्रगृह्याथ नेत्रत्रयविराजितम् २५८
समादाय च हस्तेन यजमानाय दापयेत्
मूलपार्श्वं प्रगृह्याथ त्रिरेखा संयुतोत्तमा २५९
समादाय शिवं प्रार्त्थ्य स्थापयित्वा प्रपूजयेत्
यत्प्राप्ति लिङ्ग-- तत्प्राणा न कारयेत् २६०
पूर्वे वा मन्दिरं कल्प्य यत्र देशे प्रवर्तते
प्रासादलक्षणं ग्राह्य लिङ्गपीठन्तु कारयेत् २६१
स्वायंभुवं विशेषेण लिङ्गमानं ग्रहे चरेत्

प्रमादे भिन्नलिङ्गं वा लिङ्गन्तु पीठिकान्यसेत् २६२
कूर्माधारशिले द्वे च वर्जयित्वा विशेषतः
पीठं भिन्नं यथा तत्र पीठमात्रं यजेत्ततः २६३
यत्बिंबं पीठिका भिन्नं पीठन्त्यक्त्वा विशेषतः
बिंबं हीनं विशेषेण सर्वं त्यक्त्वा समाचरेत् २६४
अन्योन्य सङ्करं कल्प्य ग्रामनाशकरं भवेत्
अथ वक्ष्ये विशेषेण गर्भगेहस्य लक्षणम् २६५
राजराष्ट्रविवृद्ध्यर्त्थं ग्रामवृद्धिकरं शुभम्
साधकानां हितार्त्थाय शुद्धभूमितलं भवेत् २६६
शिलाभिर्निर्मितं पूज्यं चतुष्कोणं प्रकल्पयेत्
आचार्यः प्राङ्मुखो भूत्वा गर्भन्यासं भवेत्ततः २६७
विघ्नेशं प्रार्त्थयित्वा तु शान्तिहोमं समाचरेत्
न्यासकर्मविशेषेण नवधान्यं तथैव च २६८
द्वारवर्णं द्वाररत्नं यवान्नवविधन्तथा
अष्टमृत्पञ्चगव्यञ्च पञ्च त्वक् नवदर्भकैः २६९
लोकान्तर्प्यविधिं प्रोक्तं नवपात्रेषु निक्षिपेत्
संपुटी करणं कुर्यात् नवकोष्ठान्प्रकल्पयेत् २७०
वितस्तिमात्रविस्तारं खातञ्चेत् चतुरङ्गुलम्
पूर्णचंद्रनिभाकारं नवकोटिषु निक्षिपेत् २७१
आधारशक्तिं तन्मद्ध्ये अनन्ताद्यष्टदिक्षु च
अर्चयित्वा विशेषेण पादबन्धं तथैव च २७२
पद्मबन्धं त्रिहस्तं स्यात्पद्माश्रन्तु त्रयाङ्गुलम्
प्रतिबन्धं तदूर्ध्वे तु निम्नोन्नत समन्तथा २७३
षडङ्गुलोन्नतं कल्प्य दशकोणं तथोपरि
अष्टाङ्गुलोत्तमं विद्यात् षडङ्गुलसमोन्नतम् २७४
त्र्यङ्गुलन्तु तथा चैव द्व्यङ्गुलैर्वा विशेषतः
पूर्वादिपश्चिमान्तं वा अष्टभागं प्रकीर्तितम् २७५
दक्षिणात्सौम्यमष्टौ च कल्पयेत्तु विशेषतः
पार्श्वयोश्चैव षड्भागं द्विभागं मद्ध्यमे तथा २७६

पश्चिमे सौम्यसव्ये च एकभागं बहिस्तथा
उपानमिति विख्यातं जगतीञ्च ततश्शृणु २७७
षडङ्गुलोन्नतं पश्चात्पञ्चाङ्गुलमथापि वा
त्र्यङ्गुलन्तु तथैवापि वेदिं कृत्वा प्रकल्पयेत् २७८
करद्वयोन्नतं वेदी एकार्द्धकरसंयुतम्
करमेकमथैवापि वेदीञ्चैव प्रकल्पयेत् २७९
द्वादशस्तंभपादानि अष्टभागमथापि वा
षट्पादञ्च प्रकर्तव्यं वेदिमद्ध्ये च कल्पयेत् २८०
द्वादशाङ्गुलविस्तारं तद्धनं द्वादशाङ्गुलम्
तस्योपरि तदर्द्धञ्च उपवेदीं प्रकल्पयेत् २८१
तस्यार्द्धं मद्ध्यमं प्रोक्तं तदर्द्धमधमं भवेत्
तस्योपरिदळान्कल्प्य विंशाङ्गुलघनं तथा २८२
मद्ध्यमं षोडशाङ्गुल्यं अष्टाङ्गुल्यमथापि वा
ऊर्ध्वे द्व्यङ्गुलवेदी च तदधो तद्दळा कृतिः २८३
दळान्तरे दळान्कल्प्य दळमद्ध्ये दळन्तथा
कर्कशन्तु विशेषेण तदूर्ध्वे शान्तिकन्तथा २८४
त्रितालमुन्नतं कल्प्य तदर्द्धं मद्ध्यमं भवेत्
तदर्द्धमधमं ज्ञेयं त्रिदशाङ्गुलविस्तरम् २८५
तीक्ष्णाग्रं तीक्ष्णसंध्यग्रं तस्यान्तर्गतविस्तरे
षडङ्गुलं तदन्तेन परितश्चदळाकृतिम् २८६
मद्ध्ये तदङ्गुलं विद्धि तदर्द्धञ्च तदर्द्धकम्
तदूर्ध्वेऽथ दळाकारां तदूर्ध्वे कुमुदं श्रुणु २८७
वेदीसमं प्रकल्प्याथ अश्रलिङ्गाकृतिं भवेत्
षडङ्गुलन्तु विस्तारं विमानाकृतिदृश्यते २८८
नागरञ्चैव श्रीपीठं स्वस्तिकर्षणमेव च
मेरुपृष्ठं गजपृष्ठं सैन्यं वै मानमेव च २८९
नन्द्यावर्तं गण्डिमानं अङ्गराजं नवन्तथा
एवं दशविधं विद्धि नवती षट्प्रभेदकम् २९०
गोमुखा कृतिमग्रे च षडङ्गुलसुवृद्धिकम्

वटोदराकृतिश्चैव द्वादशाङ्गुलमेव च  २९१
करण्डगोपुराकारं विंशाङ्गुलसमन्तु वा
नन्द्यावर्तादि भेदानां चतुर्विंशाङ्गुलन्तथा  २९२
षडङ्गुलन्तु विस्तारं पट्टाकारं सुवीयिकम्
षडङ्गुलन्तु विस्तारं तदूर्ध्वे पद्मनिर्मितम्  २९३
तन्मद्ध्ये इति सङ्कल्प्य षडंगुलप्रविस्तरम्
तस्य पार्श्वे षडंगुल्यं तदन्ते च षडंगुलम्  २९४
अष्टाङ्गुलं तदन्ते तु अष्टाङ्गुलोन्नतोपरि
षडंगुलन्तु विस्तारं षडंगुलसमोन्नतम्  २९५
पञ्चांगुलं प्रविस्तारं तत् बाह्ये च प्रकल्पयेत्
उन्नतञ्च षडंगुल्यं षडंगुलन्तदन्तके  २९६
षडंगुलोन्नतञ्चैव षडंगुलन्तु विस्तरम्
अष्टांगुलोपरि चैव षडंगुलन्तु विस्तरम्  २९७
षडंगुलोन्नतं कल्प्य तत् बाह्ये च षडंगुलम्
पद्मन्तदाकृतिश्चैव तस्योपरि तथैव च  २९८
तत् बाह्ये च षडंगुल्यं ------------
उत्तमं वृषभं ग्राह्यं अर्चयित्वा विशेषतः  २९९
गन्धपुष्पैरलंकृत्य आसनं मूर्त्तमर्च्चयेत्
अश्वत्थैः पनसैर्वापि पाटली निंबवृक्षकैः  ३००
औदुंबरैः प्लक्षतरुश्शमी वा खादिरन्तथा
हलातरुश्चन्दनञ्च हालानिन्दितमुत्तमम्  ३०१
अस्त्रमन्त्रेण संगृह्य वामेनैव तु योजयेत्
सर्वमन्त्रेण बन्धीयात् शिलामस्त्रेण चार्च्चयेत्  ३०२
घोषयेत्तूर्यवाद्यैश्च चण्डनादविसर्पिणम्
यावन्मात्रं प्रकल्प्याथ तावत्शुद्ध्यन्ति भूतले  ३०३
उर्वारुकं कारवल्ली शाकिनी बृहती तथा
अन्यसस्यानि सर्वाणि एकभोगं विधाय च  ३०४
नवग्रहाणि हुत्वा तु विघ्नेशं पूजयेत्ततः
ब्राह्मणान् भोजयेत्तत्र उच्छिष्टान् परिपूरयेत्  ३०५

तृणं संग्राह्य विधिवत् गोभिर्गोष्पदधूळिभिः
अग्निना दाहयेत्तत्र पुण्याहं प्रोक्षणन्तथा ३०६
इत्येवं विधिवत्कृत्वा सर्वज्ञानप्रदायकम् ३०७
इत्युत्तरकारणे प्रतिष्ठातन्त्रे कर्षणविधिस्तृतीयपटलः

शिलापरिक्षा प्रारंभः
अथातस्संप्रवक्ष्यामि श्रुणु शरवणोद्भव
शिलापरीक्षा कर्त्तव्या उत्तमासाधकोत्तमः १
स्थापकोस्थपतिश्चैव राजा तु मंत्रिभिस्सह
भृत्यैश्च शिल्पिभिश्चैव वेदशास्त्रादिपाठकैः २
ज्योतिष्कैर्मांत्रिकैर्वापि चान्यैः परिजनैस्सह
सटंकमुसलैर्भिण्ड रज्जुकाषायशिञ्जिनी ३
कथितैर्ज्वळितैस्संघैः पत्रिभूटंकिनी तथा
शलाकावर्त्तुळीकर्णी सर्वोपकरणैस्सह ४
सुमुहूर्त्ते सुलग्ने च प्रस्थाय विधिमार्गतः
भस्मरुद्राक्षधारी च शिवदीक्षा युतस्तथा ५
नित्यकर्मसमाराद्ध्य विप्रमेकेन दर्शयेत्
घूटको दक्षिणे भागे सर्पाशी वामभागके ६
उलूकोऽपि च सव्ये तु भारद्वाजस्तु वामके
बकोपि च सृगालश्च मधूरसरघावपि ७
सव्ये भागे प्रसर्त्तव्या तार्क्ष्यस्तु वामभागके
श्येनमार्ज्जारशुनकाः सर्पं वै पुष्पिणी तथा ८
गोक्षीरं वर्जयेत् चैव अकाले वृष्टिरेव च
तैलाभिषिक्ती तक्री च अग्निकाष्ठानदर्शयेत् ९
नित्यकर्मसमाराद्ध्य आचार्यस्तु सलक्षणम्
कुनखी अङ्गहीना च बधिरा कर्णशून्यका १०
हीनांगुलीरसीकश्चेत् एकाक्षी श्यामदन्तका
कुरूपी जळिनी चैव नखपुष्क इतिस्तथा ११
दुराचारोपिटश्चैव मूलसो अतिह्रस्वकः

बह्वाशीनास्तिवाक्यश्च एतान्वै सन्त्यजेत्ततः  १२
तेजस्वी सुमुखश्चैव सन्तुष्टो वेदपारगः
लक्षाद्ध्यायी गुरुश्लाघ्यः तस्यार्द्धं मद्ध्यमं भवेत्  १३
पञ्चविंशत्सहस्रं वा उत्तमामद्ध्यमाधमा
शुक्लयज्ञोपवीतांगः सशिखैः सौम्यसुन्दरः  १४
पञ्चकञ्छैरलंकृत्य कटिसूत्रं विशेषतः
धौतवस्त्रोत्तरीयञ्च भस्मरुद्राक्षधारिणः  १५
पञ्चांगुलन्तु विस्तारं दशांगुलसमन्वितम्
वृत्ताकृतिसमश्चैव भूतवर्णैश्च तन्तुना  १६
मुक्तिकामो विशेषेण कृष्णवर्माणि कारयेत्
व्याघ्राजिचर्मणा कल्प्य दारुजैर्वापि कल्पयेत्  १७
चन्दनैः पाटलैश्चैव पलाशपनसैस्तथा
बिल्वैर्वादारुयाज्ञैश्च संपुटाकृतिनिर्मितम्  १८
अन्तश्शुचिबिल्वफलं वीक्षणाद्या विशुद्धयेत्
भूमावपतिता ग्राह्या सव्येनैव तु गोमयम्  १९
वामेन पिण्डकां कृत्वा बहुरूपेण शोषयेत्
नरैश्च दाहकं विद्यात् ईशानेनाभिमन्त्रयेत्  २०
भस्मसंग्राह्य निक्षिप्य नवभाण्डेषु निक्षिपेत्
वने उपवने चैव आरामे पर्वतस्थले  २१
गोमयं शुष्कमाहृत्यमर्दयित्वा विशेषतः
पूर्ववत्कल्पयेच्चैव यथा वामानुभस्मकम्  २२
रुद्राक्षलक्षणं वक्ष्ये अष्टविंशतिभेदतः
गौडं जाति करे खञ्ज नामरुद्राक्षमेव च  २३
भद्राक्षं च बिसीबीजं मल्लिकारक्तश्वेतकौ
गरिकोलिसिबीजं स्यात् सुवर्णकदळी तथा  २४
वननिंबसुबीजं स्यात् वल्लरीवृक्षमेव च
स्वलंबीजं स्वर्णजंबुदाह्यवृक्षन्तथैव च  २५
हेमपद्माक्षमित्युक्तं रक्तमञ्जरिमेव च
हेमकुड्यौ कूटविषं राजवृक्षं समेव च  २६

पत्रपुन्नागमित्युक्तं पञ्चरोवनमेव च
हलंकोंगरबीजं स्यात् हेमवल्लीसुबीजकम्  २७
पारिवृक्षं वीरवनं कुन्दरूष्णान्तथैव च
अष्टाविंशति भेदानि रुद्राक्षधारणं फलम्  २८
गन्यन्ते वर्षधाराश्च कर्णे भिन्नन्तु मालया
यावन्मात्रं विशेषेण धार्यते शिवभावनैः  २९
कार्पासं कृष्णकार्पासं गिरिकार्पासमेव वा
राजकार्पासमित्युक्तं चतुर्विधमिहोच्यते  ३०
विप्रादीनां प्रकर्त्तव्यं कर्मणा परिकीर्तितम्
अघोरेणैव संग्राह्य वामेनैव तु निर्मितम्  ३१
सद्यो जातेन मन्त्रेण ------- नवतीस्तथा
त्रिगुणं त्रिगुणी कृत्य त्रिसरं वित्तमेव च  ३२
मद्ध्ये ग्रन्धिं समुच्चार्य ब्राह्मणानाञ्चतुस्तथा
क्षत्रियान्त्रिसरं प्रोक्तं वैश्यानेकसरं भवेत्  ३३
अन्याविनिर्मितं सूत्रं शूद्राणान्धारयेत्ततः
कर्म्मकालेषु धार्यञ्च अन्यकालेषु वर्जयेत्  ३४
अथ वक्ष्ये विशेषेण दण्डलक्षणमुच्यते
वेणुदण्डं समादाय ललाटान्तं द्विजोत्तमः  ३५
क्षत्रियाणान्तु कण्ठान्तं शूद्राणान्तु स्तनान्तकम्
वसुषट्पञ्चवर्षाणि कूटपर्वसमाचरेत्  ३६
उत्तमं पर्वते तीरे सुमुहूर्त्ते सुलग्नके
गिरिराजवरश्रेष्ठे सर्वलोकहिताय च  ३७
सर्वेषामनुग्रहात्र्थाय शिवालयं प्रकल्पयेत्
क्षमस्वेति नमस्कृत्य पर्वतश्रेष्ठमुत्तमम्  ३८
पुण्याहप्रोक्षणन्तत्र पर्वतेश्वरमर्चयेत्
पूर्वे शिरो मेषवृषे च कुंभे वह्नौ शिरः कर्कटकस्तथैव ।
वायौ शिरः सिह्मतुलाश्च युक्ते ईशे शिरो वृश्चिकमीनयुक्ते  ३९
सोमदिक्शेषमासौ च शाय्यते त्वविशेषतः  ४०
मेषे वृषे तु लायाञ्च मकरे मीनमासके

संक्रान्ते उत्थितो देवः इतरेशाययेत्सुखम्  ४१
विघ्नेशः पूजयेत्तत्र गोमयालेपनं कुरु
कपिलागोमयेनैव पक्वबिल्वफला कृतिम्  ४२
धुत्तूरदूर्वकुसुमैर्गन्धपुष्पाक्षतैस्तथा
चलासनं समभ्यर्च्य मूलेनावाहयेत्ततः  ४३
सितवासोत्तरीयञ्च उपवीतेन संयुतम्
स्वर्णाक्षतैस्वर्णदूर्वान् अर्चयित्वा यथा विधि  ४४
अपूपैर्बहुविधैश्चैव क्षीरान्नं कृसरान्नकम्
गुळान्नञ्चैव शुद्धान्नं रक्ताभा इक्षुदण्डकैः  ४५
अर्कोदकैश्च विबुधैः कपित्थञ्च तथैव च
पक्वमाजी फलञ्चैव पनसं कदळी तथा  ४६
अपक्वं वर्जयेच्चैव शर्कराकारवत्तथा
नृसिंहीक्षु गिरिगात्री पैशाचकदळी तथा  ४७
नैवेद्यन्तु विशेषेण नाळिकेरं ततश्शृणु
नाळिकेरतरुश्चैव त्रिविधो भेद उच्यते  ४८
अरुणोदयवेळायां अंशुकोद्भवमुच्यते
सूर्यवृक्षमिति ज्ञेयं उत्तमं परिकीर्तितम्  ४९
चर्महित्वा विशेषेण नैवेद्यं विधिमुत्तमम्
निशाकरोदये काले विस्तारं संप्रकीर्तितम्  ५०
षडङ्गुलोन्नतं कल्प्य तस्यान्ते च षडङ्गुलम्
षडङ्गुलन्तु विस्तारं षडङ्गुलसमोन्नतम्  ५१
द्विकरं स्तंभमाकारं चतुरश्रा कृतिन्तु वा
कुमुदैव विशेषेण चतुरंशांशिवेति च  ५२
तदूर्ध्वे स्तंभमाकारं तदूर्ध्वे कलशा कृतिम्
पद्मोदरसमं कृत्वा कुण्डोदरतदूर्ध्वके  ५३
चित्राकारन्तु तन्मद्ध्ये कुंभमूले विशेषतः
एकरेखा त्रिरेखा च पञ्चरेखा तथैव च  ५४
तदधश्चित्रसङ्कल्प्य स्वेच्छाचित्रान् विशेषतः
कलशोर्ध्वे दशाङ्गुल्यं तदर्द्धञ्च तदर्द्धकम्  ५५

कलशस्यैव पार्श्वे तु षदङ्गुलसुदीर्घकम्
तस्यार्द्धं वा तदर्द्धञ्च चतुरश्रं त्रिरश्रकम्  ५६
द्विरश्रं वा विशेषेण चित्राकारन्तु निर्मितम्
तदूर्ध्वे चतुरङ्गुल्यं तदर्द्धञ्च तदर्द्धकम्  ५७
कर्णं कृत्वा विशेषेण तस्योर्ध्वे तु षडानन
चतुरश्रं त्रिवृत्तं वा षोडशाङ्गुलमुन्नतम्  ५८
तदर्द्धञ्च तदर्द्धञ्चाधोमुखा कृतिन्तथा
स्तंभविस्तारमात्रं वा ऊर्ध्वे कुब्जा कृतिन्तथा  ५९
तदधो द्वादशाङ्गुल्यं तदधः षोडशाङ्गुलम्
अर्द्धपद्मा कृतीरेखा तदधोऽपि षडङ्गुलम्  ६०
तदर्द्धञ्च तदर्द्धं वा तस्यार्द्धं वा विशेषतः
कर्णं सङ्कल्प्य विधिवत् तदूर्ध्वे श्रुणु षण्मुख  ६१
ऊर्ध्वपद्मं विकसितं नाळाग्रान् परितस्तथा
तदूर्ध्वे चैव निष्कृत्य चतुर्विंशां सदीर्घकाम्  ६२
चतुरश्रा कृतिं कृत्वा फलकाकारमुत्तमम्
तदूर्ध्वे फलकाकारं तदूर्ध्वे कर्णनिर्मितम्  ६३
तन्मद्ध्ये दळमालिख्य षोडशाङ्गुलविस्तरम्
चतुरश्राकृतिं स्तंभं तदूर्ध्वे च विशेषतः  ६४
पूर्वे च स्तंभमाकारं दक्षिणे उत्तरे तथा
पश्चिमे तु तथा चैव पृथक्पृथग्विशेषतः  ६५
षोडशाङ्गुलदीर्घञ्च पार्श्वयोश्च विशेषतः
तन्मद्ध्ये तु षडङ्गुल्यं पार्श्वयोश्च विशेषतः  ६६
तन्मद्ध्ये च षडङ्गुल्यं पार्श्वयोश्च बहिस्तथा
पद्मनाळसमाकारं पद्मपुष्पाकृतिन्तथा  ६७
तदूर्ध्वे पद्मगायत्र्या शृङ्गमद्ध्ये तथैव च
त्रितालविस्तरञ्चैव सिह्मवक्त्रा कृतिन्तथा  ६८
देवकोष्ठमहं वक्ष्ये श्रुणुष्व च षडानन
द्वादशाङ्गुलविस्तारं विस्तरं तद्बहिस्तथा  ६९
पद्मगात्रं समालिख्य तदूर्ध्वे शृङ्गनिर्मितम्

त्रिकरञ्च बहिश्चैव द्विकरैकैकविस्तरम्  ७०
षडङ्गुलघनं वापि अर्द्धार्द्धं वाथवा पुनः
पद्मनाळसमं कृत्वा तदूर्ध्वे गात्रगान्तथा  ७१
तदूर्ध्वे पद्मगात्राणि शृङ्गमद्ध्ये तथैव च
पादयोरन्तरे चैव नवभागं प्रकीर्तितम्  ७२
मद्ध्ये त्रयांशं संग्राह्य पञ्चभागं प्रकीर्तितम्
द्विभागं स्तंभसंयुक्तं त्रिभागं कोष्ठमुच्यते  ७३
उन्नतार्द्धन्तु कोष्ठं स्यात्स्तंभाग्रं द्वारतत्समम्
तदूर्ध्वे गात्रगांश्चैव तदूर्ध्वे शृङ्गनिर्मितम्  ७४
तदूर्ध्वे कर्णसंयुक्तं गात्रकञ्च तदूर्ध्वके
शृङ्गाकारन्तु निर्वृत्य पार्श्वयोश्चैव मद्ध्यमे  ७५
सिह्मवक्त्राकृतिं विद्यात्सिह्मस्य तलनिर्मितम्
तदूर्ध्वे चित्रकुंभन्तु पञ्चमन्तु तथैव च  ७६
अथोपादान्तरे चैव देवकोष्ठन्तु निर्मितम्
गात्रोपरिविशेषेण षडङ्गुलघनं भवेत्  ७७
ऊर्ध्वगात्रसमासक्तान्वृत्ताकारन्तु निर्मितम्
पार्श्वेषु च सुवृत्तौ च मद्ध्ये चित्रान् लिखेत्ततः  ७८
अन्ये सन्ध्यग्रतन्मद्ध्ये स्तंभानि च विशेषतः
स्तंभमूलान्तरे चैव घटक्षीरन्तु निर्मितम्  ७९
ऊर्ध्वगात्रानि पर्यन्तं अग्रे सिह्ममुखाकृतिम्
गर्भगेहमितः प्रोक्तं प्रासादलक्षणं श्रुणु  ८०
चतुरश्रा कृतिं कृत्वा उपानं वेदिकान्तथा
तन्मद्ध्ये देवकोष्ठञ्च कर्णकूटञ्च पूर्ववत्  ८१
स्तंभद्वयं तथा चैव शृङ्गकन्तु तदूर्ध्वगे
तदूर्ध्वे शफराकारं पद्मकुंभं ततोपरि  ८२
पार्श्वयोश्च विशेषेण सप्तांशं वसुसंख्यया
स्तंभद्वारं विशेषेण शृङ्गाकारं तदूर्ध्वके  ८३
तदूर्ध्वे स्तंभसंयुक्तं किञ्चित् शृङ्गैश्च संयुतम्
विंशाङ्गुलोन्नतञ्चोर्ध्वे पद्मोदरसमाकृतिम्  ८४

अधोमुखस्य पद्मस्य मकुटालंकृतन्तथा
मद्ध्ये सिह्ममुखाकारं पार्श्वयोश्च विशेषतः ८५
एककोष्ठं त्रिकोष्ठञ्च पञ्चकोष्ठन्तथैव च
सप्तकोष्ठं नवं विद्यात् एकादश्यां त्रयोदश ८६
वृषभस्तलमूर्ध्वे च चतुर्दिक् वृषभाकृतिम्
त्रिकरं द्विकरं वापि करमेकोन्नतं तथा ८७
कर्णोपरिविशेषेण चतुर्दिक्कोष्ठनिर्मितम्
वृत्ताकारं विमानं वा अष्टाश्रं वा विशेषतः ८८
पद्मो रसमाकारं एकांशं शृङ्गमद्ध्यमे
पद्मं विकसिताकारं परितोष्टदळान्तथा ८९
द्वादशं षोडशं वापि चतुर्विंशतिरेव वा
पूर्णकुंभेन निर्वृत्य चूतपत्रा कृतिन्तथा ९०
नाळिकेराकृतिञ्चैव ऊर्ध्वे ऊर्ध्वमुखा कृतिम्
पञ्चवर्णैरलंकृत्य कल्पयेदीशभेदकान् ९१
वेदिकोर्ध्वे विशेषेण अष्टाश्रं निर्मितं पुरा
पद्माकारं विशेषेण अधोमुखसुपङ्कजम् ९२
दळाश्रान्पार्श्वयोरेव चतुर्दीक् देवकोष्ठकम्
ऊर्ध्वे पद्माकृतिञ्चैव कुंभं कृत्वा विशेषतः ९३
यद्वा सुवृत्तमेवाख्यं चतुर्दिक् देवकोष्ठकान्
ऊर्ध्वे पद्मघटाकारं यद्वा च श्रुणु षण्मुख ९४
चतुरश्राकृतिं कृत्वा चतुर्दिग्देवकोष्ठकान्
नन्द्यावर्त इति प्रोक्तं यद्वा चैव ततश्शृणु ९५
पूर्वपश्चिमदीर्घानि विमानाकृतिकल्पयेत्
विमानस्याकृतिं कृत्वा तत्तत् भागे सुवृत्तकम् ९६
पूर्वभागे विशेषेण ऊर्ध्वं सिह्ममुखा कृतिम्
सुवृत्ताकारपार्श्वं च दळाकृति विशेषतः ९७
दिक्षु मद्ध्ये विशेषेण विदिक्षु चतुमद्ध्यमे
गात्रमूले याळपादौ कपोतं याळमस्तके ९८
मद्ध्यवृत्तं विलिख्याथ गजपृष्ठाख्यमुच्यते

नासिका मद्ध्यमे चैव हंसावरणमालिका ९९
भूतमाला द्वितीयञ्च याळमाला तृतीयकम्
गर्भगेहस्य सव्ये च पश्चिमे उत्तरे तथा १००
दक्षिणे दक्षिणामूर्तिं वैष्णवं पश्चिमे तथा
ब्रंहाणं कल्पयेद्वामे पश्चात् लिङ्गोद्भवन्तु वा १०१
पार्श्वयोश्च विशेषेण ब्रह्माविष्णुस्तथैव च
ब्रंहस्थानादधोभागे मुखाकृतिमथ शृणु १०२
त्रिकरं द्विकरञ्चैव करमेकमथापि वा
अष्टाङ्गुलन्तु विस्तारं उन्नतं द्वादशाङ्गुलम् १०३
पादं त्रयङ्गुलञ्चैव अधोपद्मदळाकृतिम्
मद्ध्ये तु मुकुळाकारं पट्टाकारं सुपार्श्वयोः १०४
मद्ध्ये स्तंभसमायुक्तं चतुरश्रं प्रकीर्तितम्
याळवक्त्रं विशेषेण सिह्मवक्त्रा कृतिन्तथा १०५
धारामुत्तरपूर्वा च कन्या देशेषु वर्जयेत्
धारणं कल्पमात्रेण पट्टिकां वा विशेषतः १०७
स्थापयेत् गोमुखां कृत्वा तत्तद्वामे प्रकल्पयेत् १०८
इति गर्भगृहलक्षणपटलः चतुर्थः

गोपुरलक्षणप्रारंभः

अथ वक्ष्ये विशेषेण लक्षणं गोपुरस्य च
गर्भगेहस्य विस्तारं अर्द्धद्विगुणविस्तरम् १
पञ्चभागं तथा कृत्वा एकञ्चेत् द्वारमुच्यते
पार्श्वयोश्च चतुर्भागं खातं समतलन्तथा २
द्वितीया वरणे चैव सप्तभागं प्रकीर्तितम्
षड्भागं पार्श्वयोश्चैव त्रिभागं द्वारमुच्यते ३
गोपुरस्य क्रमं वक्ष्ये उत्तमा मद्ध्यमाधमा
प्रथमा वरणे चैव वेदिं कृत्वा विशेषतः ४
वितस्ति पञ्चको ज्ञेय उन्नतं सुप्रकीर्तितम्
उपानादीनि सङ्कल्प्य वेदिं कृत्वा तथोपरि ५

उपानजगती चैव कुमुदा पट्टिका तथा
एतन्मद्ध्ये कर्णकूटं देवकोष्ठं प्रकल्पयेत् ६
देवकोष्ठं विशेषेण स्तंभमद्ध्ये पृथक्पृथक्
कृमिपादञ्च तत्पार्श्वे युक्त्या चित्रान्प्रकल्पयेत् ७
द्वारस्य विस्तरं ग्राह्यं द्विगुणोन्नतमारभेत्
द्वाराग्रे शृङ्गवीधिस्स्यात् पार्श्वयोश्चुळुका कृतिम् ८
द्वारस्य विस्तरं ग्राह्यं चतुर्मानं प्रकीर्तितम्
एकाशं द्वारविस्तारं मद्ध्ये स्तंभद्वयं तथा ९
पार्श्वान्ते कर्णकूटञ्च कर्णशालाञ्च मद्ध्यमे
द्वारत्रयं विशेषेण भूतसङ्ख्या तथैव च १०
सप्तसङ्ख्या इति प्रोक्तं तस्याग्रेऽथ करं तथा
तलौ तलौ विशेषेण एकांशं वर्जयेत्पृथक् ११
द्वारविस्तारकं ग्राह्य अष्टभागं प्रकीर्तितम्
एकांशोन्नतकञ्चैव खण्डस्य द्विगुणोन्नतम् १२
शिखराकारनिर्वृत्या पार्श्वयोश्चैव मद्ध्यमे
नासिकाकृतकं विद्यात् पार्श्वयोः कर्णकूटकम् १३
कर्णशालां विसृज्याथ स्थूपिदण्डं विशेषतः
भूतिसङ्ख्या जनिश्चैव नव एकादशस्तथा १४
विंशाङ्गुलोन्नतं स्तंभं स्तंभाग्रे घटनिर्मितम्
पूर्णकुम्भा कृतिं कृत्वा स्थूललिङ्गाक्षतं तथा १५
पञ्चवर्णैरलंकृत्य पूजयेत्साधकोत्तमः १६
इति गोपुरलक्षणपटलः पञ्चमः

मण्टपलक्षणपटलप्रारंभः

अथातस्संप्रवक्ष्यामि श्रुणु मण्टपलक्षणम्
गर्भगेहस्य विस्तारं तत्समं पूर्वभागके १
गर्भगेहस्य दीर्घेषु अर्द्धभागन्तु वृद्धिदम्
दीर्घाणि चैव कृत्वा तु पार्श्वयोस्तंभलिख्यते २
रसभूतमुनिश्चैव चतुर्विंशति स्तंभकान्

षोडशञ्च तदर्द्धञ्च पूर्ववत्कल्पयेत्ततः ३
मद्ध्ये स्तंभद्वयञ्चैव चित्राकारं तु निर्मितम्
विस्तरञ्चेत् त्रिभागस्स्यात् एकभागं ग्रहेत्ततः ४
द्वारस्य विस्तरं प्रोक्तं उन्नतं षट्पदं लिखेत्
अतोग्रमण्टपं वक्ष्ये अर्द्धमण्टपविस्तरम् ५
द्विभागं कुर्वते ज्ञेय एकभागं ग्रहेत्ततः
दक्षिणे उत्तरे चैव एकभागं पृथक्पृथक् ६
मण्टपस्यैव मद्ध्ये तु दशस्तंभं विशेषतः
षट्स्तंभञ्च चतुस्तंभं मण्टपं कारयेत्ततः ७
द्वात्रिंशत्स्तंभसंयुक्तं षोडशस्तंभमेव वा
अष्टस्तंभेन संयुक्तं मण्टपालंकृतं गुह ८
द्वारस्य दक्षिणे पार्श्वे अहस्करपदं भवेत्
तस्यैव दक्षिणे पार्श्वे पाकशालापदन्तथा ९
तत्रैव पश्चिमे पार्श्वे उमास्थानं प्रकीर्तितम्
देवस्य पश्चिमे चैव किञ्चिन्नैर्ऋतदेशके १०
उमास्कन्देश्वरस्थानं तस्यैव दक्षिणे तथा
विनायकपदं प्रोक्तं विमानाकृतिमुत्तमम् ११
पश्चिमे वायवे चैव तयोर्मद्ध्ये गुहस्थलम्
वायौ लक्ष्मीपदं प्रोक्तं तत्पूर्वे चंडिकापदम् १२
तत्पूर्वे महिषाशीञ्च तत्पूर्वे बहिरेव च
ईशानोत्तरयोर्मद्ध्ये नटेश्वरपदं तथा १३
तत्पश्चिमे पदे चैव होमधारिं विशेषतः
तस्य पश्चिमपार्श्वे च गौरीस्थानं प्रकल्पयेत् १४
गौर्याथ उत्तरे पार्श्वे चण्डस्थानं प्रकीर्तितम्
नटेशस्यैव ऐशान्ये शयनालयमुत्तमम् १५
गोपुरस्योत्तरे भागे क्षेत्रपालपदन्तथा
क्षेत्रपालोत्तरे भागे यागस्थानं प्रकीर्तितम् १६
देवस्य पूर्वदिग्भागे अनड्वाहपदन्तथा
तत्पूर्वे वेदिकां कृत्वा बलिपद्मं विशेषतः १७

चित्राकारन्तु निर्वृत्य पञ्चवर्णैरलङ्कृतम्  १८
इति मण्टपलक्षणपटलष्षष्ठः

पीठलक्षणपटलप्रारंभः
अथातश्शङ्करशंभो सर्वलोकहिताय च
पीठस्य लक्षणं देववदमे जगतः प्रभो  १
अथ वक्ष्ये विशेषेण समासात् श्रुणु षण्मुख
अष्टाश्रमुत्तमं प्रोक्तं माया त्रिविधरूपकम्  २
अशुद्धञ्चेदधो भागे शुद्धाशुद्धञ्च मद्ध्यमे
शुद्धमूर्ध्वास्यकं विद्यात् वक्ष्येऽहं श्रुणु षण्मुख  ३
अष्टाश्रं चतुरश्रं वा वृत्ताकारमथापि वा
स्वायंभुवं विशेषेण गर्भगेहतलोपरि  ४
क्रियालिङ्गं विशेषेण नन्द्यावर्तशिलोपरि
चतुर्विंशतिभागञ्च पक्षसंख्या पदोन्नतम्  ५
चतुरश्राकृतिं कृत्वा लिङ्गनाहञ्च संग्रहम्
तत्समं पीठविस्तारं तदर्द्धं विस्तरन्तु वा  ६
तत्त्रयं अधमं प्रोक्तं तच्चतुष्कन्तु कन्यसम्
विस्ताराद्र्धोन्नतं विद्यात्त्रिभागं उन्नतं तथा  ७
उन्नतं तत्समं प्रोक्तं विस्ताराद्र्धन्तु गोमुखम्
उन्नतं पञ्चभागञ्च उपानं एकमुच्यते  ८
पद्मदामाकृति त्वेकं कुण्डमेकं भवेत्ततः
ऊर्ध्वछदाकृति त्वेकं एकभागन्तु वेदिका  ९
दक्षिणात् गोमुखान्तश्च तत्समं कुण्डनाहकम्
अर्द्धभागाधिकं वापि कल्पयेत्तु विशेषतः  १०
मद्ध्ये नादं सुवृत्ताङ्गं पीठं कल्प्य यथाविधि
बाणलिङ्गाकृति प्रोक्तं विशेषं कश्चिदुच्यते  ११
लिंगनाहं ग्रहेत् विद्वान् पञ्चभागोन्नतं तथा
चतुर्भागोन्नतं वापि त्रिभागद्वयमेव वा  १२
एकभागोन्नतं कृत्वा शरवेदोन्नतं तथा

पूर्वेषु कल्पयेच्चैव गृहं वा मराटपन्तु वा १३
प्रासादगोपुरादीनि प्राकारं त्वालयन्तु वा
अथ पूर्वेषु निर्माणं तथा कल्पेद्विशेषतः १४
मोहेन विहितं कार्यं महारोगक्षयं भवेत्
पश्चाच्च यत्पुरं कृत्वा ज्वालानुकलमाप्नुयात् १५
बिंबादीनि विशेषेण यत्पूर्वं यावदाचरेत्
तावत्सङ्कल्पमात्रेण ग्रामाभिवृद्धिदं तथा १६
सर्वलोकहितं पुण्यं सर्वकामार्त्थसिद्धिदम् १७
इति पीठलक्षणपटलस्सप्तमः

शक्तिलक्षणपटलप्रारंभः
अथातस्तु कथं शंभो वदमे शक्तिलक्षणम्
शिवसामर्त्थ्यमेवोक्तं शक्तिं पर्याय नामतः १
अव्यापकं चिद्घनञ्च निर्मलं शङ्करं शिवम्
शिवकान्त्यौ विशेषेण किञ्चित् शक्तिञ्च संज्ञया २
हृतकीटामिव प्रोक्तं परशक्तिरितिस्तथा
सहस्रांशु कृतश्शक्तेस्सहस्रांशं पृथक्पृथक् ३
आदिशक्तिरिति प्रोक्तं इच्छाशक्तिरितिस्तथा
ज्ञानञ्चेत्तु क्रियाशक्ति पञ्चकन्तु विधं भवेत् ४
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिरितिस्तथा
शान्त्य तीत इति प्रोक्तं तासां वाप्यथवाचकः ५
शिव एवस्वसामर्त्थ्यात् सृष्टिकाले विशेषतः
शिवज्योतिभृताञ्चैव सूर्यकान्तेर्विशेषतः ६
यद्वर्णं शिरसि क्षिप्य अधोभागेषु दर्शयेत्
तदेवशिवतत्त्वं हि प्रतिपठ्यन्तथैव च ७
सशंभू क्षिप्यमात्रेण शिवतत्वं प्रकीर्तितम्
उद्योगं सशिवेनैव शक्तितत्वं प्रकीर्तितम् ८
शक्तितत्वं विशेषेण सूक्ष्मनादोद्भवन्तथा
नादे बिन्दुसमुत्पन्नं बिन्दौ सादाख्यमुच्यते ९

मन्त्राः बदाश्च वर्णाश्च तत्वाश्च भुवना तथा
तत्वाध्वा च कराध्वा च मन्त्रशास्त्रमनन्तकम्  १०
उद्भवत्वा द्विशेषेण सादाख्यं ईश्वरोद्भवम्
मद्ध्यमा वैखरी चैव सूक्ष्मा च वै जयन्तिका  ११
बिन्दौ समुद्भवं प्रोक्तं विशेषन्तु षडानन
बिन्दुरूपात्सहस्रं स्यात् उमाशक्तयोद्भवन्तथा  १२
अंबीगणांबिका चैव गङ्गा गौरी मनोन्मनी
एकैकात्तु सहस्रांशात् जायते क्रमतस्तथा  १३
वक्ष्ये गौरी सहस्रांशात् शतकोटयश्च शक्तयः
जगत् शक्तिमयं विद्यात् शक्तिं प्रेरयिता शिवः  १४
योगं भोगं तथावीरं त्रिविधं शक्तिरुच्यते
लिङ्गाकारं विशेषेण शिवतत्वं प्रकीर्तितम्  १५
तदधः शक्तितत्वञ्च योगपर्याय वाचकः
योगशक्तिरिति प्रोक्ता पीठलिङ्गा कृतिस्तथा  १६
भोगशक्तिरिति प्रोक्तं जगत्सृष्ट्यर्थकारणम्
वीरशक्तिरिति प्रोक्तं सर्वानुग्रहकारणम्  १७
शुद्धं योगमिति प्रोक्तं शुद्धाशुद्धं च भोगिनी
अशुद्धं वीरशक्तिश्च तस्यां पर्याय वाचकः  १८
अथ वक्ष्ये विशेषेण शक्तीनां लक्षणं श्रुणु
त्रयोविंशति तन्मानं द्वाविंशत्येकविंशतिः  १९
अष्टादशं षोडशं वा द्वादशं वा समोन्नतम्
हस्तलिङ्गाकृतिञ्चैव तत्समं शक्तिरुच्यते  २०
एकार्द्धं द्वयमानं वा त्रिभागोच्चञ्च कल्पयेत्
बाणलिङ्गस्य वक्ष्येऽहं श्रुणु शरवणोद्भव  २१
पीठमूलाद्यथा चैव लिङ्गमूर्ध्नान्तमेव च
तन्मानं शक्तिरित्युक्तं एकार्द्धञ्चेद्विभागकम्  २२
अर्द्धद्वयञ्च कर्तव्यं त्रिमानोन्नतमारभेत्
अतिह्रस्वविशेषेण लिङ्गपीठे तथैव च  २३
सङ्गृह्य पीठविस्तारं आत्मार्थे वा परार्थके

द्वयात् भूताङ्गुलान्तं वा आत्मार्थमभिधीयते २४
तस्योपरि परार्थयः आत्मार्थं लक्षणं श्रुणु
पादाङ्गुष्ठात् ललाटान्तं उन्नतं परिकीर्तितम् १५
कर्णान्तं नासिकान्तं वा अंसान्तञ्च स्तनान्तकम्
नखाधिक्ये महाव्याधिः अङ्गुल्याधिक्यनाशनम् १६
पादाधिक्ये पुत्रहानिः ऊर्वधिक्ये प्रजाक्षयम्
मद्ध्याधिक्ये पुत्रहानिः ऊर्वाधिक्ये प्रजाक्षयम् १७
हस्ताधिक्ये हस्तहीने यजमानो विनश्यति
मानञ्चेदुपमानञ्च उन्मानमिति कत्थ्यते १८
लंबमानमिति प्रोक्तं यन्मानञ्चेति कीर्तितम्
स्कन्धाधिक्ये स्कन्धहीने स्थपती क्षयमेव वा १९
वक्त्राधिक्ये वक्त्रहीने आचार्यो नाशनं भवेत्
नासाधिक्ये दारनाशः कर्णाधिक्ये कुलक्षयम् २०
मकुटाधिक्यमेवोक्तं चिरात् बिंबञ्च नश्यति
कोष्ठाधिक्ये स्फोटकञ्च हीने तु ग्रामनाशनम् २१
तालुमूलाल्ललाटान्तं तन्मानं मकुटोन्नतम्
तस्मात्त्रिपादमानं वा अर्द्धादि कल्पयेत्ततः २२
अर्द्धैकपादं यः कुर्यात्कन्न्यसन्तु विधीयते
कर्णान्ततः संविदध्यात् अस्त्रग्रामान्प्रकल्पयेत् २३
इति सङ्कल्पमात्रेण पद्मोपरि विशेषतः
पद्मासनेन संपूज्य नित्यपूजाः समाचरेत् २४
नैमित्तिकं न चेच्चैव चतुरश्रासनं तथा
इत्येतैर्लक्षणैर्युक्तं कारयेत्साधकोत्तमः २५
इति शक्तिलक्षणपटलोऽष्टमः

ग्रामशान्तिपटलप्रारंभः

अथातस्समहेशानग्रामशान्तिविधिं वद
सर्वलोकहितं पुण्यं वक्ष्येऽहन्तु षडानन १
ग्रामनूतनकाले तु क्षेत्रे वा मन्दिरेऽपि वा

महाप्रतिष्ठा काले तु पूर्वदिक्षु क्रमेण वा २
ग्रामशान्तिक्रमञ्चैव देवस्य पूर्वभागके
ग्रामस्य पूर्वभागे च चतुस्सन्धिस्थलेऽपि वा ३
कारयेत् शान्तिकर्मापि अन्यदेशेषु वर्जयेत्
ब्रह्महत्तिस्थले वापि अशनी पतितस्थले ४
कर्दमे पतितक्षेत्रे क्षारे वा श्रेणि तीरके
उद्यानोपवने चैव पर्वतस्य समीपके ५
समुद्रतीरे वर्जयेदन्यदेशेषु कारयेत्
अष्टाष्टस्तंभसंयुक्तं द्वात्रिंशत् स्तंभमेव वा ६
षोडशस्तंभमेवाथ मण्टपं कारयेत्ततः
कृष्णध्वजान्स तु द्वारे मण्टपालङ्कृतं तथा ७
मद्ध्यवेदीं प्रकल्प्याथ चतुरश्राकृतिन्तु वा
ह्रस्वदीर्घकुशस्तंभान् अनार्द्रं पर्वकं तथा ८
त्वक्सङ्गीतं त्यजेच्चैव अन्यपादपसंयुतम्
निबंतिंत्रिणिकोलञ्च पाटलैश्चंपकैस्तथा ९
वल्कलैश्शतमालैश्च हिन्तालैर्लिकुचैस्तथा
स्तंभांस्तु कारयेच्चैव कृष्णापुष्पैरलङ्कृतम् १०
नारिकेळप्रसूनैश्च मण्टपालङ्कृतन्तथा
मद्ध्ये वेदीन्तु सङ्कल्प्य तत्पूर्वे कुण्डमुच्यते ११
ऐशान्ये वेदिकायान्तु उपवेदीं तथैव च
वायव्ये वेदिकां कृत्वा नैर्ऋते वेदिकां तथा १२
आग्नेये वेदिकां कृत्वा दर्पणोदरसन्निभाम्
मद्ध्ये च वेदिकां कृत्वा नवकोष्ठं समालिखेत् १३
मद्ध्ये अष्टदळं पद्मं लेखयेत् विधिमाचरेत्
------------------------------ १४
पश्चिमे चैव षट्कोणं अष्टकोणं यथोत्तरे
रक्तवर्णैस्समालिख्य क्षुरपद्मं समालिखेत् १५
आच्छाद्यरक्तवस्त्रेण तद्बाह्ये वेष्टयेत्ततः
अथ सो निर्मितं शास्त्रान्मद्ध्ये शूलञ्च निक्षिपेत् १६

पूर्वे खड्गं समालिख्य धनुर्बाणञ्च दक्षिणे
क्षुरिकां पश्चिमे चैव भिण्डिपालं तथोत्तरे १७
चतुर्द्वारो विशेषेण चतुःपीठञ्च निक्षिपेत्
अष्टाङ्गुलघनं प्रोक्तं द्वादशाङ्गुलविस्तरम् १८
दीर्घं विंशाङ्गुलं चैव यज्ञवृक्षैस्समुद्भवम्
पञ्चवर्णैरलङ्कृत्य रक्तवस्त्रेण वेष्टयेत् १९
रक्तपद्मं समालिख्य तस्योपरिविशेषतः
षडङ्गुलन्तु विस्तारं अष्टाङ्गुलसमं तथा २०
दशाङ्गुलोन्नतं विद्यात्पूर्णचन्द्राकृतिं तथा
पञ्चाङ्गुलघनं प्रोक्तं कपालं निक्षिपेत्ततः २१
त्रिप्रस्थं कुडुपं त्रीणि उत्तमं संप्रकीर्तितम्
द्विप्रस्थं कुडुपञ्चैव मद्ध्यमञ्च तदुच्यते २२
प्रस्थं कुडुपमेवोक्तं अधमं तण्डुलान्क्षिपेत्
रक्ततण्डुलमेवोक्तं सिततण्डुलमेव वा २३
कपाले निक्षिपेत्पश्चात् नाळिकेरं ततोपरि
पीठस्य दक्षिणे भागे दीपदण्डं विशेषतः २४
षोडशाङ्गुलविस्तारं दीर्घाकारं सुपीठकम्
षडङ्गुलसमं नाहं दण्डं लिख्यञ्च मद्ध्यमे २५
पञ्चाङ्गुलं घनं प्रोक्तं दीपाधारं विशेषतः
तस्योपरि विशेषेण अक्षतान्निक्षिपेत्ततः २६
द्वादशाङ्गुलविस्तारं वृत्ताकारं विशेषतः
घातं द्व्याङ्गुलं प्रोक्तं सपात्रञ्च विनिक्षिपेत् २७
नाळिकेरे जलञ्चैव गोघृतं मधुमिश्रितम्
दीपं कृत्वा चतुर्द्वारे भेरीं संघोषयेत्ततः २८
वायुदेशे समारोप्य स्वस्तिकारेखमुत्तमम्
गोघृतं नाळिकेरञ्च मधुमिश्रं सुदीपकम् २९
दीपस्य पूर्वदेशे तु कदळीपत्रं निक्षिपेत्
तस्योपरि विशेषेण तण्डुलं निक्षिपेत्ततः ३०
चतुरश्राकृतिं कृत्वा तन्मद्ध्ये कदळीफलम्

पूर्वदक्षिणसव्ये च पश्चिमेऽप्युत्तरे तथा ३१
कदळीफलविंशत्या देवतां पूजयेत्ततः
मद्ध्ये तु भूतनाथेशं पूर्वे शास्तारमर्चयेत् ३२
चण्डिकां दक्षिणे चैव अघोरं पश्चिमे ततः
उत्तरे भैरवन्न्यस्य गन्धपुष्पैरलङ्कृतम् ३३
मुद्गान्नं पायसान्नञ्च कृसरान्नं तथैव च
हरिद्रान्नं गुळान्नञ्च बलिं कृत्वा विशेषतः ३४
आग्नेय दिक्समारोप्य पञ्चचूर्णैरलङ्कृतम्
अष्टछदेषु पद्मानि लेखयित्वा विशेषतः ३५
कदळीपर्णमालिख्य पश्चिमाग्रान्विनिक्षिपेत्
अष्टप्रस्थञ्च षट्प्रस्थं चतुःप्रस्थन्तु वापि च ३६
तण्डुलैः पूर्णकान्कृत्वा मधुगौमिश्रमेव च
नाळिकेरफलं विद्यात्कपित्थस्य फलन्तु वा ३७
पिण्डाश्च निक्षिपेच्चैव दीपन्दक्षिणदेशके
आनन्दा विनता भद्रा जयन्तीमतिविभ्रमा ३८
प्रक्षी भीषणी जंभी परितश्च प्रपूजयेत्
पूर्वादीशानपर्यन्तं द्ध्यायेद्वा साधकोत्तमः ३९
द्विभुजा च द्विनेत्रा च विद्युद्राशिसमप्रभा
कराळी ऊरुवस्त्रा च खड्गखेटधरा शुभा ४०
किङ्किणी मालया भूष्य अनन्तस्था प्रपूजयेत्
दंष्ट्राकराळवदना बालनेत्रा तटित्प्रभा ४१
कृष्णवक्त्रासुराखड्गी खेटञ्चेत् भिण्डिपालकम्
ऊरुवस्त्रञ्च संवेष्ट्य चर्मणा यदिवेष्टयेत् ४२
विनता शक्तिमभ्यर्च्य भद्राञ्चैव ततः श्रुणु
श्यामाङ्गी नीलकेशी च भृकुटी च तदन्विता ४३
पाशखड्गा द्विहस्ता च ऊरुवस्त्रा च धारिणी
घण्टामाला कराळी च भद्रा शक्तिं समर्चयेत् ४४
जयन्तिमन्ती रक्ताङ्गी श्वेतवस्त्रा कराळिनी
ज्वालाकेशी सुखड्वाङ्गी तोमरं धारयेत्ततः ४५

अजिनं वेष्टयेत् ग्रीवं अर्चयित्वा विशेषतः
श्वेताङ्गी रक्तवस्त्राभाभ्रुकुटी मुखभूषिणी ४६
त्रिशूलं तोमरञ्चैव अर्चयेत् मतिविभ्रमाम्
करण्डमकुटोपेतं कूश्माण्डं मुखबिंबकम् ४७
वक्त्राळुरक्तवस्त्राभा कंबुका भरणोज्वला
उलूखला लंबहस्ता प्ररक्षीमर्चयेत्ततः ४८
कृष्णाङ्गी कृष्णवक्त्राभा ज्वालाकेशी तटित्प्रभा
नीलवस्त्रधरा देवी पट्टसंमुद्गरं तथा ४९
कांचीनूपुरसंभूष्यां भीषणीं पूजयेत्ततः
द्विनेत्रा द्विभुजा श्यामा पीतवक्त्रा कराळिनी ५०
चूळिका रक्तपुष्पाङ्गी क्षुरिका खेटका तथा
जंभीं सुपूजयेत्पश्चात् बलिं कृत्वा विशेषतः ५१
नैर्ऋते च समारोप्य पञ्चचूर्णैरलङ्कृतम्
षट्कोणमद्ध्यमे चैव महा----- समे ५२
नन्दाभद्रा च सुरभी सुशीला सुमना तथा
कपिलाभाति षड्देवान् द्ध्यायेत् तान्पूजयेत्तथा ५३
द्विनेत्रा द्विभुजा श्यामा किरीटमकुटोज्वला
सर्वाभरणसंभूष्या नागां पाशधरान्विताम् ५४
नन्दीं द्ध्यायेद्विशेषेण भद्राञ्चैव ततश्रुणु
धूम्रभासा कराळी च पार्श्वयोर्लंबकेशिनी ५५
ऊरुवक्त्रधराय च
भद्रां ध्यायेद्विशेषेण सुरभीञ्च ततश्रुणु ५६
पूजा द्वया सुरक्ताभं किङ्किणीमालयायुतम्
ज्वालाकेशी कराली च असिखेटं तथैव च ५७
सुरभीमर्चयेच्चैव पूर्वशान्ति मुखस्थिता
द्विभुजा श्यामदेहाङ्गी किरीटमकुटोज्वला ५८
किङ्किणी मालयायुक्ता तोमरं पट्टसं तथा
सुशीलामर्चयेच्चैव सुषुम्ना च ततश्रुणु ५९
द्विपादा रक्तवर्णाभा कराळी भीषणी तथा

ज्वालाकेशी सुखट्वाङ्गी लंबहस्तां समर्चयेत् ६०
रक्ताङ्गी रक्तवस्त्राभा कुन्दळाभरणोज्वला
घण्टामाला धरा चैव कपालं टङ्कमेव च ६१
कपिलां पूजयेच्चैव बलिं कृत्वा विशेषतः
मुकुळाभं बलिं कृत्वा पूजयेत्तु विशेषतः ६२
ऐशान्य दिक्समारोप्य चतुष्कोणा कृतिं लिखेत्
चतुर्दळे सुपद्मानि श्वेतच्छदञ्च पूर्वके ६३
कृष्णछदञ्च सर्वञ्च रक्तछदञ्च पश्चिमे
उत्तरे कुङ्कुमा कारं कर्णिकां श्याममुच्यते ६४
वेदिका चैव पार्श्वेषु पूर्वाशादि चतुर्दिशि
लंबिनी कदळीपत्रं चित्राकारं विशेषतः ६५
पूगस्तंबकसव्ये च नाळिकेरसुषुम्नकैः
पश्चिमे चैव विन्यस्य उत्तरे कृष्णवस्त्रकैः ६६
अलङ्कृत्य विशेषेण कलशान् पूतकान्तथा
विन्यसेत्तु विशेषेण पश्चात्पूज्यं विशेषतः ६७
पूर्वोक्तविधिना चैव अग्निमाराधयेत्ततः
भूतेशं भैरवं घोरं चण्डीं शास्तारमेव वा ६८
पृथक्पृथक्सहस्त्रञ्च होमं कृत्वा समाचरेत्
अष्टादश गणानान्तु प्रत्येकन्तु शतं शतम् ६९
पूर्वं गणान् समभ्यर्च्य शून्यग्रामनिवासिनः
चतुस्सन्धिस्थले वापि सा च चर्मबलिन्तथा ७०
हरिद्रान्नाळिकेरञ्च यत्तु सन्धिस्थलेऽपि वा
त्रिसन्धिमद्ध्यमे चैव राक्षसानां समाचरेत् ७१
नागानां भैरवानाञ्च कूश्माण्डानां समर्चयेत्
कृशरान्नं बलिन्दत्वा सुपूज्यञ्च निवेदयेत् ७२
द्विपरिस्सन्धिमारोप्य असुराणां बलिन्तथा
नन्दानाञ्च बलिं कृत्वा गुह्या नाञ्च बलिन्तथा ७३
दानवानाञ्च सिद्धानां प्रेतानां बलिमेव च
भूतानाञ्चैव यक्षाणां गारुडानां विशेषतः ७४

विद्याधराणां सिद्धानां सूपान्नञ्च बलिन्ददेत्
पितृदीपं सुदर्शिष्य तिलपुष्पाक्षतैः किरेत् ७५
शिवशास्त्रैस्सहाराद्ध्य कुक्कुटोदरनिक्षिपेत्
संपूज्य विधिवच्चैव यागशालां प्रवेशयेत् ७६
ऐशान्ये वेदिमारोप्य भूतनाथञ्च मद्ध्यमे
शास्तारं चण्डिकाञ्चैव अघोरं भैरवन्तथा ७७
गन्धपुष्पैरलङ्कृत्य भूतनाधं समर्चयेत्
द्व्याक्षं द्विभुजञ्चैव शुक्लवर्णं तथैव च ७८
सरत्नमकुटोपेतं कुण्डलाभरणोज्वलम्
त्रिशूलं खड्गपाणिञ्च गजमस्तकरूढकम् ७९
द्ध्यायेद्वा विधिवच्चैव भूतनाधेश्वरं प्रभुम्
यौवनं श्यामवर्णञ्च लंबकेशं तथैव च ८०
शुक्लयज्ञोपवीतञ्च तुरङ्गो परिसंस्थितम्
पुष्पचिह्नं सव्यहस्ते अन्ये खड्गं सुधारयेत् ८१
त्रिनेत्रां श्यामवर्णाभां ऊर्ध्वज्वालां सुकेशिनीम्
अष्टपाणिधराभ्याञ्च खड्गं खेटं तथैव च ८२
त्रिशूलं डमरुं खड्गं कपालं शुकमेव च
ऊर्ध्वरिक्तकरं विद्यात् प्रेतारूढां समर्चयेत् ८३
द्विपादं वह्निनयनं भस्मकुण्ठतविग्रहम्
ज्वालाकेशं त्रिनेत्रञ्च शूलखड्गं तथैव च ८४
किङ्किणी मालया युक्तं श्मश्रुकेशसमन्वितम्
माहिषी मस्तके छित्वा अघोरं पूजयेत्ततः ८५
चतुर्भुजं त्रिनेत्रञ्च ज्वाला केशं सुभीषणम्
दंष्ट्राकराळवदनं पादकिङ्किणिगूहितम् ८६
कपालं शूलहस्तञ्च डमरुं पाशमेव च
श्वानारूढं यजेच्चैव अर्चयित्वा विशेषतः ८७
कूश्माण्डं छेदिनं कृत्वा अघोरञ्च निवेदयेत्
भैरवं पूजयेच्चैव शुद्धान्नञ्च निवेदयेत् ८८
यागबाह्ये विशेषेण हरिणीमपि कुक्कुटम्

छेदयेच्छिवभक्तेन भावयेत्साधकोत्तमः ८९
शास्तारञ्चरिडकाञ्चैव भूतेशञ्च निवेदयेत्
चरिडकां मन्दिरे पश्चात् पूजयित्वा विशेषतः ९०
निवेदयेत् बलिं मेषं प्रार्थयेत्तदनुज्ञया
पुनस्नानं समारोप्य शिवास्त्रेरा समं गुरुः ९१
नवसन्धिषु देवानां ब्रह्मादीनां बलिं तथा
एवं संपूज्य विधिवत् ब्राह्मणान्भोजयेत्ततः ९२
प्रतिवर्षं बलिं कृत्वा सर्वपीडा निवारणम्
नगरे पूजयेच्चैव भूपालो जयमप्नुयात् ९३
प्रतिष्ठोत्सवकाले च पूजां कृत्वा विशेषतः
पूजाहीने ततः कृत्वा अष्टादशगणांस्तथा ९४
व्याधिपीडनमात्रेण अलक्ष्मी वासयेत्ततः
पूजां कृत्वा समारोप्य आचार्यं पूजयेत्ततः ९५
इति ग्रामशान्तिपटलो नवमः

वास्तुशान्तिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि शृणु पार्वति नन्दन
वास्तुशान्तिविधिं चैव सर्वकामार्त्थसाधनम् १
वास्तुपूजा विहीनञ्चेत् सर्वकार्येषु निष्फलम्
प्रतिष्ठा निर्णये काले काले देवोत्सवे तथा २
वास्तुपूजां ततः कृत्वा सर्वकार्येषु साधनम्
ग्रामस्य मद्ध्यमे चैव कल्पयेत् देवसन्निधौ ३
उत्तमं लिङ्गमाख्यातं अष्टाष्टस्तंभसंयुतम्
द्वात्रिंशत्स्तंभमेवोक्तं षोडश स्तंभमेव वा ४
पूर्वोक्तयागं सङ्कल्प्य मद्ध्ये वेदिं प्रकल्पयेत्
कुराडं सङ्कल्प्य तत्पूर्वे मेखला त्रयमुत्तमम् ५
वृत्ताकारं वेदिकां वा ऐशान्ये संप्रकल्पयेत्
नैर्ऋत्यां पञ्चगव्यञ्च कोष्ठं संपाद्यमेव च ६
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम्

मद्ध्ये वेदिं विशेषेण नवोनवपदं भवेत्  ७
मद्ध्ये नवपदञ्चैव पद्ममष्टदळं लिखेत्
कर्णिकां कुंकुमप्रख्यां रक्तपद्मदळाकृतिम्  ८
अन्तरे श्यामवर्णञ्च वीधिं श्वेतेन कल्पयेत्
षट्पदं पूर्वभागे तु कृष्णवर्णैरलङ्कृतम्  ९
दक्षिणे षत्पदञ्चैव श्वेतवर्णैरलङ्कृतम्
पश्चिमे षट्पदञ्चैव रक्तवर्णैरलङ्कृतम्  १०
उत्तरे षट्पदञ्चैव पीतवर्णैरलङ्कृतम्
आग्नेयादि चतुर्दिक्षु द्विद्विकोष्ठं प्रकल्पयेत्  ११
कृष्णश्वेतं वह्निदिशि श्वेतरक्तञ्च नैर्‍ऋते
रक्तपीतञ्च वायव्ये पीतशुक्लञ्च ईशके  १२
पार्श्वे वीधिं प्रकल्प्याथ ईशानेन समं क्रमात्
ईशानाद्यष्टपदञ्चैव रक्तवर्णं प्रकल्पयेत्  १३
आग्नेयाद्यष्टपदञ्चैव कृष्णवर्णं प्रकल्पयेत्
नैर्‍ऋत्याद्यष्टपदञ्चैव श्वेतवर्णं प्रकल्पयेत्  १४
वायव्याद्यष्टपदञ्चैव श्यामवर्णं प्रकल्पयेत्
अभावे पञ्चवर्णांश्च तण्डुलैर्वा विशेषतः  १५
----- सुपश्चात् गन्धपुष्पैरलङ्कृतम्
ब्रह्माणं मद्ध्यमे पूज्य इन्द्रादींश्च दळाग्रके  १६
पूर्वादिषु चतुर्दिक्षु पदेषु च पृथक्पृथक्
विवस्वन्तं मरीचिञ्च मित्रं चैव धराधरम्  १७
संपूज्य विधिवत् द्ध्यात्वा गन्धपुष्पैस्समर्चयेत्
आग्नेयादिचतुर्दिक्षु द्विकोष्ठं च पृथक्पृथक्  १८
सविता चैव सावित्रान् अर्चयेत्तु विशेषतः
इन्द्रं चैव जयां चैव पूजयेद्विधिवत्तथा  १९
रुद्राय रुद्रदासाय गन्धपुष्पैस्समर्चयेत्
आपश्च आपवत्सश्च अर्चयेत्तु तथैव च  २०
रूपं वक्ष्ये विशेषेण तेषाञ्चैव पृथक्पृथक्
पापदेह इति नाम वास्तु पर्याय वाचकः  २१

तस्याधिदैवतं ब्राह्मं वक्ष्येऽहन्तु षडानन
चतुर्भुजं चतुर्वक्त्रं किरीटमकुटोज्वलम्  २२
पीताभं पीतवस्त्रञ्च हेमयज्ञोपवीतिनम्
स्त्रक्कमराडलुकं वामे सव्ये पद्माक्षमालिका  २३
ब्रह्माणं पूजयेत्पश्चात् विवस्वन्तं प्रपूजयेत्
द्विभुजञ्च द्विनेत्रञ्च किरीटमकुटोज्वलम्  २४
खड्गखेटसुधार्यञ्च कुङ्कुमाङ्कितसन्निभम्
विवस्वन्तं पूजयेच्च मरीचिञ्च ततः श्रुणु  २५
खट्वाङ्गं लंबहस्तञ्च किरीटाभरणोज्वलम्
पीतांबरोत्तरीयञ्च आदनूपुरसंयुतम्  २६
मरीचिं पूजयेत्पश्चात् अर्चयित्वा विशेषतः
द्विपादञ्च त्रिनयनं कराडमकुटान्वितम्  २७
वज्रशक्तिधरं ध्यात्वा मित्रञ्चेत्पूजयेत्ततः
सरत्नमकुटोपेतं कृष्णवस्त्रेण वेष्टितम्  २८
अभयं शूलहस्तञ्च धराधरं यजेत्ततः
श्यामवर्णञ्च दराडञ्च खड्गधार्यं सुवामके  २९
शूळिका भरणैर्भूष्यं सविता पूजयेत्ततः
रक्तवर्णं द्विनेत्रञ्च लंबकेश कराळिनम्  ३०
खड्गदराडं सुधार्यञ्च सावित्रं पूजयेत्ततः
पीताभं पीतवस्त्रञ्च कुङ्कुमाङ्कित सन्निभम्  ३१
पाशं थार्यञ्च दराडञ्च इन्द्रं वै पूजयेत्ततः
द्विपादञ्च द्विनयनं रक्ताभरणभूषितम्  ३२
खेटकं पट्टसञ्चैव विजयं पूजयेत्ततः
श्वेताभं श्वेतवस्त्राङ्गं व्याघ्रचर्मेण वेष्टितम्  ३३
कार्मुकं बालसंयुक्तं रुद्राय च प्रपूजयेत्
मिश्रवर्णद्वयाक्षाभ्यां पादनूपुरसंयुतम्  ३४
ऊरुवस्त्रञ्च संवेष्ट्य रुद्रदासं प्रपूजयेत्
रक्तवस्त्रेण संवेष्ट्य शुद्धयज्ञोपवीतिनम्  ३५
सरत्नमकुटोपेतं क्षुरिकां धारयेत्ततः

एवं हुत्वा विशेषेण आपञ्च पूजयेत्ततः  ३६
द्विपादञ्च द्विनेत्रञ्च किरीटमकुटन्तथा
भिण्डिपालसुधार्यञ्च आपवत्सं प्रपूजयेत्  ३७
ईशानाद्यष्टपदे चैव शृणुष्व च षडानन
रक्तवर्णं द्विनेत्रञ्च किरीटाकृतिमण्डितम्  ३८
खट्गखेटं महाभीमं ईशानं पूजयेत्ततः
रक्तवर्णं द्विनेत्रञ्च किरीटमकुटोज्वलम्  ३९
खण्डखड्गसुधार्यञ्च पर्जन्यं पूजयेत्ततः
कृष्णवर्णं दिनेत्रञ्च ऊरुवस्त्रञ्च संयुतम्  ४०
असिखेटं सुधार्यञ्च जयन्तं पूजयेत्ततः
पीतवर्णं द्विबाहुं च अजिनं वेष्टयेत्ततः  ४१
----- गरं चैव माहेन्द्रं पूजयेत्ततः
हरितालप्रभा चैव सरक्तमकुटान्वितम्  ४२
पट्टसंमुत्गरं चैव आदित्यं पूजयेत्ततः
द्विपादौ नूपुरौ धार्यं खेटकं पाशमेव च  ४३
शुक्लवस्त्र ------- पूजयेत्ततः
पद्मं च तोमरं धार्यं द्विनेत्रमकुटान्वितम्  ४४
कृष्णाभरणसंभूष्य भृङ्गराजं यजेत्ततः
कुण्डलाभरणञ्चैव हेमयज्ञोपवीतिनम्  ४५
नीलोत्पलधरं शूलं अ------ रिं पूजयेत्
आग्नेय्या द्यष्टके चैव रक्तवर्णन्तथैव च  ४६
कृष्णवर्णं द्विबाहुं च अङ्कुशं च कपालिनम्
चित्रवस्त्रसमायुक्तं अग्निन्तु पूजयेत्ततः  ४७
कृष्णवर्णं द्विनेत्रं च रक्तवर्णं तथैव च
कपालं खड्गसंयुक्तं पूजयेच्च विशेषतः  ४८
मुक्ताभरणसंयुक्तं कृष्णवक्त्रं तथैव च
रक्ताङ्गं खड्गशूलं च विदधां पूजयेत्ततः  ४९
रक्ताभं कुण्डलं चैव कृष्णवक्त्रं द्विनेत्रकम्
अभयं शुण्डहस्तं च ऋक्षतं च प्रपूजयेत्  ५०

नीलाङ्गं रक्तवक्त्रं च उग्रदंष्ट्रीभयङ्करम्
वक्त्राभयं विशेषेण यमं वै पूजयेत्ततः ५१
काळवर्णं द्विनेत्रञ्च कंबुकं भरणोज्वलम्
रक्तवक्त्रं त्रिशूलञ्च गन्र्धवं पूजयेत्ततः ५२
श्यामवर्णं द्विनेत्रञ्च श्वेतवस्त्रसमन्वितम्
सूचिहस्ताभयञ्चैव भृङ्गराजं प्रपूजयेत् ५३
शुक्लाङ्गं शुक्लनेत्रञ्च कृष्णवक्त्रं तथैव च
तोमराभयसंयुक्तं मृगराजं प्रपूजयेत् ५४
नैर्ऋत्यां द्विपदेष्वेष्टे कुङ्कुमाभं तथैव च
कृष्णवक्त्रं कराळास्यं वरदाभयपाणिनम् ५५
निर्ऋतिं पूजयेत्पश्चात् दौवारिकं तत श्रुणु
नेत्रयुग्मं द्विबाहुञ्च श्वेतवर्णं कराळकम् ५६
खड्गपट्टसमे वोक्तं दौवारिकं प्रपूजयेत्
द्विभुजं सोपवीताङ्गं पद्माक्षं मालिकाधरम् ५७
शुक्लवर्णं द्विनेत्रञ्च सुग्रीवं पूजयेत्ततः
मिश्रवर्णं द्विबाहुं च कुण्डलाभरणोज्वलम् ५८
सृगक्षमालिनीं चैव पुष्पदन्तं प्रपूजयेत्
द्विक्षं द्विभुजं विद्यात्कार्मुकं शरसंयुतम् ५९
पद्माभं कुण्डलं चैव प्रचेतं पूजयेत्ततः
द्विबाहुं नेत्रयुग्मं च वृश्चिकाभरणोज्वलम् ६०
खड्गं दण्डं सुधार्यं च सुरांश्च पूजयेत्ततः
एकास्यं एकनाडिं च द्विबाहुं च तथैव च ६१
भिण्डिपालं स्रुवं चैव शेषं चेत्पूजयेत्ततः
हेमयज्ञोपवीताङ्गं शुक्लवस्त्रोत्तरीयकम् ६२
शंखखड्गसुधायां च रोगां पूज्य विशेषतः
वायव्याद्वसुसङ्ख्या च अर्चयेत् श्रुणु षण्मुख ६३
इन्द्रनीलसमानाङ्गं अङ्गरागसमन्वितम्
मुद्गरं क्षुरिकं चैव वयुं वै पूजयेत्ततः ६४
स्फटिकाभं द्विनयनं उत्तुङ्गमकुटान्वितम्

खड्गखेटं भ्रमं वक्त्रं नागं चेत्पूजयेत्ततः ६५
काचपुष्पसमानाभं मन्दस्मितमुखन्तथा
शूलशंखसुधार्यञ्च मुखं वै पूजयेत्ततः ६६
कराळवदनं भीमं चूळिकाधारणं तथा
मुक्ताभरणसंभूष्य भल्लाटं पूजयेत्ततः ६७
चन्द्रकान्तनिभप्रख्यं कुङ्कुमाङ्कितसन्निभम्
खट्वाङ्गं लंबहस्तं च होमं वै पूजयेत्ततः ६८
नक्षत्राभरणप्रख्यं कृष्णाभरणभूषितम्
वज्रं व्यजनहस्तं च रुच्या यं पूजयेत्ततः ६९
काश्मीरसदृशप्रख्यं कुण्डलाभरणोज्वलम्
वज्रं मुसलधार्यं च अदितिं पूजयेत्ततः ७०
विद्युत्कोटिसमप्रख्यं सर्वाभरणभूषितम्
अभयन्तोमरं चैव दितिं सुपूजयेत्ततः ७१
ईशानादि चतुश्शूले चरक्यादीन्प्रपूजयेत्
चतुर्भुजं द्विनेत्रं च जटाज्वाला सुकेशकम् ७२
ब्रह्मास्त्रं दक्षिणे चैव तोमरं वामहस्तके
खड्गखेटं सुधार्यं च पादुकोपरिसंस्थितम् ७३
ईशाने पूजयेत्पश्चात् विदारीं च तत श्रुणु
द्विपादं च द्विनेत्रं च चतुर्भुजसमायुतम् ७४
वज्रं शक्त्यन्तरा चैव पट्टसंमुद्गरं तथा
विदारीं पूजयेत्पश्चात् अर्चयेत्तु विशेषतः ७५
शुक्लवर्णं चतुर्बाहुं सर्वाभरणभूषितम्
चक्रशूलं मुद्गरं च भिण्डिपालं तथैव च ७६
पूतनां पूजयेत्पश्चात् पापरक्षस्तत श्रुणु
कुण्डलाभरणं चैव धूम्राभं विकृताननम् ७७
अभयं पट्टसं चैव क्षुरिका खेटकन्तथा
पश्चात्तन्मण्डलस्यैव बाह्ये चैव चतुर्दिशम् ७८
स्कन्दार्यमणविजृंभबलिपिंचं तथैव च
पूर्वेशादि चतुर्दिक्षु द्विपादं च द्विनेत्रकम् ७९

करण्डमकुटोपेतं पद्मखड्गं च खेटकम्
अभयं धार्यते चैव स्कन्दं पूज्य विशेषतः  ८०
चतुर्बाहुं किरीटं च पाशदण्डं तथैव च
तोमरं घृतपात्रं च अर्यम्णं पूजयेत्ततः  ८१
द्विपादं कृष्णवर्णं च कुण्डलाभरणोज्वलम्
पाशाभयं स्रुवं शूलं विजृंभं पूजयेत्ततः  ८२
हेमवर्णं चतुर्बाहुं ऊरुकंचुकसंयुतम्
गदापद्मं च शङ्खं च वरं चैव तथैव च  ८३
बलिपिंचं समर्चेत्तु गन्धपुष्पैरलङ्कृतम्
सामान्यार्घ्यं तथा सर्वे क्षीरान्नं च बलिन्ददेत्  ८४
ऐशान्ये वेदिके चैव नवकुंभान्प्रकल्पयेत्
मद्ध्ये ब्रह्माणमभ्यर्च्य इन्द्रादीन्परितो यजेत्  ८५
अग्नौ ब्रंहाणमावाह्य सहस्त्रं वा हुनेत्ततः
तदर्द्धं चैव हुत्वा तु पूर्णाहुत्याविशेषतः  ८६
परिवारन्तु देवानां अष्टोत्तरशतं पृथक्
होमयेत्तु विशेषेण पूर्णाहुतिं पृथक्पृथक्  ८७
कृसरान्नं बलिन्दद्यात् कूश्माण्डं होममाचरेत्
बलिं कृत्वा विशेषेण माषापूपान् बलिन्ददेत्  ८८
पापदेवं च संपूज्य वास्तुपर्याय नामतः
अष्टोत्तरशतं हुत्वा बलिं कृत्वा विशेषतः  ८९
पालाशपर्णं संगृह्य उत्तमं परिकीर्तितम्
याज्ञीय वृक्षजैर्वापि दर्भैर्वा वधमं भवेत्  ९०
शरीराकारमाकृत्य घृतकंबळवेष्टयेत्
पापदेवं समावाह्य गन्धपुष्पैरलङ्कृतम्  ९१
त्रिमुखं चैकहृदयं श्रोत्रषट्कं त्रिनासिकम्
दशबाहुं विशेषेण किरीटमकुटोज्वलम्  ९२
खड्गखेटं पट्टसं च मुद्गरं क्षुरिकान्तथा
शूलं वज्रं शक्ररज्जुं कटीबन्धकरं तथा  ९३
ऊर्ध्वज्वाला सुकेशं च ऊर्ध्वाभिमुखसंस्थितम्

पापदेवन्तु संपूज्य शिरोदेशे समर्चयेत् ९४
कुण्डेष्वग्निं समादाय शिरोदेशेषु निक्षिपेत्
प्रज्वाल्यहोमयेच्चैव अष्टोत्तरशतं हुनेत् ९५
तस्यार्द्धं वा तदर्द्धं वा अस्त्रेणैव हुनेत्ततः
पाददेश ------ प्रादक्षिण्य क्रमेण वा ९६
अनिर्वापणवह्निश्च यजमानं विनश्यति
ग्रामस्यैशान्यदिग्भागे न्य ----- समाचरेत् ९७
स्नानं कृत्वा विशेषेण परिचारकशुद्ध्यता
ग्रामे वापि जनानान्तु तद्दोषशमनाय च ९८
एवं कृत्वा विशेषेण ग्रामाभिवृद्धिदं ततः ९९
इति वास्तुशान्तिपटलो दशमः

मृत्संग्रहणपटलप्रारंभः
अथातस्समहादेव सर्वकामार्त्थसिद्धिदम्
इच्छामि वदमे शंभो मृत्संग्रहणमुत्तमम् १
वक्ष्ये हन्तु महासेन सर्वलोकहिताय च
पुण्यतीर्त्थसमीपे च उद्यानोपवने तथा २
गिरिपार्श्वे महास्थाने समुद्रतीरकेऽथवा
यद्वा देवस्य ऐशान्ये दिग्भागे आयुर्वर्द्धनम् ३
पूर्वे तु कलहं विद्यात् वह्नौ तु पुत्रवर्द्धनम्
दक्षिणे ज्ञानहीनं स्यात् नैर्ऋृते मरणं ध्रुवम् ४
पश्चिमे मोक्षसिद्धिस्स्यात् वायव्ये संपदं भवेत्
उत्तरे श्रीपदं प्रोक्तं मृत्संग्रहणमुत्तमम् ५
अधमं अशनिस्थाने क्षारभूमिं विवर्जयेत्
सन्धिस्थले वर्जयेत्तु मण्टपं कारयेत्ततः ६
षोडश स्तंभसंयुक्तं द्वादशस्तंभमेव वा
अष्टस्तंभसमायुक्तं मण्टपालङ्कृतं तथा ७
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निगम्
चतुर्द्रोणसुधान्यैश्च अष्टपद्मदळं लिखेत् ८

वर्द्धनीं मद्ध्यमे स्थाप्य सकूर्चालङ्कृतं तथा
उत्तराभिमुखो भूत्वा सघदेवीं समर्चयेत् ९
द्व्यक्षां द्विभुजां पीतां उत्तुङ्गमकुटान्विताम्
अभयं वरदोपेतां सर्वालङ्कारशोभिताम् १०
भूमिदेवीं समावाह्य गन्धपुष्पैस्समर्चयेत्
चण्डेश्वरं समभ्यर्च्य दध्योदनबलिन्ददेत् ११
अस्त्रमूर्तिं समभ्यर्च्य पुण्याहप्रोक्षणन्तथा
पञ्चगव्येन संशोद्ध्य स्थलशुद्धिन्तु कारयेत् १२
देव्यास्तु पूर्वदिग्भागे नवकोष्ठं प्रकल्पयेत्
शिवस्सदाशिवेशश्च विद्यामाया तथैव च १३
कालश्च नियतिश्चैव पुरुषं प्रकृतिन्तथा
कोष्ठान्पूज्य विशेषेण निम्नोन्नतसभूतलम् १४
भूमिदेवीं यजेन्मद्ध्ये अनन्तां पूर्वदेशके
विनतां वाग्निदेशे तु भद्रां याम्ये प्रपूजयेत् १५
जृंभितां नैर्ऋते पूज्य श्रमणीं वारुणे यजेत्
भूमिं वै वायुदिग्भागे प्रस्थितां चोत्तरे यजेत् १६
जृंभिता भूमिदेव्योश्च तयोर्मद्ध्ये विशेषतः
शूलिनीं शक्तिमभ्यर्च्य दद्ध्योदनबलिन्ददेत् १७
शूलखट्वां तथा पाशं वरदं खड्गखेटकम्
पट्टसं मुद्गरञ्चैव तोमरं असिमेव च १८
अभयं सूचिहस्तञ्च वरदं ज्ञानमुद्रिकाम्
कमण्डलाक्षसूत्रञ्च एते दिव्यायुधान्धराः १९
वेद्याश्चोत्तरभागे तु खनित्रं पूजयेत्ततः
षडङ्गुलसमानाहं त्रिकरं दीर्घमुच्यते २०
दण्डाग्रे निर्मितञ्चैव स्वर्णेन रजतेन वा
ताम्रैर्वा लोहजैर्वापि द्वादशाङ्गुलविस्तरम् २१
षडङ्गुलन्तु दीर्घानि खनित्रं निर्मितोत्तमम्
शिवास्त्रमर्चयेच्चैव सुमुहूर्ते सुलग्नके २२
कोष्ठे शक्तिं समुद्वाह्य भूमिदेव्याश्च वामके

खनित्रं ग्राहयेच्चैव छेदयेत्संग्रहं मृदः २३
स्थलिकां रोपयेच्चैव धूपदीपान्बलिन्ददेत्
भूमौ निम्ने जलं क्षिप्य वर्द्धनीं योजयेत्ततः २४
मञ्चे वा शिबिके वापि प्रदक्षिणक्रमेण वा
आलयं वेशयेच्चैव पूजयेत्तु विशेषतः २५
एवं सङ्कल्प्य विधिवत्कल्पयेत्साधकोत्तमः
इति मृत्संग्रहणपटल एकादशः

कङ्करार्पणपटलप्रारंभः

अथातस्संप्रवक्ष्यामि श्रुणुष्वच षडानन
सर्वलोकहितं पुण्यं अङ्करार्पणमुत्तमम् १
नराणां चौळकर्मादि कर्मसु चाङ्करार्पणम्
निशावर्ज्यं दिवा कुर्यात्सर्वकार्येषु शोभनम् २
देवानान्तु निशा कुर्यात् अहस्सु वर्जयेत्ततः
देवानामङ्करं कृत्वा प्रत्यङ्कुरन्न कारयेत् ३
नराणामङ्करं वर्ज्येत् सर्वकर्मसु कारयेत्
अथातस्समहेशानं प्रत्यङ्कुरं न कारयेत् ४
मानुषाणां गृहे वापि कथं शंभो विशेषतः
देवानामङ्करं कृत्वा सर्वकर्मसु कारयेत् ५
शास्ता च चण्डिका चैव गणेशः षण्मुखस्तथा
पद्मात्म इति सर्वेषां प्रत्येकालयमुत्तमम् ६
पूर्वे वा अङ्करं कृत्वा कथं पूज्येत देशिकः
एके च नगरे चैव शास्तारं चण्डिकान्तथा ७
गणेशोऽपि च वैष्णव्यं अन्यांस्तु परिवारकम्
शिवमुद्दिश्य यत्काले यत्काले च विशेषतः ८
अन्येषामङ्करं वर्जेत्परिवारान्न विद्यते
यावन्मात्रं ग्रामसन्धिस्तावन्मात्रं न करयेत् ९
वीधिं पृथक्पृथक् विद्यात्सचेत्वात्वङ्करं विना
प्रत्येकं मण्डलङ्कृत्वा आचरेदङ्कुरार्पणम् १०

सङ्कटे जीर्णदेशे वा बाह्ये रत्नौ च नैर्ऋतौ
वायव्ये ईशदेशे वा अन्यदेशेषु कारयेत् ११
पालिका घटिका चैव शरावः त्रिविधं भवेत्
पालिकालक्षणं वक्ष्ये चतुर्विंशाङ्गुलोन्नतम् १२
अष्टादशाङ्गुलं वापि षोडशाङ्गुलमेव वा
भानुसंख्योन्नतं वापि कन्यसं परिकीर्तितम् १३
द्वादशाङ्गुलविस्तारं वृत्ताकारं प्रकीर्तितम्
एकाङ्गुलघनञ्चैव मद्ध्ये सप्ताङ्गुलन्तथा १४
एकाङ्गुलमधो रेखा पादं सप्ताङ्गुलन्तथा १५
अष्टपद्मदळाकारं उत्तमं परिकीर्तितम्
चतुर्विंशाङ्गुलञ्चैव उन्नतं घटिका तथा १६
पादं मद्ध्यमवक्त्रञ्च त्रिमानं कल्पयेत्ततः
मद्ध्ये रेखा द्वयं विद्यात्पञ्चकोणोत्तमं भवेत् १७
प्रतिकोणन्तु तन्मानं अथवा एकमङ्गुलम्
शरावं चतुरश्रञ्च चतुर्विंशाङ्गुलोन्नतम् १८
त्रिमानं कल्पयेच्चैव वक्त्रपादञ्च मद्ध्यमे
रेखा द्वयञ्च तन्मद्ध्ये जर्झरं वर्जयेत्ततः १९
काळं भिन्नञ्च सुषिरमदग्धं परिवर्जयेत्
ब्रह्मविष्णुशिवाश्चैव त्रिमूर्ती रूपमुच्यते २०
जगत्सृष्टि निमित्तं वा अङ्कुरं कारयेत्ततः
प्रत्येकमष्टकञ्चैव चतुर्विंशति सङ्ख्यया २१
षोडश द्वादशञ्चैव ग्राहयेत्सुविचक्षणः
अथवा घटिका चैव अष्टमं परिकीर्तितम् २२
औदुंबरः पाटलिश्च अश्वत्थश्चूतपल्लवैः
पर्णैः पदैरलङ्कृत्य मृत्तिकां पूरयेत्ततः २३
वल्मीके च नदी तीरे दर्भमूले मृदं हरेत्
पालिकादिषु संपूज्य अलङ्कृत्य विशेषतः २४
उत्तमं सप्तकाशैस्तु पञ्चकाशैस्तु मद्ध्यमम्
त्रिकाशैरधमं विद्यात् चतुरङ्गुलदीर्घकम् २५

मद्ध्ये एकाङ्गुलं ग्रन्धिं पवित्रं निक्षिपेत्ततः
प्राच्यां दिशि च सूत्रं स्यात् उदीच्यां वसुसूत्रकाः २६
द्वाराणां पार्श्वयोश्चैव पूर्वादौ पालिकां न्यसेत्
विन्यसेत् घटिका द्वे तु कोणेषु तु पदद्वये २७
शेषेषु च शरावानि स्थापयेत् हृदयेन तु
अष्टद्रोणं तदर्द्धं वा तदर्द्धं धान्यमेव वा २८
सतिलेनाङ्कितां रेखां चतुर्विंशद्दळाकृतिम्
कर्णिकामद्ध्यमे चैव सोमकुंभं न्यसेत्ततः २९
पार्श्वयोर्बान्धनीं स्थाप्य गन्धपुष्पैरलङ्कृतम्
मुद्गमाषकुळुत्थञ्च निष्पावं शिवबन्धकम् ३०
तिलसर्षपशालीञ्च सिद्धार्त्थं नवबीजकम्
उत्तमं नवबीजानि सप्तबीजन्तु मद्ध्यमम् ३१
पयसापूरमष्टाख्ये नारीकेळजलेऽपि वा ३१-२
सामान्यार्घ्यन्तु संस्थाप्य सोममावाहयेत्ततः
द्विभुजाञ्च द्विनेत्राञ्च करण्डमकुटान्विताम् ३२
कुमुदौ द्विकरौ धार्यपीतवस्त्रधरान्विताम्
पद्मोपरिस्थां सौगन्धीं कृत्तिकां रोहिणीं यजेत् ३३
श्यामाङ्गीं धौतवस्त्राञ्च नीलोत्पलधरान्तथा
पूजयेत् गन्धपुष्पाद्यैः पालिकादीन् यजेत्ततः ३४
इत्यादीन्पालिकान्पूज्य भवादीन् घटिके यजेत्
वैकर्तनं शरावे च अर्चयेत्तु विशेषतः ३५
इंद्रादींश्च चतुश्चैव भुवनादींश्चतुस्तथा
वैकर्तानां चतुश्चैव द्वादशानां प्रपूजयेत् ३६
वैकर्तनादीन्संपूज्य भवादीन् षोदशे यजेत्
भवादीन्वसुसंख्यांश्च प्रत्येकं अर्चयेत्ततः ३७
पीताभं रक्तवर्णञ्च अञ्जनं कृष्णसप्रभम्
श्वेतं पीतं सुरत्नाभं स्फटिकाभं तथैव च ३८
चक्रवक्त्रं तथा चैव अष्टमाला कमण्डलीम्
दण्डपाशं खड्गखेटं पाशाभयं तथैव च ३९

ध्वजाभयं गदाहस्तं त्रिशूलं व्याळधारिणम्
किरीटमकुटञ्चैव करण्डमकुटन्तथा ४०
ज्वालाकेशं लंबकेशं उत्तुङ्गमकुटान्वितम्
सुपद्ममकुटोपेतं क्षौमे तुङ्गकिरीटिनम् ४१
जटामकुटसंयुक्तं इन्द्राग्नियमनैर्ऋृतीन्
वरुणं वायुसोमञ्च ईशानं पूजयेत्ततः ४२
रक्तं श्वेतं तथा नीलं कुङ्कमाभं शशि प्रभम्
अनिलं श्यामवर्णञ्च अतिरक्तप्रभन्तथा ४३
पद्मयुग्मधरञ्चैव शंखचक्रवराभयम्
वराभयं पद्मयुग्मौ अंशुकौ खेटपद्मकम् ४४
पट्टसं मुद्गरञ्चैव अभयं भिण्डिपालकम्
तोमरं पद्ममेवञ्च कपालं शूलमेव च ४५
तोमरं खेटकञ्चैव गदावरदमेव च
वज्रनादमिति प्रोक्तं वरदाभयपाणिनम् ४६
प्रभामण्डलमद्ध्यस्थं किरीटवरदान्वितम्
वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः ४७
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमम्
आदित्यश्च महासूर्यो अंशुमाली दिवाकरः ४८
एतान्संपूज्य एवोक्तं भवादींश्च तत श्रुणु
भवो भीमा नीलकेशः कराळो जटिलस्तथा ४९
लंबको वामनो रौद्र अर्चयेत्तु विशेषतः
धूम्राभं कृष्णवर्णञ्च मिश्रं क्षीरप्रभन्तथा ५०
रक्तं विवर्णपीटाभं हरितालप्रभन्तथा
टङ्ककृष्णमृगञ्चैव शूलवज्रन्तथैव च ५१
खड्गपाशं तथा चैव डमरुं टङ्कमेव च
पट्टसंमुद्गरञ्चैव शूलनागं तथैव च ५२
वरदाभयहस्तञ्च अक्षमालाभयन्तथा
अर्चयेत्तु विशेषेण बीजावापनमाचरेत् ५३
पञ्चब्रह्मषडङ्गैश्च ---- वापत्रयेत्

तूर्यवाद्यैस्समायुक्तं अर्चयेत्साधकोत्तमः ५४
सायं प्रातर्दिनं वापि जलमापूरयेत्ततः
अङ्कुरं लक्षणं वीक्ष्य श्यामळा कृष्णवर्णिका ५५
कुब्जानीव सुधूमानि तिर्यक्तान्यङ्कुरन्तथा
अङ्कुराण्यर्पयेच्छून्यं तद्दोषशमनाय च ५६
अस्त्रमन्त्रं समुच्चार्य जुहुयाच्छतसङ्ख्यया
केशवं माधवं विष्णुं वामनञ्च त्रिविक्रमम् ५७
श्रीधरं पद्मनाभञ्च पद्माक्षाणि तथैव च
पालिकेषु च संपूज्य घटिकाञ्च तत श्रुणु ५८
भवं शर्वं ईशरुद्रं तथा पाशुपतन्तथा
उग्रं रुद्रञ्च भव्यञ्च अर्चयेत्तु विशेषतः ५९
शरावं पूजयेत्पश्चात्त्रिलोक्यञ्च त्रिमूर्तिकम्
पद्माक्षं पद्मयोनिञ्च चतुराननधात्रकम् ६०
पितामहमजञ्चैव शरावेषु प्रपूजयेत्
------------------------------ ६१
धूपदीपं बलिन्दद्यात्सावधानेन पूजयेत्
भक्तानां गन्धपुष्पाणि तांबूलं दापयेत्ततः ६२
अनङ्कुरन्तु यत्कर्म तत्कर्म निष्फलं भवेत्
नाङ्कुरन्तु दरिद्रं स्यात् रज्वाकारं महाभयम् ६३
दीर्घसूचिकह्रस्वश्च कुटिलं तत्सुखं भवेत्
ऊर्ध्वाभिमुखमेवोक्तं पूर्वे उत्तर ईशके ६४
उत्तमं अङ्कुरं विद्यात् शेषदिग्वधमं भवेत्
वह्नौ च यमनैर्ऋत्यां वारुणे वायुदेशके ६५
ज्वरव्याधिमनो दुःखं रिपुवृद्धिञ्च पूर्णकम्
निशाकरोत्तमं प्रोक्तं यद्विवक्ष्ये षडानन ६६
निशां रमयशक्तश्चेत् दिवासन्ध्याङ्कुरन्तथा
पालिके घटिके चैव शरावे पूजयेत्ततः ६७
नाळिकेरप्रसूनैश्च अक्षतैर्लाजसंयुतम्
अङ्कुरं कारयेद्धीमान् आयुश्रीविजयं भवेत् ६८

इति अङ्कुरार्पणविधिपटलो द्वादशः

बिंबशुद्धिपटलप्रारंभः

त्रिपुरान्तकसर्वेश इच्छामि वदमे प्रभो
सर्वलोकहितं पुण्यं सर्वानुग्रहकारणम् १
बिंबशुद्धिः कथं शंभो वक्ष्येऽहन्तु षडानन
ताम्रे वा कांस्य लोहे वा दारुणा पीठमुत्तमम् २
चतुर्हस्तसमं दीर्घं द्विकरं विस्तरन्तथा
दशाङ्गुलघनं गात्रं चित्राकारं प्रकल्पयेत् ३
पादोन्नतं विस्तरार्द्धं चतुष्पादसमायुतम्
दर्पणोदरमद्ध्यस्थं स्नानवेदिं प्रकल्पयेत् ४
नवकोष्ठं क्रमाल्लिख्य दर्भेणैव सुलेखयेत्
कुङ्कुमेनाङ्कितञ्चैव मन्त्रन्यासं प्रकल्पयेत् ५
शिवतत्वञ्च तन्मद्ध्ये पूर्वे चैव सदाशिवम्
अनले ईशतत्वं स्यात् विद्यातत्वन्तु दक्षिणे ६
माया तत्वन्तु नैर्ऋृत्यां कालतत्वन्तु पश्चिमे
निर्ऋृतौ चैव वायव्ये उत्तरे प्रकृतिन्तथा ७
ऐशान्यां पुरुषं प्राक्तं कोष्ठमद्ध्येषु पूजयेत्
पीथे बिंबं निवेश्याथ अभिषेकन्तु कारयेत् ८
नद्यां पुण्यतमं विद्यात् पुण्यतीर्थे विशेषतः
तटाकं मद्ध्यमं प्रोक्तं अधमं कूपवारिणि ९
एलालवङ्गकर्पूरत्रुटिकञ्चोलचूर्णकैः
जले निक्षिप्य तद्द्रव्यं बिंबं स्नाप्य विशेषतः १०
उत्तमं गन्धतैलं स्यात् तिलतैलन्तु मद्ध्यमम्
वदमे गन्धतैलन्तु कथं शंभो महेश्वर ११
मरीची च जटामांसी सितसर्षपमेव च
हरीतकीफलञ्चैव खदिरो मधुकस्तथा १२
नाळिकेरजलञ्चैव ----- शृङ्गिबेरकम्
कृत्वामलकसारञ्च नारङ्गफलमेव च १३

साम्राणि कोष्ठसंयुक्तं कह्लारं कोष्ठमेव च
उशीरं मूलमित्युक्तं कञ्चोरन्तु तथैव च  १४
एलालवङ्गगन्धञ्च कर्पूरं लखुपत्रकम्
अगरूञ्चैव कस्तूरि हिमांबुमिश्रमेव च  १५
पाटलीञ्चंपकञ्चैव कह्लारं मल्लिकान्तथा
तिलेषु दापयेत्पुष्पान्पञ्चरात्रं त्रिरात्रकम्  १६
दापयेत्सञ्चयेच्चैव तिलसारं ग्रहेत्ततः
एतान्मिश्राणि सम्मृज्य मिळित्वा निक्षिपेत्ततः  १७
पात्रेषु पूरयेत्पश्चात् अग्निदानाहरेत्ततः
तीव्राग्निञ्चैव मन्दाग्निं वर्जयित्वा विशेषतः  १८
पक्वतैलरसं क्षिप्य ग्राहयेत् शुद्धपात्रके
गन्धतैलं ततः पूर्वं पञ्चगव्यं द्वितीयकम्  १९
पदमे पञ्चगव्यन्तु वक्ष्येऽहन्तु षडानन
द्रोणतण्डुलमाहृत्य हस्तमात्रन्तु विस्तरम्  २०
चतुरश्राकृतिं कृत्वा द्व्यङ्गुलोन्नतमाचरेत्
नवकोष्ठं समालिख्य कोष्ठपूजां समाचरेत्  २१
शिवतत्वकृतं मद्ध्ये सादाख्यं तत्वपूर्वके
ईश्वरं त्वनले चैव विद्यां चैव तु दक्षिणे  २२
माया तत्वञ्च निर्रृतौ कालतत्वञ्च वारुणे
वायव्ये नियतीञ्चैव सोमे तत्पुरुषन्तथा  २३
ऐशान्यां प्रकृतिः प्रोक्तं पात्रपूजां ततः परम्
सुप्रतिष्ठन्तु तन्मद्ध्ये सुशान्तं पूर्वपात्रके  २४
तेजः पात्रं तथा याम्ये मृतपात्रन्तु पश्चिमे
उत्तरे रत्नपात्रन्तु धरान्ये व्यक्तपात्रकम्  २५
ज्योतीरूपन्तु शेषाणि क्षीरन्तु मद्ध्यमे तथा
पूर्वे दधिश्च सर्वे च आज्यं गोमयगोजलम्  २६
वसान्ये पयसा क्षिप्य ईशानादीन्प्रपूजयेत्
पञ्चवारं चतुर्वारं त्रिवारञ्च द्विवारकम्  २७
एकवारन्तु ईशादीन्मूलमन्त्रं जपेत्ततः

अष्टोत्तरशतं जप्त्वा अघोरेण जपेत्ततः २८
घृतं वै कुडुपं त्रीणि प्रस्थार्द्धं दधिरुच्यते
द्विप्रस्थं आढकं क्षीरं द्विप्रस्थं गोमयन्तथा २९
द्विपादं आढकं मूत्रं पञ्चगव्यं समाचयेत्
कृष्णां श्वेतं तथारक्तं धूम्रञ्च कपिला कृता ३०
घृतादीन् ग्राहयेच्चैव महापातकनाशनम्
पञ्चामृतन्तु वक्ष्येऽहं तण्डुलैर्हस्तमात्रतः ३१
नवकोष्ठं समालिख्य अर्चयित्वा विशेषतः
मद्ध्ये क्षीरन्तु संस्थाप्य दधिपूर्वे च विन्यसेत् ३२
दक्षिणे घृतमेवं स्यात्पश्चिमे गोमयन्तथा
उत्तरे मधुविन्यस्य अर्चयित्वा विशेषतः ३३
गन्धसारन्तु ईशाने जंबीरन्त्वनले तथा
नाळिकेररसञ्चैव नैर्ऋतेषु समर्चयेत् ३४
नारङ्गद्वयसंवीतं सारं वै वायुदेशके
इंद्रादीनर्चयेच्चैव अगस्त्यं मद्ध्यमे न्यसेत् ३५
कदळीफलसाहस्रं जंबीरञ्चतुरश्शतम्
षोडशं नाळिकेरञ्च पनसञ्च चतुस्तथा ३६
अशीतिपलसंयुक्तं शर्करा संप्रकीर्तितम्
त्रिप्रस्थं मधुसंयुक्तं चतुःप्रस्थं घृतन्तथा ३७
द्रोणतैलविशेषेण इक्षुदण्डं शतं भवेत्
अभ्रं शतपलं प्रोक्तं त्रिशतं नाळिकेरकम् ३८
भारमात्रन्तु सुक्षीरं द्विखारिदधिसंयुतम्
गन्धसारन्तु सुक्षीरं द्विखारिदधिसंयुतम् ३९
वस्त्रमूर्ध्ना पटाकारं नाळिकेरजलं क्षिपेत्
स्वर्णे वा रजते वापि ताम्रे वा पात्रमुत्तमम् ४०
शङ्खं वा पूरयेच्चैव अभिषेकन्तु कारयेत्
पात्रेषु फलसारञ्च निक्षिप्य चाभिषेचयेत् ४१
अश्वत्थं जंबुवृक्षञ्च प्लक्षं हालातरुन्तथा
औदुंबरञ्च वृक्षाणि एतांस्तु ग्राहयेत्ततः ४२

संगृह्य पल्लवं तेषां पञ्चपात्रेषु निक्षिपेत्
वल्मीके दर्भमूले च गजस्थाने गिरौ तथा ४३
तटाकं वटसंयुक्तं मृदोदकं प्रपूरयेत्
यथेष्टमभिषिच्याथ बिंबशुद्धिं विशेषतः ४४
शुद्धवस्त्रेण सम्मृज्य धौतवस्त्रेण वेष्टयेत्
एवं कृत्वा विशेषेण सर्वकार्येषु साधयेत् ४५
इति बिंबशुद्धिपटलस्त्रयोदशः

कौतुकबन्धपटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वकामार्थसिद्धिदम्
देवानां कौतुकं पध्वा उत्सवादिषु कर्मषु १
विधिसाध्वीषु तद्बाह्ये तलं सेच्यविशेषतः
आचार्यो कौतुकं बध्वा ग्रामसन्धिं न लङ्घयेत् २
रकारं सर्वमित्युक्तं क्षकारं पापनाशनम्
रक्षाशब्दमिति ख्यातं समासात्परिकीर्तितम् ३
स्वर्णे वा रजते वापि दुकूलतन्तुना तथा
कार्पासतन्तुना चैव एकविंशतितन्तुभिः ४
तन्तुमेकादशं प्रोक्तं सप्ततन्तुञ्च कन्न्यसम्
यावन्मात्रं तले मूलं नाभिञ्चेत् मणिबन्धके ५
तावन्मात्रं कौतुकन्तु कथं शंभो महेश्वर
गोपुराणान्तु कण्ठेषु रथानां स्तंभमद्धयमे ६
विमानं मद्धयमे कुक्षौ मण्टपे स्तंभमद्धयमे
शिवार्थं मद्धयमे पात्रे कौतुकं बन्धयेत्ततः ७
देवानाञ्च द्विजानाञ्च मणिबन्धेषु कारयेत्
क्षत्रियाणां द्व्यङ्गुलाग्रे रक्षाबन्धनमाचरेत् ८
मणिबन्धात्करो मद्ध्यं तयोर्मद्ध्ये तु बन्धनम्
वैश्यानाञ्चैवमित्युक्तं शूद्राणाञ्च ततश्शृणु ९
करमन्न्यं बाहुमूलं तयोर्मद्ध्येषु बन्धयेत्
शुक्लपात्रं समादाय तण्डुलान्पूरयेत्ततः १०

तरडुलोपरिविन्यस्य नाळिकेरञ्च विन्यसेत्
नाळिकेरं विशेषेण दीर्घकोणा कृतिं त्यजेत् ११
शिखाहीनन्त्यजेच्चैव नाळिकेरञ्च निक्षिपेत्
पक्वं फलञ्च नारङ्गं अथवा निक्षिपेत्ततः १२
उत्तराभिमुखो भूत्वा निक्षिपेत्तरडुलोपरि
अर्चयित्वा विशेषेण बिंबं वै प्रमुखो भवेत् १३
द्विकरान्तं विशेषेण तरडुलं पूरयेत्ततः
तस्योपरि फलं वापि रक्षाबन्धनमारभेत् १४
यो ब्रह्माब्रह्मण इत्यादि मन्त्रेणा बद्धयेत्ततः
रुद्रभाव्यञ्च मद्ध्ये तु बध्नीयात् देशिकोत्तमः १५
अन्ते सूत्रं विसृज्याथ ससूत्रं चुळुकोदकम्
शिवस्य वरदे हस्ते दापयेत्तु निवेदनम् १६
एवं कृत्वा विशेषेण राजराष्ट्रविवर्द्धनम् १७
इति कौतुकबन्धपटलश्चतुर्दशः

नयनोन्मीलनपटलप्रारंभः

अथातस्समहेशानसर्वकाम्यार्त्थसिद्धद
सर्वलोकहितं पुरयं नयनोन्मीलनं वद १
अथ वक्ष्ये विशेषेण श्रुणु शरवणोद्भव
क्रियानूतनकाले तु प्रतिष्ठासमये तथा २
नयनोन्मीलनं कृत्वा जगत्सृष्ट्यर्त्थकारणम्
नयनोन्मुकुळितं भाव्यं जगत्संहृतिरुच्यते ३
स्वयंभू दिव्यलिङ्गञ्च बाणलिङ्गन्तथैव च
नयनोन्मीलनञ्चैव वर्जयित्वा विशेषतः ४
नयनोन्मीलनञ्चैव पीठे चैव तु धारयेत् ४-२
अन्येषां रुद्रभागे तु पञ्चभागं प्रकीर्तितम्
त्रिभागो परिविन्यस्य वृत्ताकारं प्रकीर्तितम् ५
एकाश्राकारमेवोक्तं यागाश्रं वा प्रकल्पयेत्
शेषाद्विरेखयासंख्या पार्श्वयोश्च द्विरेखया ६

प्रदक्षिणक्रमेणैव सोमसूत्रं प्रकल्पयेत्
अन्येषां निधनयोर्मद्ध्ये पूर्णचन्द्राकृतिन्तथा ७
विमानमद्ध्यमे कुक्षौ महेशं मण्डले यजेत्
चतुर्दिशि समभ्यर्च्य अघोरास्त्रन्तु पूर्वके ८
सव्ये पाशुपतञ्चैव प्रत्यङ्गिरञ्च पश्चिमे
उत्तरे क्षुरिकां पूज्य मण्डलं पूजयेत्ततः ९
पञ्चगव्यन्तु सङ्कल्प्य सद्यादीन्योजयेत्ततः
अग्निकार्यं समाराध्य महेशं मद्ध्यमे यजेत् १०
शङ्खेषु पञ्चसङ्कल्प्य कुर्यात् गायत्रिमन्त्रतः
नाळिकेरकपालञ्च पात्राणां दापयेत्ततः ११
पात्रोत्तरे वसानञ्च प्रमीताञ्च तदुत्तरे
ब्रह्माणं दक्षिणे पूज्य कपालं ग्राहयेत्ततः १२
पात्रे च पूरयेच्चैव तोयमापूरयेत्ततः
जलेशं पूजयेत्पश्चात् घृतपात्रं गृहेत्ततः १३
घृतमापूरयेच्चैव मद्ध्ये ग्रन्धिपवित्रकम्
आज्यञ्च बहिरापूज्य स्रुक्स्रुवं संस्कृतिन्तथा १४
कपालैः पूरयेदाज्यं होमयेत्तु विशेषतः
अघोरास्त्रेण साहस्रं शिवं पाशुपतन्तथा १५
प्रत्यङ्गिरं समभ्यर्च्य सहस्रञ्च हुनेत्पृथक्
शतकन्तु विशेषेण प्रत्येकञ्च त्रयाहुतिः १६
मूलमन्त्रेण हुत्वाथ शिष्यं कौतुकबन्धनम्
वेणुदण्डं समादाय अष्टपद्ममुदीरितम् १७
षण्णवत्यङ्गुलं दीर्घं अघोरास्त्रं प्रपूजयेत्
हृत्कमण्डलुसंग्राह्य जलमापूरयेत्ततः १८
नक्षत्रेशञ्च संपूज्य अर्चयित्वा विशेषतः
वल्कलं मुद्गलं विद्यात्काषायं वस्त्रमेव वा १९
पञ्चब्रह्मषडङ्गैश्च अर्चयित्वा न्यसेत्ततः
अग्निं प्रज्वालयेच्चैव ब्रह्माणं पूजयेत्ततः २०
शिखाच्छेदं प्रकुर्वीत सद्यमन्त्रेण होमयेत्

शिखा तच्चोपवीतञ्च अघोरास्त्रेण होमयेत्  २१
अजपामन्त्रमुच्चार्य अष्टोत्तरशताहुतिम्
चतुर्विंशतितत्वञ्च संहृतिक्रममेव वा  २२
अघोरास्त्रेण हुत्वा तु त्रिवारं प्रणवमुच्चरेत्
त्रयाहुतिं पृथक्चैव निवृत्तिञ्च त्रयाहुतिम्  २३
विष्णुं संपूजयेत्पश्चात् ब्रह्माणं वैष्णवन्तथा
कालतत्वादिमभ्यर्च्य प्रत्येकञ्च त्रयाहुतिम्  २४
विद्याशक्तिं ततो हुत्वा अग्नौ रुद्रं प्रपूजयेत्
विद्यातत्वं समभ्यर्च्य त्रयाहुतिं हुनेत्ततः  २५
शान्तित्रयाहुतिञ्चैव विष्णुरुद्रैर्यजेत्ततः
महेश्वरञ्च संपूज्य रुद्रं योज्य महेश्वरे  २६
महेशं पूजयेच्चैव ईशतत्वे सुयोजयेत्
आत्मानं स्वहृदे न्यस्य आहुतित्रयमुत्तमम्  २७
भोग्यकर्मोपभोगार्त्थं शिष्यदेहे च योजयेत्
महेशं मस्तके न्यस्य उपदिश्य विशेषतः  २८
अकारञ्च सकारञ्च अजपामन्त्रमुच्चरन्
शिवाय मन्त्रं मन्त्रेण उपदेशन्तु कारयेत्  २९
ईशानादि च सद्यान्तं शिष्येणैव समाचरेत्
तत्तन्नामप्रकल्प्याथ नामान्ते ब्रह्ममुच्चरन्  ३०
पञ्चब्रह्माभिधानैश्च अर्चयित्वा महेश्वरम्
दण्डं करे च संयोज्य द्विकरा वञ्जली कृतम्  ३१
नाभिदेशे नमस्कृत्य त्रिप्रदक्षिणमारभेत्
महेश इति नामाख्यं यःपरस्समहेश्वरः  ३२
महेशे सम्यक्न्यासं चित्तं सन्यासमुच्यते
पूजायोग्यं महेशानं ध्यानयोग्यं सदाशिवम्  ३३
मोहैस्सदाशिवं पूज्य ब्रह्महत्या समं भवेत्
सन्यासदर्शनं कृत्वा कन्यकादर्शनं तथा  ३४
अष्टवर्षा भवेत् कन्न्या गौरी चेत् दशवर्षिणी
उत्तमं कन्न्यका चैव गौरी वा मद्ध्यमं भवेत्  ३५

कुनखी अङ्गहीना च मुण्डीरोगी विवर्जयेत्
विप्रयुग्मं प्रदर्श्या वा धान्यञ्चैव ततः परम्  ३६
धान्यं प्रदर्शयित्वा तु दधिक्षीरं प्रदर्शयेत्
यजमानन्ततः पश्चात् दर्शयेत्सर्वजनानपि  ३७
एवं कल्प्य विशेषेण महापातकनाशनम्
सर्वकामप्रदं प्रोक्तं देवसान्निद्ध्यकारणम्  ३८
इति नयनोन्मीलनपटलः पञ्चदशः

जलाधिवासपटलप्रारंभः
अंबिकानाथ सर्वेश देवदेव महेश्वर
जलाधिवासनं श्रोतुमिच्छामि वदमे प्रभो  १
वक्ष्येऽहन्तु महासेन सर्वकामार्त्थसिद्धिदम्
आयुरारोग्यमैश्वर्यं अपमृत्यु क्षयं भवेत्  २
नदीतीरे पुण्यतीर्त्थे तटाकेवा प्रकल्पयेत्
तोयं शुद्धमशुद्धं वा शिवालय समीपगम्  ३
शिवगंगे च तीर्त्थे वा शिवधामांबुसेचनम्
तीर्त्थमद्ध्ये विशेषेण मण्टपालं कृतन्तथा  ४
गोमयालेपनं कृत्वा तीर्त्थं वारणमस्तके
धान्यपुञ्जैरलंकृत्य अष्टपद्मदळं लिखेत्  ५
दशकुंभं न्यसेद्धीमान्सूत्रकूर्चैरलंकृतम्
मण्डितं गन्धपुष्पाद्यैः अमुकं देवमर्चयेत्  ६
चरं चराचरञ्चैव अचरञ्च स्थितं भवेत्
चरं धातुमयं ज्ञेयं अचरञ्च शिलामयम्  ७
चराचरं बाणलिङ्गं स्थितं गोपुरमुच्यते
स्वायंभुदेविकञ्चैव दिव्यं भक्तिपटन्तथा  ८
दर्पणे देवमावाह्य पूजयेत्तु विशेषतः
नित्यं स्नानं प्रतिदिनं देवानां पूजयेत्ततः  ९
नित्यं स्नानविहीने तु दर्पणे स्तानमाचरेत्
घटे देवं समावाह्य अष्टमूर्तिन्न्यसेत्ततः  १०

देवस्य पूर्वदिक् भागे ब्राह्मणान्वेदपारगान्
अघोरास्त्रजपं सव्ये वामे चैव त्रियंबकम् ११
शिवास्त्रं पश्चिमे चैव याम्ये घोषैस्समप्रभम्
नृत्तगीतसमायुक्तं वेदघोषैश्चतुर्दिशि १२
पञ्चगव्यन्तथाकल्प्य क्षिपेत्सद्यैस्समर्चयेत्
त्रिरात्रं एकरात्रं वा याममात्राधिवासनम् १३
बिंबं जलेषु निक्षिप्य वारुणं मन्त्रमुच्चरन्
आपो वा इदं सर्वं मन्त्रमुच्चारयेत्ततः १४
पूर्वाद्यष्टदिशि चैव अष्टभैरवमर्चयेत्
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा १५
वाराही चैव माहेन्द्री चामुण्डा वीरभद्रका
अष्टदिक्ष्वर्चयित्वा तु रक्षार्त्थं पूजयेत्ततः १६
मोक्षार्त्थञ्जलजन्तूनां जलाधिवासनन्तथा
एवं प्रतिदिनं पूज्य वेदघोषं सदाजपेत् १७
बिंबमुत्थापयेत्तत्र धौतवस्त्रेण वेष्टयेत्
गन्धपुष्पैरलङ्कृत्य प्रादक्षिण्य क्रमेण वा १८
यागशालां प्रविश्याथ सव्ये हि स्थपयेत्ततः
एवं कृत्वा विशेषेण क्षत्रियो विजयी भवेत् १९
इति जलाधिवासपटलष्षोडशः

यागलक्षणपटलप्रारंभः

धूर्जटे परमेशानवदमे यागलक्षणम्
अथ वक्ष्ये विशेषेण सर्वलोकहिताय च १
सर्वेषां रक्षणार्त्थाय भूभुजानां जयप्रदम्
शिवयागग्रहं कल्पं वक्ष्येऽहन्तु षडानन २
षट्त्रिंशत्करदीर्घं स्यात् उत्तमं परिकीर्त्तितम्
अष्टादश करञ्चैव मद्ध्यमं संप्रकीर्त्तितम् ३
अधमं नवहस्तं स्यात्त्रिविधं भेदमुच्यते
आचार्यः करमानेन कल्पयेत्शिवमण्टपम् ४

पूर्वे वा दक्षिणे वापि उत्तरे ईशदेशके
यागशालोत्तमं विद्यात्पश्चिमे तु न कारयेत् ५
अग्नौ वा निर्रृतौ वापि वायौ वा कल्पयेत्ततः
पूर्वे जयप्रदं विद्यात् याम्ये संवत्सरं भवेत् ६
पश्चिमे ग्रामशून्यं स्यात् उत्तरे पुत्रवर्द्धनम्
ईशे श्रेयस्करं प्रोक्तं आग्नेय्यां शत्रुनाशनम् ७
नैर्रृत्यां क्लेशसंयुक्तं वायव्यां पुत्रसंपदम्
खननं तालमात्रन्तु उत्थाय पूरणन्तथा ८
कुशकाशयवाघाते विकिरेत् गोहिभक्षयेत्
काशैर्विकारमात्रेण दहनं वा तथैव च ९
ब्राह्मणान्भोजयेत्तत्र पञ्चगव्यैश्च शुद्धयेत्
शिलायामुत्तमं प्रोक्तं यष्टिका मद्ध्यमं भवेत् १०
अधमं मृण्मयं वापि मण्टपं कारयेत्ततः
षट्त्रिंशत्करविस्तारं उत्तमं परिकीर्त्तितम् ११
अष्टादश करञ्चैव मद्ध्यमञ्च तथैव च
अन्यसं नवहस्तं स्यात्त्रिविधं यागलक्षणम् १२
भूमौ नवपदं विद्यात् चतुस्सूत्रन्तु प्राग्दिशि
उदीची चर्मसूत्रञ्च नवकोष्ठं प्रकीर्त्तितम् १३
नवोनवपदं विद्यात्पूर्वादौ च चतुर्दिशि
पूर्वकोष्ठे पूर्वपदं सव्यकोष्ठे च सव्यके १४
पश्चिमे पश्चिमं कोष्ठं उत्तरे उत्तरं पदम्
गोपुरस्य विशेषेण नासिमद्ध्ये प्रकल्पयेत् १५
रथेषु मूर्ध्निमद्ध्ये च शूलस्य मद्ध्यपत्रके
उत्तमं स्वर्णपात्रञ्च मद्ध्यमं रजतन्तथा १६
तालमात्रन्तु विस्तारं पूर्णचन्द्रा कृतिन्तथा
मधुः पयः द्विपात्रे च सागरा नर्चयेत्ततः १७
स्वर्णे वा रजते वापि षोडशाङ्गुलदीर्घकम्
अष्टाङ्गुलप्रमाणं वा चतुरङ्गुलमेव वा १८
त्रियङ्गुलसमन्नाहं रुष्टन्निर्म्म्य विशेषतः

स्वर्णेन रजतेनैव दूर्वाकारं प्रकल्पयेत् १९
चतुर्द्दळेन संकल्प्य कल्पयेत्साधकोत्तमः
इत्युक्तमत्युक्तमेवेति आरोग्यं उत्तरं नवम् २०
एकाङ्गुलसमन्नाहं षडङ्गुलन्तु दीर्घकम्
दर्भाग्रैर्वा समं कल्प्य नेत्रमद्ध्ये च दापयेत् २१
दूर्वेनमषि इत्युक्तं त्रिसन्ध्यं सव्य नेत्रके
दूर्वेन पयसोद्धृत्य वामनेत्रेषु दापयेत् २२
प्रच्छन्नपटमावृत्य दर्शयेत्साधकोत्तमः
गोदर्शनं विशेषेण अरोगी नाङ्गहीनकम् २३
पुत्रहीनन्त्यजेच्चैव गोदर्शनं विशेषनः
सन्न्यासिदर्शनं कृत्वा प्रच्छन्नपटलं घनम् २४
वयस्सप्तदशादूर्द्ध्वं सन्न्यासन्तु विधीय्यते
इच्छामि वदमे शंभो सर्वज्ञत्रिपुरान्तक २५
वक्ष्येऽहन्तु महासेन सन्न्यासं व्रतधारिणम्
षष्टिवत्सरपर्यन्तं सर्वदेशेषु भुञ्जयेत् २६
वयस्सप्तदशान्तञ्च कानने वासिनन्तथा
जितेंद्रियो महाप्राज्ञः त्रिपदार्त्थस्वरूपकम् २७
सन्न्यासं ब्राह्मणानान्तु अन्येषां वर्जयेत्ततः
कल्पयेच्छिवभक्तानां ब्राह्मणानां विधीयते २८
आदिशैव महाशैवौ द्वयोस्सन्न्यासमुत्तमम्
निर्वाणदीक्षायुक्तानां सन्न्यासन्तु न कारयेत् २९
मोहेन कारयित्वा तु रौरवं नरकं व्रजेत्
कल्पयेत्समयीनान्तु विशेषन्तु न कारयेत् ३०
पूर्वं सन्न्यासमित्युक्तं पश्चान्निर्वाणमुत्तमम्
निर्वाणान्ते च सन्न्यासं शिवद्रोहीति निश्च्यते ३१
वक्ष्येऽहन्तु महासेन सन्न्यासविधिमुत्तमम्
सन्न्यासी वृषभं गत्वा प्रणम्य पादमूलयोः ३२
जितेन्द्रियं महाप्राज्ञं भगवच्चरणार्हकम्
शिष्यं संपादयेच्चैव पूर्वोक्ते यागमण्टपे ३३

मद्ध्ये वेदीन्तु सङ्कल्प्य पूर्वे कुण्डं समालिखेत्
मण्डलं वेदिमद्ध्ये च अष्टमङ्गलमुच्यते ३४
पूर्वाद्यष्टदिशि त्वेव ईशाने नैर्ऋते तथा
दशकुंभं न्यसेच्चैव वज्रादीन्पूजयेत्ततः ३५
उत्तराभिमुखो भूत्वा कृष्णाजिनसमाश्रितः
तुर्याकारान्प्रकल्प्याथ चतुस्सूत्रं पृथक्पृथक् ३६
षोडशस्तंभनिर्वृत्या अष्टाष्टस्तंभमुच्यते
पृथक्पृथक्चक्रसूत्रे स्तंभानष्टकमुच्यते ३७
द्वात्रिंशत्स्तंभमित्युक्तं मद्ध्यमं परिकीर्तितम्
पृथक्पृथक्चतुस्सूत्रे चतुस्तंभान्निवृत्तते ३८
षोडशस्तंभसंयुक्तं कन्न्यसञ्ज्ञ प्रकीर्तितम्
द्वादशस्तंभमालिख्य कन्न्यसञ्ज्ञ प्रकीर्तितम् ३९
वसुहस्तं सप्तहस्तं पञ्चहस्तं त्रिहस्तकम्
वसुस्तदेकहस्तान्तं अधमाधममुच्यते ४०
मूलबेरञ्च शक्त्याथ महेशप्रतिमादिकाम्
महाप्रतिष्ठाकाले तु वर्जयैतान् विशेषतः ४१
दीक्षाकाले नृत्तयागे कल्पयेत्तु विशेषतः
परिवारोपभेदानां कल्पयेत्साधकोत्तमः ४२
चूतञ्च नाळिकेरञ्च जंपूप्लक्षमधुद्रुमाः
याज्ञवृक्षो निंबतरुः पाटलिश्चंपकस्तथा ४३
चिटिका कङ्कवृक्षाश्च पनसैश्च तमालकैः
हिन्तालैर्लिकुचैश्चैव भूवृक्षैः प्रियवृक्षकैः ४४
काचवृक्षैः निंबकृष्णैः गुग्गुलूवृक्षमेव च
कर्णिकारञ्चन्दनञ्च देवदारुन्तथैव च ४५
गिरिवृक्षैर्बादरी च वेणुमश्मन्तमेव च
इन्दुवृक्षं हीरतरुः किरीटविटपन्तथा ४६
न चक्षारं न पर्वञ्च न त्वक्वृक्षान्समारभेत्
चतुष्षष्ट्यङ्गुलं नाहं उत्तमं परिकीर्तितम् ४७
चत्वार्यङ्गुलमेवोक्तं मद्ध्यमं परिकीर्तितम्

षट्त्रिंशाङ्गुलमेवोक्तं कन्यसञ्च प्रकीर्तितम् ४८
नवहस्तोन्नतं प्रोक्तं सप्तहस्तमथापि वा
पञ्चहस्तोन्नतं कल्प्य चतुर्दिक्षु समं भवेत् ४९
विमानाकारमद्ध्ये च मराटपालङ्कृतिन्तथा
चतुरश्रं स्तंभमूले कलशाकाररेखिका ५०
अधः पद्मं ऊर्ध्वपद्मं युगाश्रं फलकाश्रकम्
स्तंभाग्रे गात्रनिर्माणमराटपं कारयेत्ततः ५१
मद्ध्ये नवपदं वेदीं युगाश्रं कल्पयेत्ततः
हस्तमात्रोन्नतं प्रोक्तं उत्तमं यागमराटपम् ५२
तदेवमद्ध्यमञ्चैव वेदीं कृत्वा विशेषतः
विस्तारमद्ध्यमं प्रोक्तं कन्यसे च प्रकीर्तितम् ५३
षडङ्गुलोन्नतं वापि उत्तमा मद्ध्यमाधमा
अर्द्धहस्तोपवेदीञ्च वेदीं कृत्वा विशेषतः ५४
चतुर्हस्तसमं दीर्घं चतुर्हस्तन्तु विस्तरम्
चतुर्हस्तसमं खातं तद्बाह्ये श्रुणु षरामुख ५५
उन्नताष्टदशाङ्गुल्यं विस्तारं तत्समन्तथा
नवाकारं मेखले च तदधो द्वादशाङ्गुलम् ५६
तत्संघनियमेत्युक्तं तदधोष्टाङ्गुलं भवेत्
विस्तारोन्नतिसङ्कल्प्य चतुरश्राकृतिन्तथा ५७
दशाङ्गुलन्तु विस्तारं नाभिं कृत्वा विशेषतः
अश्वत्थपर्णं सङ्कल्प्य उत्तमं कुराडमुच्यते ५८
द्विकरं दीर्घमित्युक्तं त्रिकरं विस्तरन्तथा
चतुरश्रा कृतिं कृत्वा तद्बाह्ये च तथैव च ५९
नवाङ्गुलोन्नतं विद्यात्तदेवविस्तरन्तथा
सप्ताङ्गुलोन्नतं विद्यात्तदेव विस्तरन्तथा ६०
सप्ताङ्गुलोन्नतं कृत्वा मद्ध्यमं परिकीर्तितम्
एकहस्तन्तु विस्तारं दीर्घमेककरं भवेत् ६१
चतुरङ्गुलन्तु विस्तारं उन्नतं चतुरङ्गुलम्
त्रयाङ्गुलमथावापि द्वयाङ्गुलमथापि वा ६२

युगाश्रं कुण्डमित्युक्तं योनिकुण्डन्तत श्रुणु
क्षेत्रांशं कुण्डमानञ्च चतुरश्रं प्रकीर्तितम्  ६३
एकांशं एकपार्श्वे च मिळित्वा कुण्डमानतः
चतुर्भागं भ्रामयित्वा ऊर्ध्वभागे द्विवर्त्तुळम्  ६४
आकृष्य पञ्चमे भागे द्विसूत्रं योजयेत्ततः
उत्तमं मद्ध्यमञ्चैव अधमं संप्रकीर्तितम्  ६५
क्षेत्रांशं सव्यभागे च नवभागं प्रकीर्तितम्
पूर्वे च पश्चिमे चैव एकमेकन्न्यसेत् द्वयोः  ६६
भ्रामयेदर्द्धचन्द्रञ्च उत्तमं मद्ध्यमाधमम्
क्षेत्रं त्रिभागं कुर्वीत षट्भागं वा प्रकल्पयेत्  ६७
एकांशं ग्राहयेच्चैव प्रवृत्तिञ्च चतुर्दिशि
त्रिमत्स्यं भागयेच्चैव त्रिकोणन्तु तदुत्तमम्  ६८
क्षेत्रांशकुण्डसूत्रञ्च ईशानात् नैर्ऋतान्तकम्
तत्सूत्रं ग्राहयेच्चैव अष्टभागं प्रकीर्तितम्  ६९
त्यजेदेकांशमित्युक्तं भ्रामयेद्वृत्तमीरितम्
क्षेत्रं षट्भागमित्युक्तं एकांशं ग्राहयेत्ततः  ७०
वृद्धितञ्च चतुर्दिक्षु षण्मत्स्याकृतिमुत्तमम्
षडश्रं कारयेत्तत्र उत्तमामद्ध्यमाधमा  ७१
वृत्तकुण्डोपसङ्कल्प्य मेखलात्रयमुत्तमम्
पद्मन्तदेव सङ्कल्प्य भूम्यन्तं मद्ध्यमेखला  ७२
क्षेत्रांशञ्चैव तन्मानं दशभागं प्रकीर्तितम्
एकभागं समादाय चतुर्दिक्षु सवृद्धितम्  ७३
ईशानात् नैर्ऋतान्तञ्च कुण्डसूत्रं समाहरेत्
तत्सूत्रं भ्रामयेच्चैव अष्टकोणं प्रकीर्तितम्  ७४
चतुरश्रं प्रकल्प्याथ मेखलात्रयमुत्तमम्
कुण्डनाहन्ततः कृत्वा पूर्वे वा कल्पयेत्ततः  ७५
षट्त्रिंशदष्टादश द्वारसंख्या अष्टाष्टद्वांत्रिंशसु षोडशपदान् ।
चतुः करं द्विःकरमेकहस्तकं युगाश्रयोनिं द्विजराजसंख्यके  ७६
त्रिकोणमष्टाश्रषडश्रपद्मकं युगाश्रवृत्तं नवकुण्डनिर्मितम् ।

अष्टादश द्वादशचाष्टमेखलान् नवाङ्गुलस्सप्त च भूतसंख्यया ७७
चतुःत्रयद्वावपि नाहमन्तरे युगाश्रवेदीमथदर्पणोदरम् ।
हस्तमात्रमथ हस्तविस्तरं विस्तरार्द्धमधोन्नतन्तथा ७८
हस्तन्तदर्द्धञ्च तदर्द्धवेदी वेद्यादधः पश्चिममण्डलन्तथा ।
पूर्वादिकोष्ठान्परितोपवेदीन्गन्धादि ईशान्तगुरून्यजेद्गुह ७९
षोडशाङ्गुलमुन्नत्या उपवेदीं प्रकल्पयेत्
द्वादशं मद्ध्यमं प्रोक्त अष्टाङ्गुलन्तु कन्यसम् ८०
मण्डलस्याकृतिं वक्ष्ये श्रुणुष्व च षडानन
एकचत्वारि सूत्रैश्च रेखाः प्राचीः प्रकल्पयेत् ८१
एकचत्वारि सूत्रैश्च इत्युक्तान्कल्पयेत्ततः
षट्शतञ्च सहस्रञ्च पदं कृत्वा विशेषतः ८२
मद्ध्ये दशपदं विद्यात् चतुर्दिक्षु समं भवेत्
एते शतपदञ्चैव मद्ध्ये पद्मं समालिखेत् ८३
कर्णिकां पीतवर्णाभां षोडशं शतसंयुतम्
दळात्रत्नप्रभं विद्यात् श्वेताभं दळमूलके ८४
पार्श्वयोः श्वेतरेखा च तद्बाह्ये त्रिदळं भवेत्
वीधी त्रयं चतुःपार्श्वे पीतं मरतकंसितम् ८५
पूर्वे च दक्षिणे चैव पश्चिमे उत्तरे तथा
पृथक्पृथक् विशेषेण वसुसंख्यापदंग्रहेत् ८६
चतुर्दिक्षु विशेषेण पूर्वपश्चिमयोर्दश
अष्टाङ्गुलसमं दीर्घं विस्तारञ्च द्व्याङ्गुलम् ८७
द्विपादञ्चैव सङ्कल्प्य त्रिपादं मद्ध्यमेवहि
तस्योपरि त्रयाङ्गुल्यं शृङ्गाकारं प्रकल्पयेत् ८८
अर्द्धाङ्गुलसमं कर्णं तस्योपरियुगाङ्गुलम्
नासिमद्ध्ये प्रकल्प्याथ तस्योपरि घटत्रयम् ८९
अर्द्धमेकाङ्गुलं प्रोक्तं शफराकारमुत्तमम्
पञ्चवर्णैरलङ्कृत्य चतुर्दिक्षु प्रकल्पयेत् ९०
शफरं पार्श्वयोश्चैव त्रिपदं ग्राहयेत्ततः
लताकारं प्रकल्प्याथ ऊर्ध्वे दशपदोन्नतम् ९१

अष्टत्रिपादं संग्राह्य भूतसंख्यानि भव्यके
दक्षिणे तलपूर्वे च संयुतञ्च त्रिकोणकम्  ९२
लतानां पार्श्वयोश्चैव लिङ्गान्कृत्वा विशेषतः
षट्पदं ग्राहयेच्चैव कुङ्कुमेनाश्रितन्तथा  ९३
तस्योपरि पदं वेद तस्योपरि पदद्वयम्
चतुःपदं तदूर्ध्वे तु पापदञ्च तदूर्ध्वके  ९४
तदूर्ध्वे द्विपदञ्चैव तस्योर्ध्वे द्विपदन्तथा
कुङ्कुमेनाङ्कितं पश्चात्साप्युदीची द्विलिङ्गकौ  ९५
दक्षिणे कृष्णलिङ्गञ्च पश्चिमे श्वेतमुच्यते
उत्तरे रक्तवर्णाभं चतुःपार्श्वे समं भवेत्  ९६
लिङ्गस्य दक्षिणे पार्श्वे भूतसङ्ख्या पदं ग्रहेत्
अष्टदिक्पदमालिख्य आग्नेयादि चतुर्दिशि  ९७
तद्बाह्ये द्विपदं विद्धि इच्छाकान्तीन्प्रकल्पयेत्
धूसरैः पञ्चवर्णैश्च कल्पयेत् मण्डलाकृतीन्  ९८
श्रीविशाल इति ख्यातं मङ्गलाञ्च ततश्शृणु
ताम्रैर्वा लोहकैर्वापि दारुजैर्वा प्रकल्पयेत्  ९९
अष्टाङ्गुलन्तु विस्तारं षडङ्गुलमथापि वा
पञ्चाङ्गुलं वा सङ्कल्प्य चतुर्विंशाङ्गुलोन्नतम्  १००
पञ्चाङ्गुलघनं प्रोक्तं फलकामद्ध्यमं श्रुणु
दर्पणं पूर्णकुंभञ्च पूर्वे चैव न्यसेत्ततः  १०१
वृषभं वामसव्ये च बलवर्णैरलङ्कृतम्
श्रीवत्सं स्वस्तिकं पश्चात् शङ्खदीपन्तथोत्तरे  १०२
फलकामद्ध्यमे कल्प्य यथा कारं प्रकल्पयेत्
श्वेतादिपञ्च वर्णैर्वा वेद्यासक्तान्समालिखेत्  १०३
मङ्गला लक्षणं प्रोक्तं वज्रादींश्च ततश्शृणु
षट्त्रिंशाङ्गुलदीर्घाणि उत्तमं परिकीर्तितम्  १०४
मद्ध्यमञ्चैव षट्त्रिंशत् अष्टादशमथापि वा
दशाङ्गुलन्तु विस्तारं उत्तमं परिकीर्तितम्  १०५
अष्टाङ्गुलघनं प्रोक्तं सप्तमं भूतसङ्ख्यया

ताम्रैर्वा लोहकांस्यैर्वा फलकाङ्कल्पयेत्ततः १०६
षडङ्गुलन्तु दीर्घाणि रेखाकारं प्रकल्पयेत्
द्विपार्श्वे वर्तुळाकारं त्रिशाखा सममुत्तमम् १०७
तदधो मुष्टिमात्रञ्च अधोशूलत्रयाकृतिम्
द्विभुजञ्च द्विनेत्रञ्च स्थूलतुन्दिलसंयुतम् १०८
द्विकरावञ्जली कृत्य श्यामवर्णं किरीटिनम्
वज्रस्य लक्षणं प्रोक्तं शक्तेस्तु लक्षणं श्रुणु १०९
पञ्चाङ्गुलसमं नाळं द्वयाङ्गुलन्तु विस्तरम्
चतुरङ्गुलन्तु विस्तारं द्वादशाङ्गुलमुन्नतम् ११०
शतकोटयश्रमेवोक्तं शक्त्यायुधं प्रकीर्तितम्
षट्त्रिंशदश्रमेवोक्तं चतुर्विंशाश्रमेव च १११
द्वादशाश्रं प्रकल्प्याथ दण्डञ्चैव ततश्शृणु
त्रिकोणाकारमङ्गानि अञ्जलीकृतसंयुतम् ११२
शक्त्यायुधं प्रकल्प्यामथ दण्डं वै षोडशाङ्गुलम्
द्वयाङ्गुलन्तु विस्तारं कृष्णवर्णं द्विनेत्रकम् ११३
दण्डाळविग्रहाकारं अंजलीकृतिसंयुतम्
दण्डञ्चैवमिति ख्यातं खड्गञ्चैव ततश्शृणु ११४
अष्टाङ्गुलसमं दीर्घं नाळं वै चतुरङ्गुलम्
त्रिकोणाकारमित्युक्तं विस्तारञ्चेत्त्रयङ्गुलम् ११५
श्यामवर्णं कराळञ्च भृकुटीमुखभीषणम्
खड्गञ्चैवमिति ख्यातं पाशञ्चैव ततश्शृणु ११६
षोडशाङ्गुलदीर्घाणि द्विपार्श्वे रजताकृतिम्
ऊर्ध्वे च वर्तुळाकारं षडङ्गुलन्तु विस्तरम् ११७
अधो द्व्याङ्गुलं मद्ध्ये द्विपुच्छञ्चैव पार्श्वयोः
कृष्णवर्णं महाबाहुं अञ्जलीकरसंयुतम् ११८
पाशस्य लक्षणं प्रोक्तं ध्वजस्य लक्षणं श्रुणु
द्वादशाङ्गुलदण्डञ्च एकाङ्गुलन्तु विस्तरम् ११९
ऊर्ध्वे च एकपार्श्वे च षडङ्गुलन्तु विस्तरम्
अष्टाङ्गुलसुदीर्घाणि अश्रुपीतांभसन्निभम् १२०

दंष्ट्राकराळवदनं अञ्जलीकृतसंयुतम्
ध्वजस्य लक्षणं प्रोक्तं गदाया लक्षणं श्रुणु १२१
दशाङ्गुलं समं दीर्घं मूले द्व्यङ्गुलविस्तरम्
चतुरङ्गुलमग्रे च कन्यारूपांबुजद्वयम् १२२
अञ्जली पीतपद्माभां त्रिशूलञ्च ततश्श्रुणु
षोडशाङ्गुलदीर्घाणि त्रिशूला कारमूर्ध्वके १२३
श्यामवर्णं द्विनेत्रञ्च कराळवदनन्तथा
पत्रमष्टदळं लिख्य द्विभुजा च द्विनेत्रका १२४
एकाङ्गुलन्तु विस्तारं पूर्णचन्द्रा कृतिन्तथा
द्विनेत्रा द्विभुजाश्यामा कराळवदनाभ्रमा १२५
दशायुधान्प्रकल्प्याथ पूर्वाद्यष्टदिशि त्वपि
वज्रादींश्च प्रकल्प्याथ ईशाने नैर्ऋते तथा १२६
चक्रपद्मयुतञ्चैव तोरणञ्च ततश्रुणु
द्वारायामसमं दीर्घं पार्श्वयोश्चैव विस्तरम् १२७
नवाङ्गुलन्तु विस्तारं उत्तमं परिकीर्तितम्
षडङ्गुलञ्च विस्तारं त्रयाङ्गुलमथापि वा १२८
षोडशाङ्गुलदीर्घाणि त्रिशूलाकारमद्ध्यमे
द्विपार्श्वयोर्विशेषेण त्रिशूलाकृतिनिर्मितम् १२९
तोरणानां विशेषेण श्रुणुष्व कुम्भलक्षणम्
स्वर्णेन रजतेनैव ताम्रे वा मृण्मयेऽपि वा १३०
द्विखारि पूर्णयेच्चैव पूर्णकुम्भोदरन्तथा
वृत्ताकारं सुदीर्घञ्च कर्णञ्चैव ततोपरि १३१
चतुर्विंशाङ्गुलं नाहं कोष्ठञ्चैव द्वयाङ्गुलम्
पूर्णचन्द्रा निभाकारं कुंभं वै निर्मितं भवेत् १३२
अथवा मृत्घटे वापि धूम्रं कृष्णं विवर्जयेत्
भिन्नञ्च सुषिरं त्यज्य रक्तवर्णन्तथैव च १३३
कुम्भस्य लक्षणं प्रोक्तं वर्जनी लक्षणं श्रुणु
त्रिद्रोणं पूरयेत्कुम्भं नाहं वै षोडशाङ्गुलम् १३४
पूर्णचन्द्रा कृतिं कृत्वा कुण्डमद्ध्ये विशेषतः

चतुरङ्गुलदीर्घाणि नाहं पञ्चाङ्गुलं भवेत् १३५
मद्ध्ये सुषिरमेवोक्तं ऊर्ध्वाभिमुखसंयुतम्
पूरयेत्वारिमात्रन्तु शेषान्कुम्भान्प्रकल्पयेत् १३६
द्रोणं प्रपूरयेच्चैव शेषान्कुम्भान्प्रकल्पयेत्
यावन्मात्रन्तु कलशान्यावन्मात्रन्तु वर्द्धनी १३७
तावत्सङ्कल्प्य मात्रेण पात्रस्य लक्षणं शृणु
द्वादशाङ्गुलविस्तारं वृत्ताकारं विशेषतः १३८
षडङ्गुलसमं घातं पात्राणि कल्पयेत्ततः
पात्रलक्षणमेवोक्तं आसनञ्च ततश्रुणु १३९
कृष्णाजिनन्तु मोक्षार्थं व्याघ्रं वै द्वयसिद्धिदम्
सर्वकामप्रदं प्रोक्तं कूर्मासनमिहोच्यते १४०
इभासनं योगसिद्धिं कंबळं पुत्रसंपदम्
वस्त्रं दारिद्रमित्युक्तं दारुजं कोपनाशनम् १४१
धरण्यां मद्ध्यमं प्रोक्तं शिलायां सर्वनाशनम्
पूजाकाले होमकाले वीरासनमिहोच्यते १४२
आसनोपरिसंस्थित्वा सर्वकार्यात्र्थसाधनम्
षट्त्रिंशाङ्गुलदीर्घाणि विस्ताराष्टदशाङ्गुलम् १४३
वक्त्रं षडङ्गुलञ्चैव त्रिंशाङ्गुलसमं भवेत्
पार्श्वयोश्च विशेषेण द्विहस्तञ्चैव निर्मितम् १४४
चतुरङ्गुलविस्तारं षडङ्गुलसुविस्तरम्
षडङ्गुलघनं प्रोक्तं वर्तुळाकारमुत्तमम् १४५
चतुरङ्गुलिकां कल्प्य पश्चात्पादद्वयन्तथा
करमानं यथाकल्प्य पश्चात्पुच्छं त्रयाङ्गुलम् १४६
षडङ्गुलघनं कुष्ठं उत्तमं परिकीर्तितम्
अङ्गुलञ्च चतुर्विंशत् विंशाङ्गुलसुदीर्घकम् १४७
चतुरङ्गुलवक्त्रं स्यात् दर्पणोदरसन्निभम्
पक्षसङ्ख्या च विस्तारं नाहं वै चतुरश्रकम् १४८
चतुष्पदानि तद्बाह्ये त्रयाङ्गुलसुविस्तरम्
चतुरङ्गुलदीर्घाणि मद्ध्यमं संप्रकीर्तितम् १४९

षोडशाङ्गुलदीर्घञ्च त्रयोदशसुमद्ध्यमम्
त्रयाङ्गुलं मुखं विद्यात् नाहञ्चैव त्रयाङ्गुलम्  १५०
तद्बाह्ये द्व्यङ्गुलञ्चैव विस्तारं पदमुच्यते
त्रयाङ्गुलं सुदीर्घाणि पुच्छमेकाङ्गुलं भवेत्  १५१
कन्यसञ्चेति तत्प्रोक्तं वीरासनमथ श्रुणु
दक्षपादतलं भूम्यां वामोरू मद्ध्यमे तथा  १५२
वामजानुं समावर्त्य सव्यजङ्घामधो तथा
दक्षोरुमूले संयोज्य कूर्मासन --------  १५३
ब्रह्मासनं तथा पश्चात्कल्पयेत्विधिवत्क्रमात्
दक्षपादतलं वामे सव्ये वामतलं न्यसेत्  १५४
भूमौ विन्यस्य मात्रेण योगपट्टेन वेष्टयेत्
योगासनमिदं प्रोक्तं भद्रासनं ततश्शृणु  १५५
वामपार्ष्णीमधोभागे वामपृष्ठे न्यसेत्ततः
अङ्गुलीन्भुविनिक्षिप्य सव्यं जङ्घमधो तथा  १५६
सर्वपृष्ठे च संयोज्य अङ्गुलीन्भुविनिक्षिपेत्
द्विजानूभुविनिक्षिप्य गोकर्णञ्च ततश्श्रुणु  १५७
सुखासनं भवेत्स्थित्वा वामोरूमद्ध्यमे तथा
वामपादतलस्यापि अधोभागे विशेषतः  १५८
सव्यभागतलं स्थानं ऊर्ध्वजनुभवेत्ततः
गोक----मिति विख्यातं धैर्यासनं ततश्शृणु  १५९
सम----समतनुस्थानकञ्चपमुच्यते
दण्ड----तिप्रोक्तं पिण्डासनन्ततश्शृणु  १६०
गजोष्ट्रवाजियाने च सुखासीनं भवेत्ततः
राज्ञां विशेषमित्युक्तं अन्येषां वर्जयेत्ततः  १६१
सिह्मासनं विशेषेण भूभुजानां विशेषतः
सुखासनं भवेच्चैव वामपादप्रकोष्ठके  १६२
सव्यपादप्रकोष्ठञ्च संयुक्तौ गजकर्णिका
गजकर्णमिति प्रोक्तं गजकट्यं ततश्शृणु  १६३
द्विपादौ ऊर्ध्वदेशे तु मस्तकं भुविविन्न्यसेत्

जपं कृत्वा विशेषेण कटिदेशे करन्न्यसेत् १६४
कट्यासनमिति प्रोक्तं मयूरञ्च ततश्शृणु
करौ तलौ भुविन्यस्य हृत्कटिञ्च द्विपादकौ १६५
ऊर्ध्वदेशे समुत्थाय द्विकराभ्यां भुविन्यसेत्
मयूरासनमेवोक्तं जपकाले विशेषतः १६६
षट्त्रिंशाङ्गुइलदीर्घाणि उत्तमं परिकीर्तितम्
चतुरङ्गुलमायामं अपक्वं पद्मपुष्पवत् १६७
अष्टाङ्गुलसमन्नाहं जर्झरां वर्जयेत्ततः
अथवाष्टाङ्गुलं दीर्घं दण्डन्तु कारयेत्ततः १६८
नाहं नवाङ्गुलं प्रोक्तं स्तंभाकारं तथैव च
चतुरङ्गुलमायामं कलशाकृतिमुत्तमम् १६९
द्वादशाङ्गुलनाहं स्यात्पूर्णकुंभाकृतिन्तथा
तदन्ते गजसङ्ख्या च विस्तारं दशसङ्ख्यया १७०
षडङ्गुलघनं प्रोक्तं चतुरश्राकृतिन्तथा
मद्ध्ये वेदाङ्गुलं वृत्तं परितोष्टदळे न्यसेत् १७१
चित्राकारं प्रकल्प्याथ घातञ्चेच्चतुरङ्गुलम्
पश्चात् भागे च सङ्कल्प्य त्र्याङ्गुलघनं पृथक् १७२
षडङ्गुलन्तु विस्तारं ऊर्ध्वपद्मदळाकृतिम्
तदग्रैकाङ्गुलं प्रोक्तं स्कन्दं कृत्वा विशेषतः १७३
षडङ्गुलञ्च विस्तारं तदन्ते मुनिसङ्ख्यया
त्र्याङ्गुलानि दीर्घाणि अष्टाङ्गुलसुविस्तरम् १७४
चतुरङ्गुलमायामं कुब्जाकारं द्विपार्श्वयोः
अन्ते द्व्याश्रं निर्वृत्य षडङ्गुलफनन्तथा १७५
मुखाग्रे मद्ध्यमे चैव द्व्यङ्गुलन्तु सुविस्तरम्
मद्ध्यमं प्राङ्गुखान्तञ्च सुषिरं द्व्यङ्गुलन्तथा १७६
धरण्यास्तु अधोभागे गजोष्ट्राकृतिलंबितम्
षड्विंशांगुलदीर्घाणि पद्मञ्चेत् चतुरंगुलम् १७७
नाहन्तु त्र्यंगुलं प्रोक्तं दीर्घमष्टदशांगुलम्
नाहमंगुष्ठसाम्यञ्च आज्याधारं तदन्तके १७८

चतुरंगुलदीर्घाणि विस्तारञ्चतुरंगुलम्
पूर्णचन्द्रनिभाकारं पश्चिमे गजशीर्षकम्  १७९
पूर्वे च मद्ध्यमे चैव आज्याधारं ततश्शृणु
अतिपक्वमपक्वञ्च अपक्वं वर्जयेत्ततः  १८०
पक्वञ्च कर्दमे चैव कुरंगां ग्रीवकल्पयेत्
उत्तमञ्चैव विख्यातं मद्ध्यमञ्च ततश्शृणु  १८१
दीर्घमष्टा च विंशत्या कल्पयेत् विधिवत्क्रमात्
त्वंभोरुहं त्रयांगुल्यं नवांगुल्यं सुदण्डकम्  १८२
कुंभं त्रयांगुलं प्रोक्तं दण्डमेकांगुलन्तथा
अष्टांगुलसमं नाहं पूर्णकुंभाकृतिन्तथा  १८३
चतुरंगुलनाहं स्यात् दण्डञ्चैव प्रकीर्तितम्
षडंगुलसुविस्तारं दीर्घञ्चैव षडंगुलम्  १८४
चतुरश्रा कृतिं वेदीं त्रयांगुलं सुविस्तरम्
अष्टच्छदा कृतिं कृत्वा नाहञ्चेत् चतुरंगुलम्  १८५
द्वयांगुलमधोभागे ऊर्ध्वपद्माकृतिन्तथा
त्रिपादं कण्ठमेवोक्तं भूतपादांगुलन्तथा  १८६
पादं द्वयांगुलं प्रोक्तं वेदिकायास्समं भवेत्
कुब्जाकृतिं त्रयांगुल्यं द्वयाश्राकृतिमुत्तमम्  १८७
कनिष्ठांगुलिमेवोक्तं सरणीं विधिवत्क्रमात्
अग्रे गजमुखाकारं दन्तौ हस्तौ च नेत्रयोः  १८८
गजोष्ट्राकृतिमुत्पन्नं मद्ध्यमं संप्रकीर्तितम्
कुब्जाघातान्तमेवोक्तं स्त्रुवञ्चेति प्रकीर्तितम्  १८९
स्त्रुक्स्त्रुवञ्च इति प्रोक्तं मण्टपालंकृतिं श्रुणु
वस्त्रमूर्ध्वपटाकारं सचोर्ध्वेऽलंकृतिन्तथा  १९०
स्तंभान्निगमसंवेष्ट्य पञ्चवर्णैरलंकृतम्
तदळीयुगपुन्नागेर्हिन्तालैसृधितालकैः  १९१
इक्षुदण्डैर्वेणुपुष्पैस्तंभकैर्नाळिकेरकैः
नारंगलिकुचोपेतं छिन्नभिन्नसवेष्टितम्  १९२
घटेषु रक्तवर्णानि अलंकृत्य विशेषतः

तन्मद्ध्ये दीपमारोप्य फलदीपन्ततश्शृणु १९३
कूष्माण्डफलमाहृत्य कव्यबीजं विवर्जयेत्
अनेकसुषिराकृत्या दीपमारोपयेत्ततः १९४
व्याघ्राकारन्तु संकल्प्य दीपमारोपयेत्ततः
व्याघ्रदीपमिदं प्रोक्तं सिह्मदीपन्ततश्शृणु १९५
सिह्माकारञ्चतुष्पादं त्रिपादं स्थानकन्तथा
एकहस्ते समारोप्य दीपं योज्य विशेषतः १९६
याळामृगन्तु संकल्प्य द्विपादं स्थानकन्तथा
करेषु दीपमारोप्य याळदीपमिहोच्यते १९७
गजाकृतिन्तु संकल्प्य स्थानकञ्च चतुष्पदान्
हस्ते दीपं समारोप्य गजदीपं विशेषतः १९८
नराकारन्तु संकल्प्य अश्ववक्त्रा कृतिन्तथा
दीपं संकल्प्य यच्चैव यथाकारन्तु निर्मित १९९
दीपं हस्ते सुधार्यञ्च वृद्धदीपन्ततश्श्रुणु
वृद्धाकारं नरं कृल्प्य दण्डहस्तन्तु वामके २००
सुष्टुदीर्घं समारोप्य ध्वजान् चैव ततश्श्रुणु
दीर्घञ्चेत् दशहस्तञ्च नाहञ्चैव दशांगुलम् २०१
द्विकरं विस्तरं प्रोक्तं चतुर्हस्तन्तु दीपकम्
पञ्चवर्णैस्समालिख्य छत्रञ्चैव ततश्श्रुणु २०२
पञ्चहस्तसमं दीर्घं नाहं चेत् द्वादशांगुलम्
द्विहस्तं विस्तरं प्रोक्तं वृत्ताकारसमन्तथा २०३
अर्द्धहस्ताकृतिं मद्ध्ये दीपञ्चैव ततश्श्रुणु
षष्ठांगुलसमन्नाहं चत्वारि तदधश्चरेत् २०४
त्रिंशांगुलमधश्चैव विंशांगुलमधोऽपि वा
पञ्चांगुलसमन्नाहं ऊर्ध्वे पद्माकृतिन्तथा २०५
तत् बाह्ये परितः कृत्वा नाहमष्टांगुलन्तथा
पञ्चवर्णैरलंकृत्य ऊर्ध्वे पद्माकृतिन्तथा २०६
मूलेषु ऊर्ध्वपद्मञ्च सूत्रं संकल्पयेत्ततः
सूत्रान्संलिख्य तत्रैव पिंछपुष्पैरलंकृतम् २०७

मालाकाराणि पुष्पाणि अलंकृत्य विशेषतः
कुंकुमान्लेपयेच्चैव पार्श्वेषु लेपयेत्ततः  २०८
कुण्डान्त्रिमेखलां कृत्य श्यामरक्तसु कुंकुमैः
अलंकृत्य विशेषेण कलशालंकृतिं श्रुणु  २०९
त्रिसूत्रेणैव निर्वृत्य दक्षिणावर्त्तवेष्टयेत्
तिलमात्रं मद्ध्यमे च उत्तमं परिकीर्तितम्  २१०
मद्ध्यमं यवमद्ध्ये च वेष्टयेत्तु विशेषतः
चतुर्यवप्रमाणन्तु कन्यसं संप्रकीर्तितम्  २११
चन्दनञ्चैव निर्यासं कुन्दुरूषञ्च कुंकुमम्
धूमं घटे च संयोज्य सकूर्चं मद्ध्यमे न्यसेत्  २१२
आपो वा इदꣳसर्वं मन्त्रमुच्चारयेत्ततः
जलमापूरयेत्तत्र कुंभन्न्यस्य विशेषतः  २१३
उत्तमं नवरत्नानि मद्ध्यमं स्वर्णमुच्यते
अधमं रौप्यमेवोक्तं पद्मपुष्पाकृतिन्तथा  २१४
अथवा पद्ममालिख्य विन्यसेत्तु विशेषतः
वर्द्धनीं मद्ध्यमे न्यस्य कल्हारकुसुमाकृतिम्  २१५
कल्पयेत्साधकञ्चैव शेषं ----कृतिन्तथा
दर्भं स्थूलमधो भागे स्त्रीदर्भञ्च प्रकीर्तितम्  २१६
अग्रे स्थूलाकृतिञ्चैव नपुंसक इतिस्तथा
मूलाग्रयोस्समं कुर्यात्पुमान्दर्भः प्रकीर्तितक  २१७
श्याममुत्तममेवोक्तं अन्यधा वर्जयेत्ततः
दर्भैस्समशिखान्कृत्वा षोडशं दर्भनिर्मितम्  २१८
दक्षिणावृतमावृत्य मद्ध्ये ग्रन्धिन्तथैव च
अकांगुलन्तु विस्तारं अग्रे च चतुरंगुलम्  २१९
काचिद्दर्भेण संवेष्ट्य आवृत्या वृत्यवेष्टयेत्
कराश्रात् मद्ध्यमान्तञ्च दीर्घञ्चैव प्रकीर्तितम्  २२०
द्वादशं दर्भमेवोक्तं वर्द्धन्याः संप्रकीर्तितम्
अष्टदर्भाश्च सर्वेषां नन्द्यादीन् भूतसङ्ख्यया  २२१
द्वात्रिंशद्दर्भसंयुक्तं कुण्डानां विष्टरन्तथा

बाहुमात्रसमं दीर्घं परिधीञ्च ततश्शृणु २२२
षोडशन्दर्भमेवोक्तं ग्रन्थिञ्चैव न कारयेत्
त्रिंशद्दर्भं तदेवोक्तं वेदिका विष्टरन्तथा २२३
कलशान्वस्त्रमावेष्ट्य पुनर्वस्त्रेण वेष्टयेत्
चतुर्विंशति दर्भांश्च कूर्चाकृति कृतन्तथा २२४
षट्त्रिंशत् वर्णमेवोक्तं चतुःकार्याधमन्तथा
पञ्चविंशतिवर्णं वा मद्ध्यमं संप्रकीर्तितम् २२५
द्वादशं दर्भमेवोक्तं कन्यसं च प्रकीर्तितम्
वर्णसङ्ख्या तदेवोक्तं व्रीहीसङ्ख्या श्रुतस्तथा २२६
सितशाली हेमशाली पुष्पशाली सुशालिनी
रागशाली द्रोणशाली गिरीशाली विशेषतः २२७
त्रिभारं धान्यमेवोक्तं वर्द्धन्याश्च प्रकीर्तितम्
द्विभारं मद्ध्यमेवोक्तं चतुःखार्याधमन्तथा २२८
त्रिखारी वर्द्धनीञ्चैव द्विखारीं परितस्तथा
खारिसङ्ख्या च सर्वेषां उत्तमं परिकीर्तितम् २२९
खारिसङ्ख्या तिलं प्रोक्तं माषं खार्याद्धमेव च
मूलं द्रोणमिति प्रोक्तं गोधूमं खारिसङ्ख्यया २३०
त्रिशिवं वेणुमित्युक्तं राजमाषं द्विखारिका
धान्यसप्तकमेवोक्तं उपचारा द्विधीयते २३१
एतत् लक्षणहीनञ्चेत् राजाराष्ट्रं विनश्यति २३२
इति यागलक्षणपटलः सप्तदशः

बिंबशुद्धिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि शृणुष्वच षडानन
बिंबशुद्धिं विशेषेण महापातकनाशनम् १
सर्वलोकहितं पुण्यं भक्तानां देहशुद्धिदम्
दारुजे समपीठे वा बाह्ये वा मण्टपे स्थितः २
बिंबमारोपयेच्चैव पूर्वाभिमुखमुत्तमम्
पश्चिमद्वारके वापि दक्षिणद्वारमेव वा ३

उत्तरद्वारके वापि पूर्वाभिमुखमुत्तमम्
देवस्य पूर्वदिग्भागे धान्यराशीन्प्रकल्पयेत्  ४
पूर्वे तु पञ्चसूत्रञ्च उदीची पञ्च सूत्रकम्
षोडशं कोष्ठमालिख्य गव्येन प्रोक्षयेत्ततः  ५
कुम्भांश्च षोडशान्स्थाप्य सकूर्चालङ्कृतन्तथा
दक्षिणामुत्तरान्तञ्च चतुःपञ्च पृथक्पृथक्  ६
पनसन्नाळिकेरञ्च मातुळुंगन्तथैव च
नारङ्गकदळी चैव उदके नैवपूरयेत्  ७
अन्दनञ्चैव कुष्ठञ्च तक्कोलञ्चैव कुङ्कमम्
कर्पूरञ्चैवमित्युक्तं कलशे चैव पूरयेत्  ८
गन्धोदकमिदं प्रोक्तं पुष्पादकन्ततश्शृणु
मलिकापाटलञ्चैव पुन्नागं कुन्दपुष्पकम्  ९
नन्द्यावर्तमिति प्रोक्तं पत्रोदकन्ततश्श्शृणु
पद्मञ्चार्जुनकञ्चैव तुळसीबिल्वपत्रकम्  १०
शमीपत्रमिदं प्रोक्तं काषायोदन्ततश्शृणु
अश्वत्थोदुंबरञ्चैव प्लक्षजंबूवटन्तथा  ११
त्वग्भिः पूरयते चैव मृदोदकन्तत शृणु
नदी तीरे पर्वते च वृषशृङ्गे च वल्मिके  १२
कर्कटावटसुक्षेत्रे पयो निधिगजान्तरे
मृदोदकमिति प्रोक्तं बीजोदकन्तत शृणु  १३
यवनीवारमित्युक्तं हेमशाली तथैव च
रक्तशाली सुगन्धी च पल्लवोदमथ शृणु  १४
जंपूप्लक्षवटञ्चैव अश्वत्थोदुंबरन्तथा
पल्लवोदकमित्युक्तं रत्नोदकन्तत शृणु  १५
इन्द्रनीलञ्च वै डूर्यं माणिक्क्यञ्च प्रवाळकम्
वज्रमौत्तिकश्यामञ्च रत्नञ्च पुष्यरागकम्  १६
रत्नोदकमिदं प्रोक्तं लोहोदकन्तत शृणु
तांम्रं रजतसौवर्णमायसन्त्रपुसीकम्  १७
लोहोदकमिदं प्रोक्तं धातूदकन्तत शृणु

जातिपिंगाञ्जनं श्यामं हरितालं मनः शिला १८
गैरिकं रोचना चैव अस्त्रोदकन्तत श्रुणु
शूलं कपालहरिणी पाशं परशुमेव च १९
अस्त्रोदकमिदं प्रोक्तं ओषध्योदन्तत श्रुणु
हरिबेरञ्च उशिरं श्रीकर्णं सितसर्षपम् २०
जटामाञ्जी इति प्रोक्तं गव्योदकन्तत श्रुणु
गोमूत्रं गोमयं क्षीरं दधिसर्पिकुशोदकम् २१
गव्योदकमिदं प्रोक्तं कुशोदकन्तत श्रुणु
कुशं काशन्तथा दूर्वा व्रीहिश्चैव यवस्तथा २२
विश्वामित्रमिदं प्रोक्तं शृङ्गोदकन्तत श्रुणु
सारङ्गं गजदन्तञ्च व्याघ्रं गाण्डा मृगन्तथा २३
शृङ्गोदकमिति प्रोक्तं कलशेषु प्रपूरयेत्
अनन्ताद्यष्टशक्तिञ्च इन्द्रादींश्चैवमर्चयेत् २४
कुम्भस्य पूर्वभागे च तण्डुलेनैव पूरयेत्
नवकोष्ठं समालिख्य पञ्चगव्यं प्रकल्पयेत् २५
तदुत्तरे स्थण्डिलं कृत्वा नवकोष्ठं समालिखेत्
पञ्चामृतं प्रकल्प्याथ तत्पूर्वे स्थण्डिले तथा २६
अग्निमाराधयेच्चैव षोडशान्कलशानपि
द्रव्यान्पृथक्पृथक्चैव त्रयाहुतिं हुनेत्ततः २७
अघोरेणैव मन्त्रेण होमयेत्तु विशेषतः
अभिषेकन्ततः कृत्वा हविर्न्निवेदयेत्ततः २८
उपचारान्ततः कृत्वा सर्वकर्मार्हको भवेत्
एवं कृत्वा विशेषेण सर्वकार्यात्र्थसाधनम् २९
इति बिंबशुद्धिपटल अष्टादशः

शयनारोपणपटलप्रारंभः

अथातस्संप्रवक्ष्यामि शयनारोपणं श्रुणु
नवप्रतिष्ठाकाले तु विहितं कालमुत्तमम् १
यागस्य पूर्वदिक्भागे आयुरारोग्यवर्द्धनम्

आग्नेय्यामग्निदण्डं स्यात् दक्षिणे सर्वसंपदम्  २
नैर्ऋृते सर्वनाशं स्यात् पश्चिमे सर्वहानियुक्
वायव्ये पुत्रनाशं स्यात् उत्तरे तु श्रियः प्रदम्  ३
ऐशान्यां ग्रामनाशं स्यात् धन्ये यागस्थलन्तथा
नवहस्तं सप्तहस्तं पञ्चहस्तमथापि वा  ४
षोडशस्तंभमालिख्य यागमण्टपमुत्तमम्
मद्ध्ये वेदीं प्रकल्प्याथ तत्प्रतीचीञ्च वेदिकाम्  ५
चतुरश्रृङ्गमे चैव दर्पणोदरसन्निभम्
वेदिमद्ध्ये विशेषेण धान्यराशिं प्रकल्पयेत्  ६
अष्टपद्मदळं लिख्य तस्योपरिविशेषतः
दारुजं रोमजञ्चैव अण्डजं बीजजन्तथा  ७
योनिजञ्च इति प्रोक्तं दारुजं लक्षणं श्रुणु
यज्ञवृक्षान्समाहृत्य अस्त्रमन्त्रेण छेदयेत्  ८
कवचेन च संलिख्य उपानजगती तथा
कुमुदं पट्टिका चैव फलकासननिर्मितम्  ९
चतुष्पादमथो भागे दशाङ्गुलं सुदीर्घकम्
पञ्चवर्णैरलङ्कृत्य मञ्चाकारं प्रकीर्तितम्  १०
तस्योपरिविशेषेण क्षौमवस्त्रेण वेष्टयेत्
दारुजं लक्षणं प्रोक्तं रोमजं लक्षणं श्रुणु  ११
शबरी मृगकेशानि उत्तमं परिकीर्तितम्
अथवा अजकेशानि मद्ध्यमं परिकीर्तितम्  १२
पञ्चवर्णेषु संमृज्य वस्त्राकृति च कारयेत्
कंबळं लक्षणं प्रोक्तं अण्डजं लक्षणं श्रुणु  १३
सर्वत्र च गिरेः पार्श्वे मयूरान्पूजयेत्ततः
येन भोज्य पदात्र्थानि विकिरेत् गन्धपुष्पकैः  १४
त्रिमासञ्च द्विमासञ्च एकमासमथापि वा
वसेत्पिंछान्समाहृत्य वस्त्रेण वेष्टयेत्ततः  १५
पञ्चोपरिविशेषेण पूर्वाग्रान्समरन्तथा
अण्डजं लक्षणं प्रोक्तं बीजजं लक्षणं श्रुणु  १६

वस्त्राहरश्चैव तूलमन्तर्गतन्तथा
वस्त्राभ्यां संपुटी कृत्वा पञ्चविस्तारमुच्यते १७
वस्त्रोपरिसमावेष्ट्य योनिजं लक्षणं श्रुणु
कृष्णचर्मव्याघ्रचर्मचतुष्पादमुखैस्सह १८
वृक्षाणां गतिमेवोक्तं दारुजं संप्रकीर्तितम्
मृगाणां मूर्तिरत्यर्थं रोमजं संप्रकीर्तितम् १९
विहंगानान्तु मोक्षार्थं अण्डजं संप्रकीर्तितम्
तृणानाञ्चैव मोक्षार्थं बीजजं संप्रकीर्तितम् २०
मृगाणां मोक्षमित्युक्तं योनिजं संप्रकीर्तितम्
पूर्वे शिरोविशेषेण राजाराष्ट्राभिवृद्धिदम् २१
कुहयेममहाग्नौ स्यात् याम्ये यमपदन्तथा
नैर्ऋते अपमृत्युं स्यात्पश्चिमे सर्वनाशनम् २२
वयव्ये पुत्रहानिः स्यात् उत्तरे श्रीप्रदन्तथा
ऐशान्ये चैव मोक्षार्थं शयनस्थानलक्षणम् २३
लिङ्गस्य पूर्वदिक् भागे पीठं न्यस्य विशेषतः
तत्पूर्वे वृषभं न्यस्य रक्तवस्त्रेण वेष्टयेत् २४
तत्पूर्वे विन्यसेच्चैव रक्षासूत्रं न्यसेत्ततः
एवं कृत्वा विशेषेण सर्वकार्येषु साधयेत् २५
इति शयनारोपणपटल एकोनविंशतिः

अग्निकार्यपटलप्रारंभः

त्रिपुरान्तकसर्वेश अग्निकार्यक्रमं वद
अथातस्संप्रवक्ष्यामि सर्वकाम्यार्थसिद्धिदम् १
सर्वाभीष्टप्रदं पुण्यं सर्वरोगनिवारणम्
आयुरारोग्यमैश्वर्यमपमृत्युनिवारणम् २
अग्निवक्त्रे हुनेच्चैव सर्वदेवप्रियं भवेत्
सर्वदेवमुखाश्चैव अग्निरूपमिति स्मृतम् ३
सर्वदेवप्रियकरं अग्न्याराधनकन्तथा
शिवमाराधयेत्पूर्वं मण्टपाराधनञ्च यत् ४

तृतीय्यं होमकर्माख्यं श्रुणुष्व शरवणोद्भव
कर्णिका मद्ध्यमे कुम्भं दक्षिणे वर्द्धनीं न्यसेत् ५
उत्तराभिमुखन्नाळं पूर्वाभिमुखमुत्तमम्
दक्षिणाभिमुखं प्रोक्तं पश्चिमन्तारमेव वा ६
महायागे विशेषेण पूर्वाभिमुखमुत्तमम्
स्वाभाव्य पुरुषं वक्रं पूर्वाभिमुखमेव वा ७
दक्षिणाभिमुखं घोरं सद्यो वै पश्चिमं भवेत्
वामं वाममुखं विद्यात् ऊर्ध्वाभिमुखमीश्वरम् ८
पूजाकाले विशेषेण किञ्चिदीशमुखस्तथा
तत्तत् द्वारविशेषेण पुरुषं भावयेत्ततः ९
स्वाभाव्यं पुरुषं पूर्वे पूर्वे द्वारं विशेषतः
सुनित्यपूजाकाले तु अघोरं पुरुषं भवेत् १०
पश्चिमे पुरुषं भाव्यं वामे वै पुरुषं भवेत्
नित्येषु भावयेच्चैव अन्यकालेषु वर्जयेत् ११
प्रतिष्ठोत्सवकाले तु पूर्वाभिमुखमुत्तमम्
संकटे आलये जीर्णे अथवा संकटालये १२
पुनरुत्सवकाले तु पश्चिमाभिमुखन्तथा
दक्षिणाभिमुखं वापि यागग्रहं प्रकल्पयेत् १३
महाप्रतिष्ठाकाले तु अष्टबन्धनहीनके
यागेश्वरं विशेषेण पूर्वद्वारं प्रकल्पयेत् १४
परितोष्टदळाग्रेषु कुम्भान्यस्य विशेषतः
घटेषु जलमापूर्य पंकजान् रत्ननिर्मितान् १५
सकूर्चवस्त्रमावेष्ट्य नाळिकेशोपरित्वथ
मर्त्याकारन्तु सकलं पयः प्राणमिति त्वथ १६
नाडीसूत्रमिति प्रोक्तं सतिरत्नन्तथैव च
नाळिकेरफलं शीर्षं वस्त्रेण त्वक्समीरितम् १७
केशाकारसमं कूर्चं जटाकारन्तु लंबकम्
अतः प्रवाळं पाणी च परिस्तरणपद्युगम् १८
सिह्मासनमयं धान्यं गन्धपुष्पैरलङ्कृतम्

अथ वक्ष्ये विशेषेण न्यासकर्मविधिं श्रुणु १९
मन्त्राध्वा च पदाध्वा च वर्णाध्वभुवनानि च
तत्वाद्ध्वा च कलाद्ध्वा च षड्विधं न्यासमुच्यते २०
ईशानञ्चैव तत्पुरुषं अघोरं वामदेवकम्
सद्योजातञ्च पञ्चैते शिकाराद्यक्षरैस्सह २१
ईशानादिमुखे न्यस्य हृत् शिरोशिखयेव च
कवचन्नेत्रमन्त्रेण तेषु च न्यासयेत्ततः २२
मन्त्रन्यासन्न्यसेच्चैव त्रिखण्डं कल्पयेत्ततः
ब्रह्मभागं विष्णुभागं रुद्रभागं त्रिमानकम् २३
स्वायंभुवं विशेषेण त्रिमाणञ्च शिलोपरि
प्रतिमाकारमात्रेण पादान्नाभ्यन्तमेव च २४
नाभ्यात्कण्ठान्तमेवोक्तं कण्ठात् मकुटमुच्यते
निवृत्तिप्रतिष्ठाविद्या च शान्तिश्चैव तथैव च २५
शान्त्यातीत इति प्रोक्तं त्रिमानं कल्पयेत्ततः
शुद्धमाया तदूर्ध्वे तु शुद्धाशुद्धञ्च मद्ध्यमे २६
अशुद्धञ्चाप्यथो भागे भावयित्वा विशेषतः
निवृत्तिश्च प्रतिष्ठा च अशुद्धं रूपमुच्यते २७
विद्याशान्तिरिति प्रोक्तं शुद्धाशुद्धमिहोच्यते
शुद्धं शान्तिकला प्रोक्तं त्रिखण्डं कल्पयेत्ततः २८
ईशानास्त्रं शान्त्यतीते आदौ प्रणवमुच्चरन्
तत्पुरुषं कवचं शान्त्यै शिखाघोरन्तु विद्यके २९
प्रतिष्ठे च विशेषेण ------ शिरस्तथा
सद्योजातं हृदित्वेव निवृत्यै तु प्रदापयेत् ३०
मन्त्रन्यासमिति प्रोक्तं पदन्यासं ततश्शृणु
शान्त्यतीते विशेषेण ओमित्येकं पदन्न्यसेत् ३१
न्यसेच्छान्तिकलाञ्चैव व्योमव्यापि तथैव च
व्योमरूपाय इत्युक्तं सर्वव्यापिनि देव च ३२
शिवाय च अनन्ताय अनन्ताय तथैव च
अनाश्रिताय इत्युक्तं ध्रुवाय शाश्वताय च ३३

योगपीठसुसंस्थाय नित्ययोगिनिरेव च
न्यसेत् ध्यानहरायै च द्वादशं पदमुच्यते ३४
प्रणवं एकवारञ्च नमोन्तं एकवारकम्
आद्यन्ते च स्मरेच्चैव प्रत्येकन्तु न कारयेत् ३५
विद्याकाले विशेषेण ओन्नमश्शिव एव च
सर्वप्रभव इत्याख्यं शिवाय च तथैव च ३६
ईशानमूर्ध्वमित्युक्तं तत्पुरुषं वक्त्रमेव च
अघोरहृदयञ्चैव वामदेवञ्च गुह्यकम् ३७
सद्योजातं मुहूर्तेज ओन्नमश्च तथैव च
गुह्यातिगुह्यमित्युक्तं गोप्त्रे चैव तथैव च ३८
निधनाय च इत्युक्तं सर्वव्याधिपदेऽपि च
योगाधिकृते चैव ज्योतिरूपवराय च ३९
परमेशपरा चैव चेतना चैतनन्तथा
व्योमादीन्स इति प्रोक्तं पदान्यस्य विशेषतः ४०
प्रतिष्ठाकाले विशेषेण व्यापिन्व्यापिन्तथैव च
अरूपिन् रूपिनी चैव प्रथमं प्रथमन्तथा ४१
तेजस्तेज इति प्रोक्तं ज्योतिर्ज्योस्तथैव च
अरूपञ्चैवमित्युक्तं अनग्ने च इति त्वथ ४२
अधूमञ्चैवमित्युक्तं आगमञ्च तथैव च
अनाधेवरिति प्रोक्तं नाना --- ञ्चैवमेव च ४३
धूधूपि च इति प्रोक्तं ओंभूश्चैव तथैव च
ओंभुवश्चैवमित्युक्तं ओंसुवश्च तथैव च ४४
निधनं निधनञ्चैव निधनोद्भवमेव च
शिवश्शर्व इति प्रोक्तं परमात्मा तथैव च ४५
महेश्वरञ्च एते च महादेवस्तथैव च
---- चैव च इत्युक्तं अनग्ने च तथा इति ४६
अधूमञ्चैवमित्युक्तं अभस्मञ्च तथैव च
अनाधे च इति प्रोक्तं नानानारूपमेव च ४७
धूमधूम इति प्रोक्तं ओंभूश्चैव तथैव च

ओंभुवश्चैवमित्युक्तं ओंसुवश्च तथैव च ४८
निधनं निधनश्चैव निधनोद्भवमेव च
शिवश्शर्व इति प्रोक्तं परमात्मा तथैव च ४९
महेश्वरश्च एते च महातेजस्तथैव च
सद्भावेश्वरमित्युक्तं महातेजस्तथैव च ५०
योगाधिपतये चैव मुञ्चमुञ्च इति त्वथ
प्रमथप्रमथमित्युक्तं शर्वशर्व इति त्वथ ५१
अष्टाविंशति सङ्ख्या च निवृत्तिञ्च ततश्शृणु
निवृत्तिश्च विशेषेण ब्रह्माण्डमद्ध्यमे तथा ५२
न्यसेत् भवभवञ्चैव भवोद्भव इति त्वथा
सर्वभूतसुखश्चैव सर्वसान्निद्ध्यकन्तथा ५३
ब्रह्मविष्णुरुद्रपरञ्चैव अर्चितानर्चितन्तथा
असंस्थितासंस्थिता च साक्षिन्साक्षिन्तथैव च ५४
कुरुकुरु इति प्रोक्तं पतङ्गञ्च तथैव च
पिङ्गपिङ्ग इति प्रोक्तं ज्ञानाज्ञानं तथैव च ५५
शब्दशब्द इति प्रोक्तं सूक्ष्मासूक्ष्मन्तथैव च
सर्वस्सर्वदमित्युक्तं ओन्नमोनम एव च ५६
शिवाय च इति प्रोक्तं ओन्नमोनम ओन्नमः
पदन्यासमिति प्रोक्तं वर्णन्यासं ततश्शृणु ५७
रुद्रभागे विशेषेण शान्त्यतीतकला तथा
शक्तितत्वे न्यसेच्चैव अकाराद्यक्षरन्तथा ५८
अकारञ्चैव आकारं इकारञ्च तथैव च
ईकारञ्च उकारञ्च ऊकारञ्च ऋकारकम् ५९
ॠकारञ्च लृकारञ्च ॡकारञ्च तथैव च
एकारञ्चैव ऐकारं ओकारञ्च तथैव च ६०
औकारञ्चैव अंकारं विसर्गाकारमेव च
प्रत्येकं प्रणवादौ च अन्ते चैव नमोन्तकम् ६१
न्यसेत् शान्तिकले चैव ककारञ्च खकारकम्
गकारञ्चैवमित्युक्तं विद्याकलाविशेषतः ६२

विष्णुभागे विशेषेण विद्ये चैव न्यसेत्ततः
घकारञ्च ङकारञ्च चकारञ्च छकारकम् ६३
जकारञ्च झकारञ्च ञकारञ्च तथैव च
विद्याकला इति प्रोक्तं प्रतिष्ठाञ्च ततश्शृणु ६४
प्रतिष्ठे च विशेषेण ब्रह्माविष्णू तथैव च
टकारञ्च ठकारञ्च डकारञ्च ढकारकम् ६५
णकारञ्च तकारञ्च थकारञ्च दकारकम्
धकारञ्च नकारञ्च पकारञ्च फकारकम् ६६
बकारञ्च भकारञ्च मकारञ्च यकारकम्
रकारञ्च लकारञ्च वकारञ्च शकारकम् ६७
षकारञ्च सकारञ्च हकारञ्च ळकारकम्
प्रतिष्ठा च इति प्रोक्तं निवृत्तिञ्च तथैव च ६८
क्षकारञ्च निवृत्तौ च ब्रह्मभागे न्यसेत्ततः
वर्णन्यासमिदं प्रोक्तं भुवन्न्यासं ततश्रुणु ६९
रुद्रभागे शान्त्यतीते न्यसेच्चैव अनाश्रया
अनाधाचेदनन्ता च व्योमरूपा च व्यापिनी ७०
कलाशान्तिरिति ज्ञेयं ऊर्ध्वगामी तथैव च
मोचिका रोचिका चैव दीपिका इन्धिका तथा ७१
न्यसेन्न्यासकलाञ्चैव भुवनानि तथैव च
न्यसेच्च शिवतत्वे च शान्त्यतीता च शान्ति च ७२
विद्या चैव प्रतिष्ठा च निवृत्ती च तथैव च
न्यसेत् बीजकलाञ्चैव भुवनानि विशेषतः ७३
रुद्रभागे शान्तिकला सादाख्य भुवनं श्रुणु
शिखण्डी चैव श्रीकण्ठा त्रिमूर्तीरेकरुद्रकः ७४
एकनेत्रञ्च संपूज्य शिवोत्तमन्तथैव च
सूक्ष्मञ्चैव अनन्तञ्च ज्ञेयोद्यष्टकमुच्यते ७५
रुद्रभागे ईशतत्वे मनोन्मनि तथैव च
सर्वभूतदमनी च बलप्रमथिनी तथा ७६
बलौ विकरणी चैव कलौ विकरणी तथा

काळीरौद्री च जेष्ठा च वामा चैव तथैव च ७७
रुद्रभागे शुद्धविद्ये न्यसेच्चैव विशेषतः
मुरारिभागे विद्ये च न्यसेदङ्गुष्ठमात्रकम् ७८
भुवनेश्वरमीशानं एकपिङ्गेक्षणन्तथा
उद्भवं भवमित्युक्तं वामदेवं तथैव च ७९
महातेज इति प्रोक्तं मायायाष्टौ विनिर्दिशेत्
शिखेद एकवीरश्च काले चैव विशेषतः ८०
पञ्चान्तकश्च शूरश्च नियतौ च न्यसेत्ततः
संवक्त्रं ज्योतिषी चैव कलायाश्च विशेषतः ८१
चण्डक्रोऽथ इति द्वौ च विद्यायाञ्च न्यसेत्ततः
न्यसेच्चैव शिवश्चैव अनन्तश्च तथैव च ८२
अजो उमापतिश्चैव प्रचण्डाख्यं तथैव च
रागतत्वे च संयोज्य एकवीरन्तथैव च ८३
ईशानभवमित्युक्तं उग्रभीमस्तथैव च
वामाख्या च इति प्रोक्तं पुरुषत्वे तथैव च ८४
विष्णुभागे प्रतिष्ठा च श्रीकण्ठश्च तथैव च
औमेयश्चैव कौमारी वैष्णवी ब्राह्मिभैरवम् ८५
कृताकृतप्रकृत्यौ च गुणतत्वे तथैव च
ब्राह्मी ब्राह्मेश्वरी चैव सौम्ये ऐन्द्रं तथैव च ८६
गन्धर्वयक्षराजश्च पैशाचश्च तथैव च
देवयोन्यष्टमञ्चैव वृद्धौ चैव तथैव च ८७
स्थलेश्वरञ्च हुङ्कारे स्थूलेश्वरन्तथैव च
मनसा बुद्धीन्द्रिये चैव पञ्चकेषु विनिर्दिशेत् ८८
शङ्ककर्ण इति प्रोक्तं कर्मेन्द्रियञ्च भूतके
कालञ्जरन्तमित्युक्तं मण्डलेश्वरमेव च ८९
मालेकश्च द्विरण्डश्च करण्डश्च तथैव च
तन्मात्रेन्द्रियके चैव अहङ्काराद्विशेषतः ९०
गन्धतत्वान्तमेवोक्तं स्थाणुं स्वर्णाक्षमेव च
भद्रकर्णश्च गोकर्णमहालयस्तथैव च ९१

अविमुक्तौ रुद्रकोटि वस्त्रापदसवेष्टकौ
आकाशे च विशेषेण भीमेश्वरमहेन्द्रकः ९२
अट्टहासश्च विमलः नखलो नाखलस्तथा
कुरुक्षेत्रगयाख्यष्टौ वायुतत्वे विशेषतः ९३
भैरवञ्चैव केदारं महाकाळस्तथैव च
मद्ध्येश्वर इति प्रोक्तं आम्रादिकेश्वरन्तथा ९४
जल्पेश्वर इति त्वैव श्रीशैलश्च तथैव च
हरिश्चन्द्राष्टकञ्चैव तेजस्तत्वेष्टु योजयेत् ९५
लकुळीश इति प्रोक्तं भारभूतिस्तथैव च
डिण्डिमुण्डिञ्च आषाढं पुष्करञ्च तथैव च ९६
नैमिशञ्च प्रभासञ्च अमरेशाट्टहासकः
अप्तत्वेषू च संयोज्य कल्पयेत्साधकोत्तमः ९७
ब्रह्मभागे निवृत्ये च ब्रह्माण्डोपरितन्तथा
भद्रकाळी वीरभद्रौ न्यसेच्चैव विशेषतः ९८
त्रिलोचनोऽथ लिप्सञ्च नभो चैव व्यवाह च
संवादत्रिदशेशश्च त्रियक्षश्च तथैव च ९९
गणाद्ध्यक्षविभुश्शंभू ऊर्ध्वे दश विनिर्दिशेत्
दंष्ट्री वज्री फणीन्द्रश्च दुंबरीशस्तथैव च १००
ग्रसनोमारुताशश्च क्रोधनो नन्त एव च
न्यसेत् वृषधरश्चैव वृषो नव पथस्तथा १०१
बलिप्रियो भूतबाला ज्येष्ठासर्वसुरेशकः
वेदपारग इत्येते ज्ञानभुक्च तथैव च १०२
सर्वज्ञ ईशकश्चैव विद्याधिपतये तथा
ईशाने दशविन्न्यस्य प्रकामदप्रसादकः १०३
श्रीधरो रत्नधरश्चैव लक्ष्मीधरजटाधरः
सौम्यदेहश्च धन्यश्च वरूपवांश्च निधीशकः १०४
उत्तरे दश विन्न्यस्य मेघवाहन एव च
कपर्दी पञ्च शिखश्चैव पञ्चान्तकक्षयान्तकः १०५
तीक्ष्णसूक्ष्मश्च वाग्वेगो वरशीघ्रश्च वायवः

सुनादमेघनादश्च जलान्तक इति स्तथा १०६
दीर्घबाहुर्जयो भद्रो श्वेतश्चैव महाबलः
पाशहस्तौ बलश्चैव वारुणो दश उच्यते १०७
दंष्ट्रावान् लोहितेशश्च धूम्रश्चैव तथैव च
विरूपाक्ष ऊर्ध्वकेशो भयानक इति त्वथ १०८
क्रूरदृष्टिश्च तन्त्रिश्च मारणौ निर्ऋतौ तथा
न्यसेद्धर्मपतिश्चैव धर्मव्योक्तृक एव च १०९
संयोक्तृ कर्तृकश्चैव विधातृ धातृहस्तथा
श्रुत्ययागमिति प्रोक्तं याम्ये दश विशेषतः ११०
क्षयान्तकश्च एवोक्तं भस्मान्तक इति त्वथ
बभ्रूदहन एवश्च ज्वलनो हरखानकः १११
पिङ्गळो हुताशनश्चैव वज्रदेहश्च बुद्धकः
अजश्चैव कपालीशः पूर्वदेशे विनिर्दिशेत् ११२
रुद्रो विष्णुश्च ब्रह्मा च आटकेश्वर एव च
कूश्माण्डश्चैव कालाग्नि अण्डमूलस्तथैव च ११३
भुवन्यासमिदं प्रोक्तं तत्वन्यासन्तत श्रुणु
शान्त्यतीते रुद्रभागे तत्वञ्चैव न्यसेत्ततः ११४
आदौ प्रणवमुच्चार्य हकारञ्च ततः परम्
अन्तेन मोन्तमित्युक्तं शक्तितत्वं स्मरेत्ततः ११५
शिवतत्वं स्मरेत्पश्चात् अर्चयित्वा विशेषतः
रुद्रभागे शान्तिकले न्यसेश्चैव सदाशिवम् ११६
ईश्वरं शुद्धविद्या च न्यसेच्चैव विशेषतः
विष्णुभागे च विद्ये च मायाकालस्तथैव च ११७
नियत्या च कलाश्चैव विद्यारागश्च पौरुषम्
प्रतिष्ठाकाले ब्रह्मभागे प्रकृतिर्गुणमेव च ११८
बुद्ध्यहंकारमेवोक्तं मनश्रोत्रन्तथैव च
नाभौ च जठरे चैव घ्राणं वाक् पादमेव च ११९
पाणिपायुरुपस्थश्च शब्दस्पर्शश्च रूपकम्
रसगन्धश्च आकाशं वायुतेज अपस्तथा १२०

निवृत्तौ पृथिवी तत्वं तत्वन्यासं क्रमात्तथा
शान्त्यतीतावशान्तिश्च विद्या चैव प्रतिष्ठिता १२१
निवृत्तिश्च इति प्रोक्तं कलाख्यञ्च न्यसेत्ततः
तत्वन्यासमिति प्रोक्तं कला न्यासन्तत श्रुणु १२२
ऊर्ध्वमूध्नि त्वथो मूर्ध्नि सव्यमूर्ध्नि तथैव च
पश्चिमे चैव मूर्ध्निश्च वाममूर्ध्नि तथैव च १२३
ऊर्ध्ववक्त्रमथो वक्त्रं सव्यपश्चिम एव च
उत्तरे चैव विन्यस्य हृदये तु तथैव च १२४
गळे च दक्षिणांसे च वामांसे च तथैव च
नाभौ च जठरे चैव पृष्ठे च उरसी तथा १२५
गुह्ये च लिङ्गके चैव दक्षिणोरौ तथैव च
वामोरौ चैव विन्यस्य दक्षिणे जानुमेव च १२६
वामजानुनिविन्यस्य दक्षिणं घनमेव च
वामजंघे च विन्यस्य दक्षिणस्फिचिरेव च १२७
वामस्फिचिचविन्यस्य कट्यां चैव तथैव च
दक्षपार्श्वे वामपार्श्वे दक्षिणं पदमेव च १२८
वामपादौ च विन्यस्य दक्षहस्तस्तथैव च
वामहस्ते च विन्यस्य नासिके च तथैव च १२९
शिवसी चैव विन्यस्य दक्षबाहुन्तथैव च
वामबाहुञ्च विन्यस्य ध्येयोक्तं श्रुणु षण्मुख १३०
नीलवस्त्रां नीलदेहां पाशांकुशवराभयाम्
सर्वाभरणसंयुक्तां शशिनीमाश्रये श्रुणु १३१
दुकूलवसनोपेतां कण्ठालङ्कृतभूषिताम्
शूलाभयञ्च खट्वाङ्गां गण्डिका चोत्तरीयकम् १३२
अङ्गनालक्षणं प्रोक्तं इष्टाञ्च लक्षणं श्रुणु
चित्रवस्त्रसमोपेतां पादनूपुरसंयुताम् १३३
वराभयञ्च जटिलं मरीची लक्षणं श्रुणु
पाशाक्षमालामभयां सुवीणाधरसंस्थिताम् १३४
मालानूपुरसंवेद्यां ज्वालिनी लक्षणं श्रुणु

त्रिनेत्रां पीतवर्णाभां कुराडलाभरणोज्वलाम्  १३५
पाशदराडकपालञ्च अव्यक्ताञ्च तत श्रुणु
चतुर्भुजां त्रिनेत्राञ्च किरीटमकुटोज्वलाम्  १३६
खट्गखेटञ्च सव्ये तु ईशन्ध्यायविशेषतः
जटामकुटशोभाढ्यां कुराडलाभरणोज्वलाम्  १३७
पाशदराडासिधारीञ्च तंद्राञ्चैव तत श्रुणु
श्वेताभांश्वेतवस्त्राञ्च पादनूपुरमरिडताम्  १३८
पद्माक्षमालां पारयौ च मोहाञ्चैव तत श्रुणु
नीलांगीं श्वेतवस्त्राभां जटामकुटशोभिताम्  १३९
अभयं वरदोपेतां रक्षाञ्चैव ततश्शृणु
त्रिनेत्राञ्च द्विपादाञ्च पद्मोत्पलधरां शिवाम्  १४०
वरदाभयहस्ताञ्च इष्टाञ्चैव ततश्शृणु
उत्तुङ्गमकुटोपेतां त्रिनेत्राञ्च चतुर्भुजाम्  १४१
चक्रशूलवराभीतिं मृत्युञ्चैव ततश्शृणु
हेमयज्ञोपवीताङ्गं कुराडौ कुराडलमरिडतौ  १४२
अञ्जली कृतपद्मस्थौ मायाञ्चैव ततश्शृणु
श्यामाभां पीतवस्त्राङ्गीं सर्वाभरणभूषिताम्  १४३
शङ्खचक्रवराभीतिं भयाञ्चैव ततश्शृणु
त्रिनेत्रां षट्भुजोपेतां चक्रशूलञ्च खड्गिनीम्  १४४
पाशाभयवरञ्चैव ज्वरा चैव ततश्शृणु
हेमप्रभामिन्दुचूडां शार्ङ्गीपद्मवराभयाम्  १४५
सर्वाभरणसंवेष्ट्यां अजाञ्चैव ततश्शृणु
काश्मीरसदृशप्रख्यां वरदाभयपाणिनीम्  १४६
पद्माक्षीं पद्मपुष्पाभां रक्ताञ्चैव ततश्शृणु
रक्तवर्णा त्रिनेत्राञ्च मुक्तामाणिक्कभूषिताम्  १४७
डमरू शूलपाशाङ्गीं रतीञ्चैव ततश्शृणु
काशपुष्पसमानाङ्गीं तोमरव्यजनायुधाम्  १४८
दंष्ट्राकराळ वदनां पाल्ये चैव तत श्रुणु
उन्मत्तषाळिनीं पीतां वज्रशक्तिवराभयाम्  १४९

पद्मपीठोपरिस्थाङ्गीं कामाञ्चैव ततश्शृणु
हरितालसमानाङ्गीं एकवक्त्रां त्रिलोचनाम्  १५०
गण्डिकामक्षमालाञ्च यमुनाञ्च तत श्रुणु
द्विपादञ्च तनूरेकं वरदाभयपाणिनम्  १५१
कुन्दमन्दस्मितं शान्तं त्रियाञ्चैव ततश्शृणु
चतुर्भुजां चतुर्वक्त्रां जटामकुटशोभिताम्  १५२
नागपाशसुधार्यञ्च बुद्धिञ्चैव ततश्शृणु
चतुर्भुजसमायुक्तां पद्मभीति वराङ्कुशाम्  १५३
पद्मप्रभनिभां वन्दे कुर्याञ्चैव ततश्शृनु
गण्डिकाभयपाशञ्च कोमरञ्चायुधन्तथा  १५४
सरत्नमकुटोपेतां धात्रीञ्चैव ततश्शृणु
द्विभुजा पद्मपीठस्था सर्वाभरणभूषिता  १५५
अञ्जली कृत विद्याख्या ब्राह्मणीञ्च ततश्शृणु
स्त्रक्कमण्डलुदण्डाक्षं कुङ्कुमाङ्कितसन्निभम्  १५६
किरीटमकुटोपेतां मोहिनीञ्च ततश्शृणु
जटामकुटशोभाढ्यां भस्मभूषितविग्रहाम्  १५७
अभयं वरदोपेतां भयाञ्चैव ततश्शृणु
कुण्डलाभरणञ्चैव व्याळयज्ञोपवीतिनम्  १५८
वज्रनागधरञ्चैव सिद्धञ्चैव ततश्शृणु
जटिलं कुङ्कुमप्रख्यं एकवक्त्रं त्रिलोचनम्  १५९
खड्गखेटवराभीतिं ऋृद्धिञ्चैव ततश्शृणु
नीलोत्पलप्रभां वन्दे सरत्नमकुटांबिकाम्  १६०
टङ्ककृष्णा मृगञ्चैव द्युतिञ्चैव ततश्शृणु
रत्नवर्णां रत्नभूषां पद्माक्षीं लोकधारिणीम्  १६१
पद्मोत्पलवराभीतिः धृतिञ्चैव ततश्शृणु
त्रिनेत्रां चतुर्भुजां शान्तां डमरू पाशमङ्कुशाम्  १६२
वरदां बालवेषाढ्यां मेधा वै नासिकाहिताम्
शूलङ्कपालं खट्वाङ्गं कान्तिञ्चैव तत शृणु  १६३
जटामकुटसंयुक्तां नागयज्ञोपवीतिनम्

वरदाभयहस्ताञ्च स्वधाञ्चैव ततश्शृणु १६४
श्वेताभां नीलवस्त्रङ्गीं अक्षमाला वरप्रदाम्
उन्मत्तषाळिनीं वन्दे धृतिञ्चैव ततश्शृणु १६५
दण्डाञ्च माला अभयं पुस्तकाङ्कित सन्निभाम्
दुकूलवसनोपेतां अष्टत्रिंशत्कलान्यसेत् १६६
मन्त्रन्तु शिवमित्युक्तं वदमांसाकृतिन्तथा
वर्णान्तु सप्तधातुश्च भुवना देहमुच्यते १६७
तत्वास्थिनासिकाप्रोक्तं पञ्चभूता कृतिन्तथा
नेत्रनासी च दन्तञ्च रोमकेशनखानि च १६८
रेखान्तमाससौन्दर्यं द्वात्रिंशत् लक्षणाकृताम्
एतेषां रूपमेवोक्तं अष्टत्रिंशत्कला भवेत् १६९
मन्त्रदेहमिति प्रोक्तं मन्त्रसिह्मासनस्थितम्
शुद्धस्फटिकसङ्काशं भस्मोद्धूळितविग्रहम् १७०
सर्वाभरणसंयुज्क्तं मुक्तामाणिक्यभूषितम्
प्रवाळाभरणोपेतं कर्णकुण्डलपत्रकौ १७१
जटामकुटसंयुक्तं प्रतिवक्त्रं त्रिलोचनम्
खण्डेन्दुमौळिसंयुक्तं जाह्नवीदक्षिणन्तथा १७२
नागधुत्तूरपुष्पञ्च बकपुष्पसमायुतम्
पाश्वस्त्रं कुङ्कुमाभासं दक्षिणाञ्जनसप्रभम् १७३
वामे तु रक्तवर्णाभं पश्चिमे क्षीरवर्णकम्
ऊर्ध्वे स्फटिकवर्णाभं पादनूपुरमण्डितौ १७४
व्याघ्रचर्मांबरधरं गजचर्मपरिच्छदम्
सिह्मत्वक्कटिबन्धञ्च सर्पाभरणभूषितम् १७५
नागाभरणसंयुक्तं वृश्चिकाभरणोज्वलम्
घण्टामालाधरञ्चैव द्वां त्रिंशल्लक्षणान्वितम् १७६
कथं शंभो विशेषेण वक्ष्ये श्रुणु षडानन
नेत्रान्तौ बाहुग्मञ्च नासा चैव कपोलयोः १७७
सतथैर्यद्रुमे चैव पञ्चदीर्घस्थलन्तथा
जंघौ ग्रीवा प्रजननं वृषं ह्रस्वानिरुच्यते १७८

दन्तान्कोशसमायुक्तं नखत्वक् पर्वमङ्गुलान्
सूक्ष्मस्थलमिति प्रोक्तं घ्राणस्कन्धन्तथैव च १७९
हृदयं कुक्षिरेवोक्तं निष्कळं सकळन्तथा
पृथिवी कन्दमिति प्रोक्तं माणिक्य सदृशप्रभम् १८०
नित्यरूपमिति ख्यातं प्रतिष्ठाबीजमुच्यते
प्रतिष्ठा जीवमित्युक्तं विद्याङ्गुरवकास्तथा १८१
लताकारं कलादीञ्च शान्तिपद्माकृतिन्तथा
शुद्धविद्यापद्ममूलमनेकदळसंकुलम् १८२
क्षुब्धं माया केसरञ्च महामायाञ्च कर्णिका
अकारात् षोडश वर्णानि बीजरूपमिहोच्यते १८३
दळाग्रवृत्ते सूर्यञ्च व्यापकं ब्रह्ममुच्यते
केसराग्रे वैष्णवञ्च लिङ्गमूले यजेत्ततः १८४
लिङ्गमस्तकवृत्ते च वह्नीशं रौद्रमर्चयेत्
लिङ्गोपरि विशेषेण शक्तिमण्डलमीश्वरम् १८५
लिङ्गस्य मस्तकाच्चैव द्वादशान्तोपरि शिवम्
सदाशिवं यजेत्पश्चात् घटे त्वेवं ततश्शृणु १८६
ओष्ठमूलन्दळाकारं ओष्ठन्तु कर्णिकामयम्
तस्योपरि द्वादशान्ते सदाशिवं प्रपूजयेत् १८७
पद्मपीठोपरिस्थञ्च वामे शक्तिरलङ्कृतम्
अभयं वरदञ्चैव नागपाशमणिन्तथा १८८
शूलखट्वाङ्गवज्रञ्च शार्ङ्गपाणि धरं शिवम्
शिवं संपूजयेत्पश्चात् मण्डले पूजयेच्छिवम् १८९
पञ्चावरणमार्गेण प्रत्येकं शृणु षण्मुख
दळाग्रे पूजयेत्पश्चात् चतुर्भुजहमायुतम् १९०
शूलं डमरुकं पाशं अभयं शुक्लवर्णकम्
जटामकुटसंयुक्तं खण्डेन्दु जटिलन्तथा १९१
नागयज्ञोपवीतञ्च कर्णकुण्डलपत्रिका
अनन्तेशमिदं प्रोक्तं सूक्ष्मेशञ्च ततश्शृणु १९२
द्विपादं रक्तवर्णञ्च चर्मवस्त्रोत्तरीय्यकम्

कृष्णापरशुसंयुक्तं कपालं शूलमेव च १९३
जटाखराडेन्दुचूडाञ्च भस्मोद्धूळितविग्रहम्
सर्वाभरणसंयुक्तं शिवोत्तमन्ततश्शृणु १९४
त्रिनेत्रञ्च चतुर्बाहुं कुराडलाभरणोज्वलम्
नागयज्ञोपवीतञ्च कुन्ददन्तनिभन्तथा १९५
कपालं शङ्खमुसलं अभयं दक्षिणे तथा
डाडिमी कुसुमप्रख्यं एकनेत्रं ततश्शृणु १९६
जटिलं कुङ्कमाभासं त्रिनेत्रञ्च चतुर्भुजम्
डमरुं खराडपाशञ्च शूलन्नीलोत्पलान्वितम् १९७
व्याघ्रचर्माम्बरधरं एकरुद्रन्ततश्रुणु
श्यामवर्णञ्चतुर्बाहुं काशपुष्पनिभाकृतिम् १९८
जटामकुटखराडेन्दु वृश्चिकाभरणोज्वलम्
--------------------- तत श्रुणु १९९
कृष्णवर्णञ्चतुर्बाहुं जटामकुटमरिडतम्
शान्तरूपमिदं प्रोक्तं अर्कमालाग्निसंयुतम् २००
अभयं वरदोपेतं श्रीकराठञ्च ततश्शृणु
भस्मोद्धूळितसर्वाङ्गं नागयज्ञोपवीतिनम् २०१
टङ्ककृष्णामृगञ्चैव अभयं वरदन्तथा
सर्वाभरनसंयुक्तं शिखराडीञ्च ततश्शृणु २०२
त्रिनेत्रं टङ्ककृष्णाञ्च अक्षमालाञ्च पुस्तकम्
डाडिमी कुसुमप्रख्यं व्याघ्रचर्मोत्तरीयकम् २०३
सर्पोपवीतिनं शान्तं कुराडलाभरणोज्वलम्
शिखराडी लक्षणं प्रोक्तं गणेशलक्षणं श्रुणु २०४
रक्तपर्णनिभञ्चैव त्रिनेत्रं जटिलन्तथा
जटामकुटसंयुक्तं कराळवदनान्वितम् २०५
स्नानकं सव्यपादञ्च वामपादनिकुञ्चितम्
प्रसार्यदराडहस्तञ्च दराडमद्ध्ये पदन्न्यसेत् २०६
सव्योर्ध्वे अभयञ्चैव वामोर्ध्वे तलधार्यकम्
अष्टनागसमायुक्तं घराटाभरणभूषितम् २०७

नन्दिलक्षणमेवोक्तं महाकाळन्ततश्शृणु
श्यामाङ्गं बद्धवेणीञ्च मकुटञ्चोपरित्वथ  २०८
सव्ये तु कुंचितं पादं स्तंभमद्ध्ये तु विन्न्यसेत्
वामपाणितलञ्चैव तोमराग्रे न्यसेत्ततः  २०९
सव्ये तु सूर्यहस्तं स्यात् सव्योर्ध्वे अभयन्तथा
वामोर्ध्वे धार्यपाणिञ्च घण्टानागविभूषितम्  २१०
पद्मपीठोपरिस्थाञ्च महाकाळीं यजेत्ततः
मलाक्षीं सूत्रिणीं भृङ्गीं निर्वाणावयवान्तथा  २११
जटालंबितपार्श्वे तु त्रिणेत्रं जटिलन्तथा
चर्मवस्त्रोत्तरीय्यञ्च गणेशं श्रुणु षण्मुख  २१२
करस्थकदळीचूतपनसेक्षुकमोदकम्
बालसूर्यप्रभं वन्दे एवं बालगणाधिपम्  २१३
गणेशलक्षणं प्रोक्तं वृषस्य लक्षणं श्रुणु
----------------एकपादन्तु कुञ्चितम्  २१४
श्रोत्रौ शृङ्गौ च नास्यौ च श्वेतवर्णन्तथैव च
वृषस्य लक्षणं प्रोक्तं स्कन्दस्य लक्षणं श्रुणु  २१५
चतुर्भुजं द्विपादञ्च स्नानकं पदमुच्यते
वज्रं शक्तिधरञ्चैव श्यामां वामकरे तथा  २१६
दक्षिणे बाणमित्युक्तं दुकूलवसनान्वितम्
स्कन्दस्य लक्षणं प्रोक्तं देव्याश्च लक्षणं श्रुणु  २१७
सिह्मोपरिस्थितान्देवीं कपालं शूलमेव च
जटामकुटसंयुक्तां त्रिनेत्रां चन्द्रशेखराम्  २१८
देव्यास्तु लक्षणं प्रोक्तं चण्डेशलक्षणं श्रुणु
चतुर्मूर्द्धं चतुर्वक्त्रं नेत्रद्वादशसंयुतम्  २१९
शूलङ्कमण्डलुं चैव अक्षसूत्रवरन्तथा
द्वितीयावरणं प्रोक्तं तृतीयावरणं श्रुणु  २२०
द्विनेत्रं चतुर्भुजं शान्तं करण्डमकुटन्तथा
पीताभं पीतवस्त्रं च गजस्कन्धस्थितन्तथा  २२१
वज्रं शूलन्तथा चैव अञ्जलीकृतसंयुतम्

मुक्तामाणिक्कसंभूष्यं अग्निं चैव ततश्शृणु २२२
मेषारूढं सप्तहस्तं ज्वालाकेशसमप्रभम्
सप्तजिह्वं चतुर्नेत्रं रक्तवस्त्राङ्गरागकम् २२३
घृतपात्रन्तोमरं च व्यजनं शूलमेव च
शक्तिखड्गं च खेटं च अग्निं ध्यायेद्विशेषतः २२४
यमं कृष्णनिभाकारं ऊर्ध्वज्वलासुकेशकम्
कराळवदनं भीतिं खड्गखेटन्तथैव च २२५
तोमरं पाशहस्तं च महिषारूढमेव च
मुक्ताभरणसंयुक्तं दिव्याभरणभूषितम् २२६
दक्षिणाधिपतिं प्रोक्तं नैर्ऋतं च ततश्शृणु
धूम्रवर्णं द्विनेत्रं च धूम्राक्षं लंबकेशकम् २२७
योगखेटधरं घोरं प्रेतारूढन्तथैव च
नैर्ऋतं पूजयेत्पश्चात् वारुणं च ततश्शृणु २२८
श्वेताभं श्वेतवस्त्राङ्गं किरीटमकुटोज्वलम्
पाशटङ्कधरं भीमं मकरारूढमव्ययम् २२९
विद्याभरणसंबन्धं केयूरकटकान्वितम्
वारुणं लक्षणं प्रोक्तं वायुदेवं तत श्रुणु २३०
श्यामाङ्गं कृष्णवस्त्राभं कुरङ्गारूढमेव च
सरत्नमकुटोपेतं द्ध्वजाभयसमन्वितम् २३१
सर्वाभरणसंयुक्तं कौबेरञ्च ततः श्रुणु
जपापुष्पसमानाङ्गं तुरङ्गारूढमुच्यते २३२
ऊरुहस्तङ्गता सव्ये कुरुपञ्चकिरीटिनम्
रत्नालंकृतसर्वाङ्गं ईश्वरञ्च ततः श्रुणु २३३
शुद्धस्फटिकसंकाशं जटामकुटमण्डितम्
नागयज्ञोपवीताङ्गं वृषभारूढमव्ययम् २३४
शूलं कपालखट्वाङ्गं पाशन्ध्यायेत् विशेषतः
चन्द्रादीनर्चयित्वा तु वज्रादींश्च तत श्रुणु २३५
द्विभुजञ्च द्विनेत्रञ्च किरीटमकुटोज्वलम्
श्यामवर्णन्तुन्दिलञ्च अञ्जलीकरसंयुतम् २३६

वज्राग्रे स्थानकं प्रोक्तं शक्तेश्च लक्षणं श्रुणु
त्रिभङ्गाङ्गेन संयुक्तां रक्तवर्णसमायुताम्  २३७
अञ्जलीकरसंयुक्तां कराळवदनान्तथा
भ्रुकुटीभूषणाञ्चैव दण्डचिह्नं तत श्रुणु  २३८
कृष्णप्रभनिभं वन्दे भृकुटीवदनन्तथा
श्मश्रुकेशसमायुक्तं अञ्जली करसंयुतम्  २३९
धूम्रलोचनसंप्रख्यं खट्गञ्चैव ततः श्रुणु
द्विपादञ्च द्विनेत्रञ्च लंबकेशसमन्वितम्  २४०
कराळवदनं भीमं भृकुटीमुखभीषणम्
स्थूलं कृष्णमृगञ्चैव पाशञ्चैव तत श्रुणु  २४१
गतापीतनिभप्रख्यं कन्न्यकाकृतिमुत्तमम्
कन्निकाकृतिकेशञ्च अग्निज्वालामुखी तथा  २४२
अञ्जली करपद्मस्थं त्रिशूलञ्च तत श्रुणु
त्रिनेत्रञ्चतुर्भुजं भीमं भृकुटीमुखभीषणम्  २४३
दंष्ट्राकराळवदनं जटामकुटमण्डितम्
रक्तदृष्टिभयं घोरं पादकिङ्किणिशोभितम्  २४४
शूलाकृतिमुखैश्चैव सूचिहस्तन्तु वामके
द्विकराभ्यां मुष्टिहस्तौ च प्रहराभयमेव च  २४५
घण्टामालाधरञ्चैव चक्रञ्चैव तत श्रुणु
द्विनेत्रञ्चतुर्भुजं शान्तं न्यासक्रमपदन्तथा  २४६
अंजलीकरहस्तञ्च मुष्टिहस्तकरौ तथा
किरीटवदनं शान्तं पद्मञ्चैव तत श्रुणु  २४७
द्विनेत्रं द्विभुजं शान्तं अंजलीकृतसंयुतम्
करण्डवदनं भीमं गुरुपङ्क्तीन्ततश्शृणु  २४८
चतुर्भुजं त्रिनेत्रञ्च जटामकुटमण्डितम्
टङ्ककृष्णमृगञ्चैव वरदं वामहस्तकम्  २४९
सदाशिवमिति प्रोक्तमनन्तञ्च ततश्शृणु
त्रिनेत्रञ्चतुर्भुजं शान्तं टङ्काक्षमालिकाभयम्  २५०
सूचीकरं विशालाक्षं श्रीकण्ठञ्च ततश्शृणु

शूलं कपालसंयुक्तमंजलीकरसंयुतम्  २५१
जटामकुटशोभाढ्यं भस्मपाण्डरविग्रहम्
कुण्डलं कर्णपत्रौ च अंबिकेशं ततश्शृणु  २५२
जटामकुटशोभाढ्यम् भस्मकुण्ठितविग्रहम्
टङ्काक्षमालिकायुक्तं वरदं भृगुसंयुतम्  २५३
नागयज्ञोपवीतञ्च अंबिकासहितन्तथा
--ऋयादं तनुरेकं च षट्वक्त्रं द्वादशाक्षकम्  २५४
सरत्नमकुटोपेतं मयूरान्तिकमव्ययम्
पुस्तकं ज्ञानमुद्राञ्च शक्तिवज्रधरन्तथा  २५५
खट्गखेटञ्च मुसलं पाशदण्डन्तथैव च
असिचापशरञ्चैव श्यामवर्णन्तथैव च  २५६
स्कन्दं संपूजयेत्पश्चात् विष्णुञ्चैव ततश्शृणु
कृतांजलिपुटञ्चैव शंखचक्रन्तथैव च  २५७
नीलाङ्गमकुटोपेतं दुकूलवसनान्वितम्
विष्णुञ्चैव विशेषेण ब्रह्माणञ्च तत श्रुणु  २५८
चतुर्मूर्द्धा चतुर्वक्त्रमष्टाङ्गञ्च चतुर्भुजम्
स्रक्तमण्डलुकञ्चैव अंजलीकृतसंयुतम्  २५९
गुरून्सप्तकमेवोक्तं निवृत्यादीन्ततश्शृणु
श्यामवर्णां त्रिनेत्राञ्च जटामकुटमण्डिताम्  २६०
पाशाक्षमालिनीञ्चैव अंजलीकृतसंयुताम्
निवृत्तिलक्षणं प्रोक्तं प्रतिष्ठाञ्च ततश्शृणु  २६१
षट्भुजाञ्च चतुर्वक्त्रां किरीटमकुटोज्वलाम्
स्रक्कमण्डलुदण्डाक्षां पीतवस्त्रां सुयौवनाम्  २६२
प्रतिष्ठालक्षणं प्रोक्तं विद्याञ्चैव ततश्शृणु
चतुर्भुजां द्विनेत्राञ्च शङ्खचक्रवराभयाम्  २६३
दुकूलवसनोपेतां सर्वाभरणभूषिताम्
विद्याया लक्षणं प्रोक्तं शान्तेश्चैव ततश्शृणु  २६४
षट्भुजा च त्रिनेत्रा च जटामकुटमण्डिता
शूलवज्रधराभीति पाशं दण्डं सुधारयेत्  २६५

शान्तेश्च लक्षणं प्रोक्तं शान्त्यतीतां ततश्शृणु
पञ्चवक्त्राञ्चतुर्बाहुं सरत्नमकुटान्विताम् २६६
अक्षमालाञ्च वरदं कपालं पाशमेव च
सर्वाभरणसंयुक्तां श्यामवर्णां त्रिनेत्रकाम् २६७
शान्त्यतीतकलाञ्चैव गणेशलक्षणं श्रुणु
इभवक्त्रं त्रिनेत्रञ्च चतुर्भुजसमायुतम् २६८
दक्षिणे कुञ्चितं पादं वामपादन्तु संस्थितम्
पाशटङ्कसमायुक्तं दन्तमोदकवामके २६९
तुन्दिलं शूर्पकर्णञ्च करण्डमकुटान्वितम्
गणेशलक्षणं प्रोक्तं रविं चैव ततश्शृणु २७०
चतुर्भुजं त्रिनेत्रं च उत्तुङ्गमकुटान्वितम्
प्रभामण्डलमद्ध्यस्थं पद्मपीठोपरिस्थितम् २७१
टङ्कपाशं सुधार्यं च पाणिभ्यां पद्मधारिणम्
किरीटमकुटोपेतं उषाप्रत्युषया सह २७२
पद्मपीठोपरिस्थं च लोकेशं च ततश्शृणु
हंसारूढं द्वितेत्रं च चतुर्वक्त्रसमायुतम् २७३
किरीटमकुटोपेतं पादनूपुरमण्डितम्
स्त्रक्कमण्डलुदण्डाक्षं हेमयज्ञोपवीतिनम् २७४
पीतांबरधरं चैव विष्णुं चैव ततश्शृणु
वैनतेयस्थितं शान्तं शङ्खचक्रवराभयम् २७५
पितवस्त्रोत्तरीयाङ्गं सर्वाभरणभूषितम्
वैष्णवं लक्षणं प्रोक्तं वास्तु नाधन्ततश्शृणु २७६
एकवक्त्रं दशभुजं ज्वालाकेशन्तथैव च
कराळवदनं भीमं पाशदण्डाक्षमालिकाम् २७७
कमण्डलुं त्रिशूलं च बाणटङ्कासिखेटकम्
अभयं चित्रवस्त्राभं कृष्णवर्णन्तथैव च २७८
ऊरुवस्त्रसमोपेतं कृष्णाभरणभूषितम्
वास्तुनाधमिति प्रोक्तं लक्ष्मीं चैव ततश्शृणु २७९
शुक्लाभां शुक्लवस्त्राभां शुक्लयज्ञोपवीतिनीम्

विद्याभरणसंयुक्तां विद्यमालाविभूषिताम्  २८०
अभयं वरदोपेतां द्विहस्तां पद्ममालिनीम्
वीरासनस्थितान्देवीं तोरणानान्ततश्शृणु  २८१
द्विभुजं द्विनेत्रमित्युक्तं पार्श्वयोर्लंबकेशकम्
दंष्ट्राकराळवदनं भूतरूपन्तथैव च  २८२
महोदरं बृहत्कायं केशयज्ञोपवीतिनम्
कंचुकाभरणोपेतं आरोग्यं पूजयेत्ततः  २८३
रक्तवर्णं द्विनेत्रं च नागयज्ञोपवीतिनम्
पत्रकर्णौ विशेषेण अञ्जलीकृतसंयुतम्  २८४
कंचुकाभरणोपेतं बलतोरणसंयजेत्
द्विभुजा च द्विनेत्रा च धूर्जटी लंबितन्तथा  २८५
कृष्णाभरणसंयुक्तं स्थूलग्रीवं महोदरम्
भूतितोरणकं पूज्य शान्तितोरनकं श्रुणु  २८६
नीलवस्त्राङ्गरागं च भूतरूपाकृतिन्तथा
कराळवदनं श्यामं पद्मकर्णौ विभीषणम्  २८७
अंजलीकरपद्मस्थं तोरणं रूपमुच्यते
शाखयोः पूजयेत्पश्चात् ऋग्वेदादीन् ततश्शृणु  २८८
श्यामवर्णं द्विनेत्रं च चतुर्भुजसमायुतम्
एकवक्त्रं च मकुटं गण्डिकामक्षमालिकाम्  २८९
अंजलीकरसंयुक्तं यजुर्वेदन्ततशृणु
रक्तवर्णं द्विनेत्रञ्च शुक्लयज्ञोपवीतिनम्  २९०
स्त्रक्कमण्डलुधार्यञ्च द्विहस्तमंजलीयुतम्
यजुर्वेदमिति प्रोक्तं सामवेदं ततश्शृणु  २९१
श्वेतवर्णं द्विनेत्रञ्च हेमयज्ञोपवीतिनम्
पीतांबरधरञ्चैव हंसपद्मासनस्थितम्  २९२
ब्रह्मास्त्रं गण्डिकां चैव कृतांजलिपुटीकृतम्
सामवेदमिति प्रोक्तमथर्ववेदन्ततश्शृणु  २९३
कृष्णवर्णनिभन्देवं कृतांजलिपुटीकृतम्
कमण्डल्वक्षसूत्रं च सरत्नमकुटान्वितम्  २९४

द्विपादं च तनूरेकं शाखयोः पूजयेत्ततः
प्रशान्तं शिशिरं चैव पर्जन्यं च अशोककः  २९५
भूतसञ्जीवनं चैवामृतसञ्जीवनन्तथा
धनदं श्रीप्रदं चैव शुक्लवर्णन्तथैव च  २९६
नीलं श्यामं च कृष्णं च पीतं श्वेतं तथैव च
मिश्रं भृङ्गप्रभं विद्यात् सर्वेषामंजलीकृतम्  २९७
हेमयज्ञोपवीताङ्गं धौतवस्त्रोत्तरीयकम्
पूजयेत्तोरणे पादे पूजयेत्तु विशेषतः  २९८
प्राक्दिशौ भूतसंख्या च आग्नेय्यामेकमेव च
दक्षिणे युगसंख्या च नैर्ऋते त्रयमेव च  २९९
वारुणे त्रयकुंभं च द्विकुंभं वायुकोणके
उत्तरे युगकुंभं च ईशाने त्रयमेव वा  ३००
द्वारस्य उत्तरे देशे शान्तिकुंभं प्रपूजयेत्
तदुत्तरपदे चैव नन्दिकेशं प्रपूजयेत्  ३०१
द्वारस्य दक्षिणे पार्श्वे महाकाळं प्रपूजयेत्
तद्दक्षिणपदे चैव देवेन्द्रं पूजयेत्ततः  ३०२
तस्यैव दक्षिणे भानुं तस्यैव दक्षिणेनलम्
तस्यैव पश्चिमस्थाने शून्यस्थानं प्रकीर्तितम्  ३०३
तत्पश्चिमे च विन्यस्य भृंगीशं पूजयेत्ततः
तत्पश्चिमे विशेषेण विद्यामाराधयेत्ततः  ३०४
द्वारस्य पश्चिमे देशे यमं पूज्य विशेषतः
तत्पश्चिमे गणेशं च तदग्रे वास्तुमर्चयेत्  ३०५
नैर्ऋते निर्ऋतिं चैव उत्तरे विष्णुमर्चयेत्
तदुत्तरे विशेषं च निवृत्तिं च तदुत्तरे  ३०६
द्वारस्य वामपार्श्वे तु वरुणं पूजयेत्ततः
उत्तरे स्कन्दमभ्यर्च्य लक्ष्मीं चैव तदुत्तरे  ३०७
वायुन्तदुत्तरे पूज्य तत्पूर्वे च विनायकम्
तत्पूर्वे पार्वतीं पूज्य प्रतिष्ठां च तदन्यके  ३०८
तत्पूर्वे धनदं पश्चात् तत्पूर्वे चण्डमर्चयेत्

तत्पूर्वे गुरुमभ्यर्च्य ईशे ईशानमर्चयेत् ३०९
तद्दक्षिणे विधिं पूज्य यथोक्तं पूजयेत्ततः
अग्निं पूज्य विशेषेण वक्ष्येऽहन्तु षडानन ३१०
आज्यमीश्वरदैवत्यं माषं वैनन्दिकेश्वरम्
मुद्गं रुद्राधिदैवत्यं नीवारं वृषभन्तथा ३११
समिधं तु पार्वतीञ्च वेणुं वै चण्डिकान्तथा
कुळुत्थं चण्डदैवत्यं सक्तुञ्च सूर्यदैवतम् ३१२
लाजं स्कन्दमिति प्रोक्तं तिलं वै पितरं तथा
पुष्पाणाञ्चन्द्रमा प्रोक्तं गुग्गुलुं वरुणन्तथा ३१३
कन्दं ब्रह्माणमित्युक्तं दधीनां माधवन्तथा
क्षीरङ्गणेशमित्युक्तं अपूपन्तु महेश्वरः ३१४
पनसं इन्दमित्युक्तं कदळीमातुलन्तथा
नैर्ऋतन्दैवतं पश्चात्कदळीवारुणन्तथा ३१५
पनसं पितृदैवत्यं आम्रं श्रीदेवतान्तथा
शेषद्रव्यान्कपालीशः अधिदेवो विशेषतः ३१६
अश्वत्थञ्च वटञ्चैव प्लक्षं खादिरमेव च
अपामार्गञ्च पालाशं औदुंबरसमित्तथा ३१७
शमीबिल्वञ्चन्दनञ्च तुळसी काष्ठसंयुतम्
मद्ध्यमातर्जनीञ्चैव द्विपादौ मद्ध्यमन्तथा ३१८
गळितान्तसिबिन्दुश्च अष्टबिन्दुसृणिन्तथा
तत् द्वयं प्रतिमेवोक्तं तत् द्वयं चान्द्रमुच्यते ३१९
तच्चस्खन्दन्तु प्रसृतिं तत् द्वयं कुडुपं भवेत्
तच्चतुः प्रस्थमित्युक्तं तच्चरूराढकन्तथा ३२०
तत् द्वयं शिवमेवोक्तं द्रोणञ्चैतत् द्वयन्तथा
तत् द्वयं खारिरित्युक्तं भारञ्चेत्तत्त्रयन्तथा ३२१
सृणीमात्रं गोघृतेन एकाहुतिं समाचरेत्
अपूपं स्वप्रमाणञ्च त्रिंशदंशं फलांस्तथा ३२२
पत्रञ्चेत् शरसङ्ख्या च आर्यवत्तिलमुच्यते
दधिदुग्धं स्त्रुवं यावत्तावत्तु होममाचरेत् ३२३

माषमुद्गञ्च चत्वारि मुष्टिमात्रं यवन्तथा
स्थानकं पृथुकं सक्तुं मुष्टिं कृत्वा विशेषतः ३२४
वराटमात्रकञ्चैव चरुश्चैव प्रकीर्तितम्
मूले तु होमं नाशं स्यात् अग्रे तु ग्रामनाशनम् ३२५
मद्ध्ये तु मानहानिस्स्यात् मद्ध्यमूलञ्च मद्ध्यमे
समिद्धोमं विशेषेण आज्यञ्चैव ततश्शृणु ३२६
यत्रकाष्ठन्तु तत् श्रोत्रं यत्र भस्मन्तु तच्छिरः
यत्राल्पज्वलिते नेत्रे यत्रधूमन्तु नासिका ३२७
नासिकायां हुनेद्दुःखं नेत्रे होमं विनाशनम्
अग्निकर्णे हुतं हुत्वा महारोगं हविर्हुतम् ३२८
शिखास्थाने हुतं हुत्वा राजराष्ट्रं विनश्यति
स्थितञ्चेत् समिदिध्मञ्च चरुमासीनमेव च ३२९
शयनं घृतहोमे च आसीनं शेषकर्मणि
हिरण्याकनकारक्ता कृष्णातदनुसुप्रभा ३३०
अतिरक्ताबहुरूपा चेत् सप्तजिह्वा प्रकीर्तिता
याम्यवक्त्रे चतुर्जिह्वा उत्तरे च त्रिजिह्विका ३३१
सुप्रभा पूर्वजिह्वा स्यात् अतिरक्तानलस्तथा
कृष्णा चेद्दक्षिणे चैव बहुरूपा च नैर्ऋतौ ३३२
हिरण्यावारुणी चैव रत्नजिह्वा तथोत्तरे
कनकामद्ध्यमे चैव जिह्वास्थानं प्रकीर्तितम् ३३३
इध्माद्धुनेद्धिरण्यायां कनकायां घृतं चरुम्
कुर्याल्लाजञ्च कृष्णायां अतिरक्ते तिलन्तथा ३३४
बहुरुपे च सिद्धार्थं रत्नायान्तु यवं हुनेत्
सुप्रभायामथो सक्तु कनके सर्वद्रव्यकान् ३३५
मद्ध्यमा नामिका चैव तर्जनीरूर्ध्वमेव वा
अङ्गुष्ठमूर्ध्निसंयुक्तौ शक्तिलक्षणमुच्यते ३३६
स्रुवमूले महाव्याधिर्मद्ध्ये चेत् धान्यनाशनम्
अग्रे मृत्युप्रदं प्रोक्तं मूलमद्ध्यञ्च मद्ध्यमे ३३७
ग्राहयेत्तु हुनेच्चैव तदेव स्रुक् हुनेत्ततः

परिधींश्चाप्यधो भागे मद्ध्यमे विष्टरन्तथा ३३८
ऊर्ध्वे परिधिं विन्यस्य अन्योन्यासक्तकान्तथा
ऊर्ध्वे त्रिसूत्रं संवेष्ट्य पूर्वादींश्च तथैव च ३३९
ब्रह्माविष्णुरनन्तश्च रुद्रश्चेत्पूजयेत्क्रमात्
इन्द्रादीन्मद्ध्यमे पूज्य स्वस्वदिक्षु यजेत्ततः ३४०
नपुंसकं वृत्तपद्मं त्रिकोणं योनिरेव च
अष्टाश्रञ्चैवमित्युक्तं सत्रिकुण्डञ्च कीर्तितम् ३४१
शेषादरूपमित्युक्तं रूपञ्चेत्तु अरूपकम्
रूपाद्रूपमिति प्रोक्तं श्रुणुष्व पार्वतीप्रिय ३४२
पूर्वाभिमुखमाचार्यः पूर्वाग्निसारूप्य नैर्रृतौ
उत्तराभिमुखाश्चैव शेषाः पूर्वमुखास्तथा ३४३
अग्निहीनो दुराचारो मूर्खश्चाप्यतिह्रस्वकः
कृशाङ्गहीनदन्तश्च दीक्षानुष्ठानहीनकः ३४४
गर्भदीक्षायुतश्चैव सूतकीन्तु विवर्जयेत्
अनग्निमन्तं ब्रह्मचर्यं वानप्रस्थं विवर्जयेत् ३४५
कारयेत् नित्यपूजाञ्च ब्रह्मचारी विशेषतः
नैमित्तिके विवर्जित्वा नित्यं राष्ट्रविवर्द्धनम् ३४६
चतुर्दीक्षां समारोप्य ब्रह्मचर्यविशेषतः
नैमित्तिके कथं शंभो समयाचारशुद्धकम् ३४७
अग्निन्नोचेदनग्निञ्च द्विकार्यं वर्जयेत्ततः
स्वल्पाग्निमानिति प्रोक्तं नाशौचं ब्रह्मचारिणाम् ३४८
द्वाभ्यां वर्ज्येत् ब्रह्मचारी वक्ष्येऽहं सूतकक्रमम्
मातापितृमृते काले सपिण्डीकरणान्तकम् ३४९
आशौचं कारयेच्चैव अन्येषां वर्जयेत्ततः
अग्निष्टोमस्य जाते वा ज्येष्ठपुत्रस्य तत्स्वसुः ३५०
जाते वा शौचं वर्जित्वा सर्वकर्मार्हको भवेत्
पितामहो मातुलश्च पित्रोश्चैव सहोदराः ३५१
मृताशौचं विवर्जित्वा नित्यकर्मार्हको भवेत्
मोहेनानग्निमान् चैव प्रतिष्ठोत्सवकर्मणि ३५२

कारयेत्तु विशेषेण राजराष्ट्रं विनश्यति
प्रतिष्ठोत्सवकाले वा अथवा ब्रह्मचारिभिः ३५३
आचार्यत्वं वर्जयित्वा ऋत्विक्कर्मसमाचरेत्
धौतवस्त्रोत्तरीय्यञ्च भस्मरुद्राक्षधारिणम् ३५४
कुण्डलं कर्णमात्रञ्च हेमयज्ञोपवीतिनम्
अष्ट ऋग्योत्तमं विद्यात् षड्ग्योमद्ध्यमं भवेत् ३५५
आचार्यं वा एककुण्डे कारयेद्देशिकोत्तमः
मनसा भावयेद्देशान् अचरांश्च चराचरान् ३५६
ज्ञानदृष्ट्या प्रभूत्या च देशिकश्शब्दमीरितम्
पञ्चकुण्डे प्रधाने च सदाशिवं प्रपूजयेत् ३५७
पुरुषादीन् चतुर्दिक्षु पूजयेत्तु विशेषतः
नवकुण्डे प्रधाने च महेशं पूजयेत्ततः ३५८
अष्टकुण्डे भवादींश्च पूजयेद्विधिवत्क्रमात्
ईशाने नेत्रमस्त्रञ्च प्रधाने होमयेत्ततः ३५९
पूर्वादिषु चतुर्दिक्षु अस्त्रादीन्पुरुषानपि
आग्नेय्यादिचतुर्दिक्षु हृदयादीन् प्रपूजयेत् ३६०
प्रधाने पञ्चलक्षञ्च अन्येषां लक्षसङ्ख्यया
तदर्द्धं वा तदर्द्धं वा अयुतं वा विशेषतः ३६१
सहस्रसङ्ख्यान्प्रत्येकात् होमयेत्तु विशेषतः
द्रव्यान्ते व्याहृतिं हुत्वा पृथक्पृथग्विशेषतः ३६२
वीक्षणादि चतुर्दिक्षु मूलेनैव तु वीक्षणम्
अस्त्रेण प्रोक्षयेच्चैव प्रतिष्ठोत्सवकर्मणि ३६३
कारयेत्तु विशेषेण शिखया ताडनन्तथा
कवचेभ्यो रक्षणञ्च यथा शुद्धिं विशेषतः ३६४
खननोत्थायकञ्चैव पूरणं लेपनन्तथा
मद्ध्यादिपश्चिमान्तञ्च शान्त्यतीतान्यसेत्ततः ३६५
द्विदर्भैर्मद्ध्यमे चैव उदीचीञ्च त्रिरेखया
ब्रह्मजज्ञानमन्त्रेण नागे सौवर्णमेव वा ३६६
हिरण्य इति मन्त्रेण त्रिरेखा संप्रकीर्तितम्

आप्यायस्त्वेति मन्त्रेण यो रुद्रा इति मन्त्रतः ३६७
तौमुष्ट्येति च मन्त्रेण प्राक्रेखा त्रयमुत्तमम्
ह्रस्वगर्भन्न्यसेन्मद्ध्ये सदर्भानुद्धरेत्त्यजेत् ३६८
अस्त्रेण पयसा प्रोक्ष्य अस्त्रमन्त्रेण प्रोक्षयेत्
त्रिदर्भान्मद्ध्यमे न्यस्य वर्जाकारं विशेषतः ३६९
त्रिशूले अद्भुताकारं कुण्डमाच्छाद्यदर्भकैः
प्रादेशमात्रकैर्दर्भैः कूर्चाकारन्तथैव च ३७०
नाभिमद्ध्ये च विन्यस्य वागीशीं पूजयेत्ततः
श्यामाभां शुक्लवस्त्राङ्गीं जटामकुटमण्डिताम् ३७१
यौवनाञ्च ऋतुस्नातां सर्वाभरणभूषिताम्
अभयं वरदोपेतां वागीशीं पूजयेत्ततः ३७२
ओङ्कारं प्रथमं विद्यात् सान्तं हीकारमुच्यते
न्यसेद्वागीशमन्त्रेण वागीशं पूजयेत्ततः ३७३
त्रिनेत्रं पञ्चवक्त्रञ्च चतुर्हस्तन्तथैव च
जटामकुटसंयुक्तं सर्पभूषेन्दुभूषितम् ३७४
शूलं कपालसंयुक्तं अभयं वरदन्तथा
वागीशं पूजयेत्पश्चात् अग्निलक्षणमुच्यते ३७५
शिलाग्निरुत्तमं प्रोक्तं वृक्षाग्निर्मद्ध्यमन्तथा
क्षयाग्निरधमं विद्यात् अग्निस्त्रिविध उच्यते ३७६
सूर्यकान्तं समादाय लोहेन ताडयेत्ततः
------------------------------ ३७७
तदग्निर्गृह्यते चैव वृक्षाग्निञ्च ततश्शृणु
शूलवृक्षं समादाय दळाकारन्तु निर्मितम् ३७८
जीर्णाश्वत्थं समादाय शूलवृक्षेणभ्रामयेत्
आदायाग्निं विशेषेण क्षयाग्निञ्च ततश्शृणु ३७९
द्विजगृहे च संगृह्य स्वगृहे च विशेषतः
ततः क्षत्र्यगृहे वापि मद्ध्यमं संप्रकीर्तितम् ३८०
अन्येषां वर्जयेच्चैव अथवा च ततश्शृणु
अग्निमादाय कारयेत् अग्निं ग्राह्य ततः परम् ३८१

अग्नेः काष्ठे समारोप्य तत्पश्चात्काष्ठमाहरेत्
तदग्निनाग्निं संगृह्य उत्तमं परिकीर्तितम्  ३८२
अन्यजातिं समादाय शुद्ध्येत्पञ्चवारकम्
चण्डाळमन्दिरे वापि अग्निं प्रज्वालयेत्ततः  ३८३
अग्निं संग्राह्य दर्भेषु तदग्निं प्रतिदर्भके
समादाय ------ प्रतिदर्भे समाहरेत्  ३८४
शुद्धे द्वादशवाराणि अग्निमादाय कारयेत्
अग्निपात्रे समादाय प्रादक्षिण्य क्रमेण वा  ३८५
कुण्डाग्रे स्थापयेदग्निं नैर्ऋते स्थापयेत्ततः
हुंकारं पूर्वमुच्चार्य षट्कारञ्च ततः परम्  ३८६
अस्त्रं पश्चात्समुच्चार्य नैर्ऋते वा प्रकल्पयेत्
वीक्षणादी चतुः पश्चात् ओंकारान्सूर्यमुच्चरन्  ३८७
सान्तं दीर्घाक्षरं प्रोक्तं सक्तं ह्रस्वन्तथैव च
सान्तं दीर्घाक्षरं प्रोक्तं मकारान्तं पृथक्पृथक्  ३८८
अग्निर्मूर्धेतिसंपूज्य बालचन्द्रप्रभा तथा
संहारमुद्रयाग्राह्य पूरकेण समारभेत्  ३८९
ललाटेन्यञ्च संभाव्यं सुषुम्ना गतमार्गतः
हृदयाग्निञ्च संयोज्य एकी कृत्य विशेषतः  ३९०
नाभ्यग्निना ततः पश्चात्सान्तं ॠकारमुच्चरन्
अग्निचैतन्यमर्चित्वा मद्ध्याह्नरविसप्रभम्  ३९१
विद्युत्पुञ्जनिभाकारं जठराग्नित्रये नयेत्
पाताग्निञ्च विनिक्षिप्य पञ्चब्रह्मषडङ्गकैः  ३९२
अवकुण्ठैश्च संरक्ष्य हृदयेन यजेत्ततः
शक्तिं पूर्वं समुच्चार्य वौषट्पश्चात्समुच्चरेत्  ३९३
अमृती कृत्यसंपूज्य अर्चयेत्तु विशेषतः
प्रदक्षिणत्रयं वापि कुण्डोपरिविशेषतः  ३९४
कुण्डेस्थापय तत्पश्चात् वागीशं पूजयेत्ततः
वागीशं पूजयेदीशे वागीशेऽग्निं सुयोजयेत्  ३९५
शिवबीजमिति प्रात्थ्य लोकरक्षात्र्थकारणम्

वागीशेनैव वागीशीं अग्निं योज्य विभावयेत् ३९६
गर्भाधानमितीभाव्य पाद्यमाचमनार्घ्यकैः
पुष्पैरभ्यर्चयेच्चैव ज्वालयेदिन्धनैस्तथा ३९७
अस्त्रमन्त्रं समुच्चार्य सप्तवारं जपेत्ततः
वागीशी वामहस्ते च दर्भैस्सूत्रा कृतिन्तथा ३९८
सव्यभागे मेखले च न्यसेच्चैव विशेषतः
विद्याजातञ्च वामञ्च अघोरं पुरुषन्तथा ३९९
हृदयं शिरसा चैव शिखया च द्विवारकम्
कवचेनैव मन्त्रेण पञ्चपञ्च तिलाहुतिम् ४००
गर्भाधानं पुंसवनं पुर्यष्टकमुदाहृतम्
सीमन्तं जननञ्चैव भावयित्वा विशेषतः ४०१
शिवास्त्रेणैव संप्रोक्ष्य रक्षासूत्रा कृतिन्त्यजेत्
शुद्धां स्त्रीरूपवेषाढ्यं परिषेचनमाचरेत् ४०२
जलं संग्रह्य सव्ये च पूर्वाग्रान्जलनिक्षिपेत्
दक्षिणादुत्तराग्राञ्च पश्चिमात्पूर्वमेव च ४०३
ईशानादग्निभागे च समन्ता कृतिरेव च
अदितेनैवमन्यस्व दक्षिणे च विशेषतः ४०४
अनुमतेनुमन्यस्वेति पश्चिमे च विनिक्षिपेत्
सरस्वतेनुमन्यस्वेति उत्तरे च विनिक्षिपेत् ४०५
पूर्वे च देवसवितः प्रसुवेति समन्त्रकान्
अभिमुखी करणं भाव्य कल्पयेत्तु विशेषतः ४०६
कुण्डस्य दक्षिणे भागे ब्रह्माणं पूजयेत्ततः
पात्रासनं सोमदेशे प्रणीतञ्च तदुत्तरे ४०७
अधोमुखांस्तु पात्राणि स्रुक्स्रुवौ च तथैव च
प्रणीतौजलमापूर्य अस्त्रमावाहयेत्ततः ४०८
द्रव्यान्संप्रोक्षयेत्पश्चात्पात्रान्कूर्चमुखात्ततः
आज्यस्थालीं स्रुवञ्चैव पश्चिमे प्रणीतिन्तथा ४०९
इद्ध्मान्पूर्वे च विन्यस्य प्रोक्षयेच्छुद्धिमाचरेत्
प्रणीति पात्रके चैव अस्त्रं विष्णुञ्च पूजयेत् ४१०

त्रिदर्भांश्चैव संग्राह्य मद्ध्ये ग्रन्धिपवित्रकम्
त्रिवाराप्लवनम्मद्ध्ये प्रोक्षयेत् द्रव्यमात्मनि ४११
स्रुक्स्रुवञ्चैव संग्राह्य दर्भेण सह चाहरेत्
अथो मुखञ्च वह्न्यूर्ध्वे शुद्धयेत् वीक्षणादिभिः ४१२
द्विवारं शोधयेच्चैव काशोपरिन्यसेत्ततः
सव्यहस्ते चतुर्भागं वामहस्ते च मूलकम् ४१३
मूलेनैव समं मूलं मद्ध्येनैव च मद्ध्यमम्
अग्रेणाग्रञ्च संस्पृश्य त्रिमूर्तिं विन्यसेत्ततः ४१४
वीक्षणादि च शूद्ध्यै तु आज्यं संग्राहयेत्ततः
किञ्चिदग्निञ्च संगृह्य वामभागे न्यसेत्ततः ४१५
घृतपात्रन्तदूर्ध्वे तु द्विदर्भान्ग्राहयेत्ततः
दर्भाल्कं घृतसंभ्राम्य अग्नौ निक्षेपयेत्कुशम् ४१६
दर्भदायञ्च संगृह्य प्रोक्षयेदस्त्रपाणिना
घृतमद्ध्ये ----- व्य अग्नौ प्रज्वालयेत्ततः ४१७
प्रदक्षिणत्रयं भ्राम्य अग्नौ निक्षिपयेत्ततः
दर्भेणाज्यन्तु संप्राप्य बिन्दुद्वयञ्च निक्षिपेत् ४१८
वह्नौ संयोजयेत्पश्चात् अग्निकोणे निधाय च
स्वाहान्तं ब्रह्मणो हुत्वा तापनं विधिवत्क्रमात् ४१९
ईशानकोणे संप्राप्ते विष्णवे च हुनेत्ततः
नाभिमद्ध्ये च निक्षिप्य स्वाहान्तं रुद्रमूर्तये ४२०
प्रदक्षिणत्रयं भ्राम्य कुण्डयोनौ च निक्षिपेत्
--------------------------------- ४२१
घृतमद्ध्ये च निक्षिप्य द्विवारोत्प्लवनन्तथा
विसृजेत् ग्रन्धिमादाय अग्नौ हुत्वा विशेषतः ४२२
परिषिच्य ततः पश्चात् षोडशाङ्गुलमात्रतः
कनिष्ठाकृतिसमं नाहं पक्षसङ्ख्या समिद्धुनेत् ४२३
त्रिदर्भान्ग्रन्धिमद्ध्ये च घृतपात्रे विनिक्षिपेत्
घृतस्य दक्षिणे भागे स्रुवेणाज्यं हरेद्धुनेत् ४२४
स्वाहान्तमहते चैव अग्निदक्षिणनेत्रके

घृतस्य दक्षिणे भागे वामभागान्समाहरेत् ४२५
स्वाहान्तमिति सोमार्धं अग्निश्चेद्वामनेत्रके
घृतस्य वामभागे तु मद्ध्यभागान्समाहरेत् ४२६
स्वाहान्तमग्निं सोमाज्यं अग्निमद्ध्ये च नेत्रके
घृतमद्ध्ये च भागे च त्रयादाज्यं समाहरेत् ४२७
स्वाहान्तं स्विष्टकृते चैव अग्निवक्त्रे तथैव च
भागत्रये हुनेच्चैव कृष्णपक्षे विशेषतः ४२८
नाडी त्रयं विभाव्यञ्च वामभागान्समाहरेत्
स्वाहान्तमग्नये चैव अग्निवामे च नेत्रके ४२९
घृतस्य वामभागे च दक्षिणादाज्यमाहरेत्
स्वाहान्तं सूर्यमूर्तिञ्च अग्निञ्च सव्यनेत्रके ४३०
घृतस्य सव्यभागे च मद्ध्यभागान्समाहरेत्
स्वाहान्तमग्निसूर्याभ्यां अग्निमद्ध्ये च नेत्रके ४३१
घृतमद्ध्ये त्रिभागाच्च स्वाहान्तं स्विष्टकृत्तथा
पञ्चब्रह्मषडङ्गैश्च अभिमन्त्र्य तथैव च ४३२
सद्योजातादिना हुत्वा ओङ्कारं पूर्वमुच्चरन्
सान्तं दीर्घाक्षरं प्रोक्तं हिङ्कारञ्च द्वितीयकम् ४३३
हुङ्कारञ्चैव हेन्तञ्च होमित्युत्पूर्वमाहरेत्
स्वाहान्तं वज्रदीपञ्च पुनस्सद्यादिनाहुनेत् ४३४
ओङ्कारं पूर्वमुच्चार्य सान्तान्तं उच्चरेत्ततः
सान्तं हिञ्चेत्समुच्चार्य हीं हुं वामन्तथैव च ४३५
हुं हें अघोरमित्युक्तं हें होञ्चेत्पुरुषन्तथा
हों हां ईशानमित्युक्तं वक्त्रसन्धानमुच्यते ४३६
ओङ्कारं पूर्वमुच्चार्य हं हीं हुञ्च तथैव च
हें हों सद्यादिना हुत्वा वाय्वादीशान्तकं हुनेत् ४३७
नैर्ऋृत्यादीशपर्यन्तं होमयेत्तु विशेषतः
एकीकरणं संभाव्य जातकर्मतथैव च ४३८
नामकर्म तथैवाथ ईशानं पूजयेत्ततः
अस्त्रेणैव तिलं हुत्वा पञ्चाहुतिं विशेषतः ४३९

शिवाग्निरिति संकल्प्य अन्नप्राशनमेव च
चौळोपनयनञ्चैव व्रतांश्चैव तथैव च ४४०
समावर्तनवैवाह्यं सद्यादींश्च हुनेत्ततः
सप्ताहुतिं पृथक् चैव पश्चात् वागीश्वरं यजेत् ४४१
पत्न्याहुतिञ्च वागीशं वागीशीञ्च तथैव च
वागीशं विसृजेच्चैव नाडीसन्धानमुच्यते ४४२
स्वाहान्तं हुंफट् पूर्वं ईशानादिक्रमात्तथा
त्रयाहुतिं पृथक्चैव मूलेनैव शतं हुनेत् ४४३
हुनेत्पाशुपतेनैव शतं हुत्वा विशेषतः
समिदादीन्हुनेत्पश्चात् व्याहृतीञ्च पृथक्पृथक् ४४४
क्षित्यादिकुटिलप्रान्तं अग्निमद्ध्ये यजेत्ततः
द्विपादं सप्तहस्तञ्च द्विमुखञ्च तथैव च ४४५
शुद्धस्फटिकसंकाशं जटामकुटमण्डितम्
शुक्लयज्ञोपवीताङ्गं पद्मपीठोपरिस्थितम् ४४६
शूलटंककपालञ्च पाशघण्टाङ्कुशं तथा
स्रग्धरं पीतवस्त्राङ्गं कुण्डलाभरणोज्वलम् ४४७
अग्निन्ध्यायेद्विशेषेण यावन्मात्रन्तु होमयेत्
लक्षं तदर्द्धं तस्यार्द्धं उत्तमं परिकीर्तितम् ४४८
हुनेत् द्वादशसाहस्त्रं तदर्द्धञ्च तदर्द्धकम्
अन्येषाञ्च तदर्द्धञ्च पूर्णां हुत्वा तथैव च ४४९
पूर्णमापूरयेत्पश्चात् आज्योर्ध्वे स्त्रुचिविन्यसेत्
अधोमुखं स्त्रुवञ्चैव काशान् तस्योपरिन्यसेत् ४५०
लाजपुष्पैरलंकृत्य उत्थाय समपायवित्
दन्तान्संपूज्य चान्योन्यं समदृष्टि विलोचनम् ४५१
दण्डाकारं भवेद्देहं सद्दण्डं वामहस्तके
कलशस्यैव तत्पार्श्वे दक्षहस्तेन कारयेत् ४५२
स्तनमद्ध्ये वामपार्श्वे ह्रीमूलं नियते तथा
धारामखण्डितं विद्यात् ब्रह्मादीन्पूजयेत्ततः ४५३
तत्वतत्वेश्वरान्हुत्वा मूर्तिमूर्तीश्वरान्हुनेत्

ब्रह्मभागविशुद्ध्यर्थं प्रोक्षयेत् शान्तिकुंभके ४५४
मूलमद्ध्याग्रदर्भैश्च विन्यसेत्तु तथैव च
पश्चाद्धुनेत् विशेषेन विष्णुभागविशुद्धिदम् ४५५
रुद्रभागं ततश्शुद्धिं हुनेत् प्रोक्ष्य तदा न्यसेत्
त्रिखराडं कल्पयेत्तत्र शान्तिकुंभेन प्रोक्षयेत् ४५६
इन्द्रादीन्पूजयेत्पश्चात् दद्ध्यन्नञ्च बलिन्ददेत्
अग्नौ निवेदनं पश्चात् आप्येनैव पराङ्मुखम् ४५७
अन्येष्वग्निं प्रधाने च योजयेद्विधितः क्रमात्
कर्मवैकल्यहीनार्त्थं सहस्रं वा हुनेत्ततः ४५८
अघोरेणैव मन्त्रेण हुत्वा चैव विशेषतः
परिषिच्य चतुर्दिक्षु चन्दनं परिकल्पयेत् ४५९
स्वस्यापि सव्यदग्भागे चतुरश्रा कृतिद्वयम्
रुद्रमातृगणानर्च्य गुहञ्चैव चतुर्दिशि ५६०
पूर्वाद्युत्तरमीशादि वायव्यञ्च बलिन्ददेत्
ग्रहदैत्य निशीशञ्च नागमभ्यन्तरन्तथा ५६१
नक्षत्रराशिभूतांश्च अहश्चैव बलिन्ददेत्
वायुवारुणयोर्मद्ध्ये क्षेत्रपालबलिन्ददेत् ५६२
अष्टदिक्षु च मद्ध्ये च नीललोहितमर्चयेत्
पुष्पेणैव सुदर्भेण अग्निमुत्थापयेत्ततः ५६३
घटे संयोजयेत्पश्चात् तत्क्रमस्य निवेदनम्
सहस्रं वाजपेत्पश्चात्सायं प्रातर्हुनेत्ततः ५६४
मूलपूजाप्रकारेण यजमानो विनश्यति ५६५
सायंप्रातर्हुनेच्चैव सर्वशत्रुविनाशनम् ५६६
इति अग्निकार्यपटलः विंशतितमः

शिवलिङ्गस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वलोकहिताय च
राजराष्ट्राभिवृद्ध्यर्थं शिवस्थापनमुत्तमम् १
शुक्लवर्षं विरोधीञ्च मन्मधं कीलकन्तथा

विषुञ्च दुर्मुखीञ्चैव वत्सरांश्च विवर्जयेत्  २
आषाढमार्गशीर्षञ्च माखं भाद्रपदन्तथा
आषाढे धान्यनाशः स्यात् मार्गशीर्षे तु रोगिणम्  ३
माघे तु पुत्रहीनः स्यात् भाद्रे चैव कुलक्षयम्
चैत्रे संपत्करं विद्धि वैशाखे व्याधिनाशनम्  ४
ज्येष्ठे च सर्वसिद्धिः स्यात् श्रावणे मोक्षदं भवेत्
आश्वीजे कर्महाफल्यं कार्तिके ग्रामवर्द्धतम्  ५
पौष्ये च दीर्घमायुष्यं फाल्गुने शत्रुनाशनम्
एतत् मासफलञ्चोक्तं तिथीनाञ्च ततश्शृणु  ६
शुक्लपक्षं विशेषञ्च मद्ध्यमं कृष्णपक्षकम्
प्रथमाञ्च चतुर्थीञ्च षष्ठ्यष्टमि नवम्यके  ७
अमाञ्चतुर्दशीञ्चैव वर्जयेत्तु विशेषतः
कारयेत्साधकश्चैव द्वितीये सर्वसंपदम्  ८
तृतीये लोकवश्यञ्च पञ्चम्यां रोगनाशनम्
सप्तम्यां ग्रामवृद्धिः स्यात् दशम्यामायुवर्द्धनम्  ९
एकादश्यामष्टभाग्यं द्वादश्यां शत्रुनाशनम्
त्रयोदश्यां कर्मवृद्धिः पौर्णिमायां चिरं भवेत्  १०
एते तिथिफलं प्रोक्तं वाराणां फलमुत्तमम्
भौमार्कि वारे नाशं स्यात् रविवारे सुखप्रदम्  ११
इन्दुवारे च सौभाग्यं बुधवारे सुखप्रदम्
गुरुवारे प्रजावृद्धिं भ्रगुवारे चिरायुषम्  १२
सप्तवारफलं प्रोक्तं अश्विन्यादिफलान्श्रुणु
ग्रामाभिवृद्धिमश्विन्यां भरणीमृत्युशीघ्रदम्  १३
कृत्तिकाप्यत्र्थनाशं स्यात् रोहिणी च सुखप्रदा
मृगशीर्षं प्रजावृद्धिरार्द्रायां सर्वनाशनम्  १४
पुनर्वसू पापनाशं पुष्यं वै शान्तिकं भवेत्
आश्लेषं सर्वनाशं स्यात् माखं वै तु प्रजाक्षयम्  १५
पूरञ्च मानहानिस्स्यात् उत्तरञ्च सुखप्रदम्
आयुर्वर्द्धनं हस्तञ्च चैत्रं वै शत्रुनाशनम्  १६

स्वाती च राजसं मानं विशाखं कर्म सत्पलम्
अनुषं बिंबवृद्धिस्स्यात् ज्येष्ठा वै ज्येष्ठनाशनम् १७
मूलं वै बिंबनाशं स्यात् पूर्वाषाढं रिपुक्षयम्
उत्तराषाढं वृद्धिस्स्यात् श्रवणं मोक्षसंपदम् १८
श्रविष्ठादारनाशं स्यात् शतभिषक् मृत्युनाशनम्
पूर्वप्रोष्ठपदा चैव प्रजानाशयुता तथा १९
उत्तराभाद्रा च संपत्तिं रेवती वाक्प्रदं भवेत्
नक्षत्राणां फलं प्रोक्तं राशीनाञ्च फलं श्रुणु २०
मेषे तु कार्यवृद्धिस्स्यात् सौभाग्यं वृषभे तथा
मिथुने कार्यनाशस्स्यात्कर्कटे राष्ट्रशोभितम् २१
सिह्मे तु कर्मसाफल्यं कन्यायां कुलवर्द्धनम्
तुलायामतुलं प्रोक्तं वृश्चिके वित्तनाशनम् २२
चापेज्ञानप्रदं विद्यात् मकरे मानहानिकृत्
कुंभे तु शत्रुनाशस्स्यात् मीने सर्वसुखप्रदम् २३
देवतानां हितार्थाय दिवा चेत्सुमुहूर्तके
निशा चैव यथा कुर्यात् असुराणां जयप्रदम् २४
पूर्वयामे कार्यसिद्धिः द्वियामे सफलं भवेत्
त्रियामे सर्वहानिस्स्यात् चतुर्यामे तु तामसम् २५
यामलक्षणमेवोक्तं योगानां श्रुणु षण्मुख
विष्कंभं शत्रुनाशं स्यात् प्रीतिस्सौभाग्य वर्द्धनम् २६
आयुष्मान्विजयं प्रोक्तं सौभाग्यं संपदन्तथा
शोभनं शुभमेवोक्तं अतिगण्डं मृतन्तथा २७
सुकर्ममर्थलाभं स्यात् धृतिं वै शत्रुवर्द्धनम्
शूलं सिद्धिप्रदं विद्यात् गण्डं वै राशिसंभवम् २८
वृद्धिं वै श्रीप्रदं विद्यात् ध्रवं वै सर्वनाशनम्
व्याघातं लोकवश्यञ्च हर्षणं रोगनाशनम् २९
वज्रं विद्याप्रदं विद्यात् सिद्धिस्सिद्धिप्रदन्तथा
व्यतीपातं नाशनं स्यात् वरीयान्संपदन्तथा ३०
परिघं यशसा प्रोक्तं शिवं साद्ध्य प्रदन्तथा

सिद्धं शिवप्रदं विद्यात् साद्ध्यं वै साद्ध्यमेव च ३१
शुभं शुभप्रदं विद्यात् शुभ्रं वै व्यधमेव च
ब्राह्मी श्रेष्ठमिति प्रोक्तं माहेन्द्रं भोग्य भोगदम् ३२
वैधृतीनष्टमित्युक्तं सप्तविंशति संयुतान्
योगानामिति संज्ञेयं करणानां श्रुणुष्वथ ३३
बलं वै आयुर्वृद्धिं स्यात् बालवंबलवर्द्धनम्
कौलवं अतुलं प्रोक्तं तैतुलं मोक्षदन्तथा ३४
गरजीशीघ्ररोगं स्यात् वणिजो राष्ट्रवर्द्धनम्
वृष्टिं वृष्टिप्रदञ्चैव सप्तैते ज्ञेयविद्यते ३५
सुमुहूर्ते सुनक्षत्रे गर्भगेहे प्रवेशयेत्
शुद्धपात्रे च प्रक्षाळ्य हृदयेनैव पूरयेत् ३६
अष्टोत्तरशतं जप्त्वा अस्त्रमन्त्रैर्नमोन्तकम्
प्रोक्षयेत्खड्गमन्त्रेण गव्येन प्रोक्षयेत्ततः ३७
विकिरेत् शान्तिकुंभेन रक्षो नाशकरं श्रुणु
स्वयंभुदेविकञ्चैव दिव्यलिङ्गं विशेषतः ३८
रत्नन्यासविधिं वर्ज्येत् अन्येषां कारयेत्ततः
गर्भगेहस्य मद्ध्ये तु लिङ्गस्थापनमुत्तमम् ३९
गौरीन्तु स्थापयेन्मद्ध्ये मध्ये सर्वान्विशेषतः
उत्तमं विधिना प्रोक्तं मद्ध्यमञ्च ततश्शृणु ४०
पञ्चभागमधः कृत्वा गर्भगेहस्य मद्ध्यमे
स्थापयेत्तु चतुर्भागे बिंबं स्थाप्यविशेषतः ४१
बिंबस्थापनकाले तु मद्ध्यमे स्थापयेत्ततः
मद्ध्यभागे विना चैव आलयं शून्यमाप्नुयात् ४२
राजराष्ट्रं विनश्यन्ति मद्ध्ये स्थापनमुत्तमम्
गणेशादीशचण्डान्तं अथवा मद्ध्यमे विना ४३
मन्दिरे सङ्कटे चैव स्थापयेच्च चतुर्थके
आधारवेश्ममद्ध्ये तु नवकोष्ठं समालिखेत् ४४
कोष्ठमद्ध्ये विशेषेण चतुरङ्गुलविस्तरम्
त्रयाङ्गुलमथावापि वृत्ताकारन्तु निर्मितम् ४५

त्रयाङ्गुलसमाघातं नवकोष्ठे प्रपूजयेत्
मुक्ताश्च मद्ध्यमे स्थाप्य माणिक्यं पूर्वदेशके ४६
वह्निदेशे मारतक्यं वज्रं वै यमदेशके
वैडूर्यं नैर्ऋते देशे गोमेधं वारुणे यजेत् ४७
प्रवाळं वायुदेशे तु पुष्यरागं तदुत्तरे
इन्द्रनीलन्तु ईशाने स्थापयेत्तु विशेषतः ४८
फलन्नवविधं प्रोक्तं पत्रन्नवविधं तथा
रत्नेन सह संस्थाप्य अर्चयेत्तु विशेषतः ४९
मन्त्रन्यासं भवेच्चैव प्रत्येकन्तु विधानि च
शतं शतं जपेच्चैव मद्ध्ये क्षित्यां प्रपूजयेत् ५०
सुमुहूर्ते सुनक्षत्रे सुलग्ने स्थापयेत्ततः
नाडीन्तु पक्षभागं स्यात् पूर्वं विषकलास्तथा ५१
अमृताख्यं द्वितीय्यं स्यात्तृतीयं मृगमेव च
चतुर्त्थं दीर्घमित्युक्तं पञ्चमन्तु जयप्रदम् ५२
षष्ठं वै कार्यनाशं स्यात्सप्तमन्धननाशनम्
अष्टमं सुखमित्युक्तं नवमं शौर्यमुच्यते ५३
दशमं शून्यमित्युक्तं एकादश्ये चराचरम्
द्वादश्ये अचरं प्रोक्तं त्रयोदश्ये स्थिरं भवेत् ५४
चतुर्दश्ये शत्रुनाशं पक्षसंख्ये महद्भयम्
सात्विकं राजसञ्चैव तामसं त्रिविभक्तकः ५५
सात्विके तामसञ्चैव सात्विके राजसन्तथा
तामसे सात्विकञ्चैव तामसे राजसन्तथा ५६
राजसे सात्विकञ्चैव राजसे तामसन्तथा
राजसे राजसञ्चैव एवन्नवविधन्तथा ५७
योग्यायोग्य विशेषेण स्थापयेत् बिंबमाचरेत्
विश्वं कृत्वा विशेषेण राजराष्ट्रविवर्द्धनम् ५८
आयुरारोग्यसिद्ध्यर्त्थं अपमृत्युविनाशनम् ५९

इति शिवलिङ्गस्थापनपटल एकविंशतितमः

जीर्णोद्धारणपटलप्रारंभः

अथातस्संप्रवक्ष्यामि श्रुणु शरवणोद्भव
अष्टबन्धनहीने च परचक्रभयं भवेत्  १
प्रोद्घाटं मत्तकरिणां भ्रान्तैर्वाचोरसंहृतिः
इत्यादिपीडिते काले अशनी हतपातिते  २
पूर्वमिन्दिरसङ्कल्प्य लिङ्गादिस्थापनं परम्
पूर्वोक्तयागशालाञ्च नवहस्तमुनिस्तथा  ३
अथवा पञ्चहस्तैर्वा कारयेच्छिवमण्टपम्
नवोनवपदं भज्य मद्ध्ये वेदिं प्रकल्पयेत्  ४
नवसङ्ख्या पञ्चसङ्ख्या कुण्डं कल्प्य विशेषतः
गणेशादि महेशान्तं एकं वा द्रव्यहीनके  ५
वेदिके मद्ध्यमे चैव धान्यपुञ्जैरलङ्कृतम्
उत्तमं षोडशं भारं द्वादश मद्ध्यमं भवेत्  ६
अधमं अष्टभारं वै धान्यपुञ्जैर्विशेषतः
सितशाली हेमशाली रत्नशाली विशेषतः  ७
भारस्य शिवसङ्ख्या च तिलं वै परिकीर्तितम्
माषमुद्गं नवप्रस्थं वेणुशिम्बामथाढकम्  ८
प्रत्येकमाढकन्दत्वा ----------
गोधूमञ्चैव षट्प्रस्थं त्रिद्रोणं तण्डुलं भवेत् ९
एतत् धान्यं समादाय विभक्तं श्रुणु षण्मुख
अष्टद्रोणैश्शालिभिश्च वेदिका मद्ध्यमे क्षिपेत्  १०
परिवारश्च कुंभानां सप्तविंशति सङ्ख्यया
पृथक्पृथक् शिवन्धान्यं सप्तधान्यं यथाक्रमम्  ११
त्रिसरन्तन्तुना वेष्ट्य कूर्चमद्ध्ये विनिक्षिपेत्
नवरत्नं पञ्चरत्नं एकरत्नमथापि वा  १२
कुंभमद्ध्ये विनिक्षिप्य विन्यसेत्स्वर्णपङ्कजम्
दशनिष्कप्रमाणन्तु तस्यार्द्धं वा तदर्द्धकम्  १३
तदर्द्धं वा विशेषेण उत्तमामद्ध्यमाधमा
पङ्कजन्तु विनिक्षिप्य महानीलोत्पलं श्रुणु  १४

पञ्चनिष्कप्रमाणन्तु तस्यार्द्धं वा तदर्द्धकम्
अष्टविद्येशकुंभेषु निष्कं निष्कं पृथक्पृथक् १५
परिवारश्च देवानां निष्कार्द्धञ्च पृथक्पृथक्
वस्त्रद्वयं प्रधाने च तदेव शक्तिकुंभके १६
अन्येषां द्विकरं प्रोक्तं द्विकरञ्च पृथक्पृथक्
परिवारघटानाञ्च प्रत्येकं करमेव वा १७
स्रुक्स्रुवं मङ्गळञ्चैव तोरणान्पूर्वमर्चयेत्
कुण्डं यथोक्तवत्कल्प्य प्रथमे अङ्कुरार्पणम् १८
द्वितीयं वास्तुपूजाञ्च घटपूजां तृतीयकम्
सायं प्रातर्हुनेच्चैव उक्तमन्त्रेण होमयेत् १९
त्रिसहस्त्रं द्विसहस्त्रं वा सहस्त्रं वापि सङ्ख्यया
प्रधाने होमयेत्पश्चात्तस्यार्द्धं परिवारके २०
कुण्डे तु होमयेत्पश्चात् पञ्चास्त्रं जप्यते नरः
चतुर्द्वारे चतुर्वेदघोषजप्ये विश्रोत्रियाः २१
गीतनृत्ते च विविधे शिल्पिभिर्मंत्रिभिस्सह
नवसङ्ख्या समिद्भिश्च नवसङ्ख्यानिहोमयेत् २२
क्षीरन्दधिमधूकन्दं अपूपान्पायसानपि
सायं प्रातर्हुनेच्चैव बिंबशुद्धिं ततः परम् २३
अष्टबन्धनमेवोक्तं कलशस्थानमाचरेत्
ब्राह्मणान्भोजयेत्तत्र दक्षिणाञ्च प्रदापयेत् २४
आचार्यदक्षिणाञ्चैव वस्त्रहेमाङ्गुलीयकैः
कर्णमात्रं मेखला च दक्षिणान्दापयेत्ततः २५
पूर्वोक्तविधिना चैव बिंबं स्थाप्य विशेषतः
राजराष्ट्राभिवृद्ध्यर्त्थं इष्टकाम्यार्त्थसिद्धिदम् २६
एवं यः कुरुते मर्त्यस्सपुण्यफलमाप्नुयात् २७
इति जीर्णोद्धारणपटलः द्वाविंशतितमः

अष्टबन्धनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि अष्टबन्धनमुत्तमम्

भोगमोक्षार्त्थसिद्ध्यर्त्थं आयुरारोग्यसिद्धिदम्  १
अष्टबन्धनहीनश्चेत् शृणुष्वपार्वतीप्रिय
पूर्वदेशविहीने तु तत् ग्रामे व्याधिपीडितम्  २
आग्नेय्यामपमृत्युञ्च दक्षिणे ज्ञाननाशनम्
राक्षसे तु प्रजानाशं अनावृष्टिञ्च वारुणे  ३
विप्राणां व्याधिपीडा च वायुदेशे विहीनके
उत्तरे च विहीने तु शूद्राणां पापसंभवम्  ४
क्रिमिपीडनमीशाने राजराष्ट्रविवर्द्धनम्
प्रातः काले च मद्ध्याह्ने सायाह्ने अर्द्धयामके  ५
यद्देशहीनं तद्दृष्ट्वा सद्योप्यावाहयेद्घटे
नक्षत्रतिथिवारांश्च माससंवत्सरानपि  ६
अनपेक्षं यजेत्तत्र पूर्वोक्ते यागमण्टपे
सद्योङ्कुरं ततः कृत्वा पश्चात्तु पालिकादिषु  ७
वास्तुपूजां ततः कृत्वा घटे संपूजयेच्छिवम्
परितोष्टघटान्लिप्य पञ्चावरणमार्गतः  ८
मण्डले पूजयेच्छंभुं कर्मसाक्ष्यर्त्थमीरितम्
तोरणावरणान्पूज्य होमयेद्विधिमार्गतः  ९
नवाहञ्चैव सप्ताहं पञ्चाहं वा त्रयाहकम्
सायं प्रतिहुनेच्चैव कन्दमूलफलादिना  १०
समिदाज्य चरून्क्षीरान् दधिमाषतिलांस्तथा
मुद्गगोधूममधुना विशेषैश्च निवेदयेत्  ११
शोधनं क्षाळनञ्चैव बिंबशुद्धिमुदाहृतम्
मलिनी माधवी चैव वामिनी रमणी तथा  १२
मूले तु अभिषेकञ्च उपचारान्घटे तथा
द्वारपूजां नयेच्चैव चण्डपूजाञ्च कारयेत्  १३
नित्योत्सवं विना चैव नित्याग्निं वर्जयेत्ततः
यागशालां विशेषेण दर्पणे त्वभिषेचयेत्  १४
उपचारान्घटे पूज्य प्रातस्संग्राहयेच्छिवम्
अघोरेणैवमापूर्य ताडयेद्बन्धनन्तथा  १५

वृषभीवीरभद्री च करिणी इन्दुनी तथा
मलिनी माधवी चैव रमणी वामिनी तथा १६
न्यसेत्संपूजयेच्चैव अष्टबन्धनमुत्तमम्
बिंबशुद्धिं ततः कृत्वा षड्वक्त्रेण समाचरेत् १७
तत्वेश्वरञ्च मूर्तीशान् अर्चयेद्विधिमानतः
षडध्वानां हुनेच्चैव तत्वेशानां हुनेत्ततः १८
मूर्तीशानां हुनेच्चैव अर्चयेद्विविधानि च
गळिते लिङ्गबेरे च शान्तिकुंभेन प्राक्षयेत् १९
मूलमद्ध्याग्रदर्भैश्च न्यसेत् शुद्धिं विशेषतः
पूर्वे वा होमयेत्पश्चात्पीठशुद्ध्यर्थमीरितम् २०
शान्तिकुंभेन संप्रोक्ष्य दर्भमूलाग्रमद्ध्यगैः
ब्रह्मभागविशुद्ध्यर्थं त्रिवारं होमयेत्ततः २१
वृषभस्य हुनेत्पश्चात्प्रोक्षयेद्विन्यसेत्ततः
अग्निस्थन्तु घटे योज्य अर्चयेत्साधकोत्तमः २२
ब्राह्मणान्भोजयेत्पश्चात् सर्वेषां पूजयेत्ततः
नानाविधानि रत्नानि ब्राह्मणानां प्रदापयेत् २३
स्वर्णानि दापयेत्पश्चात्कपिलादीन्प्रदापयेत्
कन्निकान्दापयेत्पश्चात्क्षेत्रादीन्दापयेत्ततः २४
सुमुहूर्ते सुलग्ने च लिङ्गं संयोजयेत्घटे
सुप्रसन्नं महादेवं अर्चयेत्साधकोत्तमः २५
देवं प्रात्र्थ्यविशेषेण प्रायश्चित्ता हुतिन्तथा
अस्त्रकूर्चं हुनेत्पश्चात् घोरे पाशुपते न च २६
अन्यैर्हुत्वा विसृज्याथ द्वारदेवान्समर्चयेत्
आचार्यं पूजयेत्पश्चात् गन्धपुष्पैरलङ्कृतम् २७
देहाकारन्तु क्रियया जीवाकारन्तु दक्षिणा
दक्षिणा हीनमित्युक्तं क्रियया निष्फलं भवेत् २८
दक्षिणा शापमित्युच्चैर्यागशालां प्रवेशयेत्
सप्तविंशत् घटान्पूज्य ग्राहयेत्सप्तविंशकान् २९
गर्भगेहे विशेषेण तत्तत्स्थानेषु योजयेत्

षरामासं यो ददेद्देव कोटिजन्माघनाशनम्  ३०
शिवप्रतिष्ठामात्रेण शिवदीक्षाफलं भवेत्
एवं कृत्वा विशेषेण शिवदीक्षाफलं भवेत्  ३१

महोत्सवपटलप्रारंभः

अथ वक्ष्ये विशेषेण सर्वमङ्गळकारणम्
उत्सवं श्रोतुमिच्छामि वदमे कालदाहक  १
ईश्वर उवाच
साधुसाधु महासेन वक्ष्येऽहं श्रुणु षरामुख
परं शापादिदीक्षाख्यं उत्सवं पापनाशनम्  २
सर्वकल्याणमित्युक्तं उत्सवं ज्ञानसंभवम्
तस्मादुत्सवमाख्यातं वत्सरं प्रतिवत्सरम्  ३
युद्धारंभे महोत्पाते महाक्षोभञ्च विड्वरे
भूतपैशाच दाहे च महामारिप्रवर्तके  ४
पुत्रार्थी लभते काले प्रतिसूर्यप्रदर्शके
रजनीन्द्रधनुर्दृष्ट्वा रात्र्युपग्रहदर्शने  ५
अवर्षेत्यतिवर्षे च राज्ञां दुस्वप्नदर्शने
पैशाच विड्वरे चैव भ्रान्तिदर्शनसंभवे  ६
एवं काले महायागं सद्यश्शान्तिकरं वरम्
शंबरासुरनाशार्त्थं शिवयागं वरं पुरा  ७
उत्सवं शांभवं प्रोक्तं गौणवं वै द्वितीयकम्
कथं शंभो महासेन चातुर्वर्णात्मना महत्  ८
आचार्याय प्रणीपत्य दीक्षामिच्छामि ते प्रभो
लब्ध्वानुज्ञां च गुरुणा विप्राणामेकवत्सरम्  ९
राज्ञां वैश्यत्रिवर्षाणि शूद्राणामष्टवत्सरम्
शोधनं गुणचर्याय कुलभाक् त्वञ्च समयक्  १०
भूत्वा सत्यमसत्यं वा हौत्र्याश्च परमन्धनम्
पूर्वोक्तयागं सङ्कल्प्य मद्ध्ये वेदीं प्रकल्प्य च  ११
विप्राणां श्रीविलासञ्च भूभुजां पुरमराडलम्

वैश्यनान्तुलतालम्बं पादजानान्तु स्वस्तिकम् १२
तत्पूर्वे कुराडमालिख्य चतुरश्रं प्रकीर्तितम्
सप्तविंशत्घटानस्य पूर्वादीशान्तमर्चयेत् १३
कुराडस्यैशान्यदिक्भागे न्यसेदस्त्रघटौ तथा
मराडलन्तु समभ्यर्च्य पूर्वोक्तविधिना हुनेत् १४
युक्तं समयदीक्षा चेत् शिष्यं स्वात्मसमीपके
नेत्रे पटं समाच्छाद्य मराडले त्वर्त्थभाषितम् १५
अनिर्वर्त्य क्रमं मन्त्रं नरस्य केसरं वरम्
काठिन्यभाषमात्रेण गोत्रनाममुखास्तथा १६
कराळवदनान्येता आत्मानं गर्ह्यबुद्धिमान्
पाशच्छेदं प्रकुर्वीत व्याघ्रक्षीरग्रहादिव १७
संपाताहुतिकं कृत्वा स्त्रुवेणाज्यं समुद्धरेत्
एकयागौः ततश्शिष्य मस्तके होमयेत्पुनः १८
अग्निं हुत्वा विशेषेण संहितामन्त्रमाचरेत्
इडापिङ्गलसौषुम्ना गान्धारी जिह्विकास्तनी १९
अलंबुशांबिनी गुह्या पुन्नामादशनाडिका
द्विसहस्त्रोत्तरश्चैव सप्ततीनाडिसंख्यया २०
अश्वत्थजीर्णपर्णे वा ऊर्णातन्तु निभन्तनुम्
ज्वालाकारं मेदिनी च आपग्रन्थिश्च वह्निना २१
किंकिणी पायुपाशश्च खेतटाकजलाशयम्
आत्मानं मस्यवत् ग्राह्य नाडी चालनमुत्तमम् २२
घटवन्ती शमात्मानं शिष्यसन्तानमाचरेत्
समरंभोगभोगार्त्थे सव्यकर्णे पती द्वयेत् २३
विप्रक्षत्रियभेदौ द्वौ विनाबीजं समुच्चरन्
शिवाय नम इत्याह विशेष दीक्षाकाले तु वक्ष्येऽहं श्रुणु षरामुख २४
आदौ प्रणवमुच्चार्य ततः पञ्चाक्षरं चरेत्
निर्वाणदीक्षाकाले तु आदौ प्रणवमुच्चरन् २५
हकारन्तु ततः पश्चात्तांत्रिकप्रणवं पुनः
द्वादशान्तं समुच्चार्य अन्ते पञ्चाक्षरां पठन् २६

वैश्यशूद्रस्तु स्त्रीभेदास्समयन्तु विशेषतम्
निर्वाणदीक्षाकाले तु तारबीजाक्षरं विना २७
पञ्चाक्षरं चरेद्विद्वान् युक्त्यारत्नं प्रकीर्तितम्
कथं शंभो त्वयायुक्तं यन्मन्त्रं प्रणवैर्युतम् २८
तारहीनश्च यन्मन्त्रं प्राणहीनशरीरवत्
साधुसाधुमहासेन मन्त्रभेदन्तथा श्रुणु २९
तांत्रिकापेततांत्रीकं शुद्धतांत्रिकमेव च
आद्यर्णवं हि सहितं अङ्कारं उन्मनान्तकम् ३०
तारकं हंसबीजेन तांत्रिकप्रणवेन च
शेषं च पूर्ववत्कुर्यात् शक्तितन्त्रञ्च कीर्तितम् ३१
तारं बीजं विनाशुद्धं पञ्चाक्षरक्रमन्तथा
शिवाय नम इत्येते वैश्यशूद्रं विशां पते ३२
मोहेन सापरिचितश्चेत् अचिराच्च कुलक्षयम्
उपदिश्य सदाचार्यो रौरवं नरकं व्रजेत् ३३
जपं मोहेन कुर्वाणो रौरवं नरकं व्रजेत्
एककालं द्विकालं वा त्रिकालं वार्द्धयामके ३४
ब्राह्मी वैष्णविमाहेशी तुर्यां द्ध्यायेत्ततः परम्
मार्जनात् घमर्षश्च मन्त्रतर्पणमाचरेत् ३५
गणानामंबिकादीनां देवर्षिपितृतर्पणम्
समयाचारवैकल्यात् पिशाचत्वं व्रजेन्नरः ३६
चरेदसत्यनिर्वाणां वक्ष्ये सत्यं षडानन
वत्सरं शोषितस्यापि वाचाहूयमिवाचके ३७
तन्मस्तके स्वहस्तेन निवेश्यज्ञानचक्षुषा
निवृत्यादिकलालीनं समरसीकरणं कुरु ३८
संहारमुद्रयाकृष्य शिवतत्वे नियोजयेत्
अदीक्षितानामन्येषां युक्तं शांभवदीक्षया ३९
पश्यस्तुंबमिति ख्यातं पशुघट्टमिति स्मृतम्
रज्जुपाशमिति प्रोक्तं नराणां पाशसंहृतिः ४०
उत्शब्दः ज्ञानमित्युक्तं सर्वकल्याणकारणम्

भोगमोक्षमिति ज्ञेयं चतुर्विधमितिस्तथा ४१
साकल्यं पावनं शान्तं मङ्गळ्यञ्च चतुर्विधम्
ध्वजारोहादितीर्त्थान्तं साकल्यञ्चेति कीर्तितम् ४२
शेषञ्च पूर्ववत्कृत्वा पताकारोहणं विना
पावनञ्चेति विख्यातं शान्तिञ्चैव ततश्शृणु ४३
हुत्वा होमं बलिञ्चैव पूर्वयामे द्वियामके
सायाह्ने चोत्सवं कुर्यात् शान्तिकं परिकीर्तितम् ४४
यजमानेच्छया कुर्यात् प्रातः काले शिवोत्सवम्
माङ्गळ्यमिति विख्यातं साकल्यं नवभेदकम् ४५
सौरोत्सवन्तु प्रथमं चान्द्रोत्सवं द्वितीयकम्
सावित्रञ्चैव कौमारं देविकं भौवनं स्मृतम् ४६
भौतिकं गौणमित्युक्तं शैवं नवविधं भवेत्
सप्तविंशदिनं सौरं चान्द्रं सप्तदशाहकम् ४७
पक्षं सावित्रमित्युक्तं कौमारन्तु त्रयोदशम्
नवाहन्देविकं प्रोक्तं सप्ताहं भौवनं स्मृतम् ४८
पञ्चाहं भौतिकं प्रोक्तं त्रयाहं गौणमुच्यते
एकाहञ्चैवमित्युक्तं इत्तमादिक्रमान्तिकम् ४९
सौरञ्चान्द्रन्तसावित्रं उत्तमं परिकीर्तितम्
कौमारं दैविकञ्चैव भौवनं मद्ध्यभौतिकम् ५०
गौणशैवाश्च --- कान्सर्वसमुच्यते
उत्तमं सौख्यमित्युक्तं विजयं मद्ध्यमत्रयम् ५१
ऋद्धिदं कन्यसत्रयं उत्सवं त्रिविधं तथा
साप्तञ्च चान्द्रनक्षत्रं सौरञ्चैव चतुर्विधम् ५२
साकल्यं पवनं द्वौ च सौरमासे प्रशस्यते
सावनञ्चान्द्रनक्षत्रं मासेषु शान्तिमङ्गळम् ५३
उत्सवं कुरुते पश्चात् सौरे सर्वोत्सवं कुरु
चैत्रवैशाखजेष्ठेषु आषाढे श्रावणे तथा ५४
भाद्रेश्वयुजिकार्तिक्ये मार्गशीर्षे च पुष्यके
माघे च फाल्गुने चैव चैत्रान्तं मेषसंज्ञिके ५५

विशाखान्तञ्च मूलान्तं उत्तराषाढमृक्षके
श्रविष्ठोत्तरप्रोष्ठपदं अश्विनीकृत्तिकान्तकम्  ५६
आर्द्रान्तञ्चैव पुष्यान्तं माखान्तं चोत्तरन्तथा
पूर्वयुक्तमयुक्तं वा मासऋक्षं प्रधानकम्  ५७
ध्वजारोहादितीर्थान्तं एकमासे प्रशस्यते
द्विमासे चोत्सवं कुर्यात् मद्ध्यमं परिकीर्तितम्  ५८
पर्वं प्रधानं सामुद्रे अन्ये ऋक्षप्रधानकम्
प्रतिष्ठालिङ्गमुद्दिश्य वदऋक्षं कथं प्रभो  ५९
राजाभिषेकयदृक्षं भूभुजामृक्षमेव च
स्वामिनक्षत्रमाचार्यः ग्रामनक्षत्रमेव वा  ६०
गुरुऋक्षमिति ज्ञेयं तीर्थऋक्षं भवेद्यदि
सौरोत्सवं प्रवक्ष्यामि श्रुणु शरवणोद्भव  ६१
प्रथमावरणञ्चैव गर्भगेहार्द्धमण्टपम्
महामण्टपमेवोक्तं अग्रे स्नपनमण्टपम्  ६२
नृत्ताख्यमण्टपं पश्चात् आग्नेय्यां पचनालयः
तदुत्तरे तु मार्ताण्डं सव्ये चैव ततः श्रुणु  ६३
ज्येष्ठां वा मार्गनन्दादीन् नैर्ऋते तु गणेश्वरम्
सोमास्कन्दञ्च भवनं ततः कल्याणनायकम्  ६४
तदुत्तरे गुहस्थानं क्षीराब्धितनयालयम्
वाश्विनीमन्दिरं वायौ सोमे महिषमर्दनी  ६५
पैशाचपदमादौ च गिरिजालयमुत्तमम्
महामण्टपसौम्यादौ चण्डनाधस्य मन्दिरम्  ६६
उत्तरे वेदिका पार्श्वे सोमधारी च स्थापकम्
ततो मत्स्यपदे स्थाने नटेशालयमुत्तमम्  ६७
ऐशान्ये यागशालाञ्च तत्सव्ये भोगमन्दिरम्
क्षेत्रपालस्य भवनं तत्सव्ये मातृकालयम्  ६८
उत्तरे मानुषस्थाने कूपस्थानं प्रकीर्तितम्
मण्टपे सैन्द्रदिक्स्थाने वृषन्देवपदे चरेत्  ६९
तत्पूर्वे च महापीठं तयोर्मद्ध्ये विराजितम्

तत्पूर्वे वा प्रकल्प्याथ पताकपीठिकाञ्चरेत् ७०
देवस्य सन्निधौ पूर्वे किञ्चित् बैन्दवमानके
द्वितलं त्रितलं वापि पूर्ववत् गोपुरन्तथा ७१
गोपुरद्वारबाह्ये तु मराटपन्देवसन्निधौ
अष्टोत्तरशतं वापि तस्यार्द्धञ्च तदर्द्धकम् ७२
सव्योत्तरे महाभीतिः द्विपार्श्वे परिकल्पयेत्
पूर्वादिपश्चिमान्तं वा निवासद्वारमुत्तमम् ७३
प्रतिपत् मराटपं सर्वे पञ्चवर्णैरलङ्कृतम्
त्रयोदशाङ्गुलं विद्यात् रथयानं प्रकल्पयेत् ७४
शैवं गौणं भौतिकं वा भौवनं देविकन्तथा
कौमारञ्चैव सावित्रं उत्सवं कारयेत् गुरुः ७५
चान्द्रं सौरं विनाशेषान् उत्सवान्पूर्ववच्चरेत्
चन्द्रेशात्संप्रवक्ष्यामि सर्वानुग्रहकारणम् ७६
पूर्वोक्तवत् यथावेश्म प्रथमावरणन्तथा
द्वितीयावरणे चैव आग्नेय्यां पचनालयम् ७७
देवस्य पूर्वदिक् भागे दिव्य हर्म्यमहत्तटम्
उत्संख्या देवतास्थानं मराडपं सर्वानुग्रहम् ७८
------ लं विद्यात् मकुटान्तं विधीय्यते
शतस्तंभं चतुः पश्चात् पञ्चविंशति सङ्ख्यया ७९
स्तंभान् चित्रे विलिख्याथ देवतास्थानमराटपम्
सर्वानुग्रहशालाञ्च तत्सर्वं डोळमन्दिरम् ८०
ऐशान्ये यागशालाञ्च पूर्ववत्परिकल्पयेत्
अजस्थाने प्रकल्प्याथ यागमराटपकुरािडतम् ८१
चतुर्दिक् भित्तिपार्श्वे तु लतामराटपमुच्यते
प्रष्ठवी --- तयोर्मद्ध्ये पताकापीठमुत्तमम् ८२
प्रथमावरणस्तभं त्रिगुणी कृतमुत्तमम्
एकांशं वर्जयित्वा तु द्विमानं दराडमुच्यते ८३
सर्वस्मिन्मद्ध्यमे स्थाने पताकापीठमुच्यते
पाशी सन्धौ महापीठं पुष्पकेशदिशिद्ध्वजम् ८४

चतुर्ध्वजं प्रकल्प्याथ धानमष्टादशक्रमम्
एकोनपीठमानञ्च अष्टादशाङ्गुलन्तु वा  ८५
रथायानं चरेद्विद्वान्यन्त्रमष्टादशं महत्
महेशस्याङ्गुलं वीक्ष्य नक्षत्रमनुगण्यते  ८६
मानहीने महाव्याधि अधिके ग्रामनाशनम्
यथोक्तं मानमात्रञ्च देहं लब्ध्वाङ्गुलैश्चरेत्  ८७
सौरोत्सवक्रमं वक्ष्ये राजराष्ट्राभिवृद्धिदम्
तृतीयावरणं प्रोक्तं पूर्वादौ च चतुर्दिशि  ८८
चतुर्द्वारं विशेषेण युगगोपुरमण्डितम्
मुनिसङ्ख्या तलञ्चैव मकुटान्तविराजितम्  ८९
सहस्रत्रयसंयुक्तं मण्टपं स्तंभसंख्यया
द्विसहस्रं सहस्रं वा स्तंभमास्थानमण्टपम्  ९०
सहस्रार्द्धं पश्चिमे च शतसंख्या च दक्षिणे
कलासंख्या महाधूपं मण्टपं परिकीर्तितम्  ९१
मत्स्यलीला तटाकाख्यं तत्पार्श्वे डोलमण्टपान्
----  ग्रहाख्यञ्च द्वितीयावरणं श्रुणु  ९२
आग्नेये नैर्ऋृते वायौ ऐशान्ये च चतुर्दिशि
ध्वजपीठं प्रकल्प्याथ पूर्ववद्ध्वजनिर्मितम्  ९३
यन्त्रभेदन्तु विधिवत् महेशं ऋृक्षगण्यते
यन्मानं विधिवत्कृत्वा सप्तविंशति सङ्ख्यया  ९४
अदीक्षितानां धूर्तानां पक्षिणां मृगदारुकम्
भक्तानां दीक्षितानाञ्च सर्वेषां संहृतिप्रदम्  ९५
परमार्त्थं लभेच्चैव युक्तां शास्त्रोक्तदक्षया
कर्षणादिप्रतिष्ठान्तं स्वार्जितेन धनेन च  ९६
कायक्लेशे न वा कुर्यात्समयापरिकीर्तितम्
दीक्षाफलं लभेन्मर्त्यो विशेषं वक्ष्यतेऽधुना  ९७
नित्यं काम्यार्चनं विद्यात् विशेषं परिकीर्तितम्
उत्सवम्मद्ध्यशुद्धिस्स्यात्तीर्त्थकर्म्माभिषेचनम्  ९८
चक्षुस्संज्ञानदीक्षा च फलं लेभे प्रसादतः

अङ्कुरं वास्तुयजनं कल्याणं लक्षयागकम् ९९
भेरीताडनमेवोक्तं सृष्टिकर्ममुदाहृतम्
देवतावाहनञ्चैव यात्रास्नपनमेव च १००
ध्वजारोहणमेवोक्तं वाहनोत्सवमेव च
सन्ध्यावाहनमेवोक्तं स्थितिकर्मतथैव च १०१
बलितीर्थाङ्कुरञ्चैव रक्षाबन्धनमेव च
गणयागास्त्रयागञ्च संहारं परिकीर्तितम् १०२
ध्वजमारोपयेत्पश्चात् मृगयात्रां प्रकल्पयेत्
काळकञ्च ततश्चैवं निरोभावन्तथैव च १०३
शक्तियात्रामत्स्यलीला चण्डेशगुरुपूजनम्
अनुग्रहमिति प्रोक्तं श्रुणु शरवणोद्भव १०४
द्वितीयावरणञ्चैवं तृतीयावरणेऽपि वा
पूर्वपश्चिमसव्ये च उत्तरे च प्रशस्यते १०५
पालिकाघटिका चैव शरावं त्रिविधं स्मृतम्
अष्टादशाङ्गुलोत्सेधं तदर्द्धं विस्तरं भवेत् १०६
नाहं पञ्चाङ्गुलं मद्ध्ये दीपदण्डवदाचरेत्
चतुरश्रं मुखे चैव तदेवपाददेशके १०७
स्थलिकाकृतिमेवोक्तं मद्ध्ये तु सुषिरं भवेत्
पञ्चवक्त्राकृतिं पश्चात्कलशा कृतिमुत्तमम् १०८
पूर्ववत्परिकल्प्याथ वृत्तं वा परिकल्पयेत्
वक्तुश्चत्वारि सङ्ख्या च त्रिविधं परिकीर्तितम् १०९
घटिका च शरावञ्च प्रत्येकन्तु चतुर्दशी
पालिका षोडशञ्चैव पूर्ववन्मण्डलं लिखेत् ११०
अष्टदिक्षु न्यसेन्मद्ध्ये सोदकुंभं न्यसेत्ततः
कृत्तिकां रोहिणीञ्चैव यजेतां गुरुपूर्वकम् १११
तिलसर्षपमुद्गञ्च माषशिंबं यवस्तथा
निष्पावं लंबगोधूमं क्षीरेण सहितन्तथा ११२
पालिकामद्ध्यमे चैव पालाशाश्वत्थपत्रकैः
आबद्ध्यसुषिरं बध्वा सिकतेन परिप्लुतम् ११३

बीजां निवापयेत्पश्चात् ऊर्ध्वे मृत्सपरिप्लुतम्
जलं प्रतिदिनं क्षिप्य नैवेद्यं धूपदीपकम् ११४
सूत्रं त्रयोदशं लिख्य प्रागग्रं परिकल्पयेत्
उदक्सूत्रं तदेवोक्तं मद्ध्ये पद्मं चतुष्पदम् ११५
वीधिमेकपदं बाह्ये तद्बाह्ये श्रुणु षण्मुख
आग्नेय्यादि चतुर्दिक्षु वायव्यादि चतुर्न्यसेत् ११६
तृतीयावरणे चैव आग्नेयादि चतुर्दिशम्
घटिका च शरावादीन् त्रित्रिमालान्न्यसेत्ततः ११७
तद्बहिर्वीधिरेकं स्यात् चतुर्थावरणं श्रुणु
आग्नेयादि चतुर्दिक्षु भूतसाङ्ख्यन्न्यसेत्ततः ११८
पूर्वादिषु चतुर्दिक्षु चतुर्द्वारं पदद्वयम्
द्वारस्य दक्षिणे वामे एकमेकन्न्यसेत्ततः ११९
चतुश्चत्वारि सङ्ख्या च पालिकाघटिका तथा
शरावांश्च क्रमान्न्यस्य नक्षत्रे शन्तु मद्ध्यमे १२०
पूर्ववत्संयमेद्विद्वान् पञ्चमावरणं श्रुणु
सुराद्ध्यक्षात्मभूश्चैव परमेष्ठी स्वयंभुवः १२१
विरिञ्चिश्चैव लोकेशः पितामह अजस्तथा
धाता चतुर्मुखश्चैव पद्माक्षः पद्मयोनयः १२२
त्रिमूर्तित्रयी मयी विद्यात्केशवादीन्ततश्शृणु
दामोदरः पद्मनाभः हृषीकेशस्तु श्रीधरः १२३
मधुसूदनवामश्च विष्णुश्चैव त्रिविक्रमः
गोविन्दो माधवश्चैव नारायणसुकेशवः १२४
शार्ङ्गी चक्री च त्रिप्रोक्तं रुद्रभेदान्ततश्शृणु
शङ्करश्शूलपाणिश्च खट्वांगी विष्णुवल्लभः १२५
भवश्शर्वस्त्रिलोकेशः श्रीकण्ठश्च शिवाप्रियः
भीमः परशुपाणिश्च मृगपाणिर्जटाधरः १२६
वृषांको वृषभारूढः भस्मोद्धूळनविग्रहः
संपूज्य विधिवच्चैव पायसादीन्यसेत्ततः १२७
तांबूलं दापयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः

दक्षिणान्दापयेत्पश्चात् आदौ वै वाह्यमाचरेत् १२८
स्वगृह्योक्तविधानेन अग्निकार्यं समाचरेत्
वेदिकान्तु पुराकृत्वा पश्चात् चैवं समाचरेत् १२९
कुण्डसंस्कारपूर्वं यः अग्निसंस्कारमुच्यते
आज्यसंस्कारतः पश्चात् स्रुक्स्रुवौ संस्कृतिं परम् १३०
पृथगष्टादश संख्या परिधींश्च परिस्तरान्
विष्टरं पूर्ववत् न्यस्य आचार्यः साधकैस्सह १३१
स्नानवेदीं प्रकल्प्याथ षडुत्थासनमर्चयेत्
सोमास्कन्देषु संस्थाप्य पृथक्वेदीन्तदुत्तरे १३२
वीरशक्तिं समुत्थाप्य वेदिकामद्ध्यमेऽर्चयेत्
संस्थाप्य विधिवत्पूर्वं अभिषेकं प्रकल्पयेत् १३३
कथं शंभो महेशान वदमे सृष्टिकर्मणि
पञ्चविंशति भेदेन इतरं वा प्रकल्पयेत् १३४
शांभवाख्यां महादीक्षां मण्डलं घटवह्नि च
आचार्यशिष्यसंज्ञेयः एतत्पञ्चविधन्तथा १३५
एवं मण्डलबेरञ्च अस्त्रमूर्तिघटाक्षिती
सोमास्कन्देश्वरो वह्निः आचार्यो व्रतधारिणः १३६
अदीक्षितानां भक्तानां दीक्षितानां विरागिणाम्
समयाचारलोपानां एते शिष्यास्त्वनेकशः १३७
वागीश्वराकृतिश्शंभोः वागीशी भोगशक्तिकाम्
शिवाग्निस्कन्द इत्युक्तं तस्मात्ज्ञानाग्निरुच्यते १३८
वीक्ष्यते सर्वलोकानां सोमास्कन्देश्वरं विदुः
अन्येषामपि देवानां देवन्देवी द्वयन्तथा १३९
शिवाग्निभावनानोचेत् अन्याश्च शिवभेदकान्
वर्जयेन्मुख्यं वक्ष्यामि उत्सवेशं प्रकीर्तितम् १४०
सोमास्कन्देश्वराभावे नटेशं शशिशेखरम्
वैवाह्यं स्यादुमेशञ्च मद्ध्यमं परिकीर्तितम् १४१
एकाहे च त्र्याहे च पञ्चाहे च तथैव च
सप्ताहान्तं चरेद्विद्वान् देविकञ्चान्द्रसौरके १४२

वर्जयेत् ------ सर्वमङ्गळकारकम्
--------------------- करमेव वा १४३
ग्रामनाशं पुरा प्रोक्तं राजराष्ट्रं विनश्यति
तिंत्रीणि इष्टिका चूर्णं पलाशभस्ममर्दितम् १४४
कदळी लिकुचक्षौद्रं नाळिकेरांम्रपानसैः
दधिक्षीरञ्चन्दनाद्यैः कलशान्ताभिषेचयेत् १४५
धौतवस्त्रेण संमृज्य शुद्धवस्त्रेण वेष्टयेत्
सिंहासने समारोप्य उत्तराभिमुखस्थितः १४६
विरिंचिरूपमात्मानं भावयेत्साधकोत्तमः
देहशुद्धिं विशेषेण अन्तर्यागं समाचरेत् १४७
गणेशस्याभिषिच्याथ गन्धपुष्पादिभूषणम्
मोदकान् लड्डुकान्लाजान्गुळखण्डेक्षुखण्डकान् १४८
नैवेद्यधूपदीपादि संप्रणम्य विनायकम्
मूलबेरे विशेषेण अभिषेकं समाचरेत् १४९
सहस्रकलशां वापि तस्यार्द्धं वा तदर्द्धकम्
अष्टोत्तरशतं वापि पूर्ववत् विधिनाचरेत् १५०
नैवेद्यधूपदीपान्तं उत्सवं कुरुते मया
संपूर्णमशनं लब्ध्वा अनुज्ञाञ्च समाचरेत् १५१
सिंह्मासने समारोप्य सोमास्कन्देशसंनिधौ
तदुत्तरे महापीठे पराशक्तिन्तु स्थापयेत् १५२
आचार्यः प्राङ्मुखो भूत्वा कुण्डं पूर्ववदाचरेत्
कल्पयेद्भोगशक्त्याश्च जातकर्मसमाचरेत् १५३
एवङ्कुर्णेति सङ्कल्प्य प्राणानायम्य पूर्ववत्
स्वगृह्योक्तविधानेन पुरा वैदिककर्मणि १५४
पश्चाच्चैव समासाद्य वह्निकार्योक्तमार्गतः
पञ्चब्रह्मषडङ्गेन सप्ताहुतिं पृथक्पृथक् १५५
हस्तेन ग्राहयेद्भाव्य स्कन्दमन्त्रैः त्रयाहुतिः
वटुकं क्षेत्रपालञ्च दुर्गामन्त्रैस्त्रयाहुतिः १५६
प्रासादेनैव मन्त्रेण शतं पूर्णाहुतिं हुनेत्

मनोन्मनीत्यभिध्याय्य अर्घ्यपाद्यादिकन्ददेत् १५७
अघोरास्त्रैस्समन्त्रेण द्विशतं होमयेत्ततः
उपनिष्क्रामणञ्चैव अन्नप्राशनमीरितम् १५८
सितशाली हेमशाली वराहशालिकान्तथा
मथित्वा तण्डुलं ग्राह्य अस्त्रेण क्षाळयेत्ततः १५९
त्रिपाद्युपरिविन्यस्य मन्त्रहीनं प्रकल्पयेत्
क्षीरं सिता विनिक्षिप्य वाचयेत्तु समाचरेत् १६०
अर्घ्येण प्रोक्षयेत्तत्र शिवास्त्रेणैव होमयेत्
कौबेरी च फलाकारं सौवर्णैस्सप्तसङ्ख्यया १६१
पञ्चवारं हुनेच्चैव ततस्संहितयाहुनेत्
सप्ताहुतिं ततः कृत्वा मद्ध्ये देव्यै च दीप्तयेत् १६२
पश्चान्नेत्राञ्जनं पात्रं चूर्णां नारङ्गपत्रिणि
मसृणीं परिकल्प्याथ केशशोधनमाचरेत् १६३
भिन्नशोधः प्रकल्प्याथ नववस्त्रं विधाय च
------ नियया गन्धं पुष्पञ्च कबरीस्तबकम् १६४
----- मद्ध्यमे क्षिप्य तत्पार्श्वे च निक्षिपेत्
निंबं कार्पासबीजञ्च ---- मरिचन्तथा १६५
लवणं मुद्गबीजञ्च धान्यं भस्मसमाहरेत्
मकुटे मूर्ध्निवक्त्रे च कण्ठं हृत् गुह्यपादयोः १६६
अभ्यङ्गं दापयेत्पश्चात्प्रदक्षिणत्रयन्तथा
पश्चादग्नौ क्षिपेच्चैव पूरकर्म्मसमाचरेत् १६७
--- पाशवान्तां वीरशक्तिं ततो यजेत्
जातकर्म्म च नामाख्यं निष्क्रापणमतः परम् १६८
अन्नप्राशनपर्यन्तं वीरशक्तिं स्वतंत्रकाम्
पूर्ववत्क्रममेवोक्तं पूरकर्म्मसमाचरेत् १६९
महेशं बालरूपञ्च षोडशाब्दिकयौवनम्
द्वात्रिंशल्लक्षणोपेतं ब्रह्मचर्यं विभावयेत् १७०
सव्यं यज्ञोपवीतञ्च एकन्धारयते शिवः
प्रातकर्म्महुनेच्चैव चरुप्राशनमीरितम् १७१

घोरं पाशुपतेनैव अघोरास्त्रं शिवार्चकम्
क्षुरिकं व्योमहस्तञ्च प्रत्यङ्गिरशतं पृथक् १७२
मृत्युञ्जयेनैव शतं प्रासादेन सहस्रकम्
छत्रं दण्डं पार्श्वयोश्च पादुकापुरतः क्रमात् १७३
पुस्तकं वामभागे च यात्रार्थं परिगम्म्यताम्
पूर्णान्तं होमयेत्पश्चात्कल्याणविधिमुत्तमम् १७४
स्वर्णं तांबूलसहितं विष्णुहस्तात्समुद्धरेत्
गौरीकरांभोजयुग्मं अंबुधाराञ्च निक्षिपेत् १७५
शिवाय प्रददेद्धस्तं भावयेत्साधकोत्तमः
मद्ध्ये फलकाकारञ्च द्विपार्श्वे वृत्तमेव च १७६
द्विपार्श्वे मुकुळाकारं त्रिकराकृतिपश्चिमे
सुषिरं पार्श्वयोश्चैव मद्ध्ये बीजमुदाहृतम् १७७
सूत्रे निवेशयेच्चैव शिवहस्ते प्रदापयेत्
शिवहस्तं समुद्धृत्य गौरीकण्ठे च दापयेत् १७८
स्थालिके शूलपात्रे च कूर्च द्वयञ्च निक्षिपेत्
महेश्वरं भोगशक्तिं संपूज्य विधिवत्ततः १७९
कुण्डं संवृत्तयेद्भागे अश्मपीठं भवेद्यदि
प्रादक्षिण्य क्रमेणैव शक्तिमालिङ्गितं भवेत् १८०
गौरीपादं समुद्धृत्य शिवहस्तेन वेश्मनि
एवं त्रिवारं संवेश्य संहितालाजहोमकम् १८१
पश्चात् दर्पणमादाय मूललिङ्गसमीपके
---- शिवं पूज्य दर्पणे पूजयेच्छिवाम् १८२
भस्मकुंभं समादाय पराशक्तिसमीपकम्
गत्वाग्निकार्यमार्गेण पूर्ववद्धोमयेत्ततः १८३
कुंभे शिवं समभ्यर्च्य ---- दर्पणे
पूजयेद्वीरशक्तिञ्च व्रतहोमं प्रकल्पयेत् १८४
शिवाय पूर्ववत्कृत्वा प्रददेत् विष्णु
माङ्गळ्यं ग्राहयेच्चैव शिवभावनया गुरुः १८५
दर्पणे दापयेद्बुद्ध्या प्रादक्षिण्यञ्च पूर्ववत्

लाजहोमं प्रकुर्वीत उपस्थाप्य विशेषतः १८६
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः
आशिषं समुपास्यान्ते विमुखार्घ्यं समाचरेत् १८७
दर्पणान्मङ्गळ्यमादाय वीरशक्त्यै प्रदापयेत्
कण्ठे बध्नीयसौ लग्ने ब्राह्मणान्भोजयेत्ततः १८८
पताकारोहणं पूर्वं दिने वास्तुं प्रपूजयेत्
पर्यग्निकरणं कृत्वा वृषयागं ततश्शृणु १८९
प्रथमावरणे चैव गोपुरस्समतोन्नतम्
चरेत्प्रासादमानं वा दीप्यहर्मसमन्तकम् १९०
वृषस्थलान्तं नास्यन्तं शालासाम्यं समुन्नतम्
उन्नतं दण्डमित्युक्तं आपादतलमस्तकम् १९१
तत्तुल्यं पाददीर्घञ्च विस्तारञ्च ततश्शृणु
तालञ्च दशविस्तारं अष्टतालन्तु मद्ध्यमम् १९२
नववस्त्रं ग्रहेच्चैव पञ्चवर्णैरलङ्कृतम्
पटस्य मद्ध्यमे भागे वृषभं लिख्यते यथा १९३
शंखप्रभसमानाङ्गं शृङ्गं रक्तप्रभं तथा
नेत्रं कृष्णप्रभं विद्यात् जिह्वा नीलनिभन्तथा १९४
खुरं रक्तप्रभं विद्यात्पुश्छाग्रं कृष्णवर्णकम्
कण्ठं वलयमेवोक्तं बीजं रक्तनिभं तथा १९५
कुण्डीजघनयोर्मद्ध्ये पद्मपीठाकृतिन्तथा
त्रिशूलं कल्पयेत्पश्चात् रक्तं चैव च पत्रकम् १९६
पार्श्वौ शुक्लनिभं विद्यात् ऊर्ध्वे चैव द्विपार्श्वयोः
चामरं शुक्लवर्णं स्यात् दण्डं पीतनिभन्तथा १९७
मद्ध्ये चित्रं प्रकल्प्याथ ऊर्ध्वे श्रीवत्समीरितम्
पश्चिमे स्वस्तिकं चैव चन्द्रसूर्यश्च पार्श्वके १९८
पादप्रदेशे संलिख्य पुष्पदीपाकृतिं चरेत्
ज्वलनं कुंभदीपं च दर्पणं वामपार्श्वके १९९
शंखं त्रिपादकादूर्ध्वे अधोभागे च पालिकाम्
पीतेन वि--- शेषान् पद्मदळाकृतिम् २००

पटस्य द्विगुणं रज्जुं पटमद्ध्ये द्विपार्श्वयोः
दण्डेन ---- वस्त्रेण वर्त्तुळाकृतिम्  २०१
रज्जुनाबन्धयेत्तत्र घण्टात्रयमुदाहृतम्
पञ्चवक्त्रं प्रकल्प्याथ गन्धपुष्पैरलङ्कृतम्  २०२
पूर्ववत् यागशालाञ्च मद्ध्ये वेदीं प्रकल्पयेत्
तत्पूर्वे कुण्डमालिख्य सप्तविंशत् घटान्न्यसेत्  २०३
नवकुम्भं न्यसेन्मद्ध्ये पूर्वमावाहयेत्ततः
अञ्जनं वामपार्श्वे च परितोष्टघटं शृणु  २०४
वृक्षश्च गोपतिश्चैव वृषभश्शङ्ककर्णकः
तीक्ष्णशृङ्गो महाकायो एकपादो वृषस्तथा  २०५
अष्टविद्येश्वरान्पूज्य पूर्वोक्तविधिना हुनेत्
जलाधिवासने चैव रत्नन्यासं विना तथा  २०६
शेषांश्च पूर्ववत्कृत्वा पूर्वं नयनमोक्षणम्
तत्पूर्वमङ्कुरं प्रोक्तं वास्तुपूजां विना यथा  २०७
पादादूर्वन्तमेवोक्तं ऊरोः कण्ठान्तमुच्यते
कण्ठादिमकुटान्तञ्च ब्रह्मभागमधो तथा  २०८
मद्ध्यमे विष्णुभागञ्च रुद्रभागन्तु तत्र वै
तत्वतत्वेश्वरान्न्यस्य मूर्तिमूर्तीश्वरान्हुनेत्  २०९
मूर्तिमावाहयेत्पश्चात्प्रादक्षिण्य क्रमेण च
पताकां रोपयेत्पूर्वं पश्चात् भेरीन्तु ताडनम्  २१०
अङ्कुराण्यर्पयेत्पश्चात् ध्वजारोहणपूर्वकम्
भेरीमादौ तु संघोष्य अङ्कुरं कारयेत्ततः  २११
पश्चाद्ध्वजं समारोप्य भेरी छोषणपूर्वकम्
अङ्कुरं कारयेत्पूर्वं भेरीघोषमतः परम्  २१२
पताकारोहणं पश्चात् अङ्कुरार्पणपूर्वकम्
महेशसंनिधौ वापि मूलबेरस्य संनिधौ  २१३
ध्वजखीटाग्रके वापि भेरी ताडनमुत्तमम्
धान्यराशीन्प्रकल्प्याथ पद्ममष्टदळं लिखेत्  २१४
भेरीन्तु मद्ध्यमे स्थाप्य अर्घ्यञ्च प्रोक्षयेत्ततः

करशुद्धिन्ततः कृत्वा अङ्गन्यासमतः परम्  २१५
भेरीमद्ध्ये च सर्वेभ्य रुद्रं वै  मद्ध्यमे न्यसेत्
सव्ये ब्रह्माणमभ्यर्च्य वामे विष्णुं समर्चयेत्  २१६
कीलसूत्रे देवतांश्च चर्मेषु सप्तमातरः
दिक् तेजाश्च ---- वृत्तौ च शशिभास्करौ  २१७
पूजयेत्तत्र नैवेद्यं धूपदीपं समाचरेत्
एकविंशतिदर्भांश्च विष्टरं परिकीर्तितम्  २१८
भूम्यन्तरिक्षस्वर्गेषु हितं पाताळवासिनाम्
देवानां शत्रुनार्त्थं भेरीं सन्ताडयाम्यहम्  २१९
ब्रह्माविष्णुश्च रुद्रश्च इन्द्राद्यादेवतर्षयः
मृगपक्षिनराणाञ्च हितं सन्ताडयाम्यहम्  २२०
सर्वलोकहितार्त्थाय सर्वप्राणिसुखावहम्
भेरीं सन्ताडयामीति एकद्वित्रि च ताडयेत्  २२१
मन्त्रानुद्वासयेत्पश्चात् भेरीं संघोषयेत्ततः
तत्पश्चिमे देवताग्रे धान्यपुञ्जैरलङ्कृतम्  २२२
त्रिपाद्युपरिविन्यस्य अस्त्रमूर्तिन्न्यसेत्तथा
पूर्वाभिमुखमेवोक्तं मद्ध्यसव्योत्तरच्छदे  २२३
ब्रह्माविष्णुश्च रुद्रश्च पूजयेत् गन्धपुष्पकैः
पालिकामद्ध्यमे सव्ये उत्तरे गौरिवाहिनीम्  २२४
लक्ष्मीमभ्यर्चयेच्चैव कुंभवक्त्रे द्विपार्श्वके
गणेशं कार्तिकेयञ्च दण्डाग्रे मृदसंभवम्  २२५
दण्डमद्ध्ये द्विपार्श्वे च भानुसोमौ प्रपूजयेत्
दण्डमूले क्षेत्रपालं पूर्वाद्यष्टदळेषु च  २२६
दुर्गां ब्रह्मषडङ्गञ्च उत्तमन्त्रेण पूजयेत्
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः  २२७
एकरुद्रः त्रिमूर्त्तिश्च श्रीकण्ठश्च शिखण्डिनः
ध्यात्वा संपूजयेत्पश्चात् नन्दिकाळौ च भृङ्गिणम्  २२८
विनायकं वृषं स्कन्दं देवीञ्चण्डं प्रपूजयेत्
इन्द्राग्नियमनैर्ऋत्यान् वरुणं वायुमेव च  २२९

सोमेशानं यजेच्चैव वज्रञ्च शक्तिदण्डकौ
खड्गं पाशं ध्वजञ्चैव गदांशूलं रथाङ्गकम्  २३०
पद्मं द्ध्यात्वा विशेषेण दर्पणं पूर्णकुंभकम्
वृषभं चामरयुगं श्रीवत्सं स्वस्तिकन्तथा  २३१
शङ्खदीपमिति ज्ञेयः पूजयेत्तु विशेषतः
धरो ध्रुवश्च सोमश्च क्षिपश्चापो निलस्तथा  २३२
प्रत्युषश्च प्रभावश्च वसवैतान्प्रपूजयेत्
महादेवश्शिवो रुद्रश्शङ्करो नीललोहितः  २३३
ईशानो विजयो भीमो देवदेवो महाध्वजः
कपाल इति विज्ञेयः पूजयेद्दळध्यमे  २३४
ऐरावतः पुण्डरीको वामनः कुमुदोञ्जनः
पुष्पदन्तस्सार्वभौमस्सुप्रतीक इति स्तथा  २३५
पूजयेदष्टनागांश्च हिमवां निषधस्तथा
विन्ध्यमाल्य इति ज्ञेयः पारियात्र इतिस्तथा  २३६
गन्धाख्य हेमकूटश्च दळान्तरं यजेत्ततः
वामाज्येष्ठा च रौद्रा च काळीकलविकारिणी  २३७
बलविकरणी बलप्रमथीनि सर्वभूतदमनी तथा
मनोन्मनीति विज्ञेयः ब्राह्मी माहेश्वरी तथा  २३८
कौमारी वैष्णवी चैव वराही च महेन्द्रिका
चामुण्डीति च विख्याता वीरभद्रगणेश्वरौ  २३९
अर्चयेद्विधिना चैव चण्डनाधं यजेत्ततः
नैवेद्यधूपदीपान्तं पूजयेत्तु पृथक्पृथक्  २४०
मधूकशाकबिल्वञ्च वकुळन्ताळमेव च
हिन्तालं नाळिकेरञ्च चन्दनं देवदारुकम्  २४१
वंशमर्जुनमश्वत्थं वटं शम्याकबालकम्
पूगच्छदं पाटलीञ्च नीलीञ्च पनसन्तथा  २४२
सप्तच्छदं विराळञ्च विमलं वृक्षिसत्वरम्
ग्राहयेत् वक्रिणीन्त्यज्य अपर्वं नत्वचन्तथा  २४३
ब्रह्मभागञ्चतुर्मानं विष्णुभागाष्टमानकम्

रुद्रभागं वर्तुळञ्च सप्ताष्टकनवांशकम्  २४४
प्रतिष्ठाङ्कारयेच्चैव प्रथमे वत्सरे विना
प्रतिवर्षं विना चैव प्रतिष्ठाक्रममुत्तमम्  २४५
पूर्वोक्तयागं सङ्कल्प्य मद्ध्यवेदीं प्रकल्पयेत्
तत्पूर्वे कुण्डमाकल्प्य सप्तविंशद्घटान्न्यसेत्  २४६
विद्येश्वरघटाष्टौ च शिवकुंभञ्च मद्ध्यमे
पूर्वोक्तविधिनाहुत्वा उक्तकर्मसमाचरेत्  २४७
दण्डाग्रं मकुटं प्रोक्तं यष्टिकावक्त्रमीरितम्
रज्जूकरसमायुक्तं विष्टरन्तु जटासितम्  २४८
पटञ्च त्वक्समायुक्तं पीठं वापि तथाननम्
एवं ज्ञात्वा विशेषेण पूर्ववत्परिकल्पयेत्  २४९
स्वर्णेन रजतेनैव वस्त्रेणैव विभूषितम्
--------  कान्तं वा भूषितं परिकल्पयेत्  २५०
प्रतिष्ठाङ्कुरमेवोक्तं यात्रास्नपनमाचरेत्
चण्डनाधमलङ्कृत्य ग्रामशोधनमाचरेत्  २५१
चन्द्रचूडं विशेषेण स्नानवेद्योपरिन्यसेत्
यात्रास्नपनमेवं यः दशकुंभं प्रकीर्तितम्  २५२
यात्राहोमन्ततः कृत्वा अभिषिच्य विशेषतः
गन्धपुष्पैरलङ्कृत्य गणेशं स्कन्दमेव च  २५३
चण्डनाधमलङ्कृत्य समादाय महेश्वरम्
पञ्चविंशति भेदेषु एकमेकं दिनं प्रति  २५४
सौरोत्सवे प्रकर्तव्यं द्ध्वजारोहणपूर्वकम्
चन्द्रोत्सवे दैविके च अङ्कुरार्पणपूर्वकम्  २५५
भेरीताडनपूर्वञ्च उत्सवे च प्रशस्यते
सौरोत्सवे विशेषेण द्रव्यलोपे च संकटे  २५६
चान्द्रं वा देविकं वापि कारयेत्साधकोत्तमः  २५७
चन्द्रात्सवे देविके च द्ध्वजारोहणपूर्वकम्
मोहेन कारयित्वा तु कुलक्षयमवाप्नुयात्  २५८
विपरीतक्रियां कुर्यात् क्षयरोगं भवेत् गुरुः

सा --- त्तराग्रं स्तंभान् पूर्वादिपश्चिमाग्रकम्  २५९
पीतस्तंभैरलङ्कृत्य छन्नोदुंबरसंयुतम्
ऊर्ध्वे तु छदकैर्युक्तं अलङ्कृत्य विशेषतः  २६०
ऊर्ध्वछादनमेवोक्तं चित्रवस्त्रैरलङ्कृतम्
कदळीस्तंभकोपेतं पूगस्तंभकमुच्यते  २६१
नाळिकेरप्रसूनञ्च स्तंभकैर्नाळिकेरकम्
इक्षुदण्डञ्च पनसं विचित्रालङ्कृतन्तथा  २६२
मण्टपात् बाह्युदेशे तु द्ध्वजपीठस्य दक्षिणे
उत्तराभिमुखं स्थाप्य शशिशेखरनायकम्  २६३
अस्त्रमूर्तिं समभ्यर्च्य पुण्याहं वाचयेत्ततः
देहशुद्धिन्ततः कृत्वा अन्तर्यजनमारभेत्  २६४
अभिषेकं पुराकृत्वा गन्धपुष्पैरलङ्कृतम्
तत्वत्रयं समभ्यर्च्य न्यासकर्म समाचरेत्  २६५
रज्जुना पटमाबद्ध्य सुमुहूर्ते सुलग्नके
अघोरास्त्रं समभ्यर्च्य द्ध्वजारोहणमाचरेत्  २६६
वृषं शंभुन्दण्डमूले ------ चरेत्
परितोष्टघटान्ग्राह्य पूर्वद्यष्टदळे यजेत्  २६७
पश्चात् ----- धूपदीपं समाचरेत्
प्रार्थयेत्परमेशानं राजराष्ट्राभिवृद्धिदम्  २६८
द्ध्वजदण्डस्य पूर्वे तु संपूज्य विघ्ननायकम्
---- नन्तु निवेद्याथ ---- वं समर्चयेत्  २६९
नित्योत्सवेशं संपूज्य वीधिं गत्वा समाचरेत्
रात्रौ बलिं प्रकुर्वीत ब्रह्मेन्द्राग्नियमांस्तथा  २७०
निर्ऋतिं पश्चिमे वायौ सोमे शान्तं बलिन्ददेत्
सप्तविंशद्दिनान्तं वा इहभोसंनिधीभव  २७१
सप्तविंशतिपर्यन्तं प्रार्थयेत्साधकोत्तमः
ब्रह्मताळसमाख्यश्च मत्तावरणमेव च  २७२
भृंगिणी मल्लताळश्च नवताळं बलिस्तथा
कोट्टरीयं ढक्करीश्च ताळभेदं प्रकीर्तितम्  २७३

चंचापुटी चाचपुटी चैव उट्घिद्टमट्टयम्
लंबुकं सिह्मरन्ध्रञ्च जंपटं पञ्चवाद्यकम्  २७४
कुंभवाद्यमिति प्रोक्तं मद्ध्ये कमलवनं तथा
भुजङ्गां चित्रस--साख्यं दराडपालान् तथैव च  २७५
भुजङ्गत्रास स्राज्याख्यं भुजङ्गलळितन्तथा
सन्ध्यानृत्तं भ्रमरिकं नृत्तभेदाः प्रकीर्तिताः  २७६
मद्ध्यमं वेळतत्वाख्यं वराटं कुञ्जरन्तथा
भैरवी देशिकश्चैव मकुटं माळवी तथा  २७७
देशिकं रागभेदानि मेघरागन्तथैव च
गान्तारं कोल्लसं विद्यात्कौशिकं नट्टरावकम्  २७८
श्रीकामरञ्चतक्केशितक्काख्यं तालपाणिना
इन्द्रादिलोकपालांश्च पद्मपीठे समर्चयेत्  २७९
अस्त्रमूर्त्यासहोपेतं बलिनायकमेव च
नित्यपूजावसाने तु प्रादक्षिरायं महेश्वरम्  २८०
प्रभाते पुष्पलिङ्गन्तु मद्ध्याह्ने अन्नलिङ्गकम्
सायाह्ने अक्षतं लिङ्गं तथा नित्योत्सवं भवेत्  २८१
द्ध्वजं नैवेदयेत्पूर्वं पश्चात्सन्धिं समाचरेत्
प्रथमावरणेनैव नित्याष्टबलिमुच्यते  २८२
महाबलिन्ततः पश्चात् बलिक्रममिहोच्यते
यागद्वारे विशेषेण महाविष्णुबलिञ्चरेत्  २८३
द्ध्वजपूजा ततः पश्चात् दिनदेवान्बलीन् चरेत्
पश्चात्सिद्धिं समाराद्ध्य पूजाक्रममिहोच्यते  २८४
पूर्वं द्ध्वजाङ्कुरं विद्यात् तीर्थाङ्कुरमतः परम्
उत्सवे मद्ध्यमे चैव दशसङ्ख्यान्घटान्न्यसेत्  २८५
सप्तविंशत् घटं न्यस्य पूर्वोक्तविधिना चरेत्
मद्ध्ये गणेशं संपूज्य परितोष्टघटे तथा  २८६
स्रामोदश्च प्रमोदश्च प्रमुखो विमुखस्तथा
स्रविघ्नो विघ्नकर्तारो दक्षाशीपञ्चहस्तकः  २८७
द्वितीयावरणं पूज्य तृतीयावरणं श्रुणु

विकटो भीमपूर्वश्च गजवक्त्रो महोदरः २८८
दक्षिणे पूजयेत्पश्चात् पश्चिमे च ततश्शृणु
एकदन्तो महाकायो विनायकगणाधिपः २८९
तृतीयावरणे पूज्य इन्द्रादि च चतुर्थकम्
वज्रादीन्पश्चिमेऽभ्यर्च्य शेषान्पूर्ववदाचरेत् २९०
यागारंभस्य पूर्वे तु आचार्यः कौतुकं वहेत्
पश्चात् बद्ध्वागणेशाय रक्षाबन्धनमुत्तमम् २९१
द्ध्वजाङ्कुरं ततः पश्चात्तीर्थाङ्कुरमतः परम्
नवकुण्डं हुनेच्चैव अथवा पञ्चकुण्डकम् २९२
पूर्वोक्तविधिना हुत्वा यागान्ते प्रथमं बलिम्
विघ्नेशं बलिबेरञ्च कालदाहन्तथैव च २९३
चण्डनाध इति ज्ञेयः द्वितीये दिवसे चरेत्
तृतीये दिवसे चैव गणेशं बलिनायकम् २९४
अग्निञ्च चण्डनाधञ्च त्रिपुरारिं तृतीयके
तृतीये दिवसान्ते च कार्तिकेयं विशेषतः २९५
कौतुकं बन्धयेत्तत्र यात्रास्नपनमुच्यते
यात्राहोमं ततः कृत्वा स्नात्वा चैवं समाचरेत् २९६
मद्ध्ये वेदीं प्रकल्प्याथ तत्पूर्वे तु षडश्रकम्
कुण्डं प्रकल्पयेत्पश्चात् स्कन्दयागं समाचरेत् २९७
जलन्धरं समभ्यर्च्य हुत्वा चैवं समाचरेत्
सायंप्रातस्समभ्यर्च्य पञ्चमे दिवसे श्रुणु २९८
गजारिमर्चयेच्चैव शेषं पूर्ववदाचरेत्
षष्ठमे दिवसे चैव वीरभद्रेश्वरं विदुः २९९
सप्तमे दिवसे चैव स्कन्दयागविसर्जनम्
स्कन्दस्य कलशं स्नाप्य भक्तयागं ततश्शृणु ३००
तद्दिनान्ते विशेषेण मद्ध्ये वेदीं प्रकल्पयेत्
तत्पूर्वे कुण्डमेवोक्तं दशकुंभान्पृथक्पृथक् ३०१
नन्दिनञ्च महाकाळं भृंगिणं वृषभेश्वरम्
दुर्गाञ्च ईशकौबेरं वायुं वारुणराक्षसम् ३०२

प्रेतेशमपिनाधं स्यात् ----- स्थमेव च
अष्टमङ्गलमेवोक्तं वज्रादींश्च दशायुधान् ३०३
अन्यानमुकभक्तांश्च रक्षाबन्धनपूर्वकम्
वेदिका मद्ध्यमे चैव दशकुंभं पृथक्पृथक् ३०४
तत्तन्मन्त्रैस्समावाह्य प्रथमावरणे यजेत्
हृदयादीन्समभ्यर्च्य द्वितीय्यावरणे तथा ३०५
इन्द्रादिलोकपालांश्च अर्चयेत्स्वस्वमन्त्रकैः
पूर्वोक्तविधिनाहुत्वा यात्राहोमन्तु पूर्वकम् ३०६
यात्रास्नपनमेवोक्तं प्रत्येकं स्नानमाचरेत्
गजाननं कार्तिकेयं बलिबेरास्त्रिमूर्तिकम् ३०७
चण्डं भक्तगणैर्युक्तं हरेरर्द्धैश्चिरं चरेत्
अष्टमे अर्द्धनारी च किरातं नवमे दिने ३०८
गजाननमहायागं विसर्जनमतः परम्
कुंभान्समुद्धरेच्चैव गणेशस्याभिषेचनम् ३०९
दिनान्ते वास्तु यागः स्यात् वेदिका मद्ध्यमे श्रुणु
पूर्ववद्दशकुंभांश्च शिवास्त्रेशन्तु मद्ध्यमे ३१०
प्रथमावरणं पूज्य द्वितीय्या वरणे तथा
वज्रादिदश अस्त्रांश्च पक्षसङ्ख्ये घटे यजेत् ३११
दशास्त्रानर्चयेद्विद्वान् पूर्वोक्तविधिना हुनेत्
परिवारघटान्स्थाप्य सप्तविंशति सङ्ख्यया ३१२
उक्तमन्त्रेण संपूज्य नवकुण्डान्प्रकल्पयेत्
अथवा पञ्चकुण्डं वा अभावे एकमेव वा ३१३
पूर्वोक्तविधिना हुत्वा कौतुकं बन्धयेत्ततः
यात्रास्नपनमेवोक्तं होमकर्मसमाचरेत् ३१४
उमामहेश्वरञ्चैव दशमे दिवसे चरेत्
एकादशे वृषारूढं वैवाह्यं द्वादशे तथा ३१५
त्रयोदशे क्षेत्रपालं एकमेकं दिनं प्रति
कौतुकं बन्धयेच्चैव यात्रास्नपनमुच्यते ३१६
होमञ्च पूर्ववत्कृत्वा अलङ्कृत्य विशेषतः

वेदिका मद्ध्यमे चैव दशकुंभं पृथक्पृथक् ३१७
तत्पूर्वे स्नानवेदींश्च अभिषेकं विधीयते
दिनान्ते प्रतिदिनान्ते वा प्रत्येकं पूर्ववच्चरेत् ३१८
त्रयोदश दिनान्ते च चन्द्रशेखरमेव च
रक्षाबन्धनपूर्वं यः यात्रास्नपनमीरितम् ३१९
यात्राहोमन्तथा कृत्वा वेदिकाः पूर्ववच्चरेत्
दशकुंभं न्यसेच्चैव तन्मद्ध्ये चन्द्रशेखरम् ३२०
पूजयेद्गन्धपुष्पाद्यैः प्रथमावरणे तथा ३२०-२
हृदयादीन्समभ्यर्च्य द्वितीयावरणे तथा
शर्वादीन्पूजयेत्पश्चात्पूर्वोक्तविधिना हुनेत् ३२१
सायंप्रातर्हुनेच्चैव अस्त्रेशं पूर्ववद्धुनेत्
समिदाज्य चरूंल्लाजान्माषशालियवान्तिलम् ३२२
सक्तुसर्षपमुद्गांश्च गोधूमं वैणवन्तथा
चणकं वीरशिंबी च पृथुकं पिष्टमेव च ३२३
अपूपं लड्डुकं क्षीरं दधिचैवमधुस्तथा
पनसाम्रकदळ्यश्च नाळिकेरफलास्तथा ३२४
विरवां वेधच्छदनं अशनी मृदुकन्दकम्
कपित्थमिक्षुखण्डञ्च गुळखण्डं प्रियङ्गुकम् ३२५
स्वादुकन्दञ्च नीवारं वल्लिकन्दन्तथैव च
अश्वत्थं वटवैणव्यं औदुंबरशमी तथा ३२६
खादिरञ्च अपामार्गं बिल्वं दूर्वापलाशकम्
सायंप्रातर्हुनेच्चैव गणयागं ततश्शृणु ३२७
गणेशमूलमन्त्रेण वृत्तकुण्डे प्रधानके
पूर्वाद्यष्टसुकुण्डेषु उक्तमन्त्रेण होमयेत् ३२८
स्कन्दयागं विशेषेण एककुण्डं षडश्रकम्
स्कन्दमन्त्रेण जुहुयात्स्थण्डिलेवहुनेत्ततः ३२९
भक्तयागे महासेना पृथक्कुण्डं विना तथा
अस्त्रयागे तमेवोक्तं पृथुकुण्डं विना गुरुः ३३०
किरातञ्चैवकंकाळं चण्डेशानुग्रहन्तथा

विषापहरणञ्चैव चक्रदानस्वरूपकम्  ३३१
पञ्चवर्णसहोपेतं एकमेकं दिनं प्रति
अस्त्रमूर्तिश्रीबलिञ्च शशिशेखरमेव च  ३३२
गणेशस्कन्दचण्डांश्च शिवभेदे सह क्रमात्
पञ्चवारन्तदेवोक्तं अस्त्रयागं विसर्जनम्  ३३३
अस्त्रकुंभं समुद्धृत्य अस्त्रराजाभिषेचनम्
एकोनविंशद्दिवसे द्ध्वजाष्टकमुदाहृतम्  ३३४
तद्रात्रौ कौतुकं बद्ध्वा उत्सवेशसमीपके
स्कन्दोपेतं द्वयं कृत्वा एकपात्रे निधाय च  ३३५
सूत्रेनागान्समभ्यर्च्य भस्मे तुलकुळीश्वरम्
तण्डुलं नाळिकेरञ्च हस्तेनोद्धृत्य भावयेत्  ३३६
हेमसूत्रं समभ्यर्च्य सव्यहस्ते च दापयेत्
स्कन्दस्य सव्यहस्ते च शक्तेस्तु वामहस्तके  ३३७
स्वतन्त्रशक्तिमभ्यर्च्य वामहस्ते च दापयेत्
महेशरूपभेदेषु चतुष्षष्टि च भेदकान्  ३३८
सोमास्कन्देश्वरं प्रोक्तं कथं भूतं महेश्वरम्
अदीक्षितानां भक्तानां समयाचारलोपिनाम्  ३३९
युक्तञ्च हौत्र्यदीक्षाञ्च ज्ञानदीक्षाख्यशांभवम्
साधारं हौत्र्यदीक्षाञ्च निराधाराख्यशांभवम्  ३४०
घटमण्डलवह्निञ्च आचार्यश्च चतुर्विधम्
अस्त्रमूर्तिघटाख्यं स्यात् मण्डलं बलिनायकम्  ३४१
महेश्वरं शिवाग्निं स्यात्कौतुकं भावयेत् गुरुः
वागीश्वराकृतिं देवं वागीशाभोगशक्तिकम्  ३४२
नादं बिन्दुरिति ज्ञेयः शिवाग्निस्कन्दमुच्यते
तस्मादेव समाख्यातं सोमास्कन्देश्वरं विदुः  ३४३
इतरेषाञ्च देवानां देवदेवि द्वयं भवेत्
तस्मात् हित्वा विशेषेण उत्सवेश्वरमारभेत्  ३४४
सतुनानारूपेण कल्पते जगत् शक्तिमयं ज्ञेयं कर्तव्यश्शिव इतिस्तथा
३४४-२

कुलालचक्रस्य मृत्तस्योपकरणं नोचेत्केवलं कर्त्राविना कर्तानोचेत्
प्रपञ्चेषुनो पादानेन कार्यकम्
कर्ताशक्तिद्वयेनैव पञ्चकृत्य क्रमं भवेत्  ३४५
चक्रदण्डांभसाटङ्कं क्षुरिकापटमेव च
अलधीतैलमृदुना चक्रपीठमनेकशः  ३४६
तथैव शक्तिभिः कार्यं शिवशक्तिद्वयं मतम्
तस्मात्सर्वप्रयत्नेन वीरशक्तिस्वतंत्रिकाम्  ३४७
पराशक्त्याख्यमेवोक्तं उत्सवन्तु समाचरेत्
शिवस्योत्सवकालेषु शक्त्युत्सवं समाचरेत्  ३४८
शक्त्युत्सवे विशेषेण शिवोत्सवन्तु कारयेत्
शिवोत्सवं विशेषोऽस्ति कथं शंभो वद श्रुणु  ३४९
यत्काले यद्दिने ऋक्षे उत्सवेषु प्रशस्यते
सोमास्कन्दोत्सवे काले वीरशक्तिं समाचरेत्  ३५०
अन्यबेरैस्सहोपेतं वर्जयेत्साधकोत्तमः
मोहेन कारयित्वा तु कुलक्षयकरं भवेत्  ३५१
एवं महोत्सवे काले यात्रास्नपनमुच्यते
यात्राहोमन्ततः कृत्वा दिक् ध्वजारोहणन्निशि  ३५२
पूर्ववद्यागशालाञ्च अष्टवेदीं प्रकल्पयेत्
तत्पूर्वे चतुरश्रञ्च कुण्डं कृत्वा विशेषतः  ३५३
वेदिका मद्ध्यमे स्थाप्य दशकुंभान्पृथक्पृथक्
गजशुक्लनिभं विद्यात् मेषं वै रक्तवर्णकम्  ३५४
कृष्णाभं माहिषञ्चैव प्रेतधूम्रनिभं तथा
मकरं हरितालं स्यात्कुरङ्गं पीतमुच्यते  ३५५
कुरङ्गं श्वेतवर्णं स्यात् वृषभं पूर्ववच्चरेत्
प्रथमावरणेऽभ्यर्च्य द्वितीय्यावरणं श्रुणु  ३५६
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः
पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः  ३५७
मद्ध्ये तु गजराजस्स्यात्समभ्यर्च्य विशेषतः
गकारं पूर्वमुच्चार्य नाम्नास्वाहान्तमुच्यते  ३५८

मद्ध्ये मेषं समभ्यर्च्य द्वितीय्यावरणो यजेत्
यत्रगोर्कमृषीश्चैव वक्रशृङ्गीधनुर्मुखाः ३५९
रक्ताभोऽपि च रागाक्षः कुनखी मेषकाधिपः
अष्टकुंभेषु संपूज्य पूर्वोक्तविधिना हुनेत् ३६०
माहिषं मद्ध्यमे पूज्य प्रथमावरणं यजेत्
नदी च शमनी चैव वीरघोषी च शृङ्गिणी ३६१
उद्धामभूमनिर्भूषो कर्णाक्षोवसुकुंभके
संपूज्य विधिवद्धुत्वा प्रेतं मद्ध्यघटे यजेत् ३६२
उग्रदन्तो भीमसेनो अट्टहासो विरूपकः
भृकुटीमुखसन्तुष्टो खड्गयुग्दळनायकः ३६३
एतान्पूज्य यजेत्पश्चात्वारुणञ्च ततश्शृणु
मकारं मद्ध्यमे पूज्य ---- कदन्नशोभिनः ३६४
विक्रमस्सम्भगो भग्नोऽधिकारो करुणोऽरुणः
एवं संपूज्य विधिवत् वायुञ्चैव ततः शृणु ३६५
हरिर्नीहाटकः शृङ्गी कुपुश्च वरदो नडः
शाल्मोदरः स्वादुवक्त्रो अष्टकुंभेषु पूजयेत् ३६६
श्यामाङ्गः कठिनो वेग उन्मिषो निमिषो मृडः
धरो शील इति ज्ञेयः मद्ध्ये तुरगमुच्यते ३६७
उक्षश्च गोपतिश्चैव वृषभश्शङ्कुकर्णकः
तीक्ष्णशृङ्गोमहाकायो एकपादो वृषस्तथा ३६८
मद्ध्ये वृषं समभ्यर्च्य पूर्वोक्तव्धिना हुनेत्
नयनोन्मीलनं कृत्वा शेषं पूर्ववदाचरेत् ३६९
पताकारोहणं पश्चात् दण्डमूलेऽभिषेचयेत्
प्रथमं भूतरात्रं स्यात् द्वितीयं भूतेशरात्रिकम् ३७०
तृतीय्यमृषिरात्रं स्यात् चतुर्थं नररात्रकम्
गन्धर्वं पञ्चमे रात्रौ इन्द्ररात्रौ तु षष्ठमम् ३७१
सप्तमं गुहरात्रं स्यात् अष्टमं विष्णुरात्रकम्
नवमं अग्निरात्रं स्यात् दशमं नागरात्रकम् ३७२
रौद्रमेकादशं रात्रं मातरं द्वादशं निशा

कूश्माण्डं त्रयोदशं रात्रं पितृरात्रं चतुर्दशम्  ३७३
भानोः पञ्चदशं रात्रं षोडशं राक्षसाख्यकम्
शिवं सप्तदशं विद्यात् द्रुहिणोऽष्टादशे निशी  ३७४
एकोनविंशत् मेषांशं विंशतिः प्रेतरात्रिकम्
एकविंशं निशि स्कन्दः द्वाविंशं निशि पौष्करी  ३७५
त्रयोविंशं निशी चैव वृषरात्रं प्रकीर्तितम्
चतुर्विंशन्निशी ज्येष्ठां पञ्चविंशन्निशी तथा  ३७६
किन्नरं रात्रिमेवोक्तं षड्विंशत् गरुडाख्यकम्
सप्तविंशन्निशी चैव देवरात्रिं प्रकीर्तितम्  ३७७
निजदेवक्रमं प्रोक्तं तेषां श्रुणु बलीनि च
माषान्नञ्चैव मुद्गान्नं नीलान्नं सर्षपाशनम्  ३७८
पायसान्नं गुळान्नञ्च दध्यन्नञ्च विशेषतः
शुद्धान्नञ्च मरीच्यन्नं हरिद्रान्नं तथैव च  ३७९
लाजान्नं शर्करान्नञ्च कर्पूरान्नन्तथैव च
जीरकान्नमिति ज्ञेयः हरेणुकान्नमुच्यते  ३८०
मध्वन्नञ्चैव तैलान्नं आज्यान्नं विमलान्नकम्
कदळीफलमिश्रञ्च नाळिकेरेण मिश्रकम्  ३८१
आम्रसारेण मिश्रञ्च जंबूफलसुमिश्रकम्
तिंतिणीफलमिश्रञ्च कपित्थफलमिश्रकम्  ३८२
इक्षुसारेण मिश्रञ्च दिनं प्रतिबलिञ्चरेत्
द्ध्वजपीठाग्रके चैव दिनदेवान्प्रपूजयेत्  ३८३
बलिङ्कृत्वा विशेषेण अभिषेकक्रमं श्रुणु
दिनं प्रतिविशेषेण एकमेकं सुमिश्रकम्  ३८४
वस्त्रपूतञ्च तोयञ्च पूरितं स्नानमाचरेत्
एलालवङ्गकर्पूर चन्दनागरुपर्णकैः  ३८५
तक्कोलञ्चैव कञ्चोलं उशीरं चंपकन्तथा
ह्रीबेरं दान्तमरुवं बीजं वल्कन्तथैव च  ३८६
मत्कन्दं कन्दमद्ध्यञ्च परिवर्जनमारितम्
विरोदकं वा तु संज्ञेयः रक्तकाषायमेव वा  ३८७

पुष्पोदकञ्च पत्राख्यं लोहोदकन्तथैव च
अस्त्रोदकञ्च बीजाख्यं रसोदकन्तथैव च ३८८
मूलोदकं यवाख्यञ्च स्नानद्रव्यमिहोच्यते
गणेशं स्कन्ददेव्यौ च सोमास्कन्देश्वरन्तथा ३८९
बलिबेरञ्चास्त्रमूर्तिं दिनबेरन्तथैव च
चण्डान्तमभिषिच्याथ यात्रास्नपनमेव वा ३९०
शूद्रादिस्पर्शशान्त्यर्थं स्नपनं कारयेत्ततः
तस्मात्स्नानं प्रकुर्वीत अन्यकालेषु वर्जयेत् ३९१
संगमे वार्द्धयामे च अन्यकालेषु वर्जयेत्
पूर्वकाले तु निर्माल्यं विसृज्यालङ्कृतं यथा ३९२
नैवेद्यधूपदीपान्तं गेयनृत्तसमायुतम्
शूद्रादिस्पर्शनं नोचेत् अभिषेकन्न कारयेत् ३९३
दर्पणे स्नानमाराद्ध्य महेशालङ्कृतं यथा
धौतवस्त्रन्तु प्रथमं द्वितीयं रक्तवस्त्रकम् ३९४
कृष्णं श्यामञ्च पीतञ्च नीलं चित्रांबरन्तथा
कृष्णं श्वेतं श्वेतपीतं पीतरक्तं तटित्प्रभम् ३९५
पद्मकान्तञ्च सुश्लिष्टं स्फटिकाभन्तदुच्यते
अरुणाभन्तु ऋक्षाभं दाडिमी कुसुमाभकम् ३९६
अतिरक्तं महानीलं वज्राभं रक्तभा तथा
पञ्चरत्नप्रभाञ्चैव त्रीणिरत्नप्रभन्तथा ३९७
चतुरत्नप्रभाञ्चैव माणिक्यङ्कृष्णवर्णकम्
रत्नं वैडूर्यमिश्रञ्च स्फटिकं पीतमिश्रकम् ३९८
सप्तविंशद्दिने चैव गणेशं प्रतिदेवतान्
अलङ्कृत्य विशेषेण सर्ववस्त्रैरलङ्कृतम् ३९९
हित्वा च प्रतिमावस्त्रं शेषन्धारयते द्ध्रुवम्
बाह्ये विधिगतो देवो पूज्यान्याभरणानि च ४००
कार्पासश्रौत्रचित्राख्य वस्त्रदिव्यपटानि च
देवाय प्रददेद्राज्ञा शिवभक्तजनेऽपि वा ४०१
अर्घ्यांभसा च संप्रोक्ष्य युक्तन्देवस्य दापयेत्

यन्त्रं वा प्रददेत्काले देवमारोपयेत्ततः ४०२
अर्घ्येण प्रोक्षयेद्विद्वान् गन्धभेदान्ततश्शृणु
कपिलं ब्रह्मगन्धञ्च श्रीगन्धं विमलन्तथा ४०३
शिवप्रायाख्यगन्धं वा रजो गन्धाङ्गरागकम्
श्रिया मोदञ्च गीर्वाणं निर्यासं भद्रमेव वा ४०४
श्रीगन्धञ्च लवंगञ्च गरुडामोदमेव च
गन्धञ्च कृष्णगन्धञ्च श्रीगन्धं पद्मगन्धकम् ४०५
कर्पूरं यक्षकस्तूरी हिमांबुनाभितैलकम्
कुङ्कुमं रोचनादारु गन्धभेदाः प्रकीर्तिताः ४०६
नन्द्या वर्तञ्च पुन्नागं श्रियावर्तन्तथैव च
मल्लिका चैव मन्दारं ----- मालतीन्तथा ४०७
बृहती वकुळं पद्मं जातिञ्च करवीरकम्
श्वेतार्कपाटली द्रोणं चांपेयोत्पलमेव च ४०८
प्रियानन्दाप्रियामोदा कुरवं सहभद्रिका
कल्हारं दान्तमरुवं श्रीबेरञ्चबकन्तथा ४०९
प्रवाळमल्लिकाञ्चैव सप्तविंशदिनेऽपि वा
पुष्यरागेन्द्रनीलञ्च माणिक्याभरणन्तथा ४१०
रुद्राक्षं मौक्तिकञ्चैव वैडूर्यञ्च प्रवाळकम्
सौवर्णमिन्द्रनीलञ्च पद्मबीजन्तथैव च ४११
गोमेधं रजतं शङ्खं स्फटिकं चन्द्रकान्तकम्
नीलं मरकतं रत्नं पुत्रदीपफलन्तथा ४१२
कल्हारकान्तं श्रीकान्तं मणिमालान्तथैव च
घण्टामालाविभूष्यञ्च शिरोमालाञ्च दापयेत् ४१३
वृश्चिकाभरणञ्चैव नागाभरणमेव च
बिल्वपत्राकृतिञ्चैव विघ्नेशादिशि वान्तकम् ४१४
घृतान्नञ्चैव दध्यन्नं क्षीरान्नञ्च तथैव च
मद्ध्वन्नञ्चैव मुद्गान्नं माषान्नञ्च तथैव च ४१५
तिंत्रीणी च गुळान्नञ्च शर्करान्नन्तथैव च
मरीच्यन्नञ्च कृसरं हरिद्रान्नन्तथैव च ४१६

शुद्धान्नञ्चैव पक्वान्नं एलकान्नन्तथैव च
लाजं पृथुकपिष्टञ्च उपभेदानि कत्थ्यते ४१७
सप्तविंशद्दिने चैव गणेशाद्युपचारकम्
बृहती कदळी चैव नारिकेळन्तथैव च ४१८
कारवल्ली बृहद्वल्ली कूश्माण्डं पनसन्तथा
उर्वारुकञ्च आळर्कं निष्पावं विटपन्तथा ४१९
नारङ्गद्वयमेवोक्तं लिकुचं लाजमाषकम्
उद्यानबृहती शोकं अर्शोघ्नं वल्लरीवरिः ४२०
वल्लीविस्तरिकान्ता च शर्करी च पटोलिका
दण्डशाक इति ज्ञेयः सस्य भेदाः प्रकीर्तिताः ४२१
शीतांबुगुळसारञ्च एलकारसमेव च
कर्पूररसमित्युक्तं सूपसारं तथैव च ४२२
मरीचिसारमित्युक्तं नागरं रसमेव च
इक्षुसारं पयस्तक्षदधिश्च नाळिकेरकम् ४२३
आम्रसारञ्च जंबू च श्रियामोदन्तथैव च
सन्धानं सुन्दरामोदं सन्तापन्नरमेव च ४२४
सौभद्राद्वित्तसन्तोषं शीतशेखरमेव च
वारुणं मार्दवञ्चैव मन्त्रसन्तानमेव च ४२५
चित्तानन्दकरं चित्तं अंबुशेखरमेव च
एतानि जलभेदानि सप्तविंशद्दिनेऽपि वा ४२६
अंबुशान्तिञ्च सिद्धिञ्च मूलं पाचनमेव च
भृताख्य सौख्यश्रीपाद्यं शुद्धसौतञ्च गौरवम् ४२७
चन्द्रेशशिशिरब्रह्मं योगं वारुणमेव च
कुङ्कुमञ्चन्दनञ्चैव दूर्वासिद्धार्थकन्तथा ४२८
उशीरञ्चैव तक्कोलं एलकामलकन्तथा
कटुरं मधुरं वापि पिप्पली चबकन्तथा ४२९
शङ्खनीच इति प्रोक्ताः पाद्यभेदं प्रकीर्तितम्
मानसं सौख्यमित्युक्तं आत्मसन्दीपनन्तथा ४३०
सौम्यमानसगन्धञ्च आम्रपुष्यप्रियाकचा

षडङ्गं विश्वभुवनं शाश्वतं वीरमेव च ४३१
भोगशश्वत्रुटी चैव तांबूलं वैणवन्तथा
लवङ्गं रेणुकञ्चैव जातीकर्पूरकुङ्कमम् ४३२
ऐन्दवं माक्षिकं पद्मं एते आचम्यभेदकाः
आगतं मिळितं स्थाप्यं निरोधार्घ्यन्तथैव च ४३३
देवाश्च नळिनञ्चैव पाशमोचनमेव च
श्रियाशशीकेवलञ्च मन्त्रार्घ्यं श्रीप्रदं भवेत् ४३४
शिवार्घ्यं पापमोच्यार्घ्यं दुस्वप्नहरमेव च
विष्काषङ्गमनं धीतं सहितं पापनाशनम् ४३५
सुधासौम्यञ्च सगणान् हर्षणं पावनं तथा
निरोधार्घ्यमिति ज्ञेयः अर्घ्यभेदाः प्रकीर्तिताः ४३६
निर्यासं चन्दनञ्चैव कुन्दुरुष्कञ्च कुङ्कमम्
कृष्णलोहञ्च मेकञ्च कर्पूरं गुग्गुलुं रसम् ४३७
चंपकं देवदारुञ्च मागतं अनलन्तथा
माध्वी पकरसंकृष्णं अमरू पाकशन्दिनीम् ४३८
आत्मदर्शज्वालदारुं मार्दवं फलिनी तथा
पङ्कजं वा यथाघोषं धूपभेदाः प्रकीर्तिताः ४३९
नागपुं वृक्षकेतुश्च व्याघ्रसिह्मगजस्तथा
ऋक्षं पुष्पाख्यपद्मञ्च भूमीशान्तं तथैव च ४४०
प्रियानन्दं प्रियामोदं विश्वप्रियमनोरमम्
भद्रदीपं शशीनन्दं दीपशेखरमेव च ४४१
रुद्रदीपं मन्त्रदीपं राजदीपन्तथैव च
ग्रहकर्पूरमित्युक्तं पञ्चदीपन्तथैव च ४४२
एकदीपं समारात्रं नीराञ्जनमितिस्तथा
दीपभेदमिति प्रोक्तं यानक्रममतश्शृणु ४४३
प्रथमं पुष्पधामस्स्यात् द्वितीय्यं शबरन्तथा
कपोतञ्च तृतीये च पिङ्गलञ्च चतुर्थके ४४४
सन्धानं पञ्चमे चैव विकषं षष्ठमे दिने
सप्तमे मधुयानं स्यात् लोहितामष्टमे दिने ४४५

नवमे अंबुवर्णं स्यात् दशमे पुष्पमण्टपे
एकादश दिने चैव कल्पकाख्यतरुस्तथा ४४६
पद्मवैमानं द्वादश्यां पुष्पकाख्यं त्रयोदशे
चतुर्दशी हेमधामरजताख्यन्तु पक्षके ४४७
षोडशं मौक्तिकं धामपरे विद्रुमधामकम्
अष्टादश दिने चैव चित्रधामप्रकीर्तितम् ४४८
एकोनविंशद्दिवसे भूतयन्त्रं विधीयते
विंशदिन्द्रविमानं स्यात् एकविंशो गजस्तथा ४४९
द्वाविंशे वाजियन्त्रं स्यात् वृषभन्तु परे हनि
कैलासयन्त्रमेवोक्तं चतुर्विंशतिरेव च ४५०
पञ्चविंशद्दिने चैव रथायानं प्रकीर्तितम्
षड्विंशदिवसे चैव सह यन्त्रं प्रकीर्तितम् ४५१
सप्तविंशदिने चैव सह यन्त्रं प्रकीर्तितम्
गणेशादिशिवान्तञ्च यानक्रममिहोच्यते ४५२
माषमुद्गयवञ्चैव नीवारं वृषभं तथा
निष्पावं चणकं ग्रीवं गोधूमं वेणुबीजकम् ४५३
गुग्गुलुङ्कुङ्कुमञ्चैव कर्पूरं त्रुटिरेणुकम्
बैन्दवं कदळी चैव पनसश्छदमेव च ४५४
स्वादुकन्दं वल्लिकन्दं इक्षुश्यामं वनाम्रकम्
रोचनाक्षीरमेवोक्तं होमद्रव्याणिकीर्तितम् ४५५
अश्वत्थं पाटलञ्चैव प्लक्षोदुंबरखादिरम्
शमीवटमपामार्गं अर्कबिल्वञ्च चन्दनम् ४५६
देवदारुश्च विजयं अगरुं वेणुमेव च
चूतङ्गळूचिदूर्वा च तुळसीराजचंपकम् ४५७
वनजङ्कहरं जांबू अगरुं दारुकान्तिकम्
बदरीपद्मपुष्पञ्च सप्तविंशति भेदकान् ४५८
प्रथमे चक्रवाळञ्च द्वितीये ऐकपत्रिका
श्वेतछत्रं परे रक्तं कृष्णं पीतं हरिप्रभम् ४५९
पञ्चवर्णं चित्रकारं रुद्राक्षसहितन्तथा

ग्राज्यं छत्रं मौक्तिकञ्च प्रवाळं रजतं प्लुतम् ४६०
हेमाकारं सूक्तिकर्णं त्र्यक्षञ्च निचुळाकृतिम्
लताकारं दन्तपंक्तिं शलकं बिंबभेदकम् ४६१
श्वेतकज्यं क्षौमभेदं राजकर्णन्तु मल्लिका
हेमवांबक इत्येते छत्रभेदाः प्रकीर्तिताः ४६२
कृष्णद्ध्वजञ्च कार्पासं रक्तं श्यामं हरिप्रभम्
शुक्लं पीतं मिश्रवर्णं चित्रध्वजमहोत्पलम् ४६३
लतांविलिख्ययाळं च चित्रलेखन्तु पाटलम्
निचुळं मत्स्यभूताञ्च व्याघ्रसिह्मशशक्रिटी ४६४
वराही गोपती पद्मं फललद्ध्वजभेदकान्
तक्केशीनन्ध्यरागञ्च मेघरागञ्च कौशिकम् ४६५
ताराडवं पञ्चमं चैव नड्वीभाषकरन्तथा
ग्रन्ताळिकामरञ्चैव गान्धारं पञ्चमन्तथा ४६६
तक्केशीव्यश्रणी चैव कोल्ली च मेघनादकम्
पूर्वपश्चिममेवोक्तं मल्लरीहेमसूचके ४६७
एतानि स्थलभेदानि सप्तविंशद्दिनेऽपि वा
जर्भरी सिंहलीलश्च कधञ्च मृगविक्रमः ४६८
रङ्गलीलश्च श्रीरङ्गरङ्गताळस्तथैव च
गजलीला च तोरङ्गं हंसनन्दप्रदीपिकः ४६९
मल्लिकासिह्मनादञ्च ग्रामोदं शरभलीलकम्
रङ्गाभरणमेवञ्च सिह्मानन्दजयन्तथा ४७०
विजयाप्रतिताळञ्च मकरन्दस्तथैव च
कीर्तिताळं राजविद्या जयताळाख्यमट्टकः ४७१
ब्रह्मताळसमश्चैव मल्लताळञ्च ढक्करी
बलिकोट्टरनङ्गश्च सप्तविंशति भेदिकान् ४७२
कालभेदान्प्रकर्तव्यं नृत्तभेदन्ततश्शृणु
ग्रर्द्धचन्द्रो ह्यराळश्च शिखराख्यश्च मुष्टिकः ४७३
शुच्यास्यः पद्मकोशश्च कपित्थं कटकामुखम्
कमलावर्तनञ्चैव पद्मगोसर्पकन्तथा ४७४

मृगशीर्षश्च लांगूलः भुजङ्गांचित एव च
स्वस्तिकं दराडपादञ्च भूजंगत्रासमेव च ४७५
कुञ्चितं सन्ध्यकानृत्तं भौमनीकरिहस्तकः
लताख्यपक्षवञ्चीञ्च पक्षप्रत्यरमेव च ४७६
ऊर्ध्वमरिडतमित्युक्तं उरोमरिडतमेव च
तळिनी च इति प्रोक्ता सप्तविंशदिनेऽपि वा ४७७
चञ्चपुट्चारपुट् चैव उत्घट्टितमहोज्वलम्
सिह्मकर्णं लट्टयञ्च कराठीरवविलासिनी ४७८
लंबुकं सिह्मनादञ्च जंपूटं सिह्मवाद्यकम्
कुंभञ्च कर्णवाद्यञ्च फलकामृदुभाषिणी ४७९
अनङ्गसङ्गनी वीरं पुष्पपट्टसमेव च
नादं हुङ्कारवल्ली च जामिनी मदनी तथा ४८०
सन्ध्याश्च सन्ध्यवारिरायां वाञ्छीनीवासनाकृषम्
सप्तविंशद्दिने चैव वाद्यभेदाः प्रकीर्तिताः ४८१
देशिकं माळवञ्चैव मकुटं देशिकाक्षरी
हैरविक्कुञ्जरञ्चैव वाराटं पेळवल्लरी ४८२
मद्ध्यमञ्चैव कांबोधी पञ्चमं उषरागकम्
तर्कं कौशिकरागञ्च इन्दळं शङ्करागकम् ४८३
प्रथमे शशिचूडं स्यात् द्वितीये कालदाहकम्
तृतीय्ये त्रिपुरारिस्स्यात् जडन्धरवता तथा ४८४
पञ्चमे तु गजारिस्स्यात् वीरभद्रे च षष्ठमम्
हरेरर्द्धन्तु नवमं अर्द्धनारीचखन्तथा ४८५
एकादशं किरातं स्यात् उमेशं द्वादशे हनि
वृषारूढं त्रयोदश्यां वैवाह्यञ्च चतुर्दशम् ४८६
पञ्चदशं क्षेत्रपालं किरातं षोडशन्तथा
सप्तदशन्तु कङ्काळं चराडेशानुग्रहं परम् ४८७
विषापहरणञ्चैव दिनमेकोनविंशतिः
चक्रादाने तु विंशत्यां विघ्नेशानुग्रहं परम् ४८८
एकपादन्तु द्वाविंशत्त्रयोविंशत्सुखासनम्

चतुर्विंशद्दिने चैव दक्षिणामूर्तिरूपकम् ४८९
पञ्चविंशद्दिने चैव एकमेकं दिनं प्रति
आचरेद्विधिना चैव रथयानन्ततश्शृणु ४९०
गणेशं कार्तिकेयञ्च पार्वतीञ्चराडनायकम्
महेश्वरञ्च पञ्चैते रथयानं पृथक्पृथक् ४९१
अथवा एकयानं वा देवमारोपयेत्ततः
प्रत्येकं रथयानं स्यात् उत्तमं परिकीर्तितम् ४९२
अथवा एकयाने च देवसिह्मासनो भवेत्
रविञ्च वामभागे च द्वितीय्या वरणं श्रुणु ४९३
गणेशं कार्तिकेयञ्च द्विपार्श्वे परिकीर्तितम्
पश्चाद्देशे तु चराडेशं प्रदक्षिणक्रमेण वा ४९४
यत्पूर्वं यत्स्थलं प्राप्य तत्स्थानेषु प्रदापयेत्
सायाह्ने तु समभ्यर्च्य देवमादाय बाह्यके ४९५
मञ्चे वा शिबिके वापि प्रस्थिता स्थानमराटपे
देवमारोपयेत्तत्र प्रायश्चित्तं समाचरेत् ४९६
सहस्रं वातदर्द्धं वा तदर्द्धं वा शतन्तु वा
कलशस्नानपूजाञ्च महाहविर्निवेदयेत् ४९७
तत्क्षणे देवमादाय प्रदक्षिणक्रमेण वा
स्वगृहे वेशयेत्पश्चात् मूलबेरेऽभिषेचयेत् ४९८
नैवेद्य धूपदीपान्तं पश्चात्पूर्ववदुत्सवम्
कारयेन्नित्यहोमन्तु प्रदक्षिणक्रमेण तु ४९९
षड्विंशद्दिवसे चैव मद्ध्याह्ने वाभिषेचयेत्
अश्वारूढेस्वरं प्रोक्तं अभावे तु महेश्वरम् ५००
वाजिमारोपयेत्तत्र खड्गखेटकधारिणम्
भिरिडपालमलङ्कृत्य छत्रचामरपिञ्च्छकैः ५०१
दासीदासजनैराज्ञा शिवभक्तजनैस्सह
अश्वारूढान्सुवेषाढ्यान् मृगयात्रां प्रकल्पयेत् ५०२
पृष्टिश्शशक एना च व्याघ्रकुराडरिसत्वकान्
छित्वा च वयसां हित्वा निलयं वेशयेत्ततः ५०३

पीठमुद्वासयेच्चैव स्नानकर्मपरे हनि
चन्दनालिप्तपुष्पैश्च दिव्यैराभरणैर्युतम्  ५०४
नैवेद्यधूपदीपान्तं देवधामप्रदक्षिणम्
पिपीलिका दशात्पूर्वं देवमादाय मञ्चके  ५०५
प्रस्थिताब्रह्मसन्ध्यन्तं पुनरास्थानमण्टपम्
प्रविशेत् होमकर्मञ्च अधिवासनकर्मणि  ५०६
कृष्णगन्धं समादाय नटेशाय प्रदापयेत्
वीधी प्रदक्षिणं पश्चात् तीर्थकर्मसमाचरेत्  ५०७
सह स्थाने प्रविश्याथ नित्योत्सवमतः परम्
मद्ध्याह्ने नित्यपूजान्ते तीर्थकर्म ततश्शृणु  ५०८
मूलबेराग्रके चैव द्ध्वजाग्रे वा प्रकल्पयेत्
महेशसंनिधौ वापि भेरी ताडनमाचरेत्  ५०९
देवता वाहनञ्चैव विसर्जनमतः परम्
तीर्थाङ्कुरं समादाय स्थापयेदेव संनिधौ  ५१०
धान्येन स्थण्डिलं कल्प्य पद्ममष्टदळं लिखेत्
उलूखलं प्रतिष्ठाप्य मुसलं स्थापयेत्ततः  ५११
तैलं दूर्वाचरजनी कौपीनञ्च चतुर्दिशि
स्थाप्याभ्यर्चयेत्पश्चात् रजनीमद्ध्यमे क्षिपेत्  ५१२
पृथ्वीमुलूखलं पूज्य मेरुं दण्डेषु पूजयेत्
संस्पृश्य पदमन्त्रेण जप्त्वा नियतमानसः  ५१३
दासीजनोतं सम्मर्द्य चूर्णं पात्रे समाहरेत्
तैलं दूर्वा विनिक्षिप्य अङ्कुरान्विसृजेत्ततः  ५१४
शिवभक्तजनान्सर्वान्दापयेत्स्नानकर्मणि
यन्मासे यदि नक्षत्रे तदृक्षे तीर्थमाचरेत्  ५१५
मद्ध्याह्नव्यापिका ऋक्षे तीर्थमुत्तममुच्यते
नद्यादौ पूर्णतीर्थे वा शिवालयसमीपके  ५१६
तटाके वा विशेषेण तदृक्षे तीर्थमाचरेत्
एकमासे द्विवारे च खण्डिते यदि ऋक्षके  ५१७
नाडी दशविहीने तु पूर्वे तीर्थमनुष्ठितम्

द्विवारे पर्वनक्षत्रं नक्षत्रन्तु प्रशस्यते ५१८
समुद्रे पर्वणि श्रेष्ठं अन्ये ऋृक्षप्रधानकम्
एकमासे द्विनक्षत्रे अतिथिद्वय ऋृक्षके ५१९
अन्त्यर्क्षे तीर्थमित्युक्तं विशेषं साधकोत्तमः
एकमासे द्विनक्षत्रे अन्त्यर्क्षे पर्वसंयुतम् ५२०
तिथिऋृक्षसमायुक्तं श्रुणु दुर्लभमुच्यते
ध्वजारोहणतीर्थान्तं एकमासे प्रशस्यते ५२१
तिथि द्वयन्तु संप्राप्ते अतिथिं अन्यऋृक्षके
पूर्वन्त्यक्त्वापरं ग्राह्यं तीर्थकर्मसमाचरेत् ५२२
अन्त्यर्क्षे तीर्थमित्युक्तं उत्तमं श्रुणु षण्मुख
एवं महोत्सवे तीर्थं राजराष्ट्रविवर्द्धनम् ५२३
गत्वा नद्यादितीर्थेषु महेशस्य च सन्निधौ
रजनी वस्त्रमादाय महेशस्य प्रदापयेत् ५२४
धान्यपुञ्जैरलङ्कृत्य मुनिसङ्ख्याकथं न्यसेत्
गङ्गाञ्च यमुनाञ्चैव नर्मदाञ्च सरस्वतीम् ५२५
गोदावरीं गौतमीञ्च कावेरीं पूजयेत्ततः
त्रिशूलेन सहस्नानं तीर्थकर्मसमाचरेत् ५२६
यागकुंभान्विसृज्याथ मूलबेरेऽभिषेचयेत्
तद्रात्रौ अवरोहं स्यात् लोकपालविसर्जनम् ५२७
प्रधानध्वजमेवोक्तं षट्त्रिंशद्दिवसान्तकम्
एकोनविंशद्दिवसे शिबिका यानमाचरेत् ५२८
भिक्षाटनोत्सवं कुर्यात्त्रिंशद्दिने ततश्शृणु
मत्स्य लीलां विधातव्यं चरेद्यानेकपोतके ५२९
एकत्रिंशद्दिने चैव शक्त्युत्सवमतः परम्
द्वात्रिंशद्दिवसे चैव त्रयस्त्रिंशद्दिने तथा ५३०
शक्त्युत्सवञ्च त्रिदिनं मृगेन्द्रं प्रथमे दिने
द्वितीयेहंसमेवोक्तं तृतीये स्मरयानके ५३१
यात्रास्नपनमेवोक्तं होमकर्मसमाचरेत्
पृथक्पृथक् दिने चैव चण्डयागन्ततश्शृणु ५३२

दशकुंभान्यसेच्चैव चराडनाधं प्रपूजयेत्
पूर्वाद्यष्टघटे चैव लोकपालान्प्रपूजयेत् ५३३
अर्द्धचन्द्राकृतिः कुराडं पूर्ववत्परिकल्पयेत्
चतुस्त्रिंशद्दिने रात्रौ होमकर्मसमाचरेत् ५३४
पञ्चत्रिंशद्दिने चैव सायं प्रातर्हुनेत्ततः
चराडोत्सवं प्रकल्प्याथ चराडयागविसर्जनम् ५३५
मुलबेराभिषेकं स्यात् षट्त्रिंशद्दिवसे श्रुणु
वैवाह्येशमलङ्कृत्य चन्द्रशेखरमेव च ५३६
सोमास्कन्देश्वरं वापि यात्रास्नपनमुच्यते
वह्निकर्मसमाराद्ध्य स्नात्वालङ्कारमेव च ५३७
महेश्वरं समादाय ध्वजदराडस्य सन्निधौ
दराडमूलेऽभिषेकं स्यात् नैवेद्यं धूपदीपकम् ५३८
मन्त्रं पाशुपतेनैव उच्चरेदवरोहराम्
आचार्यस्योत्सवं पश्चात् दक्षिराान्दापयेत्ततः ५३९
अङ्कुराद्यवरोहान्तं ब्राह्मराान्भोजये ततः
उत्सवस्य क्रमं वक्ष्ये भेदानां रन्ध्रसङ्ख्यया ५४०
तत्पूर्वरात्रिसंयुक्ते सायंकाले समारभेत्
प्रभाते तीर्त्थमित्युक्तं एकाहे तु बलिद्वयम् ५४१
तद्दिनस्य तु रात्रौ तु उत्सवन्तु प्रकल्पयेत्
बलिमेकं प्रकुर्वीत अन्ये तीर्त्थमनुष्ठितम् ५४२
एकाहं वृद्धिकादिश्च त्रीरायहं वक्ष्यतेधुना
निर्दिष्टदिवसात्पूर्वे सायङ्काले विशेषतः ५४३
यानमेकं प्रकल्प्याथ त्रिदिनोत्सवमारभेत्
बलिसङ्ख्या कौशिकञ्च चतुर्त्थे हनितश्श्रुराु ५४४
प्रभाते तीर्त्थकर्मञ्च कल्पयेत्साधकोत्तमः
तद्दिने चास्त्रयागञ्च सायाह्नसमये ततः ५४५
उत्सवं कल्पयेत्पश्चात् बलिञ्चैव चतुर्त्थकम्
तृतीये दिवसे तीर्त्थं नित्यपूजावसानके ५४६
त्र्यहेषु च तथा चान्ते जलक्रीडां समाचरेत्

एवं त्र्यहमित्युक्तं पञ्चाहं श्रुणु षण्मुख ५४७
सायाह्ने तु समारभ्य तत्पूर्वदिवसे युतम्
यन्त्रङ्कुर्याद्विशेषेण दशमं बलिसङ्ख्यया ५४८
षष्ठे हनिप्रभाते च तीर्थं कुर्यात्तु देशिकः
निर्द्दिष्टदिवसे चैव सायं काले समारभेत् ५४९
वसुसङ्ख्या बलिन्दद्यात्पञ्चाहे तीर्थमाचरेत्
तद्दिनाद्दिवमारभ्य नित्यपूजावसानके ५५०
पञ्चाहे चोत्सवं कुर्यात्तदन्ते तीर्थमाचरेत्
कन्यसं त्वविख्यातं मद्ध्यमञ्च ततश्शृणु ५५१
निर्द्दिष्टदिवसात्पूर्वं रात्रौ चैव समारभेत्
वह्निकर्म च तद्रात्रौ बलिञ्चैव चतुर्दिशम् ५५२
चूर्णोत्सवं चाष्टमेऽह्नि तीर्थकर्मसमाचरेत्
रात्रौ निर्द्दिष्टदिवसे उत्सवन्तु समाचरेत् ५५३
पञ्चबलिञ्च यानञ्च तद्रात्रौ तु भवेत्तदा
भानुसङ्ख्या बलिन्दद्यात् सप्ताहे तीर्थमुच्यते ५५४
निर्द्दिष्टदिवसादौ स्यात्पूर्वाह्ने वापराह्नके
केवलं भ्रमणं कुर्यात् अन्त्ये तीर्थं समाचरेत् ५५५
भौवनमिति विख्यातं दैविकञ्च ततश्शृणु
निर्दिष्टदिवसात्पूर्वं सायं काले समाचरेत् ५५६
स्मृतिसङ्ख्या बलिन्दद्यात् दशमे तीर्थमाचरेत्
तीर्थपूजावसानान्ते यानमेकं समाचरेत् ५५७
तदन्ते कौतुकं तीर्थं ब्राह्मीकमिति कत्थ्यते
दैविकं त्विति विख्यातं कौमारञ्च ततश्शृणु ५५८
तत्पूर्वदिवसे चैव अस्त्रयागं समाचरेत्
चतुर्दशाहे तीर्थं स्यात् षड्विंशत् बलिमुच्यते ५५९
वृद्धितं त्विति विख्यातं विजयञ्च ततश्शृणु
तद्दिने चास्त्रयागञ्च चतुर्विंशत् बलिन्ददेत् ५६०
त्रयोदशाहे तीर्थं स्यात् विजयमिति कत्थ्यते
केवलं भ्रमणञ्चैव तदन्ते तीर्थमुत्तमम् ५६१

मद्ध्यमत्रितयं प्रोक्तं उत्तमत्रितयं श्रुणु
तत्पूर्वरात्रिमारभ्य कृशं बलिमिहोच्यते ५६२
षोडशे दिवसे तीर्त्थं तद्दिने चास्त्रयागकम्
अष्टाविंशत् बलिन्दद्यात्पक्षान्ते तीर्त्थमुत्तमम् ५६३
नित्यपूजावसाने तु यानमेकं समाचरेत्
तीर्त्थञ्चैव विशेषेण चान्द्रञ्चैव ततश्शृणु ५६४
तत्पूर्वदिनमारभ्य अस्त्रयागं समाचरेत्
चतुर्विंशत् बलिन्दद्यात् तीर्त्थमष्टदशे हनि ५६५
वृद्धितं त्विति विख्यातं विजयञ्च ततश्शृणु
तद्दिनस्य तु सायाह्ने उत्सवं बलिदानकम् ५६६
द्वात्रिंशत्सङ्ख्यया चैव सप्ताहे तीर्त्थमाचरेत्
यानमेकं समापाद्य अन्ते तीर्त्थं समाचरेत् ५६७
चान्द्रञ्चैवेति विख्यातं सौरञ्चैव ततश्शृणु
तत्पूर्वदिनमारभ्य गणास्त्रं पूर्वमाचरेत् ५६८
चतुरुत्तरपञ्चाशत् बलिं कृत्वा यथा क्रमम्
अष्टाविंशद्दिने चैव तीर्त्थकर्मसमाचरेत् ५६९
तद्दिनस्य तु सायाह्ने उत्सवं बलिदानकम्
पञ्चाशत् बलिसङ्ख्या च षड्विंशद्दिवसे तथा ५७०
तीर्त्थकर्मसमारभ्य विजयं परिकीर्तितम्
यानमेकं समापाद्य अन्ते तीर्त्थं समाचरेत् ५७१
एकैकं त्रिविधं प्रोक्तमादिमद्ध्यावसानके
उत्सवे चैव कार्याणि पतिते तु दिनं प्रति ५७२
देवदेवाय विज्ञाप्य बलिदानं मया कृतम्
पूर्वाह्ने पुष्पलिङ्गन्तु मद्ध्याह्ने अन्नलिङ्गकम् ५७३
सायाह्ने अक्षतं लिङ्गं त्रिविधं परिकीर्तितम्
अस्त्रेशं पुष्पलिङ्गञ्च बलिबेरसमन्वितम् ५७४
छत्रचामरसंयुक्तं घण्टारवसमन्वितम्
सर्ववाद्य समायुक्तं दासीदासजनावृतम् ५७५
बलिदीपसमायुक्तं बलिपात्रसमन्वितम्

स्वस्तिसूक्तसमायुक्तं बलिन्दत्वा क्रमात्ततः ५७६
नन्दीकाळौ वृषं पीठं भानुमुण्डी च मातरः
वीरभद्रं गणेशञ्च विघ्नेशञ्च हरिं गुहम् ५७७
दुर्गाञ्चण्डेश्वरञ्चैव द्वितीय्यावरणे श्रुणु
दण्डी भृङ्गी भैरवांश्च महापीठवृषध्वजौ ५७८
वृषं शूलन्तु ज्येष्ठां वा तत्र कृत्वा प्रदक्षिणम्
महापीठाग्रके देवराजस्तांबलिमीरितम् ५७९
वह्निवैवस्वतोमारो वरुणश्चैव मारुतः
यक्षेशं क्षेत्रपालञ्च ईशं विष्णुविरिञ्चकौ ५८०
द्वितीयावरणञ्चैव तृतीय्यावरणे श्रुणु
प्रासादनिर्गमद्वारदेशे द्वारबलिन्ददेत् ५८१
प्रवेशस्योत्तरे भागे कुंभोदरबलिन्तथा
तस्य दक्षिणपार्श्वे तु महोदरबलिन्तथा ५८२
तयोर्मद्ध्ये महादेवी बलिन्दत्वा विचक्षणः
ब्रह्मस्थानादितो वापि इन्द्रस्थानादितोऽपि वा ५८३
इष्टिकां वा मृदा वापि कारयेत् बलिपीठकम्
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकम् ५८४
ज्वाला जिह्वा ज्वलत्केशा महाक्रोधो महाबलः
मर्त्याशनश्चण्डवेगो वास्तुपालोबलिप्रियः ५८५
महाभूतश्च विज्ञेयः ब्रह्मस्थानादितः क्रमात्
पूर्वं त्यक्त्वाथ देवाश्च इन्द्रस्थानादितो बलिम् ५८६
ग्रामशान्तिकरं प्रोक्तं पीठाग्रे गोपुराग्रके
ऐशान्ये पीठवामे च चरेद्दिनबलिं गुरुः ५८७
दिनं प्रतिविशेषेण सायं प्रातर्बलिद्वयम्
सर्वदेवस्य तृप्त्यर्थं ईशास्त्रायबलिं क्षिपेत् ५८८
गान्धारस्वरसंयुक्तं पुष्पाञ्जलिस्तु जंपटम्
वराटिस्त्विन्द्रदेशे तु देवता प्रियकारणम् ५८९
कोल्लिस्वरसमायुक्तं वृत्यालीढञ्च मट्टयम्
भूपाळिगिरिरागञ्च अग्निदेशे प्रियार्त्थकम् ५९०

कौशिकं मङ्गलावर्तं एकताळसमन्वितम्
गानं देशगिरायुक्तं नैर्ऋते तु विशेषतः  ५९१
श्रीकामस्वरसंयुक्तं ताळञ्चञ्चुपुटन्तथा
गानं सोमगिरीयुक्तं वारुण्यान्दिशिचाचरेत्  ५९२
तक्केशी च भुजङ्गाली डंबली ताळसंयुतम्
गानं माळवसंयुक्तं वामदेशे प्रियार्त्थकम्  ५९३
पञ्चमोद्धट्टितञ्चैव कुंभताळसमन्वितम्
शुद्धगौडसमायुक्तं सौम्यदेशे प्रियार्त्थकम्  ५९४
ऐशान्ये चैन्दळं प्रोक्तं कुञ्चितं वर्मताळकम्
छायागौडसमायुक्तं ईशदेशे प्रियावहम्  ५९५
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
पादप्रक्षाळनं कृत्वा महापीठे बलिं क्षिपेत्  ५९६
धामप्रदक्षिणवशात् प्रविशेद्देवमण्टपम्
नीराञ्जनं ततः कृत्वा बलिबेरस्य देशिकः  ५९७
अन्नलिङ्गं जपेत्क्षिप्य अक्षतांश्च जले क्षिपेत्
पुष्पलिङ्गं जले क्षिप्य मूलबेरे च देशिकः  ५९८
योजयेत्त्रीणिलिङ्गञ्च जले क्षिप्य ततः परम्
पुष्पाञ्जलित्रयं कृत्वा मूलबेरस्य सन्निधौ  ५९९
ततस्सन्ध्यावसाने तु यात्रास्नपनमुत्तमम्
सकळेशमलङ्कृत्य रथे वा शिबिकेऽपि वा  ६००
खेटमारोपयेत्तत्र वीधिसंमार्जनं कुरु
सेचयेत्तु जलेनैव कदळीक्रमुकैः फलैः  ६०१
पूर्णकुंभे चित्रवस्त्रं गन्धञ्च कन्तुकन्तथा
हिमतोयन्दर्पणञ्च केशशोधनमेव च  ६०२
अञ्जनं कृष्णगन्धञ्च ह्रीबेरं उशिरन्तथा
कल्हारञ्जातिपुष्पञ्च चंपकं नाळिकेरकम्  ६०३
तांबूलं क्रमुकञ्चैव शतपुष्पञ्च दीपकम्
पृथक्पृथक्गृहद्वारं नानादीपसमायुतम्  ६०४
नानाभक्तजनैर्युक्तं नानाच्छत्रसमायुतम्

नानाद्ध्वजसमायुक्तं नानाविद्यासमन्वितम्  ६०५
चामरन्तालवृन्दञ्च दाडिकैश्च प्रदापयेत्
महाशैवास्तदन्ते तु तदन्ते भूसुरास्तथा  ६०६
तदन्ते रुद्रगणिका तदन्ते वाहनादि च
तदन्ते वाद्यघोषश्च तत् बाह्ये क्षत्रियादयः  ६०७
ग्रामप्रदक्षिणं कृत्वा प्रविश्यस्नानमण्टपम्
सिह्मासने समारोप्य पाद्यमाचमनार्घ्यकम्  ६०८
गण्डिकाक्षजलन्देवं करसंपूर्णमानतः
एकत्रिपञ्चवारं वा विसृजेदस्त्रमन्त्रतः  ६०९
भूमिं संशोधयेच्चैव नाळिकेरफलादिकम्
नैवेदयेत्तु पानीय्यं तांबूलं दापयेत्ततः  ६१०
कर्पूरकलशेनैव धूपदीपन्तथैव च
नीराञ्जनन्ततः कृत्वा शुद्धनृत्तं तथैव च  ६११
नानादेशकथावाक्यैर्धर्मयुद्धादिभिर्दृशः
विनोदवाक्यैरन्यैश्च महाज्वालादिदर्शनम्  ६१२
वीणावेणुमृदंगैश्च कन्यैश्चाप्युपशोभितः
आचार्यस्सव्यभागे तु वामभागे नृपस्तथा  ६१३
तयोश्च पृष्ठदेशे तु शिष्यभृत्याश्च संस्थिताः
गायकोवंशकादिश्च सव्यभागे प्रकल्पयेत्  ६१४
मर्दको नर्तकश्चैव वामभागे च संस्थितः
पार्श्वयोरुभयोश्चैव रुद्रस्य गणिकास्तथा  ६१५
महेशाग्रे विशेषेण बहुरूपं समाचरेत्
धामाग्रे चोत्तरे वाथ दक्षिणे दापयेत्ततः  ६१६
धूपाद्यारात्रिकादिश्य पश्चिमे विन्यसेच्च वा
गोमयालेपनं कृत्वा पुष्पचूर्णैर्विचित्रयेत्  ६१७
पाद्य द्रव्यादिकान्सर्वान् अपरान्दिवसोचितान्
द्रव्याण्याहूयदेवाग्रे स्थापयेद्देशिकोत्तमः  ६१८
पाद्यद्रव्यादिकांश्चैव स्नानार्थन्द्रव्यमैन्द्रके
वस्त्रभूषणगन्धञ्च दक्षिणे दापयेत्ततः  ६१९

भूपाद्यारात्रिकान्दिश्य पश्चिमे विन्यसेत्ततः
सौम्ये तु मुखवासञ्च पानीय्यं द्रव्यसंयुतम् ६२०
पावके विन्यसेच्चैव नैवेद्यार्थञ्च तण्डुलम्
मरीची लवणं हिंगु जीरकं चोपदंशकः ६२१
विन्यसेन्नैर्ऋते चैव वायव्ये छत्रचामरम्
छन्नवस्त्रं सतैलञ्च दीपदण्डान्तदेशके ६२२
अन्यानि सर्वद्रव्याणि देवाग्रे विन्यसेत्ततः
द्रव्याधिवासनार्थञ्च पुण्याहं वाचयेत्ततः ६२३
इत्थं यागोपकरणं सर्वं धाम्ने प्रवेशयेत्
धामप्रवेशनस्यान्ते नानालङ्कृतसंस्कृतम् ६२४
उत्सवे शमलङ्कृत्य गन्धपुष्पैरलङ्कृतम्
शिबिकादौ समारोप्य भवान्यालयमाविशेत् ६२५
मञ्चे वा अथ पर्यङ्के मृदुपुष्पसमन्विते
तस्योर्ध्वे वस्त्रमास्तीर्य स्थापयेत्प्राङ्मुखं विभुम् ६२६
तस्य दक्षिणपार्श्वे तु भोगशक्तिन्तु स्थापयेत्
सप्तमातृगणं पूर्वे रोहिणी गणमुत्तरे ६२७
गुह्यमातृगणन्दक्षे पश्चिमे विष्णुमातरम्
ब्रह्ममातृगणाधीशे पावके -- मदन --- ६२८
वसन्तन्नैर्ऋतेऽभ्यर्च्य नक्षत्रेशञ्च वायवे
पादुकं राजचिह्नञ्च पूर्वादीनि प्रदक्षिणम् ६२९
नैवेद्यधूपदीपान्ते राजास्त्रं परितोऽर्चयेत्
वस्त्रेण सपिधानञ्च कुर्यात्कवाटबन्धनम् ६३०
रात्र्यन्ते तु गुरुस्नात्वा सन्ध्यावन्दनमाचरेत्
दशवारं सप्तवारं जप्त्वा च शिवमन्दिरम् ६३१
प्रविश्य विजयं कृत्वा शक्त्यालयं प्रवेशयेत्
कवाटोत्घाटनं तत्र अस्त्रमन्त्रं समुच्चरन् ६३२
प्रच्छन्नपटमावृत्य प्रणम्यसकळेबरम्
ओन्नमो देवदेवेश सर्वलोकैकनायक ६३३
उत्तिष्ठस्नानकर्मार्थी सर्वलोकाभिवृद्धये

इत्युक्त्वा देवमादाय शिबिकायां निवेशयेत्  ६३४
आस्थानमण्टपं गत्वा न्यसेत्सिह्मासनोपरि
दर्पणं स्थापयेच्चैव उत्सवे शस्य सन्निधौ  ६३५
गन्धतैलसुपिष्टाद्यैः पञ्चगव्यामृतैरसैः
नाळिकेरञ्च गन्धञ्च स्नपनञ्चाभिषिच्य च  ६३६
समावर्ज्य च वस्त्रेण कौपीन्यादीन्विसर्जयेत्
शुद्धवस्त्रेण संवेष्ट्य वेदिका मद्ध्यमे न्यसेत्  ६३७
दर्पणं मूर्तिमादाय योजयेत्तु महेश्वरम्
गन्धपुष्पैरलङ्कृत्य हविर्निवेदयेत्ततः  ६३८
मूलबेरे विशेषेण नित्यपूजां समाचरेत्
शिवाग्नौ यजनं कृत्वा दिनाधिपतिबीजकम्  ६३९
पूर्वोक्तविधिनानेन यागे होमं समाचरेत्
ततोस्त्रराजमादाय बलिबेरसमन्वितम्  ६४०
तत्तत्स्ननाममन्त्रेण धनदेवान्बलिञ्चरेत्
ग्रामप्रदक्षिणं कृत्वा शफरे शिबिकेऽपि वा  ६४१
वाहने खेटके वापि अभावे खेटकेऽपि वा
प्रथमं भूमिरक्षार्त्थं द्वितीय्यं अन्तरिक्षकम्  ६४२
तृतीय्ये स्वर्गरक्षार्त्थं प्रदक्षिणत्रयन्तथा
धामप्रदक्षिणं पूर्वं द्वितीय्यावरणन्तथा  ६४३
पश्चाद्वीधिं प्रदक्षिणय सायं प्रातर्द्वये तथा
नानाद्ध्वजसमायुक्तं नानाछत्रविभूषितम्  ६४४
आचार्यकरमानेन अष्टहस्तन्तु दीर्घकम्
अष्टाङ्गुलसमन्नाहं अपर्वं सत्वरं शुचिम्  ६४५
काम्यार्त्थमग्रके ह्येषा चतुरङ्गुलनाहकम्
आद्यग्रे सुषिरं द्वे च वेणुशाखां समाहरेत्  ६४६
अष्टाशीति शलाकाञ्च वितस्तिं मद्ध्यदीर्घकम्
कार्पासरज्जुनावेष्ट्य अग्रे मद्ध्ये तदन्तरे  ६४७
मूले तु वलयाकारं तदन्तं पूर्ववत् ग्रहेत्
चतुर्वितस्तिदीर्घञ्च षष्ट्युत्तरशतं भवेत्  ६४८

बन्धयेन्मद्ध्यमे मद्ध्ये मद्ध्येपिचयुगाङ्गुलम्
वितस्तितालदीर्घञ्च ऊर्ध्वे तु चूडिबन्धनम् ६४९
अधोमुखाग्रभागाश्च तद्वत् मूलाग्रबन्धयेत्
पीतं शुक्लं तथारक्तं कृष्णश्यामविचित्रकम् ६५०
मनो शक्त्या प्रकल्प्याथ ऊर्ध्वाधश्च पटद्वयम्
ताले ताले क्रमात् बद्ध्य परिवेष्टाकृतिञ्चरेत् ६५१
स्वर्णे नरजते नैव कांस्य ताम्रञ्च लोहकम्
मकुटं पूर्ववत्कृत्वा पादुका छत्रमूलके ६५२
सौवर्णरजतेनैव लोहैर्वा पञ्चभेदकैः
दण्डालङ्कृतमेवोक्तं चित्रलक्षणमुच्यते ६५३
द्वादशं करदीपञ्च पूर्ववद्दण्डमुच्यते
द्विकरं विस्तरञ्चैव चतुर्हस्तन्तु दीर्घकम् ६५४
चतुरश्राकृतिञ्चैव नानावस्त्रेण वेष्टयेत्
अग्रे च मद्ध्यमे छित्वा त्रियश्राकृतिमारभेत् ६५५
ध्वजस्य लक्षणं प्रोक्तं तालञ्चैव ततश्शृणु
पूर्ववद्दण्डमानञ्च द्विकरं विस्तरन्तथा ६५६
वृत्तं वा कल्पयेत्पश्चात् शलाकां पूर्ववच्चरेत्
षोडशं द्वादशं वापि वृत्ताकारसमं भवेत् ६५७
विविधैश्चित्रवस्त्रैश्च द्विपार्श्वे बन्धयेत्ततः
मकुटं पादुका कृत्वा मत्स्यध्वजकिलध्वजान् ६५८
विलंष्कफलवच्चैव निचुळाकृतिमेव च
बर्हिपिञ्छं प्रकल्प्याथ नानावर्णैश्च शोभितम् ६५९
दारुजैर्वा विलाळैर्वा मेषयुद्धा कृती चरेत्
सूकरत्रययुद्धं वा अजाशार्दूलयुद्धकम् ६६०
समकुक्कुटयुद्धं वा शुनिसूकरमेव च
श्वानेन शशयुद्धञ्च व्याघ्रेण श्वाकुलैरपि ६६१
गजशार्दूलमेवोक्तं तुरङ्गश्वानयुद्धकम्
पारावतांशुकं वापि श्येनविप्रवियुद्धकम् ६६२
अन्यान्लीला विनोदांश्च दीपभेदान्ततश्शृणु

गजदीपं सिह्मदीपं व्याघ्रदीपमनासकम्  ६६३
शबरं दीपमेवोक्तं वृद्ध--त्रिदीपधारकम्
दशग्रीवं महादीपं पञ्चवक्त्राकृतन्तु वा  ६६४
षड्वक्त्रं त्रयमेकं वा गडुकान्दीपभेदकान्
पञ्चभौतिकवाद्यञ्च दारुजं पृथिवी तथा  ६६५
शङ्खमापमयं प्रोक्तं आग्नेयं लोहजातिकम्
वंशादिकं वा तद्भेदं गगनं रागभेदकान्  ६६६
मद्दळं सुखमेवोक्तं ताळा वै क्लेशनाशनम्
भेरिं पुष्टिविवर्द्धञ्च पटहं पापनाशनम्  ६६७
अभयं करताळञ्च वामहस्तं प्रियं भवेत्
मोक्षं वै कुंभवाद्यञ्च इष्टकाम्यार्त्थझल्लरी  ६६८
नाडीसन्धानवाद्यञ्च कोटियज्ञफलं भवेत्
वंशजं सुषिरं गानं पुत्रपौत्रविवर्द्धनम्  ६६९
चारुचर्म जयं प्रोक्तं डमुरुञ्च वशीकरम्
शङ्खद्ध्वनिं शत्रुनाशं नृत्तं वै व्याधिनाशनम्  ६७०
गीतं पुष्टिविवर्द्धञ्च ताळं त्रैलोक्यवश्यकम्
कीटकं क्रोधनाशञ्च कदूटीशोकनाशनम्  ६७१
मुरवं मृत्युनाशञ्च सरमण्डलमोदकम्
वीणाया च यशो वृद्धिः किन्नरं श्रीकरं भवेत्  ६७२
तिमिळी विजयञ्चैव वर्त्तुळं वित्तसंभवम्
धारयासर्वसिद्धिः स्यात् चिह्नं राजवशीकरम्  ६७३
त्रैष्यकं भोगमोक्षञ्च कर्तृकास्त्रीवशीकरम्
नाटकं धान्यवृद्धिं स्यात् शुद्धनृत्तं शुभं भवेत्  ६७४
अङ्गमार्गञ्च कौण्डिन्यं राज्ञाञ्च विजयावहम्
काहळं धान्यवृद्धिं स्यात् छत्रमाज्ञाप्रपालनम्  ६७५
द्ध्वजवेदी जयं प्रोक्तं शर्करा शत्रुनाशनम्
दीपभेदान्प्रकरणान् सर्वज्ञानप्रदायकम्  ६७६
वाहनांश्च विमानादीन्भूपतित्वमवाप्नुयात्
उत्सवे चैव तत् ग्रामे मृते चैव नरे तथा  ६७७

बाह्ये वीधिगतो देवो मद्ध्ये नरमृते सति
प्रादक्षिरय क्रमेरौव प्रविशेदालयं यथा ६७८
शवालङ्करणं नो यत्तत्क्षरो युक्तदेशके
सृजेच्छान्तिं ततः पश्चात्पर्यग्निकरणङ्कुरु ६७९
बाह्ये द्वादश दराडान्ते वीधिं यत्र प्रकल्प्यते
वीधिमद्ध्ये तु पर्यग्नि प्रादक्षिरय क्रमेण वा ६८०
आशौचस्पृष्टितस्यान्तः तत् बाह्ये तु न कारयेत्
प्राकारस्य तु बाह्ये तु मूलाग्रञ्च चतुर्दिशि ६८१
नाराचमिति संज्ञेयः तत् बाह्ये वीधिमुच्यते
वीधीषु मृतमात्रेण नित्यपूजां प्रकल्पयेत् ६८२
पूजामद्ध्ये मृतं यत्र आशौचन्न समाचरेत्
पञ्च प्राकारमेवोक्तं कथमाशौचकं वद ६८३
चतुर्थावरणे चैव पञ्चमावरणेऽपि वा
मनुष्ये च मृते चैव आशौचन्न समाचरेत् ६८४
नित्यपूजाप्रकर्तव्या नैमित्तिकं विना यथा
प्राकारत्रितये चैव आशौचं कारयेत् बुधः ६८५
कुक्कुटं श्येनगृद्ध्रश्च गर्दभं महिषी तथा
सूकरंश्वानजंबूको ऋतुस्त्रीचोरभ्रान्तकः ६८६
मलमूत्रमृतञ्चैव मन्दिरे रक्तदर्शनम्
उत्तमं मद्ध्यमं पूजां अधमं त्रिविधं भवेत् ६८७
उत्तमार्चनया चैव प्रथमा वरणे दृशेत्
शंप्रोक्षणन्ततः कृत्वा द्वितीय्यावरणे श्रुणु ६८८
शान्तिहोमन्ततः कृत्वा मूर्तिहोमं समाचरेत्
तृतीयावरणे चैव पुरयाहं पञ्चगव्यकम् ६८९
एवमुत्तमपूजाञ्च मद्ध्यमे च ततश्शृणु
गर्भगेहं ततः प्राप्य संप्रोक्षणं समाचरेत् ६९०
प्रथमावरणञ्चैव शान्तिहोमं समाचरेत्
द्वितीयावरणे प्राप्य पञ्चगव्येन शोधनम् ६९१
तृतीयावरणञ्चैव पुरयाहं प्रोक्षणं कुरु

एवं वै मद्ध्यमे प्रोक्तमधमञ्च ततश्शृणु ६९२
अर्द्धमण्टपगेहे च शान्तिहोमं समाचरेत्
द्वितीय्यावरणे चैव पञ्चगव्येन शोधनम् ६९३
तृतीयावरणे चैव पुण्याहं प्रोक्षणं कुरु
स्पर्शनं मूलबेरस्य सहस्रकलशान् यजेत् ६९४
ब्रह्महत्ती सुरापायी चण्डाळमतभेदकः
उपपातकिनश्चैव प्रमादाद्दर्शनं यदि ६९५
सहस्रस्नपनं वापि तस्यार्द्धं वा तदर्द्धकम्
अष्टोत्तरशतं वापि स्नपनं वा हि पूजनम् ६९६
स्नानद्रव्य विधानांश्च स्पृष्टं वा पतितेन वा
अभिषिच्य ततो ज्ञात्वा संप्रोक्षणमथाचरेत् ६९७
अन्नादिस्पर्शनं चैव श्वानमार्जारवायसाः
चोरैश्च स्पर्शनं कृत्वा त्यक्त्वा च शान्तिहोमकम् ६९८
नैवेद्यान्ते ततो ज्ञात्वा महास्नपनमुत्तमम्
जप्त्वा घोरञ्च नियुतं ततो म्लेच्छेन दर्शयेत् ६९९
पुण्याहं प्रोक्षणं चैव भाण्डन्त्यक्त्वा विशेषतः
स्नानार्त्थं जलमुद्धृत्य आगते पतिते स्पृशेत् ७००
त्यक्त्वा घोरसहस्रञ्च जप्त्वा च शान्तिहोमकम्
सकळे शमलं कृत्य बाह्ये वीधिगते सति ७०१
शिबिकादीन्स्पृशेच्चैव प्रमादात्पतितेन वा
म्लेच्छादिनाप्रकर्तव्यं शान्तिहोमेन प्रोक्षयेत् ७०२
महेशस्पर्शनं कृत्वा संप्रोक्षणं समाचरेत्
बेरादिपतिते यानकाले संवत्सरोत्सवे ७०३
संप्रोक्षणन्ततः कृत्वा कुंभान्पञ्चशतन्तु वा
तस्यार्द्धं वा शतं वापि हविर्न्निवेदयेत्ततः ७०४
पतने सकळेशो वाघोरास्त्रं क्षुरिकेन वा
प्रत्यंगिरं पाशुपत्यं मूलं लक्षं पृथक्पृथक् ७०५
पताकस्पर्शं म्लेच्छेन मृगपक्षिरजस्वला
संप्रोक्षणन्ततः कृत्वा मूले जप्त्वा युतद्वयम् ७०६

यागमन्तः प्रविश्याथ शूद्रादिपतितेऽपि वा
म्लेच्छैश्वानखरैश्चैव ग्रामसूकरकैस्तथा ७०७
चोरैश्च स्पर्शनं विद्यात्तत्क्षणे कलशान्त्यजेत्
परिवारघटान्त्यक्त्वा पुनश्च कलशान्यथा ७०८
ससूत्रं सापिधानञ्च नाळिकेराद्यलङ्कृतम्
शिवमावाहयेच्चैव पूर्ववत्परिकल्पयेत् ७०९
पञ्चास्त्रैश्च जपेत् लक्षं प्रत्येकं लक्षसङ्ख्यया
मूलबेरं विशेषेण संप्रोक्षणं समाचरेत् ७१०
महेशस्य विशेषेण संप्रोक्षणं समाचरेत्
शान्तिहोमं पताकस्य होमं कृत्वा विशेषतः ७११
पञ्चास्त्रमर्चयेच्चैव सहस्रञ्च पृथक्पृथक्
होमयेत्पूर्ववच्चैव पताकस्पर्शने तथा ७१२
महोत्सवे विशेषेण पताकश्छेदनेऽपि वा
प्रमादाद्वायुनाभ्रान्ते गजोष्ट्रदुष्टसत्वकान् ७१३
एवमादिप्रमादेन दण्डोत् घाटनमेव च
दण्डप्रतिष्ठाङ्कृत्वा तु पूर्वोक्तविधिना चरेत् ७१४
पटछेदनकाले च स्नात्वानुष्ठानकर्मकम्
वृषमावाहयेत्कुंभे पूर्वोक्तविधिनाचरेत् ७१५
तत् घटञ्च समादाय मिळित्वारज्जुना यथा
आबद्ध्यपूर्ववत्पूज्य पञ्चास्त्रेण पृथक्पृथक् ७१६
अशीति सङ्ख्यासाहस्रं जप्त्वा निवेदयेत्ततः
शान्तिहोमन्ततः कृत्वा पुनस्सन्धानमाचरेत् ७१७
उत्सवे चैव तत् ग्रामे वीधीनारा च सन्धिषु
मण्टपं परिकल्प्याथ पूर्वोक्तवदलङ्कृतम् ७१८
महेश्वरं समादाय शिबिका खेटकेऽपि वा
आरोप्य वीधिमार्गेण मण्टपे स्थापयेत्ततः ७१९
तद्वर्त्मनि मृते मर्त्या शीघ्रं त्यक्त्वा तु पूर्ववत्
प्रादक्षिण्य क्रमेणैव प्रविशेदालयं यथा ७२०
आमूलाग्रन्तु नाराचं अपरे तु मृते सति

प्रादक्षिरायक्रमेरौव पश्चात् शान्तिं समाचरेत्  ७२१
एवं महोत्सवे काले वैपरीत्यप्रदक्षिणम्
विनाप्रादक्षिणेनैव क्रमेण च यथा भवेत्  ७२२
मोहेन वै परीत्यञ्च यजमानो विनश्यति
प्रायश्चित्तं कथं शंभो वक्ष्येऽहं श्रुणु षरामुख  ७२३
वृषयागविहीने तु वृषभांकुरहीनके
वास्तुहोमविहीने तु ग्रामशान्तिविहीनके  ७२४
भेरीताडनहीने तु देवतापूजहीनके
उत्सवाङ्कुरहीने तु तीर्त्थाङ्कुरविहीनके  ७२५
ध्वजपीठविहीने तु ध्वजदराडविहीनके
ध्वजरज्जुविहीने तु ध्वजदराडविहीनके  ७२६
ध्वजपुच्छविहीने तु दर्भमालाविहीनके
यात्राहोमविहीने तु यात्रास्नपनहीनके  ७२७
रक्षाबन्धविहीने तु ध्वज --------
--------  पस्थितविहीने तु गणयागविहीनके  ७२८
स्कन्दयागविहीने तु भक्तयागविहीनके
अस्त्रयागविहीने तु भक्तयागविहीनके  ७२९
देवोपस्थितहीने तु बलिबेरविहीनके
दिग्देवताबलं हीने दीन --------  ७३०
--- श्वरविहीने तु गन्धहीने तथैव च
पुष्पहीने वस्त्रहीने मुक्ताभरणहीनके  ७३१
------- युक्तश्च सवने च विशेषतः
वाद्यघोषविहीने च छत्रहीने तथैव च  ७३२
------- मेवोक्तं ध्वजहीने च पातने
दीपहीने च पतने वाहनक्रमहीनके  ७३३
--------वावशफरादिविहीनके
पतने यागहीने च अग्निदग्धे तथैव च  ७३४
---------- अभिषेकविहीनके
सूत्रहीने वस्त्रहीने नाळिकेरविहीनके  ७३५

लम्बकूर्चविहीने तु ---------------
सप्तधान्यविहीने तु परितोघनहीनके ७३६
पञ्चाष्टमङ्गल ------------- हीनके
दशायुधविहीने तु स्त्रुक्स्त्रुवे च विहीनके ७३७
होमपात्रविहीने तु ---------------
ज्ञानखड्गविहीने तु होमद्रव्यविहीनके ७३८
नैवेद्यबलिहीने तु दीपाराधनहीनके
छत्रहीने ---- रथयाने विहीनके ७३९
मृगयात्राविहीने तु काळाकरविहीनके
------------ भिक्षुकर्मविहीनके ७४०
चूर्णोत्सवविहीने तु रजन्योत्सवहीनके
मौनोत्सवविहीने तु शक्तियात्राविहीनके ७४१
चराडयागविहीने तु स्राचार्योत्सवहीनके
----- विहीने तु शुद्धनृत्तविहीनके ७४२
शुद्धवाद्यविहीने तु रागभेदविहीनके
दीपहीने तु लिङ्गस्य त्रयादींश्च विहीनके ७४३
ध्वजोपरि च गृध्राले स्पृष्टिश्च सम्भवं ध्वजे
शिवाग्निस्पर्शनं विद्यात् रथोग्निभयमुच्यते ७४४
बेरे ग्निस्पर्शनं कृत्वा प्रच्छन्नपट्टबन्धके
वीधीशोधनहीने तु तोरणादिविहीनके ७४५
रथरज्जुविहीने तु रथचक्रविहीनके
रथकूर्परहीने तु मकुटारोपहीनके ७४६
मस्तके शृङ्गहीने तु परिचारकहीनके
स्राचार्येण च हीने तु ऋत्विक्कर्तारहीनके ७४७
जपकर्तारहीनश्चेत् यजमानश्च हीनके
एवमादिषु कालेषु प्रायश्चित्तं भवेद्ध्रुवम् ७४८
वृषयागविहीने तु गावो नश्यति राष्ट्रके
वृषभस्त्रपनं पश्चात् मुग्दान्नन्तु निवेदयेत् ७४९
शान्तिहोमं ततः कृत्वा वृषयागन्तु पूर्ववत्

वृषभाङ्कुरहीनश्चेत् स्थापनादिविनाशनम् ७५०
अङ्कुरं कारयेत्पश्चात् शान्तिहोमं समाचरेत्
वास्तुपूजा विहीने तु सर्वनिष्फलमेव वा ७५१
पूर्ववद्वास्तुमभ्यर्च्य संहिताहोममिष्यते
ग्रामशान्तिविहीनश्चेत् तत् ग्रामे व्याधिसंभवः ७५२
ग्रामशान्तिं ततः कुर्यात्संहिताहोममिष्यते
शतं पाशुपतेनैव होमयेत्तु विशेषतः ७५३
भेरीताडनहीने तु बधिरत्वमवाप्नुयात्
स्नपनं कारयेच्छंभोः पश्चात् भेरीन्तु ताडयेत् ७५४
सोक्षकाले तथा कोणे छिन्ने च पतनेऽपि वा
क्षमश्चेद्विशेषेण सस्यनाशं भवेत्ततः ७५५
नदीमन्त्रमनुस्मृत्य हित्वा जप्त्वा शतं ततः
देवता वाहने हीने तत् ग्रामं भयमाप्नुयात् ७५६
देवतान्पूजयेत्पश्चात् घोरेणैव शतं यजेत्
उत्सवाङ्कुरहीने तु तत् ग्रामे तु प्रजाक्षयम् ७५७
तीर्थाङ्कुरविहीने तु अपुत्रं भूपतेर्ध्रुवम्
तद्दोषशमनार्थाय अङ्कुरं पूर्ववच्चरेत् ७५८
शान्तिहोमं ततः कृत्वा शिवास्त्रेण शतं हुनेत्
ध्वजपीठविहीने तु भूभुजां पीठहीनकः ७५९
तद्दोषशमनार्थाय मूलैः पञ्चशतं हुनेत्
पुनः पुनः प्रकल्प्याथ पुनः स्नपनमुच्यते ७६०
ध्वजदण्डविहीने तु यजमानो विनश्यति
ध्वजप्रतिष्ठां कृत्वा तु पूर्वे मोक्षं प्रतिष्ठितम् ७६१
पुनस्सन्धानमारभ्य पञ्चास्त्रेण पृथक्पृथक्
सहस्रं वा हुनेच्चैव प्रत्येकं लक्षसङ्ख्यया ७६२
जपेच्छान्तिं हुनेच्चैव रज्जुहीने ततश्शृणु
रज्जुहीने विशेषेण मंत्रीमरणमाप्नुयात् ७६३
तद्दोषशमनार्थाय दिशाहोमं समाचरेत्
जपेत्तु पञ्चसाहस्रं शिवास्त्रेण विशेषतः ७६४

सन्धिहीने महाव्याधिः पुनस्सन्धानमाचरेत्
तद्दोषशमनार्थाय घोरेणैव शतं हुनेत् ७६५
ध्वजपुच्छविहीने तु निर्धनन्तु भविष्यति
तद्दोषशमनार्थाय शतं पाशुपतैर्हुनेत् ७६६
दर्भमालाविहीने तु तत् ग्रामे तु प्रजाक्षयम्
शान्तिहोमन्ततः कृत्वा पताकपटहीनके ७६७
तद्वस्त्रं बन्धयेच्चैव प्रतिष्ठां पुनरेव च
मूर्तिहोमं ततः कृत्वा पञ्चास्त्रैश्च पृथक्पृथक् ७६८
सहस्रञ्च हुनेच्चैव तत्समं जपमेव च
पुनस्सन्धानमेवोक्तं शिवमन्त्रमनुस्मरन् ७६९
यात्राहोमविहीने तु अनावृष्टिर्भवेद्ध्रुवम्
तद्दोषशमनार्थाय शान्तिहोमं समाचरेत् ७७०
यात्रास्नपनहीने तु पुनस्नपनमाचरेत्
तद्दोषशमनार्थाय मूलेनैव शतं जपेत् ७७१
रक्षाबन्धनहीने तु तत्कर्मनिष्फलं भवेत्
तद्दोषशमनार्थाय शान्तिहोमं समाचरेत् ७७२
ध्वजारोहणहीने तु अपमृत्युर्भविष्यति
तद्दोषशमनार्थाय कालारीशायुतं जपेत् ७७३
देवोपस्थितहीने तु शिवमन्त्रं शतं जपेत्
गणयागविहीने तु राजाविजयमाप्नुयात् ७७४
गणयागं प्रकुर्वीत घोरं लक्षद्वयं जपेत्
स्कन्दयागविहीने तु राष्ट्रे दुर्मरणं भवेत् ७७५
स्कन्दयागं प्रकुर्वीतलक्षार्द्धं स्कन्दमन्त्रकैः
जपं कृत्वा विशेषेण मूर्तिहोमं समाचरेत् ७७६
भक्तयागविहीने तु म्लेच्छाक्रान्तो भवेद्भुवि
शान्तिहोमन्ततः कृत्वा सपुनर्यागमाचरेत् ७७७
अस्त्रयागविहीने तु परचक्रभयं भवेत्
यत्रयागंप्रकुर्वीत घोरे लक्षं जपेत्ततः ७७८
तदर्द्धं होमयेत्पश्चात् तस्यार्द्धं वा तदर्द्धकम्

महायागविहीने तु महामारी प्रवर्तते ७७९
तद्दोषशमनार्थाय पुनरुत्सवमाचरेत्
लक्षद्वयं जपेत् घोरं दशसाहस्रं होमयेत् ७८०
मूर्तिहोमन्ततः कृत्वा तद्दोषशमनाय च
बलिबेरविहीने तु ग्रामं शून्यत्वमाप्नुयात् ७८१
अस्त्रमन्त्रशतं जप्त्वा शान्तिहोमं समाचरेत्
लोकपालविहीने तु शिवास्त्रेण शतं जपेत् ७८२
दिग्देवबलिहीने तु दुर्भिक्षकरमुच्यते
घोरेणैव शतं हुत्वा शतं जप्त्वा विशेषतः ७८३
दिनेश्वरविहीने तु शान्तिहोमं समाचरेत्
गन्धहीने भयं विद्यात् शान्तिहोमं समाचरेत् ७८४
सङ्कटे पुष्पहीणे तु अस्त्रेणैव शतं हुनेत्
वस्त्रहीने दरिद्रं स्यात् मूर्तिहोमं समाचरेत् ७८५
मुक्ताभरणहीने तु काञ्चनं नाशयेत्ततः
शिवमन्त्रशतं जप्त्वा तद्दोषशमनाय च ७८६
नैवेद्यहीने दुर्भिक्षं शान्तिहोमं समाचरेत्
सस्यहीने रसं नाशं प्रत्यंगिरशतं जपेत् ७८७
तेनैव होमयेच्चैव पाद्यादिहीनकर्मणि
अनाचारं भवेद्यस्तु सद्योजातैश्शतं जपेत् ७८८
छत्रहीने तु तद्राष्ट्रे अराजकमनाज्ञया
तद्दोषशमनार्थाय घोरास्त्रेण शतं हुनेत् ७८९
ध्वजहीने विजयं स्यात् शान्तिहोमं समाचरेत्
ध्वजस्य पतने वापि कवचेन शताहुतिम् ७९०
दीपहीने विशेषेण यजमानो विनश्यति
तद्दोषशमनञ्चैव शान्तिहोमं समाचरेत् ७९१
तद्दीपपतने चैव अग्निमन्त्रैश्शतं हुनेत्
यन्त्रक्रमविहीने तु गजाश्वादिविनाशनम् ७९२
तद्दोषशमनार्थाय संहिता होममिष्यते
यन्त्राणां पतने चैव शान्तिहोमं समाचरेत् ७९३

शफरापुष्पधामादि राष्ट्रे विह्निभयं भवेत्
तद्दोषशमनञ्चैव घोरमन्त्रैश्शतं हुनेत् ७९४
पतनेऽपि विशेषेण द्विशतं जापयेत्ततः
यागहीने विशेषेण राजाराष्ट्रं विनश्यति ७९५
पुनर्यागं समारभ्य घोरे लक्षं जपेत्ततः
संहिता होममिष्याथ यागशालान्तु दारुजम् ७९६
अग्निदण्डविहीनश्चेत् पुनरुत्सवमाचरेत्
पञ्चास्त्रेणैव मन्त्रेण लक्षं लक्षं पृथक्पृथक् ७९७
जप्त्वा हीने तु तन्मन्त्रैः सहस्त्रं वा पृथक्पृथक्
लक्षस्य शतसङ्ख्या च ब्राह्मणान्भोजयेत्ततः ७९८
प्रमादाच्च घटं भित्वा सद्यैरावाहयेत् घटे
अघोरेण जपं लक्षं सहस्त्रं होमयेत्ततः ७९९
शान्तिहोमन्ततः कृत्वा विद्येशानां घटेऽपि वा
तदर्द्धञ्च जपेत् घोरं तदर्द्धं होमयेत्ततः ८००
छेदयेदस्त्रकुंभं वा पञ्चाशच्च सहस्त्रकम्
घोरञ्जप्त्वा हुनेद्वह्नौ पञ्चाशतमिहोच्यते ८०१
परिवारघटे हीने तत्तन्मन्त्रैस्सहस्त्रकम्
जप्त्वा च विधिवच्चैव हुत्वा चैव दशाहुतिम् ८०२
दशायुधहतो वापि तत्तन्मन्त्रैश्शतं जपेत्
अष्टमङ्गलशं छित्वा अस्त्रेणैव शतं जपेत् ८०३
दशाहुतिं हुनेच्चैव पूर्ववत्परिकल्पयेत्
तोरणान् छेदयेच्चैव प्रमादात्पूर्वद्वारके ८०४
दक्षिणे पश्चिमे वापि उत्तरे च चदुर्दिशि
नन्दिभृंगिवृषश्चैव देविततत्स्वमन्त्रकैः ८०५
शतं शतं जपेत्पश्चात्पुर्ववत्परिकल्पयेत्
वह्निविच्छिन्नमद्ध्ये च पुनरग्निसमुद्भवम् ८०६
पञ्चास्त्रेण हुनेच्चैव सहस्त्रञ्च पृथक्पृथक्
लक्षमेकं जपेच्चैव शान्तिहोमं तथाचरेत् ८०७
पूर्वाद्यष्टसुकुण्डेषु अग्निविच्छिन्नमेव वा

तत्तन्मन्त्रैश्शतं हुत्वा सहस्रं प्रजपेत्ततः  ८०८
अभिषेकविहीने तु दारिद्र्यं समवाप्नुयात्
मिळित्वापूर्ववत्स्नात्वा शान्तिहोमं समाचरेत्  ८०९
सूत्रहीने क्षयव्याधिश्शान्तिहोमं समाचरेत्
वस्त्रहीने दरिद्रं स्यात् घोरेणैव शतं हुनेत्  ८१०
नाळिकेरं विभिन्नञ्चेत् सराजाब् हयमाप्नुयात्
तद्दोषशमनञ्चैव संहिता होममेव च  ८११
कूर्चहीने कुष्ठरोगं मूलेनैव शतं हुनेत्
रत्नहीने गुल्मरोगं सहस्रं होमयेत्ततः  ८१२
लम्बकूर्चविहीने तु शिवमन्त्रं शतं जपेत्
अस्त्रयागविहीने तु चिरान्मृत्युमवाप्नुयात्  ८१३
तद्दोषशमनार्त्थाय शान्तिहोमं तथाचरेत्
परिवारघटे हीने परराजभयं भवेत्  ८१४
पूर्ववत्कल्पयेच्चैव शान्तिहोमन्तथाचरेत्
विद्येशादिघटे हीने आर्याश्चैव विनाशनम्  ८१५
सहस्रं होमयेत् घोरमष्टमङ्गळहीनके
घोरेणैव शतं जप्त्वा दशायुधविहीनके  ८१६
तत्तन्मन्त्रैश्शतं जप्त्वा स्रुक्स्रुवे च विहीनके
गौरी गायत्रिमन्त्रेण सहस्रं प्रजपेत्ततः  ८१७
होमपात्रविहीने तु वह्निमन्त्रशतं जपेत्
कूर्मासनविहीने तु अलक्ष्मीकमवाप्नुयात्  ८१८
तद्दोषशमनार्त्थाय प्रणवेन शतं हुनेत्
ज्ञानखट्गविहीने तु भूपतेश्शौर्यनाशनम्  ८१९
अस्त्रमन्त्रेण साहस्रं जप्त्वा हुत्वा तथैव च
समिदाज्य चरूञ्चैव होमद्रव्यविहीनके  ८२०
प्रजाक्षयमवाप्नोति शान्तिहोमन्तथाचरेत्
नैवेद्य हीने दुर्भिक्षं मूर्तिहोमं समाचरेत्  ८२१
बलिहीने ग्रामनाशं हृदयेन शतं जपेत्
दीपाराधनहीने तु दुर्भिक्षं ग्रामनाशनम्  ८२२

तद्दोषशमनार्त्थाय शान्तिहोमं समाचरेत्
अग्निपात्रविहीने तु मृत्युञ्जयशतं जपेत् ८२३
अस्त्रहीने तु मरणं घोरास्त्रेण शतं जपेत्
रथयानविहीने च ग्रामनाशकरं भवेत् ८२४
तद्दोषशमनार्थाय लक्षं घोरञ्जपेन्नरः
ईतिबाधाचराष्ट्रे च मूर्तिहोमं समाचरेत् ८२५
काळहारिविहीने तु महामारीप्रवर्तते
तद्दोषशमनार्त्थाय मूलं लक्षं जपेत्ततः ८२६
भिक्षाटनविहीने तु दुर्भिक्षं राष्ट्रसङ्कुलम्
तद्दोषशमनार्त्थाय शान्तिहोमं समाचरेत् ८२७
तीर्त्थकर्मविहीने तु राजाराष्ट्रं विनश्यति
तद्दोषशमनार्थाय घोरलक्षं जपेत् हुनेत् ८२८
सहस्त्रं परिकल्प्याथ -------------
चूर्णोत्सवविहीने तु शान्तिहोमं समाचरेत् ८२९
रजोत्सवविहीने तु मूलेनैव शतं जपेत्
मौनोत्सवविहीने तु सर्वन्निष्फलमेव वा ८३०
शान्तिहोमन्ततः कुर्यात् शक्तियात्राविहीनके
मूकत्वमिति विज्ञेयं हुनेत्पाशुपतास्त्रकैः ८३१
सहस्त्रं होमयेच्चैव सहस्त्रं प्रजपेत्ततः
चण्डयागविहीने तु सर्वन्निष्फलमेव वा ८३२
तद्दोषशमनार्त्थाय दशसाहस्त्रं होमयेत्
आचार्योत्सवहीने तु तत् ग्रामे मरणं द्ध्रुवम् ८३३
तद्दोषशमनार्त्थाय प्रासादेन सहस्त्रकम्
जप्त्वा हुत्वा तु विधिना मत्स्यलीलाविहीनके ८३४
शान्तिहोमन्ततः कृत्वा शुद्धनृत्तविहीनके
मूलेनैव शतं जप्त्वा शुद्धवाद्य विहीनके ८३५
शान्तिहोमन्ततः कुर्यात् रागभेदविहीनके
शंबरैश्च वश-------------------- ८३६
नित्यपूजां प्रकर्तव्या न कर्तव्यं महोत्सवम्

अपत्नीको विशेषेण विना नैमित्तिकन्तथा ८३७
पुत्रवान्वेदविद्विद्वान् आचार्यात्मज एव वा
नित्यपूजां प्रकर्तव्यं पत्नी हीने न दोषभाक् ८३८
पूर्वाद्यष्टदिशि स्थाने ऋत्विजापीड्यतेऽपि वा
तद्दोषशमनार्थाय सहस्रं होमयेत्ततः ८३९
यागमद्ध्ये विशेषेण परिचारपितृमृते
सुव्रतेनाशौचदोषः यागमद्ध्ये षडानन ८४०
परिचारकविप्राणां कथमाशौचमिष्यते
मातापित्रोश्च विषये आशौचं संभवेद्यदि ८४१
अघोरेण शतं हुत्वा शुद्धो भवति कर्मसु
अन्येषां ज्ञातिविषये आशौचं न समाचरेत् ८४२
यागान्ते पूर्ववच्चैव आशौचन्तु समाचरेत्
तच्च ऋत्विगनुष्ठानं यागान्ते सूतकी भवेत् ८४३
जपकर्त्रा विहीनश्चेत् द्विशतं होमयेत्ततः
यजमानमृते चैव सहस्रं होमयेत्ततः ८४४
शान्तिहोमं ततः कृत्वा कारयेद्देशिकोत्तमः
एवं वै उत्तमं प्रोक्तं मद्ध्यमञ्च ततश्शृणु ८४५
त्रिदिनं गणयागञ्च स्कन्दभक्तदिनत्रयम्
शिवास्त्रयागं त्रिदिनं नवाहमिति कत्थ्यते ८४६
----- नवाहं स्यात् अष्टादशदिनं भवेत्
निर्दिष्टदिवसात्पूर्वं रात्रौ वास्तुंप्रपूजयेत् ८४७
वृषयागं समारभ्य भेरी संघोषणं महत्
देवता वाहनञ्चैव दत्वा वाङ्कुरमुत्तमम् ८४८
यात्राहोमं प्रकुर्वीत चन्द्रचूडमलङ्कृतम्
चन्द्रशेखरमादाय ध्वजदण्डस्य सन्निधौ ८४९
ध्वजारोहनमारोप्य सन्धिदेवान्प्रपूजयेत्
तीर्थाङ्कुरं ततः पश्चात् रक्षासूत्रं तथैव च ८५०
गणयागं समभ्यर्च्य यागान्ते बलिमुच्यते
चतुर्थे हनिसं प्राप्ते स्कन्दयागं समाचरेत् ८५१

पञ्चमे दिवसे रात्रौ भक्तयागं समारभेत्
गणयागं विसृज्याथ अस्त्रयागं समाचरेत्  ८५२
पूर्वोक्तविधिना चैव भयजनं चन्द्रशेखरम्
अस्त्रयागं विसृज्याथ दिक्ध्वजान्परिकल्पयेत्  ८५३
महायागं समाराध्य अष्टादशदिने तथा
अवरोहणमेवञ्च शेषं पूर्ववदाचरेत्  ८५४
एवं वै मद्ध्यमं प्रोक्तं अधमञ्च ततश्शृणु
निर्दिष्टदिवसात्पूर्वं रात्रिवास्तुं प्रपूजयेत्  ८५५
अङ्कुरं वृषयागञ्च भेरीं संपूजयेत्ततः
देवतावाहनञ्चैव उत्सवाङ्कुरमुत्तमम्  ८५६
पताकारोहणञ्चैव लोकपालान्प्रपूजयेत्
तीर्थाङ्कुरं ससूत्रञ्च महायागं प्रकल्पयेत्  ८५७
तदन्ते बलिमाराद्ध्य प्रथमे दिवसे चरेत्
सप्तमे रथयन्त्रञ्च मृगयात्रां परे हनि  ८५८
नवमे दिवसे चैव दिनान्ते चाभिषेचनम्
कळाकरोत्सवञ्चैव भेरीञ्चैव शिवास्त्रकम्  ८५९
चूर्णोत्सवं तीर्थकर्ममहायागविसर्जनम्
अवरोहणमित्युक्तं पञ्चयानं समाचरेत्  ८६०
शक्तियात्रां विशेषेण मत्स्यलीलां परे हनि
चण्डयागं परे चैव साधकोत्सवमेव च  ८६१
नवाहमिति संज्ञेयः शेषं पूर्ववदाचरेत्
एवं वै उत्सवं प्रोक्तं सर्वकालफलप्रदम्  ८६२
महापातकनाशञ्च उपपातकनाशनम्
ब्रह्महत्यासुरापानं श्वपाकीपलवित्रयः  ८६३
शिवलिङ्गचले वापि विप्रोद्धाटन एव च
गुरुनिन्दकसंज्ञेयः मातृगामी तथैव च  ८६४
पितृघातकगोहत्या बालघ्नो गर्भघातकः
महोत्सवन्तु कुर्याच्चेत् शिवसायुज्यमाप्नुयात्  ८६५
इति महोत्सवविधिपटलश्चतुर्विंशतिः

शक्त्युत्सवपटलप्रारंभः

अथ वक्ष्ये विशेषेण शक्त्युत्सवमतः परम्
प्रासादगोपुरञ्चैव प्राकारव्यापिनी यदि १
प्रत्येकमालयञ्चैव प्रतिध्वजमिहोच्यते
कार्तिकेयः केशवश्च क्षेत्रपालश्च मातरः २
एतेषामुत्सवे चैव प्रथमावरणे त्यजेत्
द्वितीयावरणे चैव तृतीयावरणेऽपि वा ३
प्रत्येकमालयं प्रोक्तं शक्त्युत्सवमथाचरेत्
राजाभिषेकसमये दुर्भिक्षे तु महाभये ४
परचक्रभये चैव महामारीप्रवर्तके
भूकंपपतने काले शक्त्युत्सवमथाचरेत् ५
नवाहं श्रियतं प्रोक्तं सप्ताहं राजसं भवेत्
पञ्चाहं सात्विकञ्चैव गौणञ्चैव त्र्याहकम् ६
एकाहं तामसं प्रोक्तं एते पञ्चविधं भवेत्
चैत्रमासे तु चित्रर्क्षे द्वितीय्यायां चरेत्ततः ७
वैशाखे सितपक्षे तु विशाखे चोत्तरान्तके
ज्येष्ठे चैव प्रकर्तव्यं आषाढे त्रयोदशी भवेत् ८
---- श्रावणे वापि द्वादशी च विशेषतः
भाद्रे तामसऋक्षं वा एकादशी समन्ततः ९
आश्वेत्वश्वी समायुक्तं कार्तिके कृत्तिके मतः
तिथि प्रधानकश्चैव सिते वा सितपक्षयोः १०
सामुदायिकऋक्षं वा उत्सवेशदिनन्तु वा
यजमानवशात्तत्र त्रिदिने तीर्थमाचरेत् ११
निश्चित्य दिवसात्पूर्वरात्रौ वास्तुप्रपूजयेत्
मण्डूकन्देवतानाञ्च देवीनां परमशायिका १२
रज्वष्टकसमोपेतं वास्तुनाधं प्रपूजयेत्
पूर्वरात्रौ समारभ्य वपनन्तु परे हनि १३
मृतदीक्षान्तरे चैव गर्भदीक्षान्तरे तथा
विवाहदीक्षा मद्ध्ये च षडध्व शोधनेऽपि वा १४

अन्ते त्रिपक्षमद्ध्ये च प्रसवान्ते त्रिपक्षकम्
महोत्सवं प्रतिष्ठाञ्च एतन्मद्ध्ये विवर्जयेत् १५
मोहेन कारयित्वा तु ब्रह्महत्या समं भवेत्
पूर्ववद्यागशालाञ्च पश्चिमद्वारमेव वा १६
पूर्वद्वारं प्रकल्प्याथ सर्वेषां पूर्ववच्चरेत्
सितसूक्ष्ममथो श्लक्ष्णं दण्डमानमथापि वा १७
पटमद्ध्ये लिखेच्चैव केसरीवृषभन्तु वा
पूर्ववद्धटमालिख्य प्रतिष्ठामुक्तवत्पुरा १८
भेरी ताडनमेवोक्तं अस्त्रदेवान्प्रपूजयेत्
अङ्कुरं पूर्ववत्कृत्वा दण्डपूजाञ्च कारयेत् १९
गौरी गायत्रिमन्त्रेण पताकारोहणञ्चरेत्
यात्रास्नपनमेवोक्तं उत्सवे शीमलङ्कताम् २०
कथं शंभो विशेषेण शक्तिभेदैरनेकशः
मूलबेरस्य चायामं कर्णान्तं गळमेव वा २१
स्कन्धान्तञ्च स्तनान्तं वा नाभ्यन्तं कटिमेव वा
आयव्ययञ्च ऋक्षञ्च वारमंशञ्च वर्णकम् २२
श्रीतिथिर्दिनगणञ्चैव माहेन्द्रं राशिराशिपम्
वश्य ऋक्षञ्च रज्जुञ्च ऋक्षादिगण्यते ध्रुवम् २३
एवं वै मूलशक्त्याश्च समतां परिकीर्तिताः
द्विभुजा च द्विनेत्रा च किरीटमकुटोज्वला २४
लम्बकर्णौ च सुश्लक्ष्णौ त्रिभागेन च संयुतौ
दक्षिणेऽपि विहस्तं स्यात् वामे लम्बकरन्तथा २५
समपादस्थितञ्चैव किञ्चित्कुञ्चितसव्यके
पद्मपीठोपरिस्थाञ्च सर्वाभरणभूषिताम् २६
कर्णात्पलं शिरश्छत्रं प्रभामद्ध्यस्थितं भजे
एवं रूपं प्रकल्प्याथ उत्सवेशीं प्रशस्यते २७
यात्राहोमं प्रकुर्वीत उत्सवेशीमलङ्कताम्
शिबिकादौ समारोप्य तूर्यवाद्यसमन्वितम् २८
छत्रचामरपिञ्छैश्च शिवभक्तैस्समावृतम्

-------------------------------- २९
शङ्खघोषसमायुक्तं ध्वजदण्डस्य सन्निधौ
गौरीगायत्रिमन्त्रेण ध्वजारोहणमारभेत् ३०
बलिबेरं समादाय अस्त्रमूर्तिसमन्वितम्
बलिस्सन्ध्यां यजेद्देवमास्थानमण्टपे न्यसेत् ३१
नीराजनन्ततः कृत्वा पाद्यमाचमनार्घ्यकम्
गण्डूषोदकपानीय्यं व्यजनं दर्पणं न्यसेत् ३२
धूपदीपादिकन्दत्वा रक्षाबन्धनमाचरेत्
वागीश्वरीं समावाह्य गन्धपुष्पैरलङ्कृताम् ३३
वामाद्यष्टघटे पूज्य पूर्ववत्परिकल्पयेत्
ब्रह्मादीन्लोकपालादीन् पूर्वाद्यस्त्रन्तु मंगलान् ३४
पूर्वोक्तविधिना पूज्य वह्निकर्मसमाचरेत्
इन्द्र ईशानयोर्मद्ध्ये वृत्तकुण्डं प्रधानकम् ३५
पूर्वाद्यष्टदिशि चैव योनिकुण्डं प्रकल्पयेत्
नवाग्निञ्चैव पञ्चाग्निं एकाग्निं वा प्रकल्पयेत् ३६
गणेशं कार्तिकेयञ्च यमनीं वृषभन्तथा
केसरीं विधिना चैव तत्तन्मन्त्रेण होमयेत् ३७
समिदाज्य चरू लाजं निष्पावं माषमुद्गकम्
शिंबं वेणुञ्च गोधूमं दधिक्षीरगुळन्तथा ३८
उक्षुखण्डं स्वादुकन्दं नीवारं यवमात्रकम्
कदळीमातुलंगञ्च पनसं नागमञ्जरी ३९
कुलाम्रञ्च विभीची च अपूपं पायसान्वितम्
सुगन्धानि च पुष्पाणि अष्टगन्धेन होमयेत् ४०
ह्रीबेरादान्तगन्धञ्च उक्तद्रव्याणि होमयेत्
प्रथमे भूतनाधं स्यात् द्वितीये हंसमुच्यते ४१
तृतीये केसरी चैव गजयानं चतुर्थके
पञ्चमे वृषयन्त्रञ्च सप्तमे रथयानकम् ४२
अष्टमे तुरगञ्चैव रन्ध्रे समरभूपकम्
दद्ध्यन्नं वा गुळान्नं वा लोकपालबलिन्ददेत् ४३

दिनदेवबलिं वर्ज्यैत् परिवारबलिं विना
वीधी शोधनमेवोक्तं सायंप्रातः प्रदक्षिणम् ४४
सायंप्रातर्यजेत् यन्त्रान् सर्ववाद्यैस्समन्वितम्
गोपुरद्वारदेशे तु घोषयेत् शङ्खमेव वा ४५
शेषान् हित्वा च तत् बाह्ये सर्ववाद्यैस्समावृतम्
गजोष्ट्रतुरग्रे उक्षे पटहं घोषयेत्ततः ४६
अन्यान्राक्षसवाद्यांश्च घोषयित्वा विशेषतः
नवसन्धिबलिन्दद्यात् ताळं शङ्खञ्च काहळम् ४७
मद्दळं घोषयेच्चैव कुम्भवाद्यञ्च घोषयेत्
पश्चात्तु पारशैवेन सर्वताळेन ताडयेत् ४८
प्रथमं पुष्पधामं स्यात् द्वितीय्यं शफरन्तथा
तृतीयं चित्रधामञ्च चतुर्त्थं चक्रपातिकम् ४९
पञ्चमे मधुधामं स्यात् षष्ठे तु सूत्रधामकम्
सप्तमे विक्रमं धामं अष्टमं मौक्तिकञ्चरेत् ५०
नवमे मरथधामं स्यात् दशमे कुंज्यधामकम्
देव्यादि च यमत्यन्तं धामं यन्त्रं द्विकालयोः ५१
ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा
वाराही चैव माहेन्द्री चामुण्डासप्तमातरः ५२
यागद्वारे समभ्यर्च्य प्रत्येकं बलिमाचरेत्
काळीञ्चैव कराळीञ्च विकराळीं सुमालिनीम् ५३
ब्रह्मस्थाने च संपूज्य गुळान्नञ्च बलिन्ददेत्
इन्द्रस्थाने शङ्खनिधिं वामे पद्मनिधिन्तथा ५४
बलिन्दद्याद्विशेषेण धूपदीपादिकं भवेत्
ध्वजादिबलिपीठानां यथोक्तबलिमाचरेत् ५५
आकाशमातरं पूर्वे दक्षिणे भूतमातरम्
लोकमातरं पाश्चिम्ये सौम्ये तु देवमातरम् ५६
अनुक्तमातरं चोर्ध्वे अग्रपीठे बलिन्ददेत्
जंभिनी स्तंभिनी चैव मोहिनी भेदिनी तथा ५७
रमणी भद्रकाळी च दुर्गा चण्डेश्वरी तथा

तासान्नित्यबलिन्दत्वा पश्चात्कृत्वा महाबलिम्  ५८
पूर्वं ध्वजबलिञ्चैव पश्चात्सन्धिबलिञ्चरेत्
जंभिन्यादिबलिञ्चैव महापीठे बलिन्ददेत्  ५९
सकळं निष्कळं शून्यं कळाढ्यं खमलङ्कृतम्
क्षपणं क्षमयञ्चैव कर्णोष्यं वसुसङ्ख्यया  ६०
ध्वजपीठे विशेषेण पूर्वाशादिबलिञ्चरेत्
सप्तमे दिवसे चैव रथमारोपयेत्ततः  ६१
सुमुहूर्ते सुलग्ने च समादाय महेश्वरीम्
रथमारोपयेत्तत्र न्यसेत्सिह्मासनोपरि  ६२
पश्चिमे तु गणेशञ्च कार्तिकेयञ्च पूर्वके
यमनीमुत्तरे चैव प्रादक्षिण्यक्रमेण वा  ६३
चक्रभिन्नं प्रमादाच्च कुपुरं छेदयेत्ततः
रज्जुभिन्नमथावापि अतिवृष्टिर्भवेत्ततः  ६४
अन्तरे समसंधानं एककालं द्विकालकम्
त्रिकालं वा प्रदानेन मूलबेरे विशेषतः  ६५
रहस्यं वाभिषिच्याथ अमन्त्रं पूजयेत्ततः
तूष्णीकन्तु निवेद्याथ घण्टारवविवर्जितम्  ६६
धूपदीपादिकं हित्वा पश्चात् गत्वा रथेश्वरीम्
निर्माल्यन्तु विसृज्याथ नवपुष्पैरलङ्कृताम्  ६७
गन्धाद्यैरप्यलङ्कृत्य नैवेद्यं परिकल्पयेत्
याने विसृज्य निर्माल्यं तद्देवोऽपि पराङ्मुखम्  ६८
तस्मात्सर्वप्रयत्नेन रथयाने विवर्जयेत्
अपूपं लड्डुकं लाजं चूळिकं रसपाकिनी  ६९
मोदकं पायसं क्षीरं दधिमद्ध्वफलन्तिलम्
इक्षुखण्डं नाळिकेरं पानीय्यं रसवर्गिणम्  ७०
प्रष्टमेतान्निवेद्याथ हित्वान्नं रथयानके
अन्ययानोपरिस्थेषु अन्नं वर्ज्येतरान्ददेत्  ७१
बाह्ये वीधिगते चेत्तु रथयानस्थितेऽपि वा
वीद्ध्यन्ते मण्टपस्थाने मूलबेरन्न दर्शयेत्  ७२

मोहेन दर्शयित्वा तु पूर्वपुण्यं विनश्यति
नित्यपूजावसाने तु उत्सवेशप्रदक्षिणम् ७३
पूजापूर्वं प्रकुर्वीत ब्रह्महत्यासमं भवेत्
मूललिङ्गस्य संपूज्य देव्यालयं प्रपूजयेत् ७४
पूजान्ते यानमारोप्य वीधीं गत्वा प्रदक्षिणम्
अष्टमे मृगयानञ्च पूर्ववत्परिकल्पयेत् ७५
नवमे दिवसे चैव अभ्यङ्गस्नानमाचरेत्
भक्तानान्दापयेत्तैलं देव्यैस्नानं समाचरेत् ७६
ब्राह्मणान्भोजयेत्तत्र प्रादक्षिण्य क्रमेण वा
दशमेऽह्नि प्रभाते च स्नात्वा देवीमलङ्कृताम् ७७
आरोप्य समरे याने पूरकर्मसमाचरेत्
चूर्णोत्सवन्ततः पश्चात् रजन्युत्सवमाचरेत् ७८
उत्तमन्तु नदी तीरे तटाके पुण्यतीर्थके
सिन्धुतीरे च सिन्धौ च मद्ध्याह्ने वा विशेषतः ७९
गङ्गादिसप्ततीर्थानि कलशे पूजयेत्ततः
अस्त्रेशं पूजयेत्तत्र तीर्थकर्मसमाचरेत् ८०
यागो द्वासनमारभ्य मूलबेरेऽभिषेचनम्
तद्रात्रौ पूजयेत्पश्चात् अवरोहणमुत्तमम् ८१
निर्माल्यं धरणी यागं संपूज्य च परे हनि
आचार्यं पूजयेत्पश्चात् ब्राह्मणान् भोजयेत्ततः ८२
एवं यः कुरुते मर्त्यः सपुण्याङ्गतिमाप्नुयात् ८३
इति शक्त्युत्सवपटलः पञ्चविंशतितमः

प्रदोषपूजाविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि प्रदोषयजनं श्रुणु
क्षीराब्धिमथने पूर्वं सुराश्चैवासुरास्तथा १
स्थाणुञ्च मन्थराख्यन्तत् अहिपाशन्तु मद्ध्यमे
अनेकवृक्षसंभूतं स्त्रीरत्नं पुष्परत्नकैः २
मृगरत्नैर्वस्त्ररत्नैर्भूषणैर्विविधानि च

एते जातं पुरा कृत्वा त्रयोदशदिने तथा ३
अत्युपद्रवदोषैश्च अहिकाळञ्च चिद्दिवि
महाविषसमुत्भूतं सर्वसंहारकारणम् ४
आशीविषमहावेगैरसुरान्देवतागणान्
प्रार्थयेत्परमेशानं वृषमारुह्य तच्छिवम् ५
पपौ देवभयं हित्वा सर्वोपद्रवनाशनम्
तस्मिन्काले मयापीतं तद्विषं लोकरक्षितम् ६
प्रदोषसमयात्पूर्वं काळं हित्वा विशेषतः
प्रदोषसमये पूजां उत्तमं पूजनं श्रुणु ७
दिवसस्याष्टमे भागे पूजाङ्कृत्वा षडानन
गव्यैः पञ्चामृतफलैः दधिक्षीरसुगन्धकैः ८
स्नपनान्तं यजेत्तत्र शुद्धवस्त्रैरलङ्कृतम्
अष्टपुष्पं समभ्यर्च्य नैवेद्यं क्रमशस्ततः ९
धूपदीपं त्वथारात्र्या कुंभमारात्रिकन्तथा
भस्मदर्पणचक्रञ्च व्यजनन्तालवृन्दकम् १०
गेयनृत्तान्तमभ्यर्च्य गौरीपूजां समारभेत्
नित्योत्सवन्ततः पश्चात् वृषभारूढमर्चयेत् ११
प्रादक्षिण्यक्रमेणैव मण्टपे वेशयेत्ततः
नित्यपूजां प्रकुर्वीत पूर्ववत्कल्पयेत्ततः १२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् १३
इति प्रदोषपूजाविधिपटलष्षड्विंशतितमः

कृत्तिकामासपूजापटलप्रारंभः

अथातस्संप्रवक्ष्यामि कृत्तिकामासपूजनम्
कृत्तिकापर्वसंयुक्तं ------ विशेषतः १
पूर्व ऋक्षं दिवारे च तदृक्षे पूजयेच्छिवम्
द्विवारे खण्डिते ऋक्षे यद्दिने निशि संयुतम् २
दिवाकाले परेऽह्निस्स्यात्पूजयेत्तु परे हनि
उदयाद्यस्तमानान्तं तद्दिने पूजयेच्छिवम् ३

यद्दृक्षमस्तमनात्पूर्वं दशनाडियुतन्तु वा
परे विंशतिनाडी स्यात्पूर्वे चैव समाचरेत् ४
यद्दिने स्तमनात्पूर्वं त्रिमुहूर्तन्तु कृत्तिका
तत्काले मासपूजाञ्च उत्तमं श्रुणु षरामुख ५
रविरस्तमनात्पूर्वं त्रिमुहूर्तं विशेषतः
घटिका च चतुर्विंशत्युपरि त्रिमुहूर्तके ६
स्रादौ मद्ध्ये तदन्ते च उत्तमामद्ध्यमाधमा
पूर्वयुक्तं विशेषेण उत्तमं परिकीर्तितम् ७
पूर्वयुक्तं विहीने तु ऋक्षप्राधान्यमेव वा
पर्वन्तु रोहिणी युक्तं भरणी सहितन्तु वा ८
तद्दिने मासपूजाञ्च प्राणहीनशरीरवत्
कार्तिक्यां पर्वसंयुक्तं उत्तमं परिकीर्तितम् ९
एकमासे द्विनक्षत्रे द्विऋक्षे पूजयेत्ततः
मासपूजां प्रवक्ष्यामि सायाह्ने पूजनं शुभम् १०
शिवाग्रे यागशालाञ्च महास्नपनमण्टपे
वेदिका मद्ध्यमे चैव सर्वतो भद्रमण्टपम् ११
तत्पूर्वे कुण्डमेवन्तु चतुरश्रं प्रकल्पयेत्
ऐशान्ये वेदिकां कृत्वा स्नपनार्त्थं घटं दश १२
पूर्ववच्छिवमभ्यर्च्य मण्डलेश्वरमर्चयेत्
पूर्वोक्तविधिनाहुत्वा स्रौदुंबरसमिद्धुनेत् १३
मुद्गं हुत्वा विशेषेण ऋतञ्चैव समिद्धुनेत्
अन्यत् द्रव्याणि सर्वाणि पूर्ववत्परिकल्पयेत् १४
सितशाली हेमशाली महाशाली सुशालिनी
पृथुकं पूर्ववत्कल्प्य पाचयेल्लाजमुत्तमम् १५
चतुरश्रं शङ्कराय भूतांशं नाळिकेरकम्
शिवस्य कुडुपार्द्धञ्च मरीचिकृसरन्तथा १६
तत्समं एलकञ्चैव जीरकन्तु तदेव वा
सम्मिश्र्यस्वर्णपात्रे च राजतं ताम्रपात्रके १७
सहस्रप्रस्थसंयुक्तं पञ्चाशतन्तु मद्ध्यमम्

तस्यार्द्धं शतसङ्ख्या च अधिवासनपूर्वकम्  १८
पञ्चाशतन्तु मूलेन होमयेत्तु ततः परम्
अधिवासनकर्मापि कारयेत्साधकोत्तमः  १९
वृषपृष्ठे च वीराग्रे गोपुराग्रे तथैव च
वास्तु मद्ध्येन्द्रसन्धौ च पञ्चशालाग्रमद्ध्यमे  २०
शिवाग्रे स्थापयेद्दण्डं खादिरं चंपकन्तथा
नाळिकेरञ्च बिल्वञ्च वेणुं वा यज्ञवृक्षकम्  २१
अर्जुनं शिंशुपञ्चैव मधूकं वकुळन्तथा
तालन्तमालहिन्तालं करञ्जं देवदारुकम्  २२
सत्वरं छिद्रपुष्पञ्च दीपदण्डतरुन्तथा
अवक्रं निर्व्रणं स्निग्धं ऋजुं वा दण्डमाहरेत्  २३
अतिदीर्घं नातिह्रस्वं न भिन्नं परिकीर्तितम्
अतिबालमतिवृद्धं तरुं बहुबलिन्त्यजेत्  २४
बालवृद्धं कथं शंभो वक्ष्ये श्रुणु षडानन
पञ्चाशत् शतवर्षञ्च पादमायुष्यमीरितम्  २५
बाला च ग्रामनाशञ्च वृद्धायुर्निधनं भवेत्
यौवनं श्रेष्ठमित्युक्तं प्रासादाग्रसमन्तु वा  २६
गोपुरान्तं वृषस्यान्तं नाडिकान्तमथापि वा
गळपद्मदळान्तं वा अतिह्रस्वञ्च मन्दिरम्  २७
दार्वष्टसप्तहस्तैर्वा दीपदण्डप्रमाणतः
पञ्चविंशति हस्तान्तं उत्तमं परिकीर्तितम्  २८
त्रिंशदङ्गुलनाहञ्च उत्तमं परिकीर्तितम्
दण्डन्तु हस्तभागञ्च एकांशं भूमिवेशनम्  २९
षट्त्रिंशत्सुषिरं मद्ध्ये चतुर्विंशति षोडश
छिन्नभिन्नन्तु सुषिरं तन्मद्ध्ये किलजायते  ३०
आमूलाग्रं किलालिख्य चक्राकारन्तु बन्धयेत्
चक्राकारञ्च यष्टिञ्च यष्टिं कीलञ्च बध्नियात्  ३१
दण्डस्य च चतुर्दिक्षु दृढयष्टिं सुयोजयेत्
तेष्वग्रे बन्धयेच्छाखां दण्डाग्रे मद्ध्यमे तथा  ३२

दीपाधारञ्च निम्नं स्यात् निचुळाकृतिमुत्तमम्
नाळिकेरसुवर्णञ्च खर्जूरी तालपत्रकम् ३३
क्रमुकं कदळीपर्णं केतकीपर्णमेव वा
यष्ट्यग्रे बन्धयेच्छुष्कं धौतवस्त्रेण वेष्टयेत् ३४
चित्रवस्त्रैरलङ्कृत्य स्थूललिङ्गाकृतिर्भवेत्
यष्टिहीने महाव्याधिः पत्रहीने धनक्षयम् ३५
चित्रहीने दरिद्रं स्यात् तन्मूले वेदिकां कुरु
पर्णोपरिवेष्टितं वस्त्रं सर्वकामफलप्रदम् ३६
पूर्वे वा दक्षिणे वापि द्वारं कल्प्य विशेषतः
त्रिद्वारिकन्तुविस्तारं द्विगुणायाममुच्यते ३७
दण्डमूले चित्रदीपं सहस्रञ्च तदर्द्धकम्
तदर्द्धं शतदीपञ्च दण्डमूलावलङ्कृतम् ३८
स्तंभस्य च चतुर्दिक्षु शरावं विन्यसेत्ततः
द्रोणं द्रोणार्द्धकं वापि तस्यार्द्धं वाज्यपूरितम् ३९
महादीपं प्रकुर्वीत गोपुरे च ततश्शृणु
प्रासादमण्टपे चैव बहुदीपैरलङ्कृतम् ४०
परिवारालये ग्रे च प्रत्येकं दीपमण्टपम्
नवहस्तं षट्करं स्यात्त्रिहस्तं पूगवृक्षकैः ४१
तस्याग्रे दीपमारोप्य श्रुणुष्व गोपुराद्बहिः
द्विपार्श्वे गोपुरे दण्डान् त्रिकरञ्च चतुःकरम् ४२
द्विकरायाममेवोक्तं चतुरङ्गुलनाहकम्
अग्रे कांस्ये नवा कल्प्य अयसानिर्मितन्तथा ४३
त्रियङ्गुलन्तु विस्तारं घातं तद्विगुणं भवेत्
तन्मद्ध्ये वस्त्रमावेष्ट्य एकं वा द्विशिखाकृतिम् ४४
त्रिशिखां वा पञ्चशिखां षट्शिखान्दीपमुच्यते
घृतन्निक्षिप्य ज्वलनं द्विपार्श्वे बह्वलङ्कृतम् ४५
नक्षत्रमालामार्गेण गर्भगेहे तु दापयेत्
दीपन्निश्चित्य दिवसा त्रिरात्रावङ्कुरार्पणम् ४६
मण्टपे वेदिका मद्ध्ये दश कुंभं न्यसेत्ततः

शिवमावाह्य संपूज्य होमङ्कृत्वा विशेषतः  ४७
पञ्चब्रह्मसुमन्त्रेण पञ्चपात्रेषु दीपकम्
गोघृतेनैव संपूज्य श्राज्यानां दीपमुत्तमम्  ४८
दण्डमूले शुचिर्भूत्वा रक्षाबन्धनमुत्तमम्
श्रपरे चैव सायाह्ने उमास्कन्देश्वरं यजेत्  ४९
रक्षाबन्धनमेवोक्तं पूर्वरात्रौ प्रकल्पयेत्
श्रपरे चैव सायाह्ने देवमादाय यन्त्रके  ५०
दण्डाग्रे स्थापयेद्देवं पुण्याहं वाचयेत्ततः
मूलबेरे विशेषेण लाजपूजां समाचरेत्  ५१
पश्चाद्दीपं समादाय स्थापयेत् दण्डसन्निधौ
निराजनविधिं कृत्वा स्वस्तिसूक्तसमन्वितम्  ५२
तूर्यवाद्यैश्च संयुक्तं दीपालङ्कृतमुत्तमम्
दण्डे रुद्रं समभ्यर्च्य गव्यपञ्चामृतैरपि  ५३
गन्धांबुनाघटान्स्थाप्य पूजयेच्च सदाशिवम्
द्वात्रिंशत्प्रस्थमाज्यञ्च तस्यार्द्धञ्च तदर्द्धकम्  ५४
तदर्द्धं वा क्षिपेत्पात्रे गोघृतेनैव पूरयेत्
पञ्चदीपं समादाय एकपात्रे च योजयेत्  ५५
ग्रामप्रदक्षिणङ्कृत्वा सोमास्कन्देश्वरेण च
दीपमारोपयेद्दण्डे पात्रमग्रे च दापयेत्  ५६
शिवाग्निनाचतुर्दिक्षु ज्वलनं दाहयेत्ततः
ज्वालां लिङ्गं विभाव्यञ्च श्रग्निशून्यं विचार्यताम्  ५७
पञ्चभागं प्रकल्प्याथ त्रिभागं ऊर्ध्वदेशके
द्विभागश्च तयोर्मद्ध्ये दण्डं छित्वा तु तत्क्षणे  ५८
दण्डछेदयित्वानोचेत् राक्षसैश्च सुरैरपि
पूजयेत्तत्क्षणेनैव सर्वकर्म तु निष्फलम्  ५९
तस्मात् छित्वा त्यजेद्दण्डं पपातपूर्वदेशके
राजराष्ट्राभिवृद्ध्यर्थं श्राग्नेय्यां मरणं ध्रुवम्  ६०
याम्ये चोरभयन्दत्वा नैर्ऋते राजविड्वरम्
पश्चिमे मोक्षसिद्ध्यर्थं वायव्ये ज्ञाननाशनम्  ६१

उत्तरे श्रीप्रदं विद्यात् ईशाने तु बलक्षयम्
पतने तु ततः पश्चात् तत् भस्मग्राहयेत्ततः ६२
देवस्य दापयेत्पश्चात् चण्डेशाय प्रदापयेत्
देशिकश्चैव भक्तानां दापयेत् भस्मधारणम् ६३
मूलबेरन्ततः पश्चात् अभिषेकं विशेषतः
नैवेद्यधूपदीपञ्च पूर्ववत्परिकल्पयेत् ६४
एवं यः कुरुते मर्त्यः प्रतिसंवत्सरं प्रति
राजराष्ट्राभिवृद्ध्यर्त्थं सर्वकामफलप्रदम् ६५
नित्यप्रायश्चित्तमेवोक्तं सायुज्यपदमाप्नुयात् ६६
इति कृत्तिकामासपूजापटलस्सप्तविंशतितमः

धनुर्मास उषःकालपूजापटलप्रारंभः

अथ वक्ष्ये विशेषेण उषःकाले शिवार्चनम्
शृणुष्वच महासेन सर्वानुग्रहकारणम् १
चापं प्राप्ते सवितरि प्रत्यूषे पूजयेच्छिवम्
नराणाञ्च क्वचित्कालं एकसन्धिदिनं प्रति २
चैत्राणां माससन्धिञ्च देवानामपिसन्धि च
घटिकापञ्चकं मासं अब्दञ्च षष्टिसङ्ख्यया ३
उषः प्रातश्च मद्ध्याह्नं सायाह्ने चार्द्धयामके
मार्गशीर्षे च मासे तु उषः कालं प्रशस्यते ४
त्रिंशद्दिनमुषः कालं दिनाधिक्यन्तु वर्जयेत्
एकोनत्रिंशदिवसं कथं शंभो विशेषतः ५
पूर्वमासे मिळित्वा च दिनमेकं शिवार्चनम्
त्रिंशद्दिनं प्रकुर्वीत उषःकालं प्रशस्यते ६
मकरस्थे दिवानाथे प्रथमे दिवसे तथा
प्रातः काले प्रकुर्वीत मेषे च प्रथमे हनि ७
सङ्क्रान्तौ पूजनञ्चैव मद्ध्याह्नमभिधीयते
भानौ कर्कटके प्राप्ते तद्दिने पूजनन्तथा ८
तुलाराशिगते भानौ तद्दिने चार्द्धयामकम्

चतुः कालन्तु देवानां पूजनं शङ्करस्य च ९
मद्ध्याह्ने सङ्क्रमं गत्वा कथं पूजामनुष्ठितम्
रात्रौ चैव उषे भानौ उत्तमं परिकीर्तितम् १०
प्रातःकाले च मद्ध्याह्ने प्रदोषे सङ्क्रमं यदि
पूजाकाले अकाले वा उषः कालाख्यपूजनम् ११
त्रिंशद्दिनसमं ज्ञेयः दिने पूजां प्रदापयेत्
एकत्रिंशद्दिनं प्रोक्तं हित्वा सङ्क्रमितं दिनम् १२
चान्ते कवासरं स्थानं द्रव्यं ---------
समादाय पृथक्कालं पूजयेच्च यजेद्गुरुः १३
एकोनत्रिंशद्रात्री च मिळित्वा दिनमेव वा
त्रिंशद्दिनं प्रकुर्वीत पूजयेत्साधकोत्तमः १४
सहस्रदिनपूजाञ्चेत् फलमेकत्र सन्धिषु
प्रभाते पूर्वमुत्थाय न्यूनं वै पञ्चनाडिका १५
मलमूत्रपुरीषादीन्कृत्वा शौचं यथोक्तवत्
दन्तशोधनकं कृत्वा भस्मस्नानं विधीयते १६
मानसं मन्त्रमुच्चार्य मन्त्रानुष्ठानकं विना
दशवारं जपेच्चैव पञ्चाक्षरमिहोच्यते १७
धौतवस्त्रोत्तरीय्यश्च आचम्यविधिना बुधः
आत्मशुद्धिं विना चैव हित्वा च मन्त्रशुद्धिदम् १८
अन्तर्यागं विना चैव द्वारपूजान्न कारयेत्
हित्वानुज्ञाञ्च गुरुणा स्थिरासनं न कारयेत् १९
हित्वा भोगाङ्गयजनं चण्डेशयजनं विना
बलिं विना कृत्शानोश्च हित्वा शेषं समाचरेत् २०
स्नपनं कारयेत्तत्र अर्चयित्वा विशेषतः
पञ्चामृतैः पञ्चगव्यैः पूर्वोक्तविधिनाचरेत् २१
शनैर्गत्वा गर्भगेहं निर्माल्यञ्च विसर्जनम्
लिङ्गशुद्धिं ततः कृत्वा आसनं मूर्तिमूलकम् २२
अष्टपुष्पं समभ्यर्च्य अभिषेकं समाचरेत्
धौतवस्त्रेण संवेष्ट्य गन्धपुष्पैरलङ्कृतम् २३

दध्योदनं सिन्धुयुक्तं संमिश्रं नागरेण च
आज्यमेलकसंयुक्तं जंबीरफलसारकम् २४
एतान्याश्रित्य विधिना मन्दोष्णं परिपूरितम्
पूर्वोक्तविधिवच्छाखां रसवर्गफलादिकम् २५
शृङ्गिबेरं विशेषेण लताकन्दंपचेदथ
क्षीरं दधिघृतञ्चैव गुळखण्डेन्दुखण्डकान् २६
नैवेद्यन्तु पुराकृत्वा निर्माल्यपरिशोधनम्
धूपञ्च दीपमेवोक्तं कर्पूरारात्रिकञ्चरेत् २७
भस्मदर्पणछत्रञ्च व्यजनं तालवृन्तकम्
पाद्यमाचमनार्घ्यञ्च दापयेत्तच्छिवाय च २८
देव्यालयं ततो गत्वा पूजाकर्मसमाचरेत्
महेश्वरादिबेराणां परिवारार्चनं विना २९
गजाननवृषस्कन्ददक्षिणाकमलारविः
वटुकोमातरश्चण्डस्तेवर्ज्यास्स्युर्गुहोषसि ३०
यजनं परिवाराणां कथं शंभो दिने तथा
प्रातःकाले च मध्याह्ने सायाह्ने पूजनं शुभम् ३१
प्रातः काले यजेत्सूर्यं गणेशं पूजयेत्ततः
महेश्वरादिबेराणां पूजनीयं यथा भवेत् ३२
परिवाराश्च देवानां अभिषिच्याप्यलङ्कृतम्
मूललिङ्गे विशेषेण पूजाकर्मसमाचरेत् ३३
पूर्वं गणेशनैवेद्यं मूलबेरस्य तत्परम्
महेशानन्निवेद्याथ अन्येषाञ्च निवेदयेत् ३४
पश्चान्निवेद्यगौर्याश्च उपचारान्यथोक्तवत्
धूपदीपादिकन्दत्वा बलिङ्कृत्वा ततः परम् ३५
हुताशनं समभ्यर्च्य नित्योत्सवमतः परम्
चण्डेशयजनं पश्चात्प्रातःकाले विधीयते ३६
मध्याह्नसमये प्राप्ते स्नपनं पञ्चगव्यकम्
द्वारपूजां प्रकल्प्याथ वास्तुनाधं समर्चयेत् ३७
लिङ्गशुद्धिं ततः कृत्वा स्थिरासनं प्रपूजयेत्

अभिषेकन्ततः कृत्वा गन्धपुष्पैरलङ्कृतम् ३८
भोगाङ्गं पूजयेत्पश्चात् नैवेद्याद्युपचारकम्
गौरी पूजां ततः कृत्वा चण्डान्तं पूजयेत्ततः ३९
नटेशं पूजयेत्पूर्वं नैवेद्यं धूपदीपकम्
मूलबेरस्य नैवेद्यं धूपदीपादिकञ्चरेत् ४०
महेश्वरादिबेराणां गौर्याश्चैव निवेदनम्
उपचारान्समभ्यर्च्य देहशुद्धिं समाचरेत् ४१
स्नपनं कारयेत्पश्चात् द्वारपूजां विधीयते
मूलबेरञ्च संस्नाप्य नैवेद्यञ्च ततः परम् ४२
राजोपचारमार्गेण पूजयित्वा यथाक्रमम्
मद्ध्ये सर्वत्र नैवेद्यं पार्वती चण्डभैरवम् ४३
नैवेद्यन्तु ततः पश्चात् उपचारान्तथैव च
हुताशनं समभ्यर्च्य नित्योत्सवमतः परम् ४४
अर्द्धयामं प्रकुर्वीत स्नपनं पञ्चगव्यकम्
पञ्चामृतं प्रकल्प्याथ द्वारपूजान्नकारयेत् ४५
चलासनं समभ्यर्च्य स्नाननैवेद्यकर्म च
धूपदीपादिकन्दत्वा गौरीञ्चैव निवेदयेत् ४६
पादुकाराधनं पश्चात् क्षेत्रपालं समर्चयेत्
षट्कालं पञ्चकालं वा युगकालं समर्चयेत् ४७
त्रिकालमेककालं वा पूजयेत्तु विशेषतः
त्रिकालं होमयेच्चैव त्रिकालं बलिमाचरेत् ४८
कालत्रयोत्सवञ्चैव अन्यकालेषु वर्जयेत्
एवं कृत्वा विशेषेण सपुण्यां गतिमाप्नुयात् ४९
इति धनुर्मास उषःकालपूजापटल अष्टाविंशतिः

चापमासपूजा पटलप्रारंभः

अथ वक्ष्ये विशेषेण चापमासे विशेषतः
मासपूजामहापुण्यं साक्षान्मोक्षप्रदायकम् १
प्रवक्ष्यामि समासाद्य भानौ शार्ङ्गं गते सति

तन्मासे शुक्लपक्षे तु सिनीवालिदिने तथा २
आर्द्रानक्षत्रयुक्तञ्च राजराष्ट्राभिवृद्धिदम्
पर्वयुक्तमयुक्तं वा ऋृक्षप्राधान्यमेव वा ३
मद्ध्याह्नसमये प्राप्ते उदयास्तमनान्तकम्
उत्तमं मासपूजाञ्च विंशन्नाडीमथापि वा ४
अथवा षोडशानाडी तद्दिने पूजयेच्छिवम्
नोचेत्पूर्वदिने कृत्वा मासपूजाविधीय्यते ५
एकमासे द्विनक्षत्रे मासपूजा द्वयेऽपि वा
पूर्वोक्तयागं सङ्कल्प्य मद्ध्ये वेदं प्रकल्पयेत् ६
स्वस्तिकं मण्डलञ्चैव तोरणान्मङ्गलान्यजेत्
तत्पूर्वे योनिकुण्डन्तु पूर्ववत्परिकल्पयेत् ७
ऐशान्ये वेदिकायाश्च उपवेदीं प्रकल्पयेत्
हेमशाली महाशाली अष्टद्रोणं प्रपूजयेत् ८
द्रोणमात्रन्तिलञ्चैव मुद्गमाषञ्च निंबकम्
गोधूमं वैणवञ्चैव निष्पावं सर्षपन्तथा ९
शिवं पृथक्पृथक्चैव पद्ममष्टदळं लिखेत्
त्रिदिनं नवनीतञ्च गोघृतन्दाहयेत्ततः १०
वस्त्रपूतं घृतं हृत्य शिवकुंभे शिवन्तथा
पूरयित्वा विशेषेण स्वर्णकुंभे तु पूरयेत् ११
अथवा राजतेनैव ताम्रेणैव प्रपूरयेत्
अथवा मृत् घटे वापि शिवकुंभपरिव्रतान् १२
षट्प्रस्थं वर्द्धनीञ्चैव आढकं वसुसङ्ख्यया
तन्तुनापञ्चवर्णेन वेष्टयेद्वर्द्धनीं श्रुणु १३
त्रिसूत्रं वेष्टयेच्चैव शेषांश्चैव द्विसूत्रकम्
वेष्टयेद्दक्षिणावर्तं नवरत्नन्तु निक्षिपेत् १४
मद्ध्यमं पञ्चरत्नञ्च रत्नत्रयमथापि वा
शिवकुंभे विनिक्षिप्य नवमेककमेव वा १५
शिवकुंभस्य मद्ध्ये तु स्वर्णपङ्कजमुत्तमम्
वर्द्धनीमद्ध्यमे चैव स्वर्णनीलोत्पलञ्चरेत् १६

राजतं पद्मपुष्पञ्च अन्येषां कुंभमद्ध्यमे
स्वर्णेन रजतेनैव चरेच्चूतदळाकृतिम्  १७
स्तबकन्दळसङ्ख्या च तन्मद्ध्ये सापिधानकम्
उपरीनाळिकेरञ्च कूर्चमद्ध्ये विनिक्षिपेत्  १८
मस्तके लंबकूर्चञ्च रक्तवस्त्रेण वेष्टयेत्
तस्योपरिविशेषेण धौतवस्त्रेण वेष्टयेत्  १९
कर्पूरवस्त्रमित्युक्तं गन्धपुष्पैरलङ्कृतम्
विद्येश्वरघटान्वस्त्रं वेष्टयेत्तु पृथक्पृथक्  २०
स्वर्णेन रजतेनैव ताम्रेणैव प्रकल्पयेत्
प्रथमं पूरयेच्चैव सहस्रकलशान् चरेत्  २१
सितशाली हेमशाली प्रस्थञ्चैव पृथक्पृथक्
परिवारघटान्स्थाप्य पूर्वे वालङ्कृतन्तथा  २२
गोघृतेनैव संपूर्य अधिवासनमारभेत्
शिवं संपूजयेत्पश्चात् तत्तन्नाम्ना प्रपूजयेत्  २३
सहस्राहुतिमेवोक्तं वर्द्धन्यास्तु तदर्द्धकम्
शतं विद्येश्वरांश्चैव अन्येषां सप्तविंशतिम्  २४
पाद्यद्रव्यसमायुक्तं विशेषमुशिरं क्षिपेत्
आचम्यपूर्ववत्कृत्वा तुळसीं मद्ध्यमे न्यसेत्  २५
अर्घ्यन्तु पूर्ववत्कृत्वा तण्डुलम्मद्ध्यमे न्यसेत्
मूलबेरे विशेषेण स्नानं कान्तोदकं भवेत्  २६
वस्त्रं कर्पूरसंयुक्तं उशीरं गन्धसंयुतम्
भूषणं काञ्चनैर्युक्तं द्रोणपुष्पन्तथैव च  २७
मन्दारञ्चैव पुन्नागं श्वेतार्कञ्चैव पूजयेत्
धूपं कुङ्कुमसंयुक्तं दीपञ्चाशीति सङ्ख्यया  २८
निवेद्य चाथमुद्गान्नं व्यञ्जनं आम्रमेव च
कारवल्ली च संयुक्तं पानीयञ्च ततश्शृणु  २९
कुहूः पृथ्वीनामयत्र तत्तीरे जातयेत् जलम्
संगृह्यस्वर्णपात्रे च कुंभोद्भवं प्रकीर्तितम्  ३०
पानीय्यमिति विज्ञेयः मुखवासन्ततश्शृणु

पूर्ववन्मुखवासञ्च लवङ्गञ्चैव संयुतम्  ३१
रागं गान्धारमेवोक्तं गीतं द्राविडमुच्यते
ताळमट्टयसंयुक्तं नृत्तं वैष्णवमुच्यते  ३२
वाद्यं भेरीन्तु सन्ताड्य दूर्वापत्रसमन्वितम्
मधूकं बन्धनं प्रोक्तं श्रीवृक्षसमिधाहुनेत्  ३३
शेषं पूर्वोक्तवत्कल्प्य होमयेत् शान्तिकर्मणि
क्रमेण कलशान्ग्राह्य मूलबेरेऽभिषेचनम्  ३४
उष्णांबुना च संस्नाप्य धौतवस्त्रेण वेष्टयेत्
गन्धपुष्पैरलङ्कृत्य नैवेद्यं धूपदीपकम्  ३५
स्तोत्रं संगीतनृत्तञ्च सन्तुष्टं परिकल्पयेत्
एवं यः कुरुते मर्त्यः सायुज्यपदमाप्नुयात्  ३६
इति चापमासपूजापटल एकोनत्रिंशत्तमः

## आर्द्राव्रतलक्षणपटलप्रारंभः

अथ वक्ष्ये विशेषेण आर्द्राव्रतस्य लक्षणम्
शुक्लपक्षे शुभे चैव मासऋृक्षं प्रधानकम्  १
पर्वयुक्तमयुक्तं वा शिवऋृक्षप्रधानकम्
एकमासे द्विनक्षत्रे अन्त्यर्क्षे व्रतमाचरेत्  २
पूर्वर्क्षे पर्वसंयुक्तं अन्त्यर्क्षे तिथिवर्जितम्
अन्त्यर्क्षे दर्शनं कुर्यात् उत्तमन्तु प्रशस्यते  ३
पूर्वर्क्षे पूजनं कुर्यात् यजमानो विनश्यति
अन्त्यर्क्षे पूजनं कृत्वा विशेषं श्रुणु षण्मुख  ४
एकमासे द्विपर्वे च नक्षत्रे पर्वयुक्तके
अन्त्यर्क्षे व्रतपूजाञ्च उत्तमं परिकीर्तितम्  ५
पर्वहीनद्वये ऋृक्षे अन्त्ये व्रतमथाचरेत्
तिथिऋृक्षे द्विवारे च ऋृक्षप्राधान्यमेव च  ६
द्विवारे खण्डिते ऋृक्षे निशियुक्ते विशेषतः
उदयाद्यष्टनाडी च तद्दिने व्रतमाचरेत्  ७
तद्दिने तीर्थमित्युक्तं पूर्वरात्रौ तु दर्शनम्

उदयाद्युदयान्तञ्च आर्द्रानक्षत्रमेव वा ८
तीर्थं व्रतञ्च मद्ध्याह्ने तद्रात्रौ स्नानदर्शनम्
पूर्वरात्रौ समारभ्य परे चास्तमनान्तकम् ९
आर्द्रऋक्षं प्रकुर्वीत पूर्वरात्राभिषेचनम्
व्रतं परे हनि चैव मद्ध्याह्ने तीर्थमाचरेत् १०
सायाह्ने डोलपूजाञ्च चरेत् आर्द्रोत्सवं ततः
उदयाद्युदयान्तञ्च आर्द्रानक्षत्रमेव वा ११
तीर्थं व्रतञ्च मद्ध्याह्ने सायाह्ने डोलमाचरेत्
तद्रात्रौ कृष्णगन्धञ्च निशान्ते दर्शनन्तथा १२
अभिषेके निशी चैव आर्द्रान्तत्समये सति
उत्तमं स्नानमित्युक्तं सर्वकर्मशुभावहम् १३
पूर्वरात्रौ तु विंशत्यां नाडिकापर्वऋक्षकम्
परे हनि विशेषेण चत्वारिनाडिका तथा १४
रात्रौभिषेकं कुर्वीत अपरे व्रतमाचरेत्
नाडीकादशकं पूर्वे पञ्चाशन्नाडिकापरे १५
स्नानञ्च कृष्णगन्धञ्च दर्शनं पूर्वरात्रिके
व्रतं तीर्थञ्च डोला च पूजयेत्तु परे हनि १६
नाडिकापञ्चकं पूर्वे शेषऋक्षं परे हनि
पूर्वेऽभिषेचनं कृत्वा परे हनि व्रतञ्चरेत् १७
पञ्चाशन्नाडिकापूर्वे तस्योपरिविशेषतः
चतुःत्रयद्वेप्येका नाडिका आर्द्रऋक्षकम् १८
प्रभातात्पूर्ववृद्धिश्चेत्परे ह्रासं समाचरेत्
परे वृद्धिं पूर्वे ह्रस्वं कथं शंभोस्सुपूजनम् १९
यः प्रातस्समयात्पूर्वं त्रिमुहूर्त्तन्तु निश्चयम्
पूर्वे वाथ परे वापि नाडिकां कत्थ्यते गुह २०
पूर्वरात्रौ द्विनाडी च शेषनाड्यः परे हनि
अष्टोत्तरञ्च पञ्चाशत् नाडिकाकत्थ्यते ध्रुवम् २१
कथं पूज्य विशेषेण पूजयेद्दर्शनं परे
त्रिमुहूर्ते पूर्वरात्रौ आर्द्रानक्षत्रमेव वा २२

अष्टोत्तरञ्च पञ्चाशत् नाडिकाञ्च परे हनि
कथं संपूजयेत्पश्चात्पूर्वरात्रौ समाचरेत् २३
आर्द्रा च मृगशीर्षा च चतुर्दश्या च तद्दिने
व्याधिनापीडिते राष्ट्रं तस्मात्पूजां परे हनि २४
त्रयोदश्या चतुर्दश्या संयुते चैव तद्दिने
आर्द्राऋक्षन्तु संपूर्णं उच्यते पूजनं कथम् २५
शान्तिं कृत्वा तु शमनं पश्चात् नृत्तेशमर्चयेत्
शुक्लपक्षे च षष्ठी च शतभिषक् ऋक्षसंयुतम् २६
विनायकव्रतं पूज्यं तद्दिने व्रतमुच्यते
षष्ठियुक्तमयुक्तं वा ऋक्षप्राधान्यमाचरेत् २७
शतभिषादिऋक्षान्तं गौरीव्रतं प्रकीर्तितम्
अपूपान्लड्डुकान्लाजान् गुळखण्डेक्षुखण्डकान् २८
अन्नं बहुविधैश्चैव विघ्नेशाय प्रदापयेत्
रात्रिपूजावसाने च रक्षाबन्धनमुत्तमम् २९
अङ्कुरं कल्पयेत्पश्चात् गौरी यानं समाचरेत्
रात्रिकाले महायानं दशरात्रं पृथक्पृथक् ३०
अहनि वर्जयेद्यात्रां रात्रौ चैव समाचरेत्
पूर्वरात्रौ तु शफरं पिङ्गलं द्वितिये निशि ३१
तृतीये तु कपोतं स्यात् चतुर्थे सिह्ममुच्यते
पञ्चमे हंसयानञ्च षष्ठे शिबिकयन्त्रकम् ३२
सप्तमे समरभूपालं अष्टमे वाजियन्त्रकम्
नवमे ऋषभञ्चैव दशमे पुष्पधामकम् ३३
दशमे दिवसे चैव आर्द्रादिनव्रतं श्रुणु
गौर्याश्चाभ्यङ्गनात्पश्चात् भक्तानां भावयेत्ततः ३४
नारीणाञ्च सुमङ्गल्याः अभ्यङ्गस्नानमाचरेत्
शालितण्डुलमाहृत्य पृष्ठं सम्यक्प्रकल्पयेत् ३५
त्रिपादं गुळसंयुक्तं तदर्द्धं नाळिकेरकम्
तदर्द्धं मुद्गसंयुक्तं अष्टांशं आज्यसंयुतम् ३६
एलकं जीरकञ्चैव हिंगुं युक्त्वा प्रकल्पयेत्

गौरीञ्च दापयेत्पश्चात् भक्तानान्दापयेत्ततः ३७
पूर्वरात्रौ विशेषेण नटेशं भावनुज्ञया
पीठमुद्रासनञ्चैव पूर्वरात्रिं प्रकल्पयेत् ३८
कौतुकं बन्धयेत्पश्चात्स्नानकर्मपरे हनि
रात्रावष्टादशनाड्योर्ध्वे अभिषेकं समाचरेत् ३९
चतुरुत्तरपञ्चाशत् नाडिकोर्ध्वे निवेदयेत्
धूपदीपादिकं दत्वा दर्शनं कारयेत्ततः ४०
प्रच्छन्नपटमानीय्य आर्द्राऋक्षप्रदर्शनात्
चतुरुत्तरपञ्चाशत् ऊर्ध्वे चैव द्विनाडिका ४१
उत्तमं ऋक्षमित्युक्तं तदूर्ध्वे द्वौ च मद्ध्यमम्
तदूर्ध्वे नाडिके द्वे च अधमं परिकीर्तितम् ४२
आदौ तु दर्शनं मुख्यं कारयेत्साधकोत्तमः
पिपीलिकादिकश्चैव दर्शनात्पूर्वमेव वा ४३
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
पुनरादायगमनं ब्रह्मसन्ध्यन्तमुच्यते ४४
यामं गत्वा ततः पश्चात् अधिवासनपूर्वकम्
यक्षकर्दममादाय नटेशाय प्रदापयेत् ४५
जनानां शिवभक्तानां दापयेच्चण्डपूर्वकम्
ललाटे तिलकं कुर्यात्पश्चाद्वीधीप्रदक्षिणम् ४६
उदयात्पूर्वसमये देवो वीधी प्रदक्षिणम्
कर्तव्यमिति संज्ञेयः वर्जयेदुदयात्परम् ४७
अभावे विड्वरे वापि मृतं वा वृष्टिसंभवम्
तत्काले तु कथं विद्यात् उदयानन्तरं गुह ४८
पादो न द्विमुहूर्तञ्च तावद्वीधीप्रदक्षिणम्
तस्योपरित्यजेत्कार्यं उत्सवन्तु न कारयेत् ४९
मोहेन कारयेत्पश्चात् अभिचारसमं भवेत्
उत्सवन्तु विहीनश्चेत् अघोरास्त्रं शतं हुनेत् ५०
डोलारोहक्रमं वक्ष्ये लङ्कृतं डोलमण्टपम्
कदळी पूगपुन्नागचिकुरादिलङ्कृतम् ५१

चित्रवस्त्रैरलङ्कृत्य दिव्यपुष्पैरलङ्कृतम्
चतुस्तंभसमायुक्तं शफराकृतिमुत्तमम्  ५२
स्वर्णादिशृङ्खलं बध्वा पीठे त्वशमनं यजेत्
वीरशक्तिमलङ्कृत्य तूर्यवाद्यैस्समन्वितम्  ५३
स्थिरासनं समभ्यर्च्य तस्योपरिनिवेशयेत्
तस्याग्रे भिमुखं स्थित्वा सोमास्कन्देश्वरं यजेत्  ५४
धूपदीपादिकं कृत्वा गौरीमादाय मन्दिरम्
गत्वा सौभाग्य सिद्ध्यर्थं वक्ष्येऽहं डोललक्षणम्  ५५
कदलीफलपूगैश्च नाळिकेरैश्च चंपकैः
करञ्जवृक्षशार्दूलयुगवर्षप्रमाणतः  ५६
स्तंभद्वयञ्च संस्थाप्य द्विशिखा कृतिमद्भुतम्
चन्दनं पनसैर्नीपञ्चक्कुरुजैः कुञ्जरं चरेत्  ५७
षट्करं दीर्घसंयुक्तं युगसङ्ख्या च मद्ध्यमम्
चतुर्विंशाङ्गुलं नाहं अष्टाश्रं परिकीर्तितम्  ५८
द्वादशाङ्गुलनाहं स्यात् व्रतञ्चैव द्विपार्श्वयोः
साष्टहस्तन्तु दीर्घं स्यात् षडङ्गुलघनं भवेत्  ५९
द्वादशाङ्गुलविस्तारं पार्श्वाग्रे वृत्तमाकृतिम्
अग्रे तु सुषिरञ्चैव पार्श्वयोश्च षडङ्गुलम्  ६०
मद्ध्येष्टाङ्गुलविस्तारं द्वारञ्च चतुरश्रकम्
तदेवफलकं युग्मं संयुतं बन्धयेत्ततः  ६१
तदेवयुग्मसंयुक्तं द्विपार्श्वे घट्टयेत्किल
कुपुरे पार्श्वयोर्बन्ध्य विमलं फलकायुतम्  ६२
नाहमष्टाङ्गुलं प्रोक्तं षट्करन्दीर्घसंयुतम्
कुपुरं पञ्चभागं स्यात् द्विभागं पार्श्वयोस्त्यजेत्  ६३
तस्यादौ सुषिरञ्चैव त्यङ्गुलं समुदाहृतम्
त्रियङ्गुलघनञ्चैव द्विकरं दीर्घमुच्यते  ६४
त्रयेषुसुषिरेषुश्च त्रिकीलं घट्टयेत्ततः
षडङ्गुलन्तु विस्तारं त्रियङ्गुलघनं भवेत्  ६५
कीलत्रयेषु संबन्ध्य हंसाङ्कयं परिकीर्तितम्

गणिकाष्टकसंयुक्तं रथाख्यं श्रुणुषरामुख  ६६
साष्टहस्तसमायाम द्विकरं दीर्घनाहकम्
अपर्वकतरुश्चैव पुरुषद्वयमायतम्  ६७
तस्याग्रे करमानञ्च नाहञ्चैव प्रकीर्तितम्
षोडशं हस्तदीर्घञ्च एकस्तंभं विधीय्यते  ६८
पूर्वादिपश्चिमान्तं वा उत्तरादक्षिणान्तकम्
षडङ्गुलघनञ्चैव अष्टाङ्गुलसुविस्तरम्  ६९
करं षोडशदीर्घं स्यात् फलकद्वयमुत्तमम्
मद्ध्ये तु सुषिरं विद्यात् द्विपूर्षोर्ध्वे तु बन्धयेत्  ७०
तन्मानं फलकायुग्मं पूर्वाग्रे पश्चिमाग्रके
तन्मानं फलकायुग्मं दक्षिणे उत्तराग्रयोः  ७१
मद्ध्ये मद्ध्ये च संबद्ध्वा अग्रे अग्रे च बन्धयेत्
तस्योर्ध्वे करमानेन ऊर्ध्वे चतुविना तथा  ७२
त्रिभागं पूर्ववत्कृत्वा -------------
तस्योर्ध्वे करमानेन पूर्ववच्च त्रयंशुकम्  ७३
चतुरंशं विना चैव तस्योर्ध्वे पूर्ववच्चरेत्
कीलानग्रे तदग्रे च तदग्रे शृङ्गनिर्मितम्  ७४
तस्योर्ध्वे मकुटं कल्प्य चित्रवस्त्रैरलङ्कृतम्
पतकं कोणस  --  षु  ------------  ७५
गणिकाहूय---------  प्रथमे द्वादशन्तथा
द्वितीय्य अष्टकन्या च तृतीय्ये नरकसूत्रगम्  ७६
भ्रामयेत् वै ----  प्रादक्षिणय क्रमेण वा
रथाख्यं कल्पयेत्पश्चात् ----- विनिलं श्रुणु  ७७
सुव्रतं -------------------------
पूर्ववत्स्तंभमालिख्य तस्याग्रे द्विशिखा कृति  ७८
तन्मद्ध्ये चैव लिख्या च नारा च कृतिमुत्तमम्
त्रिदशस्तंभदीर्घञ्च विंशाङ्गुलसुनाहकम्  ७९
मद्ध्ये तु सुषिरं कल्प्य नाराचं मद्ध्यमे न्यसेत्
दण्डाग्रे शृङ्खलं बद्ध्य ऊर्ध्वोदुंबरमद्ध्यमे  ८०

पार्श्वयोदुंबराकारं अ्रधोदुंबरमेव च
संबद्ध्य ------ मद्ध्यमे श्रुणु ८१
अ्रयसा चैव नाराचं ----------------
द्विपार्श्वे ------------ सक्तमद्ध्यमे ८२
मेखलाकृतिमद्ध्ये वा कटिमद्ध्यप्रदेशके
--------------- विनिलं डोलमुच्यते ८३
प्रादक्षिरयय क्रमेरयैव चक्रभृंगन्ततश्शृणु
पूर्वोक्तस्तंभसंयुक्तं तस्योपरिविशेषतः ८४
हंसडोलाकृतिश्चैव चतुःफलकसंयुतम्
चतूफलकसंयुक्तमष्टकीलन्तु पार्श्वयोः ८५
मद्ध्ये तु पुरसंयुक्तं तत्पार्श्वे बन्धयेद्ध्रुवम्
रज्जुनाबन्धयेन्मद्ध्ये किलासुश्छन्नभिन्न च ८६
गणिकाषट्कमद्ध्ये च वर्त्तुळं भ्रमराकृतिम्
नृत्तैर्बहुविधैश्चैव अ्रङ्गमार्गेण यत्तथा ८७
डोलोत्सवमिदं प्रोक्तं सर्वकर्मफलप्रदम्
एवं ज्ञानेन संपूज्य सपुरयां गतिमाप्नुयात् ८८
इति अ्रार्द्राव्रतलक्षणपटलत्रिंशत्तमः

पुष्यमासमधुपूजापटलप्रारंभः

अ्रथ वक्ष्ये विशेषेण मधुपूजाविधिक्रमम्
मकरस्थे दिवानाथे तन्मासे शुक्लपक्षके १
पुष्यऋृक्षसमायुक्तं पर्वयुक्तं विशेषतः
खरिडते यदि नक्षत्रे उदयात् षोडशनाडिका २
तद्दिने कारयेत्पूजामुत्तमं परिकीर्तितम्
एकमासे द्विनक्षत्रे द्विऋृक्षे पूजयेच्छिवम् ३
एकमासे द्विपर्वे च ऋृक्षयुक्ते विशेषतः
ऋृक्षहीने तु पर्वे च न पूजां कर्त्तुमर्हसि ४
पूर्वञ्च यागशालाञ्च मद्ध्ये वेदिं प्रकल्पयेत्
तत्पूर्वे कुरडमाकल्प्य अ्रर्द्धचन्द्रं प्रकीर्तितम् ५

ऐशान्ये वेदिकाङ्कृत्वा दशकुंभञ्च मद्ध्यमे
मक्षिकं बालमधुना उत्तमं परिकीर्तितम्  ६
बृह्मन्मक्षिकमेवोक्तं मद्ध्यमं परिकीर्तितम्
सहस्त्रप्रस्थसंयुक्तं तस्यार्द्धं वा तदर्द्धकम्  ७
अथवा शतसङ्ख्या च तस्यार्द्धं वा तदर्द्धकम्
शिवकुंभे शिवं पूर्य षट्प्रस्थं शक्तिकुंभके  ८
आढकं वसुकुंभे च प्रस्थं प्रस्थं तदन्यके
पङ्कजं रत्नसहितं सकूर्चं हेमपल्लवम्  ९
ससूत्रन्नाळिकेरञ्च वस्त्रधान्ये च संस्थितम्
पूर्वोक्तविधिना हुत्वा औदुंबरसमिद्धुनेत्  १०
नीवारं होमयेच्चैव शेषं पूर्ववदाचरेत्
इन्धनं वकुळा प्रोक्तं अधिवासनपूर्वकम्  ११
मण्डलेशं समभ्यर्च्य नैवेद्यं धूपदीपकम्
पाद्यं पूर्ववदेवोक्तं चन्दनन्तु विशेषतः  १२
आचार्यबिल्वपत्रञ्च अर्घ्यन्तु यवमुच्यते
स्नानमाढ्योदकैर्युक्तं शेषं पूर्ववदाचरेत्  १३
वस्त्रं कपिलमित्युक्तं गन्धं अगरुमेव च
भूषणैराजतैर्युक्तं पुष्पं स्यात् श्वेतपद्मकम्  १४
श्रियावर्त्तञ्च मन्दारं नन्द्यावर्तं समर्चयेत्
नैवेद्यं पायसञ्चैव व्यजनं कदळी तथा  १५
नाळिकेरं प्रकल्प्याथ पानीयञ्च ततश्शृणु
शुद्धांबुवस्त्रपूतञ्च स्वर्णपात्रेषु निक्षिपेत्  १६
एलालवङ्गकर्पूर चन्दनं मृगनाभिकम्
पानीय्यमिति विख्यातं कर्पूरं मुखवासकम्  १७
अगरुन्धूपमेवोक्तं दीपञ्चैव ततश्शृणु
एकपात्रे विशेषेण अष्टोत्तरशतन्तु वा  १८
कर्णिकाकृतिमद्ध्ये च तन्तुना मद्ध्यमे वलेत्
शेषं पूर्ववदाकृत्वा मेफरागं सुपाठितम्  १९
गीतं वराळिकायाञ्च ------------

ताळं वै मल्लिकामोदं ------------- २०
नृत्तं अशोकमित्युक्तं वाद्यं मद्दळमुच्यते
शिवसन्तुष्टमनसाद्ध्यात्वा चैव समाचरेत् २१
एवं वै मासपूजाञ्च आयुर्वर्द्धनमुत्तमम्
इष्टकाम्यार्त्थसिद्ध्यर्त्थं शिवसायुज्यमाप्नुयात् २२
इति पुष्यमासमधुपूजाविधिपटल एकत्रिंशत्तमः

माघमासघृतकम्बळपूजापटलप्रारंभः
अथ वक्ष्ये विशेषेण सर्वज्ञानप्रदायकम्
मासे च कम्बळं पूज्य पुत्रपौत्राभिवर्द्धनम् १
कुम्भस्थरविमासे तु पौर्णम्यां सितपक्षके
माघऋक्षे माघमासे -------------- २
उदयाद्युदयान्तञ्च ऋक्षं पर्वतसंयुतम्
उदयाद्यस्तमनान्तञ्च विंशति नाडिकाथवा ३
तद्दिने ऋक्षसंयुक्तं मासपूजां प्रकल्पयेत्
पूर्वोक्तयागं सङ्कल्प्य वेदिकां मद्ध्यमे चरेत् ४
कल्पयेत् श्रीविशालञ्च मण्डलं पञ्चवर्णकैः
गुणाश्रकुण्डं सङ्कल्प्य मेखला त्रयमुत्तमम् ५
ऐशान्ये वेदिकाङ्कृत्वा दशकुंभञ्च मद्ध्यमे
शिवं संपूजयेत्कुम्भे स्वर्णपङ्कजमुत्तमम् ६
पुष्यरागं न्यसेन्मद्ध्ये पूर्वे वालङ्कृतं घटम्
मण्डले शिवमभ्यर्च्य पूर्ववत् अधिवासनम् ७
इन्धनं कुन्दशाखैश्च अश्वत्थं होमयेत्ततः
गोघृतं धान्यहोमश्च ---- तुळसीदळम् ८
---पूर्ववत्कृत्वा वेणुबीजं न्यसेत्ततः
आचम्य निक्षिपेत् जंबू पल्लवं परिकीर्तितम् ९
अर्घ्यं सिद्ध्यर्त्थकं पूज्य मूलबेरेऽभिषेचयेत्
तद्दिने तु विशेषेण कर्षयोदकमुच्यते १०
धौतवस्त्रेण संवेष्ट्य विविधैर्वस्त्रपूरितम्

कर्षं गन्धेन संयोज्य लेपयेद्धृदयेन तु ११
स्फटिकं शतसङ्ख्या च मणिभिर्भूषितन्ततः
करवीरञ्च वकुळं शतपत्री तथैव च १२
बहुकर्णिका समभ्यर्च्य कम्बळञ्च ततश्शृणु
मेषं शक्तिमृगञ्चैव आपूरित्याख्यरोमकम् १३
श्वेतमेषञ्च रोमञ्च उत्तमं परिकीर्तितम्
कृष्णमेषन्त्यजेच्चैव विशेषं श्रुणु षण्मुख १४
कम्बळं पञ्चवर्णैश्च कृष्णदोषो न विद्यते
रोमजं कंबळञ्चैव उत्तमं परिकीर्तितम् १५
दशहस्तसमं दीर्घं षट्वितस्ति च विस्तरम्
मद्ध्यमं सप्तहस्तं स्यात् पञ्चहस्तन्तु कन्यसम् १६
चित्रकम्बळमाख्यातं रक्तपीताञ्जनो हरिः
श्वेतनीलनिभञ्चैव चित्रकम्बळमुत्तमम् १७
चमरो मृगरोमश्च कन्यसं परिकीर्तितम्
घृतमष्टादशप्रस्थं द्वादशप्रस्थमेव वा १८
षट्प्रस्थमथवा कुर्यात्कम्बळं स्नापयेत्ततः
अलाभे द्रव्यहीने वा कार्पासं वस्त्रमेव वा १९
अधिवासनमेवोक्तं स्थापयेत्स्थलिकोपरि
गन्धपुष्पैरलङ्कृत्य कूर्चं मद्ध्ये च निक्षिपेत् २०
परिचारकमाहूय विन्यसेत्तस्य मस्तके
तूर्य्यवाद्यैस्समायुक्तं गीतनृत्तैरलङ्कृतम् २१
शनैः प्रदक्षिणं कृत्वा पिञ्छचामरसंयुतम्
निराजनविधिं कृत्वा गर्भगेहे प्रवेशयेत् २२
लिङ्गं च वेष्टयेच्चैव बहुदीपैरलङ्कृतम्
गुळान्नन्तु निवेद्याथ अन्यैरपि निवेदयेत् २३
चूतं निष्पावसंयुक्तं व्यञ्जनं परिकीर्तितम्
औदुंबरं समादाय त्रिपादीपूर्ववच्चरेत् २४
तन्मद्ध्ये सुषिरं कल्प्य मृत्कुम्भं मद्ध्यमे न्यसेत्
माषमात्रन्तु सुषिरं तन्मूले स्वर्णपुष्पकम् २५

कुम्भमद्ध्ये जलं क्षिप्य वस्त्रपूतं विशेषतः
तृणं पाटलिपुष्पञ्च रोचनामेलकन्तथा २६
वासनां कल्पयेत्पश्चात्सृगोदकन्निवेदयेत्
पूर्ववत् मुखवासञ्च जातीसहितदापयेत् २७
रागं गान्धारमित्युक्तं गीतं दशाक्षरी तथा
ताळमट्टयमेवोक्तं प्रत्यालीढं सुनृत्तकम् २८
जर्झरीवाद्यमित्युक्तं मासपूजां समाचरेत्
त्रिपादोत्तरनाडी त्रि अन्ते पूजां समाचरेत् २९
घृतकम्बळमाहृत्य विसर्जनमतः परम्
पुनश्च स्नाननैवेद्यं पूर्ववत्कल्पयेत्ततः ३०
एवं यः कुरुते मर्त्यः शिवदीक्षाफलं लभेत् ३१
इति माघमासघृतकम्बळपूजाविधिपटलः द्वात्रिंशत्तमः

शिवरात्रिपूजापटलप्रारंभः

अथातस्संप्रवक्ष्यामि शृणुष्मशरवणोद्भव
शिवरात्रिव्रतं पुण्यं सर्वपापप्रणाशनम् १
राजराष्ट्राभिवृद्ध्यर्थं शिवज्ञानप्रदायकम्
माघफाल्गुनयोः कृष्ण चतुर्दश्यां शुभे दिने २
सौरमासे व्रतं कुर्यात् चान्द्रमानेन कारयेत्
सौरमानं यथा शंभो चन्द्रवृद्धिदिनन्तथा ३
प्रथमादिनमारभ्य अमावास्यान्तिकं क्रमात्
त्रिंशद्दिनं प्रकुर्वीत चान्द्रमानमिहोच्यते ४
मेषादिराशिगमनं सौरमानं प्रशस्यते
सौरमाने विशेषोऽस्ति मासऋक्षप्रथानकम् ५
चैत्रर्क्षं मेषमासे तु चैत्रमासं प्रकीर्तितम्
विशाखर्क्षन्तु वृषभे वैशाख इति कथ्यते ६
मूलर्क्षं ज्येष्ठमासे तु मिथुने तु प्रशस्यते
उत्तराषाढकटकं आषाढं परिकीर्तितम् ७
श्रविष्ठर्क्षं केसरी च श्रावणं परिकीर्तितम्

कन्यागते रविश्चैव उत्तरप्रोष्ठपन्तथा ८
एवं प्रोष्ठपदं प्रोक्तं तुलाराशिगते रविः
अश्विनी ऋक्षमेवोक्तं आश्विजं परिकीर्तितम् ९
कृत्तिका ऋक्षयन्मासे कार्तिके च प्रकीर्तिकम्
आर्द्रा ऋक्षं प्रकुर्वीत मार्गशीर्षमिहोच्यते १०
पुष्ययुक्तन्तु यन्मासं पुष्यमासं प्रकीर्तितम्
माघ ऋक्षन्तु यन्मासं माघमासं प्रकीर्तितम् ११
ऋक्षमुत्तरसंज्ञेयः फाल्गुन्यमिति कत्थ्यते
पर्वसंयुक्तऋक्षञ्च तत्तन्मासाख्यमेव वा १२
यन्मासे कृष्णपक्षे च उत्तमं परिकीर्तितम्
अथवा परविद्धे च कर्तव्यं शिवरात्रिकम् १३
पूर्वविद्धान्त्यजेच्चैव सर्वकार्येषु सम्मतम्
तिथिद्वये तु संप्राप्ते मासादौ प्रथमे हनि १४
मासान्ते तु त्रयोदश्यां चतुर्दश्यायुतन्तु वा
पूर्वे तु कथितं श्रेष्ठं अन्तं मद्ध्यममुच्यते १५
दिवात्रयोदशी चैव रात्रौ चैव चतुर्दशी
सारात्रिश्शिवरात्रिस्स्यात् उत्तमं परिकीर्तितम् १६
उदयाद्युदयान्तञ्च अहोरात्रञ्चतुर्दशी
उत्तमं शिवरात्रिः स्यात् पूजनीयं शिवस्य च १७
त्रयोदशी चतुर्दश्यां शिवरात्रिं प्रपूजयेत्
पारणन्तु चतुर्दश्यां विशेषं परिकीर्तितम् १८
आदौ त्रयोदशी चैव मद्ध्यमं च चतुर्दशी
अन्ते कुहूसमायुक्तं मद्ध्यमं परिकीर्तितम् १९
तद्दोषशमनार्त्थाय पञ्चास्त्रैश्च शतञ्जपेत्
पूजा ---- पश्चात्पूजां समाचरेत् २०
उदयाद्यस्तमनान्तञ्च चतुर्दशितिथिर्भवेत्
कुहूयुक्तञ्च तद्रात्रौ शिवपूजां विवर्जयेत् २१
पूर्वरात्रौ शिवं पूज्य सर्वकर्मार्हको भवेत्
पूर्वरात्रौ चतुर्दश्यां पञ्चादशविनाडिका २२

परे हनि निशी चैव पक्षसङ्ख्या च नाडिका
पूर्वरात्रौ प्रकर्तव्यं शिवरात्रिव्रतञ्चरेत् २३
पूर्वे त्रयोविंशत् नाडि नाडिका तत्र उच्यते
परे हनि चतुर्दश्यां पञ्चाशन्नाडिका तथा २४
ऊर्ध्वे कुहूसमायुक्तं मद्ध्यमं शिवरात्रिकम्
हरिश्रविष्ठवारीश ऋक्षसंयुक्ततद्दिने २५
तद्रात्रौ शिवपूजाञ्च प्रमादोषो न विद्यते
तद्दिने सोमवारं स्यात् त्रिकोटिशिवरात्रिकम् २६
तद्रात्रौ पूजयेत्पश्चात् उत्तमं शिवरात्रिकम्
केवलं कुहुयुक्तं वा मद्ध्यमं पूजयेच्छिवम् २७
तद्दोषशमनार्त्थाय पञ्चास्त्रैर्होमयेत्ततः
पृथक्पृथक्सहस्त्रञ्च हुत्वा पूजां समाचरेत् २८
एकदन्तकृतां पूजां त्रेतायां स्कन्दपूजितम्
आत्मभूर्द्वापरे पूजां कलौ संपूजयेद्धरिः २९
शिवपूजां प्रवक्ष्यामि नित्यपूजावसानके
चतर्य्यामं प्रकुर्वीत पुण्याहं वाचयेत्ततः ३०
अष्टोत्तरशतञ्चैव स्नपनं पूर्वयामके
एकाशीतिघटं स्थाप्य द्वियामे पूजयेच्छिवम् ३१
घटमेकेन पञ्चाशत्स्नपनञ्च त्रियामके
पञ्चविंशत् घटान्स्थाप्य चतुर्यामं प्रपूजयेत् ३२
प्रथमे बिल्वपत्रैश्च द्वितीय्ये कुन्दमुच्यते
सुखपत्रैः प्रपूज्यैश्च कपित्थैश्च तृतीय्यके ३३
निर्गुण्डी च चतुर्यामे पत्रैरभ्यर्चनन्तथा
प्रथमे पञ्चगव्यञ्च पञ्चामृतं द्वितीयके ३४
फलोदकं तृतीये च गन्धतोयञ्चतुर्त्थके
प्रथमे रक्तवस्त्रन्तु द्वितीये पीतवस्त्रकम् ३५
तृतीये श्वेतवस्त्रञ्च चतुर्त्थे श्यामवर्णकः
वस्त्रभेदाः ------------ प्रकीर्तिताः ३६
चन्दनञ्चैव कर्पूरं पूर्वयामे प्रपूजयेत्

अगरूञ्चैव कस्तूरीं द्वितीये पूजयेत्ततः ३७
यक्षकर्दमगन्धञ्च तृतीये पूजयेत्ततः
हिमांबुनाभितैलञ्च गन्धं वै तुर्ययामके ३८
पायसान्नं पूर्वयामे परमान्नं द्वितीयके
कृसरान्नं तृतीये च शुद्धान्नन्तु चतुर्थके ३९
चन्दनञ्चैव निर्य्यासं धूपं वै पूर्वयामके
कुङ्कुमं कुन्दुरुष्कञ्च द्वितीये पूजयेत्ततः ४०
मेघञ्च कृष्णलोहञ्च तृतीये पूजयेत्ततः
कर्पूरञ्च लवङ्गञ्च चतुर्य्यामे प्रपूजयेत् ४१
प्रथमं पुष्पदीपं स्यात् द्वितीय्ये सप्तसङ्ख्यया
तृतीय्ये पञ्चसङ्ख्या च त्रिदळञ्च चतुर्थके ४२
रात्रिपूजां प्रकुर्वीत विघ्नेशं पूजयेत्ततः
पश्चाच्छिवं समभ्यर्च्य चतुर्थेषु पृथक्पृथक् ४३
प्रतियामं यजेच्चण्डं द्वारपूजान्न कारयेत्
उत्सवश्च बलिं हित्वा अग्निकर्मविवर्जयेत् ४४
मूलबेरे विशेषेण स्थिरासनं प्रपूजयेत्
अष्टपुष्पं समभ्यर्च्य भोगाङ्गन्तु विवर्जयेत् ४५
शर्कराराधनं पश्चात् चतुर्य्यामावसानके
केवलं अर्द्धयामार्त्थं अष्टपुष्पं समर्चयेत् ४६
नैवेद्यं धूपदीपञ्च पादुकाराधनं ततः
क्षेत्रपालं समभ्यर्च्य कवाटमरिबन्धनम् ४७
सद्योत्घाटनन्ततः पश्चात् नित्यकर्मसमाचरेत्
पूर्ववन्नित्यपूजाञ्च कारयेत् देशिकोत्तमः ४८
एवं वै शङ्करं पूज्य शिवसायुज्यमाप्नुयात्
इति शिवरात्रिपूजापटलस्त्रयस्त्रिंशत्तमः

फाल्गुनमासदधिपूजापटलप्रारंभः
अथ वक्ष्ये विशेषेण दधिपूजनमुत्तमम्
दधिमारोग्यसिद्ध्यर्त्थं सर्वाभीष्टप्रदायकम् १

पूर्ववत् यागशालाञ्च मद्ध्ये वेदिं प्रकल्पयेत्
वृत्तकुराडञ्चरेत्पूर्वं चतुरश्राख्यमराडलम् २
स्वर्णेन रजतेनैव कांस्यं मृत् घटमेव वा
वेदिका मद्ध्यमे कुम्भे चतुर्द्रोणं दधिक्षिपेत् ३
वर्द्धनी त्रयमित्युक्तं तस्यार्द्धं वा सुकुंभके
सहस्रकलशांश्चैव द्विप्रस्थञ्च पृथक्पृथक् ४
पूर्ववत्परिवारांश्च घटान्पूज्यविशेषतः
मराडले शिवमभ्यर्च्य उक्तमन्त्रेण होमयेत् ५
स्पर्शाहुतिन्ततः कृत्वा काष्ठैश्चन्दनवृक्षकैः
हुज्पनं इति संज्ञेयः अपामार्गं समिद्धुनेत् ६
अभिषेकन्ततः कृत्वा गन्धतैलादिभिर्यजेत्
परिमार्जनोदकमित्युक्तं पूर्ववत्स्नानमाचरेत् ७
स्वर्णवस्त्रञ्च संयुक्तं मृगनाभी च संयुतम्
चन्दनालिप्तलिंगे च शंखपुष्पसमन्वितम् ८
महाद्रोणं बन्धुजीवं जाती च कुशपुष्पकम्
गोमेदाभरणं प्रोक्तं पत्रं वै सिन्धुवारकम् ९
शुद्धोदनञ्च नैवेद्यं व्यजनं श्रिंगिबेरकम्
लिकुचञ्च निवेद्याथ दीपं वै शीतिसङ्ख्यया १०
उत्तमं शतदीपञ्च धूपञ्चैव ततश्शृणु
पूर्ववत् घृतसंयुक्तं धूपञ्चैव प्रकीर्तितम् ११
पूर्ववत् आमकुंभञ्च सुवर्णजलमुत्तमम्
नाळिकेरजलैर्युक्तं जलोदकमिहोच्यते १२
पटहं वाद्यमित्युक्तं गान्धारं कोल्लिमेव च
गीतं मुरारिसंयुक्तं लक्ष्मीताळं समीरितम् १३
पद्मपत्राख्यनृत्तञ्च वाद्यञ्चैव हिमांभसा
चन्दनैर्युक्तमाचम्य कर्पूरसहितं घृतम् १४
दधिपूजनमात्रेण नैवेद्यं धूपदीपकम्
अभिषिच्य ततः पश्चात्पूर्ववत्पूजनीय्यकम् १५
चराडेश्वरं समभ्यर्च्य मद्ध्याह्ने पूजनं चरेत्

एवं यः कुरुते मर्त्यः सपुण्याङ्गतिमाप्नुयात् १६
इति फाल्गुनमासदधिपूजापटलश्चतुस्त्रिंशत्तमः

चैत्रमासदान्तपूजापटलप्रारंभः
अथातस्संप्रवक्ष्यामि दान्तपूजाविधिक्रमम्
दान्तं श्रीकरमेवोक्तं सर्वसंपत्करं श्रियम् १
पूर्ववद्यागशालाञ्च नवाष्टमुनिहस्तयोः
पञ्चहस्तप्रमाणं वा मण्टपञ्चतुरश्रकम् २
वेदिकामद्ध्यमे चैव दर्पणोदरसन्निभम्
विस्तरार्द्धोन्नतं विद्यात्तत्पूर्वे कुण्डमुच्यते ३
षडश्रं कुण्डमाकल्प्य मणिमालाविभूषितम्
पञ्चवर्णैरलङ्कृत्य रक्तपद्मं समाचरेत् ४
मण्डलं पद्मभद्रञ्च पूर्ववत्परिकल्पयेत्
ऐशान्ये वेदिका मद्ध्ये दशकुंभन्न्यसेत्ततः ५
पूर्वोक्तविधिनावाह्य पूजयेत्तु विशेषतः
मण्डलेशं समभ्यर्च्य पाद्यमाचमनार्घ्यकम् ६
पूर्वोक्तविधिनाकल्प्य कुण्डं वै मद्ध्यमे क्षिपेत्
पाद्यन्दद्यात् विशेषेण आचम्य च ततश्शृणु ७
तृणञ्च मद्ध्यमे न्यस्य अर्घ्यञ्चैव ततश्शृणु
कुङ्कुमं मद्ध्यमे न्यस्य पूर्ववच्चार्घ्यमुच्यते ८
नित्यवद्वाभिषेकान्ते माधव्योदकमाचरेत्
चित्रवर्णाकृतिं वस्त्रं चकुळाख्यं प्रकीर्तितम् ९
चन्दभस्मं समाहृत्य चन्दनेनैव मिश्रकम्
लेपयेत् बेरलिङ्गे च पद्मरागाख्यभूषणम् १०
धारयेद्विधिवच्चैव कुसुमञ्च ततश्शृणु
विषकासिकदंबञ्च कदळीश्वेतलोद्ध्रकम् ११
पत्रं वा शमीवृक्षेषु नैवेद्यञ्च ततश्शृणु
हरिद्राभं प्रकुर्वीत बृहती परशुन्तथा १२
व्यजनं पूर्ववत्कृत्वा पानीयञ्च ततश्शृणु

सिन्धुगामिनदीमद्ध्ये खनित्वा घटमुत्तमम्  १३
तत्स्वेदजलमाहृत्य वस्त्रपूतं शुचिस्तथा
उशीरञ्चैव ह्रीबेरं गुळेनैव परिप्लुतम्  १४
पानीय्यमिति विख्यातं धूपञ्चैव ततश्शृणु
रागद्रव्यं न्यसेन्मद्ध्ये धूपं स्यात्परिकीर्तितम्  १५
पुष्पदीपाकृतिञ्चैव द्विशतं सङ्ख्यया क्रमात्
कस्तूरिसहितञ्चैव मुखवासं प्रकीर्तितम्  १६
सहस्त्रसङ्ख्ययादान्तं लिङ्गं न्यूनं शुचिर्भवेत्
तस्यार्द्धं वा तदर्द्धं वा स्पर्शाहुतिं समाचरेत्  १७
परिचारकमाहूय तस्योर्ध्वे मस्तके न्यसेत्
तूर्य्यवाद्यैस्समायुक्तं प्रादक्षिण्य क्रमेण वा  १८
शंभोश्च दापयेत्पश्चात् नैवेद्यं धूपदीपकम्
रागं श्रीकामरं प्रोक्तं गीतन्देशिकमुच्यते  १९
चण्डभिन्नाख्य ताळञ्च आरूढाख्यञ्च नृत्तकम्
वाद्यं मृदङ्गमित्युक्तं नृत्तगीतैस्समन्वितम्  २०
सन्तुष्टं भगवन्ध्यात्वा सर्वसौभाग्यसंपदम्
यागार्द्धान्ते त्यजेदान्तं चण्डेशाय प्रदापयेत्  २१
एवं वै विधिना प्रोक्तं राजाविजयमाप्नुयात्
पुत्रार्थीलभते पुत्रं अमुकान्तत्फलं भवेत्  २२
मोक्षार्थी मोक्षमाप्नोति शिव एव न संशयः  २३
इति चैत्रमासदान्तपूजापटलः पञ्चत्रिंशत्तमः

वैशाखगन्धपूजापटलप्रारंभः
अथातस्संप्रवक्ष्यामि गन्धपूजाविधिं श्रुणु
वृषे भानौ च यन्मासे तन्मासे शुक्लपक्षके  १
पर्वयुक्तन्तु यदृक्षं विशाखा ऋक्षसंयुते
नाडी षोडश हीने तु पूजां पूर्वदिने चरेत्  २
एकमासे द्विनक्षत्रे मासपूजा द्वयञ्चरेत्
गन्धपूजां श्रुणुष्वाथ सायुज्यपदसिद्धिदम्  ३

पूर्वोक्तविधिनायागं वेदिकां शास्त्रवच्चरेत्
तत्पूर्वेनैव कुराडञ्च पूर्ववत्परिकल्पयेत् ४
ऐशान्ये वेदिकां कृत्वा दशकुंभञ्च मद्ध्यमे
वेदी चैव इमाकान्तं ------ रव्यमराडलः ५
गन्धपूजां प्रकर्तव्यं षट्भेदं गन्धवृक्षकम्
अगरूगिरिवृक्षञ्च चन्दनन्देवदारुकम् ६
विफलं माधवं प्रोक्तं गन्धवृक्षं विधीय्यते
उत्तमं गन्धवृक्षं स्यात् शेषम्मद्ध्यममुच्यते ७
पलं सहस्रसङ्ख्या च सत्वरं काष्ठमाहरेत्
दशनिष्कप्रमाराञ्च शलाकां हेमनिर्मिताम् ८
ताडयेत्काष्ठमद्ध्ये च शिलेषं मथितं वृषम्
शुद्धवस्त्रे समादाय कस्तूरी चागशुन्तथा ९
कर्पूरं यक्षकर्दञ्च हिमांबुनाभिमराडले
घटेषु शिवमभ्यर्च्य शिवं संपूजयेत्ततः १०
पूर्वोक्तविधिनाहुत्वा स्पर्शाहुतिं समाचरेत्
परिचारकमाहूय उष्णीषादिरलङ्कतम् ११
सलिलं विन्यसेन्मूर्ध्नि प्रादक्षिराय क्रमेरा वा
गर्भगेहे निवेश्याथ मूलबेरे भिषेचयेत् १२
गन्धोदकं प्रकुर्वीत पूर्ववद्विधिनाचरेत्
श्यामवर्णनिभं वस्त्रं वेष्टयेत्परितः क्रमात् १३
कुङ्कुमेनाङ्कितं गन्धं लेपयेल्लिङ्गपीठके
अष्टोत्तरशतसङ्ख्या च पद्मबीजन्तु मालया १४
स्वर्णेन लाञ्छितं मद्ध्ये लिङ्गमूर्द्धनि दापयेत्
करवीरं रक्तपद्मं व्याघ्री च पाटली तथा १५
पुष्पैरभ्यर्चयेत्पश्चात् --- पत्रैरर्चयेत्
कपित्थं वेराुबीजेन अन्नराशिं शिवाग्रके १६
नारङ्गञ्चैव कूश्माराडं व्यञ्जनेन परिप्लुतम्
पानीय्यमनलारव्यञ्च उष्णोदकमिहोच्यते १७
जीरकं शर्करा चैव तन्मद्ध्ये मिश्रमुत्तमम्

पानीय्यमिति विख्यातं मुखवासन्ततश्शृणु १८
एलालवङ्गचूर्णञ्च मधुना च परिप्लुतम्
मुखवासन्ततः पश्चात्तृतीय्यं धूपमेव च १
दीपं द्विशतसङ्ख्या च शेषं पूर्ववदाचरेत्
पाद्यं कच्चोलसंयुक्तं कर्पूराचम्यमुत्तमम् २०
अर्घ्यन्तिलेन सहितं शिवाय परिदापयेत्
अग्नेः पूर्णाहुतिन्दत्वा इन्धनं पनसैश्चरेत् २१
अन्नदीपाचयेच्चैव कुण्डेष्वग्निं नियोजयेत्
समिधं बिल्वमेवोक्तं यवं हुत्वा क्रमेण तु २२
अन्तर्बहिर्बली कृत्वा अग्नि--- मद्यास्यसेत्
वाद्यञ्चमुरवं श्रेष्ठं रागं षट्पदमुच्यते २३
गीतञ्च रत्नसिह्मञ्च ताळमुत् घटितन्तथा
दण्डपादं सुनृत्तञ्च दापयेत् शिवसन्निधौ २४
यामार्द्धान्ते त्यजेत् गन्धं चण्डेशाय प्रदापयेत्
एवं वै मासपूजाञ्च सायुज्य पदमाप्नुयात् २५
इति वैशाखगन्धपूजापटलः षट्त्रिंशत्तमः

ज्येष्ठमासफलपूजापटलप्रारंभः

अथातस्संप्रवक्ष्यामि फलपूजाविधिक्रमम्
ज्येष्ठे मासिसितेपक्षे शुक्लपक्षे च पौर्णमे १
मूलर्क्षे पूजनं कुर्यात्पर्वयुक्तं विशेषतः
पर्वयुक्तमयुक्तं वा ऋक्षप्राधान्यमेव वा २
नाडिका षोडशे हीने पूजां पूर्वदिने चरेत्
एकमासे द्विनक्षत्रे अन्त्यर्क्षे पूजयेच्छिवम् ३
नित्यपूजादिने प्राप्ते क्रियाद्रव्यविहीनके
तद्दोषशमनार्त्थाय मासपूजां समाचरेत् ४
पूर्वोक्तयागं सङ्कल्प्य षोडशस्तंभसंयुतम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ५
मद्ध्ये वेदिं प्रकल्प्याथ उपवेदिं प्रकल्पयेत्

तत्पूर्वे कुगडमित्युक्तं अष्टाश्रं परिकीर्तितम् ६
वेदिकामद्ध्यमे चैव नवनाभाख्यमगडलम्
पञ्चवामैरलङ्कृत्य पूर्ववद्विधिनाचरेत् ७
ऐशान्ये वेदिकां कृत्वा दशकुंभं न्यसेत्ततः
कुगडस्य वामभागे तु धान्यपुञ्जैरलङ्कृतम् ८
शुद्धपात्रं समादाय क्षाळयेदस्त्रवारिणा
पक्वमाम्रफलञ्चैव अपक्तन्तु विवर्जयेत् ९
कदळ्याममृताख्यञ्च सुगन्धञ्च पिशाचकम्
गात्रं पुष्पसुगन्धञ्च स्नानकाले विशेषतः १०
नृसिंहं पर्वतञ्चैव इक्षुकाळन्तु पूजनम्
नैवेद्यकाले संपूज्य पनसञ्च ततश्शृणु ११
गिरिपाख्यपनसं सैहकं वनपानसम्
---- चैव इत्येते चतुर्विधं प्रकीर्तितम् १२
पनसाख्यं सैंहिकञ्च पूजाञ्चैव प्रशस्यते
पृथक्पृथक्सहस्त्रञ्च तस्यार्द्धं वा तदर्द्धकम् १३
सहकारञ्च साहस्त्रं फलं विद्यात्तदर्द्धकम्
विताळं फलसाहस्त्रं तस्यार्द्धं वा तदर्द्धकम् १४
आदाय क्षाळयेच्चैव शुद्धपात्रे च दापयेत्
पूर्वोक्तविधिना हुत्वा स्पर्शाहुतिं समाचरेत् १५
परिचारकमाहूय अश्वत्थेन्धनमेव च
जंबू च समिदाहुत्वा एलकं होमयेत्ततः १६
पूर्णाहुतिन्ततः कृत्वा घटे संयोजयेत्ततः
परिचारकशिष्ये च स्थलिकं विन्यसेत्ततः १७
प्रादक्षिगयक्रमेगौव गर्भगेहे निवेशयेत्
पाद्यन्तु पूर्ववत्कल्प्य विशेषं वारिवाजितम् १८
निक्षिप्य पाद्यमेवोक्तं कथं शंभोऽपि वारिजम्
वारिवारिजशब्दे च हिमवांबुप्रकीर्तितम् १९
आचम्ये चलवङ्गञ्च अर्घ्यं व्रीहि च निक्षिपेत्
अभिषेकन्ततः कृत्वा फलोदकं विशेषतः २०

घटान्तमभिषिच्याथ कृष्णवस्त्रेण वेष्टयेत्
मौक्तिकाभरणञ्चैव शतसङ्ख्या क्रमेण वा  २१
गुग्गुलूतैलमिश्रेण गन्धालेपनमुत्तमम्
बृहतीरक्तगन्धञ्च श्वेतार्कं चंपकन्तथा  २२
पुष्पमालाविभूष्यञ्च बिल्वपत्रैस्समर्चयेत्
सर्षपान्नं न्निवेद्याथ व्यञ्जनञ्च ततश्शृणु  २३
बृहती राजमाषञ्च पानीय्यञ्च ततश्शृणु
सुघटे जलमादाय माषमात्रं सुवर्णकम्  २४
गन्धेन मिश्रितं स्वर्णं कुम्भमद्ध्ये विनिक्षिपेत्
हेमोदकमिति ज्ञेयं पानीयमिति कीर्तितम्  २५
घनसारेण सम्मिश्रं धूपञ्चैव प्रकीर्तितम्
विंशतिर्द्विंशतिञ्चैव दीपाराधनमुच्यते  २६
वाद्यं ढक्कारिसंयुक्तं नृत्तं वै कुञ्चितं भवेत्
गीतं दशाक्षरी चैव रागं भैरवमुच्यते  २७
यामार्द्धान्ते त्यजेच्चैव चण्डेशाय प्रदापयेत्
एवं सङ्कल्प्य विधिना सर्वकार्यं जयं भवेत्  २८
इति ज्येष्ठमासफलपूजापटलस्सप्तत्रिंशत्तमः

आषाढमासक्षीरपूजापटलप्रारंभः
अथातस्संप्रवक्ष्यामि क्षीरपूजाविधिक्रमम्
भानौ कर्कटके प्राप्ते शुक्लपक्षे शुभे दिने  १
उत्तराषाढऋक्षे च पर्वयुक्ते विशेषतः
पूर्वोक्तयागं सङ्कल्प्य मद्ध्ये वेदिं प्रकल्पयेत्  २
तत्पूर्वे वृत्तकुण्डन्तु पूर्ववत्परिकल्पयेत्
ऐशान्ये वेदिकां कृत्वा दशकुम्भान्यसेत्ततः  ३
लिङ्गाब्जं स्वस्तिकञ्चैव मण्डलं परिकीर्तितम्
पूर्वोक्तविधिना हुत्वा चणकं द्रव्यमुच्यते  ४
इन्धनं खादिरञ्चैव समिधं चूतमुच्यते
कुण्डस्य वामपार्श्वे तु स्वर्णेन रजतेन वा  ५

कांस्यपात्रे विशेषेण क्षीरसङ्ग्रहणं भवेत्
क्षीरं दधिद्वये चैव द्विगुणं परिकीर्तितम् ६
सद्यो गोक्षीरमादाय प्रस्थञ्च द्विसहस्रकम्
खारिसङ्ख्या द्रोणसङ्ख्या बहुपात्रे पृथक्पृथक् ७
अत्युष्णञ्चैव मन्दोष्णं त्यजेत्साधारणोष्णकम्
पाचयेच्चैव पञ्चांशं षष्ठांशं वा प्रकल्पयेत् ८
अतिपक्वमपक्वञ्च वर्जयित्वा विशेषतः
अतिपक्वमपक्वञ्च घोरेणैव शताहुतिम् ९
स्पर्शाहुतिं प्रकल्प्याथ गन्धपुष्पैरलङ्कृतम्
स्पर्शाहुतिञ्च तत्पूर्वं अष्टभागं प्रकीर्तितम् १०
एकांशं ग्राहयेच्चैव आचार्याय प्रदापयेत्
अभिषेकन्ततः कृत्वा रत्नोदकं समाचरेत् ११
पिङ्गलं वस्त्रमाच्छाद्य गन्धं वै देवदारुकम्
सवज्रखचितं भूष्यं पुष्पञ्चैव ततश्शृणु १२
सिन्धुवारञ्च धुत्तूरं वकुळं मल्लिका तथा
पत्रं वाधातकी प्रोक्तं नैवेद्यञ्च ततश्शृणु १३
फलोदकञ्च नैवेद्यं व्यञ्जनञ्च ततश्शृणु
उर्वारुकमिति ज्ञेयः उपकूश्माण्डमेव च १४
धूपं वै कृष्णलोहञ्च दीपञ्चत्वारिसङ्ख्यया
द्विशतं पूजनं कृत्वा पानीयञ्च ततश्शृणु १५
घटे हिमजलं क्षिप्य षष्टिनिष्कप्रमाणतः
सुवर्णन्तु जले क्षिप्य हेमोदकं प्रकीर्तितम् १६
दूर्वया सहितं पाद्यमाचम्यञ्च लवङ्गकम्
अर्घ्यं कुशाग्रसहितं पत्रं कुरवकन्तथा १७
वाद्यं पटहसंयुक्तं गीतं गौडं भविष्यति
नृत्तं परिमितं ज्ञेयं रागं दशाक्षरी तथा १८
उपचारान्समभ्यर्च्य सराजाविजयी भवेत्
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात् १९

इति आषाढमासक्षीरपूजापटलः अष्टत्रिंशत्तमः

## सिंहमासशर्करापूजापटलप्रारंभः

अथातस्संप्रवक्ष्यामि सिंहमासार्चनं श्रुणु
केसरी गतभानौ च शुक्लपक्षे च पर्वणि १
श्रविष्ठाऋक्षसंयुक्ते पर्वयुक्ते विशेषतः
पूर्वोक्तविधिना यागं मण्टपं चतुरश्रकम् २
मद्ध्ये वेदिं प्रकल्प्याथ स्वायंभुवाख्यमण्डलम्
तत्पूर्वे कुण्डमेवोक्तं चतुरश्रं प्रकीर्तितम् ३
शंभुकाष्ठं मद्ध्यमे च -------------
---------------- वेदिकां पूर्ववच्चरेत् ४
दशकुम्भन्न्यसेच्चैव पूजयेत्तु महेश्वरम्
अग्नौ सन्तर्प्य देवानां वरं द्रव्यमुच्यते ५
इन्धनं कामवृक्षञ्च सवेणुसमिदन्तथा
नृत्तं वा मुखभद्राख्यं रागं मण्डूकमेव वा ६
वाद्यन्तिलकमित्युक्तं गीतं वै हरिमेव च
पन्नाशर्कद्विशतञ्चैव दीपसङ्ख्या विशेषतः ७
धूपञ्चन्दनधूळी च पानीय्यञ्च ततश्शृणु
अंबरोत् भवमेवोक्तं गिरिवापी समुद्धृतम् ८
व्यञ्जनञ्चैव आळर्कं फलिनी पक्वसंयुतम्
घृतान्नञ्चैव नैवेद्यं वैडूर्याभरणन्तथा ९
नीलोत्पलञ्च मुसली हेमाभ्यांगी च शंखिनी
पुष्पक्रमं विशेषेण श्रीपर्णी पत्रमेव च १०
गन्धं रजतगन्धञ्च मिश्रवर्णञ्च वस्त्रकम्
धौतोदकमिति प्रोक्तं अर्घ्यं त्वानीलसर्षपम् ११
आचम्यञ्च हिमांबूनि वाद्यं वै नवनीतकम्
पूर्वोक्तविधिना चैव अग्नौ सन्तर्पयेत्ततः १२
सहस्रफलसङ्ख्या च सितं वै सङ्ख्यया तथा
सहस्रप्रस्थसंयुक्तं तिलं वै परिकीर्तितम् १३
सम्यक्क्षाळनमंत्रेण शर्करामिश्रमेव च

स्पर्शाहुतिं ततः कृत्वा स्थलिकोपरिविन्यसेत् १४
प्रादक्षिणय क्रमेणैव लिङ्गपीठे च दापयेत्
नैवेद्यं धूपदीपञ्च गीतनृत्तैस्समन्वितम् १५
जपान्तं पूजयेत्पश्चात् सुप्रसन्नं शिवं दृशेत्
इष्टकाम्यार्त्थसिद्ध्यर्त्थं रणमोचनमेव च १६
सायुज्यपदमाप्नोति शिव एव न संशयः १७
इति सिंहमासपूजापटल एकोनचत्वारिंशत्तमः

भाद्रपदमास अपूपपूजापटलप्रारंभः
अतः परं प्रवक्ष्यामि मासिभाद्रपदे शुभे
शुक्लपक्षे सिनीवालि उत्तरप्रोष्ठपन्तथा १
एकमासे द्विनक्षत्रे पूजयेत्तु द्वयोरपि
ऐश्वर्यपदमेवोक्तं अपूपं पूजनं यथा २
शिवं षोडशसङ्ख्या च सर्वे साहस्रसङ्ख्यया
माषापूपं गुळापूपं चूळिकां स्थलिकन्तथा ३
रसापूपं तिलापूपं तेषां साहस्रमेव च
गोघृते पाचयेत् शुद्धं शुद्धपात्रे च आददेत् ४
अष्टभागं विभज्या वा एकांशं देशिकाय च
मुन्यंशं ग्राहयेत्पात्रे वामभागे निवेशयेत् ५
पूर्वोक्तयागं सङ्कल्प्य मण्टपं चतुरश्रकम्
तत्पूर्वे पद्मकुण्डन्तु पूर्वोक्तविधिना चरेत् ६
ऐशान्ये दशकुम्भञ्च विन्यसेत्पूजयेच्छिवम्
मद्ध्ये वेदिं प्रकल्प्याथ परमण्डलमुच्यते ७
पूर्वोक्तविधिना हुत्वा द्रव्यं शिवं हुनेत्ततः
अपामार्ग्गं हुनेच्चैव इन्धनं छदकाष्ठकैः ८
स्पर्शाहुतिन्ततः कृत्वा प्रादक्षिणय क्रमेण वा
पाद्यमाचमनीयार्घ्यं कुशाग्रं लबुपत्रकम् ९
मुक्ता च इति विज्ञेयः अभिषेकन्ततश्शृणु
पूर्वोक्तविधिना स्नात्वा मृदोदमभिषेचयेत् १०

मिश्रवस्त्रं समाच्छाद्य सुरत्नखचितन्तथा
स्वर्णभूषणमेवोक्तं माला च परिकीर्तितम् ११
कर्णिकारत्नपुन्नागं प्रवाळं मल्लिका तथा
एकपत्रारविन्दञ्च गन्धञ्चैव ततश्शृणु १२
कुष्टेन सहितं गन्धं माषान्नञ्च निवेदयेत्
सितभुक् दण्डशङ्खञ्च व्यञ्जनं परिकीर्तितम् १३
पानीय्यमिति विख्यातं नाळिकेरजलं ग्रहेत्
पनसं मातुलुङ्गञ्च नारङ्गं शिवसन्निधौ १४
नृत्तं कमलवर्त्तञ्च मेघरञ्जी सुगीतकम्
तिलकं वाद्यमित्युक्तं रागं वै नट्टभाषकम् १५
राजोपचारमार्गेण पूजयेत्परमेश्वरम्
एवं कृत्वा विशेषेण सर्वसौभाग्य संपदम् १६
इति भाद्रपदमासापूपपूजापटलश्चत्वारिंशत्तमः

आश्वयुजमासा अन्नपूजा पटलप्रारंभः

अथ वक्ष्ये विशेषेण अन्नपूजाविधिं श्रुणु
अन्नादिसर्वसौभाग्यं राजराष्ट्राभिवृद्धिदम् १
तुलाराशिगते भानौ तन्मासे शुक्लपक्षके
पर्वयुक्तमयुक्तं वा अश्विनी ऋृक्षमेव वा २
पूर्ववद्यागशालाञ्च मण्डलं चतुरश्रकम्
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम् ३
वेदिका मद्ध्यमे चैव गौरी तिलकमेव वा
ऐशान्ये वेदिकां कृत्वा दशकुम्भं न्यसेत्ततः ४
तत्पूर्वे तु त्रिकोणञ्च कुण्डं सङ्कल्पयेत्ततः
पूर्वोक्तविधिना चैव यागोपकरणानि वै ५
धान्यराशिं प्रकल्प्याथ तन्मद्ध्ये विन्यसेत् घटम्
निक्षिप्य पङ्कजं रत्नं कूर्चं स्वर्णदळादिभिः ६
मद्ध्ये शिवं समभ्यर्च्य उक्तमन्त्रैस्समर्चयेत्
पूर्वोक्तविधिना हुत्वा तमालैरिन्धनैरपि ७

तुळसी ----- समिधैर्हुनेत्
नीवारद्रव्यहोमैश्च -------- ८
स्पर्शाहुतिन्ततः कृत्वा मासद्रव्यं ततश्शृणु
सितशाली हेमशाली द्वीपशालीयवस्तथा ९
सूक्ष्मशाली विशेषेण शिवदीक्षायुतस्तथा
कर्षणं वहनं --- हृदास्त्रेणैव दापयेत् १०
जलं निक्षिप्य समये अघोरम्मन्त्रमुच्चरन्
अस्त्रमन्त्रेण हृदिना शिवमन्त्रेण ताडयेत् ११
अघोरे चण्डनाथञ्च शिबिकामारोपयेत्ततम्
केदारतलसामीप्ये स्थापयेत् भक्तनायकम् १२
रैणुकं शोष्य --- हृदयेनैवमर्दयेत्
अत्युष्णञ्चैवमन्दोष्णं वर्जयेत्पक्वमेव वा १३
नक्षत्रकुलसंकाशं सहस्त्रप्रस्थसंयुतम्
तस्यार्द्धं वा तदर्द्धं वा सर्वद्रव्यं समाददेत् १४
आचार्यसन्निधौ स्थाप्य सर्वद्रव्यं समाददेत्
पाचकाचार्यमाहूय शिवभक्तसुशीलकम् १५
शिवदीक्षायुतं शैवं पाचकाचार्यसन्निधौ
दापयेत्सर्वद्रव्याणि भाण्डमन्त्रेण क्षाळयेत् १६
वह्निमन्त्रेण सन्दीप्य तमालैः काष्ठमुत्तमम्
वकुळं यज्ञकाष्ठञ्च बिल्वञ्च तुळसी तु वा १७
गोमयं शुष्ककाष्ठं वा इन्धनं परिकीर्तितम्
इत्युत्तरशतं सङ्ख्या पलं वा शिवतण्डुलम् १८
हृदामन्त्रेण आपूर्य धूमात्युष्णं विवर्जयेत्
अतिपक्वमपक्वञ्च वर्जयित्वा च साधकः १९
नवनीतं समादाय भाण्डमद्ध्ये च निक्षिपेत्
यवागूं सन्त्यजेच्चैव शुद्धपात्रे प्रदापयेत् २०
कारवल्लिद्वयञ्चैव --------
आळर्कं राजमाषञ्च उर्वारुकफलन्तथा २१
नारङ्गञ्चैव लिकुचं पनसं धात्रिमेव च

चूतं विताळमीसे वा लताञ्चतरुमेव वा २२
बृहतीकदळी चैव गोसकाख्यं प्रकीर्तितम्
व्यञ्जनं पाचयेच्चैव अपूपांश्च बहून्विधान् २३
पूर्ववत्कल्पयेत्पश्चात् आज्येनैव परिप्लुतम्
स्पर्शाहुतिन्ततः कृत्वा परिचारकमस्तके २४
निवेश्य तूर्यवाद्यैश्च प्रादक्षिणय क्रमेण वा
मूलबेरेऽभिषिच्याथ अस्त्रोदकेन स्नापयेत् २५
शेषं पूर्ववदेवोक्तं दुकूलेनैव वेष्टयेत्
इन्द्रनीलेनखचितं मणिमालाविभूषितम् २६
अष्टगन्धं समं लेपेत् कल्हारं पाटली तथा
उत्पलञ्चन्द्रकान्तञ्च गैरिकान्तं प्रवाळकम् २७
वकुळं श्वेतकुरवमलङ्कृत्य विशेषतः
अहमुद्रत्यलिङ्गे च पीठे च परिदापयेत् २८
चूतपल्लवपत्रैश्च मरीच्यन्नं निवेदयेत्
पानीय्यमिक्षुसारं स्यात् जातिपत्रेण धूपकम् २९
त्रिशतं सङ्ख्यया दीपं भ्रामयेल्लिङ्गमूर्द्धिनि
सप्ततालप्रविस्तारं वृत्तं वै मद्ध्यमे श्रुणु ३०
कर्णिका कृतिमेवोक्तं त्रिशतं सङ्ख्यया तथा
दीपलक्षणमेवोक्तं पाद्यन्तु त्रुटिसंयुतम् ३१
आचम्यं कोष्ठसहितमर्घ्यन्तु कुसुमैर्युतम्
वाद्यं वा -------- गौणमुच्यते ३२
नृत्तं पद्माङ्गसंयुक्तं गीतं चिन्तामणी तथा
रागं कौशिकमेवोक्तं कल्पयेत् शिवसन्निधौ ३३
एवं कृत्वा विशेषेण ततो विजयमाप्नुयात् ३४

इति आश्वयुजमास अन्नपूजा पटल एकचत्वारिंशत्तमः

अष्टबन्धनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि अष्टबन्धविधिक्रमम्
पूर्वे तु ग्रामनाशं स्यात् आग्नेय्यामग्निदग्धकम् १

याम्ये मृत्युभयं विद्यात् नैर्ऋते रोगसंभवम्
वारुणे वृष्टिहीनं स्यात् वायौ दुर्भयमाप्नुयात् २
उत्तरे द्रव्यहीनं स्यात् दुर्भिक्षं शंभुकाष्ठके
शिशुनाशं दिने योगाल्लग्नभत्वाज्ञयं भवेत् ३
कृमिसंकुलमेवोक्तं यजमानो विनश्यति
अष्टबन्धनहीने तु आचार्यस्तत्क्षणे घटे ४
शिवमावाहयेत्पश्चात्तद्दोषं शृणु षण्मुख
परचक्रभये प्राप्ते बिंबमुत् घटितेऽपि च ५
चोरैर्दुष्टैः प्रमादेन अशनी पतनेऽपि वा
एवमादिषु कालेषु सद्य आवाहयेत् घटे ६
दुर्दिनञ्चैव दुष्कालं दुऋक्षंकुतिथिर्भवेत्
मासेशून्ये प्रमादेन अनवीक्ष्य घटे यजेत् ७
ज्ञाती वा अनुजो वापि बान्धवेषु विशेषतः
क्षयकुष्ठमहारोगान् काठिन्ये तत्क्षणेऽपि वा ८
तद्दिने चैव निर्दोषं विशेषं शृणु वक्ष्यते
द्रव्याभावे विड्वरे वा परचक्रभयेन वा ९
एकवत्सरपर्यन्तं नद्दोषं परिकल्पयेत्
वत्सरादूर्ध्वकाले तु बहुकालगतोऽपि वा १०
सर्वमासे तु कर्तव्यं अष्टबन्धनमुत्तमम्
सर्ववारे प्रकर्तव्यं सर्वऋक्षे प्रकल्पयेत् ११
किञ्चिद्विशेषं ऋक्षे च मृदान्धः पादजीवके
हित्वा च सर्वऋक्षे तु अष्टबन्धनमुत्तमम् १२
गुळाकायमखण्डश्च कालार्द्धप्रहरस्तथा
विहायप्रोक्षणे चैव उपरागौ विवर्जयेत् १३
अष्टबन्धनकाले तु अस्तम्ये च बृहस्पतिः
अत्कालं वर्जयेच्चैव अन्यकाले प्रकल्पयेत् १४
गुरुरस्तमने काले कारयेदष्टबन्धनम्
कथं शंभोर्विशेषेण गुरुरस्तमने भवेत् १५
गुरुरस्तमने कल्प्य वक्ष्ये शृणु षडानन

देवाचार्यो गुरुस्तस्मात्सर्वकर्मविवर्जयेत् १६
भृगुरस्तमने काले दैत्यानां गुरुरित्यपि
तस्मात् हित्वा नृणां कर्म चौळाद्यन्ये च कर्मणि १७
वर्जयेद्विधिवत्पश्चात् शिवकर्मेन दोषभाक्
प्रतिष्ठाद्युत्सवे चैव अष्टबन्धनमेव च १८
भृगुरस्तमने काले कारयेद्देशिकोत्तमः
शंकुस्थापनकाले तु कर्षणादि प्रकल्प्यते १९
नूतनग्रामविद्ये वा रथायन्त्रादिकेऽपि वा
शुक्रदोषं न्यसेच्चैव सर्वकर्मचरेत्तथा २०
आलये संकटे जीर्णे पूर्वे तु परिकल्पयेत्
मूललिङ्गं विशेषेण गर्भगेहस्थितश्चरेत् २१
----------- अथवाचलमुत्तमम्
बालालयं प्रकल्प्याथ ऐशान्ये दक्षिणेऽपि वा २२
उत्तरे पूर्वदेशे तु ब्रह्मस्थाने प्रकल्पयेत्
गर्भगेहस्य विस्तारं तन्मानं परिकल्पयेत् २३
लिङ्गमाना यथाकल्प्य तन्मानं कल्पयेत् गुरुः
अथवा द्रव्यहीनो वा पूजांशे --- माचरेत् २४
पूजांशं त्रिगुणी कृत्य एकभागं प्रकल्पयेत्
पीठं लिङ्गं प्रकल्प्याथ पूर्ववत्परिकल्पयेत् २५
मासमेकेऽपि कुम्भं स्यात् द्विमासं खड्गमुच्यते
त्रिमासं शूलमेवोक्तं षाणमासं पटमुच्यते २६
वत्सरं दारुबिंबञ्च द्विवर्षञ्च त्रिवर्षकम्
अन्तस्त्रिवर्षे बिंबन्तु यजेत् बालालयेऽपि वा २७
शिथिलं स्त्रीमुखैर्वापि अथवाखण्डितेऽपि वा
महामारिज्वरं ग्रामे राजाराष्ट्रं विनश्यति २८
तद्दोषशमनात्र्थाय प्रहरशान्तिं प्रकल्पयेत्
त्रिपक्षं होमयेच्चैव पूर्ववत् बिंबमुत्तमम् २९
पञ्चास्त्रं जपयेल्लक्षं पृथक्पृथक् विशेषतः
नित्यपूजां प्रकल्प्याथ नैमित्तिकं न कारयेत् ३०

गणेश्वरादिगौरी वा सोमास्कन्देश्वरादि वा
तेषां जीर्णग्रहश्चैव सर्वोपकरणानि वै ३१
पूर्ववद्यागशालाञ्च कुण्डमण्डलवेदिकाम्
तोरणान्मङ्गलांश्चैव परिवारघटेऽपि वा ३२
पूर्वोक्तविधिना चैव विशेषं श्रुणु षण्मुख
सोमास्कन्दादिबेरं वा केवलं स्नापयेत्ततः ३३
गन्धपुष्पैरलङ्कृत्य नैवेद्यं धूपदीपकम्
यात्राहोमं प्रकुर्वीत बिंबमादाय देशिकः ३४
महामण्टपमद्ध्ये च अथवा अग्रमण्टपे
स्नापयेन्नित्यपूजाञ्च विना नैमित्तिकं गुरुः ३५
गणेश्वरादिगौरी वा मूलबेरे श्रुणुष्वथ
घटे चाकृष्यसंपूज्य उक्तमन्त्रैर्हुनेत्ततः ३६
बेरमुत्थाप्य गत्वा च सुस्थाने शुचिदेशिकः
रत्नन्यासं प्रकुर्वीत स्थापयेद्देशिकोत्तमः ३७
तत् घटं स्थापयेत्पश्चात् नित्यपूजां समाचरेत्
दिनं प्रतिविशेषेण दशकुम्भं न्यसेत्ततः ३८
शान्तिहोमं प्रकल्प्याथ अस्त्रमन्त्रजपन्तथा
सहस्रं वा तदर्द्धं वा अष्टोत्तरशतन्तु वा ३९
प्रत्येकं जपमात्रेण विशेषैर्वाभिषेचनम्
एककालं द्विकालं वा त्रिकालं वा समाचरेत् ४०
ब्राह्मणान्भोजयेत्तत्र दिनं प्रतिविशेषतः
आलयं कल्पयेत्पश्चात् पुनर्यागं समाचरेत् ४१
नवपञ्चककुण्डं वा पूर्वोक्तविधिना सह
यत्काले मन्दिरं कल्प्य तत्क्षणे तु प्रवेशकम् ४२
मासशून्यं पक्षशून्यं वारशून्यं च दुर्दिनम्
दुरुक्षमानपेक्ष्यश्च तत्क्षणे स्थापयेत् गुरुः ४३
जीर्णोद्धारे प्रकुर्वीत न दोषं पूर्ववच्चरेत्
कुग्रामे द्रव्यहीने वा अधमाधमपूजिते ४४
यागशालां प्रकल्प्याथ एककुण्डं समाचरेत्

दशकुंभं न्यसेच्चैव सहस्राहुतिसर्पिषा ४५
उक्तद्रव्यैर्हुनेच्चैव पूर्वोक्तविधिनाचरेत्
घटस्नानं प्रकुर्वीत गणेशाद्यंबिकादि च ४६
मूललिङ्गविशेषेण नवकुण्डं प्रकल्पयेत्
अथवा पञ्चकुण्डं वा एककुण्डमथापि वा ४७
सप्तविंशत् घटान्यस्य दशकुम्भञ्च मद्ध्यमे
तोरणान्मङ्गळांश्चैव स्रुक्स्रुवञ्च दशायुधम् ४८
पञ्चास्त्रञ्च चतुर्वेदं घोषयेत्पूर्ववद्धुनेत्
नवाहञ्चैव सप्ताहं पञ्चाहं वा त्रियावहम् ४९
सायं प्रातर्हुनेच्चैव त्रिसहस्रन्तु सर्पिषा
सायंप्रातः पृथक् हुत्वा तदर्द्धं परिवारके ५०
उक्तद्रव्यैर्हुनेच्चैव मूललिङ्गेऽभिषेचनम्
स्वयंभुदैविकञ्चैव दिव्यमात्रृषमानुषम् ५१
राक्षसङ्गाणवञ्चैव सप्तधा लिङ्गमुच्यते
पूजयेदुत्तमाच्चैव मद्ध्यमा वाधमाधमा ५२
जीर्णोद्धारं प्रकुर्वीत बालालयं प्रकल्पयेत्
मन्दिरं पूर्ववत्कल्प्य पश्चात्संप्रोक्षणञ्चरेत् ५३
पूर्वोक्तविधिना चैव यागशालां प्रकल्पयेत्
रन्ध्राश्च मुनिसङ्ख्या च भूतसङ्ख्येकमेव वा ५४
चतुष्षष्टिस्तंभसङ्ख्या षट्त्रिंशत्स्तंभमेव वा
षोडशस्तंभमेवोक्तं यागमण्टपमुत्तमम् ५५
इन्द्रादीशानपर्यन्तं यथोक्तं कुण्डमालिखेत्
मङ्गलान्तोरणान्शस्त्रान्स्रुक्स्रुवान्कलशान्घटान् ५६
ससूत्रान्सापिधानांश्च सवस्त्रं हेमपङ्कजम्
नवरत्नं पञ्चरत्नं एकरत्नमथापि वा ५७
सकूर्चान्पल्लवञ्चैव प्रसूनं पत्रमेव च
अपूपान्पायसान्पिष्टान् इक्षुचन्दनकुङ्कुमम् ५८
रोचनञ्चैव कस्तूरी यक्षकर्दममुच्यते
हिमांबुनाभितैलञ्च पूर्वोक्तविधिनाचरेत् ५९

साधकः कुम्भमादाय बालालयगृहेऽपि वा
निवेश्यपूजयेल्लिङ्गं भावनान्यासकर्मणि ६०
यात्राहोमं प्रकुर्वीत पश्चादावाहनं चरेत्
यल्लिङ्गे मस्तके पुष्पं समादायकराञ्जलिम् ६१
द्वादशान्तं समुद्धृत्य प्रणवात्मसमार्गता
मूलाधारान्तमानीय्य प्रादक्षिणय क्रमेण वा ६२
वेदिका मद्ध्यमे न्यस्य पूर्वोक्तविधिनाचरेत्
शयनारोपणञ्चैव जलाधिवासनन्तथा ६३
नयनोन्मीलनं चैव रत्नन्यासं विवर्जयेत्
शेषान्पूर्वोक्तविधिना प्रथमं ह्यङ्करार्पणम् ६४
द्वितीय्यं वास्तुपूजाञ्च मण्टपाराधनन्ततः
मूलबेरन्तु संस्नाप्य न्यासकर्मसमाचरेत् ६५
यात्राहोमन्ततः कृत्वा घटे चैव चलासनम्
आसनं मूर्तिमभ्यर्च्य नेत्रमुद्रां प्रदर्शयेत् ६६
लिङ्गादावाहनं पश्चात् घटे संयोजयेत्ततः
यागमद्ध्ये निवेश्याथ पूर्वोक्तविधिनाहुनेत् ६७
सुमुहूर्ते सुलग्ने च बिंबं संपूजयेद्यथा
नेत्रमुद्रां प्रदृश्याथ कुम्भात् बीजं समाददेत् ६८
लिङ्गे संयोजयेच्चैव ब्राह्मणान्भोजयेत्ततः
दक्षिणान्दापयेच्चैव सवस्त्रानंगुलीय्यकम् ६९
भूषणं उपवीतञ्च सन्तुष्टं परिभावयेत्
अष्टबन्धनहीने तु पूर्वोक्तयागमण्टपम् ७०
सप्तविंशत्करं दीर्घं अष्टादशकरन्तु वा
नवहस्तं चरेद्यागं वसुसप्तरसेन्द्रियम् ७१
भूतसङ्ख्या करं दीर्घं यागमण्टपमुत्तमम्
कनिष्ठमद्ध्यरेखाञ्च बाह्यमूलान्तमेव च ७२
करलक्षणमेवोक्तं वक्ष्येऽहं यागलक्षणम्
चतुर्हस्तसमायामं यागद्वारं विशेषतः ७३
द्विहस्तं वा त्रिहस्तं वा तस्यार्द्धं विस्तरं भवेत्

पञ्चहस्तसमायामं चतुर्हस्तमथापि वा ७४
त्रिहस्तं वा समं दीर्घं स्तंभलक्षणमेव च
त्रिहस्तं ------------------------ ७५
अपर्वं जर्भरं हित्वा अवक्रमसत्वरं भवेत्
यागन्तु नवभागं स्यात् नवखण्डाकृतिन्तथा ७६
स्तंभोपरिसुकीलञ्च तस्योर्ध्वे गात्रमुत्तमम्
षडङ्गुलन्तु विस्तारं अष्टाङ्गुलघनं भवेत् ७७
स्तंभात्स्तंभं समात्सक्तं मद्ध्ये चैव ततश्शृणु
नीरंध्रं मद्ध्यमे कल्प्य शेषान्यत् बहिरुच्यते ७८
पूर्वादिचतुर्दिक्षु आग्नेयादिविदिक्षु च
मद्ध्यमे च द्विभागञ्च वृद्धितोन्नतमुच्यते ७९
पूर्वे च विलिकारोप्य मिळित्वाग्रे च बन्धयेत्
विकिराभिरलङ्कृत्य सम्यक् बन्ध्यसुशीलयेत् ८०
त्रिणेनसत्वरं पूर्य आबद्ध्यपरिपालकैः
------ विस्तारं पञ्चाङ्गुलन्तु मद्ध्यमम् ८१
षडङ्गुलन्तु विस्तारं उत्तमं परिकीर्तितम्
द्वाराधारसमं दीर्घं पञ्चाङ्गुलघनं भवेत् ८२
ऊर्ध्वे गात्रे च संयुक्तं तन्मद्ध्ये त्रिशिखन्तथा
त्रियङ्गुलन्तु विस्तारं पार्श्वयोर्वक्रसंयुतम् ८३
वज्राकृतिन्तु तन्मद्ध्ये तोरणायुतमीरितम्
षडङ्गुलन्तु विस्तारं षोडशाङ्गुलमुत्तमम् ८४
फलकामद्ध्यमे चैव दशाङ्गुलसमन्वितम्
द्विभुजा च द्विनेत्रा च चूळिकाकृतिमुत्तमम् ८५
चित्रवस्त्रसमायुक्तं दर्पणं मस्तके धरेत्
अञ्जली करसंयुक्तं अष्टमङ्गलधारिणम् ८६
दर्पणं पूर्वकुम्भञ्च पूर्वे चासक्तवेदिकाम्
वृषभं चामर द्वौ च सव्यदेशे विनिर्दिशेत् ८७
श्रीवत्सं स्वस्तिकं प्रत्यक् शङ्खदीपन्तदुत्तरे
एतानि मस्तके धार्य रंभा चैव तिलोत्तमा ८८

उर्वशीमेनकासव्ये क्रमुकीकामवर्द्धनी
सुमुखी सुन्दरी चैव वेदिका सप्तपार्श्वके ८९
द्वादशाङ्गुलमायामं चतुरङ्गुलविस्तरम्
---------------------------- ९०
वज्रं शक्तिञ्च खट्गञ्च घण्टां पाशं द्ध्वजन्तथा
चतः त्रिशूलचक्रञ्च पद्मं दशविधं तथा ९१
शक्तिं गदा च स्त्रीरूपं पद्मञ्चक्रं नपुंसकम्
शेषाः पुमांसं विज्ञेयाः उक्तद्ध्यानं समाचरेत् ९२
वज्राद्यंकितमौली च द्विकरावञ्जलीकृतम्
पूर्वादिदिक्स्थलेन्यस्य पूर्वाद्यष्टदिशि श्रुणु ९३
युगाश्रं योनिकुण्डञ्च अर्द्धचन्द्रं त्रिकोणकम्
वर्त्तुळञ्चैव षट्कोणं शतपत्रन्तु मङ्गलम् ९४
इन्द्र ईशानयोर्मद्ध्ये वृत्तं वा मेखलात्रयम्
चतुस्त्रयद्वयञ्चैव मेखलाहस्तविस्तृतम् ९५
विस्तारं साम्य तत् घातं मद्ध्ये पद्माकृतिन्तु वा
अश्वत्थपत्रवन्नाभिं पञ्चवर्णैरलङ्कृतम् ९६
षट्त्रिंशाङ्गुलदीर्घाणि यज्ञवृक्षैः प्रकल्पयेत्
पद्मपुष्पाकृतिञ्चैव वेदाङ्गुलमुदाहृतम् ९७
द्वादशाङ्गुलमायामं वृत्तं दण्डाकृतिन्तथा
तदश्रं चतुरङ्गुल्यं कलशाकृतिमुत्तमम् ९८
कुण्डमेकाङ्गुलङ्कृत्वा तदग्रे वसुसङ्ख्यया
वसुसङ्ख्या च दीर्घाणि तत्समं विस्तृतं भवेत् ९९
चतुरश्रा कृतिं कृत्वा द्वियङ्गुलघनं भवेत्
त्रियङ्गुलन्तु विस्तारं वृत्तं त्र्यङ्गुलघातकम् १००
पृष्ठे त्रियङ्गुलञ्चैव घनं पद्माकृतिन्तथा
एकाङ्गुलन्तु कुण्डं स्यात् अग्रे कौशिकसङ्ख्यया १०१
त्रियङ्गुलघनं विद्यात् आदौ त्र्यङ्गुलदीर्घकम्
अष्टाङ्गुलन्तु विस्तारं अग्रे कुब्जाकृतिन्तथा १०२
चतुरङ्गुलमग्रे च फलकाकृतिमुत्तमम्

तन्मद्ध्ये सुषिरं कृत्वा कनिष्ठाङ्गुलनाहकम् १०३
अधोभागे प्रकर्तव्यं गजोष्ट्राकृतिवच्चरेत्
वेदिकामद्ध्यमे चैव अष्टपद्मदळाकृतिम् १०४
चित्राकारन्तु तत्पार्श्वे सम्यक् मधुरकस्तथा
षड्विंशदङ्गुलं दीर्घं अग्रे तु चतुरङ्गुलम् १०५
वृत्तञ्चैव तु तन्मद्ध्ये नारङ्गफलकाकृतिम्
पृष्ठे गजशिराकारं दण्डमङ्गुष्ठनाहकम् १०६
अग्रे त्र्ययङ्गुलं पद्मं कर्कशं पर्वकं नयेत्
द्वादशाङ्गुलदीर्घञ्च अष्टाङ्गुलन्तु विस्तरम् १०७
एकाङ्गुलोच्छ्रितं मद्ध्ये वक्त्रं वै मुष्टिमात्रकम्
पृथक्पृथक्च तत्पादौ हस्तौ मुष्टिं प्रकल्पयेत् १०८
कूर्मासनमिति प्रोक्तं पात्रं वै लक्षणं श्रुणु
षडङ्गुलन्तु विस्तारं घातञ्चैव द्वियङ्गुलम् १०९
वृत्ताकारन्तु सुश्लक्ष्णं पात्रं वा परिकल्पयेत्
पञ्चाङ्गुलन्तु दीर्घं स्यात् नाहञ्चैव द्वियङ्गुलम् ११०
यवार्द्धघनमेवोक्तं मद्ध्ये तु सुषिरन्तथा
अथवा निर्मितञ्चैव दर्वीञ्चैव ततश्शृणु १११
पञ्चाङ्गुलन्तु दीर्घं स्यात्पादाङ्गुलन्तु विस्तरम्
घनञ्चैव तु तत्पात्रे द्विपत्राकृतिमच्युतम् ११२
किंचित्संयुतमादौ च घटञ्चैव ततश्शृणु
द्विकारिपूरितं कुम्भं वर्त्तुळं कलशाकृतिम् ११३
मद्ध्यभागन्तु विस्तारं सप्तभागं प्रकीर्तितम्
द्वारन्तु एकभागं स्यात्कुण्डं द्व्यङ्गुलमुत्तमम् ११४
ओष्ठमेकाङ्गुलञ्चैव विस्तृतं हेमनिर्मितम्
घनं यवप्रमाणन्तु तस्यार्द्धं वा तदर्द्धकम् ११५
राजतं मद्ध्यमं चैव ताम्रेणैव प्रकल्पितम्
अथवा मृण्मयं वापि मृण्मयं रक्तवर्णकम् ११६
काळं भिन्नञ्च सुषिरं वक्रञ्चापक्वधूमकम्
शिवकुम्भमिति प्रोक्तं वर्द्धन्यामेकदेशके ११७

मद्ध्यप्रदेशात्कुण्डाधः पञ्चभागं प्रकीर्तितम्
तन्मद्ध्ये मुष्टिमात्रेण नाहञ्चैव द्वियङ्गुलम्  ११८
मद्ध्ये तु सुषिरं कृत्वा शेषान्पूर्ववदाचरेत्
कलशान्पूर्ववत्कृत्वा त्रिविधं लक्षणं श्रुणु  ११९
चतुरङ्गुलविस्तारं पूर्णचन्द्रवदाकृतिम्
ओष्ठमेकाङ्गुलोत्सेधं यवमात्रं घनं व्रजेत्  १२०
पालिकाष्टादशाङ्गुल्यं मात्राङ्गुलमुदाहृतम्
एकाङ्गुलघनं प्रोक्तं मुखं वृत्तं षडङ्गुलम्  १२१
पूर्णचन्द्रवदाकारं घनञ्चैव षडङ्गुलम्
दण्डं सप्ताङ्गुलं प्रोक्तं नाहं पञ्चाङ्गुलं भवेत्  १२२
पादं पञ्चाङ्गुलं प्रोक्तं मद्ध्ये तु सुषिरं भवेत्
घटिका च तदेवोक्तं पात्राकृतिमुदाहृतम्  १२३
पञ्चाश्राकृतिमेवोक्तं शेषान्पूर्ववदाचरेत्
शरावं मुखविस्तारं चतुरङ्गुलमीरितम्  १२४
कलशाकृतिवत्सार्द्धं शेषं पूर्ववदाचरेत्
अष्टादशाङ्गुलोत्सेधं पादञ्चैव द्वियङ्गुलम्  १२५
अष्टाङ्गुलन्तु विस्तारं वृत्तञ्च स्थलिकाकृतिम्
त्रयाङ्गुलमुखोग्त्सेध अष्टाङ्गुलन्तु विस्तृतम्  १२६
घातं द्वियङ्गुलञ्चैव शेषं दण्डं प्रकल्पयेत्
चतुरङ्गुलनाहं स्यात् मङ्गळांकुरवारि च  १२७
एवं वै द्वयमेवञ्च पालिकालक्षणं श्रुणु
----- प्रोक्तं ज्ञानखट्गं ततश्शृणु  १२८
षट्त्रिंशद्दर्भसङ्ख्या च ग्रन्ध्यग्राङ्गुलिकं भवेत्
ग्रन्ध्यग्रन्तु त्रयागाङ्गुल्यं तदर्द्धञ्च त्रिभागकम्  १२९
सव्यापसव्यमार्गेण वेण्याकृति च सत्वरम्
सप्ताङ्गुलन्तु दीर्घं स्यात् तदधो वलयद्वयम्  १३०
पार्श्वयोश्च अधो भागे एकाङ्गुला च वेणिका
तदधो वलयं द्वौ च तदधश्च त्रियङ्गुलम्  १३१
वेणीं वा परिकल्प्याथ आद्यन्तं षोडशाङ्गुलम्

शिवकुम्भे च पुंदर्भैः पक्षसङ्ख्या च कूर्चकम् १३२
गन्धिरेकाङ्गुलं प्रोक्तं ग्रन्ध्यग्रं चतुरङ्गुलम्
करमद्ध्यात्कनिष्ठान्तं एकदर्भेण वेष्टयेत् १३३
द्वादशं वर्द्धनीञ्चैव वसुसङ्ख्याष्टकुम्भके
पञ्चदर्भेण कूर्चञ्च परिवारश्च कुंभकान् १३४
लंबकूर्चं विशेषेण षोडशं सङ्ख्यया तथा
तदर्द्धं परिवारश्च कलशानां विशेषतः १३५
त्रिंशद्दर्भदळैश्चैव समाग्रं ग्रन्धिमुच्यते
एकदर्भेण संवेष्ट्य विष्टरं परिकीर्तितम् १३६
वेदिकादीर्घतन्मानं विष्टरं परिधिन्तथा
परिस्तरणमेवोक्तं तावद्दीर्घं प्रकल्पयेत् १३७
कुण्डानि परितः कृत्वा ऊर्ध्वे पालाशमुच्यते
श्यामन्तन्मानदीर्घञ्च त्रिंशद्दर्भैश्च विष्टरम् १३८
विष्टरं मद्ध्यमे न्यस्य तन्मानं परिकीर्तितम्
समाग्रं सङ्ख्ययादर्भै ---- बन्धयेच्चरेत् १३९
परिस्तरणमेवोक्तं द्रव्यं धान्यन्ततश्शृणु
दशाङ्गुलन्तु विस्तारं वृत्ताकारसमन्वितम् १४०
त्रियङ्गुलं घनञ्चैव पार्श्वे वृत्ताकृतिन्तु वा
त्रिय्ङ्गुलं सुविस्तारं वृत्तं वा परिकल्पयेत् १४१
घातं द्वियङ्गुलं प्रोक्तं दशपत्राकृतिन्तु वा
नवधान्यं क्षिपेच्चैव अपूपान्मद्ध्यमे न्यसेत् १४२
धारिकालक्षणं प्रोक्तं अरणीलक्षणं श्रुणु
छागकन्दञ्च मुकुळं तमादायनभिन्ददेत् १४३
मद्ध्ये सत्वरमादाय द्वादशाङ्गुलनाहकम्
चतुरश्राकृतिं कृत्वा दीर्घं विंशाङ्गुलं भवेत् १४४
अयं सामुष्टिमात्रेण मुकुळञ्च द्विपार्श्वके
अश्वत्थवृक्षमादाय शिंची च सबलातरुम् १४५
मूलवृक्षं समादाय सम्यक्शोषितदारुकम्
कार्पासतूलमादाय कुण्डमद्ध्ये विनिक्षिपेत् १४६

तन्मद्ध्ये मथनं सम्यक् अग्निमादाय शोधितम्
द्वादशाङ्गुलदीर्घं स्यात् एकाङ्गुलन्तु विस्तरम्  १४७
पदपत्रवदग्रे वा अन्याग्रे पर्वचन्दवत्
द्वियङ्गुलं समाघातं अयसानिर्मितं तथा  १४८
दर्वीन्तु कल्पयेत्पश्चात् शलाकालक्षणं शृणु
अष्टाङ्गुलसुदीर्घाणि एकाङ्गुलन्तु विस्तरम्  १४९
यवमात्रघनं विद्यात् शलाकापरिकीर्तितम्
पूर्णचन्द्रसमं दीर्घं दशाङ्गुलसुविस्तरम्  १५०
चतुरङ्गुलघातञ्च शलभापत्रनिर्मितम्
लाक्षासर्जरमंधूकं शुकुरुं नवनीतकम्  १५१
काषायं विप्रकं चैव कार्पासं ह्यष्टकन्तथा
वेदिका मद्ध्यमे चैव अष्टद्रोणैश्च शालिभिः  १५२
परिवारघटानाञ्च प्रत्येकं शिवसङ्ख्यया
वास्तुपूजादिपूजान्तं कलशानां पृथक्पृथक्  १५३
धान्यं शिवं विनिक्षिप्य तदर्द्धं तण्डुलं भवेत्
शिवस्य कुडुपं संख्या तिलञ्चैव प्रकीर्तितम्  १५४
माषमाङ्गञ्च शिंबञ्च तिलवत्सङ्ख्ययाक्रमात्
प्रभाते त्रिसहस्रञ्च रात्रौ च त्रिसहस्रकम्  १५५
मद्ध्यमं द्विसहस्रं वा पञ्चाशतसहस्रकम्
सर्पिषा होमयेच्चैव प्रधाने परिकीर्तितम्  १५६
तस्यार्द्धं परिवाराणां होमयेत्तु विशेषतः
दशांशं द्रव्यहोमैश्च दशांशं समिधाहुतिः  १५७
शतांशञ्च अपूपादीन् होमकर्मविशेषतः
दशनिष्कप्रमाणन्तु स्वर्णपङ्कजमुत्तमम्  १५८
तस्यार्द्धं हेमकल्हारं तस्यार्द्धं परिवारकम्
इतरेषाञ्च देवानां तस्यार्द्धं वा विनिक्षिपेत्  १५९
नवरत्नं पञ्चरत्नं त्रिरत्नमथवापि वा
अथवा एकरत्नं वा कुम्भमद्ध्ये विशेषतः  १६०
उत्तमं तिलवत्कृत्वा मद्ध्यमं यवमुच्यते

अथवाङ्गुलिमद्ध्यं वा तन्तुवेष्टनमुत्तमम् १६१
पञ्चविंशतिपर्णं वा तदर्द्धं भानुसङ्ख्यया
अथवा वसुवर्णं वा हेमं चूतदळाकृतिम् १६२
सर्वद्रव्यान्समापाद्य यागद्वारे प्रवेशयेत्
मण्टपाराधनं पूर्वं द्वितीय्यमभिषेचनम् १६३
तृतीय्यं वास्तुकर्मञ्च यात्राहोमं चतुर्थकम्
घटे चावाहयेत्पश्चात् वेदिकां पूजयेदपि १६४
सप्तमं होमकर्मञ्च अष्टमं पीठशोधनम्
सैकतेन समापूर्यं द्व्यङ्गुलं हेमरत्नकैः १६५
युगाङ्गुलन्तु लेह्येन अष्टबन्धनमुच्यते
द्वादशस्नपनञ्चैव महास्नपनमुत्तमम् १६६
इहार्य यजनञ्चैव त्रयोदशमिति स्मृतम्
आचार्यं पूजयेच्चैव वस्त्रहेमाङ्गुलीयकैः १६७
दक्षिणान्दापयेच्चैव ब्राह्मणान्पूजयेत्ततः
दक्षिणाञ्जपकर्त्तृणां दापयेत् ब्राह्मणाय च १६८
एवं यः कुरुते मर्त्यः सपुण्याङ्गतिमाप्नुयात् १६९
इति अष्टबन्धनपटलद्विचत्वारिंशत्तमः

पादुकाराधनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि पादुकाराधनं श्रुणु
सर्वानुग्रहकारणं जगत्सृष्ट्यर्त्थकारणम् १
चतुरङ्गुलमानीय्य षडङ्गुलप्रविस्तरम्
वृत्ताकारं प्रकुर्वीत अग्रे तु कर्णिकाश्रितम् २
अधच्छदनषोढाश्च दळसङ्ख्या क्रमेण तु
उपपीठमधो भागे सुतीक्ष्णं कारयेत्ततः ३
कर्णिका मद्ध्यमे चैव पादुका द्वयमुच्यते
पूर्ववद्यागशालाञ्च षोडशस्तंभसंयुतम् ४
वेदिकां पूर्ववत्कल्प्य दशकुंभं न्यसेत्ततः
परिवारघटान्पूज्य तोरणान्मङ्गळान्यजेत् ५

नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा
अथवा एककुण्डं वा पूर्वोक्तविधिनाचरेत् ६
कुम्भमूले वृषं पूज्य कुम्भे चैव सदाशिवम्
पञ्चावरणमार्गेण पूजयित्वा विशेषतः ७
उक्तमन्त्रैर्हुनेदग्निं जलाधिवासनन्तथा
नयनोन्मीलनञ्चैव मद्ध्ये पादुकयोश्चरेत् ८
रत्नन्यासं विना चैव शेषं पूर्ववदाचरेत्
न्यासकर्मसमाराद्ध्य घटस्नानं समाचरेत् ९
महाहविर्निवेद्याथ ब्राह्मणान्पूजयेत्ततः
दक्षिणान्दापयेत्पश्चात् नित्योत्सवमतः परम् १०
दर्भकूर्चं समादाय पादुकोपरिविन्यसेत्
शिवमावाहयेत्पश्चात् गन्धपुष्पैस्समर्चयेत् ११
शिबिकां रोपयेत्तत्र तूर्यवाद्यैस्समन्वितम्
छत्रचामरपिञ्छैश्च दीपैश्च बहुभिर्युतम् १२
प्रदक्षिणक्रमेणैव भोगशक्त्यालयङ्गतः
मञ्चमारोपयेद्देवं नैवेद्यं धूपदीपकम् १३
तन्मध्ये तु महाशय्यां श्रीफलैश्च विराजितम्
क्षौमवस्त्रेण संवेष्ट्य संपुटाकारनिर्मितम् १४
कर्णिकारफलञ्चैव कार्पासञ्चैव पूरयेत्
चतुर्हस्तसमं दीर्घं द्विहस्तञ्चैव विस्तरम् १५
षडङ्गुलघनं प्रोक्तं चित्रवस्त्रैरलङ्कृतम्
करमेकेन दीर्घं स्यात् षडङ्गुलसुविस्तरम् १६
चित्रवस्त्रैरलङ्कृत्य तन्तुनावेष्टयेत्किल
अन्नकार्पासमयिना पार्श्वयोश्च विराजितम् १७
मल्लिका शोकपुन्नागजाती च मृगपुष्पकैः
तस्योर्ध्वे पुष्पराशिञ्च तस्योर्ध्वे मृदुवस्त्रकम् १८
षोडशान्युपयाद्दर्भान् कूर्चरूपं भवेत्ततः
मद्ध्ये स्थिरासनं पूज्य नेत्रमुद्रां प्रदर्शयेत् १९
पादुकापुष्पमादाय कूर्चेप्यावाहनं गुरुः

स्थापनं सन्निधानञ्च सन्निरोधावकुण्ठनम्  २०
धेनुमुद्रां प्रदृश्याथ स्वागतं ज्ञापयेत्ततः
गौरीमावाहयेत्पश्चात् -----------  २१
स्थापनादीनि कर्तव्यं नैवेद्यं धूपदीपकम्
शयनं मनसाभाव्य दिग्बन्धनावकुण्ठनम्  २२
दशायुधं समभ्यर्च्य भैरवाष्टकमर्चयेत्
तृतीय्यावरणे चैव सप्तमातृगणार्चयेत्  २३
इन्द्रादीनर्चयेच्चैव दशदीक्षुशिवाज्ञया
विघ्नं प्रशान्तयेत् भागं श्रावयेद्वामपार्श्वके  २४
क्रमुकं कदळी चूर्ण छेदिकाधारिका तथा
सुगन्धानि सुपुष्पादि अम्लानदीपपूर्वके  २५
निधायजलपात्रञ्च परितश्छदनन्तथा
कवाटं बन्धयेच्चैव तत् बाह्ये सव्यपार्श्वके  २६
नन्दिकुम्भोदरौ पूज्य दक्षिणे भैरवं यजेत्
गोपुरद्वारमाबन्ध्य स्वदेशे च निगद्यते  २७
प्रातस्समयतत्पूर्वे घटिकापञ्चकोत्थितः
वाचास्तोत्रं मनोद्ध्यानं संप्राप्यावाह्य देशिकः  २८
शौचाचम्य्य प्रशान्तश्च स्नानानुष्ठानपूर्वकम्
धौतवस्त्रोत्तरीय्यञ्च शिवधामप्रवेशयेत्  २९
निश्चित्य नाडिका त्रीणि भोगशक्त्यालयङ्गतः
अष्टपुष्पं समभ्यर्च्य दन्तशोधनपूर्वकम्  ३०
भावनास्नानकर्मञ्च नैवेद्यं दापयेत्ततः
धूपदीपन्ततः कृत्वा पाद्यमं चमनार्घ्यकम्  ३१
दापयेच्छिवमुत्थाप्य पादुके योजयेत्ततः
शिबिकायां समारोप्य प्रादक्षिण्य क्रमेण च  ३२
गर्भगेहे समारोप्य मूललिङ्गे सुयोजयेत्
उदयात्पूर्वं निश्चित्य मुहूर्तं न्यूनमुत्तमम्  ३३
उषः काले प्रकुर्वीत मूललिङ्गाभिषेचनम्
नैवेद्यमुदयात्पूर्वं पूजान्ते भास्करोदयम्  ३४

एवं निश्चित्य पूजाञ्च उषः काले प्रशस्यते
व्रतकाले विशेषेण जनानामुदयात्परम् ३५
भोगशक्त्यालये रात्रौ पादुकाराधनं पुरा
भ्रान्ते चोरैः प्रमादैर्वा म्लेच्छैर्वा परिमाहितैः ३६
ग्राहयेत्पादुकां यत्र कथं शंभोश्शिवार्चनम्
घटमादाय सूत्रेण वेष्टयेज्जलपूरितम् ३७
अलङ्कृत्य घटं स्थाप्य कूर्चादाकर्षयेच्छिवम्
घटे चावाहयेच्चैव योजयेन्मूलबेरकैः ३८
नित्यपूजां प्रकुर्वीत पूर्ववत्पादुकाञ्चरेत्
पादुकाराधने काले सर्वदोषो न विद्यते ३९
कथं शंभोर्विशेषेण विड्वरे विद्यतेऽपि वा
मातापितृविना चान्ये अनुजोज्ञातिबान्धवाः ४०
काठिन्येऽपि च निश्लेष्टां अमृतं तत्क्षणे गुरुः
स्नानानुष्ठानपूर्वं यः पादुकाराधनञ्चरेत् ४१
तित्यपूजां प्रकुर्वीत अन्ते आशौचमिष्यते
प्रतिष्ठोत्सवकाले तु तदेवकथमीश्वर ४२
पूर्वे चाङ्कुरतः पश्चात् वास्तुर्यजनमद्ध्यमे
तत्क्षणे स्नानमाचम्य घटेऽप्यावाहयेच्छिवम् ४३
रक्षासूत्रं प्रकुर्वीत सर्वदोषो न विद्यते
आशौचं यागपूजान्ते तन्मद्ध्ये तु न दोषभाक् ४४
दुर्दिनं तारदुर्योगाननवेक्ष्य षडानन
पादुका पूर्ववत्कृत्वा प्रतिष्ठाङ्कारयेत्ततः ४५
प्रमादे पतने काले तन्निवृत्य च तत्क्षणैः
मूलबेरे विशेषेण संप्रोक्षणं समाचरेत् ४६
पादुकाराधनं पश्चात्पूर्ववत्परिकल्पयेत्
प्रमादैः पादुकाभिन्ने महाशान्तिं प्रकल्पयेत् ४७
संप्रोक्षणं ततः पश्चात्पूर्ववत्परिकल्पयेत्
प्रादक्षिण्ये च तन्मद्ध्ये शूद्रादिस्पर्शनेऽपि वा ४८
अघोरास्त्रेण मन्त्रेण अष्टोत्तरशतं हुनेत्

भोगशक्त्यालये प्राप्ते चोरैर्वा स्पर्शनेऽपि वा ४९
सवस्त्रक्षाळनञ्चैव संप्रोक्षणं समाचरेत्
गर्भगेहे च संप्राप्ते चण्डाळम्लेच्छजातिभिः ५०
सवस्त्रशोधनञ्चैव हित्वा भाण्डादिगड्डुकम्
प्रथमावरणे चैव पचनालयमुच्यते ५१
तद्भाण्डं वर्जयेच्चैव संप्रोक्षणं समाचरेत्
प्राकारस्यान्तरे प्राप्ते पूर्वे च प्रोक्षणं चरेत् ५२
अष्टोत्तरशतं वापि एकोनञ्च शतार्द्धकम्
पञ्चविंशतिभं वास्तु पठनं मूलबेरके ५३
प्रथमावरणे द्वारे शान्तिहोमं समाचरेत्
द्वितीय्यावरणे प्राप्ते शान्तिकुम्भेन प्रोक्षयेत् ५४
तृतीय्यावरणे प्राप्ते गव्येन प्रोक्षणं भवेत्
यथा क्षत्रियपत्नी च चण्डाळेन सुशायिनी ५५
तथासंयोगमात्रेण तत्प्रजाक्षौरको भवेत्
अण्डजः पादजः स्त्रीषु संभोगमिति कत्थ्यते ५६
तदात्मजस्सुराग्राही नवृत्तिश्च ---- भितः
वैश्यस्त्री च सुराग्राही संयोगात् मुच्यते ५७
रजकोनाम इत्येते तद्भेदं रजको भवेत्
बाह्ये दशपदान्ते च सुराग्राही शुचिर्भवेत् ५८
अहमर्त्यस्सप्तपदी तदेवरजकींशुकः
प्रथमावरणे प्राप्ते अहं कीर्त्य कारवः ५९
शान्तिहोमं प्रकुर्वीत केवलं प्रोक्षणञ्चरेत्
पाकशालां प्रविश्याथ भाण्डन्त्यक्त्वा शुचिर्भवेत् ६०
मण्टपान्तः प्रवेश्याथ गण्डूकादिपरित्यजेत्
वस्त्रशोधनमेवोक्तं शान्तिहोमं समाचरेत् ६१
स्नपनं पञ्चविंशत्या कारयेद्देशिकोत्तमः
प्रथमावरणे प्राप्ते सुराग्राही विमोहितः ६२
मण्टपान्तः प्रवेश्याथ संप्रोक्षणं समाचरेत्
प्राकारमद्ध्यमे वापि शान्तिहोमं समाचरेत् ६३

पचनालयं प्रवेश्याथ भाराडन्त्यक्त्वाशुचिस्तथा
द्वितीय्यावरणे चैव गव्येन प्रोक्षणं भवेत् ६४
यथापुष्पवती नारी सूतकीशवधारिणी
प्रवेश्य मन्दिरं गत्वा सुराग्राहि समं भवेत् ६५
प्रोक्षणं शान्तिहोमञ्च गव्यं पूर्ववदाचरेत्
रासभं कुक्कुटं गृध्रं श्वानं व्याघ्रं प्रवेशयेत् ६६
तदान्तर्मराटपं गत्वा भाराडं त्यक्त्वा शुचिर्भवेत्
शान्तिहोमं ततः कृत्वा स्नपनं पञ्चविंशतिम् ६७
अभिषेकन्ततः कृत्वा पूर्ववत्परिकल्पयेत्
प्रथमावरणे गत्वा बाह्य देशगतो भवेत् ६८
केवलं शान्तिहोमञ्च तेन सञ्चारदेशिकम्
प्रोक्षयेदंभसा चैव पश्चात्पूजां समाचरेत् ६९
पचनालयमद्ध्ये तु प्रविश्य यदि यत्स्थले
भाराडन्त्यक्त्वा शुचिर्भूत्वा शान्तितो येन प्रोक्षयेत् ७०
आलये रुधिरं दृष्ट्वा शान्तिहोमं समाचरेत्
मोहेन मलमूत्रञ्च कुरुते मराटपान्तरे ७१
संप्रोक्षणं ततः कृत्वा प्राकारे च ततश्शृणु
शान्तिहोमं ततः कृत्वा पूजयित्वा यथा विधि ७२
नरैर्मृतं प्रकुर्वीत संप्रोक्षणं समाचरेत्
द्वितीय्यावरणे चैव महाशान्तिं प्रकल्पयेत् ७३
तृतीय्यावरणे चैव शान्तिहोमं समाचरेत्
गोवधीग्रामचराडाळो मार्जनो यवनस्तथा ७४
कपिलोकीर्तिलंबश्च शिवालयं नलङ्घयेत्
मोहेन लङ्घनं कृत्वा संप्रोक्षणं समाचरेत् ७५
तत् भाराडं वर्जयेच्चैव वस्त्रशोधनमारभेत्
ब्रह्मक्षत्रियवैश्याश्च पादजश्च चतुर्विधाः ७६
ब्राह्मणानां दशाहं स्यात्क्षत्राणां द्वादशाहकम्
वैश्यानां पक्षसङ्ख्या च शूद्रो मासेन शुद्ध्यति ७७
शिवदीक्षायुतो विप्रः क्षत्रियो वैश्यशूद्रकः

आदिशैवकुलो विप्रः सद्यो निर्वाणशोधितः ७८
मातापितृमृते काले आशौचन्नसमाचरेत्
शिवद्ध्यानेन रहितः किञ्चित् ज्ञानपरायणः ७९
त्रिदिनं आचरेत्पश्चात् विशेषं श्रुणु सुव्रत
आत्मार्त्थञ्च परार्त्थञ्च ज्ञानवादाधिकारिणाम् ८०
एकाहं शुद्धयेच्चैव क्षत्रियाणां ततश्शृणु
निर्वाणदीक्षिताश्चैव दिनैकादशतश्शुचिः ८१
वैश्यानां समयी चैव आशौचन्तु चतुर्दश
दीक्षा द्वयं प्रकुर्वीत आशौचन्तु त्रयोदश ८२
पादजानां दीक्षितानां समयी पञ्चविंशतिम्
विशेषशिवपूजाश्च देवकार्यपरायणम् ८३
कालानुष्ठानसहितं षोडशाहं प्रकीर्तितम्
केवलं शिवपूजाञ्च विंशद्दिनं प्रकीर्तितम् ८४
निर्वाणदीक्षितानाञ्च पक्षसङ्ख्या दिनं भवेत्
योगिनां ज्ञानिनाञ्चैव आशौचन्न समाचरेत् ८५
सद्यश्शौचन्तु विप्राणां त्र्यहञ्च परिकल्पयेत्
भूपतिर्वैश्यजातौ च रुद्रसङ्ख्या त्रयोदश ८६
आशौचं कल्पयेच्चैव पादजानां विशेषतः
पञ्चविंशतिविंशत्या षोडशं पक्षसङ्ख्यया ८७
सद्यश्शौचमिति प्रोक्तं कथं शंभो श्रुणुष्वथ
शैवदीक्षा महत्वेन कल्पाशौचं विधीय्यते ८८
कल्पाशौचं महत्वेन पितृश्राद्धं भवेच्चरेत्
आत्मनश्शुचिरे तानि स्वगृहश्शुचिरुच्यते ८९
अग्न्याधानं प्रकुर्वीत आत्मकार्यं विशिष्यते
परकार्यं विना प्रोक्तं दीक्षादिप्रोक्षणादिषु ९०
न कारयेद्यथा तावत्परार्त्थन्तु न दर्शयेत्
जाताशौचमयन्तावत् परार्त्थन्तु न लङ्घयेत् ९१
मोहेन दर्शयित्वा तु अचिरात्कुलनाशनम्
तस्मात्सर्वप्रयत्नेन प्रविशेन्मण्टपान्तरे ९२

संप्रोक्षणं प्रकुर्वीत प्रथमावरणे श्रुणु
शान्तिहोमं प्रकुर्वीत अंभसा प्रोक्षणञ्चरेत् ९३
प्रथमावरणद्वारं नलङ्घेत्सूतकी भवेत्
विशेषदीक्षिताश्चैव शिवज्ञानपरायणाः ९४
शिवकैङ्कर्यधीरत्वं प्रतिविद्यादनुष्ठितम्
आजीवितान्तं तेमीषां परार्त्थे सेवितं यदि ९५
शिवलिङ्गं दृशेत्पश्चात् भोजनं जीवितान्तकम्
एवं यः कुरुते मर्त्यस्सद्यश्शौचं भवेदपि ९६
मातापितृमृते काले आशौचं संभवेद्यदि
कथं व्रतं प्रकुर्वीत द्वितीय्यावरणे यथा ९७
प्रादक्षिण्य क्रमेणैव भद्रपीठं प्रदर्शयेत्
विमानन्दर्शयेच्चैव दीपच्छायां प्रदर्शयेत् ९८
गणिकाकर्णिकानाञ्च दशानां पक्षसङ्ख्यया
षोडशस्नानमात्रेण शुचिर्भवति षण्मुख ९९
चतुर्त्थावरणे चैव पञ्चमावरणेऽपि वा
आशौचन्नाचरेद्विद्वान् विशेषं श्रुणु षण्मुख १००
तृतीय्यावरणे बाह्ये दण्डान्तं भानुसङ्ख्यया
अन्ते नरमृतञ्चैव आशौचन्नसमाचरेत् १०१
चतुर्त्थावरणे चैव नाराचञ्च चतुर्दिशि
आमूलाग्रसमासक्तान् तदन्ते वीधिमुच्यते १०२
वीध्यन्तरे समासक्तान् केवलं वेश्मवर्जितम्
तदन्ते वीधिमद्ध्ये च मृते चैव मनुष्यके १०३
परार्त्थे पूजनं पश्चात् आशौचं न समाचरेत्
पादुकाराधनं कृत्वा भोगभाग्याभिवृद्धिदम् १०४
पादुकाराधनं हीनं गजतामसुखं भवेत्
एवं यः कुरुते मर्त्यः मुक्तकः करकल्पवत् १०५

इति पादुकाराधनपटलस्त्रिचत्वारिंशत्तमः

महाशान्तिविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि महाशान्तिविधिक्रमम्
भूकंपे जीवदाहे च रजनी तपनन्दृशेत् १
उपसूर्यं दृशेच्चैव उपसोमनिशाकरे
अमायाञ्चन्द्रबिंबञ्च धूमकेतुप्रदर्शके २
देवतारोदनञ्चैव अदृश्यन्देवमन्दिरम्
विवर्णन्देवतानाञ्च रक्तवृष्टिर्भवेद्यदि ३
क्षीरवृष्टिरनावृष्टिश्चतुष्पादमृतेषु च
पात्रपादादिकं हीनं मेषेश्वानं प्रजायते ४
गोगर्भे महिषीजातं गजगर्भे खरस्तथा
जातिभेदं दृशेच्चैव नरगर्भे मृगाकृतिम् ५
भूताकृतीदमेवोक्तं अफलं सुतरुः
जातिभेदफलन्दृष्ट्वा ग्रामदैवतपीडने ६
उल्कापाते विशेषेण अपशब्दश्रुतेरपि
---- शपदने मन्दिरे तीर्थशोषिते ७
ईतिबाधापिषेध्यां चोरैर्वादेवमन्दिरे
अन्तः प्रविश्यकाले तु म्लेच्छान्तः प्रविशेद्यदि ८
विद्यवृक्षहतञ्चैव कृमिकूटञ्च कुक्कुटम्
विवर्णभेदिते काले विवर्णेनांभसापि वा ९
एवमादिषु कालेषु महाशान्तिं प्रकल्पयेत्
पूर्ववद्यागशालाञ्च षोडशस्तंभमण्टपम् १०
कारयेद्विधिवच्चैव अथवा स्नानमण्टपे
देवस्य सन्निधौ वापि मद्ध्ये कुण्डं प्रकल्पयेत् ११
त्रिमेखलं युगाश्रञ्च सम्यक्कुण्डं प्रकल्पयेत्
कुण्डसंस्कारपूर्वन्तु अग्निसंस्कारमेव वा १२
स्रुक्स्रुवं संस्कृतिं चैव सर्पिस्संस्कारमेव वा
आवृतान्तं हुनेच्चैव अग्निं प्रात्र्थ्य चरेत् हृदि १३
अघोरास्त्रमघोरेण न्यसेत्पाशुपतन्तु वा
शिवास्त्रं वा यजेत्तेषु एकमभ्यर्च्य बुद्धिमान् १४

अश्वत्थञ्चैव पालाशं शमीखादिरबिल्वकम्
औदुंबरवटाकञ्च अपामार्गं गळूचिका १५
दूर्वा पृथक्पृथक्चैव अष्टोत्तरशतं भवेत्
साहस्रसङ्ख्यया चैव क्षीरेणैव परिप्लुतम् १६
होमयेद्विधिवत्पश्चात् आज्येनैव सहस्रकम्
होमयेत्तु विशेषेण तिलमादाय पात्रके १७
क्षीरं घृतं मधुयुतं तिलमिश्रं हुनेत्ततः
सहस्रसङ्ख्याहोमैश्च दूर्वामादाय तत्परम् १८
क्षीरेण सेचनं कृत्वा सहस्रं सङ्ख्यया क्रमात्
चरुमाज्येन मिश्रञ्च सर्वञ्चैव हुनेत्ततः १९
प्रथमादिनमारभ्य सप्तविंशद्दिनान्तकम्
नित्यहोमं विशेषेण दिनं प्रतिदिनं प्रति २०
अजस्राग्निं हुनेच्चैव अथोवाच दिनं प्रति
कुण्डसंस्कारमेवोक्तं पूर्वोक्तविधिनाहुनेत् २१
द्रव्याभावे सहस्रार्द्धं अष्टोत्तरशतन्तु वा
तस्यार्द्धं वा तदर्द्धं वा दिनं प्रतिहुनेत्ततः २२
पूर्वादि च चतुर्दिक्षु मद्ध्ये चैव विशेषतः
अष्टाविंशतितन्त्रञ्च कामिकादि जपेत्ततः २३
पञ्चब्रह्मजपेच्चैव ऋग्वेदादीन्जपेत्ततः
स्तोत्रपाठन्तु मद्ध्ये च गीतनृत्तैस्समन्वितम् २४
बेरञ्चेदग्निदग्धं स्यात् उत्पातकभयेऽपि वा
एकाशीति तदर्द्धञ्च तदर्द्धं वाभिषेचयेत् २५
महाहविर्निवेद्याथ उपचारान्समर्चयेत्
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात् २६
इति महाशान्तिपटलश्चतुश्चत्वारिंशत्तमः

शान्तिहोमपटलप्रारंभः
अथातस्संप्रवक्ष्यामि शान्तिहोमविधिक्रमम्
वेदिकां पूर्ववत्कृत्वा षडङ्गुलसमुन्नतम् १

दर्पणोदरमद्ध्यस्थं तत्पूर्वं कुराडमुच्यते
अथवास्थरिडलं वापि धान्यपुञ्जैरलङ्कृतम्  २
घटमेकन्न्यसेन्मद्ध्ये पटालङ्कृतपूर्ववत्
पूर्वादिषु चाष्टदिक्षु नैर्ऋृतेशानकोणयोः  ३
दशकुम्भं न्यसेच्चैव तन्तुना वेष्टितन्तथा
मद्ध्ये पाशुपदास्त्रञ्च पूजयित्वा विशेषतः  ४
वज्रादिपरितः कृत्वा पूजयित्वा विशेषतः
नैवेद्यन्धूपदीपञ्च जपान्तं पूजयेत्ततः  ५
पालाशं वटमश्वत्थं बिल्वं खादिरमेव च
औदुंबरमपामार्गं शमीशाखश्च सर्पिषा  ६
शतार्द्धं गोपुरे चैव एकाहुतिं पृथक्पृथक्
गोघृतेन सहस्रञ्च आहुतिं परिकल्पयेत्  ७
प्रत्येकं शतसङ्ख्या च नवधासमिधन्तथा
क्षीरेणाप्लावनञ्चैव समिधं होमयेत्ततः  ८
क्षीरेण मिश्रं सतिलं शतसङ्ख्यां हुनेत्ततः
देवदूर्वाङ्कुरं लक्षं हुत्वा च शतसङ्ख्यया  ९
क्रमेण पृथक्पृथक् हुत्वा दोषशान्तिं गुरुश्चरेत्
उच्चार्यहोमयेच्चैव चरुं हुत्वा विशेषतः  १०
पयसाज्येन मिश्रञ्च बदरीकफलाकृतिम्
अम्लानकटकं हुत्वा कुम्भे संयोजयेत्ततः  ११
विमुखार्घ्यं ततः पश्चात्पर्यग्निकरणं श्रुणु
श्वानगृद्ध्रा विभव्याघ्रौ ग्रामसूकरमेव च  १२
चोरैश्च सूतकीच्चैव दूरस्त्रीमृदमेव च
चराडाळकपिलो दराडो चारणोपालिकस्तथा  १३
धवतोकीर्तिलंबश्च सुरान्  --- प्रवेशके
पर्यग्निकरणञ्चैव अन्येषां वर्जयेत्ततः  १४
अन्यकर्मणि सर्वत्र अंभसा प्रोक्षणं भवेत्
गव्येन प्रोक्षयेत्पश्चात्पर्यग्निकरणं विना  १५
पर्यग्निकरणं वक्ष्ये याज्ञिकं वृक्षसंभवम्

पालाशपर्णशाखाञ्च आबन्ध्य घृतसेचनम्  १६
वस्त्रमाच्छादनं कृत्वा पापदेवं समर्चयेत्
पञ्चवक्त्रञ्चतुर्बाहुं दशश्रोत्रं सुनासिकम्  १७
कृष्णवर्णं महाभीमं रक्तदृष्टिभयं करम्
दृष्ट्वाकराळवदनं भ्रुकुटीमुखभीषणम्  १८
महापापकरूपन्तु द्ध्यायेन्मन्त्रैश्च पूजयेत्
कुण्डाग्निज्वलनं शीर्षे स्पर्शाहुतिं समाचरेत्  १९
पञ्चब्रह्मषडंगैश्च विमुखार्घ्यं समाचरेत्
परिचारकमाहूय गन्धवस्त्रैरलङ्कृतम्  २०
पाददेशात्समादाय यत्रस्नानं समाचरेत्
तावत्संशोधयेत्पश्चात् ऐशान्ये विसृजेच्छुचिः  २१
गव्येन प्रोक्षयेत्पश्चात् शान्तिहोमं समाचरेत्
एवं कृत्वा विशेषेण सर्वदोषनिवारणम्  २२

इति शान्तिहोमपटलः पञ्चचत्वारिंशत्तमः

दिशाहोमपटलप्रारंभः

अथातस्संप्रवक्ष्यामि दिशाहोमन्ततश्शृणु
प्रथमावरणञ्चैव पूर्वादीश्च चतुर्दिशः  १
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव वा
मद्ध्ये वेदिं प्रकल्प्याथ तत्पूर्वे कुण्डमुच्यते  २
अभावे द्रव्यहीने वा पूर्वे चैव विशेषतः
यागशालां प्रकल्प्याथ मद्ध्ये वेदिं प्रकल्पयेत्  ३
वेदिकायुगसङ्ख्या च कुण्डं वै युगसङ्ख्यया
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव वा  ४
वेदिकामद्ध्यमे चैव दशकुम्भं न्यसेत्ततः
पृथक्पृथक् समापाद्य सर्वोपकरणानि तु  ५
पूर्वे तु यागशालायां घटे संपूजयेच्छिवम्
शिवास्त्रं पूर्ववत्पूज्य वज्रादीन् स्वस्वदिग्यजेत्  ६
गन्धपुष्पैरलङ्कृत्य सूत्रादिहोमपल्लवैः

सापिधानादिकं कुर्यात् नैवेद्यं धूपदीपकैः ७
पूर्ववद्वह्निकर्माथ चतुस्संस्कारपूर्वकम्
उक्तमन्त्रैर्हुनेच्चैव पालाशं गोघृतन्तथा ८
सहस्रं वा तदर्द्धं वा अष्टोत्तरशतन्तु वा
पालाशं गोघृतञ्चैव प्रत्येकं होमयेत्ततः ९
हुनेत्पक्षसमिच्चैव पूर्णान्तं होमयेत्ततः
अघोरास्त्रं समभ्यर्च्य उक्तद्ध्यानं समाचरेत् १०
वज्रादीन्पूर्वमेवोक्तं अष्टमूर्तीन्समर्चयेत्
अग्निकार्यं समाराद्ध्य सर्पिषाहोमयेत्ततः ११
उदुंबरसमिच्चैव तस्यार्द्धं वा शतन्तु वा
तदर्द्धं वा हुनेच्चैव प्रायश्चित्तं समाचरेत् १२
अंगानान्तु दशांशञ्च होमयित्वा पृथक्पृथक्
उत्तरे यागवेद्यान्तु दशकुम्भान्न्यसेत्ततः १३
प्रत्यंगिरं समभ्यर्च्य संयजेत्
वज्रादित्रिशिखान्तञ्च अर्चयित्वा विशेषतः १४
गोघृतेन हुनेच्चैव न्यग्रोधसमिधाहुनेत्
गोधूमां मधुनामिश्रां पूर्ववद्धोमयेत्ततः १५
प्रायश्चित्तं हुनेच्चैव पूर्णान्तं योजयेत् घटे
पराङ्मुखार्घ्यं सर्वेषां दापयेद्देशिकोत्तमः १६
प्रधानघटमादाय प्रोक्षयेदस्त्रमन्त्रतः
दिशाहोममिति प्रोक्तं सर्वदोषनिवारणम् १७
इति दिशाहोमपटलष्षट्चत्वारिंशत्तमः

संहिताहोमपटलप्रारंभः
अथातस्संप्रवक्ष्यामि संहिताहोममेव तु
यागशालां प्रकल्प्याथ वेदिकां पूर्ववच्चरेत् १
तत्पूर्वे कुण्डमुच्यते अथवा स्थण्डिलेऽपि वा
------------------ कारयेद्देशिकोत्तमः २
घटमेकन्न्यसेच्चैव तन्तुवेष्टमनुत्तमम्

हेमपंकजरत्नञ्च नाळिकेराम्रपल्लवैः ३
अलङ्कृत्यविशेषेण पञ्चब्रह्मषडंगकैः
आवाह्य पूजयेत्पश्चात् नैवेद्यन्धूपदीपकम् ४
पूर्वोक्तविधिना चैव अग्निकार्यं समाचरेत्
सर्पिषा चैव पालाशं परं हुत्वा विशेषतः ५
पञ्चब्रह्मषडङ्गैश्च प्रत्येकं शतसङ्ख्यया
पुर्णान्तं होमयेत्पश्चात्प्रायश्चित्तं चरेत् गुरुः ६
होमद्रव्याणि सर्वाणि पूर्ववद्विधिना हुनेत्
पराङ्मुखार्घ्यमन्ते च घटे संयोजयेत्ततः ७
दिव्यमुद्रां सुसंयोज्य अंभसा प्रोक्षणं भवेत्
एवं यः कुरुते मर्त्यस्सर्वदोषनिवारणम् ८
इति संहिताहोमपटलस्सप्तचत्वारिंशत्तमः

मूर्तिहोमपटलप्रारंभः

अथातस्संप्रवक्ष्यामि मूर्तिहोमविधिक्रमम्
पूर्ववद्यागमद्ध्ये च वेदिकाञ्चतुरश्रकाम् १
तत्पूर्वे कुण्डमेवोक्तं स्थण्डिलं वा प्रकल्पयेत्
धान्यपुञ्जैरलङ्कृत्य पद्ममष्टदळं लिखेत् २
शिवकुम्भन्न्यसेन्मद्ध्ये वर्द्धनीं वामपार्श्वके
वज्रादिदिशिकुम्भांश्च स्थापयेत्पूजयेत्क्रमात् ३
अघोरास्त्रं समभ्यर्च्य रथाङ्गांश्च दशायुधान्
आवाह्य गन्धपुष्पैश्च नैवेद्यन्धूपदीपकम् ४
अग्निं पूर्ववदाराध्य अघोरास्त्रं समर्चयेत्
आज्येन होमयेत्पश्चात्पलाशाद्यैर्हुनेत्ततः ५
क्षीरेण सहितञ्चैव तथैव तिलहोमकम्
दूर्वायुक्तं हुनेच्चैव पयसा मिश्रितं हुनेत् ६
मधुयुक्तं घृतं क्षीरमिश्रितं होमयेत् चरुम्
सहस्रादिशतान्तञ्च यथा शक्त्याहुनेत्ततः ७
दशांशं होम्मयेच्चैव पूर्णाहुतिं समाचरेत्

घटे संयोजयेत्पश्चात् अग्निमुद्वासयेत्ततः ८
प्रधानघटमादाय अंभसा प्रोक्षयेदिति
सर्वशांतिकरं पुरायं सर्वाभीष्टफलप्रदम् ९
सर्वव्याधिप्रशमनं सर्वदोषनिवारणम् १०
इति मूर्तिहोमपटल अष्टचत्वारिंशत्तमः

अमावास्यापूजापटलप्रारंभः
अथातस्संप्रवक्ष्यामि अमायजनमुत्तमम्
उदयाद्युदयान्तञ्च अमाया उत्तमं भवेत् १
उदयाद्यस्तमनान्तं मद्ध्यमं परिकीर्तितम्
पञ्चविंशतिनाड्यस्तु अधमं परिकीर्तितम् २
तद्दिने तीर्थमित्युक्तं तद्रात्रौ पूजयेच्छिवम्
मद्ध्याह्नव्यापिनीयुक्तं तीर्थकार्यं विधीय्यते ३
तद्दिने श्राद्धकर्मापि पितृणान्तृप्तिमक्षयम्
तिलोदकप्रदानञ्च तद्दिने तु विशेषतः ४
मासमेकदिनं प्रोक्तं कथं श्राद्धं महेश्वर
तद्दिने तु पितृश्राद्धं कुलकोटिं समुद्धरेत् ५
उदयाद्यस्तमनान्तं पञ्चभागं विभज्य च
प्रातस्संगममद्ध्याह्नं अपराह्णन्तथैव च ६
सायाह्नमिति संज्ञेयः सायाह्नव्यापिनी यदि
परे हनि त्वमायान्तु यत्राधिक्यं दिने भवेत् ७
तद्दिने च पितृश्राद्धं तिलोदकमथापि वा
श्रद्धया दीयते श्राद्धं यथा शक्तिविचारतः ८
प्रथमादिपूर्णिमान्तं शुक्लपक्षन्तथैव च
यत्तिथौ म्रियते मर्त्यः तत्तिथौ श्राद्धमुत्तमम् ९
श्रोत्रियो वेदविदुषश्शास्त्रज्ञो ज्ञानवान्तथा
शिवपूजापरो विप्रश्शिवद्विजकुलोद्भवः १०
शिवदीक्षा युतश्चैव उत्तमं परिकीर्तितम्
अपत्नीकोवनस्थश्च पाण्डित्यज्ञानहीनकः ११

अदीक्षितश्चाङ्गहीनः काणः पिशुनशुण्डकः
गोळकोदत्तपुत्रश्च अृतुपूर्वोजपुत्रिकौ १२
दन्तहीनोदुराचारो लोके भवति निन्दितः
धूर्त्तो बह्वग्निसंतप्तः क्रूरो वाप्यन्यजातयः १३
एतान्त्यजेदभावे च देशिकः पत्निहीनकः
श्राद्धं करोति यद्विप्रो यद्वाभावे गुह श्रुणु १४
ब्रह्मचारी च विप्रश्च विश्वेदेवे प्रशस्यते
अभावे पैतृकश्चैव कारयेदन्यजातयः १५
स्वस्वजातिष्वभावेन वर्जयेतान्यजातयः
चरेच्छ्राद्धं गृहे चैव गोमयालेपनं तथा १६
द्विजातिवरणञ्चैव उपचारेण भक्तिमान्
ब्राह्मणान् ग्राहयेत् भक्त्या स्नानानुष्ठानपूर्वकम् १७
नित्यकर्मप्रकुर्वीत तदेवब्राह्मणान् वरेत्
पादप्रक्षाळनं कृत्वा गन्धतैलाभिषेचनम् १८
मथितञ्च स्वशिष्येण लेपनं स्नानमाचरेत्
यथाविधि प्रकुर्वीत धौतवस्त्रोत्तरीय्यकम् १९
वस्त्रयज्ञोपवीतञ्च भूषणादीनि दापयेत्
स्वगृह्योक्तविधानेन वह्निकार्यं पुराकृतम् २०
विश्वेदेवं पुराप्रोक्तं पश्चात्पैतृकमुत्तमम्
वैष्णवन्तु तदन्ते वा अर्चयित्वा विशेषतः २१
सदाशिवाख्यवैष्णव्यं अक्षतं तिलपुष्पकम्
गन्धपुष्पादिनाभ्यर्च्य मूलेनावाहयेत्ततः २२
अभ्यङ्गं कवचेनैव वस्त्रन्तु हृदयेन तु
पुरुषेणोपवीतञ्च बहुरूपेण गन्धकम् २३
पादप्रक्षाळनञ्चैव अस्त्रमन्त्रेण देशिकः
सद्येन पुष्पमभ्यर्च्य पाद्यमाचमनार्घ्यकम् २४
मूलेन षोडशवारं अभिमन्त्र्यार्घ्यमुच्यते
ईशानेन तु मन्त्रेणाचमनन्तु विधीयते २५
हृदयेनैव मन्त्रेण पाद्यमादौ विशेषतः

कदळीपर्णमादाय अश्रं वामे तु प्रोक्षयेत्  २६
चतुस्त्रयद्वयं वृत्तं गोमयेनैव शुद्ध्यति
अन्नादिव्यञ्जनांश्चैव यावन्मात्रं प्रपूरयेत्  २७
अस्त्रेण प्रोक्षयेच्चैव पात्रं वामेन संस्पृशन्
अपसव्यक्रमेणैव एकवारं प्रदक्षिणम्  २८
ईशानेनैव मन्त्रेण परिषिच्य विशेषतः
शंबरानुच्चरंश्चैव अभिमन्त्र्य विशेषतः  २९
तिलाक्षतसहोपेतं उदकेनैव पूर्वकम्
दत्तं दापयते चैव पाद्यादौ मन्त्रमुच्चरन्  ३०
सदाजपन्श्रुतिं जप्वा विकिरान्श्राद्धमाचरेत्
उच्छिष्टक्षाळनं पश्चात्तांबूलसहितन्तथा  ३१
दक्षिणान्दापयेत्पश्चात् चतुर्विंशति सङ्ख्यया
पितृणां बलिदानञ्च वह्निमुद्वासनञ्चरेत्  ३२
तिलोदकन्ददेद्विप्रः अन्येषां वर्जयेत्ततः
आमरूपेण कर्तव्यं क्षत्रियादि प्रशस्यते  ३३
मातापितृमृते काले श्राद्धं कुर्वति यः पुमान्
अमायादिवसे प्राप्ते चरेत्पितृदिनं शृणु  ३४
दिवसस्याष्टमे भागे पितृणान्तु तिलोदकम्
दापयेत्तत्र वंशश्च पितृनाचार्यदेशिकः  ३५
जातिसेनापतींश्चैव अतिथीन्परिकल्पयेत्
विप्रमेकांशमादाय बहिरासनमाचरेत्  ३६
तिलेनावर्जयेच्चैव पादक्षाळनपूर्वकम्
गन्धपुष्पैरलङ्कृत्य धूपदीपं प्रदर्शयेत्  ३७
कदळीपर्णमादाय ---------
उपपात्रसहोपेतं प्रोक्षयेदस्त्रमन्त्रतः  ३८
अन्नन्दापयते चैव दद्याल्लवणपूर्वकम्
सर्पिषापयसा चैव दधिमध्वफलत्रयम्  ३९
व्यञ्जनं पायसान्नञ्च परमान्नं पृथक्पृथक्
दापयेत्कदळीपर्णे पात्रशुद्धिञ्च पूर्वकम्  ४०

पितृभ्यो धूपदीपञ्च तिलञ्चोदकपूर्वकम्
दत्तं ददेद्विशेषेण उदकं प्राश्य बुद्धिमान्  ४१
प्राणाहुतिं ततः कृत्वा भोजनानन्तरं ततः
क्रमुकं पत्रचूर्णञ्च दक्षिणान्दापयेत्ततः  ४२
भुञ्जीतपूर्ववत्कृत्वा तांबूलन्नैव शोधयेत्
एकभुक्तं प्रकुर्वीत अभावे श्रुणु षण्मुख  ४३
अशक्तोपि दरिद्रो वा तर्पणानन्तरं गुरुः
आत्मानं पितृरूपन्तु अपसव्योपवीतकम्  ४४
पात्रं प्रोक्षयते पश्चात् अन्नव्यञ्जनपूर्वकम्
निक्षिप्य प्रोक्षयेदन्नं पितृमन्त्रं समुच्चरन्  ४५
व्यञ्जनैस्सहितोपेतं कुक्कुटाण्डप्रमाणतः
-----  अन्नमादाय प्रादक्षिण्य क्रमेण वा  ४६
पिण्डोपरि प्रदातव्यं अङ्गुष्ठाग्रे विनिक्षिपेत्
सव्योपवीतिनं पश्चात् इष्टं भुञ्जीत यो नरः  ४७
पुनर्भुक्तं न कुर्वीत अमादिवसमाचरेत्
ब्राह्मणानां प्रकुर्वीत अन्येषां वर्जयेत्ततः  ४८
कारवल्ली त्रयञ्चैव कदळीफलपर्णकम्
अपक्षफलदण्डञ्च प्रसूनं राजमाषकम्  ४९
अळर्कञ्चैव निष्पावं रत्नाभं बृहतीलता
वज्रवल्ली काळशाकं दण्डशाकं -- यमा  ५०
माषं मुद्गं महावल्ली नारङ्गादय एव च
शृङ्गिबेरं महाशाकं बालकन्दं सुतीक्ष्णी  ५१
धौतकीवनवैदर्भी आम्रमामलकन्तथा
नाळिकेरं कर्करीञ्च उर्वारुकफलन्तथा  ५२
पितृश्रेष्ठमिति प्रोक्तं पितृणामक्षयं भवेत्
अभावे मुद्गपयसा दधिसर्पिश्च तण्डुलम्  ५३
तस्याभावे तण्डुलं वा दापयेत् ब्राह्मणाय च
अशक्तविषये चैव तद्दिने स्नानकर्मणि  ५४
नित्यकर्मसमाराद्ध्य अग्निमादाय बुद्धिमान्

वनं गत्वा पितृश्रेष्ठं शाकमूलसमाश्रितम्  ५५
शुष्कपर्णपलाशादि ग्राहयेत् ----
शतखामुपरिस्थाप्य अग्नीना वाहयेत् बुधः  ५६
ध्यात्वा पितृन्समभ्यर्च्य अत्यन्तं दुःखितो भवेत्
पितृणामक्षयां तृप्तिं वनश्राद्धं प्रकीर्तितम्  ५७
नृपवैश्यौ पादजानां मातापितृमृते दिने
प्रातस्समयकालञ्च मद्ध्याह्ने नाडिका त्रयम्  ५८
तिथिव्यापकमेवोक्तं आमश्राद्धं विधीयते
मद्ध्याह्ने नाडिका त्रीणि हीनं पूर्वदिने चरेत्  ५९
पितृश्रेष्ठं पदार्थञ्च शालितण्डुलमुत्तमम्
द्विजेभ्यः प्रददेत् उक्तं पश्चाद्भोजनमाचरेत्  ६०
स्थलशुद्धिं ततः कृत्वा रसान्संप्रोक्षयेत्ततः
पात्रे रसान्निवेश्याथ मनसाभावयेत्पितृन्  ६१
वन्दनं पुरतः कृत्वा श्राद्धकर्मविधीयते
आमश्राद्धमिति प्रोक्तं हिरण्यश्राद्धकं श्रुणु  ६२
देशान्तरगते वापि राजबीडा च विड्वरे
यथा शक्तिहिरण्यञ्च दापयेत् ब्राह्मणाय च  ६३
वन्दनं कारयेत्पश्चात् आत्मानं भोजयेन्नरः
चातुर्वर्णो द्विवर्णश्च हिरण्यश्राद्धमाचरेत्  ६४
श्राद्धहीनश्च यो मर्त्यः अपुत्रो वा दरिद्रतः
एवं यः कुरुते मर्त्यः पितृलोकमवाप्नुयात्  ६५
इति अमापूजाविधि पटल एकोनपञ्चाशत्तमः

उपरागोत्सवपटलप्रारंभः

अथ वक्ष्ये विशेषेण उपरागोत्सवं श्रुणु
उपरागं महच्छब्दं कथं शम्भो महेश्वर  १
पापाधिके क्रूरकाले जनानां व्याधिपीडिते
उपग्रहोदये प्राप्ते उपरागं भविष्यति  २
ब्राह्मणानां समीपे तु यथा चण्डाळस्पर्शवत्

तथा नीच गृहे योगे कृष्णसर्पवदाकृतिः ३
अत्यन्तं मद्ध्यमे पार्श्वे राहुकेत्वोस्समीपके
शुद्धस्फटिकवर्णाभं शशिनञ्च सुधामयम् ४
अकळङ्कप्रभं रत्नं डाडिमी मुकुळोपमम्
जपापुष्पनिभाकारं अम्लानकुसुमप्रभम् ५
माणिक्यसदृशं देहं रवेस्सामीप्यमुच्यते
कृष्णाभं प्रतिभट्यन्ते स्पर्शदोषं भवेद्यदि ६
सर्वप्रजानां भूलोके महास्पर्शं विधीयते
तद्दोषशमनार्त्थाय स्नानं दानं जपं यजेत् ७
मेषसंक्रान्तिकाले तु आश्वीजविषुवे तथा
विषुकाले तु संप्राप्ते विप्राणां व्याधिपीडितम् ८
आषाढे सङ्क्रमे स्पृश्य भूभुजानान्तु पीडदः
प्रातः काले व्याधिमृत्युर्मद्ध्याह्ने तु दरिद्रता ९
सायाह्ने पुत्रनाशः स्यात् अतोर्ध्वं कुलमक्षयम्
अर्द्धरात्रे तदूर्ध्वे च धान्यानां संभवो भवेत् १०
उषः काले सर्वनाशं जन्मर्क्षे प्राणपीडितम्
द्विचतुष्षष्ठमासेषु भयं भवति निश्चितः ११
सूर्योपरागकाले च आदौ पुण्यप्रशंसनम्
चन्द्रोपरागसमये अन्ते सर्वहितं भवेत् १२
स्नानं दानं जपं होमं शंभोर्यजनमुत्तमम्
औषधं उपदेशञ्च विद्याभ्यासं प्रशस्यते १३
तत्काले पाचयेदन्नं भुञ्जीत व्याधिपीडितम्
पाकमन्नं यजेच्चैव सर्वसौभाग्य संपदम् १४
पुरानिर्मितपाकञ्च कथं पूज्यश्च देशिकः
दर्भानादाय तद्भाण्डे तैलौषधजलेऽपि वा १५
अन्यानि वेशयेच्चैव तस्माद्दोषो न विद्यते
पाकमद्ध्ये तु संप्राप्ते दर्भानादाय निक्षिपेत् १६
मुक्तान्तेऽपि च नैवेद्यं कारयेद्देशिकोत्तमः
अपुष्पवृक्षमूले च अफलो वृक्षमूलके १७

आदाय मुसलेनैव ताडयेत्सर्वसिद्धिदम्
स्त्रीसंयोगं प्रकुर्वीत सुपुत्रं जायते तदा १८
सर्वदोषप्रशमनं देवं संपूजयेत्ततः
महेश्वरं समादाय तूर्यवाद्यैस्समन्वितम् १९
अस्त्रमूर्तिं समादाय तीर्थतीरे मनोरमे
पुण्याहं वाचयेत्तत्र देहशुद्धिं तथैव च २०
अन्तर्यजनमित्युक्तं जाह्नव्यादीन्समर्चयेत्
अस्त्रदेवन्तु संस्नाप्य सर्वे स्नात्वा विशेषतः २१
पश्चाद्देवालयङ्गत्वा पूर्ववत्सर्वमाचरेत्
सहस्र कलशं स्नाप्य तस्यार्द्धं वा तदर्द्धकम् २२
तदर्द्धं वा शतं वापि शतमित्यभिधीयते
पञ्चविंशतिरर्द्धं वा भूतान्तमभिषेचनम् २३
मधुयुक्तं घृतं क्षीरं गजतोयं प्रशस्यते
पूर्ववत्स्नापयेच्चैव गन्धपुष्पैरलङ्कृतम् २४
नैवेद्यधूपदीपान्तं पूर्ववत्परिकल्पयेत्
एवं यः कुरुते राजा सर्वपापैः प्रमुच्यते २५
सर्वव्याधिप्रशमनं सर्वपीडानिवारणम् २६

इति उपरागोत्सवविधिपटलः पञ्चाशत्तमः

## अष्टमीपूजाविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि अष्टम्यर्चनमुत्तमम्
कृष्णपक्षेऽष्टमीत्युक्तं पूर्वविद्धाप्रशस्यते १
वर्जयेत्परविद्धा च अष्टम्यामभिधीयते
उदयाद्युदयान्तञ्च उत्तमं परिकीर्तितम् २
उदयादि समारभ्य अष्टम्यस्तमनात्परम्
यामार्द्धं व्यापकञ्चैव अभिषेकं प्रशस्यते ३
रात्रौ प्रथमयामे तु अभिषेकं समाचरेत्
प्रदोषे तु कलामात्रं अष्टमी व्यापकं भवेत् ४
तत्काले पूजनं कर्तुं सर्वसिद्धिप्रदायकम्

एकमासे द्विपक्षे च अष्टमीसु प्रवर्तते  ५
तन्मासमधिकं प्रोक्तं द्विपक्षे च शिवं यजेत्
यन्मासे चाष्टमीहीनं तन्मासादूर्ध्वमासके  ६
स्वातिथिद्वयसंप्राप्ते हीनमासार्द्धकं यजेत्
सातिथिद्वितयं न्यूनं तन्मासात्पूर्वमासके  ७
अष्टम्यां शिवमभ्यर्च्य हीनमासाधिकं बुधः
यः पूर्वे वाप्यष्टम्यामपरे पूर्वमर्चयेत्  ८
तद्दिने चोपवासञ्च शिवं संपूजयेत्ततः
व्रतानामुत्तमं प्रोक्तं अष्टम्यान्तु महाव्रतम्  ९
मार्गशीर्षकमासादि आरभ्य व्रतमाचरेत्
सहस्रकलशांश्चैव तस्यार्द्धं वा तदर्द्धकम्  १०
अष्टोत्तरशतं वापि अशीत्येकोनपञ्चाशत्
पञ्चविंशतिनवान्तञ्च घृतस्नानं समाचरेत्  ११
प्रातर्मद्ध्याह्नरात्रौ च त्रिकालं पूजितोत्तमः
अथवा एककालं वा रात्रौ पूजां समाचरेत्  १२
सहस्रकलशान्स्थाप्य शिवसायुज्यमाप्नुयात्
मद्ध्यमं भोगमोक्षञ्च अधमं पुत्रवर्द्धनम्  १३
अष्टोत्तरशतञ्चैव रुद्रलोकमवाप्नुयात्
एकाशीति शतायुष्यं जयमेकोनपञ्चाशत्  १४
सकर्मसफलं पञ्चविंशतिस्नपनन्तथा
रन्ध्रन्तु क्रोधनाशञ्च भूतसङ्ख्या महीपतिम्  १५
मन्दोष्णेन जलेनैव गोशृङ्गाकृतिस्नापयेत्
कपिलागोघृतेनैव उत्तमं परिकीर्तितम्  १६
गन्धतैलादिकुम्भान्तं नित्यवत्स्नानमाचरेत्
महाहविर्निवेद्याथ गुळान्नं पायसान्नकम्  १७
फलत्रयञ्च पयसा दधिचेक्षुसलाजकम्
उपचारान्समभ्यर्च्य नमस्कारं प्रदक्षिणम्  १८
तित्थ्यन्ते पारणां कुर्यात्सर्वाभीष्टफलप्रदम्
नक्तं वा भोजयेच्चैव शिवमन्त्रं समुच्चरन्  १९

मार्गशीर्षञ्च पुष्यञ्च माघफाल्गुनचैत्रकम्
वैशाखं ज्येष्ठमाषाढं श्रावणं भाद्रपदं तथा २०
आश्वीजकृत्तिकामासे मासं प्रतिसमर्चयेत्
नन्द्यावर्तेन संपूज्य पायसान्नं निवेदयेत् २१
चुळुकोदकमात्रेण पीत्वा गोमूत्रमुत्तमम्
अतिरात्राख्य यज्ञस्य फलं दृष्टगुणं भवेत् २२
मार्गशीर्षे समभ्यर्च्य पुष्ये चैव ततश्शृणु
करवीरेण संपूज्य दध्यन्नञ्च निवेदयेत् २३
घृतं संप्राश्य पूर्वे वा वाजपेयफलं भवेत्
माघे बील्वकरवीरेण पूज्यदध्यन्नं निवेदयेत् २४
गोक्षीरं प्राशयेच्चैव चुळुकोदकमुत्तमम्
गोमयाष्टपलं बध्वा फाल्गुने च ततश्शृणु २५
पद्मपुष्पैस्समभ्यर्च्य तिलान्नञ्च निवेदयेत्
मधुसंप्राशयेच्चैव राजसूयाख्य यज्ञकम् २६
तत्फलाष्टगुणं प्रोक्तं चैत्रे चैव ततश्शृणु
पुन्नागकुसुमैः पूज्य मुद्गान्नञ्च निवेदयेत् २७
गोधूमं प्राशयेच्चैव अग्निष्टोमफलं भवेत्
वैशाखे कर्णिकारञ्च आज्यान्नञ्च निवेदयेत् २८
दिने कुशोदकं पीत्वा पुरुषमेधफलं लभेत्
ज्येष्ठे च द्रोणपुष्पैश्च शुद्धान्नञ्च निवेदयेत् २९
शृङ्गोदकञ्च पीत्वा तु पौण्डरीकफलं लभेत्
आषाढे चैव श्वेतार्कं हरिद्रान्नं निवेदयेत् ३०
प्राशयेत्तु गोमयांबु सौत्रामणिफलं लभेत्
श्रावणे जातिपुष्पैश्च कदळीफलमिश्रकम् ३१
अन्नं निवेदयेत्तत्र मन्त्ररूपजलं पिबेत्
अतिरात्रफलं लब्ध्वा श्रुणु भाद्रपदेऽष्टमी ३२
चम्पकैः कुसुमैः पूज्य पनसाम्रफलैस्सह
नैवेद्यन्दापयेच्चैव प्राशनं बिल्वतोयकम् ३३
अनन्तं लभते पुण्यं आश्विन्ये च ततश्शृणु

मन्दारकुसुमैः पूज्य सितयुक्तं पचप्लुतम् ३४
अन्नं निवेदयेच्चैव अग्निष्टोमफलं लभेत्
गोकर्णाकृतिहस्तेन प्राशयेत्प्रतिमासकम् ३५
अनन्तपुण्यफलदं अष्टम्यांशिवमर्चयेत्
जन्माशौचं मृताशौचं व्रतीनान्तु भवेद्यदि ३६
तथा च चोपवासञ्च आपः प्राशनमात्रकम्
कर्तव्यमपरे मासे द्विगुणं पूजयेत्ततः ३७
अपरे चैव कर्तव्यं आशौचे तु न कारयेत्
एतत्व्रतस्य मद्ध्ये तु स्त्रीणाञ्चैव रजस्वला ३८
भर्तारञ्चैव पुत्रञ्च उषित्वा च यथाविधि
तद्दिने चोपवासन्तु स्त्रीणां व्रतमुपास्यताम् ३९
इत्यष्टमीपूजाविधिपटल एकपञ्चाशत्तमः

सायरक्षाविधिपटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वलोकहिताय च
सर्वकामप्रदं प्रोक्तं श्रुणुष्व शरवणोद्भव १
राजराष्ट्राभिवृद्ध्यर्थं सायरक्षां प्रकल्पयेत्
रवेरस्तमनात्पूर्वं त्रिमुहूर्तन्तु नाडिका २
स्नानकर्मसमारभ्य धौतवस्त्रोत्तरीयकम्
दीक्षाशुद्धिर्द्विजश्शिष्यः पाकशालां प्रवेशयेत् ३
शोधनं क्षाळनञ्चैव ताम्रलोहादिजीवितम्
अथवामण्टपे वापि पात्रशुद्ध्यर्थमीरितम् ४
सितशाली हेमशाली पञ्चशाली महाव्रती
क्वणशाली दीपशाली आहरेत्सद्यमन्त्रकैः ५
शोषयेद्वाममन्त्रेण गोमयेन विशुद्ध्यति
अस्त्रमन्त्रेण चाभ्यर्च्य तुषञ्च सिकतान्यपि ६
शोधनं क्षाळयेच्चैव पञ्चवारं त्रिवारकम्
द्रोणतण्डुलमाहृत्य चोद्धलालपितन्तु वा ७
उलूखलन्तु वामेन मुसलेनैव चास्त्रकैः

तोयेन चूर्णमिश्रेण लवणं कुडुपत्रयम् ८
भाण्डेष्वन्तरितन्तोयं वस्त्रेण सेचयेत्किरेत्
तन्मद्ध्ये निक्षिपेत् ----------- भवेत् ९
अभावे माहिषन्दद्यात्कारयेच्छिवसन्निधौ
नित्याग्नौ ज्वलितं दीपं षट्त्रिंशत्तन्तुनाघटे १०
वर्तिंबद्ध्यसमादाय सरुद्रगणिकास्त्रियः
नृत्तगीतैश्च वाद्यैश्च छत्रचामरसंयुतम् ११
प्रदक्षिणक्रमेणैव अन्तर्मण्टपमाविशेत्
त्रिपादिकोर्ध्वे विन्यस्य तत्पूर्वे च ततश्शृणु १२
त्रिपादिकोर्ध्वे स्थलिके पञ्चपात्रन्यसेत्ततः
षट्त्रिंशत्तन्तुनावेष्ट्य कर्णिकामद्ध्यमे न्यसेत् १३
यद्वा विन्यस्य कर्पूरं अथवा शालिचूर्णकम्
चूळिका कृतिमद्ध्ये च आज्येन वर्तिदीपकम् १४
चतुस्संस्कारशुद्धेन गन्धपुष्पादिनार्चयेत्
ईशानं पुरुषं घोरं वामं सद्यक्रमेण तु १५
पञ्चब्रह्मन्यसेच्चैव धूपदीपं प्रदापयेत्
पूर्वं घटं समादाय मुखहृत्पाददेशके १६
न्यसेत्प्रदक्षिणं त्रीणि मात्राषोडशसङ्ख्यया
पञ्चवक्त्रन्ततः पश्चात्पूर्ववद्विन्यसेत्क्रमात् १७
नीराञ्जनं ततः कृत्वा चन्द्रबीजं प्रपूजयेत्
मात्राषोडशसङ्ख्या च पूर्ववन्विन्यसेत्क्रमात् १८
पाद्यञ्चाचमनार्घ्यञ्च भूततत्वेकसङ्ख्यया
सर्षपञ्च मरीची च कार्पासं बीजमुच्यते १९
शुष्कगोमयमेवोक्तं निंबपत्रं विभूति च
पृथक्पृथक् मुष्टिमात्रान् वेष्टयेत्त्रिप्रदक्षिणम् २०
अग्निं पात्रेषु निक्षिप्य भस्म चैव ततश्शृणु
मात्रान्तु भूतसङ्ख्या च पञ्चमूर्ध्नासमायुतम् २१
पञ्चवक्त्रसमायुक्तं स्त्रक् गुह्यञ्जानुदेशयोः
अंसौ च भस्मनाधार्यं नेत्रमन्त्रेण पूजयेत् २२

दर्पणं मुनिमात्रं स्यात् शिरोमन्त्रेण पूजयेत्
चित्रञ्चैव च तन्मात्रं अस्त्रमन्त्रं न्यसेत्ततः  २३
मूर्ध्निदेशे तु दर्शित्वा चामरञ्च ततश्शृणु
चतुस्संस्कारशुद्धेन अस्त्रमन्त्रं यजेत्ततः  २४
पंक्तिसङ्ख्या क्रमान्मात्रं तालञ्चैव ततश्शृणु
बहुरूपन्न्यसेच्चैव मात्रा तु युगसङ्ख्यया  २५
बृन्दं त्रिमात्रसंयुक्तं सद्यमन्त्रं यजेत्ततः
शिवाय मूलमन्त्रेण सुपुष्पन्दापयेत्ततः  २६
पाद्यमाचमनार्घ्यञ्च दापयेत्तच्छिवाय च
पश्चात् गौरीं समभ्यर्च्य धूपदीपन्ददेत् गुरुः  २७
यद्वाच शिवपूजान्ते भोगशक्तिं प्रपूजयेत्
पश्चात् शिवाय संपूज्य पाद्यमाचमनार्घ्यकम्  २८
भोगशक्तिं स्तुवन्दाप्य नृत्तगीतं समाचरेत्
प्रातःकाले च मद्ध्याह्ने उक्तमात्रान्तदर्द्धकम्  २९
धूपदीपादिकन्दत्वा उपचारं समर्चयेत्
महेश्वरादिबेराणां कथं शंभो विशिष्यते  ३०
अभिन्नमेकपीठे च देवी सहितमेव वा
धूपदीपादिकन्दत्वा प्रत्येकन्तु न कारयेत्  ३१
वक्ष्ये किञ्चिद्विशेषोऽस्ति भस्मन्देवाय दापयेत्
----------------------------------  ३२
पृथक्पीठस्थितांगौरीं प्रत्येकं कारयेत्ततः
एवं कृत्वा विशेषेण राजयाष्ट्रविवर्द्धनम्  ३३
पुत्रपौत्राभिवृद्ध्यर्त्थं सर्वकामफलप्रदम्  ३४

इति सायरक्षाविधिपटल द्विपञ्चाशत्तमः

सोमास्कन्दपूजा पटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वज्ञानप्रदायकम्
सर्वलोकहितार्त्थाय सर्वानुग्रहकारकम्  १
उत्सवेश्वरमाख्यातं सोमास्कन्देश्वरार्चनम्

पूजांशं त्रिगुणीकृत्य त्रिगुणं द्विगुणं भवेत् २
अथवापि च एकं वा कृशे वृद्धिक्रमं भवेत्
पूर्ववन्मधुवाक्षिप्य मृदा च न परिवेष्टयेत् ३
चलिकामेळिकाञ्चैव पात्रं वृणिमहेलुटि
टंक --- नकौठारं पूर्ववत्बेरमीरितम् ४
एकवक्त्रञ्चतुर्बाहुं जटामकुटमण्डितम्
जटावामे तु धुर्तूरं अर्द्धचन्द्रसमन्वितम् ५
वेणीं वस्त्रं भकारं वा दक्षिणेनक्रकुण्डलम्
वामकर्णे तु पत्रं स्यात्कर्णपत्रसमन्वितम् ६
कर्णमूले दुरिलतां कर्णोर्द्ध्वे पत्रनाळकम्
वक्त्रकेशन्तथा पार्श्वे उपदूषणदूषितम् ७
टंकञ्च दक्षिणे पार्श्वे वामे कृष्णमृगन्तथा
अभयन्दक्षिणे चैव वामे तु वरदन्तथा ८
कारयेत्सिह्मकर्णं वा कटकादिविभूषितम्
तालमानं समाङ्गुष्ठं तालार्द्धन्तर्जनी तथा ९
एकांशं वृद्धितन्मद्ध्यं अनामिकन्तु तर्जनी
तादृशं कल्पयेच्चैव कनिष्ठा च ततश्शृणु १०
अनामिका त्रिभागञ्च द्विभागञ्च कनिष्ठिकम्
रेखात्रयन्तु तन्मद्ध्ये मूलञ्चैव द्विरेखया ११
एकरेखान्ततोर्ध्वे तु तालमद्ध्यन्ततश्शृणु
पद्मरेखान्ततः कृत्वा अधवा चतुरश्रकम् १२
उपवीतन्तु वामांसे त्रिसूत्राकृतिमारभेत्
उदरे वृश्चिकारस्था कुण्डे एवं प्रकल्पयेत् १३
दक्षिणे लंबितं पादं शयनं वामपादकम्
सिह्मवक्त्रा कृतिञ्चैव कटिचर्मेण वेष्टयेत् १४
प्रबद्ध्य चित्रवर्णेन पुच्छवस्त्रं द्विपार्श्वयोः
पादे लंबितवस्त्रञ्च पद्मपीठोपरिस्थितम् १५
पश्चिमे तु शिरश्चक्रं वृत्ताकारं वृषान्वितम्
मद्ध्ये पद्मदळञ्चैव शिखास्थाने प्रकीर्तितम् १६

अथो लंबितकेशञ्च कर्णे मणिविभूषितम्
द्विपादञ्च द्विनयनं लंबकर्णौ द्विपार्श्वयोः  १७
किरीटमकुटोपेतं द्विपार्श्वे च स्तनद्वयम्
यज्ञोपवीतयुक्ताङ्गं सर्वाभरणभूषितम्  १८
दक्षिणे शयनं पादं वामपादन्तु लंबितम्
दक्षिणे चोत्पलञ्चैव वरदं वामहस्तके  १९
यद्वासनं निवेश्याथ वस्त्रेण वेष्टयेत्घटम्
पद्मपीठोपरिस्थञ्च तन्मद्ध्ये लक्षणं श्रुणु  २०
षण्मुखः देवस्य देविकर्णान्तं ताल्वन्तञ्च समुच्यते
स्तानान्तञ्चैव कट्यन्तं शक्तिभूषणमुच्यते  २१
गौरी मानान्तमाकल्प्य गुहलक्षणमुच्यते
द्विभुजञ्च द्विनेत्रञ्च सरत्नमकुटान्वितम्  २२
अब्जं द्वयकरञ्चैव बालरूपन्दिगन्तरम्
किंचित्कुंचितपादौ च नग्नरूपन्तथैव च  २३
देवदेवी च संस्थाने मद्ध्यमे पदं विन्यसेत्
अथवा पूर्वभागे च न्यस्त्वावरपदेऽथ वा  २४
स्कन्दस्य लक्षणं प्रोक्तं प्रभाया लक्षणं श्रुणु
द्व्यङ्गुलञ्च सुविस्तारं वेत्राकृतितदन्तरे  २५
द्व्यङ्गुलञ्च सुदीर्घं स्यात् पद्मछदवदाचरेत्
त्रिशूलाकृतिमग्रे च चरेत्पञ्च शिखाकृतिम्  २६
अकारं पीठपार्श्वे च टंकाकृतिसमव्ययम्
स्थातव्यं बन्धयेच्चैव सर्वावयवसुन्दरम्  २७
पूर्ववद्यागशालान्तु षोडशस्तंभसंयुतम्
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम्  २८
पूर्वादि च चतुर्दिक्षु चतुरश्रं प्रकीर्तितम्
पूर्ववत्कुण्डमित्युक्तं आग्नेय्यादिविदिक् श्रुणु  २९
योनिकुण्डं प्रकल्प्याथ विदिक्षु च विराजितम्
ऐशान्ये वृत्तकुण्डन्तु नवकुण्डं प्रकीर्तितम्  ३०
वेदिका वामपार्श्वे तु रसाश्रं कुण्डमुच्यते

नेत्रोन्मीलनं पश्चात् जलाधिवासनं तथा ३१
पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा
अथवा याममेकं वा उत्थाप्य तदनन्तरम् ३२
रथे वा शिबिके वापि देवमारोपयेत्ततः
प्रदक्षिणक्रमेणैव यागद्वारसमागते ३३
भूमौ वस्त्रं परीधाप्य यजमाने न सो गुरुः
प्रणम्य चार्घ्य पाद्यादि ददेन्मण्टपवेशनम् ३४
प्राक्शिरश्चोर्ध्ववक्त्रञ्च शयनं परिकल्पयेत्
दारुजं योनिजञ्चैव अण्डजं मुण्डजन्तथा ३५
बीजञ्च धान्यराशिञ्च पूर्ववत्परिकल्पयेत्
बिंबशुद्धिं ततः कृत्वा शयनं पाददेशके ३६
अभ्यङ्गादीन्प्रकल्प्याथ घटे संपूजयेच्छिवम्
ससूत्रं सापिधानञ्च रत्नं वै स्वर्णपङ्कजम् ३७
सकूर्चन्नाळिकेरञ्च लम्बकूर्चं प्रकल्पयेत्
रक्तवस्त्रपरीधानं आम्रापल्लवसंयुतम् ३८
स्वर्णपल्लवसंयुक्तं गन्धपुष्पैरलङ्कृतम्
अष्टगन्धसमायुक्तं तोयमद्ध्ये विनिक्षिपेत् ३९
ऐशान्ये पीठशक्तिञ्च करकाकृतिमुत्तमम्
परितोष्टघटान्यस्य परिवारघटान्यसेत् ४०
मङ्गलान्तोरणान्शस्त्रान्दिक्ध्वजान्परिकल्पयेत्
घटे संपूजयेत्पश्चात् मूलमन्त्रक्रमागतः ४१
प्रणवं पूर्वमुच्चार्य व्योमव्यापि निचाक्षरम्
पुनर्व्योमव्यापिनी च नीलकण्ठमतः परम् ४२
सोमास्कन्देश्वरञ्चैव चतुर्थ्यन्तं समुच्चरन्
नमोन्तमुच्चरेत्पश्चात् मूलमन्त्रमिति स्मृतम् ४३
शम्बरं पूर्वमुच्चार्य अञ्जल्यावाह्यमुद्रया
नादान्तमुच्चरन्पश्चात् ------------ ४४
शब्दं लयमनुप्राप्य मूलाधारे लयङ्गतः
पश्चात्प्रणवमुच्चार्य व्योमव्याप्यादि चाक्षरम् ४५

सोमास्कन्देश्वरान्तञ्च चतुर्त्थ्यन्तं नमोन्तकम्
भ्रूमद्ध्यान्तं समागत्वा खण्डिका द्वारमाश्रितम्  ४६
द्वारमुद्धृत्य मनसा घटेप्यावाह्य पूजयेत्
फलशक्तिं समभ्यर्च्य स्त्रजाञ्जलित्रयं भवेत्  ४७
प्रथमावरणे चैव हृदयादिप्रपूजयेत्
द्वितीयावरणे चैव शर्वादीन्पूजयेत्ततः  ४८
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
मण्टपे वायुदिग्भागे वेदिकां पूर्ववच्चरेत्  ४९
करकान्दशसङ्ख्यांश्च वेदिकामद्ध्यमे न्यसेत्
क्षित्यादिकुटिलं बृन्दं भोगशक्तिं समर्चयेत्  ५०
प्रणवं पूर्वमुच्चार्य मायाबीजं द्वितीतकम्
उमायेति ततः पश्चात्स्वाहान्तं मन्त्रमुच्चरन्  ५१
आवाह्य पूजयेत्पश्चात्पीठशक्तिं प्रपूजयेत्
प्रथमावरणं पूज्य हृदयादीन्प्रपूजयेत्  ५२
द्वितीय्यावरणे पूज्य वामाद्यष्टशिवं यजेत्
नैर्ऋते वेदिकां कृत्वा दशकुम्भन्न्यसेत्ततः  ५३
मद्ध्ये गुहं समभ्यर्च्य प्रणवं पूर्वमुच्चरन्
सौकारद्वितयं प्रोक्तं स्कन्दाय च नमोन्तकम्  ५४
आवाह्य पूजयेत्पश्चात् प्रथमावरणं यजेत्
हृदयादीन् समभ्यर्च्य द्वितीय्यावरणे श्रुणु  ५५
जयन्तादीन्प्रपूज्याथ पूर्ववत्परिकल्पयेत्
कुण्संसारपूर्वन्तु पूर्वोक्तविधिना हुनेत्  ५६
देवं संपूजयेत्पूर्वं मूलमन्त्रेण होमयेत्
देवीं संपूजयेत्पश्चात्तन्मन्त्रेणैव होमयेत्  ५७
पूर्ववच्च चतुर्दिक्षु नरादीन्पूजयेत्ततः
हृदयादीन्समभ्यर्च्य चतुष्कुण्डेषु होमयेत्  ५८
नेत्रास्त्रं होमयेद्वृत्तकुण्डं संपूजयेत्ततः
पश्चात् भोगेशमभ्यर्च्य उक्तमन्त्रेण होमयेत्  ५९
आग्नेय्यादि चतुर्दिक्षु हृदयादीन्यजेद्धुनेत्

नेत्रास्त्रं पूर्ववच्चैव प्रधाने होमयेत्ततः ६०
षडश्रकुण्डे संस्कारं स्कन्दं संपूजयेत्ततः
होमयेद्विधिवच्चैव शान्तिकुंभं पृथक्पृथक् ६१
पूर्वोक्तविधिना हुत्वा तद्बाह्ये च ततश्शृणु
वेदिकां पूर्ववत्कृत्वा सप्तधान्यं ततोपरि ६२
पद्ममष्टदळं लिख्य घटमेकं न्यसेत्ततः
वह्निमावाहयेत्कुम्भे पूर्ववत्पूजयेत् गुरुः ६३
चतुरश्रं प्रकल्प्याथ कुण्डे वा स्थण्डिलेऽपि वा
वह्निमाराधयेत्पश्चात् वह्निमन्त्रेण होमयेत् ६४
सायंप्रातर्हुनेच्चैव पूतरन्ध्रं मुनित्रयम्
दिनसङ्ख्यां हुनेच्चैव त्रिखण्डां कल्पयेत्ततः ६५
षडध्वमन्त्रमुच्चार्य तत्वतत्वेश्वरं यजेत्
मूर्तिमूर्तीश्वरं हुत्वा ऋत्विग्भिः स्पर्शनं हुनेत् ६६
जप्त्वा गत्वा हुनेच्चैव तत्वत्रयं प्रपूजयेत्
वह्निं संयोजयेत्कुम्भे सुमुहूर्ते सुलग्नके ६७
भत्रपीठं समारोप्य न्यासकर्मसमाचरेत्
नेत्रान्तं पूजयेत्पश्चात् शक्तिं स्कन्दप्रभान्तथा ६८
पृथक्पृथक्प्रपूज्याथ घटमुत्थापयेत्ततः
कुम्भात् बीजं समादाय देवं संयोजयेत्ततः ६९
वर्द्धन्यापीठिकां स्नाप्य पूर्वाद्यष्टदळे श्रुणु
विद्येश्वरघटान्पूज्य शक्तिकुम्भं ततः परम् ७०
देवीमावाहयेत्पूज्य तदधोपीठिकां यजेत्
अष्टकुम्भं दळेपूज्य तदेव स्कन्दमर्चयेत् ७१
घटं संयोजयेत्पश्चात्प्रभायां पूजयेत्ततः
वह्निकुम्भं समादाय प्रभां संपूजयेत्ततः ७२
महाहविर्निवेद्याथ धूपदीपं समाचरेत्
सहस्रस्नपनं वापि तस्यार्द्धं वा तदर्द्धकम् ७३
कलशं स्नापयेत्पश्चात् हविर्दत्वा निवेदयेत्
आचार्यं पूजयेत्पश्चात् ब्राह्मणान् भोजयेत्ततः ७४

कौतुकन्तु त्रिपक्षान्ते वर्जयेत्परमेश्वरम्
तावन्नित्यं यजेच्चैव नैमित्तिकं न कारयेत् ७५
कल्याणकर्मचाराद्ध्य स्वगृह्योक्तविधानतः
पाणिग्रहणपूर्वं यः पूर्ववत्परिकीर्तितम् ७८
एवं संपूजयेच्चैव सर्वज्ञानप्रदायकम्
इष्टकाम्यार्त्थसिद्ध्यर्त्थं शिवसायुज्यमाप्नुयात् ७९
इति होमास्कन्दप्रतिष्ठापटलस्त्रिपञ्चाशत्तमः

सोमधारिप्रतिष्ठापटलप्रारंभः
अथातस्संप्रवक्ष्यामि सर्वकामफलप्रदम्
सोमधारिप्रतिष्ठान्तु सर्वमङ्गळकारणम् १
चतुर्भुजं त्रिणेत्रञ्च जटामकुटमण्डितम्
वामपार्श्वे जटामद्ध्ये अर्द्धचन्द्रसमन्वितम् २
वामपत्रसमायुक्तं दक्षिणे नक्रकुण्डलम्
शिखास्थाने शिरश्चक्रं कर्णपत्रसमायुतम् ३
मूलपत्रसमायुक्तं शिरः कूर्मसमायुतम्
मृगटङ्कसमायुक्तं अभयं वरदन्तथा ४
अभयं सिह्मकर्णं वा समपादद्वयं भवेत्
किङ्किणी वलयं जान्वोः सिह्मचर्माभिवेष्टितम् ५
उपवीतसमायुक्तं हारकेयूरभूषितम्
कटकं वलयञ्चैव पादनूपुरमण्डितम् ६
पद्मपीठोपरिस्थञ्च अन्तस्मितसमायुतम्
कर्णान्तञ्चैव ताल्वन्तं अंसान्तं स्तनमण्डलम् ७
नाभ्यन्तञ्चैव कट्यन्तं गौरी वामेत्र कल्पयेत्
एवं वनस्थितां गौरीं अथवा पृथगासने ८
द्विभुजं च द्विनेत्रञ्च किरीटमकुटान्वितम्
लंबकर्णसमायुक्तं सर्वाभरणभूषितम् ९
किंचित्कुंचितवामे च वामे च लंबकन्तथा
सव्ये शुण्डाकृती जुष्टी केवलं भुजमेव च १०

प्रभायां पूर्ववत्कृत्वा चन्द्रशेखररूपिणम्
षोडशस्तंभसंयुक्तं पूर्ववद्यागमण्टपम् ११
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रधानकम्
एकासनस्थिते पक्षे पूर्वादिचतुरश्रकम् १२
विदिक्षुयोनिकुण्डञ्च चतुः कुण्डं प्रकीर्तितम्
वेदिकामद्ध्यमे चैव दशकुम्भं न्यसेत्ततः १३
नयनोन्मीलनञ्चैव जलाधिवासनन्तथा
बिंबशुद्धिं ततः कृत्वा शयनारोपणञ्चरेत् १४
घटे स्थिरासनं पूज्य विद्याङ्गं नेत्रमुद्रिकाम्
प्रणवं पूर्वमुच्चार्य भकारन्तु ततः परम् १५
चन्द्रमाश्च चतुर्थ्यन्तं नमोन्तं मूलमन्त्रतः
आवाह्य पूजयेत्पश्चात् अष्टबन्धेन मिश्रकम् १६
सुगन्धपुष्पसंयुक्तं अञ्जलीकरसंयुतम्
अङ्गुष्ठादिकनिष्ठान्तं करन्यासविधिं श्रुणु १७
संयोज्यानामिकामूले अञ्जलीकरसंयुतम्
मूलाधारं समभ्यर्च्य हृत्कण्ठादिप्रदेशके १८
ओंकारं पूर्वमुच्चार्य हंकारञ्च ततः परम्
अकारश्च उकारश्च मकारं बिन्दुरेव च १९
नादान्तमुच्चरेच्चैव ब्रह्मरन्ध्रे परिस्थया
हृत्कण्ठतालुभ्रूमद्ध्ये ब्रह्मरन्ध्रे कृताञ्जलिम् २०
---- गतिं ध्यात्वा उन्मन्यन्तमुच्चरन्
लयान्तमुच्चरन्प्राप्य तदधः प्रणवात्मना २१
ब्रह्मरन्ध्रे शिकारञ्च भ्रूमद्ध्ये तु वकारकम्
तालौ यकारमुच्चार्य कण्ठे नकारमुच्चरन् २२
हृत्प्रदेशे मकारन्तु मूलाधारे गते सति
पुनरुद्धृत्य हस्ताभ्यां प्रणवं पूर्वमुच्चरन् २३
भकारमुच्चरन्पश्चात् चन्द्रशेखरमाख्यकम्
चतुर्थ्यन्तं नमोन्तञ्च भ्रूमद्ध्यान्तं समुद्धरेत् २४
हृदयेनैव मन्त्रेण घटे संपूजयेत्ततः

आवाह्य स्थापनञ्चैव सन्निधाननिरोधनम् २५
अवकुण्ठगतञ्चैव पञ्चमुद्रां प्रदर्शयेत्
पीठशक्तिं प्रपूज्याथ प्रथमावरणं यजेत् २६
हृदयादिसमभ्यर्च्य शर्वादिद्वितये यजेत्
पञ्चावरणमार्गेण मङ्गळान्ध्वजशस्त्रकान् २७
तोरणान्पूर्ववत्पूज्य वह्निकार्यं समाचरेत्
एकासनस्थतां गौरीं वेदिकां वायुदेशके २८
करकान्दशसङ्ख्यांश्च स्थापयेद्विधिमार्गतः
प्रणवं पूर्वमुच्चार्य ह्रींकारं द्वितयं भवेत् २९
गौर्यै चैव चतुर्थ्यन्तं कुम्भमावाह्य बुद्धिमान्
प्रथमावरणञ्चैव द्वितीयावरणं यजेत् ३०
वृत्तकुण्डं हुनेत्पश्चात् आग्नेय्याद्यङ्गमुच्यते
होमयेत्तु विशेषेण शेषं पूर्ववदाचरेत् ३१
पृथगासनञ्च देव्याथ प्रत्येकं यागमण्टपम्
नवपञ्चैककुण्डं वा तोरणान्मङ्गळांश्चरेत् ३२
पूर्ववद्वह्निकर्मापि पञ्चावरणमार्गतः
सुमुहूर्ते सुलग्ने च घटस्नानं समाचरेत् ३३
संस्नाप्य भोगशक्त्याथ प्रभायां स्नानमाचरेत्
कल्याणकर्मचाराद्ध्य पाणिग्रहणपूर्वकम् ३४
प्रदक्षिणक्रमेणैव भद्रपीठे निवेशयेत्
महाहविर्निवेद्याथ पूजां कृत्वा समाचरेत् ३५
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमप्नुयात् ३६
इति सोमधारिप्रतिष्ठापटलश्चतुःपञ्चाशत्तमः

नटेशस्थापनपटलप्रारंभः

अथातश्च महेशान नटेशस्थापनं वद
सर्वलोकहितार्थाय गुह्यात् गुह्यतरं श्रुणु १
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम्
कर्णपत्रसमायुक्तं दक्षिणेनक्रकुण्डलम् २

जटावामे तु दुत्तूरं ग्रर्द्धेन्दुपरिचूडितम्
ग्रर्कपुष्पसमायुक्तं बकपुष्पसमन्वितम् ३
ग्रारग्वधप्रजञ्चैव स्तबकं ऊर्ध्वमरिडतम्
दक्षिणे जाह्नवी चैव व्याळं वा चूडितं तथा ४
करोटिमद्ध्यमे न्यस्य कुन्दमन्दस्मिताननम्
डमरुन्दक्षिणे हस्ते वह्निञ्च वामहस्तके ५
ग्रभयं फणिसंयुक्तं प्रधार्यं पूज्य वामके
दक्षिणे स्वस्तिकं पादं वामपादन्तु कुंचितम् ६
ग्रपस्मारोपरिस्थञ्च पद्मपीठोपरिस्थितम्
सिह्मचर्मकटी वेष्ट्य व्याघ्रचर्मोत्तरीय्यकम् ७
किङ्किणीमालयायुक्तं नागयज्ञोपवीतिनम्
कटकं हारकेयूरं पादनूपुरमरिडतम् ८
प्रभामरडलमद्ध्यस्थं वृत्तं वा ग्रचुळन्तु वा
श्वेतवर्णसमायुक्तं द्वात्रिंशल्लक्षणान्वितम् ९
कर्णान्तं नासिकान्तं वा ताल्वन्तं स्तनमरडलम्
नक्षत्रं गरयते ज्ञात्वा द्विपादं समभागिनीम् १०
त्रिभागं लज्ञयोपेतं सरत्नमकुटान्वितम्
वामे लंबकरं विद्यात् दक्षिणे कटकन्तथा ११
मन्दस्मितामिमां गौरीं पूर्ववत्परिकल्पयेत्
पूर्ववद्यागशालाञ्च षोडशस्तंभसंयुतम् १२
मरटपद्वयमेवोक्तं तदेवं वामपार्श्वके
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम् १३
ग्रश्रयोन्यार्द्धचन्दञ्च गणवृत्तं षडश्रकम्
पद्मं वस्वश्रकुरडञ्च तयोर्मद्ध्ये सुवृत्तकम् १४
तोरणान्मङ्गळान्शस्त्रान्ध्वजस्त्रुक्स्त्रुवमासनम्
दशकुम्भं न्यसेन्मद्ध्ये सप्तविंशत्घटान्यसेत् १५
चन्द्रं ईशानयोर्मद्ध्ये वृत्तकुरडं प्रधानकम्
पूर्वाद्यष्टास्वपि दिक्षु योनिकुरडं प्रकल्पयेत् १६
स्त्रुक्स्त्रुवं तोरणञ्चैव मङ्गळांश्च दशायुधान्

ध्वजात्पक्षांश्चकरकान् स्तंभांश्च कलशान्यथ १७
गौरीयागं प्रकल्प्याथ पूर्ववत्परिकल्पयेत्
नेत्रोन्मीलनमेवोक्तं जलाधिवासनन्तथा १८
शयनारोपणं पश्चात् न्यासकर्मसमाचरेत्
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा १९
नवरात्रमिति प्रोक्तं सायंप्रातर्हुनेत्ततः
तत्वतत्वेश्वरञ्चैव मूर्तिमूर्तीश्वरान्न्यसेत् २०
भद्रपीठे समारोप्य सुमुहूर्ते सुलग्नके
कलशस्थानमाराद्ध्य हविर्दत्वा विशेषतः २१
महाभिषेचनं पश्चात्कल्याणं कारयेत्ततः
स्वगृह्योक्तविधानेन पाणिग्रहणमुत्तमम् २२
तूर्यवाद्यैस्समायुक्तं प्रदक्षिणक्रमेण वा
एवं समाराधयते गीतनृत्तैस्समन्वितम् २३
प्रणवं पूर्वमुच्चार्य भ्रुकारद्वितयं भवेत्
भेरी तूरुतं बुरुश्च हरहर इति त्वथ २४
आनन्दताण्डवञ्चैव चतुर्त्थ्यन्तन्नमोन्तकम्
प्रणवं पूर्वमुच्चार्य श्रीबीजञ्च द्वितीयकम् २५
महागौर्यै नमोन्तञ्च भोगशक्तिं प्रपूजयेत्
नटेशं मूलमन्त्रेण पूजयेद्देशिकोत्तमः २६
एवं यः कुरुते मर्त्यः शिवसायुज्यमाप्नुयात् २७
इति नटेशस्थापनपटलः पञ्चपञ्चाशत्तमः

वैवाह्यस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि वैवाह्यस्थापनं श्रुणु
गुह्यात् गुह्यतरं श्रेष्ठं रहस्यं दुर्ल्लभं परम् १
गौरीकल्याणवेषञ्च तेजः पुञ्जनिभं शिवम्
चतुर्भुजं त्रिणेत्रञ्च जटाचूडेन्दुमण्डितम् २
मन्दस्मितमुखं शान्तं षोडशाब्दिकयौवनम्
कुण्डलं कर्णपत्रञ्च टङ्कं कृष्णमृगन्तथा ३

दक्षिणेकरसंयुक्तं ग्रसितं वामपाणिना
गौरी हस्तांबुजतले स्वहस्तलवेशनम् ४
अन्ये तु लंबहस्तं स्यात् वरदं वामहस्तके
पादुकोपरिधार्यं वा पद्मपीठोपरिस्थितम् ५
एकासनं महापीठे वामे विष्णुसमाश्रितम्
पुरतो दक्षिणे किंचित् धातावीरासनस्थितम् ६
पुरतोऽग्निसमाराद्ध्य प्रभामण्डलमण्डितम्
सर्वाभरणसंयुक्तं सर्वावयवसुन्दरम् ७
द्वात्रिंशल्लक्षणोपेतं स्फटिकाभं स्मिताननम्
कल्याणवेषमाख्यातं मृत्सङ्ग्रहणपूर्वकम् ८
अङ्कुरं कारयेत्पश्चात् वास्तुमाराधयेत्ततः
उन्मीलनं दृशौ चैव बिंबशुद्धिमुदाहृतम् ९
अपां वसतितः पश्चात् चरेत् ग्रामप्रदक्षिणम्
पर्यङ्कारोपणं पश्चात् मण्टपाराधनं शिवम् १०
कृशानुं होमयेत्पश्चात् रन्ध्रं वा मुनिभूतकम्
योनिकुण्डं चतुश्चैव युगाश्रञ्च तु सङ्ख्यया ११
प्रधानं वृत्तमित्युक्तं तत्तन्मन्त्रेण होमयेत्
प्रणवं पूर्वमुच्चार्य श्रीशं चैव ततः परम् १२
वैवाह्यञ्च चतुर्थ्यन्तं स्वाहाकारन्तदन्तके
आवाह्यहोमयेत्पश्चात्त्रिखण्डं पूर्ववच्चरेत् १३
सुमुहूर्ते सुसंस्नाप्य महाहविर्निवेदयेत्
भस्मकुम्भद्वये ग्राह्य स्वर्णचूतदळैर्युतम् १४
ससूत्रं सापिधानञ्च नाळिकेरन्तथैव च
कल्याणनायकं पूज्य गौरीं संपूजयेत्ततः १५
यजमानगृहे वापि आचार्यस्य गृहेऽपि वा
द्विकरं दीर्घसंयुक्तं तदर्द्धं विस्तरन्तथा १६
स्वर्णेन रजतेनैव ताम्रेण दारुजैरपि
अथवा तालपत्रे वा फेळञ्च चतुरश्रकम् १७
मूले तु संपुटाकारं ऊर्ध्वच्छदनसंयुतम्

मूले तु नवकोष्ठञ्च पञ्चकोष्ठमथापि वा  १८
द्वितलं त्रितलं वापि सुश्लिष्टं स्निग्धसंनिभम्
स्वर्णेन रजतेनैव ताम्रेण निर्मितन्तु वा  १९
लिकुचाकृतिकं कृत्वा किंचित् द्वारन्तु मद्ध्यमे
कर्णिकाकृतितद्वारे बन्धनं पद्मसंनिभम्  २०
अञ्जनं मद्ध्यमे न्यस्य हृदयेनैव मन्त्रतः
नाळिकेराकृतिश्चैव पूर्ववत्कुडुपाकृतिम्  २१
कुङ्कुमैश्च समापूर्य रजनी कन्दमुत्तमम्
त्र्यङ्गुलञ्च सुविस्तारं दीर्घं पञ्चाङ्गुलं भवेत्  २२
मुनिसङ्ख्यां ततः पार्श्वे मकुटं मुनिसङ्ख्यया
अन्ये सूच्याकृतिञ्चैव एकपञ्चाशदुत्तमम्  २३
चित्रवर्णन्ततो मद्ध्ये श्रुणुष्वमूलशोधनीम्
द्व्यङ्गुलञ्च सुविस्तारं दीर्घमष्टाङ्गुलं भवेत्  २४
पञ्चसङ्ख्यात्रयं वापि टङ्काकृतिचरेत्ततः
रुद्रसङ्ख्या रन्ध्रसङ्ख्या सूच्याकृतिमथाचरेत्  २५
नारङ्गफलवत्कल्प्य घटवद्वारषट्ककम्
अथोर्ध्वे च द्वये चैव चतुर्द्वारं चतुर्दिशि  २६
सन्ध्येषु चित्रवर्णं स्यात् मरीच्याकृतिसप्तकम्
तत्तज्ञातिमये कल्प्य मद्ध्यमे निक्षिपेत्ततः  २७
कौबेरफलमात्रञ्च मुनिसङ्ख्यां प्रकल्पयेत्
फेळिकामद्ध्यमे क्षिप्य दूकूलं वस्त्रसंयुतम्  २८
सदशञ्चाष्टहस्तञ्च द्विकरं विस्तरं तथा
दशनिष्कप्रमाणेन गजकर्णाकृतिन्तु वा  २९
वक्त्राकृति--र्मन्ये कुब्जाकृतिषु मद्ध्यमे
मुक्ताकृतिं द्विपार्श्वे च मद्ध्ये रन्ध्रं द्विपार्श्वयोः  ३०
कर्णिका निर्मितं सूत्रं षोडशं तन्तुना भवेत्
मङ्गळ्यमिति विख्यातं फेळिका मद्ध्यमे क्षिपेत्  ३१
पुष्पमालां सुगन्धञ्च श्रीबेरं चंपकाकृतिम्
पङ्कजन्नाळिकेरञ्च नवपात्रेषु निक्षिपेत्  ३२

तूर्यवाद्यैस्समायुक्तं आस्थानमण्टपे तथा
पुण्याहं वाचयेत्तत्र विघ्नेशं पूजयेत्ततः ३३
पादप्रक्षाळनं कृत्वा एवैनमिति मन्त्रतः
मधुपर्कं निवेद्याथ शङ्करम्मन्त्रमुच्चरन् ३४
अनादिगोत्रसादाख्य वराय पूजयेत्ततः
अनादिगोत्रसंभूतां गौरीं न्यान्ददाम्यहम् ३५
सौवर्णञ्चैव तांबूलं पार्वती द्विकरांबुजम्
जलेन सहितन्दत्तं भावयेद्विष्णुपाणिना ३६
माङ्गल्यं शिवहस्ताभ्यां यो ब्रह्मा इति मन्त्रतः
कण्ठे बध्नीयमूलेन यो ब्रह्मा इति मन्त्रतः ३७
कण्ठे बद्ध्नीयमूलेन स्थण्डिलं कारयेत्ततः
बहिः कार्यं प्रकुर्वीत पञ्चब्रह्मषडङ्गकैः ३८
होमयेत्तु विशेषेण पाणिग्रहणमाचरेत्
सव्यभागे महागौरीं सव्यन्तु सव्यपाणिना ३९
प्रदक्षिणक्रमेणैव अश्मवैवामपार्श्वके
गौरी पादांबुजं सव्यं उद्धृत्य शिवपाणिना ४०
अश्ममारोपयेत्पश्चात्प्रदक्षिणक्रमेण वा
प्राङ्मुखोसौदंपती च लाजं वै गौरिहस्तके ४१
होमयेच्छिवपाणिभ्यां हस्ताभ्यां सहसुन्दरीम्
त्रिवारं अश्ममारोप्य लाजहोमं त्रिवारकम् ४२
घोरं पाशुपतञ्चैव प्रत्यङ्गिरं शिवास्त्रकम्
क्षुरिकञ्चैव प्रत्येकं दशसङ्ख्या हुनेत्ततः ४३
मूलेन दशवारञ्च पञ्चब्रह्मषडङ्गकैः
एकवारं हुनेच्चैव पूर्णाहुतिं समाचरेत् ४४
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः
अग्निमुत्थाप्य संयोज्य तांबूलं दापयेत्ततः ४५
ब्राह्मणानां ददेत्पुष्पगन्धैरभ्यर्च्य सेवितम्
दक्षिणान्दापयेत्पश्चात् आचार्यं पूजयेत्ततः ४६
वीधी प्रदक्षिणं कृत्वा देवमादाय मन्दिरे

मञ्चमारोपयेत्पश्चात् सर्वकर्मार्हको भवेत् ४७
एवं वै कुरुते मर्त्यः सराजाविजयी भवेत् ४८
इति वैवाह्यस्थापनपटलष्षट्पञ्चाशत्तमः

भिक्षाटनस्थापनपटलप्रारंभः
अथातस्संप्रवक्ष्यामि रहस्यं पावनं महत्
भिक्षाटनस्थापनन्तु संक्षेपं श्रुणु पावनम् १
त्रिणेत्रं चतुर्भुजं शान्तं कुण्डलाभरणोज्वलम्
स्फटिकाभं कराळं स्यात् वृत्तं पिङ्गजटाधरम् २
निर्वाणमुपवीताङ्गं नागयज्ञोपवीतिनम्
कटिसूत्राकृतिं नागं सर्वावयवसुन्दरम् ३
पादुकोपरिदातव्यं पद्मपीठोपरिस्थितम्
दक्षिणे डमुरञ्चैव दूर्वांकुरदळं तथा ४
वामे शूलकपालञ्च दक्षिणे हरिणी मृगम्
दूर्वालं बकराग्रे तु मुखेनोद्धृत्य तु ग्रसेत् ५
मृगन्तु वामभागे च कपालं शिरसावहन्
प्रभामण्डलमद्ध्यस्थं भद्रपीठोपरिस्थितम् ६
षोडशस्तंभसंयुक्तं पूर्ववद्यागमण्टपम्
पालिकाघटिका चैव शरावं त्रिविधं भवेत् ७
चतुश्चत्वारिसङ्ख्या च षट्त्रिंशच्चतुर्विंशतिः
द्वादशस्सङ्ख्यया चैव अङ्कुरार्पणपूर्वकम् ८
वास्तुपूजान्ततः कृत्वा कारयेन्नेत्रमीलनम्
स्वर्णादिनिर्मितं पात्रं टङ्कञ्चैव कुठारिकम् ९
दूर्वामधुघृतञ्चैव सर्वोपकरणान्वितम्
त्रिकुम्भं पूर्ववत्स्थाप्य रविसोमाग्निकान्यजेत् १०
नेत्रमन्त्रेण संलिख्य घटं संयोजयेत्ततः
कन्या गोविप्रयुग्मश्च सन्यासी चयमानकः ११
जनसंघसदर्शैश्च जलाधिवासनन्तथा
ग्रामप्रदक्षिणं कृत्वा मण्टपद्वारमागतः १२

बिंबशुद्धिन्ततः कृत्वा शयनारोपणन्तथा
मण्टपाराधनं कृत्वा गुरून्संपूजयेत्ततः १३
वेदिका मद्ध्यमे चैव दशकुंभन्न्यसेत्ततः
क्षित्यादिकुटिलाप्रान्तं आसनं मूर्तिमर्चयेत् १४
प्रणवं पूर्वमुच्चार्य क्षुकारञ्च लकारकम्
नामचैव चतुर्थ्यन्तं आवाह्यपूजयेत्ततः १५
प्रथमावरणे पूज्य विद्येश्वरघटान्यजेत्
पञ्चावरणमार्गेण पूजयित्वा विशेषतः १६
कुण्डेषु चार्चयेत्पश्चादथमन्त्रं समाहुनेत्
सुमुहूर्तेऽपि संस्नाप्य महाहविर्निवेदयेत् १७
स्नपनं कारयेत्पश्चात्सन्तुष्टं परिभावयेत्
आचार्यं पूजयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः १८
एवं कृत्वा विशेषेण सराजा विजयी भवेत् १९
इति भिक्षाटनस्थापनपटलस्सप्तपञ्चाशत्तमः

उमयासहस्थापनपटलप्रारंभः
अथ वक्ष्ये विशेषेण उमयासहस्थापनम्
सर्वलोकहितं पुण्यं श्रुणुष्व शरवणोद्भव १
उमयासहरूपन्तु स्फटिकाभं त्रिणेत्रकम्
टङ्ककृष्णमृगञ्चैव अभयं वरदन्तथा २
शयनं वामपादन्तु सव्ये लंबपदन्तथा
द्विभुजं श्यामवर्णाभं वामपादन्तु लंबितम् ३
सव्यपादन्तु शयनं उत्पलं सव्यहस्तके
--- पदं वामहस्तश्च करण्डमकुटोज्वलम् ४
चित्रवस्त्रधरान्देवीं मणिमालाविभूषिताम्
शिरश्चक्रसमोपेतं व्याघ्रचर्मोत्तरीयकम् ५
जटामकुटशोभाढ्यं नेत्रत्रयविराजितम्
प्रभामण्डलमद्ध्यस्थं सुखासनमुमापतिम् ६
उमया सह चाधीशप्रतिष्ठाञ्च ततश्शृणु

षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव वा ७
इन्द्राद्यष्टास्वपि दिक्षु युगाश्रादि चतुर्दिशि
आग्नेयादिमहायोनिस्तयोर्मद्ध्ये सुवृत्तकम् ८
तोरणान्मङ्गळान्शस्त्रान्पूर्ववत्परिकल्पयेत्
अङ्कुरार्पणपूर्वन्तु वास्तुपूजां समाचरेत् ९
नयनोन्मीलनं सद्यः बिंबशुद्धिं ततः परम्
जलाधिवासनं तत्र त्रिरात्रं वा द्विरात्रकम् १०
एकरात्रमथा वापि अथवा याममात्रकम्
-------------- जलाधिवासनं ततः ११
ग्रामप्रदक्षिणं कृत्वा मण्टपे वेशयेत्ततः
शयनारोपणं कुर्यात् मण्टपाराधनन्ततः १२
वेदिका मद्ध्यमे चैव दशकुम्भं न्यसेत्ततः
क्षित्यादिकुटिलप्रान्तं विद्याङ्गं नेत्रमुद्रया १३
प्रणवं पूर्वमुच्चार्य पुंसौ मुच्चरेत्परम्
नीलकण्ठायते चैव चतुर्थ्यन्तं नमोन्तकम् १४
आवाह्यमूलमन्त्रेण पूजयित्वा विशेषतः
प्रथमावरणं पूज्य हृदयादीन्समर्चयेत् १५
द्वितीयावरणे चैव शर्वादीन्परिकल्पयेत्
पञ्चावरणमार्गेण पूजयित्वा विशेषतः १६
कुण्डेष्वग्निं प्रतिष्ठाप्य उक्तमन्त्रेण होमयेत्
जीवन्यासक्रमेणैव हुत्वा बिंबे न्यसेत्ततः १७
घटं संप्रोक्षयेत्पश्चात् हविर्दत्वा निवेदयेत्
दक्षिणान्दापयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः १८
कल्याणकर्मपूर्वेव कल्पयेत्साधकोत्तमः
एवं कृत्वा च विधिवत्सपुण्याङ्गतिमाप्नुयात् १९
इति उमयासहस्थापनपटल अष्टपञ्चाशत्तमः

वृषारूढप्रतिष्ठापटलप्रारंभः
अथ वक्ष्ये महासेन वृषारूढेश्वरं महत्

स्थापनं श्रुणु जन्तूनां मोक्षार्त्थं ईश्वरेच्छया १
एवं रूपक्रमं वक्ष्ये चतुर्भुजसमायुतम्
टङ्ककृष्णमृगञ्चैव जटामकुटशोभितम् २
पद्मपीठे न्यसेत्पादं वामपादसमुद्धृतम्
सव्ये जङ्घोपरिन्यस्य वामजङ्घसमाश्रितम् ३
पादाङ्गुलिं न्यसेत् भूमौ स्वस्तिकाकृति किञ्चित्
पृष्ठतोक्षस्पर्शनञ्च ऊरुहस्तन्तु वामके ४
गोपतेर्मस्तके हस्तं विन्यसेदतिसुन्दरम्
धवळाभं महाशान्तं सर्वावयवसुन्दरम् ५
एकासने महागौरीं अथवा पृथगासने
कटकं लंबहस्तञ्च सर्वावयवसुन्दरीम् ६
सरत्नमकुटोपेतां वामे गौरीसमायुतम्
यद्वाचद्विभुजं शान्तं गोपतेर्मस्तके करम् ७
ऊरुहस्तं विशेषेण वामे गौरी समायुतम्
जटामकुटशोभाढ्यं अन्तस्मितसमायुतम् ८
यद्वा चोक्षसमारूढं वृषपृष्ठे सुखासनम्
पद्मपीठोपरिस्थञ्च शयनं वामपादकम् ९
लंबितं सव्यपादञ्च टङ्ककृष्णमृगन्तथा
अभयं वरदञ्चैव सर्वाभरणभूषितम् १०
श्यामाङ्गीं द्विभुजान्देवीं उत्पलं वरदन्तथा
शयनं लंबितं पादं सर्वाभरणभूषितम् ११
एवं ध्यात्वा विशेषेण प्रतिष्ठां कारयेत्ततः
षोडशस्तंभसंयुक्तं नवहस्तन्तु विस्तरम् १२
मद्ध्ये नवपदं कृत्वा वेदिका मद्ध्यमे चरेत्
पूर्वाशादि चतुर्दिक्षु यथोक्तं कुण्डमुत्तमम् १३
आग्नेयादि चतुर्दिक्षु योनिमेकासने सति
प्रत्येकमासनञ्चैव पृथक् शालां प्रकल्पयेत् १४
प्रत्येकं कुण्डसङ्ख्यानि पूर्ववद्विधिनाचरेत्
नयनोन्मीलनं पश्चात् ------------- १५

पयोधिवासनं कृत्वा बिंबशुद्धिं समाचरेत्
पर्यङ्के शयनं कृत्वा मण्टपाराधनं चरेत् १६
वेदिका मद्ध्यमे चैव दशकुम्भन्न्यसेत्ततः
न्यासकर्मसमाराद्ध्य नेत्रमुद्रां प्रदर्शयेत् १७
वृषान्तिके विशेषेण तारका पूर्वमुच्चरन्
औमित्युच्चरेत्पश्चात्पीठगाय इति भवेत् १८
पठ्यते उक्षादिशो -- प्रासादादिनमोन्तकम्
एवमावाह्य संपूज्य प्रथमावरणं पुरा १९
द्वितीय्या वरणं पश्चात् पञ्चावरणमार्गतः
उक्तमन्त्रेण हुत्वा तु पूर्णाहुतिं समाचरेत् २०
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः
पूर्णाहुतिन्तथा कृत्वा कुम्भमुत्थापयेत्ततः २१
अभिषेकन्तथा कृत्वा हविर्दत्वा समाचरेत्
स्नापनं कारयेत्पश्चात् अन्ते कल्याणमाचरेत् २२
एवं संपूज्य विधिवत् दक्षिणान्दापयेत्ततः
ब्राह्मणान्भोजयेत्तत्र आचार्यस्य च पूजनम् २३
एवं संपूजयेच्चैव सपुण्यां गतिमाप्नुयात् २४
इति वृषारूढप्रतिष्ठापटल एकोनषष्टितमः

त्रिपुरारिप्रतिष्ठापटलप्रारंभः

चतुर्भुजं त्रिणेत्रञ्च जटामकुटमण्डितम्
टङ्ककृष्णमृगञ्चैव धनुर्बाणधरं महत् १
मन्दस्मितसमायुक्तं ताटङ्ककुण्डलं धृक्
पद्मपीठोपरिस्थञ्च महापीठोपरिस्तथा २
सर्वाभरणसंयुक्तं हारकेयूरभूषितम्
नागयज्ञोपवीताङ्गं शिरश्चक्रसमायुतम् ३
वामे गौरी समायुक्तं कटकालंबहस्तकम्
करण्डमकुटोपेतं वामाङ्गं काळकन्धरम् ४
सर्वाभरणसंयुक्तं पृथगासननाधिकाम्

एवं सङ्कल्पमात्रेण प्रतिष्ठान्तं चरेत् गुरुः ५
षोडशस्तंभसंयुक्तं मण्टपञ्चतुरश्रकम्
मद्ध्ये वेदिं प्रकल्प्याथ कुण्डानि परितश्चरेत् ६
वेदिका मद्ध्यमे चैव दशकुम्भं न्यसेत्ततः
परिवारघटांश्चैव पूर्ववत्परिकल्पयेत् ७
जलाधिवासनञ्चैव नयनोन्मीलनं परम्
शयनारोपणं पश्चात् अङ्कुरार्पणपूर्वकम् ८
कुम्भे संपूजयेत्तत्र क्षित्यादिकुटिलान्तकम्
अर्चयेद्विधिवत्पश्चात्प्रणवं पूर्वमुच्चरन् ९
हौमिति द्वितयञ्चैव प्राकारञ्च ततश्शृणु
षट्कारन्तु ततः पश्चात् शत्रून्क्षोभय तत्परम् १०
स्वाहान्तमुच्चरेत्पूज्य प्रथमावरणं यजेत्
पञ्चावरणमार्गेण पूजयित्वा यथाविधि ११
होमयेद्विधिवत्पश्चात् गौरीयागं तदेव वा
आवाह्य पूजयेद्धुत्वा सुमुहूर्ते सुलग्नके १२
अभिषेकन्ततः कृत्वा हविर्दत्वा निवेदयेत्
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः १३
दक्षिणान्दापयेत्पश्चात् सराजा विजयी भवेत् १४
इति त्रिपुरारिप्रतिष्ठापटलष्षष्टितमः

वीरभद्रप्रतिष्ठापटलप्रारंभः

अथ वक्ष्ये विशेषेण वीरभद्रेश्वरं श्रुणु
महापातकदोषघ्नं सर्वपीडानि वारणम् १
वीरभद्रमिति ख्यातं दक्षयज्ञहरं परम्
चतुर्भुजं त्रिणेत्रञ्च ज्वालाकेशं सुदंष्ट्रिणम् २
घण्टामालाधरं घोरं शिरोमालाविभूषितम्
वृश्चिकाभरणञ्चैव नागयज्ञोपवीतिनम् ३
नूपुरं विमलं तद्वत्पादौ पादुकभूषितौ
नीलकण्ठञ्च त्र्यक्षञ्च ऊरुकञ्चुकसंयुतम् ४

खड्गखेटधनुर्बाणं कपालं भिण्डिपालकम्
रक्तवर्णसमायुक्तं उग्रदृष्टिभयङ्करम्  ५
एवं ध्यात्वा विशेषेण प्रतिष्ठां कारयेत्ततः
यागशालां प्रकल्प्याथ उक्तलक्षणमेव वा  ६
कुण्डं वा नवपञ्चैकं यथा वित्तानुसारतः
कुम्भान्करकलशान्पात्रं स्रुक्स्रुवमङ्गलम्  ७
तोरणं शस्त्रपताकं सप्तधान्यं समित्कुशम्
यागोपकरणान्सर्वान्संपाद्य विधिवत्ततः  ८
नयनोन्मीलनं कृत्वा पूर्णचन्द्राकृतिस्तथा
जलाधिवासनं पश्चात्प्रदक्षिणक्रमेण वा  ९
बिंबशुद्धिं ततः कृत्वा न्यसेच्छयनमण्टपे
वेदिकामद्ध्यमे चैव दशकुंभं न्यसेत्ततः  १०
आसनं मूर्तिमभ्यर्च्य दण्डभङ्गीं प्रकल्पयेत्
नेत्रमुद्रां पदृश्याथ अञ्जलीकरसंयुतम्  ११
प्रणवं पूर्वमुच्चार्य श्रींकारञ्च द्वितीयकम्
क्लींकारमिति विज्ञेयं ह्रींकारन्तु ततः परम्  १२
जयशब्देन मात्रेण वीरभद्रं तथैव च
चतुर्थ्यन्तं नमोन्तं वा ---------  १३
मूलेनावाहयेत्पश्चात्प्रथमावरणं यजेत्
पञ्चावरणमार्गेण पूजयित्वा यथाविधि  १४
अग्निकार्यं प्रकुर्वीत उक्तमन्त्रेण होमयेत्
तत्वत्रयं समभ्यर्च्य त्रिखण्डं होमयेत्ततः  १५
वह्निं तन्तुं घटे योज्य सुमुहूर्तेऽभिषेचयेत्
हविर्दत्वा निवेद्यञ्च स्नपनं कारयेत्ततः  १६
आचार्यं पूजयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः
एवं कृत्वा विशेषेण रुद्रलोकमवाप्नुयात्  १७

इति वीरभद्रप्रतिष्ठापटल एकषष्टितमः

हरेरर्द्धप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि हरेरर्द्धं मयापुरा
हरनारायणं रूपं केशार्द्धं मस्तके जटा १
वामे किरीटसंयुक्तं सव्ये कुण्डलधारिणम्
वामे तु लम्बकर्णं स्यात् ललाटे शायदृक्तथा २
सव्ये टङ्काभयञ्चैव वामे च कुरवन्तथा
पीतांबरधरं विष्णुं व्याघ्रचर्मांबरं हरम् ३
दक्षिणे नीलकण्ठं स्यात्स्फटिकाभन्तु वामतः
सव्ये शङ्खनिभाकारं काचपुष्पाभं वामतः ४
पद्मपीठोपरिस्थञ्च मन्दस्मितसमायुतम्
सर्वाभरणसंयुक्तं हरेरर्द्धमिहोच्यते ५
वामे गौरी समायुक्तं रक्तवर्णं द्विनेत्रकम्
कटकं लंबहस्तञ्च त्रिभागेनैव संयुतम् ६
एवं ध्यात्वा विशेषञ्च प्रतिष्ठाविहितं श्रुणु
पूर्वोक्तविधिना चैव षोडशस्तंभसंयुतम् ७
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम्
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रधानकम् ८
पूर्वाशादि चतुर्दिक्षु युगाश्रं कुण्डमुच्यते
आग्नेय्यादिष्वपि दिक्षु अर्द्धचन्द्राख्यकुण्डकम् ९
चतुःकुण्डं तथा कृत्वा पूर्ववत्परिकल्पयेत्
वेदिका मद्ध्यमे चैव दशकुम्भं न्यसेत्ततः १०
सप्तविंशत्घटान्यस्य शस्त्रमङ्गलतोरणान्
नयनोन्मीलनं कृत्वा जलाधिवासनं तथा ११
शयनं रोपणं कृत्वा वेदिकामद्ध्यमे यजेत्
क्षित्यादिकुटिलान्तं वा आसनं मूर्तिमर्चयेत् १२
नेत्रान्तमर्चयेच्चैव कृताञ्जलिपुटन्तथा
प्रणवं पूर्वमुच्चार्य रुरुभं हरमेव च १३
नारायणाय इत्येतन्नमोन्तञ्चार्चयेत्ततः
पञ्चमुद्रां प्रदृश्याथ अञ्जली त्रयमीरितम् १४

पञ्चावरणमार्गेण पूजयित्वा विशेषतः
पूर्वोक्तविधिना चैव उक्तमन्त्रेण होमयेत् १५
प्रधाने शिवमावाह्य अर्चयित्वा हुनेत्ततः
पूर्वादिषु च कुण्डेषु पुरुषादीन्होमयेत्ततः १६
आग्नेयादौ चतुः कुण्डे हृदयादि यजेद्धुनेत्
ब्राह्मणान्भोजयेत्तत्र दिनं प्रतिदिनं प्रति १७
पूर्वादि च चतुर्द्वारे ऋग्वेदादीन्जपेत्ततः
घोरं पाशुपतञ्चैव क्षुरिप्रत्यङ्गिरंस्तथा १८
मद्ध्ये शिवास्त्रं सञ्जप्य दक्षिणान्दापयेत्ततः
नृत्तगीतैस्समायुक्तं नित्यवत्पूजनं कुरु १९
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत्
हविर्दत्वा निवेद्याथ महायजनमारभेत् २०
एवं कृत्वा विशेषेण सायुज्य पदमाप्नुयात् २१
इति हरेरर्द्धप्रतिष्ठापटला द्विषष्टितमः

अर्द्धनारीश्वरप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि अर्द्धनारीश्वरं श्रुणु
वक्ष्येऽहं लोकरक्षार्त्थं शिवार्द्धं पार्वती पुरा १
सव्ये स्यात् विद्रुमाकारं वामे श्यामनिभं शिवा
करण्डमकुटां गौरीं जटामकुटमण्डितम् २
ललाटे चार्द्धनयनं सव्ये चैव भुजद्वयम्
टङ्कञ्च दक्षिणे पार्श्वे न्यसेदन्योक्षमस्तके ३
वामे नीलोत्पलञ्चैव स्तनमेकञ्च वामतः
गजचर्मधरं दक्षे दुकूलं वामभागके ४
सद्मपीठोपरिस्थञ्च पृष्ठपार्श्वे वृषन्तथा
एवं द्ध्यात्वा विशेषेण अर्चयेत्साधकोत्तमः ५
यागशालान्ततः कृत्वा नवोनवपदन्तथा
मद्ध्ये वेदिं प्रकल्प्याथ दशकुम्भन्न्यसेत्ततः ६
सप्तविंशत् घटान्न्यस्य पञ्चावरणमार्गतः

मराटपालङ्कृतञ्चैव नवकुराडं प्रकल्पयेत् ७
इन्द्रईशानयोर्मद्ध्ये वृत्तकुराडं प्रधानकम्
पूर्वादिषु चतुर्दिक्षु चतुरश्रं प्रकीर्तितम् ८
आग्नेय्यादि चतुर्दिक्षु योनिकुराडं प्रकीर्तितम्
जलाधिवासनञ्चैव नयनोन्मीलनं पुरा ९
शयनारोपणं कृत्वा कुम्भे संपूजयेत्ततः
हौंकारं पूर्वमुच्चार्य नमश्शिवायेति समुच्चरन् १०
मूलेनावाहयेत्पश्चात्प्रथमावरणं यजेत्
शर्वादीन्द्वितीये पूज्य शेषं पूर्ववदाचरेत् ११
शयनारोपणं कृत्वा वह्निकर्मसमाचरेत्
हुत्वा जप्वा स्तुतिं कृत्वा सर्वैरप्युपचारतः १२
सकळाध्वन्यसेच्चैव यजेन्मराडलचतुष्टयम्
आसनं मूर्तिमभ्यर्च्य नेत्रमुद्रां प्रदर्शयेत् १३
वह्निस्थन्तु घटे योज्य घटमादाय देशिकः
मूर्तिमग्नौ तु संयोज्य हविर्दत्वा निवेदयेत् १४
स्नपनं कारयेत्तत्र उपचारान्समर्चयेत्
दक्षिणान्दापयेच्चैव ब्राह्मणान्भोजयेत्ततः १५
आचार्यदक्षिणां दद्यात्तेनरादीर्घजीविनः
एवं कृत्वा विशेषेण सपुरायां गतिमाप्नुयात् १६
इति अर्द्धनारीश्वरप्रतिष्ठापटलस्त्रिषष्टितमः

चराडेशानुग्रहस्थापनपटलप्रारंभः

अथ वक्ष्ये विशेषेण चराडेशानुग्रहं पुरा
सर्वलोकहितात्र्थाय ज्ञानिनां मुक्तिकारणम् १
तापत्रयविनाशात्र्थं सत्पात्रानुग्रहात्र्थकम्
चराडेशानुग्रहं रूपं वक्ष्येऽहं श्रुणु षरामुख २
चतुर्भुजं द्विनेत्रञ्च जटाजूटविराजितम्
टङ्ककृष्णामृगञ्चैव विद्रुमप्रभसंयुतम् ३
दक्षिणे लंबितं पादं शयनं वामपादकम्

वामे गौरी समायुक्तं उत्पलं सव्यहस्तके ४
वामं भुजं निवेश्याथ आसने क्षौमसंपुटे
कुंचितं दक्षिणांघ्रिञ्च नीलांबुनिभसन्निभम् ५
किरीटमकुटोपेतं चित्रवस्त्रैरलङ्कृतम्
वृषभस्थं महाशान्तं मुक्ताकुण्डलमण्डितम् ६
पत्रन्तु वामकर्णे तु फालनेत्रमुदाहृतम्
भुजाभ्यामुद्धृतां मालां चण्डस्कन्धे च धारिणम् ७
द्विभुजं शुक्लवर्णञ्च शुक्लयज्ञोपवीतिनम्
किरीटमकुटोपेतं अञ्जलीकरसंयुतम् ८
न तेन मूर्ध्ना च तथा भक्तानुग्रहकारणम्
कल्पयेद्विधिवत्पश्चात्प्रतिष्ठां शृणु षण्मुख ९
दक्षिणायनके शस्ते प्रशस्तञ्चोत्तरायणे
पुष्यादिज्येष्ठपर्यन्तं शुभं कुम्भं विनापरम् १०
अष्टबन्धनहीने तु सर्वमासे प्रशस्यते
त्वेश्चक्रातटिते चोरे विड्वरेदेवता ग्रहे ११
उत्सवेश्वरबेरादीन्बिले वा खननेऽपि वा
उत्थाप्य विहिते काले नयनोन्मीलनक्रियाम् १२
जलाधिवासनञ्चैव रत्नन्यासं शुभं विना
शेषं पूर्ववदाचार्यः कारयेत्स्नपनं विना १३
समासे बीजनक्षत्रे षोडशस्तम्भसंयुतम्
मद्ध्ये वेदिं प्रकल्प्याथ दशकुम्भन्न्यसेत्ततः १४
परिवारघटान्न्यस्य तोरणान्शस्त्रमङ्गलान्
जलाधिवासनञ्चैव नयनोन्मीलनन्तथा १५
यागेश्वरं समाराद्ध्य शयनारोपणं पुरा
वेदिका मद्ध्यमे चैव अर्चयेत्तु यथाविधि १६
प्रणवं पूर्वमुच्चार्य अममित्यक्षरं भवेत्
नीलकण्ठाय इत्येते नमोन्तमर्चयेत्ततः १७
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
वायव्ये वेदिकां कृत्वा करकं दशविन्यसेत् १८

भोगशक्तिं समावाह्य पूजयित्वा यथाविधि
अग्निकार्यन्ततः कृत्वा होमयेदुक्तमन्त्रतः १९
सुमुहूर्ते सुलग्नेऽपि घटस्थानं समाचरेत्
ब्राह्मणान्भोजयेत्तत्र दक्षिणान्दापयेत्ततः २०
आचार्यं पूजयेत्पश्चात् वैवाह्य क्रममाचरेत्
एवं क्रमेण विधिवत्सपुण्याङ्गतिमाप्नुयात् २१
इति चण्डेशानुग्रहस्थापनपटलश्चतुष्षष्टितमः

विषापहरणस्थापनपटलप्रारंभः
अथातस्संप्रवक्ष्यामि विषापहरणेश्वरम्
चतुर्भुजं त्रिणेत्रञ्च किंचिद्दंष्ट्रकराळनम् १
जटारत्ननिभं विद्यात्पूर्णचन्दनिभाकृतिम्
त्रिशूलं खण्डकाञ्चैव गोकर्णाकृतिदक्षिणे २
कपालं वामहस्ते च वामे गौरीसमायुतम्
वामपादन्तु शयनं लंबितं सव्यपादकम् ३
महोक्षस्थं महाभीमं काळकूटविषाशनम्
कुण्डमद्ध्ये महाकाळं आबद्ध्य गौरिपाणिना ४
व्याघ्रचर्मांबरधरं किङ्किणी मालया वृतम्
वृश्चिकाभरणोपेतं सर्वाभरणभूषितम् ५
एवं महेश्वरन्ध्यात्वा प्रतिष्ठां साधकोत्तमः
पूर्ववद्यागशालाञ्च मद्ध्ये वेदिं प्रकल्पयेत् ६
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा
पूर्वाशादि चतुर्दिक्षु चतुरश्रं प्रकल्पयेत् ७
आग्नेय्यादि चतुर्दिक्षु योनिकुण्डं प्रकल्पयेत्
प्रधानं वृत्तकुण्डञ्च पूर्ववन्मण्टपाकृतिम् ८
नयनोन्मीलनं कृत्वा जलशय्यां समाचरेत्
शयनारोपणञ्चैव कुम्भे चावाहयेत्पुरा ९
क्षित्यादिकुटिलप्रान्तं मन्त्रसिह्मासनं यजेत्
आसनं मूर्तिमभ्यर्च्य अञ्जलीकरसंयुतम् १०

प्रणवं पूर्वमुच्चार्य व्योमिन्व्योमिन्तथैव च
नीलकण्ठाय इत्याख्यं नमोन्तमर्चयेत् बुधः ११
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
कुण्डसंस्कारपूर्वञ्च अग्निसंस्कारमेव वा १२
स्त्रुवसंस्कारमेवन्तु आज्यसंस्कारतः परम्
बालयौवनवृद्धाख्यं होमयेदुक्तमन्त्रतः १३
सायंप्रातर्हुनेच्चैव कालं प्रतिनिवेदनम्
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः १४
अग्निस्थं योजयेत्कुम्भे बिंबं संयोजयेत् घटे
हविर्दत्वा निवेद्याथ उपचारान्समर्चयेत् १५
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यः सायुज्य पदमाप्नुयात् १६
इति विषापहरणस्थापनपटलः पञ्चषष्टितमः

एकपादत्रिमूर्तिप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि त्रिमूर्त्यैकपदं यथा
सर्वलोकहितं पुण्यं संक्षेपं श्रुणु षण्मुख १
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम्
टङ्कशूलधरञ्चैव अभयं वरदन्तथा २
मुक्ताकुण्डलसंयुक्तं एकपादं प्रकीर्तितम्
पद्मपीठोपरिस्थञ्च सर्वाभरणसंयुतम् ३
यद्वा चतुर्भुजं शान्तं कुण्डलाभरणोज्वलम्
टङ्ककृष्णमृगञ्चैव अभयं वरदन्तथा ४
एकपादेन संयुक्तं कटिदेशात् द्विपार्श्वयोः
सव्ये धाता चतुर्बाहुं स्त्रक्कमण्डलुधारिणम् ५
अञ्जलीकरसंयुक्तं एकपादेन कुंचितम्
वामे विष्णुं चतुर्बाहुं शङ्खचक्राञ्जलीपुटम् ६
किरीटमकुटोपेतं एकपादेन कुंचितम्
त्रिमूर्तिपादमेवोक्तं प्रभामण्डलधारिणम् ७

पूर्वोक्तयागशालाञ्च नवभागं प्रकीर्तितम्
मद्ध्ये वेदिं प्रकल्प्याथ दशकुंभं न्यसेत्ततः ८
परिवारघटान्न्यस्य पूर्ववन्मण्टपं यजेत्
नयनोन्मीलनंकृत्वा जलक्रीडां समर्चयेत् ९
देवं कुम्भे समभ्यर्च्य आसनं मूर्तिमर्चयेत्
प्रणवं पूर्वमुच्चार्य लकारन्तु ततः परम् १०
क्रींकारन्तु ततः पश्चात्त्रिमूर्त्यात्मन्नमोन्तकम्
अर्चयेद्विधिवत्पश्चात्पञ्चावरणमार्गतः ११
तोरणादीन्प्रपूज्याथ होमयेत्तु विशेषतः
त्रिखण्डं होमयेत्पश्चात् रत्नन्यासमतः परम् १२
सुमुहूर्त्ते सुलग्ने च स्थापयित्वा विशेषतः
कुम्भात् बीजं समादाय बिम्बे संयोजयेत्ततः १३
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं समाराधयतस्सराजा विजयी भवेत् १४
इति एकपादत्रिमूर्तिप्रतिष्ठापटलषट्षष्टितमः

उमयासहप्रतिष्ठापटलप्रारंभः

अथ वक्ष्ये महासेन उमयासहनायकम्
अरुणाभं त्रिणेत्रञ्च चन्द्रचूडाजटाधरम् १
टङ्ककृष्णमृगञ्चैव गौर्यनङ्गञ्च वामके
सव्ये चाभयमित्युक्तं प्रभामण्डलमण्डितम् २
सर्वाभरणसंभूष्यं पद्मपीठोपरिस्थितम्
एवन्ध्यात्वा विशेषेण प्रतिष्ठाप्राग्वदाचरेत् ३
षोडशस्तंभसंयुक्तं द्वादशस्तंभमेव वा
नवकुण्डं प्रकल्प्याथ तोरणादीनि कल्पयेत् ४
अङ्कुरार्पणपूर्वन्तु नयनोन्मीलनन्ततः
जलाधिवासनञ्चैव शयनारोपणन्तथा ५
कुम्भे संपूजयेत्पश्चात्पञ्चावरणमार्गतः
हुत्वा जप्त्वा स्तुतिं कृत्वा त्रिखण्डं परिहोमयेत् ६

न्यासकर्मसमाराद्ध्य सुमुहूर्ते सुलग्नके
अभिषेकं ततः कृत्वा हविर्दत्वा निवेदयेत् ७
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यस्सपुण्याङ्गतिमाप्नुयात् ८
इति उमयासहप्रतिष्ठापटलस्ससप्तषष्टितमः

दक्षिणामूर्तिस्थापनपटलप्रारंभः
अथातस्संप्रवक्ष्यामि सर्वज्ञानप्रदायकम्
दक्षिणामूर्तिरूपन्तु वक्ष्येऽहं श्रुणु षण्मुख १
त्रिणेत्रं चतुर्भुजं शान्तं शुद्धस्फटिकसन्निभम्
जटामकुटकोपेतं नक्रकुण्डलमण्डितम् २
पत्रन्तु वामकर्णे तु सर्वावयवसुन्दरम्
नाभिं वह्निसमायुक्तं ज्ञानमुद्रान्तु दक्षिणे ३
दक्षिणे लंबितं पादं वामांघ्रिं कुंचितं पदम्
योगपट्टिकया वेष्ट्य वामजान्वोपरि तथा ४
वामबाहुकरञ्चास्य पर्वतोपरिसंस्थितम्
अपस्मारपरी देहे सव्यपादेन मण्डितम् ५
पृष्ठपार्श्वेऽथ न्यग्रोधं महोक्षं सव्यभागके
ज्ञानदाता मुनिगणैस्सेव्यमानं महेश्वरम् ६
भस्मव्यापाण्डराङ्गं शशिकलाधरं ज्ञानमुद्राक्षमालां
वीणापुस्तककरं धृतयोगपट्टाभिरामम् ।
व्याख्यापीठे निषण्णं मुनिवरगणैस्सेवितं सुप्रसन्नं
सव्याळं कृत्तिवस्त्रं द्रुतवचनं दक्षिणामूर्तिमीडे ७
एवं ध्यात्वा विशेषेण प्रतिष्ठां कारयेत्ततः
अङ्कुरं कारयेत्पश्चात् वास्तुयजनमारभेत् ८
नयनोन्मीलनं पश्चात् जलक्रीडां समाचरेत्
प्रदक्षिणक्रमेणैव बिंबशुद्धिरुदाहृतम् ९
शयनं मण्टपे स्थाप्य रक्षाबन्धनपूर्वकम्
वेदिका मद्ध्यमे पूज्य आसनं मूर्तिमर्चयेत् १०

प्रणवं पूर्वमुच्चार्य नमो कारं द्वितीयकम्
भगवते इत्युच्चार्य दक्षिणामूर्तयेऽपि च ११
प्रज्ञां यशश्च स्वाहाञ्च मूलेनावाहयेत्ततः
पञ्चावरणमार्गेण पूजयित्वा विशेषतः १२
अग्निकार्यं प्रकुर्वीत होमं कृत्वा समाचरेत्
तत्वे तत्वेश्वरं न्यस्य मूर्तौ मूर्तीश्वरान्न्यसेत् १३
व्याप्यव्यापकहोमैश्च प्रायश्चित्ताहुतिं हुनेत्
सुमुहूर्ते सुलग्ने च घटस्नानं समाचरेत् १४
महाहविर्निवेद्याथ स्नपनं कारयेत्ततः
त्रिपक्षपूजनं कृत्वा अन्ते स्नपनमाचरेत् १५
एवं कृत्वा विशेषेण राजराष्ट्रविवर्द्धनम्
सर्वपीडाप्रशमनं सर्वव्याधिनिवारणम् १६
सर्वविद्याप्रदं नृणां सायुज्यपदमाप्नुयात् १७
इति दक्षिणामूर्तिस्थापनपटल अष्टषष्टितमः

लिङ्गोद्भवप्रतिष्ठापटलप्रारंभः

अथ वक्ष्ये विशेषेण लिङ्गोद्भवमहेश्वरम्
शिवलिङ्गाकृतिञ्चैव चतुर्मानं प्रकीर्तितम् १
मद्ध्ये द्विभागं सङ्गृह्य अर्द्धचन्द्राकृतिञ्चरेत्
चतुर्भुजं त्रिणेत्रञ्च ललाटान्तं प्रदृश्यते २
जङ्घान्तं मद्ध्यमे रूपे टङ्कं कृष्णमृगन्तथा
अभयं वरदोपेतं टङ्कं तु कुण्डलन्तथा ३
हारकेयूरसंयुक्तं मणिमालाविभूषितम्
ऊर्ध्वेहंसाकृतिं सव्ये अधः कोलाकृतिञ्चरेत् ४
बाह्ये द्विपार्श्वयोश्चैव ब्रह्मविष्णूकृताञ्जलिम्
एवं प्रकल्प्य विधिवत्प्रतिष्ठां कारयेद्बुधः ५
षोडशस्तंभसंयुक्तं यागशालां प्रकल्पयेत्
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम् ६
धान्यराशिं प्रकल्प्याथ अष्टद्रोणैश्च शालिभिः

मद्ध्ये पद्मञ्च संलिख्य दशकुम्भं न्यसेत्ततः ७
सप्तविंशत् घटान्यस्य सर्वोपकरणानि वै
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा ८
मेखला त्रयसंयुक्तं सदा हि परिचेष्टितम्
अण्डजं मुण्डजञ्चैव रोमजन्दारुजन्तथा ९
योनिजं धान्यसहितं शयनारोपणन्तथा
स्वर्णे नरजतेनैव रक्षाबन्धनमुत्तमम् १०
षोडशस्तंभसंयुक्तं कीलैर्वा स्थाणुभिश्च वा
तृणेनोपरिचापूर्य जलमद्ध्ये प्रकल्पयेत् ११
तन्मद्ध्ये चैव पर्यङ्कं तस्योपरिन्यसेत्ततः
प्राक्शिरश्चोर्ध्ववक्त्रञ्च जलमद्ध्ये विनिक्षिपेत् १२
दशकुम्भान्यसेच्चैव तन्मद्ध्ये देवमर्चयेत्
इन्द्रादिलोकपालांश्च अर्चयेत्तु विशेषतः १३
द्विदिनं त्रिदिनं वापि दिनमेकन्तु यामकम्
यामार्द्धं वाहरेच्चैव वेदघोषैस्समन्वितम् १४
उत्थाप्यरथमारोप्य विसृजेत्कुम्भमाचरेत्
ग्रामप्रदक्षिणं कृत्वा मण्टपद्वारमाविशेत् १५
धान्यराशिमलङ्कृत्य त्रिकुम्भं विन्यसेत्ततः
सूर्यसोमाग्निमावाह्य पूजयेत् युगमार्गतः १६
उत्तराभिमुखो भूत्वा अग्निकार्यं समाचरेत्
रविं सोमञ्च शिखिनं प्रत्येकं दशसङ्ख्यया १७
तत्तन्मूलेन हुत्वा तु अग्निमुत्थाप्य योजयेत्
यद्वा च जपसङ्ख्यांश्च अष्टाविंशति सङ्ख्यया १८
तत्तन्मन्त्रं जपेच्चैव अग्निकार्यं विना गुरुः
आचार्यस्सव्यदिग्भागे वामे स्थपतिरेव च १९
आचार्यो मन्त्रमुच्चार्य तत्तन्मन्त्रसमन्वितः
पूर्णचन्द्रनिभाकारं टङ्केन नेत्रमद्ध्यमे २०
कुविरं मन्दसन्ताड्य स्थपतिः क्रमयोगतः
स्थापको मन्त्रयोग्यश्च स्वर्णपत्रसमन्वितम् २१

तन्मद्ध्ये मधुनिक्षिप्य स्वर्णदूर्वां गृहेत्ततः
आचार्यो मधुसंगृह्य दूर्वया नेत्रमद्ध्यमे २२
उदीच्यमिति मन्त्रेण लेपयेत्साधकोत्तमः
आज्येन लेपनं कृत्वा शस्त्रदोषनिवारणम् २३
प्रच्छन्नपटमानीय पटमाकृष्य बुद्धिमान्
कुंचिकादर्शनं पूर्वं विप्रयुग्मेन दर्शनम् २४
गोदर्शनं ततः कृत्वा सन्यासीदर्शनं ततः
राजदर्शनमालोक्य जनैस्सन्दर्शनं ततः २५
बिंबशुद्धिं ततः कृत्वा शयना रोपणं तथा
वेदिका मद्ध्यमे पूज्य पूर्ववच्चार्चयेत्ततः २६
प्रणवं पूर्वमुच्चार्य खकारञ्च द्वितीयकम्
स्तंभरुद्राय इत्येते नमोन्तं चार्चयेत्ततः २७
आवाह्य मूलमन्त्रेण अञ्जलित्रयमाचरेत्
पञ्चावरणमार्गेण पूजयित्वा विशेषतः २८
अग्निकार्यं समाराद्ध्य पूर्वोक्तविधिनाहुनेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः २९
अग्निमुद्वास्य उत्थाप्य घटे संयोजयेत्ततः
सुमुहूर्ते सुलग्ने च अभिषिच्य हविर्ददेत् ३०
स्नपनं कारयेत्पश्चात् आचार्यं पूजयेत्ततः
ब्राह्मणान्भोजयेत्तत्र देवसान्निद्ध्यकारणम् ३१
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् ३२

इति लिङ्गोद्भवप्रतिष्ठापटल एकोनसप्ततितमः

भैरवक्षेत्रपालप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि भैरवं श्रुणु षण्मुख
भ्रुकुटितटमुखं दंष्ट्रिणं भीमनेत्रं ज्वालाकेशं त्रिणेत्रं त्रिशिखडमरुं
पाशहस्तं कपालम् । घण्टामालाभूषितं फणिघटिस्सूत्राकृतिं
किङ्किणिं अर्द्धचन्द्रं हवृश्चिकधरं महाकाळं महाभैरवम् १
षोडशस्तंभसंयुक्तं यागशालां प्रकल्पयेत् २

मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम्
पूर्वाद्यष्टदिशि चैव पूर्ववत्कुण्डमुच्यते ३
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रकीर्तितम्
अङ्कुरार्पणपूर्वन्तु द्वितीयं नयनमोक्षणम् ४
तृतीय्यं रत्नविन्यासं बिंबशुद्धिमतः परम्
जलाधिवासनञ्चैव ग्रामप्रदक्षिणन्तथा ५
शयनारोपणं चैव पूर्ववत्परिकल्पयेत्
वेदिकामद्ध्यमे चैव दशकुम्भन्न्यसेत्ततः ६
ससूत्रं सापिधानैश्च सरत्नं स्वर्णपङ्कजम्
सकूर्चं नाळिकेरञ्च चूतपल्लवसंयुतम् ७
सप्तधान्यस्थितं कुम्भं पश्चिमाभिमुखं भवेत्
दक्षिणाभिमुखं वापि बिंबमावाहयेत् घटे ८
आसनं मूर्तिमभ्यर्च्य विद्यादेहं प्रकल्पयेत्
प्रणवं पूर्वमुच्चार्य श्रीबीजञ्च द्वितीय्यकम् ९
कुरुवाटिकायेति आपदुद्धारणाय च
क्षं क्षेत्रपाल इत्येते चतुर्थ्यन्तं समुच्चरन् १०
नमोन्तमुच्चरेत्पश्चात् भाष्योच्चारन्तु पूर्ववत्
पश्चान्मन्त्रेण चावाह्य घटे संपूजयेत्ततः ११
पश्चिमाभिमुखं पूज्य दक्षिणाभिमुखन्तु वा
पुष्पाञ्जलित्रयं पूज्य प्रथमावरणं यजेत् १२
पश्चिमाद्दक्षिणान्तं वा दक्षिणात्पूर्वमेव वा
विश्वशूपादिमभ्यर्च्य द्वितीय्यावरणन्तथा १३
पञ्चमावरणञ्चैव पूर्ववत्परिकल्पयेत्
नन्द्यादींश्चैव इन्द्रादीन्वज्रादीन्हेतुकादि च १४
पूर्वादिषु चाष्टदिक्षु तत्तत्स्थानेषु पूजयेत्
अग्निसंस्कारपूर्वन्तु पूर्ववद्विधिनाहुनेत् १५
समिदाज्य चरून्लाजं नवधान्यं गुळन्तथा
अपूपान्कन्दकुसुमं होमयेत्तु विशेषतः १६
प्रायश्चित्ताहुतिञ्चैव अग्निमुत्थापयेत्ततः

घटे संयोजयेत्पश्चात्सुमुहूर्त्ते सुलग्नके १७
अभिषेकन्ततः कृत्वा ब्राह्मणान्भोजयेत्ततः
आचार्यं पूजयेच्चैव दक्षिणां दापयेत्ततः १८
एवं यः कुरुते चैव सराजा विजयी भवेत्
इति भैरवक्षेत्रपालप्रतिष्ठापटलस्ससप्ततितमः

आपदुद्धारणेश्वरपटलप्रारंभः

अथ वक्ष्ये विशेषेण सर्वलोकहिताय च
सर्वशत्रुविनाशार्त्थं आपदुद्धारणेश्वरम् १
द्विभुजञ्च द्विनेत्रञ्च वृत्तपिङ्गजटाधरम्
श्वेतवर्णसमायुक्तं कुण्डलं कर्णपत्रकम् २
अभयन्दण्डसंयुक्तं नागयज्ञोपवीतितम्
श्यामं कञ्चुकसंयुक्तं लंबितं स्तनपार्श्वयोः ३
शूलान्तं लंबितञ्चैव मणिमाला विभूषितम्
वृश्चिकाभरणोपेतं शिरोमालाभिभूषितम् ४
कटिसूत्राकृतिं नागराजयुग्मेन संयुतम्
पद्मपीठोपरिस्थञ्च ह्रस्वदेहसमन्वितम् ५
किञ्चिद्दंष्ट्रं महाभीमं विष्णु ---- कशारिणम्
एवन्ध्यात्वा महादेवं इष्टसिद्धिर्भविष्यति ६
इत्थं सङ्कल्प्य विधिवत् प्रतिष्ठां कारयेत्ततः
षोडशस्तंभसंयुक्तं यागमण्टपमुत्तमम् ७
पूर्वादिषु चाष्टदिक्षु पूर्ववत्परिकल्पयेत्
इन्द्रईशानयोर्मद्ध्ये पञ्चाश्रं कुण्डमुच्यते ८
प्रधानमिति विज्ञेयं मेखलात्रयसंयुतम्
वेदिकामद्ध्यमे चैव दशकुम्भान्न्यसेत्ततः ९
अङ्कुरं वास्तुयजनं नयनोन्मीलनक्रियाम्
जलाधिवासनञ्चैव रत्नन्यासन्तथैव च १०
शयनारोपणं कृत्वा आत्मशुद्धिमतः परम्
अन्तर्यागसमायुक्तं मन्त्रशुद्धिमतः परम् ११

शिवहस्तं प्रकल्प्याथ वेदिकामद्ध्यमे यजेत्
यजेदाधारशक्त्यादि कुटिलान्तं समर्चयेत् १२
दण्डभंग्या च विन्यस्य नेत्रमुद्रां प्रदर्शयेत्
प्रणवं पूर्वमुच्चाय श्रीबीजमिति कथ्यते १३
मायाबीजन्ततः पश्चात्कुरुकुर्वटुकाय च
आपदुद्धारणायेति क्षं इति मन्त्रमुच्चरन् १४
वटुकायनमोन्तञ्च मूर्तिमावाहयेत्ततः
आग्नेय्यादिक्रमेणैव हृदयादीन्यजेत्ततः १५
द्वितीय्यावरणे पूज्य विश्वरूपादिमर्चयेत्
दक्षिणाभिमुखं पूज्य द्वितीयावरणन्तथा १६
पूर्वादिषु चाष्टदिक्षु तृतीयावरणं यजेत्
चतुर्थावरणञ्चैव पञ्चमावरणं यजेत् १७
तत्तत्स्थानेषु संपूज्य पूर्ववद्ध्यानमाचरेत्
पूजितं वृषभस्थाने केसरिं संप्रपूजयेत् १८
शेषं पूर्वेव संपूज्य द्वारपूजान्ततः श्रुणु
गणेशं वाथ लक्ष्मीञ्च दक्षिणे वाममद्ध्यमे १९
नन्दिनं पिशिताशञ्च सव्यभागे प्रपूजयेत्
कुम्भोदरं कृशांगीञ्च वामभागे प्रपूजयेत् २०
देहळीमद्ध्यमे चैव सिह्मवक्त्रं प्रपूजयेत्
पूर्वे तु केसरिं पूज्य अस्त्रं संपूजयेत्ततः २१
वास्तुब्रह्माणमभर्च्य वेदिकां पूजयेत्ततः
पूर्ववद्धग्निमाराद्ध्य पूर्ववद्धोमयेत्ततः २२
प्रायश्चित्ताहुतिं कृत्वा अग्निमुद्वासयेत्ततः
अग्निन्तन्तुघटे ------------------ २३
अभिषिच्य महादेवं स्नपनं कारयेत्ततः
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः २४
एवं यः कुरुते मर्त्यः सर्वशत्रुविनाशनम् २५

इति आपदुद्धारणेश्वरपटल एकसप्ततितमः

## अघोरास्त्रमूर्तिप्रतिष्ठापटलप्रारंभः

अथ वक्ष्ये विशेषेण सर्वलोकैकपावनम्
सर्वयुद्धजयञ्चैव ब्रह्महत्यादिनाशनम् १
महापातकदोषघ्नं गुरुद्रोहनिवारणम्
शिवद्रव्यापहारञ्च उपपातकनाशनम् २
सर्वैश्वर्याभिवृद्ध्यर्थं परमोक्षनिरासनम्
अघोरास्त्रेश्वरं भीमं स्थापनं वक्ष्यते श्रुणु ३
त्रिणेत्राष्टभुजं भीमं उग्रदंष्ट्राकराळकम्
काळमेघसमं घोरं रक्तवस्त्रसमन्वितम् ४
ज्वालाकेशसमायुक्तं कृशानुनयनैर्युतम्
अर्द्धचन्द्राकृतिं भस्म ललाटोपरिशोभितम् ५
भुजाभ्यां त्रिशिखा तिर्यक् वेताळं खड्गमेव च
डमरुञ्च कपालञ्च खेटकं खड्गमेव च ६
रक्तवस्त्रांबरोपेतं रक्तपुष्पसमन्वितम्
रक्ताभरणसंयुक्तं खड्गमालाविभूषितम् ७
शिरोमालाविभूष्यञ्च नागयज्ञोपवीतिनम्
वृश्चिकाभरणं कण्ठे कालाग्निसदृशप्रभम् ८
एवं द्ध्यात्वा महाघोरं द्वात्रिंशल्लक्षणान्वितम्
पद्मपीठोपरिस्थञ्च समीपे वृषभन्तथा ९
एवं संकल्प्य विधिवत्प्रतिष्ठां कारयेत्ततः
षोडशस्तंभसंयुक्तं नवभागं प्रकीर्तितम् १०
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम्
वेदिका मद्ध्यमे चैव ----------- ११
तस्यार्द्धं तण्डुलं प्रोक्तं तस्यार्द्धं माषसंयुतम्
तस्यार्द्धं मुद्गसंयुक्तं तत्समं तिलमुच्यते १२
तस्यार्द्धञ्चैव गोधूमाः निष्पावन्तु तदर्द्धकम्
दशकुम्भं न्यसेच्चैव कुम्भालङ्कृतमुच्यते १३
सप्तविंशत् घटान्यस्य पूर्ववत्परिकल्पयेत्
पूर्वादिषु चाष्टदिक्षु पूर्ववत्कुण्डमुच्यते १४

चतुरश्रार्द्धचन्द्रञ्च सुवृत्तं पद्मसंयुतम्
योनित्रिकोणषट्कोणं मङ्गळाश्रं प्रकीर्तितम् १५
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रकीर्तितम्
कारयेदर्द्धचन्द्रं वा मेखलात्रयमुत्तमम् १६
तोरणान्मङ्गळान्शस्त्रान्यागोपकरणानि वै
अङ्कुरं वास्तुयजनं नयनोन्मीलनन्तथा १७
प्रतिमां शुद्धितां कृत्वा जले शयनमेव वा
शयनारोपणं कृत्वा रक्षाबन्धनमेव वा १८
मण्टपाराधनं कृत्वा वेदिकामद्ध्यमे यजेत्
क्षित्यादिकुटिलप्रान्तं मन्त्रसिह्मासनं यजेत् १९
विद्याङ्गं नेत्रमुद्राञ्च मूलेनावाहनन्तथा
प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम् २०
पुरः पुरस्समुच्चार्य प्रस्फुरत्प्रस्फुरत्तथा
घोरघोरतरश्चैव धनुरूपद्वयन्तथा २१
चटद्वयं समुच्चार्य प्रचटद्वयमेव च
अहद्वयं समुच्चार्य वं वं बन्धद्वयन्तथा २२
घातयो घातयश्चैव हुंफट्कारं समुच्चरन्
अघोरास्त्रं चतुर्थ्यन्तं नमोन्तं परिकीर्तितम् २३
प्रासादं पूर्वमुच्चार्य कलाषोडशसङ्ख्यया
द्वादशान्तं समुच्चार्य लयान्तमुच्चरन्गुरुः २४
शिवाय नम इत्येते प्राणप्रवाहवर्त्मना
मूलाधारं तमाकृष्य पुनः प्रणवमुच्चरन् २५
अघोरास्त्रं महामन्त्रं उच्चरेत्पूर्वमार्गतः
उद्धृत्य बिंबपर्यन्तं खणिका द्वारमानयेत् २६
भ्रूमद्ध्यात्खण्डिकाद्वारं आकृष्यावाहनं बुधः
हृदयेनैव नवमन्त्रेण समावाह्य घटे गुरुः २७
स्वागतार्घ्यं ददेत्पश्चात्पुष्पाञ्जलिमिहोच्यते
स्नपनाङ्गानि संभाव्य अर्घ्येणप्रोक्षयेत्ततः २८
चन्दनाक्षतदूर्वाश्रीपुष्पकौपीनकुण्डलम्

मेखलामुपवीतञ्च वस्त्रमाभरणानि वै २९
मनसाभावयेच्चैव तत्वत्रयं समर्चयेत्
प्रथमावरणं पूज्य द्वितीय्यावरणन्तथा ३०
तृतीय्यावरणञ्चैव चतुर्थावरणं यजेत्
पञ्चमावरणं पूज्य नैवेद्यं धूपदीपकम् ३१
कुण्डसंस्कारपूर्वन्तु अग्निसंस्कारमेव वा
स्त्रुक्स्त्रुवयोश्च संस्कारं आज्यसंस्कारमेव वा ३२
होमयेत्तु विशेषेण होमयेत्तु च सङ्ख्यया
तस्यार्द्धं वा तदर्द्धं वा आज्येन होमयेत्ततः ३३
प्रायश्चित्ताहुतिं कृत्वा घटे संयोजयेत्ततः
सुमुहूर्ते सुलग्ने च अभिषेकं विशेषतः ३४
हविर्दत्वा निवेद्याथ स्नपनं कारयेत्ततः
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः ३५
एवं कृत्वा विशेषेण सर्वकार्यसमन्वितः ३६
इति अघोरास्त्रमूर्तिप्रतिष्ठा पटलो द्विसप्ततितमः

शरभेश्वरस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि शरभेश्वरस्थापनम्
सर्वशत्रुविनाशार्त्थं कलौ सिद्धिप्रदायकम् १
सर्वयुद्धजयञ्चैव सर्वपीडानि वारणम्
नृसिह्महरिनाशार्त्थं वक्ष्येऽहं श्रुणु षण्मुख २
सिह्मास्यं स्फटिकाभञ्च सूर्यसोमाग्निदृष्टिभिः
जिह्वा च बडबाग्निस्स्यात्काळी दुर्गा द्विपक्षकौ ३
शची पतिर्नखाश्चैव -----------
कालाग्निः कुक्षिरित्युक्तं कालमृत्यूरुरेव च ४
महावायुर्बलं विद्यात् शरभश्चण्डवेगतः
मृगादी च चतुष्पादं द्विपादं भूमिसंस्थितम् ५
हरमूर्ध्वकराभ्याञ्च पक्षं भित्वाजिनं धरम्
डमरुं परशुञ्चैव त्रिशूलं खड्गखेटकम् ६

शरं शार्ङ्गं भिण्डिपालं पार्श्वयोश्च प्रकल्पयेत्
जघने चोर्ध्वपुच्छं स्यात्पाददेशे नृसिह्मकम् ७
सिह्मचर्मधरं भीमं शत्रुसंहारकारणम्
साळ्वपक्षिप्रराजाख्यं एवं संहारताण्डवम् ८
एवं सङ्कल्प्य विधिवत्प्रतिष्ठां श्रुणु षण्मुख
अघोरं दक्षिणामूर्तिं आपदुद्धारणन्तथा ९
भैरवं विषभेषञ्च नटेशं नारसिह्मकम्
चण्डेशं यक्षराजञ्च दक्षिणाभिमुखं यजेत् १०
प्रथमावरणं पूज्य तदेवपरिकीर्तितम्
द्वितीयावरणादींश्च पूर्वादीशान्तमाचरेत् ११
तपनञ्चैव शास्तारं मेषमिन्दुन्तथैव च
लिङ्गोद्भवमिति ज्ञेयः प्रशस्तं पश्चिमामुखम् १२
धातारं चण्डिकाकारं दुर्गां ज्येष्ठांगणस्तथा
उत्तराभिमुखञ्चैव पूजयेत्तु विशेषतः १३
गणेशं स्कन्दलक्ष्म्यौ च सोमास्कन्देशप्राङ्मुखम्
तदेवयागं संपूज्य प्रथमावरणं यजेत् १४
द्वितीय्यावरणञ्चैव तृतीय्यावरणन्तथा
चतुर्त्थावरणञ्चैव पञ्चमावरणन्तथा १५
पूर्वादिषु चाष्टदिक्षु तत्तत्स्थाने यजेत्तथा
षोडशस्तंभसंयुक्तं यागशालां प्रकल्पयेत् १६
वेदिकाकुण्डमेवोक्तं उत्तरक्षणमेव वा
मृत्संग्रहणमित्युक्तं अङ्कुरार्पणमेव वा १७
वास्तुपूजां ततः कृत्वा नयनोन्मीलनं तथा
जलाधिवासनं पश्चात् शयनारोपणञ्चरेत् १८
घटे संपूजयेत्पश्चात् शक्त्याशक्त्यञ्च मर्चयेत्
विद्याङ्गं नेत्रमुद्राञ्च ततस्संपूजयेद्घटे १९
प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम्
रामबीजमतः पश्चात् लक्ष्मीबीजमतः परम् २०
स्कन्दबीजं ततः पश्चात्पशुबीजमतः परम्

खंखं विद्वेषणायाश्च शरभस्साळुवान्तथा २१
पक्षिराजाय इत्येते सर्वशत्रूपसंहर
संहरश्च चखांखीञ्च मांरक्षच तथैव च २२
स्वाहान्तमुच्चरेत्पूज्य घटे संपूजयेत्ततः
प्रथमावरणं पूज्य द्वितीय्यावरणं यजेत् २३
पञ्चावरणमार्गेण पूजयित्वा यथा विधि
अग्निकार्यं समाराध्य पूर्वोक्तविधिनाहुनेत् २४
प्रायश्चित्ताहुतिं पश्चात् घटे संयोजयेत्ततः
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत् २५
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं सङ्कल्प्य विधिवत्सपुण्यां गतिमाप्नुयात् २६
इति शरभेश्वरस्थापनपटलस्त्रिसप्ततितमः

अश्वारूढस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि अश्वारूढं महेश्वरम्
सर्वयुद्धजयात्र्थञ्च प्रतिष्ठां श्रुणु षण्मुख १
त्रिनेत्रं द्विभुजं भीमं जटामकुटमण्डितम्
पत्रन्तु वामकर्णे तु --- क्षीरेण कुण्डलम् २
बालादित्य समप्रख्यं तुरङ्गारूढमव्ययम्
तुरङ्गं श्यामवर्णञ्च चतुष्पादसमन्वितम् ३
सव्यहस्ते भिण्डपालं वारिरज्जुकरेन्यके
द्वात्रिंशल्लक्षणोपेतं सर्वाभरणभूषितम् ४
छत्रचक्रसमायुक्तं दिव्यवस्त्रैरलङ्कृतम्
एवं सङ्कल्पमात्रेण प्रतिष्ठां पूर्ववच्चरेत् ५
षोडशस्तंभसंयुक्तं चतुर्द्वारसमायुतम्
मद्ध्ये वेदिं प्रकल्प्याथ नवकुण्डं प्रकीर्तितम् ६
पताकैस्तोरणैर्भूष्यं वितानद्ध्वजसंयुतम्
नयनोन्मीलनञ्चैव बिंबशुद्धिमतः परम् ७
जलाधिवासनञ्चैव रत्नन्यासमतः परम्

शयनारोपणञ्चैव अङ्कुरार्पणपूर्वकम्  ८
वेदिकामद्ध्यमे पूज्य प्रणवं पूर्वमुच्चरन्
प्रथमस्वरमुद्धृत्य शत्रुनाशन इत्यपि  ९
चतुर्त्थ्यञ्चन्नमोन्तञ्च घटे सम्पूजयेत्ततः
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्  १०
त्रिखण्डं होमयेत्पश्चात् तोयं संयोजयेत् घटे
घटमुत्थाप्य देवेशं सुमुहूर्त्ते सुलग्नके  ११
अभिषिच्य पदैर्म्मन्त्रैर्हविर्दत्वा निवेदयेत्
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः  १२
एवं यः कुरुते मर्त्यः सराजाविजयी भवेत्  १३
इति अश्वारूढस्थापनपटलश्चतुस्सप्ततितमः

ज्वरदेवप्रतिष्ठापटलप्रारंभः

वामे पत्रसमायुक्तं व्याघ्रचर्म्मोत्तरीय्यकम्
पद्मपीठोपरिस्थञ्च प्रभयायुतसंयुतम्  १
एवं कल्प्य विशेषेण प्रतिष्ठां श्रुणु षण्मुख
षोडशस्तंभसंयुक्तं यागमण्टपमुत्तमम्  २
पूर्ववद्वेदिकां कृत्वा उपवेदिं प्रकल्प्य च
--------------- दशकुम्भान्यसेत्ततः  ३
सप्तविंशत् घटान्यस्य तोरणान्मङ्गळांश्चरेत्
नवकुण्डं प्रकल्प्याथ पूर्ववत्परिकल्पयेत्  ४
नयनोन्मीलनं कृत्वा जलाधिवासनं परम्
रक्षाबन्धनमेवोक्तं शयनारोपणं परम्  ५
आवाह्य पूजयेत्पश्चात् आसनं मूर्तिमर्चयन्
प्रणवं पूर्वमुच्चार्य भान्तं समुच्चरेद्यजेत्  ६
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
कुण्डसंस्कारपूर्वञ्च होमकर्मसमाचरेत्  ७
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः
अग्निस्थन्तु घटे योज्य घटमादाय साधकः  ८

सुमुहूर्त्ते सुलग्ने च अभिषेकं समाचरेत्
हविर्दत्वा निवेद्याथ स्नपनं कारयेत्ततः ९
एवं कृत्वा विशेषेण सर्वपीडानि वारणम् १०
इति ज्वरदेवप्रतिष्ठापटलः पञ्चसप्ततितमः

दिव्यवृक्षप्रतिष्ठापटलप्रारंभः
अथातस्समहेशान दिव्यवृक्षं पुरातनम्
दुर्न्निमित्ते च दुष्काले निर्जीविततरुस्तथा १
कथं पूजाविधिश्शंभोः वक्ष्येऽहं श्रुणु षण्मुख
दिव्यवृक्षविहीने तु राजादुर्मरणं भवेत् २
म्लेच्छाक्रान्तं भवेद्राज्यं तद्दोषशमनाय च
शान्तिहोमन्ततः कृत्वा मूर्तिहोमं समाचरेत् ३
दिशाहोमन्ततः कृत्वा संहिताहोममिष्यते
अघोरं पाशुपदञ्चैव क्षुरिप्रत्यंगिरस्तथा ४
मृत्युञ्जयं शिवास्त्रञ्च लक्षं जप्त्वा पृथक्पृथक्
महाशाखा विहीने तु तस्यार्द्धं जपसङ्ख्यया ५
फलपुष्पविहीने तु दुर्भिक्षमपि जायते
तस्यार्द्धं वाजपं कृत्वा हुनेत् ब्राह्मणभोजनम् ६
महाशाखा विहीने तु अमात्यो मरणं भवेत्
तस्मात्सर्वप्रयत्नेन प्रतिष्ठां कारयेत्ततः ७
षोडशस्तंभसंयुक्तं चतुस्तोरणभूषितम्
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा ८
वेदिका मद्ध्यमे चैव दशकुंभन्न्यसेत्ततः
सप्तविंशत् घटान्न्यस्य द्ध्वजशस्त्रैश्च मङ्गलान् ९
सर्वोपकरणांश्चैव यागद्रव्यान्समाहरेत्
नयनोन्मीलनञ्चैव जलाधिवासनं विना १०
रत्नन्यासं विना चैव शेषं पूर्ववदाचरेत्
अण्डजं मुण्डजञ्चैव योनिजं दारुजं तथा ११
बीजजं शयनं स्थाप्य निद्राकुंभान्न्यसेत्ततः

निद्राकुम्भं समादाय पृथिव्युपरिविन्यसेत्  १२
पादभागे न्न्यसेच्चैव रक्षाबन्धनमाचरेत्
रक्षासूत्रं समादाय कुण्डबन्धनमाचरेत्  १३
वेदिका मद्ध्यमे चैव दशकुम्भन्न्यसेत्ततः
कुम्भे सदाशिवं पूज्य वर्द्धन्यान्तु मनोन्मनीम्  १४
मूलपूजाप्रकारेण कुर्यादावाहनादिकम्
प्रथमावरणं पूज्य ईशानादीनि पूजयेत्  १५
द्वितीय्यावरणे पूज्य अनन्तादीन्प्रपूजयेत्
पञ्चावरणमार्गेण पूजयित्वा यथाविधि  १६
नवदिनं सप्तदिनं वा पञ्चदिनं त्रिदिनं वा
सायंप्रातः पृथक्पृथक् ---------  १७
प्रधानकुण्डे साहस्त्रं होमयेत्तु ततः परम्
तद्दशांशं शतांशं वा अष्टकुण्डे हुनेत्ततः  १८
अन्ते हुनेत्तु साहस्त्रं पञ्चास्त्रेण पृथक्पृथक्
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः  १९
त्रिखण्डं कल्पयेद्धोमं न्यासकर्मसमाचरेत्
वृक्षबीजं समादाय ईशानेन तु मन्त्रतः  २०
भूमौ तु खननं घोरैस्स क्षीरादिजलैरपि
करमानोन्नतं पश्चात् सुमुहूर्ते सुलग्नके  २१
घटाभिषेचनं पश्चात् हविर्दत्वा समाचरेत्
उपचारान्समावाह्य त्रिपक्षं पूजयेत्ततः  २२
विशेषपूजां कृत्वा तु दक्षिणान्दापयेत्ततः
ब्राह्मणान्भोजयेच्चैव आचार्यं पूजयेत्ततः  २३
एवं यः कुरुते मर्त्यः सपुण्याङ्गतिमाप्नुयात्  २४

इति दिव्यवृक्षप्रतिष्ठापटलष्षट्सप्ततितमः

## गजारिस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि गजारिस्थापनं परम्
भगवान्लोकरक्षार्त्थं गर्वनिर्वापणं शिवः  १

रक्तवर्णं त्रिणेत्रञ्च पूजाष्टकसमन्वितम्
दंष्ट्राकराळवदनं वृत्तपिङ्गजटाधरम्  २
पार्श्वयोर्गजपादन्तु गजपुच्छन्तु मस्तके
वामपादन्यसेच्चैव गजदेवन्तु मस्तके  ३
उद्धृत्य कुंचितं पादं पृष्ठपार्श्वे च विन्यसेत्
मुष्टिहस्तकराभ्याञ्च पार्श्वयोर्भिन्नवेष्टितम्  ४
शूलं डमरुकं पाशं सव्यहस्तांबुजे न्यसेत्
कपालं खड्गखेटञ्च वामभागं --म्रांबुजे  ५
प्रभामण्डलमद्ध्यस्थं सर्वावयवसुन्दरम्
द्विभुजञ्च द्विनेत्रञ्च किरीटमकुटोज्वलम्  ६
कटकं सव्यहस्ते तु वामहस्तेन धारयेत्
गुहं सर्वाङ्गसौन्दर्यं वामभागे प्रकल्पयेत्  ७
एवं कल्प्य विशेषेण प्रतिष्ठां कारयेत्ततः
षोडशस्तंभसंयुक्तां यागशालां प्रकल्पयेत्  ८
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा
तोरणान्मङ्गळांश्चैव शस्त्रध्वजवितानकान्  ९
कदळीनारिकेळैश्च पूगस्तम्भैरलङ्कृताम्
चन्दनैश्चाप्यलङ्कृत्य वेदिकां पूर्ववच्चरेत्  १०
दशकुम्भन्न्यसेच्चैव सप्तविंशत् घटान्न्यसेत्
अङ्कुरार्पणपूर्वन्तु वास्तुपूजां ततः परम्  ११
नयनोन्मीलनं कृत्वा बिंबशुद्धिं यजेत्ततः
प्रायश्चित्ताहुतिं कृत्वा घटे संयोजयेत्ततः  १२
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत्  १३
हविर्दत्वा निवेद्याथ ब्राह्मणान्भोजयेत्ततः
एवं कृत्वा विशेषेण सराजाविजयी भवेत्  १४
इति गजारिस्थापनपटलस्सप्तसप्ततितमः

अङ्काळस्थापनपटलप्रारंभः
अथातस्संप्रवक्ष्यामि कङ्काळस्थापनं श्रुणु

गर्वनिर्वापणार्त्थं हि महेशो मूर्तिभेदकः १
त्रिणेत्रं चतुर्भुजं भीमं रक्तवर्णन्तथैव च
ब्रह्मकङ्काळवीणान्तु सव्यहस्तेन धारयेत् २
वामां सोपरिविन्यस्य तिर्यक्कूर्परदेशके
डमरुं वामहस्ते तु टङ्कं कृष्णमृगन्तथा ३
समपादस्थितं पीठपद्मोपरिनिषण्णकम्
प्रभयामद्ध्यमे चैव जटामकुटमण्डितम् ४
कङ्काळं रूपमाख्यातं प्रतिष्ठां पूर्ववच्चरेत्
षोडशस्तंभसंयुक्तं यागमण्टपमुत्तमम् ५
नयनोन्मीलनं पूर्वं जलाधिवासनं परम्
रक्षाबन्धनमेवोक्तं शयनारोपणन्तथा ६
अङ्कुरं वास्तुयजनं मण्टपाराधनं परम्
वेदिकामद्ध्यमे चैव दशकुम्भन्यसेत्ततः ७
सप्तविंशत् घटान्यस्य पूर्ववद्वेदिकां यजेत्
प्रणवं पूर्वमुच्चार्य नमश्शिवाय तथैव च ८
कङ्काळाय नम इत्येते मूलेनावाहयेत्ततः
पञ्चावरणमार्गेण पूजयित्वा यथाविधि ९
पूर्वोक्तविधिना चैव होमं कृत्वा विशेषतः
सुमुहूर्ते सुलग्ने च घटस्नानं समाचरेत् १०
हविर्दत्वा निवेद्याथ ब्राह्मणान्भोजयेत्ततः
आचार्यं पूजयेत्तत्र दक्षिणान्दापयेत्ततः ११
एवङ्कारयते विद्वान्सर्वकर्मजयी भवेत् १२
इति कङ्काळस्थापनपटल अष्टसप्ततितमः

किरातस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि किरातरूपधारिणम्
पिञ्छेनैव शिखां बध्वा चर्मवस्त्रेण वेष्टितम् १
ज्वालाकुण्डोदरञ्चैव पार्श्वयोरुभयोः स्थितम्
कृष्णवर्णसमायुक्तं सर्वावयवसुन्दरम् २

शार्ङ्गं वामकराब्जे च बाणं सव्यकराब्जके
तदग्रे चार्जुनं रूपं अथोमुखनिपातितम्  ३
देवास्त्रं वामपार्श्वे तु उमादेवी स्थितां पराम्
सव्ये कमण्डलुधरं दक्षिणे तु नमस्कृतम्  ४
किरातरूपमाख्यातं स्थपतिस्थापके द्वयोः
योग्यायोग्यप्रमाणेन सौन्दर्ये देवकारणम्  ५
षोदशस्तंभसंयुक्तं दर्भमाल्यैरलङ्कृतम्
तोरणान्मङ्गळान्शस्त्रान्परिवारघटान्न्यसेत्  ६
वेदिकां पूर्ववत्कृत्वा दशकुम्भञ्च मद्ध्यमे
मृत्संग्रहणमेवोक्तं अङ्कुरार्पणमेव च  ७
नयनोन्मीलनं कृत्वा रत्नन्यासमतः परम्
जलाधिवासनं पूर्वं शयनारोपणं परम्  ८
वेदिकामद्ध्यमे चैव क्षित्यादिकुटिलान्तकम्
अर्चयेन्न्यासकर्मापि नेत्रमुद्रां प्रदर्शयेत्  ९
प्रणवं पूर्वमुच्चार्य नीलकण्ठमतः परम्
अस्किराताय इत्येते नमोन्तं पूजयेत्ततः  १०
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
वह्निकर्मसमाराद्ध्य उक्तमन्त्रेण होमयेत्  ११
त्रिखण्डं होमयेच्चैव प्रायश्चित्ताहुतिं हुनेत्
अग्निं संयोजयेत्कुम्भे सुमुहूर्ते सुलग्नके  १२
कुम्भात् बीजं समादाय मूर्तौ संयोजयेत्ततः
हविर्दत्वा निवेद्याथ स्नपनं कारयेत्ततः  १३
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यस्सराजाविजयी भवेत्  १४
इति किरातस्थापनपटल एकोनाशीतितमः

जलन्धरवधस्थापनपटलप्रारंभः

अथ वक्ष्ये विशेषेण जलन्धरवधं श्रुणु
द्व्यक्षञ्च द्विभुजं रक्तं शिखायज्ञोपवीतिनम्  १

चन्द्राभं छत्रधृक्वामे दण्डं वै सव्यहस्तके
दुकूलवसनोपेतं भस्मरुद्राक्षधारणम्  २
अभिमुखी करणं यक्षः कराळवदनान्वितः
शार्ङ्गं बाणधरं घोरं देवस्य पुरतस्स्थितः  ३
देवेन चक्रं संलिख्य पश्चात् यक्षो महाभुजः
चक्रमुद्धृत्य बलिना छित्वा मूर्धानमुज्वलम्  ४
एवं सङ्कल्प्य विधिना प्रतिष्ठां कारयेत्ततः
षोडशस्तंभसंयुक्तं चतुस्तोरणभूषितम्  ५
नवकुण्डं प्रकल्प्याथ वेदिकां मद्ध्यमे चरेत्
दशकुंभं न्यसेच्चैव परिवारघटान्न्यसेत्  ६
नयनोन्मीलनं कृत्वा बिंबशुद्धिमतः परम्
रक्षाबन्धनमेवोक्तं शयनारोपणञ्चरेत्  ७
अङ्कुरं वास्तुयजनं जलाधिवासनञ्चरेत्
प्रणवं पूर्वमुच्चार्य सां सीं सूं सौं ततः परम्  ८
जलन्धरहरायेति आवाह्य पूजयेत्ततः
पञ्चावरणमार्गेण पूजयित्वा तु साधकः  ९
वह्निकार्यं समाराद्ध्य होमं कृत्वा तु देशिकः
सायंप्रातर्हुनेच्चैव प्रायश्चित्ताहुतिं हुनेत्  १०
अग्निस्थन्तु घटे योज्य मूर्तौ संयोजयेद्धटम्
हविर्दत्वा निवेद्याथ ब्राह्मणान्भोजयेत्ततः  ११
आचार्यं पूजयेत्पश्चात्सराजाविजयी भवेत्  १२
इति जलन्धरवधस्थापनपटल अशीतितमः

चक्रदानस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वभूतहिताय च
चक्रदानस्वरूपन्तु श्रुणुष्व शरवणोद्भव  १
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम्
वामपादन्तु शयनं लंबितं सव्यपादकम्  २
टङ्कं रथाङ्गं सव्ये च वरदं कृष्णमृगन्तथा

वामे विष्णुसमायुक्तं कृताञ्जलिपुटान्वितम् ३
वामे गौरी समायुक्तं उत्तरे परमेष्ठिनम्
सर्वावयवसंयुक्तं सर्वलक्षणसंयुतम् ४
पद्मपुष्पं समभ्यर्च्य हरिणा नेत्रपूजितम्
प्रभामण्डलमद्ध्यस्थं शिरश्चक्रसमायुतम् ५
एवं कल्प्यविशेषेण प्रतिष्ठां श्रुणु षण्मुख
पूर्ववद्यागशालाञ्च वेदिकां पूर्ववच्चरेत् ६
अङ्कुरं पूर्वमेवोक्तं वास्तुपूजान्ततः परम्
नयनोन्मीलनं कृत्वा चरेत् ग्रामप्रदक्षिणम् ७
शयनारोपणं विद्यात् मण्टपाराधनं पुरा
वेदिका मद्ध्यमे चैव दशकुंभं प्रकीर्तितम् ८
आसनं मूर्तिमभ्यर्च्य अञ्जलीकरसंयुतम्
प्रणवं पूर्वमुच्चार्य वरहरमृं इति क्रमात् ९
शिवाय नम इत्येते आवाह्य पूजयेत्ततः
पञ्चावरणमार्गेण पूजयित्वा यथाविधि १०
पूर्वोक्तविधिमार्गेण वह्निकार्यं समाचरेत्
अन्तर्बहिर्बलिञ्चैव सायंप्रातर्हुनेत्ततः ११
प्रायश्चित्ताहुतिञ्चैव पूर्णाहुतिं समाचरेत्
घटे संयोजयेत्पश्चात्सुमुहूर्ते सुलग्नके १२
अभिषेकञ्चरेच्चैव हविर्दत्वा निवेदयेत् १३
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यस्सपुण्याङ्गतिमाप्नुयात् १४

इति चक्रदानस्थापनपटल एकाशीतितमः

विघ्नेशानुग्रहस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि विघ्नेशानुग्रहपरम्
सर्वभूतहितं पुण्यं सर्वाभीष्टप्रदायकम् १
सर्वविघ्नविनाशार्थं कारयेद्देशिकोत्तमः
त्रिणेत्रं चतुर्भुजं शान्तं कुण्डलाभरणोज्ज्वलम् २

बकपुष्पसुकेशञ्च स्तंबकं चूळिकाकृतिम्
बकपत्रसमायुक्तं बकपुष्पसमन्वितम् ३
आरग्वधस्रजञ्चैव स्तबकेन परिप्लुतम्
अङ्कुशं त्वक्षमालाञ्च भसितं वरदन्तथा ४
वामे गौरी समायुक्तं सव्यभागे गजाननम्
गजाननस्य फाले तु भसितं धार्य पाणिना ५
दिव्य छत्रसमायुक्तं सर्वावयवसुन्दरम्
एवं सङ्कल्प्य विधिवत् प्रतिष्ठां कारयेत्ततः ६
षोडशस्तंभसंयुक्तं चतुर्द्वारसमायुतम्
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम् ७
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा
नयनोन्मीलनं पश्चात् ८
जलाधिवासनञ्चैव बिंबशुद्धिमतः परम्
शयनारोपणं कृत्वा वेदिका मद्ध्यमे चरेत् ९
दशकुम्भन्न्यसेच्चैव आसनं मूर्तिमर्चयेत्
प्रणवं पूर्वमुच्चार्य सान्तं यान्तमुदाहृतम् १०
क्षेत्राहुत्य क्षरञ्चैव शिवय नम इत्यपि
आवाह्य पूजयेच्चैव गन्धपुष्पादि नार्चयेत् ११
पञ्चावरणमार्गेण पूजयित्वा यथाविधि
अग्निकार्योक्तमार्गेण पूर्वोक्तविधिनाहुनेत् १२
प्रायश्चित्ताहुतिं कृत्वा ------------
घटे संयोजयेत्पश्चात्सुमुहूर्ते सुलग्नके १३
अभिषेकन्ततः कृत्वा ब्राह्मणान्भोजयेत्ततः
आचार्यं पूजयेत्पश्चात्सपुण्याङ्गतिमाप्नुयात् १४
इति विघ्नेशानुग्रहस्थापनपटलद्व्यशीतितमः

ज्येष्ठास्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि ज्येष्ठास्थापनमुत्तमम्
चतुर्भुजं द्विनेत्रञ्च बृहद्वक्त्रसमायुतम् १

बृहत्कुक्षिसमोपेतं द्विपादं कुंचितं भवेत्
महापीठोपरिस्थञ्च वज्राभं मकुटान्वितम् २
जलोश्छिष्टलतामाला पर्यंगस्सव्यरैगके
द्विभुजा च द्विनेत्रा च वराहाननमात्मजम् ३
वामे च तनयं भागे द्विभुजं लंबबाहु च
वह्निञ्च पानपात्रञ्च धारयेत्तु विशेषतः ४
पार्श्वयोर्लंबहस्ताभ्यां कुरूपीं भावयाम्यहम्
एवं कृत्वा विशेषेण प्रतिष्ठां कारयेत्ततः ५
पूर्वोक्तयागं सङ्कल्प्य वेदिका मद्ध्यमे चरेत्
पञ्चकुण्डं प्रकल्प्याथ एककुण्डमथापि वा ६
वेदिका मद्ध्यमे चैव दशकुम्भं न्यसेत्ततः
मृत्सङ्गृह्याङ्कुरञ्चैव वास्तुपूजां समारभेत् ७
मण्टपाराधनं कृत्वा शयनारोपणं परम्
कुम्भे संपूजयेत्पश्चात् आसनं मूर्तिमर्चयेत् ८
विद्यादेहं प्रकल्प्याथ अञ्जलीकरसंयुतम्
प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम् ९
सर्वदुर्भिक्षनाशाय सर्वपीडानि वारणम्
आवाह्य पूजयेत्पश्चात्प्रथमावरणं यजेत् १०
द्वितीय्यावरणे चैव लोकपालान्समर्चयेत्
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत् ११
पूर्वादिषु चतुर्दिक्षु हृदयादीन्हुनेत्क्रमात्
प्रायश्चित्तं हुनेच्चैव घटे संयोजयेत्ततः १२
नयनोन्मीलनं पूर्वं जलाधिवासनन्तथा
शयनारोपणं पश्चात् न्यासकर्म्म ततः परम् १३
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत्
हविर्दत्वा निवेद्याथ ब्राह्मणान्भोजयेत्ततः १४
आचार्यं पूजयेत्पश्चात्सर्वदुःखविनाशनम्
एवं यः कुरुते मर्त्यः दुर्भिक्षन्नकदाचन १५

इति ज्येष्ठास्थापनपटलत्र्यशीतितमः

देवीप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वलोकहिताय च
सर्वज्ञानप्रदञ्चैव शक्तित्रयमिहोच्यते १
योगपीठसमायुक्तं भोगवामसमन्वितम्
वीरं स्वतन्त्रमित्युक्तं शक्तित्रयमिहोच्यते २
मूललिङ्गसमीपे तु वामभागेर्द्धमण्टपे
आसनं स्थानकं प्रोक्तं द्विविधं भोगशक्तिका ३
द्व्यक्षञ्च द्विभुजं शान्तं सरत्नमकुटोज्वलम्
वामे भुजं निवेश्याथ आसनोपरिविन्यसेत् ४
लंबितं वामपादन्तु सव्याघ्रिं कुंचितं पदम्
सव्ये कटकहस्तं स्यात् अशीवेत्फलधारिणम् ५
सर्वावयवसंपूर्णं सर्वलक्षणसंयुतम्
++++++ उमालक्षणमुच्यते ६
गौर्याश्च लक्षणं वक्ष्ये द्विभुजा च द्विनेत्रिका
किरीटमकुटोपेता स्तनौ पीनासुयौवना ७
कटकं सव्यहस्ते च लंबहस्तन्तु वामके
किंचिद्वामांघ्रिदायस्थ पद्मपीठोपरिस्थितम् ८
सर्वावयवसंपूर्णं गौरीलक्षणमुच्यते
द्विरूपां मूलबेरस्य भोगशक्तिमिहोच्यते ९
चतुर्भुजां त्रिणेत्राञ्च सरत्नमकुटान्विताम्
पद्माक्षमालयायुक्तं अभयं वरदन्तथा १०
शिरश्चक्रसमायुक्तं चित्रवस्त्रैस्समन्वितम्
पुच्छत्रयं पार्श्वयोश्च कटिदेशे द्विपार्श्वयोः ११
चूळिकाकारमाबद्ध्य त्रिपत्राकृतिमद्ध्यमे
कर्णपत्रसमायुक्तं कर्णपुष्पसमन्वितम् १२
तालुमूलश्छदं दीर्घं अंसाग्रे लंबितन्तथा
शिरश्चक्रसमायुक्तं भद्रपीठोपरिस्थितम् १३
मूलबेरमिति प्रोक्तं यद्वा वक्ष्ये षडानन
भोगशक्तिः पुरा प्रोक्ता वीरशक्तिरिहोच्यते १४

यद्वा पद्माक्षमालाञ्च ऊरूहस्ताभयन्तथा
समाङ्गं समपादञ्च पूर्ववत् भूषणाकृतिम् १५
एते शक्तिचतुर्भेदा मूलबेरस्य शक्तयः
महेश्वरादिबेराणां भोगशक्तिमिहोच्यते १६
आसनं स्थानकं यानं यथा नृत्तं विशिष्यते
तदेवभोगशक्तिञ्च चतुष्षष्ट्या च सङ्ख्यया १७
देवानाञ्चैव पूजार्त्थं भोगशक्तिं समाचरेत्
नृणां पाशत्रयं हन्तुं यद्वा वक्ष्ये षडानन १८
सर्वेषां कर्मनाशार्त्थं लोकानुग्रहहेतवे
वीरशक्तिसमायामं अङ्गुलं ग्राह्य बुद्धिमान् १९
कर्णान्तं नासिकान्तं वा गण्डान्तं स्तनमद्ध्यमे
कट्यन्तं वा प्रकल्प्याथ अङ्गुलं ग्राह्य साधकः २०
स्थपतिः स्थापकश्चैव युक्तायुक्तन्तु निर्णयम्
कृष्णकर्दममादाय पिण्डं कल्प्य यथाविधि २१
मानोपमानमुन्मानं लंबमानमथापि वा
मानहीने महाव्याधिरधिके शत्रुवर्द्धनम् २२
द्विभुजा च द्विनेत्रा च उत्तुङ्गमकुटाज्वलाम्
श्यामवर्णसमायुक्तं गण्डार्त्थं काळकादितम् २३
श्री चाव्याळकार्द्धञ्च स्तनौ पीनौ सुयौवना
समपादस्थितं पीठे कुंचितं वामजानुना २४
दुकूलवसनोपेतं नाभ्यधः कटिदेशके
वस्त्रेण वर्त्तुळाकारं नीवीन्तु परिशोभितम् २५
लंबितं वामहस्ते तु कटकं सव्यहस्तके
कल्हारपुष्पहस्तं वा अथवा केवलन्तु वा २६
शिरश्चक्रसमायुक्तं गण्डमूलान्तकेशिनी
चतुरश्रं स्तनौ चोभौ मद्ध्यमा चकृशाङ्गिनी २७
सप्तांशमुदरं पूर्तिं करनाहं चतुस्तथा
प्रभामण्डलमद्ध्यस्थं महापीठोपरिस्थितम् २८
पार्श्वयोस्सखिभिः प्रोक्तं चामरं पद्मकन्तथा

जान्वन्तमुन्नतं प्रोक्तं वीरशक्तिं प्रकल्पयेत्  २९
तटाकमद्ध्ये संस्थाप्य चतुष्पादसमन्वितम्
तमालशाखा वेणुश्च चंपकैः पनसैरपि  ३०
ऊर्ध्वच्छदनमाबद्ध्य तिर्यक्मद्ध्ये तुलान् चरेत्
तृणेनापूर्यतन्मद्ध्ये कदळीनाळिकेरकैः  ३१
अलङ्कृत्य च तन्मद्ध्ये पर्यङ्कं स्थापयेत्ततः
प्राक्शिरश्चोर्ध्ववक्त्रश्च जलमद्ध्ये च स्थापयेत्  ३२
परितो वेदघोषाश्च पूर्वे वा उत्तरेऽपि वा
धान्यराशिं प्रकल्प्याथ पद्ममष्टदळं लिखेत्  ३३
नवकुण्डन्यसेन्मद्ध्ये देवमावाहयेत्ततः
लोकपालान्समभ्यर्च्य नैवेद्यं धूपदीपकम्  ३४
पञ्चरात्रं त्रिरात्रं वा न शिवं पादमेव वा
उत्थाप्यादाय मञ्चे वा शिबिके वावरोहणम्  ३५
ग्रामप्रदक्षिणं कृत्वा यागद्वारसमीपके
तत् भूमौ पटमास्तीर्य साष्टाङ्गं दण्डवत् भुवि  ३६
पाद्यमाचमनार्घ्यञ्च प्रददेद्देवसन्निधौ
यागद्वारे समानीय्य बिंबशुद्धिमतः परम्  ३७
क्षीरन्दधिघृतञ्चैव गोमूत्रं गोमयन्तथा
शुद्धोदकेन संपूर्य पूर्ववत्कल्पयेत्ततः  ३८
दर्भमूले भदन्ताग्रे वल्मीके कर्कटावटे
समुद्रे च नदी तीरे पर्वते वृषभस्थले  ३९
कुक्कुटाण्डप्रमाणेन शुद्धपात्रे ददेत्ततः
औदुंबरवटाश्वत्थं आम्रजंबू च पल्लवम्  ४०
तद्वत् ग्राह्यं शुद्धपात्रे अघोरास्त्रेण क्षालयेत्
देवीसूक्तेन मन्त्रेण बिंबशुद्धिं प्रकल्पयेत्  ४१
मृत्सङ्ग्रहणमेवोक्तं अङ्कुरं कारयेत्ततः
वास्तुपूजान्ततः कृत्वा नयनोन्मीलनं परम्  ४२
जलाधिवासनं पश्चात् बिंबशुद्धिमतः परम्
पूर्वे वा उत्तरे वापि कारयेत् शयनमण्टपम्  ४३

मद्ध्ये वेदिं प्रकल्प्याथ धान्यराशिं प्रकल्पयेत्
तद्वत्स्थानं प्रकल्प्याथ तस्योर्ध्वे मञ्चमुच्यते ४४
चतुष्पादसमायुक्तं चतुर्गात्रसमन्वितम्
अरन्ध्रं फलकैः कल्प्य श्वेतं कार्पासवस्त्रकैः ४५
वस्त्रद्वयन्तु संयोज्य सुतूलं कर्णिकारकम्
तन्मद्ध्ये बन्धयेत्पश्चात्तद्दीर्घं विस्तरं भवेत् ४६
चित्रवस्त्रं समादाय द्विवस्त्रं पूर्ववद्धरेत्
करमेकसमं दीर्घं तस्यार्द्धं विस्तरं भवेत् ४७
कर्णिकारस्य तूलं यः आबद्ध्य परिमाणयेत्
शिरोदेशे पाददेशे निक्षिपेत् धारिकाकृतिम् ४८
व्याघ्रचर्म्मं कृष्णचर्मं तन्मद्ध्ये विदितं भवेत्
तस्योर्ध्वे कृष्णमित्युक्तं तस्योर्ध्वे पिञ्छसंयुतम् ४९
तस्योर्ध्वे शक्तिमारोप्य प्राक्शिरश्चोर्ध्वपत्रकम्
पाददेशे शुद्धपात्रे गन्धतैलान्यसेत्ततः ५०
शिरोदेशे विशेषेण धान्यन्तु करमानतः
पद्ममष्टदळं लिख्य घटमेकं न्यसेत्ततः ५१
देवीमावाहयेच्चैव मण्टपाराधनं पुरा
वेदिकामद्ध्यमे चैव दशकुंभन्न्यसेत्ततः ५२
सप्तधान्योपरिस्थाप्य घटालङ्कृतसंयुतम्
आत्मशुद्धिस्तु पूर्वं स्यात्स्नानशुद्धिर्द्वितीयकम् ५३
तृतीय्यं द्रव्यशुद्धिस्स्यात् चतुर्थं मन्त्रशोधनम्
पञ्चमं शिवहस्तं स्यात् षष्ठमं वेदिकार्चनम् ५४
सप्तावरणपूजाञ्च अष्टमं होमकर्मणि
त्रिखण्डं होमयेच्चैव नवमं परिकीर्तितम् ५५
पूर्णाहुतिन्तु दशमं घटस्नानमतः परम्
क्षित्यादिकुटिलप्रान्तं अर्चयेदासनन्तथा ५६
मूर्तिमभ्यर्च्य विद्याङ्गं नेत्रमुद्रां प्रदर्शयेत्
प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम् ५७
चतुर्दशसमस्वरमनोन्मन्यै ततः परम्

स्वाहान्तमुच्चरेन्मन्त्रं अञ्जलीकृत्यबुद्धिमान्  ५८
अकारश्च उकारश्च मकारो बिन्दुरेव च
अर्द्धचन्द्रो निरोधी च नादो नादान्त एव च  ५९
शक्तिश्च व्यापिनी चैव समनाचोन्मना तथा
अञ्जलीकरसंयुक्तं चरेदावाह्य मुद्रया  ६०
मूलाधारात्समुद्धृत्य प्रणवं पूर्वमुच्चरन्
सान्ताश्चोच्चारयेत्पश्चात् हृद्गण्डादिषु चाव्ययम्  ६१
अकार उकार मकार भाष्योच्चारणमार्गतः
बाष्योच्चारं कथं शंभो वक्ष्येऽहं श्रुणु षण्मुख  ६२
घण्टा चलितमार्गेण प्रथमं प्रथमस्वरम्
द्वितीय्यं द्वितीय्यस्वरञ्च तृतीयं तृतीय्यस्वरम्  ६३
नादमाकृष्य मार्गेण उपर्युपरिभावितम्
लयान्तमुच्चरन्पश्चात् ज्ञेयोनित्यगुणोदयम्  ६४
अनिन्दितमनूपम्यं अप्रमेयमनामयम्
शिवाख्यं परमानन्दं भावशून्यन्तु निर्गुणम्  ६५
निर्गुणं भवतोक्तञ्च कथं ज्ञेयश्च साधकम्
घण्टानादमिति ज्ञेयः एवं ज्ञात्वा च साधकः  ६६
फलस्यान्तर्गतं नृणां रसं कोपर्णमीदृशम्
तदेवनादवत् घण्टां तदेवह्येषसाधकः  ६७
बहुकालगतो द्ध्येयः मनस्वमनसा ज्ञापयेत्
अन्येषामिद +++++ मित्थं यः  ६८
+++++++ दुर्ल्लभं साधकोत्तमः
ज्ञाननादमयं ज्ञात्वा लयान्तं चोच्चरेत्परम्  ६९
शिवाय नम इत्येते आकृष्याञ्जलिहस्तकम्
बिन्दौ शिकारं निर्वृत्य नासायान्तु वकारकम्  ७०
गण्डदेशे यकारस्तु हृद्देशे तु नकारकम्
मूलाधारे मकारस्तु प्राणप्रवहचात्मना  ७१
अञ्जलिं पूर्वमुत्थाय प्रणवं पूर्वमुच्चरन्
सान्तमुच्चारयेत्पश्चात् मायाबीजमतः परम्  ७२

चतुर्दशस्वरं पश्चात् मनोन्मन्यै नमोन्तकम्
उच्चार्य प्राणमार्गेण बिन्दुपर्यन्तमुच्चरन् ७३
भ्रूमद्ध्ये खण्डिकाद्वारं द्वारेणाकृष्य बुद्धिमान्
हृदयेन समावाह्य स्तनौ देशे च विन्यसेत् ७४
आवाह्य स्थापनञ्चैव सन्निधानं निरोधनम्
अवकुण्ठनमेवोक्तं धेनुमुद्राप्रदर्शयेत् ७५
स्वागतं इति संज्ञाप्य अर्घ्यन्दत्वा तु साधकः
स्थिरो भावमिति प्रात्थ्र्य पीठशक्तिमनन्तरम् ७६
स्नपनान्तानि संभाव्य पुष्पाञ्जलित्रयं तथा
प्रथमावरणं पूज्य हृदयादि षडङ्गकम् ७७
द्वितीय्यावरणे पूज्य वामाज्येष्ठा च रौद्रिकाः
काळीकलविकरणी च बलविकरणी तथा ७८
बलप्रमथनी चैव सर्वभूतदमनी तथा
द्वितीय्यावरणे पूज्य तृतीय्यावरणं श्रुणु ७९
ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा
वाराही चैव इन्द्राणी चामुण्डावीरभद्रिका ८०
तृतीयावरणं पूज्य चतुर्थावरणं श्रुणु
इन्द्राग्नियमनैर्ऋत्य पाशीवायुश्च यक्षराट् ८१
ईशानब्रह्मविष्णुश्च पूजयेत्तु विशेषतः
चतुर्थावरणं पूज्य पञ्चमावरणं श्रुणु ८२
खट्वाङ्गञ्च कपालञ्च घण्टानाराचमेव च
डमरुं ध्वजवेताळं क्षुरिकापाशखड्गकम् ८३
पञ्चमावरणं पूज्य कुमुदादिध्वजे यजेत्
परितो वेदिकामूले हेतुकादीन्यजेत्ततः ८४
दर्पणं करकञ्चैव केसरीयुग्मचामरम्
श्रीवत्सं स्वस्तिकं शङ्खं दीपो देव्याष्टमङ्गलम् ८५
रंभा च ऊर्वशी चैव सुकेशी च तिलोत्तमा
मेनकामञ्जुवेषा च कामुकी कामवर्द्धनी ८६
एता अप्सरसः प्रोक्ताः अष्टमङ्गळधारिणः

इन्द्रादिषु चाष्टदिक्षु योनिकुण्डं प्रकल्पयेत् ८७
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रधानकम्
मेखलात्रयमेवोक्तं कुण्डनाभिपुरस्सरम् ८८
मद्ध्ये पद्मं प्रकल्प्याथ विस्तारं तत्समं भवेत्
खातं कृत्वा विशेषेण पञ्चवर्णैरलङ्कृतम् ८९
कुण्डसंस्कारपूर्वञ्च अग्निसंस्कारमेव च
स्रुक्स्रुवयोश्च संस्कारं आज्यसंस्कारमेव वा ९०
वाग्मीवागीश्वरं पूज्य तेन बीजं प्रजायते
गर्भाधानादिकं हुत्वा वक्त्रे त्रिकरणं हुनेत् ९१
पित्रोर्विसृज्यते पश्चात् शिवाग्निं हृदिदेशके
देवीमभ्यर्च्य विधिवत् गव्याज्येन हुनेत्ततः ९२
अश्वत्थञ्चैव पालाशं वटार्कशमिखादिरम्
ऊरुंबरमपामार्गा बिल्वञ्चन्दनमेव च ९३
इक्षुखण्डं गुळञ्चैव क्षीरं दधिमधुत्वथ
कदळीपनसं चूतं बालकन्दं सुवल्लि च ९४
महावल्ली रुद्रवल्ली अपूपान्विविधानि च
तांबूलं पायसं हुत्वा यथेष्टं होमयेत्ततः ९५
शान्तिकुम्भं प्रकल्प्याथ यजेत्कुण्डस्य पश्चिमे
सायं प्रातर्हुनेच्चैव अन्तर्बलिबहिर्बलिम् ९६
नवरात्रं सप्तरात्रं पञ्चरात्रमथापि वा
तत्वतत्वेश्वरान्यस्य मूर्तिमूर्तीश्वरान्हुनेत् ९७
त्रिखण्डं होमयेत्पश्चात्प्रायश्चित्ताहुतिं हुनेत्
सकळान्यासमभ्यर्च्य विद्या देहं प्रकल्पयेत् ९८
नेत्रमुद्रां प्रदृश्याथ सुमुहूर्ते सुलग्नके
अग्निस्थन्तु घटे योज्य घटमादय देशिकः ९९
मूर्ध्निसन्नह्य दृढतश्छत्रचामरपिञ्छकैः
गीतनृत्तैस्सहोपेतं स्तनदेशेषु योजयेत् १००
हविर्दत्वा निवेद्याथ स्नपनं कारयेत्ततः
फट् द्वयं समादाय भस्म चापूरयेद्गुरुः १०१

तन्तुनावेष्टयेच्चैव पूगपर्णैरलङ्कृतम्
सकूर्चन्नाळिकेरञ्च रक्तवस्त्रेण वेष्टयेत् १०२
लंबकूर्चं प्रकल्प्याथ गन्धपुष्पैरलङ्कृतम्
मूललिङ्गसमीपे तु पटमादाय देशिकः १०३
घटं संस्नाप्य संप्रार्त्थ्य लोकानुग्रहहेतवे
उत्सवेशीं वरां कन्न्यां सर्वाभरणभूषिताम् १०४
त्वत्पाणिग्रहणार्त्थन्तु लब्ध्वानुज्ञांशिवे नहि
शिवं संपूजयेत्कुम्भे देवीं संपूजयेद्घटे १०५
स्वगृह्योक्तविधानेन जातकर्म तथैव च
नामान्तं प्राशनान्तञ्च देव्याश्च परिभाव्य च १०६
कल्याणकर्मपूर्वं च कारयेत्साधकोत्तमः
यजमानगृहे वापि फेळकां परिकल्पयेत् १०७
रजनीमञ्जनं क्षौमं मङ्गळ्यं केशशोधनी
कबरीकेशसंभूष्य अमनं यक्षराट्फलम् १०८
आकृष्य सन्निधौ स्थाप्य वस्त्रेण परिवेष्टयेत्
अनादिगोत्रसंभूतां उमां कन्न्यान्ददाम्यहम् १०९
इति भाव्य कराब्जञ्च दत्तं वै विष्णुपाणिना
माङ्गळ्यं धारयेत्कुम्भं कण्ठे बध्नीयदेशिकः ११०
पाणिग्रहणमाकृष्य अश्मनोत्तरदेशके
गौरी पादाम्बुजं गृह्य अश्मोपरि च विन्यसेत् १११
एवं प्रदक्षिणं त्रीणि दंपतिभ्यां भवेत् गुरुः
लाजहोमं प्रकुर्वीत त्रिवारं देविपाणिना ११२
गौरी पाणिं समादाय शिवेन परिभावयेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः ११३
अग्निमुत्थाप्य संयोज्य घटमादाय देशिकः
गौरी समीपं गत्वा तु माङ्गळ्यं ग्राहयेत्ततः ११४
देवीं घटे सुबध्नीयात् शक्तिकुम्भं सुयोजयेत्
शिवकुम्भे शिवं योज्य ब्राह्मणान्भोजयेत्ततः ११५
दक्षिणान्दापयेत्पश्चात् आचार्यं पूजयेत्ततः ११६

इति देवीप्रतिष्ठापटलश्चतुरशीतितमः

अस्त्रराजप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वलोकहिताय च
अस्त्रराजप्रतिष्ठान्तु वक्ष्येऽहं श्रुणु षरामुख १
पूजांशं त्रिगुणी कृत्य उच्चनीचं यथा गुरुः
वित्तानुसारणेनैव अस्त्रराजं प्रकल्पयेत् २
पद्मपीठन्तु वेदांशं दराडं वै षोडशाङ्गुलम्
कलशं चतुरंशं स्यात् एकांशं कुराडमुच्यते ३
द्व्यांशं कलशं भवेत्
एकांशं कुराडमित्युक्तं त्र्यंशन्तु फलकाकृतिम् ४
एकांशं फलकाकारं अष्टांशं पत्रमुच्यते
वज्राकृतिं मद्ध्यपत्रं त्रिकोणन्तु च मद्ध्यमम् ५
एककोणं तदग्रे तु अग्रे पद्मदळाग्रवत्
वक्त्राकृतिं पार्श्वयोश्च त्रिशिखासममुन्नतम् ६
अन्तः प्रदेशे सुक्षीरं मद्ध्ये दराडं सुबन्धयेत्
स्वर्णेन रजतेनैव ताम्रेणैव प्रकल्पयेत् ७
प्रतिष्ठां कारयेत्पश्चात्पूर्ववद्यागमराटपम्
नवकुराडं प्रकल्प्याथ पञ्चकुराडमथापि वा ८
मद्ध्ये वेदिं प्रकल्प्याथ दशकुम्भान्न्यसेत्ततः
सप्तविंशत्घटान्यस्य तोरणान्मङ्गळांस्तथा ९
पताकान्दिक्ध्वजांश्चैव पूर्ववत्परिकल्पयेत्
अष्टादशं पत्रमद्ध्यं पत्रमूले ततश्शृणु १०
आसक्तं मद्ध्यपत्रे तु त्र्यंशोन्नतन्तुमद्ध्यमे
त्रिणेत्रं चतुर्भुजं भीमं जटामकुटमरािडतम् ११
समपादस्थितं सर्वं वामे वा किंचिदुच्छ्रितम्
जङ्घे जङ्घञ्च संयोज्य पादाग्रं भूमिसंस्पृशन् १२
वामोरुन्यस्तहस्तञ्च सर्वं गोपतिमस्तके
वृषान्तिकमिति प्रोक्तं देवं किंचिन्निरीक्षणम् १३

वामभागे महागौरीं कटकं लंबहस्तके
समपादस्थितां गौरीं किरीटमकुटोज्वलाम् १४
नयनोन्मीलनं कृत्वा जलाधिवासनं परम्
बिंबशुद्धिं ततः कृत्वा शयनारोपणन्ततः १५
वेदिकामद्ध्यमे चैव दशकुम्भन्न्यसेत्ततः
आसनं मूर्तिमभ्यर्च्य नेत्रमुद्रां प्रदर्शयेत् १६
प्रणवं पूर्वमुच्चार्य सान्तमुच्चार्य तत्परम्
हौमित्युच्चार्य तत्पश्चात् शिवास्त्रमुच्चरेत्ततः १७
चतुर्त्थ्यन्तं समुच्चार्य नमोन्तमुच्चरेत्ततः
आवाह्य पूजयेत्पश्चात् प्रथमावरणं न्यसेत् १८
द्वितीय्यावरणे चैव वज्रशक्तिञ्च दण्डकम्
खड्गं पाशं ध्वजञ्चैव गदापद्मं यजेत्ततः १९
नैर्ऋते चक्रमभ्यर्च्य द्वितीय्यावरणं यजेत्
नन्दिनञ्च महाकाळं भृङ्गिणञ्च विनायकम् २०
वृषभस्कन्दशक्किन्न चण्डं पूज्य विशेषतः
चतुर्त्थावरणे चैव इन्द्रादीन्पूजयेत्ततः २१
नैवेद्यं धूपदीपञ्च कुण्डसंस्कारपूर्ववत्
पूर्वादिषु चतुर्दिक्षु पुरुषादीन्यजेत्ततः २२
आग्नेय्यादिविदिक्षू च हृदयादीन्न्यसेत्ततः
मूलेनैव हुनेद्वृत्ते समित् द्रव्यविशेषकैः २३
त्रिखण्डं होमयेत्पश्चात्प्रायश्चित्ताहुतिं हुनेत्
अग्निस्थन्तु घटे योज्य सुमुहूर्ते सुलग्नके २४
अभिषिच्य च नैवेद्यं धूपदीपन्ददेत्ततः
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः २५
एवं यः कुरुते मर्त्यस्सराजा विजयी भवेत् २६
इति अस्त्रराजप्रतिष्ठापटलपञ्चाशीतितमः

द्वारपालप्रतिष्ठापटलप्रारंभः
अथातस्संप्रवक्ष्यमि द्वारपालार्चनं परम्

पूजानि विघ्नार्त्थं यत्प्रतिकर्म च उत्तमम्  १
गर्भग्रहस्य द्वारे च भिरिडमुराड्याख्यमीरितम्
द्विभुजा च त्रिणेत्रा च जटामकुटशोभितम्  २
खट्गखेटधरं भीमं नागयज्ञोपवीतिनम्
कराळवदनं भीमं पद्मपीठोपरिस्थितम्  ३
अर्द्धमराटपमद्ध्ये तु महाकाळञ्च नन्दिनम्
त्र्यक्षञ्च द्विभुजं भीमं भ्रुकुटीमुखभीषराम्  ४
दक्षिणे दराडहस्तञ्च दराडाग्रे मणिबन्धकम्
स्वस्तिकं वामपादञ्च दराडमद्ध्येऽपि कुरिडके  ५
वामपादतलन्न्यस्य वामपादोर्ध्वदेशके
सिह्मपुच्छाकृतिं हस्तं घराटामालाविभूषितम्  ६
कराळवदनं घोरं दक्षिणे च ततश्शृणु
द्विपादं रक्तवर्णञ्च कराळवदनान्वितम्  ७
जटामकुटसंयुक्तं नागयज्ञोपवीतिनम्
मणिमालाविभूष्यञ्च वामे दराडधरन्तथा  ८
सव्यञ्च स्वस्तिकं पादं दराडमद्ध्ये पदन्न्यसेत्
सव्यहस्तं प्रसार्याथ दराडाग्रे तु तलं न्यसेत्  ९
सिह्मपुच्छाकृतिं वामं ऊर्ध्वहस्तन्तु पूर्ववत्
महामराटपपार्श्वे तु नन्दिकुराडोदरौ तथा  १०
चतुर्भुजं त्रिणेत्रञ्च जटामकुटमरिडतम्
दंष्ट्राकराळवदनं भ्रुकुटीमुखभीषराम्  ११
कर्णपत्रसमायुक्तं घराटामालाविभूषितम्
शिरोमालाविभूष्यञ्च अष्टनागैरलङ्कृतम्  १२
दक्षिणे सूचिहस्तं स्यात् अन्यं ताडितहस्तकम्
वामे चोर्ध्वे पताकञ्च अन्यन्दराडधरं तथा  १३
मणिबन्धे तु दराडाग्रं स्वस्तिकं वामपादकम्
दराडमद्ध्ये न्यसेच्चैव पादं श्यामसमायुतम्  १४
वामे तु रक्तवर्णं स्यात्स्वस्तिकं वामपादकम्
दराडमद्ध्ये न्यसेत्पादं प्रसार्यं वामपाणिना  १५

मणिबन्धं न्यसेद्दण्डे अन्यं वै ताडितं करम्
सव्ये तु सूचिहस्तं स्यात् अभयं भीषणोन्नतम् १६
मणिमालाविभूष्यञ्च कर्णपत्रसमायुतम्
दंष्ट्राकराळवदनं सर्वाभरणभूषितम् १७
एवं सङ्कल्पयेच्चैव नृत्तमण्टपपार्श्वयोः
विकटं भीममित्युक्तं त्र्यक्षञ्च द्विभुजन्तथा १८
वृत्तं पिङ्गजटाञ्चैव तुन्दिलं दंष्ट्रिणं भवेत्
नागयज्ञोपवीतञ्च वामे दण्डधरन्तथा १९
सव्ये तु सूचिहस्तं स्यात् रक्तवर्णन्तथैव च
वामं भीमं त्रिणेत्रञ्च वृत्तं पिङ्गजटाधरम् २०
सव्ये च सूचिहस्तं स्यात् वामे दण्डधरन्तथा
दष्ट्राकराळवदनं मणिमालाविभूषितम् २१
एवं वै कल्पयेत्पश्चात् गोपुरद्वारपार्श्वयोः
जटञ्च विजयञ्चैव द्विभुजं रक्तवर्णकम् २२
अक्षमालां त्रिशूलञ्च धारिणं जटिलन्तथा
जटामकुटशोभाढ्यं वामे चैव ततश्शृणु २३
कृष्णवर्णं त्रिणेत्रञ्च जटामकुटमण्डितम्
कपालञ्च त्रिशूलञ्च दधानं भ्रुकुटिमेव वा २४
एवं तु कारयेच्चैव प्रतिष्ठां श्रुणु षण्मुख
षोडश स्तंभसंयुक्तं चतुर्द्वारसमन्वितम् २५
मद्ध्ये वेदिं प्रकल्प्याथ नवकुण्डं प्रकल्पयेत्
सप्तविंशत् घटान्न्यस्य पताकं शस्त्रमण्डलम् २६
नयनोन्मीलनं कृत्वा बिंबशुद्धिमतः परम्
जलाधिवासनञ्चैव शयनारोपणञ्चरेत् २७
वेदिकामद्ध्यमे चैव दशकुम्भं न्यसेत्ततः
आसनं मूर्तिमभ्यर्च्य विद्याङ्गं नेत्रमुद्रया २८
प्रणवं पूर्वमुच्चार्य शिवाय नम इत्यपि
आवाह्य स्थापनादीनि पूर्ववत्परिकल्पयेत् २९
पञ्चावरणमार्गेण पूजयित्वा यथाविधि

पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्  ३०
प्रायश्चित्ताहुतिं कृत्वा सुमुहूर्ते सुलग्नके
अभिषेकन्ततः कृत्वा हविर्दत्वा निवेदयेत्  ३१
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं संपूज्यमानेन विजयं पदमाप्नुयात्  ३२
इति द्वारपालप्रतिष्ठापटलष्षडशीतितमः

वृषभप्रतिष्ठापटलप्रारंभः
अथ वक्ष्ये विशेषेण अनड्वाहप्रतिष्ठितम्
शृङ्गौ श्रोत्रौ द्विनासीञ्च ऊर्ध्वोष्ठे जिह्विका तथा  १
चतुष्पादं वेदरूपं एकपादन्तु कुंचितम्
एकपादान्तर्गतञ्चैव पुच्छाग्रं बीजसंयुतम्  २
मणिनावलयं कण्ठे देवस्याभिमुखस्ततः
साक्षाद्धर्मस्वरूपञ्च शुद्धस्फटिकनिर्मलम्  ३
शृङ्गं कृष्णनिभञ्चैव मणिस्स्वर्णप्रभस्तथा
खुरं रक्तप्रभं विद्यात्पुच्छाग्रं कृष्णसन्निभम्  ४
जिह्वानीलनिभं विद्यात् ओष्ठं रक्तनिभन्तथा
त्र्यंशद्धर्मं शुभायाञ्च कलावेकांशमुच्यते  ५
तस्मात्कुंचितपादन्तु प्रभायाः परिकीर्तितम्
कलौ चाधर्वणन्नोचेत् एकपादं विनश्यति  ६
सन्निधौ शिवभक्तानां जिह्वापापं प्रगृह्यते
उग्रस्य शमनार्थं वा वृषोत्तिष्ठति सन्निधौ  ७
वृषलिङ्गौ तयोर्मद्ध्ये तिर्यक्सञ्चरितं विना
तस्मात्सञ्चरितेनैव ब्रह्महत्यासमं भवेत्  ८
एवं सङ्कल्प्य विधिवत्प्रतिष्ठाङ्कारयेत्ततः
षोडशस्तंभसंयुक्तं मण्टपं कारयेत्ततः  ९
मद्ध्ये वेदिं प्रकल्प्याथ दशकुंभं न्यसेत्ततः
पञ्चकुण्डं प्रकल्प्याथ एककुण्डमथापि वा  १०
नयनोन्मीलनं कृत्वा जलाधिवासनं परम्

शयनारोपणं पश्चात् वेदिकां पूजयेत्ततः ११
आसनं मूर्तिमभ्यर्च्य नेत्रमुद्रां प्रदर्शयेत्
प्रणवं पूर्वमुच्चार्य वृषमित्यक्षरं परम् १२
वृषभाय नम इत्येते आवाह्य पूजयेत्ततः
प्रथमावरणं पूज्य द्वितीय्यावरणं श्रुणु १३
उक्षा च गोपतिश्चैव वृषभश्शङ्कर्णकः
तीक्ष्णशृङ्गोमहाकाय एकपावृषभस्तथा १४
एवं पूज्य यथा चैव मङ्गलान्कोरणान्यजेत्
अग्निकार्यं समाराध्य होमं कृत्वा विशेषतः १५
मूलमन्त्रेण हुत्वा तु गायत्र्याहोमयेत्ततः
प्रायश्चित्ताहुतिं कृत्वा घटे संयोजयेत्ततः १६
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत्
हविर्दत्वा निवेद्याथ स्नपनं कारयेत्ततः १७
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
यक्षिणान्दापयेच्चैव १८
एवं संपूज्य विधिवत्सपुण्याङ्गतिमाप्नुयात् १९
इति वृषभप्रतिष्ठापटलस्सप्ताशीतितमः

बलिपीठप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि ग्रामाभिवृद्धिदं परम्
चतुरश्राकृतिं पीठं हस्तमात्रप्रमाणतः १
द्वियङ्गुलघनं प्रोक्तं तस्योर्ध्वे पङ्कजं तथा
अष्टपद्मदळं कल्प्य पञ्चाङ्गुलसमुच्छ्रतम् २
कर्णिकामद्ध्यमे चैव वृत्तं वा परिकल्पयेत्
पूर्वाद्यष्टदिशी चैव गर्भगेहस्य पार्श्वयोः ३
यागशालां प्रकल्प्याथ अष्टवेदिं प्रकल्पयेत्
अष्टकुण्डं प्रकल्प्याथ चतुरश्रं प्रकीर्तितम् ४
धान्यराशिं प्रकल्प्याथ दशकुंभन्न्यसेत्ततः
पृथक्पृथक् दशन्न्यस्य वेदिकामद्ध्यमे चरेत् ५

नयनोन्मीलनं कृत्वा कर्णिकापार्श्वके पुरा
जलाधिवासनं पश्चात् शयनारोपणं परम् ६
वेदिकामद्ध्यमे चैव क्षित्यादिकुटिलान्तकम्
आसनं मूर्तिमभ्यर्च्य विद्यादेहं प्रकल्पयेत् ७
प्रणवं पूर्वमुच्चार्य सान्तमुच्चारयेत्परम्
नामाक्षरं नमोन्तञ्च मूलमन्त्रमिति स्मृतम् ८
संवक्त्रश्च शिखावक्त्रो कुम्भोदरमहोदरम्
हरिवक्त्रमजो वक्त्रं एकपादमधोमुखम् ९
नामान्तमुच्चरेत्पूज्य आवाह्य पूजयेत्ततः
प्रथमावरणं पूज्य हृदयादीन्प्रपूजयेत् १०
द्वितीयावरणं पूज्य लोकपालान्समर्चयेत्
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत् ११
षडद्ध्वादीन् हुनेच्चैव घटे संयोजयेत्परम्
सुमुहूर्त्ते सुलग्ने च अभिषेकं समाचरेत् १२
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं संपूज्य विधिवत्सपुण्याङ्गतिमाप्नुयात् १३
इति बलिपीठप्रतिष्ठापटल अष्टाशीतितमः

भद्रलिङ्गप्रतिष्ठापटलप्रारंभः

अथ वक्ष्ये महासेन ग्रामाभिवृद्धिदं परम्
सर्वव्याधिप्रशमनं भद्रलिङ्गप्रतिष्ठितम् १
उपानञ्जगती चैव कुमुदं कंपमेव तु
ऊर्ध्वे कपोदिकां कल्प्य तदूर्ध्वे पद्ममेव च २
मूलबेरसमायामं उन्नतं परिकीर्तितम्
द्वात्रिंशद्दळसङ्ख्या च चतुर्विंशति सङ्ख्यया ३
षोडशं दळसङ्ख्या च वसुसङ्ख्या दळन्तथा
तदूर्ध्वे कर्णिकां कल्प्य पार्श्वेषु छदनं चरेत् ४
षोडश स्तंभसंयुक्तं चतुर्द्वारसमन्वितम्
पताकैस्तोरणैः कल्प्य वेदिकामद्ध्यमे चरेत् ५

धान्यराशिं प्रकल्प्याथ दशकुम्भं न्यसेत्ततः
पञ्चकुराडं प्रकल्प्याथ मेखला त्रयमुत्तमम् ६
इन्द्रईशानयोर्मद्धये वृत्तकुराडं प्रधानकम्
नयनोन्मीलनं कृत्वा बिंबशुद्धिं प्रकल्पयेत् ७
वेदिकामद्धयमे पूज्य स्रासनं कल्पयेत्ततः
मूर्तिमभ्यर्च्य दृग्दृश्य स्रञ्जलीकरसंयुतम् ८
प्रणवं पूर्वमुच्चार्य शब्दशब्दमतः परम्
स्रविघ्नाय नम इत्येते कुम्भमद्धये प्रपूजयेत् ९
स्रष्टपद्मदळं स्वर्णपङ्कजं कुम्भमद्धयमे
कर्णिकामद्धयमे न्यस्य भावयेत्साधकोत्तमः १०
प्रणवं पूर्वमुच्चार्य साक्षिसाक्षीन्ततः परम्
नामाक्षरं नमोन्तञ्च स्रामोदं पूर्वदिक् दळे ११
प्रमोदन्दक्षिणे पूज्य प्रणवं पूर्वमुच्चरन्
कुरु कुरु प्रमोदाय नमोन्तमर्चयेत् बुधः १२
प्रणवं पूर्वमुच्चार्य पतङ्गञ्च ततः परम्
प्रमुखाय नमोन्तञ्च पूजयेत्पश्चिमे दळे १३
प्रणवं पूर्वमुच्चार्य
पिङ्गपिङ्गविमुखश्च नमोन्तमुत्तरेद्दळे १४
प्रणवं पूर्वमुच्चार्य ज्ञानज्ञानविघ्नकर्तृके
तमोन्तं दशदिग्भागे पूजयेत्साधकोत्तमः १५
स्थापनं सन्निधानञ्च सन्निरोधावकुराठनम्
स्वागतार्घ्यं ददेत्पूज्य भोगाङ्गं पूजयेत्ततः १६
स्राग्नेय्यादिषु कोणेषु हृदयादीन्समर्चयेत्
द्वितीयावरणे चैव लोकपालान्समर्चयेत् १७
तृतीय्यावरणे पूज्य वज्रादीन्दशदिक्षु च
पूजयित्वा विशेषेण होमकर्म ततः परम् १८
पूर्वोक्तविधिनाहुत्वा प्रायश्चित्तान्तमाचरेत्
पूर्णाहुतिन्ततः कृत्वा घटे संयोजयेत्ततः १९
सुमुहूर्ते सुलग्ने च स्रभिषेकं समाचरेत्

ब्राह्मणान्भोजयेत्तत्र दक्षिणान्दापयेत्ततः २०
आचार्य्यं पूजयेत्पश्चात्सपुण्याङ्गतिमाप्नुयात् २१
इति भद्रलिङ्गप्रतिष्ठापटल एकोननवतितमः

विमानस्थापनपटलप्रारंभः
अथातस्संप्रवक्ष्यामि सर्वप्राणि हिताय च
देवालयानां दृश्यन्ते विमानं गोपुराणि च १
यावद्देशेषु परितः तावत्कैलासभूतलम्
द्राविडं वेसरं चैव नागरं त्रिविधं भवेत् २
भेदान्षण्णवति ज्ञेयः विमानं मूलभेदकम्
आसनं शयनं यानं दैविकं स्वस्तिकं भवेत् ३
नीलोत्पलं सुखकरं गीर्वाणं देवमन्दिरम्
आवर्तकमनावर्तं अचलं वृषमुच्यते ४
एवं भेदानि सङ्कल्प्य योग्यायोग्यं प्रकल्पयेत्
आसनं शयनं यानं शिवलिङ्गत्रयं भवेत् ५
तत्तदाकारमाकल्प्य दिव्यहर्म्यं प्रकल्पयेत्
महेश्वरादि भेदानां हरिब्रह्मादिकान्तथा ६
भेदान्सुधामयं कल्प्य पञ्चवर्णैरलङ्कृतम्
देवस्य पूर्वदिग्भागे दक्षिणा मूर्तिसन्निधौ ७
पश्चिमे स्तंभलिङ्गाग्रे उत्तमं गोमुखाग्रके
षोडशस्तंभसंयुक्तं यागशालां प्रकल्पयेत् ८
मद्ध्ये वेदिं प्रकल्प्याथ तत्पूर्वे कुण्दमुच्यते
पश्चिमे वेदिकां कृत्वा तत्पूर्वे कुण्डमुच्यते ९
दशकुम्भन्न्यसेच्चैव घटालङ्कृतमुच्यते
पश्चिमे दशकुम्भञ्च पूर्ववत्स्थापयेत्ततः १०
तोरणान्मङ्गळांश्चैव शस्त्राणि परिकल्पयेत्
जलाधिवासनञ्चैव शयनारोपणन्तथा ११
रत्नन्यासं विना चैव नयनोन्मीलनं विना
शेषन्तु पूर्ववत्कल्प्य अङ्कुरार्पणपूर्वकम् १२

वास्तुशान्तिन्ततः कृत्वा शिवहस्तं प्रकल्पयेत्
वेदिका मद्ध्यमे चैव आसनं मूर्तिमर्चयेत् १३
द्विपादञ्च त्रिनयनं भस्मकुण्ठितविग्रहम्
शूलं शक्तिधनुःखट्गं पाशं चक्रं गदाब्जधृक् १४
अष्टहस्तसमोपेतं सुपद्ममकुटन्तथा
रक्तवर्णं विशालाक्षं उपानं अघ्रिमुच्यते १५
कुमुदं जगतीशञ्च पट्टिकाजानुमुच्यते
गात्रान्तमूरुदेशञ्च याळाक्षं कटिदेशके १६
कुक्षिं वै कुक्षिदेशञ्च पद्मान्तं मूर्ध्नि उच्यते
मकुटं मकुटोपेतं द्विपार्श्वं करमुच्यते १७
एवं वै शिवरूपन्तु स्थूललिङ्गाकृतिर्भवेत्
प्रणवं पूर्वमुच्चार्य ज्ञानशक्त्यात्मने तथा १८
भीमरुद्राय इत्येते नमोन्तञ्चोच्चरेत्ततः
आवाह्य पूजयेत्तत्र प्रथमावरणन्तथा १९
द्वितीय्यावरणे पूज्य लोकपालान्समर्चयेत्
वर्त्मादि चक्रपद्मान्तं अर्चयेत्साधकोत्तमः २०
पश्चिमे वेदिका मद्ध्ये दशकुम्भं न्यसेत्ततः
मद्ध्ये स्कन्दं समभ्यर्च्य प्रथमावरणं यजेत् २१
जयादिरभ्याधानञ्च द्वितीयावरणे यजेत्
प्रधानवेदिकामद्ध्ये भीमरुद्रं समर्चयेत् २२
पञ्चकुण्डं प्रकल्प्याथ एककुण्डमथापि वा
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत् २३
दक्षिणे दक्षिणामूर्तिं कुम्भमद्ध्ये प्रपूजयेत्
जयादिरभ्याधानञ्च द्वितीयावरणे यजेत् २४
प्रथानवेदिकामद्ध्ये भीमरुद्रं समर्चयेत्
पञ्चकुण्डं प्रकल्प्याथ एककुण्डमथापि वा २५
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्
दक्षिणे दक्षिणामूर्तिं कुम्भमद्ध्ये प्रपूजयेत् २६
प्रथमावरणं पूज्य हृदयादीन्समर्चयेत्

द्वितीय्यावरणे चैव शर्वादीन्समर्चयेत् २७
अग्निकार्योक्तमार्गेण होमं कृत्वा समर्चयेत्
पश्चिमे विष्णुमभ्यर्च्य प्रथमावरणं यजेत् २८
केशवो माधवश्चैव त्रिविक्रमधुसूदनः
वामनश्श्रीधरश्चैव पद्मनाभोजनार्दनः २९
अष्टकुम्भेषु पूज्याथ इन्द्रादीन्पूजयेत्ततः
पूर्ववद्धोममित्युक्तं सायंप्रातर्हुनेत्ततः ३०
उत्तरे पद्मजं पूज्य प्रथमावरणं यजेत्
त्रयी मयीं त्रिमूर्तिञ्च पद्माक्षं पद्मयोगिनम् ३१
चतुर्मुखञ्च धातारं पितामहमजन्तथा
अष्टकुम्भे प्रपूज्याथ दशाज्ञां पूजयेत्ततः ३२
पूर्ववद्धग्निमाराद्ध्य होमयेत्साधकोत्तमः
पञ्चकुण्डं प्रकल्प्याथ अथवा एककुण्डकम् ३३
तत्तन्मन्त्रेण संपूज्य पूर्णान्तं होमयेत्ततः
प्रासादनर्तनं कल्प्य द्रव्याभावैरलङ्कृतम् ३४
शिवभेदान् चरेद्धीने पूर्ववद्विधिमार्गतः
चतुर्दिक् यागशालाञ्च भीमरुद्रं समर्चयेत् ३५
स्कन्दञ्च दक्षिणामूर्तिं नारसिह्मं विधिं यजेत्
कुण्डं वा स्थण्डिलं वापि होमयेद्योजयेत् घटे ३६
तत्तत्स्थाने यजेत् भाव्य पूर्ववत्परिकल्पयेत्
पश्चात् बिंबान्प्रकल्प्याथ पञ्चवर्णैरलङ्कृतम् ३७
पूर्वं घटे समावाह्य बाललिङ्गं प्रकल्पयेत्
बालालयं यजेद्धुत्वा प्रतिष्ठां पूर्ववच्चरेत् ३८
दिनं प्रतिदिनं हुत्वा ब्राह्मणान्भोजयेत्ततः
यावत्कालं प्रकृष्येते तावत्पर्यन्तमर्चयेत् ३९
तदन्ते योजयेत्कुम्भे अर्चयेत्साधकोत्तमः
पश्चात्कालान्तरे विद्यान् मकुटारोपणं कथम् ४०
स्वर्णेन रजतेनैव ताम्रेणैव चरेत्ततः
मुलबेरं समावाह्य घटे संपूजयेत्ततः ४१

देवस्य पूर्वदिग्भागे यागमेकं विधाय च
भीमरुद्रन्तु संपूज्य विद्येशान्पूजयेत्ततः ४२
वज्रादीन्पूजयेत्पश्चात् शिवयागं पृथक्चरेत्
शिवमावाह्य संपूज्य पूर्ववद्विधिनाहुनेत् ४३
एकरात्रं द्विरात्रं वा त्रिरात्रं पञ्चरात्रकम्
होमं कृत्वा विशेषेण स्थूपिदण्डाधिवासनम् ४४
रत्नन्यासं प्रकल्प्याथ दण्डं स्थाप्य विशेषतः
मकुटं क्षाळयेत्पश्चात्संपाताहुतिमाचरेत् ४५
घटं स्थाप्य विशेषेण दर्भमालैरलङ्कृतम्
शतदर्भान्बृहत्कूर्चं मकुटे बन्धयेत्ततः ४६
विमानघटमादाय मस्तके योजयेत् गुरुः
परितः कलशानष्टौ दळे संपूजयेत्ततः ४७
धातारं विष्णुं सर्वेशं स्कन्दं संपूजयेद्विना
भीमरुद्रं प्रपूज्याथ विद्येशान्पूर्ववद्यजेत् ४८
शिवकुम्भं समादाय शिवे संयोजयेत्ततः
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः ४९
जीर्णोद्धारणकाले तु कथं शंभो विशिष्यते
मासमेकन्तु कुम्भं स्यात् द्विमासं त्रिशिखन्तथा ५०
त्रिमासं खट्गमित्युक्तं तदूर्ध्वन्दारुणा भवेत्
एवं अधमपूजाञ्च मन्दिरे कल्पयेत्ततः ५१
स एकदिनमारभ्य द्विपक्षं पूजयेत् घटे
दिने दिने घटे पूज्य सायंकालेऽभिषेचयेत् ५२
बालालये तदूर्ध्वे तु दारुलिङ्गं यजेत्तथा
एवं मद्ध्यमपूजायां कारयेच्छिवमन्दिरे ५३
प्रासादं जीर्णिते काले महास्नपनमण्टपे
नृत्तमण्टपदेशे वा प्राकारे वा शुभस्थले ५४
बालालयं प्रकल्प्याथ तत्तन्मानाकृतिन्तु वा
यागशालां प्रकल्प्याथ वेदिका मद्ध्यमे चरेत् ५५
नवकुण्डं पञ्चकुण्डं अथवा एकमेव वा

दशकुम्भं विन्यसेच्च वेदिका मद्ध्यमे चरेत् ५६
सप्तविंशत् घटान्न्यस्य तोरणं शस्त्रमङ्गलान्
पूर्वोक्तविधिना चैव यागद्रव्यान्समाददेत् ५७
नयनोन्मीलनं पश्चात् जलाधिवासनन्तथा
शयनारोपणञ्चैव वेदिकां पूजयेत्ततः ५८
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्
मूललिङ्गं समाकृष्य घटे संपूजयेत्पुरा ५९
सुमुहूर्ते सुलग्ने च तद्घटं ग्राहयेत् गुरुः
स्वमूर्ध्नावाह्यते चैव बिंबे संपूजयेत्ततः ६०
हविर्दत्वा निवेद्याथ उपचारान्यथोक्तवत्
तदारभ्यावसानान्तं मद्ध्याह्ने होमयेत्ततः ६१
त्रिकालं वा चतुष्कालं पञ्चकालं यथा पुरा
तदेवं पूजयेद्विप्रान् भोजयेच्च दिनं प्रति ६२
त्रिकालं वा द्विकालं वा मूललिङ्गेऽभिषेचनम्
रहस्य पूजां कर्तव्यं वाद्यं घण्टां विवर्जयेत् ६३
मूलोपचारमार्गेण बाललिङ्गे यजेत् गुरुः
नित्यपूजां प्रकर्तव्यं नैमित्तिकं विना तथा ६४
श्रीबलिन्नित्यहोमञ्च पादुकाराधनञ्चरेत्
अन्योत्सवन्तु कर्तव्यं विशेषं श्रुणु षण्मुख ६५
देव्याश्च शिखाजीर्णे पटे चावाहयेत् गुरुः
पूर्वोक्तविधिना प्रोक्तं प्रतिष्ठां कारयेत्ततः ६६
तदेवपूजां कर्तव्यं नैमित्तिकन्नकारयेत्
उमास्कन्देश्वरञ्चैव नृत्तेशं शशिशेखरम् ६७
देववेश्मनिजीर्णो वा मूर्तिमादाय साधकः
अन्ये शुभस्थले स्थाप्य पूजयेन्नित्यकर्मणि ६८
होमास्कन्देश्वरं चैव महोत्सवन्नकारयेत्
नृत्तेशादि च बेराणां जीर्णोद्धारं प्रकल्प्यते ६९
महोत्सवं प्रकर्तव्यं सर्वदोषो न विद्यते
तेषां विमानमूर्तीशं पदे चावाहयेत्ततः ७०

पश्चाद्यागं प्रकल्प्याथ विमाने चाभिषेचनम्
एवं संपूज्य विधिवत्सपुरायाङ्गतिमाप्नुयात्  ७१
इति विमानस्थापनपटलनवतितमः

सोमस्थापनपटलप्रारंभः
अथ वक्ष्ये विशेषेण सोमस्थापनमुत्तमम्
द्विभुजं च द्विनेत्रं च करराडमकुटान्वितम्  १
प्रभामराडलमद्ध्यस्थं ताटंकयुगळं वहन्
कुमुदं द्विकराभ्याञ्च अंसासत्तु समन्वितम्  २
पद्मपीठोपरिस्थञ्च श्वेतवर्णसमायुतम्
एवन्ध्यात्वा विशेषेण प्रतिष्ठां कारयेत्ततः  ३
यागशालां प्रकल्प्याथ षोडशस्तंभसंयुतम्
मद्ध्ये वेदिं प्रकल्प्याथ पञ्चकुराडं प्रकल्पयेत्  ४
अथवा कुराडमेकं वा पूर्ववत्परिकल्पयेत्
दशकुम्भन्न्यसेच्चैव सप्तधान्योपरिन्यसेत्  ५
अङ्कुरार्पणमेवन्तु नयनोन्मीलनन्तथा
शयनारोपणं पश्चात् वेदिकां पूजयेत्ततः  ६
प्रणवं पूर्वमुच्चार्य अंभ इत्यक्षरन्तथा
अमृतेश्वराय इत्येते नमोन्तमुच्चरेत्ततः  ७
आवाह्य पूजयेत्पश्चात्प्रथमावरणे न्यसेत्
द्वितीय्यावरणे चैव कुमुदं कुमुदाक्षकम्  ८
कुमुदायामृतेशश्च तारकेशोहरप्रियः
शीतळोऽपि शशांकश्च अष्टमूर्तिं प्रपूजयेत्  ९
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः  १०
वह्निस्थन्तु घटे योज्य सुमुहूर्तेऽभिषेचयेत्
हविर्दत्वा निवेद्याथ ब्राह्मणान्भोजयेत्ततः  ११
आचार्यं पूजयेत्तत्र दक्षिणान्दापयेत्ततः
एवं यः कुरुते मर्त्यः चन्द्रलोकं स गच्छति  १२

इति सोमस्थापनपटल एकनवतितमः

विघ्नेशस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि विघ्नेशस्थापनं परम्
सर्वलोकहितं पुण्यं सर्वानुग्रहकारणम् १
सर्वैश्वर्याभिवृद्ध्यर्थं पूजितं विष्णुनापुरा
सर्वविघ्नप्रशमनं पुत्रपौत्रविवर्द्धनम् २
पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं द्विलोचनम्
गजाननं रक्तवर्णं करण्डमकुटान्वितम् ३
शूर्पाकृतिं महाश्रोत्रं बृहत्कुक्षिसमायुतम्
नागयज्ञोपवीतञ्च दक्षिणे शयनं पदम् ४
कुंचितं वामपादञ्च पद्मपीठोपरिस्थितम्
दन्तं कुठारपाशञ्च चक्रञ्च मुसलन्तथा ५
अपूपं टङ्कशूलञ्च ध्वजञ्च मुसलायुतम्
वामपार्श्वे धरेच्छस्त्रान्विविधैर्भूषणैरपि ६
शिरः कूर्चसमायुक्तं चित्रवस्त्रसमायुतम्
कटिसूत्रसमन्वितम् ७
यद्वा श्यामतनुं दक्षं एकवक्त्रसमायुतम्
भुजं षोडशसङ्ख्या च गजहस्तन्तु मद्ध्यमे ८
पाशाङ्कुशं कुठारञ्च बीजं खड्गासिखेटकम्
अपूपं दन्तपरशुं दण्डं मुसलमेव च ९
घण्टा च भिण्डिपालञ्च नागमालिङ्ग्यपाणिना
वामोरुमद्ध्यमे शक्तिं पर्यङ्के च समांघ्रिकाम् १०
रक्तवर्णधरां देवीं उत्पलं पङ्कजं करे
उक्तलक्षणमेवोक्तं यद्वा वक्ष्ये षडानन ११
चतुर्भुजं द्विनेत्रञ्च गजवक्त्रं शशिप्रभम्
पाशाङ्कुशं स्वदन्तञ्च वक्त्रमाम्रफलं वहन् १२
समपादं महापीठे सर्वलक्षणसंयुतम्
मूललिङ्गसमायामं द्विगुणं त्रिगुणी कृतम् १३

अथवा एकमानं वा शैलं वा ताम्रमेव वा
षोडश स्तंभसंयुक्तं चतुर्द्वारसमन्वितम् १४
चतुस्तोरणसंभूष्य मद्ध्ये वेदिं प्रकल्पयेत्
नवकुण्डं प्रकल्प्याथ पञ्चकुण्डमथापि वा १५
नयनोन्मीलनं पूर्वं चन्द्रसूर्यं यजेत् घटे
वह्निकर्मसमाराद्ध्य शताहुतिं पृथक्पृथक् १६
गणेशगायत्र्याहृत्य प्रायश्चित्तन्तु साधकः
ज्योतिर्मण्डलमालिख्य नेत्रे नेत्रघटं यजेत् १७
जलाधिवासनं पश्चात्प्रादक्षिण्य क्रमेण वा
अधश्छदमलङ्कृत्य गत्वा शयनमण्टपम् १८
मद्ध्ये वेदिं प्रकुर्वीत धान्यराशिं प्रकल्पयेत्
माषमुद्गञ्च शिंबन्तु गोधूमं वैणवन्तथा १९
तिलनिष्पावमित्येते शिवस्य कुडुपञ्चथा
वेदिका मद्ध्यमे चैव पर्यङ्कं फलकाकृतिम् २०
तस्योपरिविशेषेण सप्तधान्यैरलङ्कृतम्
क्षौमैः कार्पासवस्त्रैश्च अधश्छदमलङ्कृतम् २१
कृष्णचर्मव्याघ्रचर्मचित्रकं बळमेव वा
पिञ्छपुञ्जैरलङ्कृत्य प्राक्शिरश्चोर्ध्ववक्त्रकम् २२
रक्षाबन्धनपूर्वं यः गजहस्ते चरेत् गुरुः
तोरणान्पूजयेत्पूर्वं सौरपूजां ततः परम् २३
शिवहस्तं प्रकल्प्याथ वेदिकां पूजयेत्ततः
ससूत्रं सापिधानञ्च रत्नैस्सौवर्णपङ्कजैः २४
वस्त्रद्वयं समासाद्य सकूर्चं नाळिकेरकम्
क्षित्यादिकुटिलप्रान्तं २५
आसनं मूर्तिमभ्यर्च्य सकळान्यासपूर्वकम्
प्रणवं पूर्वमुच्चार्य द्वितीय्यस्वरमुच्यते २६
मायाबीजन्ततः पश्चात्क्रोङ्कारमुच्चरेत्ततः
गौमित्येवं ततः पश्चात् गामित्यक्षरमुच्यते २७
गणपतये नमोन्तञ्च मूलेनावाहयेत्ततः

प्रणवं पूर्वमुच्चार्य हकारन्तु ततः परम्  २८
अकारश्च उकारश्च मकारो बिन्दुरेव च
अर्द्धचन्द्रनिरोधी च नादो नादान्त एव च  २९
अनन्दानाश्रितायै च अनाधाव्योमरूपिका
शक्तिश्च व्यापिनी चैव समनाचोन्मना तथा  ३०
समनान्तं पाशजालं उन्मन्यन्ते परं शिवः
भाष्योच्चारक्रमेणैव गुरूपदिष्टमार्गतः  ३१
लयान्तमुच्चरन्प्राप्य द्वादशान्तपदे व्रजेत्
द्वादशान्तं समानीय्य निष्कळं व्यापकं शिवम्  ३२
अञ्जलीकरमाकृष्य बिन्दौ स्थानेशिकारकम्
वकारं तालुदेशे तु यकारं गण्डमूलके  ३३
नकारं हृत्प्रदेशे च मूलाधारे मकारकम्
मूलाधारान्तमाकृष्य पुनरुद्धृत्य पूर्ववत्  ३४
प्रणवं पूर्वमुच्चार्य गणेशमन्त्रमुच्चरन्
ईशतत्वान्तमुच्चार्य सादाख्यादौ गणेश्वरम्  ३५
पुनराकृष्य धोविद्यात् भ्रूमद्ध्ये द्वारखण्डिकाम्
आनीयाञ्जलिमादाय घटमद्ध्ये तु विन्यसेत्  ३६
स्थापनं सन्निधानञ्च सन्निरोधावकुण्ठनम्
सौधं पाद्यादिकन्दत्वा कुसुमे नाञ्जलित्रयम्  ३७
लयाङ्गं पूजयेत्पश्चात् भोगाङ्गं प्रार्थयेत्ततः
हृदयादीन्समभ्यर्च्य प्रथमावरणं यजेत्  ३८
हस्तिवक्त्रञ्चलंबोष्ठं एकदन्तं गणाधिपम्
विपुलो लंबकर्णश्च विकटो भीमदन्तकः  ३९
द्वितीय्यावरणं पूज्य तृतीय्यावरणं श्रुणु
पूर्वे तु विकटं भीमं द्वारस्य पार्श्वयोर्यजेत्  ४०
प्रमुखं विमुखं सव्ये पूजयेत्तु विशेषतः
अविघ्नो विघ्नकर्तारः पश्चिमे पूजयेत्ततः  ४१
दक्षा च शिवहस्तश्च उत्तरे पूजयेत्ततः
तृतीय्यावरणं पूज्य चतुर्त्थावरणं श्रुणु  ४२

लोकपालान्समभ्यर्च्य चन्द्रादीन्पश्चिमे यजेत्
पश्चिमद्वारदेशे तु द्वारपालार्चनं पुरा ४३
सव्योर्ध्वे कमलां पूज्य नर्मदां वामपार्श्वके
मद्ध्ये सिन्धुं समभ्यर्च्य पूर्ववद्ध्यानमाचरेत् ४४
विकटं सरयूं पूज्य दक्षिणे च समर्चयेत्
भीमं गन्धपतिं सौम्ये अर्चयित्वा विशेषतः ४५
आपः पूर्वे समभ्यर्च्य देहळ्यामस्त्रमर्चयेत्
वास्तुनाथं समभ्यर्च्य पूर्ववत्परिकल्पयेत् ४६
लक्ष्मीं पश्चिमदेशे तु यजेत्तु मण्डरूपिणीम्
ईशे शान्तं गुरुं पूज्य वेदिकां पूजयेत्ततः ४७
पूर्वादि च चतुर्द्वारे ऋग्वेदादीन्प्रपूजयेत्
पश्चाच्छास्त्रं पूज्यते च विघ्नगायत्रिमन्त्रतः ४८
अग्निकार्यं ततः पश्चात्पूर्ववत्विधिनाचरेत्
गणेशं पूजयेदग्नौ होमयेन्मूलमन्त्रतः ४९
पूर्वादि च चतुः कुण्डे पुरुषादीन्प्रपूजयेत्
आग्नेय्यादि चतुर्दिक्षु हृदयादीन्प्रपूजयेत् ५०
तत्वतत्वेश्वरान्न्यस्य मूर्तिमूर्तीश्वरान्न्यसेत्
त्रिखण्डं होमयेत्पश्चात् रत्नन्यासं समाचरेत् ५१
सुमुहूर्ते सुलग्ने च स्थापयेत् गर्भगेहके
विमाने पूजयेत्पूर्वं घटस्नानं समाचरेत् ५२
विकटोदरमभ्यर्च्य प्रासादं पूजयेत्ततः
अग्निस्थं योजयेत्कुम्भे घटस्नानं ततः परम् ५३
इति विघ्नेश्वरस्थापनपटलो द्विनवतितमः

षण्मुखस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वपीडा निवारणम्
सर्वव्याधिप्रशमनं षण्मुखस्थापनं परम् १
षड्वक्त्रं द्वादशाक्षञ्च प्रतिवक्त्रं द्विलोचनम्
बालचन्द्रसमप्रख्यं द्वात्रिंशल्लक्षणान्वितम् २

शिख्यन्तं वा शिखस्थं वा पादौ नूपुरमण्डितौ
शक्तिं शरञ्च खड्गञ्च अभयं द्ध्वजमेव च ३
गदाचापञ्चकुलिशं खेटकं शूलमेव च
वरदं पङ्कजं धार्यं द्वादशं करमानतः ४
शिखिस्थं लंबपादञ्च दक्षिणे शयनं पदम्
समपादं पद्मपीठे शिख्यन्तं परिकीर्तितम् ५
करद्वादशसंयुक्तं एकाननं विशेषतः
षड्वक्त्रं षड्भुजं वक्ष्ये नागवज्रवराभयम् ६
शक्त्यायुधधरं वन्दे वक्त्रं वावरबाहुकम्
घण्टाकपालसंयुक्तं शेषं पूर्ववदाचरेत् ७
षडाननं द्विहस्तं स्यात् वज्रशक्तिधरं भवेत्
एकवक्त्रञ्चाष्टबाहुं पूर्ववच्छिखिनं भवेत् ८
एकवक्त्रं द्विबाहुञ्च कटिबन्धाभयन्तथा
शिरश्चक्रसमायुक्तं वस्त्रयज्ञोपवीतकम् ९
प्रभायां मकराख्यञ्च सर्वावयवसुन्दरम्
उत्तरे देवसेनाञ्च द्विभुजा च द्विनेत्रका १०
किरीटमकुटोपेतं उत्पलं लंबहस्तकम्
चित्रवस्त्रसमायुक्ता पीतवर्णसमन्वितम् ११
वल्ली च दक्षिणे पार्श्वे सरत्नमकुटोज्वलाम्
स्तनौ कञ्चुकसंयुक्तौ पङ्कजं लंबहस्तकम् १२
रत्नवर्णधरां देवीं चित्रवस्त्रसमन्विताम्
एवं द्ध्यात्वा विशेषेण शैलैर्वृत्तमृजेऽपि वा १३
स्थपतिः स्थापकश्चैव आलोच्य युक्तकर्मणि
पूर्वोक्तविधिना चैव यागशालां प्रकल्पयेत् १४
षोडशस्तंभसंयुक्तं चतुर्द्वारसमन्वितम्
चतुस्तोरणमित्युक्तं मद्ध्ये वेदिं प्रकल्पयेत् १५
चतुरश्रं प्रकल्प्याथ दर्पणोदरमद्ध्यमम्
चन्द्रईशानयोर्मद्ध्ये षडश्रं कुण्डमुच्यते १६
चतुरश्रार्द्धचन्द्रञ्च वृत्तपद्मं विदिक्षु च

योनित्रिकोणषट्कोणं मङ्गळाश्रं प्रकीर्तितम्  १७
वायव्ये वेदिकां कृत्वा दर्पणोदरसन्निभाम्
तत्पूर्वे योनिकुण्डन्तु पूर्ववत्परिकीर्तितम्  १८
नैर्ऋते वेदिकां कृत्वा पूर्ववत्परिकीर्तितम्
तत्पूर्वे योनिकुण्डञ्च मेखलात्रयमुत्तमम्  १९
एकासने प्रकर्तव्यं कारयेदेकमण्टपे
पृथगासनपक्षेऽपि सव्ये वामे पृथक्पृथक्  २०
पूर्ववद्यागशालाञ्च षोडश स्तंभसंयुताम्
वेदिका मद्ध्यमे कुर्यात्पूर्वाद्यष्टसुदिक्षु च  २१
योनिकुण्डं प्रकल्प्याथ अष्टकुण्डं प्रकीर्तितम्
इन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं तथैव च  २२
नयनोन्मीलनं पश्चात् ज्योतिर्मण्डलमालिखेत्
कन्निकागोयदींश्चैव विप्रयुग्मं प्रदर्शयेत्  २३
धान्यञ्च यजमानञ्च जनसंघं प्रदर्शयेत्
जलाधिवासनं पश्चात् बिंबशुद्धिमतः परम्  २४
मृत्संग्रहणमेवोक्तं पूर्ववत्परिकल्पयेत्
पालिकाघटिका चैव शरावं त्रिविधं भवेत्  २५
वसुसङ्ख्या क्रमेणोक्तं लोकपालान्प्रपूजयेत्
भानुसङ्ख्या क्रमेणैव वैकर्तादीन्प्रपूजयेत्  २६
चतुर्विंशतिसङ्ख्या च वक्ष्येऽहं श्रुणु षण्मुख
धातारं पद्मयोनिञ्च चतुर्मुखपितामहम्  २७
अजं विरिंचिं वागीशं कमलासनमेव च
केशवं माधवञ्चैव त्रिविक्रमं मधुसूदनम्  २८
वामनं श्रीधरञ्चैव पद्मनाभानिरुद्धकौ
सुब्रह्मण्यं कुमारञ्च गुहञ्चैव तु षण्मुखम्  २९
स्कन्दं सेनापतिञ्चैव हरसूनुञ्च कुक्कुटम्
मद्ध्ये चन्द्रं समभ्यर्च्य नैवेद्यं धूपदीपकम्  ३०
वास्तुनाथं प्रपूज्याथ मण्टपे पूजयेत्ततः
वास्तुहोमं ततः कृत्वा स्कन्दसूक्तेन होमयेत्  ३१

गुहञ्च स्वामिमन्त्रञ्च नमो मन्त्रं हुनेत्ततः
प्रायश्चित्ताहुतिं कृत्वा पर्यग्निकरणञ्चरेत् ३२
रक्षाबन्धनसूत्रेण स्वर्णेन रजतेन वा
स्वामिमन्त्रेण बध्नीयात् शयनारोपणन्ततः ३३
अण्डजं मुण्डजञ्चैव दारुजं योनिजन्तथा
बीजजं यवमेवोक्तं प्राक्शिरश्चोर्ध्ववक्त्रकम् ३४
दर्भमालां प्रदास्यामि त्यक्त्वा शयनमण्टपे
निद्राकुम्भं शिरोदेशे नवकुम्भन्न्यसेत्ततः ३५
मद्ध्ये स्कन्दं समभ्यर्च्य लोकपालान्यजेत्ततः
पाददेशे न्यसेत्तैलं वस्त्रेणाच्छादयेत्ततः ३६
मण्टपाराधनं पूर्वं सौरपूजां चरेत्पुरा
पश्चिमद्वारदेशे तु द्वारपालार्चनन्ततः ३७
गणेशं चाश्विनीं लक्ष्मीं ऊर्ध्वोदुंबरमद्ध्यमे
सुदेहं पूजयेल्लक्ष्मीं सव्यभागे यजेत् गुरुः ३८
प्रमुखं दीपयेत्पूजां वामभागे प्रपूजयेत्
सव्ये शङ्खनिधिञ्चैव वामे पद्मनिधिं यजेत् ३९
विजयं जयमभ्यर्च्य कवाटे पूजयेत्ततः
अग्रेणाजं समभ्यर्च्य अस्त्रं देहळिमद्ध्यमे ४०
पूजयेद्धूपदीपैश्च वास्तुनाथं समर्चयेत्
चतुर्बिलान्समभ्यर्च्य मङ्गळान् तोरणान्पुरा ४१
महावल्ली च मेधा च देवसेना गजेन्द्रका
मधुरश्च सुदेहश्च सुमुखः श्रीधरस्तथा ४२
सुदेहं सुमुखं पूर्वे पूजयित्वा विशेषतः
महावल्ली च मेधा च सव्ये संपूज्य पार्श्वयोः ४३
मधुरः श्रीधरश्चैव पश्चिमे पूजयेत् घटे
देवसेना सुमित्रा च उत्तरे पूजयेत्ततः ४४
लक्ष्मीं गणेशं संपूज्य ईशे शान्तं गुरुं यजेत्
आत्मानं पूजयेत्पश्चात् शिवहस्तं विभावयेत् ४५
वेदिका मद्ध्यमे पूज्य क्षित्यादिकुटिलान्तकम्

मूर्ध्निन्यासं न्यसेच्चैव विद्यादेहमतः परम् ४६
नेत्रमुद्रां प्रदृश्याथ षरामुखे तु पृथक्पृथक्
अष्टगन्धेन मिश्रञ्च सुगन्धसहितं हिमम् ४७
आवाह्य मुद्रयाग्राह्य मूलाधारान्स्वसूत्रतः
प्रणवं पूर्वमुच्चार्य एकमात्रां समुच्चरन् ४८
ऊर्ध्वे हकारमुच्चार्य उद्धृत्य हृदयान्तकम्
अकारश्च उकारश्च मकारो बिन्दुरेव च ४९
अर्द्धचन्द्रनिरोधी च नादोनादान्त एव च
शक्तिश्च व्यापिनी चैव समनाचोन्मना तथा ५०
भाष्योच्चारक्रमेणैव द्वादशान्तं लयान्तकम्
उच्चार्यद्ध्यानमात्रेण उछ्वासं निमिषे तथा ५१
अधोमार्गे समाकृष्य अञ्जलीं बिन्दुलक्षकम्
शिकारमुच्चरेच्चैव वकारं नासिदेशके ५२
यकारं गराडदेशे तु नकारं हृदये तथा
मूलाधारे मकारन्तु उच्चार्याकृष्य अञ्जलिम् ५३
पुनरुद्धृत्य मानन्तु प्रणवं पूर्वमुच्चरन्
हकारमुच्चरेत्पश्चात् वाश्विबीजं समुच्चरन् ५४
बीजं मकारं पश्चात्तु विह्निबीजमतः परम्
नकारन्तु ततः पश्चात् ळकारन्तु ततः परम् ५५
मायाबीजन्ततः पश्चात्स्कन्दबीजमतः परम्
लक्ष्मीबीजं समुच्चार्य षडक्षरमतः परम् ५६
चतुर्थ्यन्तन्नमोन्तञ्च ईशतत्वान्तमुच्चरन्
सम्यक्सादाख्य तत्वञ्च उच्चरेत्तु ततः परम् ५७
शिवभावनात्
अथोञ्जलिं समाकृष्य सुब्रह्मरायाय नम इति ५८
भ्रूमद्ध्यान्तं समानीय्य खरिडका द्वारमुत्तमम्
बिन्दुस्थानमिति ज्ञेयः ५९
तत् द्वारान्मूर्तिमादाय हृदयेनैव मन्त्रतः
आवाह्य स्थापनञ्चैव सन्निधानन्तथैव च ६०

सन्निरोधावकुण्ठन्तु सौधामुद्राप्रतापयेत्
वदशंभो कथं भेदं प्रासादं पूर्वमुच्चरन् ६१
तत्तन्मन्त्रं ततः पश्चात्कथितं वदमे प्रभो
सृष्टिकाले महासेन लोकानुग्रहहेतवे ६२
वाच्य वाचकमन्त्राश्च सप्तकोटिश्च सङ्ख्यया
शिवे तु जायते मन्त्राः सर्वे देवाश्च जायते ६३
पञ्चाक्षरं मन्त्ररूपं सर्वमन्त्राधिनायकम्
सर्वदेवमयन्ध्यात्वा सर्वमन्त्रमयं पुरा ६४
अनादिसंज्ञया प्रोक्तं प्रासादमिति कत्थ्यते
प्रासादं पूर्वमुच्चार्य अन्यमन्त्रं ततः परम् ६५
यदुच्चार्य यजेदेवं तद्देवेदीर्घजीवि च
प्रासादं नोच्चरेत्पूर्वं केवलं मन्त्रमुच्चरन् ६६
आचार्यो नरकं याति देवता च पराङ्मुखा
तद्दोषशमनार्त्थाय प्रासादेनायुतं जपेत् ६७
जपकाले होमकाले तत्तन्मन्त्रेण कारयेत्
प्रासादं नाचरेत्प्रोक्तं सम्यक् ज्ञात्वा च साधकः ६८
शेषन्तु पूर्ववत्पूज्य भोगाङ्गं प्रार्त्थयेत्ततः
जगद्रूपं यजेदीशे पूर्वे चैव पचत् भुवम् ६९
सव्ये विश्वद्रुवं पूज्य नैर्ऋते च द्रुवं द्रुवम्
पश्चिमेऽग्निद्रुवं पूज्य सव्ये हूहू ऋचं यजेत् ७०
आग्नेय्यादि च कोणेषु हृदयादीन्प्रपूजयेत्
जयन्तमग्निशिखश्चैव कृत्तिका पुत्रवत्पतिः ७१
देवसेना पतिश्चैव हेमशूलो विशालदृक्
अष्टमूर्तीन् घटे पूज्य पाद्यार्घ्यं परिकल्पयेत् ७२
चतुर्त्थावरणं पूज्य लोकपालान्समर्चयेत्
पञ्चमावरणे शस्त्रान् यज्ञादीन्पूजयेत्ततः ७३
कुमुदादीन्यजेच्चैव हेतुकादीन्ततः परम्
रम्भादीन्मङ्गले पूज्य होमकर्म ततः परम् ७४
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्

पूर्वादिचतुःकुराडे वा सद्रूपादीन्प्रकल्पयेत् ७५
शेषं प्रधानकुराडे च अर्चयित्वा यथाविधि
पावकादिषडङ्गानि अर्चयित्वा तु साधकः ७६
समिच्चरूश्च मुद्गञ्च माषं शिंबं यवस्तिलम्
वेणुगोधूमचणकं निष्पावङ्गुळमेव च ७७
इक्षुखराडञ्च कदळी पनसं चूतमेव च
विभीतं चैव नारङ्गं लिकुचं सहकारिका ७८
विताळं रसमालाकं वल्लकन्दन्तथैव च
बालकन्दं रुद्रकन्दं पायसं क्षीरमुच्यते ७९
दधिगोघृतलाजञ्च सत्तुश्चापूपमेव च
वरं सर्षपपुष्पञ्च गन्धं पूर्वारुहं हुनेत् ८०
अश्वत्थञ्चैव पालाशं शक्तिखादिरबिल्वकम्
अपामार्गं वटञ्चैव औदुंबरन्तथैव च ८१
दूर्वाङ्गुळी पृष्ठश्च होमयेत् श्रुणु षरामुख
त्रिखराडं होमयेत्पश्चात् तत्वत्रयं हुनेत्ततः ८२
पञ्चास्त्रैर्होमयेत्पश्चात् प्रायश्चित्ताहुतिं हुनेत्
जयादिरभ्यातानञ्च राष्ट्रभृच्च हुनेत्ततः ८३
अग्निस्थं योजयेत्कुम्भे सुमुहूर्त्ते सुलग्नके
क्षित्यादिकुटिलप्रान्तं आसनं मूर्तिमर्चयेत् ८४
विद्यादेहं समाराद्ध्य नेत्रमुद्रां प्रदर्शयेत्
कुम्भात् बीजं समादाय हृदये योजयेत्ततः ८५
परितोष्टघटान्पूज्य हविर्दत्वा निवेदयेत्
स्नपनं कारयेत्पश्चात् आचार्यं पूजयेत्ततः ८६
वैवाह्य कर्मणाराद्ध्य पाणिग्रहणमाचरेत्
लाजहोमन्ततः कृत्वा जंबुवाद्याहुतिं चरेत् ८७
देवसेनापुरा प्रोक्ता वल्लीञ्चैव ततः परम्
प्रत्येकमालयं प्रोक्तं देवसेना प्रकीर्तितम् ८८
महावल्लीं विशेषेण विना प्रत्येकमन्दिरम्
एवञ्च वीरशक्त्याख्यं द्विभुजां शान्तरूपिणीम् ८९

उत्पलं सव्यहस्ते वा लंबितं वामहस्तकम्
किरीटमकुटोपेतं पद्मपीठोपरिस्थितम् ९०
पूर्ववद्यागशालाञ्च मद्ध्ये वेदिं प्रकल्पयेत्
पूर्वाद्यष्टदिशी चैव योनिकुण्डं प्रकल्पयेत् ९१
चन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रकीर्तितम्
अङ्कुरं वास्तुयजनं नयनोन्मीलनं तथा ९२
जलाधिवासनं पश्चात् शयनारोपणं परम्
सौरपूजान्ततः कृत्वा तोरणान्पूजयेत्ततः ९३
शान्तिर्विद्याप्रतिष्ठा च निवृत्तिश्च चतुष्कला
तोरणे पूजयेत्पश्चात् श्रुणु तत्पादयोर्भ्रमा ९४
भ्रमावतीं जयेत्पूर्वे सव्ये संपूज्य काञ्चने
विरूपीं पूजयेत्पश्चात्पश्चिमे तु ततः श्रुणु ९५
निधनं शूलधारी च उत्तरे च ततः श्रुणु
अञ्जनां काञ्चिनी चैव तोरणे पूजयेत्ततः ९६
कपाली विकराळी च पूर्वे चैव समर्चयेत्
श्रीकर्णपद्मसंकाशा वामिनी वृत्तधारिणी ९७
चतुर्दिक्षुपूजयेत्पश्चात् द्वारपूजान्ततः श्रुणु
कपालिनी विलासा च दक्षिणे पूजयेत्ततः ९८
कराळीजिह्विका चैव उत्तरे पूजयेत्ततः
अग्रे मयूरमभ्यर्च्य सर्वविघ्नहरान्भवेत् ९९
देहळ्यामस्त्रराजञ्च पार्ष्णिघातत्रयेण च
वास्तुनाथं प्रपूज्याथ लक्ष्मीञ्चैव गणेश्वरम् १००
ईशे शान्तगुरुं पूज्य वेदिकामद्ध्यमे तथा
आसनं पूर्तिमभ्यर्च्य मूलेनावाहयेत्ततः १०१
प्रथमावरणं पूज्य द्वितीय्यावरणं श्रुणु
दशकन्न्यां समभ्यर्च्य परितोष्टघटे न्यसेत् १०२
चतुर्थावरणे पूज्य लोकपालान्समर्चयेत्
पञ्चमावरणे पूज्य वज्रादीन्पूजयेत्ततः १०३
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्

वह्निस्थन्तु घटे योज्य सुमुहूर्त्ते सुलग्नके १०४
अभिषेकन्ततः कृत्वा हविर्दत्वा निवेदयेत्
स्नपनं कारयेत्पश्चात् अचार्यं पूजयेत्ततः १०५
वैवाह्य कर्मणाराद्ध्य पाणिग्रहणमाचरेत्
लाजहोमन्ततः कृत्वा जंबुवाद्याहुतिं चरेत् १०६
देवसेना पुरा प्रोक्ता वल्लीञ्चैव ततः परम्
प्रत्येकालयमेवोक्तं देवसेना प्रकीर्तितम् १०७
महावल्लीं विशेषेण विना प्रत्येकमन्द्रिरम्
एवञ्च विंशत्याख्यं द्विभुजां शान्तरूपिणीम् १०८
उत्पलं सव्यहस्ते वा लंबितं वामहस्तकम्
किरीटमकुटोपेतं पद्मपीठोपरिस्थितम् १०९
पूर्ववद्यागशालाञ्च मद्ध्ये वेदिं प्रकल्पयेत्
पूर्वाद्यष्टदिशी चैव योनिकुण्डं प्रकल्पयेत् ११०
चन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रकीर्तितम्
अङ्कुरं वास्तुयजनं नयनोन्मीलनं तथा १११
जलाधिवासनं पश्चात् शयनारोपणं परम्
सौरपूजां ततः कृत्वा तोरणान्पूजयेत्ततः ११२
शान्तिविद्या प्रतिष्ठा च निवृत्तिश्च चतुष्कला
तोरणे पूजयेत्पश्चात् श्रुणु तत्पादयोः क्रमम् ११३
भ्रमावतीं पूजयेत्पूर्वे सव्ये संपूज्य काञ्चनाम्
विरूपीं पूजयेत्पश्चात्पश्चिमे तु ततः श्रुणु ११४
नियतं शूलधारी च उत्तरे च ततः श्रुणु
अञ्जनां काञ्चिनीञ्चैव तोरणे पूजयेत्ततः ११५
कपाली च कराळी च पूर्वे चैव ततः श्रुणु
यमजिह्वासुष्ट्री च दक्षिणे पूजयेत्ततः ११६
श्रीकर्णपद्मसंकाशो वामिनी व्रतधारिणी
चतुर्दिक्पूजयेत्पश्चात् द्वारपूजान्ततः श्रुणु ११७
कपाली च विलासी च दक्षिणे पूजयेत्ततः
कराळी जिह्विका चैव उत्तरे पूजयेत्ततः ११८

अग्रे मधूरमभ्यर्च्य सर्वविघ्नहरान्भवेत्
देहळ्यामस्त्रराजञ्च पार्ष्णिघातत्रयेण च  ११९
वास्तुनाथं प्रपूज्याथ लक्ष्मीञ्चैव गणेश्वरम्
ईशे शान्तगुरुं पूज्य वेदिका मद्ध्यमे तथा  १२०
आसनं मूर्तिमभ्यर्च्य मूलेनावाहयेत्ततः
प्रथमावरणं पूज्य द्वितीय्यावरणे श्रुणु  १२१
सकन्यादीन्समभ्यर्च्य परितोष्टघटे न्यसेत्
चतुर्थावरणे पूज्य लोकपालान्समर्चयेत्  १२२
पञ्चमावरणे पूज्य वज्रादीन्पूजयेत्ततः
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्  १२३
वह्निस्थन्तु घटे योज्य सुमुहूर्त्ते सुलग्नके
अभिषेकं ततः कृत्वा हविर्दत्वा निवेदयेत्  १२४
स्नपनं कारयेत्पश्चात् आचार्यं पूजयेत्ततः
भस्मकुम्भं समादाय मूलबेरस्य सन्निधौ  १२५
स्वगृह्योक्तविधानेन अग्निकार्यं समाचरेत्
पादप्रक्षाळणं कृत्वा मधुपर्कं निवेदयेत्  १२६
विष्णुं संपूज्य सव्ये च उत्तरे वज्रमर्चयेत्
धारादत्तं शचीशेन माङ्गळ्यन्धारयेत्ततः  १२७
पाणिग्रहणमाकृष्य कर्त्तव्यं त्रिः प्रदक्षिणम्
लाजहोमन्ततः कृत्वा प्रायश्चित्ताहुतिं हुनेत्  १२८
मन्त्रे वा शिबिके वापि घटावारोपयेत्ततः
ग्रामप्रदक्षिणं कृत्वा तूर्यवाद्यैस्समन्वितम्  १२९
कौतुकञ्च सतीर्थञ्च आलयं वेशयेत्ततः
स्कन्दकुम्भं समादाय मूलबेरे च योजयेत्  १३०
शक्तिकुम्भं समादाय गत्वा देव्यालयं गुरुः
माङ्गल्यं सूत्रमादाय कण्ठे बद्ध्नन्नियोजयेत्  १३१
गजसेनं त्वयादेवे लोकानुग्रहहेतवे
आचन्द्रकारकं प्रात्थ्य स्थातव्यमिहमन्दिरे  १३२
त्रिपक्षपूजांकृत्वा तु अन्ते स्नपनमाचरेत्

इत्थं परं विशेषेण भक्तानुग्रहहेतवे  १३३
उत्सवेशीं प्रकल्प्याथ मूलासक्तिसमोन्नतम्
कर्णान्तं नासिकान्तं वा कण्ठान्तं स्तनमद्ध्यमम्  १३४
कट्यन्तं वा विशेषेण मधु  र्दं कुट्यतम्
बिंबाकृती विशेषेण पूर्ववद्विदजाकृतीम्  १३५
मृदालेपयते पश्चात्पूर्ववत्परिकल्पयेत्
उत्पलं लंबहस्तञ्च त्रिभागांगेन संयुतम्  १३६
पद्मपीठोपरिस्थञ्च महापीठोपरिन्यसेत्
प्रभायायुतसंयुक्तं प्रतिष्ठां कारयेत्ततः  १३७
यागशालां प्रकल्प्याथ कुण्डमण्डलवेदिकाम्
कारयेद्विधिना चैव पूर्ववत्परिकल्पयेत्  १३८
उत्सवेशं समभ्यर्च्य मूलबेरस्य सन्निधौ
संस्थाप्य भद्रपीठेऽपि भस्मकुम्भं समाददेत्  १३९
स्वगृह्योक्तविधानेन अग्निकार्यं समाचरेत्
माङ्गल्यं दापयेत्पश्चात्पाणिग्रहणमाचरेत्  १४०
लाजहोमन्ततः कृत्वा शेषं पूर्ववदाचरेत्
मूर्तिं मूर्तौ च संयोज्य अर्घ्यपाद्यादिकं ददेत्  १४१
मञ्चे वा शिबिके वापि आरोप्यालङ्कृतन्तथा
तूर्यवाद्यैस्समायुक्तं चरेत् ग्रामप्रदक्षिणम्  १४२
गत्वा देव्यालयञ्चैव मण्टपे स्थापयेत्ततः
एवन्देवोत्सवे काले देवेन सह मार्गतः  १४३
प्रदक्षिणक्रमं पश्चात् देवो देवालयङ्गतः
शक्तिं शक्त्यालयङ्गत्वा नित्यपूजां समाचरेत्  १४४
कथं शंभो महेशान देवश्शक्तिः पृथक्पृथक्
उभौ महोत्सवे काले सप्रादक्षिण्यं भवेदथ  १४५
अन्योन्यं नास्तिसंबन्धं नैमित्तिकं वदप्रभो  १४६
इति षण्मुखस्थापनपटलस्त्रिनवतितमः

गोपुरप्रतिष्ठापटलप्रारंभः

योगपीठसमायुक्तं भोगं वामसमन्वितम्
लिङ्गन्तु शिवरूपं यः बीजं पीठमिहोच्यते १
ऊर्ध्वभागमधोभागं मद्ध्यभागं त्रयोविधम्
लिंशब्दं ऊर्ध्वभागन्तु अधोमद्ध्यङ्गमुच्यते २
नादरूपं शिवं ज्ञेयः शिवलिङ्गमिति स्मृतम्
गरूपन्तु महापीठे लिकारं पद्ममुच्यते ३
शिकारञ्च महेशञ्च शिवलिङ्गाकृतिर्भवेत्
जगत् भोगनिमित्त्यार्त्थं तद्वामे भोगशक्तिका ४
तस्मादुमामहेशञ्च शिवदीक्षार्त्थमात्मना
मद्ध्ये स्कन्दाग्निभावञ्च सोमास्कन्नेश्वरं विदुः ५
द्व्यंशमुच्यते
एकांशं जगती चैव एकांशं कुमुदं भवेत् ६
बाह्यं पादांशमित्युक्तं त्रिपादांशं तु घट्टिका
अर्द्धांशं बाह्यमित्युक्तं त्रिपादं वेदिकं भवेत् ७
पादोन्नतं दशांशं स्यात् एकांशं गात्रमुच्यते
एकांशं पद्मजटिलं द्व्यंशन्तु सकपोतिका ८
एकांशं योगमित्युक्तं गृहाकृतिं प्रकीर्तितम्
पार्श्वयोर्वेदघोषञ्च गात्रान्तं वेदिकान्तथा ९
पार्श्वयोर्देवकोष्ठञ्च त्रियंशं विस्तरं भवेत्
पञ्चांशं कोष्ठमित्युक्तं शेषं शालाकृती भवेत् १०
परिविशेषेण चतुरुत्तरत्रिंशत्
पक्षांशं मद्ध्यमे शालां तन्मद्ध्ये तु ततः श्रुणु ११
पञ्चांशं द्वारविस्तारं मद्ध्यशालां भवेत्ततः
पार्श्वयोः पञ्चभागञ्च शालाकारं प्रकीर्तितम् १२
चतुरंशं पार्श्वयोश्च कूटं वातुळमेव च
मद्ध्ये मद्ध्ये द्वियंशं च द्विपादं शालमुच्यते १३
दशांशमुन्नतं प्रोक्तं पार्श्वशालाप्रकीर्तितम्
द्वादशांशन्तु विस्तारं द्वितले मद्ध्यमं तथा १४
त्रिभागं मद्ध्यमे द्वारं विस्तारञ्च पृथक्पृथक्

पार्श्वयोश्च त्रियंशञ्च शालाकारमिहोच्यते १५
त्र्यंशं पार्श्वयोः कूटमद्ध्ये मद्ध्ये तु पूर्ववत्
दळान्तं चतुरंशञ्च त्रिंशदंशं ततोपरि १६
सप्तांशं मद्ध्यमे शालां मद्ध्ये रन्ध्रं द्वियंशकम्
नवांशमुन्नतं प्रोक्तं नासिका कृतिपूर्ववत् १७
युगांशं मद्ध्यमे शालां पार्श्वयोश्च तदन्तरे
नासिका कुटवच्चैव याळाच्च शिखरान्तकम् १८
अष्टादशांशमौन्नत्यं विमानाकृतिदीर्घकम्
कुक्षिं मद्ध्यममासक्तं मद्ध्यमे सिकता तथा १९
तत्र्यंशं पार्श्वयोर्न्नासिं द्विपार्श्वे सिकता द्वयम्
तन्मद्ध्ये कूटमित्युक्तं तदर्द्धं मानमुच्यते २०
पद्मोपरि च स्थातव्यं पञ्चकुम्भं प्रकीर्तितम्
पञ्चांशे श्रोत्रमेवोक्तं तत्साम्यं नासिकाशिरः २१
प्रथमावरणे चैव त्रितलं परिकीर्तितम्
प्रथमावरणे चैव त्रितलं द्वितलन्तु वा २२
द्वितीय्ये ऋतुसङ्ख्या च तृतीय्ये मुनिसङ्ख्यया
चतुर्थे रन्ध्रसङ्ख्या च पञ्चमे रुद्रसङ्ख्यया २३
एवं कल्पयते चैव प्रतिष्ठां श्रुणु षण्मुख
षोडशस्तंभसंयुक्तं पूर्ववद्यागमण्टपम् २४
मद्ध्ये वेदिं प्रकल्प्याथ दर्पणोदरसन्निभम्
पूर्वादिषु चतुर्दिक्षु चतुर्वेदिं प्रकल्पयेत् २५
पञ्चकुण्डं प्रकल्प्याथ मेखलात्रयमुन्नतम्
मद्ध्ये तच्चघटान्यस्य पूर्वादियुगवेदिकाम् २६
एकमेकं न्यसेत्कुम्भं ससूत्रं सापिधानकम्
शिकारे पूर्णकुम्भञ्च यावत्सङ्ख्या घटं न्यसेत् २७
घटं प्रतिविशेषेण एकमेकं न्यसेत् घटम्
ससूत्रं सापिधानञ्च स्थापयेत्साधकोत्तमः २८
सप्तविंशत् घटान्यस्य अस्त्रराजं च वर्द्धनीम्
तोरणान्मङ्गळान्शस्त्रान्पञ्चावरणमार्गतः २९

अङ्कुरं वास्तुयजनं बिंबशुद्धिमतः परम्
रक्षाबन्धनमेवोक्तं कण्ठे बध्नीतसाधकः ३०
पश्चात्सुरादिपूजांश्च वेदिका मद्ध्यमे ततः
पूर्ववच्चासनं पूज्य द्ध्यायेन्महासदाशिवम् ३१
सहस्रबाहुसंयुक्तं सहस्रमकुटोज्वलम्
खण्डेन्दुमौळिं सर्वेशं प्रतिवक्त्रं त्रिलोचनम् ३२
स्फटिकाभन्तनोरेकं सहस्रपदसंयुतम्
एवन्ध्यात्वा विशेषेण पूजयेत्कुम्भमद्ध्यमे ३३
भ्रमतीं वर्द्धनीं पूज्य प्रथमावरणं यजेत्
हृदयादीन्समभ्यर्च्य द्वितीय्यावरणं श्रुणु ३४
धूर्जटिं सर्वलंबञ्च वीररुद्रन्तथैव च
जटिलो भीमकेशश्च भीमसेविन्यमेव च ३५
उग्रदन्तोविराट्रुद्र अष्टकुम्भेषु पूजयेत्
पूर्वादिषु चतुर्दिक्षु वेदिकायाङ्गुहं यजेत् ३६
दक्षिणे दक्षिणामूर्तिं पश्चिमे वैष्णवन्तथा
उत्तरे विधिमभ्यर्च्य पूजयित्वा विशेषतः ३७
यावत्सङ्ख्या च मकुटं घटमेकं पृथक्पृथक्
एकद्वित्रितलं प्रोक्तं मकुटं त्रिकसङ्ख्यया ३८
भूते च मूर्तिसङ्ख्या च मुनिनारन्ध्रसङ्ख्यया
रन्ध्रं वा इन्द्रसङ्ख्या च रुद्रसङ्ख्या त्रयोदश ३९
त्रयोदश च पक्षं स्यात्पक्षस्थं दशकन्तथा
घटं सप्तदशं न्यस्य कुम्भं सप्तदशं न्यसेत् ४०
संविदो मुनिवक्त्रश्च नीलरुद्रो महाविभुः
काळदेहः पार्वतीशोभ्रुकुटः परमेश्वरः ४१
हुंकृतः कळभश्चैव नादशब्दस्सुशब्दकः
रवीशस्सिंह्मवक्त्रश्च विबलो नामिकस्तथा ४२
फलकाश्चैव इत्येते संपूज्य कलशेषु च
कुण्डेष्वग्निं प्रतिष्ठाप्य पूर्वोक्तविधिना हुनेत् ४३
षडद्ध्वन्यासमाराद्ध्य तत्व तत्वेश्वरान्यजेत्

अग्निस्थन्तु घटे योज्य सुमुहूर्ते सुलग्नके ४४
आसनम्मूर्तिमभ्यर्च्य विद्यादेहं प्रकल्पयेत्
प्रधानघटमादाय परिचारकमस्तके ४५
शनैः प्रदक्षिणं कृत्वा आरोप्य गोपुरान्तरे
मद्ध्यमे नासिका मूर्ध्नि घटं स्थाप्य समाचरेत् ४६
महासदाशिवन्ध्यात्वा देवस्याभिमुखे स्थितः
परितोष्टघटान्योज्य नैवेद्यन्धूपदीपकम् ४७
संवक्त्रादिघटं ग्राह्य पूर्णकुम्भेषु योजयेत्
त्रितलादिपक्षसङ्ख्यान्तं गन्धपुष्पादिनार्चयेत् ४८
अङ्गतो जाङ्गलश्चैव पुरुषादितले यजेत्
विद्युन्नागद्वयश्चैव भूतसङ्ख्या तले यजेत् ४९
क्रोधो मृत्युञ्जयश्चैव पूर्वोक्तदेवतैस्सह
मुनिसङ्ख्यातले पूज्य चामरोपीतरागकः ५०
रन्ध्रसङ्ख्या तले चैव हेतुकः कारणेश्वरम्
एकादशं तले पूज्य सङ्गतश्शृंगिणस्तथा ५१
त्रयोदशतले पूज्य घण्टकोवीरचन्द्रिका
पक्षसङ्ख्या तले पूज्य भावयेत्साधकोत्तमः ५२
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं संपूज्य विधिवत् शिवसायुज्यतां व्रजेत् ५३
इति गोपुरप्रतिष्ठापटलश्चतुर्नवतितमः

महामारिप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि ज्वरपीडा निवारणम्
स्फोटकादिप्रशमनं सर्वलोकभयङ्करम् १
मारासुरेणबलिना बीडिते च जगत्त्रये
मारासुरवधं पूर्वं महामारीति नामतः २
त्रिणेत्राचतुर्भुजाशान्ता कराळवदनान्विता
ज्वलोर्ध्वकेशिनीरक्ता कपालं खट्गपाशिनी ३
डमरुन्धार्यते चैव पद्मपीठोपरिस्थिता

शयनं वामपादन्तु लंबितं सव्यपादकम्  ४
कृष्णवस्त्रसमायुक्तां नागयज्ञोपवीतिनीम्
ताटंकं दक्षिणे कर्णे वामे लंबसमन्विताम्  ५
सर्वाभरणभूष्याञ्च प्रभामण्डलमद्ध्यगाम्
एवं संकल्प्यविधिवत् प्रतिष्ठां कारयेत्ततः  ६
ग्रामस्यैशान्यदिग्भागे पूर्वे वा दक्षिणेऽपि वा
पश्चिमे च प्रकर्तव्यं देव्यालयन्तु पूर्ववत्  ७
पूर्वोक्तविधिना चैव षोडश स्तम्भसंयुतम्
मद्ध्ये वेदिं प्रकल्याथ दर्पणोदरसन्निभम्  ८
पूर्वाद्यष्टदिशी चैव योनिकुण्डं त्रिमेखलम्
चन्द्रईशानयोर्मद्ध्ये वृत्तकुण्डं प्रकीर्तितम्  ९
पूर्वादि च चतुर्दिक्षु उपवेदिं प्रकल्पयेत्
पूर्वोक्तविधिना चैव नयनोन्मीलनक्रिया  १०
जलाधिवासनं पश्चात् बिंबशुद्धिमतः परम्
शयनारोपणं पश्चात्पूर्वोक्तविधिनाचरेत्  ११
वेदिका मद्ध्यमे चैव धान्यपुञ्जैरलङ्कृतम्
ससूत्रं सापिधानञ्च सकूर्चं नाळिकेरकम्  १२
करकं समलङ्कृत्य आसनं पूर्ववद्यजेत्
मूर्तिमभ्यर्च्य संपूज्य कलान्यासं समाचरेत्  १३
नेत्रमुद्रां प्रदृश्याथ पुनरावाह्यमुद्रया
प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम्  १४
छ्रींकारन्तु ततः पश्चात् हः हः हुंफट् इत्यपि
स्वाहान्तमुच्चरेत्पूज्य आवाह्य घटमद्ध्यमे  १५
परमेशं प्रपूज्याथ लयाङ्गं पूजयेत्पुरा
भोगाङ्गं पूजयेत्पश्चात् हृदयादि प्रपूजयेत्  १६
काळी च काळरात्री च भद्रा च कोमळी तथा
यामळी चैव पाशाङ्गी च कोराक्षी तथैव च  १७
षट्कोणवासिनीत्येते अष्टकुम्भेषु पूजयेत्
द्वितीय्यावरणं पूज्य तृतीय्यावरणं श्रुणु  १८

पृथिवी अत्भिनी चैव तेजस्वी वायवी तथा
आकाशी चैव आदित्या चन्द्रा च यजमाननी १९
तृतीय्यावरणं पूज्य चतुर्त्थावरणं श्रुणु
लोकपालान्समभ्यर्च्य पञ्चमावरणं श्रुणु २०
वज्रादीन्पूजयेत्पश्चात् मङ्गळान्पूजयेत्ततः
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत् २१
सर्षपान्नं मरीच्यन्नं हरिद्रान्नं हुनेत्ततः
माषान्नं पायसञ्चैव माषापूपं हुनेत्ततः २२
ताम्म्रपात्रे क्षिपेद्द्रव्यं होमयित्वा विशेषतः
कूश्माराडं तु वपाहोमं नाळिकेरान्हुनेत्ततः २३
हिंशु हुत्वा विशेषेण दशांशं होमयेत्ततः
हेलामन्त्रं समुच्चार्य सहस्त्रं होमयेत्ततः २४
भाषामन्त्रं समुच्चार्य सहस्त्रं होमयेत्ततः
प्रायश्चित्तं हुनेत्तत्र अग्निस्थं योजयेत् घटे २५
माहिषाज्यं समादाय चित्रदीपं समाचरेत्
सुमुहूर्ते सुलग्ने च अभिषेकं समाचरेत् २६
महाहविर्न्निवेद्याथ धूपदीपादिकं चरेत्
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः २७
अन्ते पशुबलिङ्कृत्वा पारशैवेन कारयेत्
प्रतिष्ठोत्सवकर्माणि आदिशैवेन कारयेत् २८
नित्यपूजां विशेषेण पारशैवेन कारयेत्
पशुपीठे तु संयोज्य कुरङ्गं सूकरं बलिः २९
वायव्ये महिषं हत्य पारशैवेन कारयेत्
स्नपनं कारयेत्पश्चात्सराजाविजयी भवेत् ३०
एवं यः कुरुते मर्त्यः सपुरायाङ्गतिमाप्नुयात् ३१
इति महामारीप्रतिष्ठापटलः पञ्चनवतितमः

रथप्रतिष्ठपटलप्रारंभः

अथ वक्ष्ये विशेषेण स्थावराणां हिताय च

ज्ञातीनां मूर्तिरित्यर्थं रथसंप्रोक्षणं श्रुणु १
रथस्यारोहणात्पूर्वं प्रासादे देवसन्निधौ
अथवापि रथाग्रे वा पूर्वोक्तं यागमण्टपम् २
मद्ध्ये वेदिं प्रकल्प्याथ पञ्चकुण्डं प्रकल्पयेत्
अथवा एककुण्डं वा मेखला त्रयमुत्तमम् ३
तोरणान्मङ्गळान्शस्त्रान् चतुर्द्वारसमन्वितम्
सप्तविंशत् घटान्यस्य मण्टपाराधनं पुरा ४
द्वारपूजान्ततः कृत्वा देहशुद्धिमतः परम्
वेदिकामद्ध्यमे चैव दशकुम्भं न्यसेत्ततः ५
ससूत्रान्सापिधानाञ्च पङ्कजं रत्नकूर्चकम्
मद्ध्ये सदाशिवं द्ध्यात्वा मूलमन्त्रेण पूजयेत् ६
लयाङ्गं पूजयेत्पश्चात् भोगाङ्गं पूजयेत्ततः
पूर्वादि च चतुर्दिक्षु रविश्रीशवृषन्तथा ७
अर्चयेद्धर्म्मपत्नींश्च आग्नेयादि विदिक्श्रुणु
शशीविनायकौ पूज्य अनन्तञ्च धराधरम् ८
द्वितीय्यावरणं पूज्य शेषं पूर्ववदाचरेत्
एकाग्निं वाथ पञ्चाग्निं कुण्डसंस्कारमेव वा ९
आज्यसंस्कारमेवन्तु स्रुवसंस्कारमेव हि
पूर्वोक्तविधिना चैव होमङ्कृत्वा विशेषतः १०
दशांशं होमयेत्पश्चात्प्रायश्चित्ताहुतिं हुनेत्
रथान्तिकं गत्वा आचार्यो पञ्चगव्यैर्मृदोदकैः ११
त्वक्पल्लवोदकैस्नात्वा गोमयेनैव शुद्ध्यति
पवमानैव शुद्ध्यति १२
पवमानैः पञ्चशान्तिं मन्त्रमुच्चारयेत् जपेत्
गुरो स्थपतिमादाय गत्वा रथसमीपकम् १३
गतागतिप्रमाणेन रज्जुना वेष्टयेत्पुरा
सम्यक्ज्ञात्वा परिक्षाञ्च मन्त्रन्यासमतः परम् १४
गत्वा सिह्मासनोपेतं ऐशान्ये स्तम्भमुत्तमम्
कौतुकं बन्धयेत्पश्चात् अर्चयित्वा तु साधकः १५

वज्रदण्डं द्विधाभ्यर्च्य गोपतिं पूजयेत्ततः
चक्रे रविञ्च शशिनं मद्ध्यदण्डे हरिं यजेत् १६
भारे आधारशक्तिञ्च अनन्तासनमुच्यते
अनन्तं पूजयेत्पश्चात्कुमुदेय ततः श्रुणु १७
धर्मादीनर्चयेच्चैव पावकादिषु कोणके
अधर्मादि चतुश्चैव पूर्वादिषु यजेत्ततः १८
छदनद्वये च संपूज्य पट्टिके शतरुद्रकान्
पूर्वादि लोकपालांश्च वामादिशक्तिमर्चयेत् १९
मण्डलं त्रितयञ्चैव कुटिलान्तं यजेत् गुरुः
पञ्चवक्त्रं दशभुजं मूर्तिं द्ध्यात्वा च साधकः २०
सदाशिवं यजेत् मूर्ति शिखरे पूजयेत्ततः
पूर्वादि कुण्डदेशे तु गुहं संपूजयेत्ततः २१
दक्षिणे दक्षिणामूर्तिं पश्चिमे वैष्णवं यजेत्
पितामहं यजेत्सौम्ये चतुर्दिक्पूजयेत्ततः २२
मुखहविधिं पूज्य सारथी नाममुच्यते
पार्श्वद्वये द्वारपालौ जयञ्च विजयं यजेत् २३
रथाग्रे रज्जुमभ्यर्च्य अष्टनागान्प्रपूजयेत्
चतुर्वेदं समभ्यर्च्य तुरङ्गं पूजयेत्ततः २४
जीवन्यासं ततः कृत्वा षडद्ध्वा च ततः परम्
आधारे भुवनाद्ध्वा च पदाध्वापदयोरपि २५
प्रस्तरे तु कलाद्ध्वा च तत्वाद्ध्वा गळदेशके
वर्णाद्ध्वा मस्तके न्यस्य मूर्ध्नौ मन्त्रं न्यसेत्ततः २६
एतेषु च षडाधारं मूलाधारादिमर्चयेत्
घटस्नानन्ततः पश्चात् नैवेद्यन्धूपदीपकम् २७
घटे तु जलमापूर्य्य गन्धादुपरिपूरितम्
कामबीजं समभ्यर्च्य रथाग्रे स्थापयेत्ततः २८
उत्सवेशसमीपेतु देवानुज्ञाययागतः
लब्धानुज्ञो गुरुं प्राप्य विघ्नेशं पूजयेत्ततः २९
सुमुहूर्ते सुलग्ने च नानावाद्यैस्समन्वितम्

नानाभक्तजनैर्य्युक्तं गीतनृत्तादिभिस्सह ३०
छत्रचामरपिंछैश्च गीर्वाणब्राह्मणैस्सह
मञ्चे वा शिबिके वापि मन्दं मन्दगतिस्तथा ३१
प्रासादमारोप्य गुरुः देवमारोपयेत्ततः
सिह्मासने भवेद्विद्वान् ३२
परितः पटमाबन्ध्य आचार्यस्सव्यभागके
मूलमन्त्रञ्जपित्वा तु तदधः परिचारकैः ३३
ब्राह्मणैश्च सहोपेतः तदधोदासिदासकैः
शिवभक्तजनैर्युक्तं अग्रे सारधिरुच्यते ३४
राजोपचारमार्गेण प्रादक्षिण्य क्रमेण वा
पूर्वस्थाने तु निर्वृत्य धूपदीपन्तथाचरेत् ३५
पुष्पाञ्जलिं पुराप्रोक्तं गन्धांबुजलमाहरेत्
शिवभक्तजनान्सर्वान्विकिरेत् गन्धतोयकैः ३६
प्रदोषसमये प्राप्ते मञ्चे वा शिबिकेऽपि वा
गत्वालयं प्रविश्याथ आरोप्य स्थानमण्टपे ३७
अथवा विड्वरे वापि वृष्टिभिः अन्यपीडितैः
देवमारोप्य मञ्चे वा रथमादाय तत्क्षणैः ३८
आलये वेशयेच्चैव स्नपनं कारयेत्ततः
वक्ष्येऽहं श्रुणु षड्वक्त्ररथं वीद्ध्यन्तरे सति ३९
दण्डचक्रविहीने तु राजादुर्जयमाप्नुयात्
शान्तिहोमं ततः कृत्वा पुनस्सन्धानमाचरेत् ४०
अथवा हीनमेवापि विड्वरे वृष्टिपीडने
मञ्चे वा शिबिके वापि देवमारोप्य तत्क्षणे ४१
प्रादक्षिण्य क्रमेणैव मन्दिरं वेशयेत्ततः
रथे वृष्टिभये प्राप्ते संहिताहोममिष्यते ४२
रथमारोप्य तत्पूर्वं सदावृष्टिभये सति
उदयास्तमपर्यन्तं पीड्यते चोत्सवे तथा ४३
राजादुर्मरणं प्राप्ते तद्दोषशमनाय च
दिशाहोमन्तथा कृत्वा अष्टोत्तरशतन्तु वा ४४

स्नपनं कारयेत्पश्चात् घोरे लक्षं जपेत्ततः
सहस्त्रं होमयेत्पश्चात् शेषं पूर्ववदाचरेत् ४५
सपताकावरोहान्ते पुनरूपस्समाचरेत्
अथवा द्रव्यहीने वा पञ्चास्त्रेण पृथक्पृथक् ४६
घोरपञ्चाशतं सहस्त्रं संप्रात्थ्य परमेश्वरम्
रथाय नमनूपत्ते प्रमादादुत्सवेश्वरम् ४७
अवग्रहो भवेद्राज्ये दुर्भिक्षं व्याधिभिस्तथा
तद्दोषशमनात्र्थाय महास्नपनमाचरेत् ४८
स्नपनं मूलबेरस्य अभिषिच्य विशेषतः
अष्टोत्तरशतं वापि स्नपनं उत्सवेश्वरम् ४९
तदेवानुग्रहकारार्त्थं महापीठन्तु पङ्कजम्
उपरिस्कन्दमित्युक्तं महेशाकृतिमुच्यते ५०
तद्वामे देवसेनाञ्च एकपीठस्थितान्तथा
शिवलिङ्गं महाशब्दं स्कन्दरूपं प्रकीर्तितम् ५१
लोके सृष्टिस्थितिञ्चैव तिरो भावन्तु संहृदि
विश्वं सम्मोहनार्त्थञ्च वीरशक्तिं निरुच्यते ५२
सामाया इति विज्ञेयः तस्मात्सर्वोत्सवे सह
माशब्दं भूम्यते लोके याशब्दं शक्तिरुच्यते ५३
सामाया इति विज्ञेया कुलालचक्रमृत्कथम्
दक्षिणान्दापयेच्चैव ब्राह्मणान्भोजयेत्ततः ५४
आचार्यं पूजयेत्पश्चात्सपुण्याङ्गतिमाप्नुयात् ५५
इति रथप्रतिष्ठापटलष्षण्णवतितमः

भद्रकाळीप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि सर्वज्ञानप्रदायकम्
देवालयानां दृश्यन्ते प्रासादं गोपुराणि च १
यावद्देशेषु दृश्यन्ते तावत्कैलासदृश्यते
गर्भदेहस्य विस्तारं द्विभागं परिकीर्तितम् २
एकांशं वृद्धिदं प्रोक्तं त्रियंशं विस्तरं भवेत्

द्वितीय्यावरणे चैव पञ्चभागन्तु विस्तरम्  ३
तृतीय्यावरणे चैव सप्तांशं ग्राहयेत्ततः
दक्षिणादुत्तराच्चैव षट्त्रिंशत् भागनिर्मितम्  ४
दशभागन्तु सव्ये च उत्तरे दशभागकम्
एकांशं पुरतः कृष्य शेषं व्यश्राकृतिर्भवेत्  ५
त्रिभागं सव्यभागे तु उत्तरे तु त्रिभागकम्
शेषं द्वारसमायुक्तं विस्तारञ्च ततश्शृणु  ६
चतुर्विंशांशविस्तारं तत्समं पादमर्द्धकम्
पञ्चभागोन्नतं विद्यात् वीराकृतिसमारभेत्  ७
उपानं जगती चैव कुमुदं

८

कपालमालाभरणं नागराजविभूषितम्
पद्मपीठोपरिस्थञ्च रक्तवस्त्रसमन्वितम्  ९
वामपादतलञ्चैव रक्तबीजोपरिस्थितम्
चन्द्रलेखासमायुक्तं कराळवदनान्वितम्  १०
प्रभामण्टपमद्ध्यस्थं उग्रदृष्टिभयङ्करम्
आसनं स्थानकं वापि प्रेतारूढमथापि वा  ११
द्वात्रिंशल्लक्षणोपेतं चामुण्डीं पूर्णविग्रहम्
यद्वा चतुर्भुजं वापि पाशं डमरुकन्तथा  १२
शूलं कपालसंयुक्तं शेषं पूर्ववदाचरेत्
यागशालां प्रकल्प्याथ षोडशस्तंभसंयुतम्  १३
चतुर्द्वारसमायुक्तं चतुस्तोरणदृष्टिकम्
चतुरश्रमिति ज्ञेयं मद्ध्यमं परिकीर्तितम्  १४
अथवा एककुण्डं वा योनिञ्चैव प्रकीर्तितम्
मद्ध्ये वेदिं प्रकल्प्याथ चतुरश्रं प्रकीर्तितम्  १५
मृत्संग्रहणमेवोक्तं अङ्कुरार्पणमुच्यते
पुंरूपं देवताः पूर्वं स्वाभाव्यं परिकीर्तितम्  १६
स्त्रीवाच्यमीञ्च संपूज्य उच्चरेत्साधकोत्तमः
वास्तुनाथं प्रपूज्याथ जलाधिवासनं परम्  १७

नयनोन्मीलनं पूर्वं शयनारोपणं परम्
पूर्ववत्सकलं पूज्य तोरणान्पूजयेत्ततः १८
अतिशक्तिं यजेत्पूर्वे इच्छाशक्तिन्तु दक्षिणे
ज्ञानशक्तिं यजेत्सौम्म्ये क्रियाशक्तिन्तु पश्चिमे १९
तोरणे पूजयेत्पश्चात् नन्दिनीञ्च प्रपूजयेत्
द्वारस्य वामपार्श्वे तु नन्दिनं पूजयेत्ततः २०
द्वारस्य दक्षिणे देशे कुण्डोदरं प्रपूजयेत्
समिदाज्य चरू लाजं तिलसर्षपमुद्गकम् २१
यवनीवारचणकं निष्पावं वैणवं तथा
गोधूमं सक्तुपिष्टञ्च लाजमाषगुळन्तथा २२
सितक्षीरदधि इक्षुपायसा पूपमुच्यते
नाळिकेरं मधू चैव पनसं कदळी तथा २३
शमीखादिरमश्वत्थं पालाशं वटबिल्वकम्
अपामार्गार्कसमिधं औदुंबरगळूचिका २४
पूर्वोक्तविधिना चैव होमं कृत्वा समाचरेत्
नवाहञ्चैव सप्ताहं पञ्चाहं वा त्रियाहकम् २५
तत्वतत्वेश्वरान्पूज्य मूर्तिमूर्तीश्वरान्हुनेत्
त्रिखण्डं होमयेत्पश्चात्पूर्णाहुतिं समाचरेत् २६
पञ्चास्त्रं जप्यते विप्राः नृत्तगीतैस्समन्वितम्
भूभुजस्वर्णमादाय पुत्रार्त्थं ग्रहदेवतान् २७
ब्राह्मणान्भोजयेत्पश्चात्सुमुहूर्ते सुलग्नके
कुम्भात् बीजं समादाय बिंबे संयोजयेद्गुरुः २८
आचार्यं पूजयेत्पश्चात् महाहविर्निवेदयेत्
महास्नपनमेवोक्तं तस्यार्द्धं वा तदर्द्धकम् २९
अष्टोत्तरशतं वापि पूर्वोक्तविधिना चरेत्
काळी च काळरात्री च दक्षिणद्वारिपूजयेत् ३०
भद्रा च कोमळी चैव पश्चिमे पूजयेत्ततः
यामळी चैव पाशंगीं उत्तरे पूजयेत्ततः ३१
पूर्वोक्तविधिनाद्ध्यात्वा ध्वजेषु पूजयेत्ततः

पूर्वाद्यष्टदिशी चैव कृष्णद्ध्वजं लिखेत्ततः ३२
स्तंभनी मोहनी चैव ज्वालामुखीं प्रपूजयेत्
तटाकेशी च स्वच्छन्दा त्रिशिराबहुरूपिणी ३३
विलासी च इति प्रोक्ता सन्तुष्टा परिभावयेत्
द्वारपूजां ततः कृत्वा पश्चिमे द्वारदेशके ३४
सव्येकपालिनीं पूज्य असव्ये त्रिदशमोहिनी
उत्तरे मनसिपूज्य मानसीञ्च तदुत्तरे ३५
द्वारस्य देहळी सव्ये इद्यानं भैरवन्तथा
मन्युभैरवमभ्यर्च्य पूजयेत्साधकोत्तमः ३६
सौम्ये तु देहळी वामे विकृती घोटराक्षसी
संपूज्य पूर्ववद्ध्यात्वा अरून्तु देहळीं यजेत् ३७
धूपदीपं ततः कृत्वा प्रविश्यान्तस्समो गुरुः
नैर्ऋते वास्तुमभ्यर्च्य पूर्वाद्यष्टदिशन्तथा ३८
स्तंभेषु गन्धपुष्पैश्च अनन्तं पूजयेत्ततः
विनागां पूजयेत्पश्चात् भद्रा चैव ततः परम् ३९
जयन्तं पूजयेत्पश्चात्
भूसुरान्भोजयेत्तत्र दक्षिणान्दापयेत्ततः ४०
बाह्ये चैव महापीठे मणिकाशक्तिमर्चयेत्
मेषादिछेदनं कृत्वा मांसं निवेदयेत्ततः ४१
प्रत्यहं पूजयेत्पश्चात् द्विकालं वा त्रिकालकम्
एककालमथावापि पूजयेदुक्तमार्गतः ४२
महोत्सवं ततः पश्चात् नवाहं परिकीर्तितम्
प्रासादगोपुरादीनि प्रत्येकालयमुत्तमम् ४३
प्रतिद्ध्वजं प्रकल्प्याथ प्रतिसंवत्सरोत्सवम्
एकालये विशेषेण रक्षाबन्धनमात्रकम् ४४
तस्मात्सर्वप्रयत्नेन पताकारोहणं विना
भेरीताडनं वर्जयेत् अङ्कुरं वर्जयेत्ततः ४५
शेषं पूर्ववदेवोक्तं सर्वपीडानि वारणम्
एवं यः कुरुते मर्त्यस्सराजाविजयी भवेत् ४६

इति भद्रकाळीप्रतिष्ठापटलस्सप्तनवतितमः

मठप्रतिष्ठापटलप्रारंभः

अथातस्संप्रवक्ष्यामि श्रुणुष्वशरवणोद्भव
आदिशैवम्महाशैवं प्रवराख्यन्तथैव च १
अनुशैवोवान्तरश्च आत्मार्त्थं यजनं तथा
पूजामठं प्रकर्तव्यं त्रिविधं मठमुच्यते २
ऋक्पाके संहृते लोके सर्वदेवाश्च वायवः
अग्निश्च स्थापयेच्चैव अशनी सागरोरवा ३
स्वस्वसामर्त्थ्य भेदेन हुङ्कारैः पतनं भुवि
अशनीपतने काले कालाग्निभुवने गतः ४
बालाशिखां प्रपद्येथ ऊर्ध्वे ज्वाला भुविर्भवेत्
बालां शमयतेवेश्म पूर्वदाकृतिमत्सख ५
लिङ्गाकारं स्वयंभूश्च पर्वताकृतिरुन्नतम्
एवमुक्तस्थले वासं कृत्वा चैव द्विजातयः ६
अन्ते शिवपदं प्राप्य शिव एव न संशयः
देविके दिव्य लिङ्गे च आर्षे च राक्षसे तदा ७
मानुषे गाणवे बाणे स्थले वा पाशमुद्रितम्
आदिगुह्याष्टकस्थानं आदिगुह्याष्टकस्तथा ८
गुह्यात् गुह्याष्टकश्चैव पवित्राष्टकमेव च
स्थाणवष्टकञ्च पञ्चैते आजन्ममरणान्तकम् ९
ब्रह्मचर्यव्रतञ्चैव जटीमुण्डी च योगिनः
आदिशैवं महाशैवं क्षत्रियावैश्यपादजा १०
परार्त्थयजनार्त्थं वा तेषां वै परिचारकः
भृत्यो वादासिदासो वा अङ्कितं शशिमुद्रया ११
अन्ये परं परा तेषां आचार्याय प्रदापयेत्
देवस्वं देवताद्रव्यं अनपेक्ष्याथ भूपतिः १२
तेषां प्रदापयेत् द्रव्यं साम्यमुक्तं न दोषभाक्
मठाग्रे पिचसंवर्ज्येत् क्लेयसे विन्यसेत्परम् १३

पाशौ वृषभजं सौम्ये द्ध्वजायामिन्द्रदिक्स्थितम्
विपुलं वा प्रकर्तव्यं यजमानश्च याचरेत्  १४
युगाग्रञ्च शरैर्भक्ते मद्ध्यन्त्यक्त्वा पदन्ततः
ग्रहाणां स्वेच्छयान्यासं यमे वाश्वविनिर्गमाम्  १५
एकभौमं प्रकल्पयेत्
दीर्घशालागृहन्यासं यथायोग्यं निवेशयेत्  १६
पूर्वोक्तमन्तरं सार्द्धं अन्तरं वा यथा तथा
मठके मात्रकं कार्यं पट्टशाला चतुष्कका  १७
पृथिवी पूर्वमुद्दिष्टा द्रव्याभावे च कुट्टिमा
युगाश्रञ्चैव देवानां द्विजानामपि सम्मतम्  १८
क्षत्रियाणां तथा प्रोक्तं अन्ययोरायनाश्रकम्
हीनोक्तं श्रेष्ठजातीनां हितन्नोक्तं विपर्यये  १९
आयाद्यं पूर्ववत्प्रोक्तं आश्वाहिक्लेशिवप्रदम्
सुमुहूर्ते सुनक्षत्रे अनुकूलदिनेऽपि वा  २०
आरंभकालेस्त्वेतेषां उत्सवे तु पृथक्तथा
हिरण्यशालां प्रथमं हीनञ्चोत्तरशालया  २१
सक्षेत्रं पूज्य वा हीनं शालाञ्चेत् वृद्धिदं शुभम्
कुचरल्ली दक्षिणया हीना शालाचाशुविनाशनः  २२
यस्यापया यदा हीनं हृदघ्नं तत्सुताभिकृत्
सिद्धार्त्थी तद्भवे सव्य पारायुवतयो यदि  २३
पश्चिमोत्तरमेवोक्तं यमशूलन्तु मृत्युदम्
उदक्पूगयुतं वेश्म गताख्यं गतकारकम्  २४
पूर्वयाम्ययुतं गेहं यानाख्यं कलहप्रदम्
पूर्वापरयुतं वेश्म च्छुल्लिनामर्त्थनाशनम्  २५
मूले सूत्रे च सन्धौ च चतुष्के चाष्टके तथा
देवालयाग्रे सन्धौ च चैत्यवृक्षसमीपके  २६
श्मशाने पर्वताग्रे च क्षारभौम अहीतले
नाराचेनिन्दितस्थाने नरावासं न कारयेत्  २७
यद्वास्तुपूर्वं तञ्चात्र प्रासादग्रहकल्पितम्

एकाशीतिपदं वापि चतुष्षष्टिपदन्तु वा २८
पूर्वोक्तविधिना चैव वास्तुनाधं प्रपूजयेत्
आत्मतत्वमथो भागे ब्रह्माण्डपतिं विन्यसेत् २९
विद्या तत्व न्यसेन्मद्ध्ये बुद्धितत्वं पदानुगम्
शिवतत्वं न्यसेदूर्ध्वे शुद्धविद्यावसानकम् ३०
शिवं साङ्गं यजेच्चैव तत्वोपस्थापनं स्पृशेत्
प्रोक्षणं जपसान्निद्ध्यं मन्दिरान्स्नापयेत्ततः ३१
कंपेषु पार्त्थिवं तत्र तृणेषु पावकं यजेत्
पावनिं बन्धने पूज्य दण्डकेषु च वायवम् ३२
स्थाणौ स्वाकाशं विन्यस्य शिवं साङ्गं प्रपूजयेत्
शिववत्पूजिते तस्मै दत्वा तोयैस्समर्पयेत् ३३
सुराणां स्थापनं कृत्वा भिक्षावृत्तित्वजीवनम्
देवालयाय यद्द्रव्यं तद्द्रव्यं दैवताय च ३४
पूर्वप्रतिष्ठा यद्वेश्म जीर्णोद्धारे चतुर्गुणम्
मठं पूर्ववदेवोक्तं वास्तुपूजापुरस्सरम् ३५
वेदिका मद्ध्यमे चैव शिवकुंभञ्च वर्द्धनीम्
तोरणान्मङ्गळान्शस्त्रान् ३६
निवृत्यादिकलान्पूज्य लोकपालान्समर्चयेत्
एककुण्डं हुनेत्पूज्य पूर्वोक्तविधिनाचरेत् ३७
सुमुहूर्ते सुलग्ने च प्रोक्षयेन्मण्टपान्तरे
आचार्यं सन्ततिं पुत्रं आदिशैवकुलोद्भवम् ३८
तेषामात्मार्त्थयजनं श्रुणुष्व च षडानन
पूजार्त्थं मण्टपं कुर्यात् दक्षिणद्वारमुत्तमम् ३९
पार्श्वयोश्च गवाक्षं स्यात् एकाशीति पदन्तथा
मद्ध्ये वेदिं प्रकल्प्याथ तत्पूर्वे स्नानवेदिका ४०
ऐशाने वायवे दैत्ये कुण्डं कृत्वा तु साधकः
त्रिमेखलं युगाश्रञ्च कुण्डनाभिपुरस्सरम् ४१
वायव्ये पाकशालाञ्च समित्कूर्चं तदुत्तरे
समाधिस्थानमाग्नेय्यां तत्पूर्वे ऋषिविग्रहम् ४२

एवं कृत्वा तु भूपालः स्वनाम्ना गीतमण्टपम्
देशिकाय ददेद्भूपं प्रतिष्ठां श्रुणु षण्मुख ४३
यद्वापूजामकृत्वा तु प्राकारं बाह्य देशके
बहिः प्राकारपरितः पूर्वे धान्यग्रहं भवेत् ४४
विद्याव्याख्यानशालाञ्च सव्यदिक्कारयेत्ततः
अतिथिरिभ्यागतो मर्त्या पश्चिमे कारयेत्ततः ४५
दैत्ये काष्ठालसङ्कल्प्य वायव्ये पाकशालका
मद्ध्ये कूपं प्रकल्प्याथ तत् बाह्ये सिकतस्थले ४६
पुष्पारामं मनोद्देशे एवन्देशिकमण्टपम्
तीव्रशक्तिनिपातञ्च दृढभक्तिरचञ्चलः ४७
तेषां मठं प्रकल्प्याथ वास्तुनाधं प्रपूजयेत्
चतुष्षष्टिपदं कृत्वा पूर्ववत् वास्तुपूजनम् ४८
लोकधर्मणिचाञ्चल्यं मासे च शिवपूजकः
तेषां मठानि कृत्वा तु वास्तुपूजापुरस्सरम् ४९
एकाशीति पदं कृत्वा मद्ध्ये वास्तुप्रपूजयेत्
कुम्भमेकं न्यसेच्चैव ब्राह्मणान्भोजयेत्ततः ५०
मण्टपं प्रोक्षयेच्चैव पर्यग्निकरणन्तथा
यद्वा किंचिद्विशेषोऽस्ति पूजास्नानमलङ्कृते ५१
वास्तुपूजां यजेत्पूर्वं दशकुम्भन्न्यसेत्ततः
भीमरुद्रं यजेन्मद्ध्ये वर्द्धनीं वामपार्श्वके ५२
पूर्वाद्यष्टघटे पूज्य लोकपालान्समर्चयेत्
कुण्डे वा स्थण्डिले वापि वह्निकार्योक्तमार्गतः ५३
रक्षाबन्धनमेवोक्तं मद्ध्ये ऐशान्यदिक्स्थले
स्तंभे रक्षां प्रकुर्वीत सुमुहूर्ते सुलग्नके ५४
वेदिका मद्ध्यमे पूज्य स्थिरासनं प्रकल्पयेत्
वह्निस्थन्तु घटे पूज्य घटमादाय देशिकः ५५
वेदिका मद्ध्यदेशे तु घटाभिषेचनं यजेत्
पूर्वाद्यष्टदिशी पार्श्वे इन्द्राद्यष्टघटान्न्यसेत् ५६
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः

एवं कृत्वा विशेषेण शिवसायुज्यमाप्नुयात् ५७
इति मठप्रतिष्ठापटल अष्टनवतितमः

विद्यापीठप्रतिष्ठापटलप्रारंभः
अथ वक्ष्ये विशेषेण विद्यापीठं न्यसेत् गुह
सुवर्णरजतं वापि ताम्रं वा करमानतः १
लेखयेदक्षरं प्रोक्तं अथवा भाषणं शिलाम्
संलिखेत् विधिवत्कृत्वा तालपत्रेण वा गुह २
पञ्चविंशाङ्गुलं दीर्घं विस्तारन्तु त्रियङ्गुलम्
अथवा सिक्षुसूक्ष्माणि अभावे देशिकोत्तमः ३
द्वादशाङ्गुलविस्तारं तदर्द्धं वा तदर्द्धकम्
चतुस्त्रीणि तयोर्मद्ध्ये तन्मद्ध्ये रंध्रमुत्तमम् ४
नकर्कशञ्च सुश्लक्ष्णं एवं पुस्तकलक्षणम्
क्षौमं कार्पाससूत्रं वा चतुर्विंशतिसूत्रकम् ५
त्रिगुणं त्रिगुणी कृत्य संयुतं रज्जुमुत्तमम्
सौवर्णे रजते ताम्रे ऋजुत्वं कामशैलकम् ६
श्रीताळीदळमेवोक्तं तालपत्रमथापि वा
रज्जुनाप्रोतयेद्रंध्रे लेखयेदक्षरं पृथक् ७
गजमित्युत्तरं प्रोक्तं अश्विनीति च मद्ध्यमम्
पिशाचीत्यक्षरं प्रोक्तं पिशाची मन्दगतिं भवेत् ८
अश्विनी च विलेखा च दीर्घाक्षरसमीरिति
छिन्नं भिन्नं तथा वक्रं पिशाच लिखितं स्मृतम् ९
नानादेशसमुद्भूता लेखयेदक्षराणि च
नानाकथामहागीता मूलमन्त्रविचारतः १०
पञ्चपीठाज्य शाशूलं तस्याग्रे सुषिराणि च
कार्पासरज्जुना वेष्ट्य चतुसाधुकसंयुतम् ११
गात्रत्रीति चतुर्युक्तं पाणिपीठस्य लक्षणम्
पूर्वोक्तयागं सङ्कल्प्य मद्ध्ये वेदिं प्रकल्पयेत् १२
पञ्चकुण्डं प्रकल्प्याथ मेखलात्रयमुत्तमम्

अङ्कुरार्पणपूर्वन्तु मण्टपान्नैर्ऋते बहिः १३
एलालवङ्गतक्कोल उशीरञ्चन्दनैर्युतम्
लेपयेत्पुस्तके यत्र कौतुकं बन्धयेद्बुदा १४
तत्तदागमबीजेन यवपञ्च शयनोपरि
शाययेत्पञ्चशयने वेदिका मद्ध्यमे श्रुणु १५
शिवकुम्भन्तु तन्मद्ध्ये पार्श्वयोर्वर्द्धनी द्वयम्
विद्येश्वरघटान्यस्य सप्तधान्योपरिन्यसेत् १६
तृतीयस्वरसंयुक्तं द्वादशस्वरसंयुतम्
बिन्दुनादसमायुक्तं यन्मन्त्रं कारणागमम् १७
मन्त्रानदह्यते तेषां प्रासादेनैव पूजयेत्
शिवप्रशंसा यत् ग्रन्धं तद्घटे शिवमर्चयेत् १८
गौरी प्रशंसा यत् ग्रन्धं प्रोक्षणार्थन्तु यद्घटम्
गौरीमन्त्रं यजेत्पूज्य विद्येशादीन्यथोक्तवत् १९
वर्द्धन्यां यजनं गौरी उमां पार्श्वद्वये यजेत्
यथोक्तमन्त्रेण वत्कुण्डे कुण्डसंस्कारपूर्वकम् २०
वह्निकर्महुनेत् द्रव्यैस्समिधापि च पायसैः
अग्निस्थन्तु घटे योज्य घटमादाय देशिकः २१
दर्पणं सन्निधौ स्थाप्य दर्पणे पूजयेद्घटम्
हविर्निवेदयेद्विद्वान्धूपदीपान्समर्चयेत् २२
कारणाद्यैश्च मन्त्रादीन् अष्टविंशति सङ्ख्यया
तन्त्रेशान्यजनात्तत्तत् नाम्ना संपूजयेद्गुरुः २३
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यः शिव एव न संशयः २४
इति विद्यापीठप्रतिष्ठापटल एकोनशततमः

ऋषिस्थापनपटलप्रारंभः
अथ वक्ष्ये विशेषेण आयुरारोग्य संपदम्
अष्टाङ्गयोगसिद्ध्यर्थं ऋषिस्थापनमुत्तमम् १
देवालये शिवारामे मठे वा स्थापनं गुरुः

ईशानश्चैव दूर्वासः विश्वामित्रः प्रचेतसः २
जमदग्निः क्रतुश्चैव अत्रीभृगुश्च गौतमः
भारद्वाजः काश्यपश्च वसिष्ठो द्वादशाख्यकम् ३
यागशालां प्रकल्प्याथ नवहस्तन्तु विस्तरम्
मद्ध्ये वेदिं प्रकल्प्याथ पूर्वे कुराडं समुच्यते ४
पूर्वादि च चतुर्दिक्षु वेदिकाञ्चतुरश्रकम्
आग्नेय्यादि चतुर्दिक्षु वेदिका वृत्तमुच्यते ५
पूर्वाशादि चतुर्दिक्षु कुराडं वै चतुरश्रकम्
आग्नेय्यादि चतुर्दिक्षु वृत्तकुराडं प्रकीर्तितम् ६
चतुरश्रन्तु तन्मद्ध्ये वायव्ये च ततश्शृणु
नैर्ऋते चैव ईशाने चतुरश्रन्तु वेदिकाम् ७
त्रिकोणञ्चैव षट्कोणं पद्मकुराडं प्रकल्पयेत्
वेदिका मद्ध्यमे चैव रन्ध्रसङ्ख्या घटं न्यसेत् ८
पृथक्पृथक् घटं स्थाप्य सप्तधान्योपरिस्थितम्
अङ्कुरार्पणपूर्वन्तु जलाधीवासनं परम् ९
बिंबशुद्धिं ततः कृत्वा शयनारोपणं परम्
रक्षाबन्धनमेवोक्तं तत्वतत्वेश्वरं यजेत् १०
ईशानं मद्ध्यमे पूज्य नामाद्यक्षरमुद्धृतेत्
हुङ्कुरं बिन्दुसंयुक्तं नादान्तमुच्चरेत्ततः ११
ञ्चैव मुनीनां मन्त्रमुत्तमम्
तद्धटे पूजयेत्पश्चात्पूर्वाशादि चतुर्दिशि १२
दूर्वासविश्वामित्रश्च प्रचेतसजमदग्निकः
पूर्वादिपूजयेत्पश्चात् आग्नेय्यादि ततश्शृणु १३
क्रतुरत्रिभृगुश्चैव गौतमः पूजयेत्ततः
भारद्वाजः काश्यपश्च वसिष्ठोवायवादयः १४
संपूज्य विधिवत्कुम्भे प्रथमावरणं पुरा
द्वितीय्यावरणे पूज्य लोकपालान्समर्चयेत् १५
तोरणान्मङ्गळान्शस्त्रान्पूर्ववद्विधिनाचरेत्
अग्निमावाह्य संपूज्य उक्तमन्त्रेण होमयेत् १६

जीवन्याससमायुक्तं वह्निस्थन्तु घटे यजेत्
सुमुहूर्ते सुलग्ने च तत्तत्कुम्भाभिषेचनम् १७
हविर्निवेदयेत्तत्र ब्राह्मणान्भोजयेत्ततः
आचार्यं पूजयेत्पश्चात्सपुण्यां गतिमाप्नुयात् १८
इति ऋषिप्रतिष्ठापटलश्शततमः

शिवभक्तप्रतिष्ठापटलप्रारंभः
अथातस्संप्रवक्ष्यामि शिवभक्तप्रतिष्ठितम्
भक्तप्रतिष्ठां कर्तव्यं येनराः दीर्घजीविनः १
अचिरात्प्रतिपठ्येते शिवज्ञानं भविष्यति
तस्मात्सर्वप्रयत्नेन प्रतिष्ठां श्रुणु षण्मुख २
ब्रह्मक्षत्रियवैश्यो वा शूद्रो वा पारशैवकः
स्त्रियो वापि प्रकर्तव्यं सालोक्यं पादमेवते ३
सामीप्यञ्चैव सारूप्यं सायुज्य पदहेतवे
एतान्जात्या शिवाबीज टीवमुक्तकेशिवा ४
मुण्डी वामकुटं वापि शिवेनानुग्रहं पुरा
शरीरान्ते सुसंज्ञात्वा भूतकाले त्वनुग्रहम् ५
भूतकालं कथं सङ्ख्यां पारमेशवरुद्रकाः
मुक्तात्मापि शरीरान्ते तद्वर्षप्रभृतिस्तथा ६
सहस्रवार्षिका सङ्ख्या तत्परं च इहोच्यते
भूतकालमिति ज्ञेयः तस्योर्ध्वे श्रुणु षण्मुख ७
द्वितीय्यावरणे चैव तृतीय्यावरणेऽपि वा
सव्योमं तु प्रकर्तव्यं उत्तराभिमुखं तथा ८
यद्वा चेद्दीक्षिताश्चैव सन्यासीयोगपीठिका
चार्यानुषान्नयजनं शिवभक्तानुकंपया ९
वानप्रस्थो ग्रहस्थो वा मृदान्तश्शिष्यपुत्रकः
शिलायां लोहजं वापि दारुजैर्वा स्वरूपकम् १०
अञ्जलिञ्चाक्षमालाञ्च योगहस्तो भवेच्चरेत्
श्मशाने च शिवारामे बाह्ये वीध्यन्तरे मठम् ११

प्रतिष्ठाद्यर्चनान्तं वा
कथं शंभो पुरा प्रोक्तं अप्रमाणमिहापि वा १२
साधुसाधुश्रुणुष्वाहं वक्ष्ये ज्ञानप्रदं गुह
इहलोकेन दृष्टल्यं तस्मात् मूर्तिविधीय्यते १३
सहस्त्रवर्षसङ्ख्या च तदूर्ध्वे च प्रतिष्ठितम्
चिरकालं भजे लोके नानादेशे प्रशस्तकम् १४
श्रुत्वा चैव महच्छब्दं प्रतिष्ठां कारयेत्ततः
प्रथमावरणे कल्प्य देवस्य सव्यपार्श्वके १५
उत्तराभिमुखो भूत्वा प्रतिष्ठां कारयेत्ततः
चिरकालन्तुको ज्ञात्वा प्रतिष्ठां कारयेत्ततः १६
भूतकायं विहायश्चेत् आत्मापरवशंगतः
चित्तं महपरे ज्ञात्वा देवस्तत्समये शिवः १७
साक्षादनुगृह्य शिष्यं इतराणामदृश्यकम्
तस्मात्सर्वप्रयत्नेन बहुकालन्नयेत् गुरुः १८
नानादेशे प्रशस्तं हि नानापरिजनैस्तुतः
नानासज्ञनसन्तुष्टः परिपाकीदयापरः १९
साक्षात्सारूप्यसामीप्यं लभते तु न संशयः
नानाजनैस्तुतिं श्रुत्वा देवर्षिगणकिन्नरैः २०
कथं सारं गुरुर्ज्ञात्वा शिवभक्तप्रतिष्ठितम्
क्रीतादिपाप्मयत्रेते कलौ चतुर्युगे समम् २१
बहुकालात्परं पूज्य प्रतिष्ठां श्रुणु षणमुख
षोडशस्तंभसंयुक्तं चतुर्द्वारसमन्वितम् २२
मद्ध्ये वेदिं प्रकल्प्याथ पञ्चकुण्डं प्रकल्पयेत्
अङ्कुरार्पणपूर्वन्तु जलाधिवासनं परम् २३
बिंबशुद्धिं ततः कृत्वा अक्षिमोक्षणपूर्वकम्
शयनारोपणं पश्चात् घटेशं पूजयेत्परम् २४
सप्तधान्यस्थितं कुम्भं सर्वशोभान्वितं करम्
स्थापितं हेमरत्नैश्च सकूर्चं नाळिकेरकैः २५
अमुकाख्यं समावाह्य नाम्नाद्यक्षरपूर्वकम्

नाम्नाञ्चैव नमोन्तञ्च घटे संपूजयेत्ततः २६
परितोष्टघटान्यस्य लोकपालान्समर्चयेत्
यद्वाश्मशाने बाह्ये तु परितोष्टघटे श्रुणु २७
मनो बुद्धिरहङ्कारं व्योमवायुकृशानवः
पृथिव्या सह एतेष्टौ अष्टकुम्भेषु पूजयेत् २८
रक्षाबन्धनपूर्वं यः तत्वतत्वेश्वरं न्यसेत्
मूर्तिमूर्तीश्वरान्यस्य षट्त्रिंशत्तत्वसिद्धिपान् २९
विन्यसेत्त्रि ञ्च मालाप्रतिसरन्नरः
वह्निकर्मसमाराद्ध्य पूर्वोक्तविधिनाहुनेत् ३०
प्रायश्चित्ताहुतिं हुत्वा वह्निस्थं योजयेत् घटे
सुमुहूर्ते सुलग्ने च प्रोक्षयित्वाभिषेचनम् ३१
हविर्दत्वा निवेद्याथ धूपदीपं समाचरेत्
ब्रांहणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः ३२
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात्
इति शिवभक्तप्रतिष्ठापटल एकोत्तरशततमः

ध्वजस्थापनपटलप्रारंभः

अथातस्संप्रवक्ष्यामि ध्वजस्थापनमुत्तमम्
करञ्च वकुळं शीर्षं तालहिन्तालचंपकम् १
वेणुञ्च खादिरं बिल्वं देवदारुपलाशकम्
नाळिकेरमधूकञ्च गिरिमेधच्छदन्तथा २
लसत्सप्तच्छदं भुजं प्रवाळैरन्यकैरपि
बालवृद्धं त्यजेच्चैव वृक्षमादाय स्तथा ३
चतुष्षष्ठाङ्गुलं नाहं
तदन्तं समयामञ्च ध्वजदण्डस्य भूषणम् ४
सप्तभागं प्रकुर्वीत आमूलाग्रं प्रकीर्तितम्
ब्रह्मभागं रुद्रसङ्ख्या चतुरश्रं प्रकीर्तितम् ५
पादोत्तरं एकभागं अष्टाश्रं वाप्रकीर्तितं
त्रिभागं रुद्रभागं स्यात् वृत्तं वा परिकीर्तितम् ६

एकांशं यष्टिदीर्घञ्च षोडशाङ्गुलविस्तरम्
उपदण्डं त्रियोज्या च न कर्कशं सुशीलकम् ७
भद्रपीठाकृतिं कृत्वा मद्ध्ये च वृषपीठयोः
स्थापनं इष्टिका मद्ध्ये स्वर्णेन रजतेन वा ८
ताम्रेण वासमाराद्ध्य आमूलाग्रात्प्रतिबेरकम्
यागशालां प्रकल्प्याथ मद्ध्ये वेदिं प्रकल्पयेत् ९
तत्पूर्वे कुण्डमुच्यते
मद्ध्ये दशघटं स्थाप्य ससूत्रं सापिधानकम् १०
मण्डरुद्रं यजेन्मद्ध्ये पीठशक्तिं समर्पयेत्
लोकपालान्समभ्यर्च्य पूर्वोक्तविधिनाचरेत् ११
सहस्त्रं होमयेत्पश्चात् रात्रौ जागरणन्तथा
प्रभाते स्नानमाचम्म्य प्रायश्चित्ताहुतिं हुनेत् १२
वह्निस्थन्तु घटे योज्य तत्वतत्वेश्वरान्यजेत्
मूर्तिमूर्तीश्वरान्यस्य योजयेद्दण्डमूलके १३
अभिषिच्य घटं पश्चात् हविर्दत्वा यथाविधि
दक्षिणान्दापयेत्पश्चात् ब्राह्मणान्भोजयेत्ततः १४
एवं यः कुरुते चैव शिवसायुज्यमाप्नुयात् १५
इति ध्वजस्थापनपटलो द्व्युत्तरशततमः

उद्यानलक्षणपटलप्रारंभः
आत्मार्त्थे वा परार्त्थे वा उद्यानं कल्प्यते नरः
सारे वा क्षारभूमौ वा रुकदादिष्टकस्थले १
परिकल्पयेत्
चंपकं करवीरञ्च नन्द्या वर्तञ्च मल्लिका २
जातिनीलोत्पलञ्चैव ह्रीबेरञ्च द्विपद्मकम्
करान्तं बकपुष्पञ्च उरूबकुसुमन्तथा ३
पुन्नागं पाटलीञ्चैव शङ्खञ्च श्रियावर्तकम्
बहुकर्णिकमेवोक्तं कर्णिकारं द्विकर्णिका ४
लक्ष्मी च वकुळं बिल्वं रक्तमन्दारकौरवम्

श्वेतार्कं मालती द्रोणं श्वेतलोद्ध्रं तथैव च ५
अङ्कोलं माशिपत्रञ्च भृङ्गराजं तथैव च
हेमधुत्तूरदूर्वा च रक्तधुत्तूरमेव च ६
बृहती च शिखा त्रारविन्दकम्
विष्णुक्रान्तञ्च काश्मन्तं आरग्वधञ्च केतकी ७
कोरण्डं गैरिकञ्चैव गिरिकर्णिककूटजम्
प्रवाळं मल्लिकारुद्रं जवन्ति पिञ्छिला तथा ८
दान्तं पालाशकुटजं चन्द्रकान्तसुमन्तथा
रविकान्तञ्च रुद्राक्षं मल्लिका तुळसी तथा ९
सिन्धुवारन्तु श्रीपुष्पं सुरक्तकरवीरकम्
डाडिमीरक्तशाकञ्च कपित्थं रुद्रमञ्जरी १०
निर्गुण्डी विमली भद्रा माधवी मञ्जरी तथा
भृङ्गराजं शमीहैमं अपामार्गन्तु कोलिका ११
पुष्पभेदैः पत्रभेदैरेतान्यन्यानि सर्वशः
सहस्रसङ्ख्यया चैव शिवप्रीतिकरं भवेत् १२
ज्ञानदूर्वांसमभ्यर्च्य देहान्ते मोक्षमाप्नुयात्
अज्ञानेन यजेच्छंभुं देहान्ते भूपतित्वकम् १३
पूर्वोक्तविधिना चैव वास्तुनाथं यजेत्पुरा
पश्चात्पुष्पं ग्रहे चैव श्रुणुष्वथ १४
कल्हारं कोष्ठं लशुनं मूलकं
कदळीमूलपीयूषं व्याघ्री व्याघ्रनवी तथा १५
रुद्राक्षमल्लिकाबीजं एतान्यन्यानि सर्वशः
नागदारुदेवदारुनागपुष्पं महालता १६
श्वेतलोध्रं मृगीशाखं एतानाहृत्यदेशिकः

इति उद्यानलक्षणपटलस्र्युत्तरशततमः

महाभिषेकपटलप्रारंभः

महाभिषेकं वक्ष्यामि श्रुणुष्व च षडानन
अयने विषुवे चैव अन्यत्संज्ञं दिनेऽपि च १

वैशाखपौर्णिमायान्तु आर्द्रायां मृगशीर्षके
सोमवारे कुहूप्राप्ते गुरुभौमदिनैस्सह २
आषाढे पुष्यमासे तु अमावास्यादिनेऽपि वा
तस्मिन्मासे पुष्यऋक्षे तत्काले वृषलग्नके ३
फाल्गुने चोत्तरे चैव ज्येष्ठायां मूलऋक्षके
कार्तिके होमवारे तु तन्मासे वह्निऋक्षके ४
पूर्वाषाढे प्रोष्ठपदे चन्द्रसूर्योपरागके
महाळये व्यतीपाते अर्द्धोदयमहोदये ५
अन्यत्पुण्यदिने चैव मनस्सन्तुष्टिकालके
यजमानस्य नक्षत्रे राज्ञां जन्मदिनर्क्षके ६
अभिषेकन्तु यः कुर्यात् अमोघफलदं भवेत्
सर्वशत्रुक्षयकरं सर्वव्याधिनिवारणम् ७
क्षयापस्मारकुष्ठादि महारोगनिवारणम्
जयात्र्थी जयमाप्नोति धनात्र्थी धनमाप्नुयात् ८
पुत्रात्र्थी लभते पुत्रान्मोक्षात्र्थी मोक्षमाप्नुयात्
वर्षहीनस्य तत्काले महावर्षं भविष्यति ९
आचार्योबुद्धिमान्प्राज्ञः आगमात्र्थविशारदः
दीक्षात्रयसमोपेतः शिल्पशास्त्रसमन्वितः १०
अध्वन्यासजपामार्गासने च कृतविग्रहः
स्वात्र्थमात्मात्र्थपूजादि परात्र्थशिवपूजकः ११
सामान्यार्घ्यसमोपेतं भूतिरुद्राक्षधारकः
प्राणायामादिनियमैः प्लावनादित्रयन्तथा १२
आवाहनादिसामत्र्थ्यं महाजालप्रयोगतः
मन्त्रसामत्र्थ्यनिरतः वास्तुनिर्णयबोधकः १३
आचार्यलक्षणैर्युक्तः पुत्रवानग्निमान्बुधः
नित्यं नैमित्तिकं काम्यं तन्त्रसामत्र्थ्यबोधकः १४
वैदिकश्शान्तचित्तात्मा वेदाद्ध्ययनतत्परः
अग्निष्टोमादिनिरतः शिवदीक्षा परायणः १५
शिवदीक्षाविहीनस्तु सर्वज्ञस्तु सनिन्दितः

सात्विकः पुत्रवान्पूज्यो भस्मरुद्राक्षधारकः १६
सर्वशास्त्रार्थतत्वज्ञः परिक्षितद्विजोत्तमः
श्रीरुद्रन्नमकञ्चैव चमकं रुद्रसङ्ख्यया १७
रुद्रसङ्ख्या जपेच्चैव महान्यासपुरस्सरः
रुद्राभिषेकः कर्तव्यः उत्तमो मद्ध्यमाधमः १८
अतिरुद्रस्य सङ्ख्या च शतसङ्ख्या दशद्विजः
सहस्रशतसङ्ख्या च महारुद्रं जपेत् द्विजः १९
आलयाग्रे विशेषेण मण्टपं चतुरश्रकम्
गोमयालेपनं कृत्वा विष्टचूर्णैरलङ्कृतम् २०
नानालङ्कारसंयुक्तं चतुस्तोरणभूषितम्
सर्वद्रव्य समायुक्तं वाद्यघोषसमन्वितम् २१
गणेशं पूजयेत्पूर्वं गुरुपूजा पुरस्सरम्
पुण्याह वाचनं कृत्वा स्थापयेत्पञ्चगव्यकम् २२
तन्मद्ध्ये वेदिकां कृत्वा तत्पूर्वे त्वेकवेदिकाम्
नीवारमुत्तमं प्रोक्तं अष्टद्रोणैश्च शालिभिः २३
तदर्द्धन्तण्डुलञ्चैव तदर्द्धं तिलसंयुतम्
तदर्द्धं लाजसंयुक्तं स्थण्डिलोपरिकल्पयेत् २४
द्वात्रिंशत्प्रस्थसम्पूर्णं स्वर्णं वा रजतन्तु वा
ताम्रं वा कन्यसं प्रोक्तं कुम्भं संगृह्य बुद्धिमान् २५
परिवारघटञ्चैव आढकेन तु पूरितम्
तत्समं वर्द्धनीञ्चैव उत्तमन्तु विधीयते २६
स्वर्णकुम्भन्तु संगृह्य पञ्चसूत्रेण वेष्टयेत्
आवाहनादिपूजान्तं कामिकोक्तविधानतः २७
कुम्भं संस्थापयेत्पश्चात् वर्द्धनीं पूजयेत्ततः
अनन्तादिशिखण्डयन्तं प्रत्येकं पूजयेत् बुधः २८
तदग्रे तु शिवं पूज्य शतलिङ्गं विशेषतः
गौरी तिलकमथवा पञ्चावरणसंयुतम् २९
तदग्रे कुण्डनिर्माणं अग्निकार्योक्तमार्गतः
अग्न्याधानादिकं सर्वं विवाहान्तं सुपूजयेत् ३०

चतुर्दिक्षुजपेच्चैव रुद्राद्ध्ययनसंयुतम्
पञ्चास्त्रपदमन्त्रेण पञ्चवर्णं जपेत् बुधः ३१
गणेशादिषु मन्त्रेण जपेद्धर्म्मर्य प्रदक्षिणम्
पञ्चाक्षरमहामन्त्रं प्रणवेन षडक्षरम् ३२
षडक्षरं त्वष्टवर्णं नवर्णान्दशवर्णकम्
पञ्चविंशति भेदानि पञ्चाक्षरं जपेत् बुधः ३३
गणेशस्कन्दनन्दीशा महाकाळादिदेवताः
अघोरं दक्षिणामूर्तिं शास्ताकाळी नवग्रहाः ३४
क्षेत्रपालादिमन्त्रैर्वा जपेत्सर्वत्र सन्निधौ
इन्दुशेखरमूर्त्यादीन् पञ्चविंशतिविग्रहान् ३५
तत्तन्मन्त्रं जपेन्मंत्री तत्तद्देवप्रियार्त्थकम्
विनामन्त्रजपेनैव फलं स्वल्पमवाप्नुयात् ३६
अग्निमद्ध्ये विशेषेण शिवमावाहयेत्ततः
वर्द्धनीं परिवारेण पञ्चावरणसंयुतम् ३७
संपूज्य विधिवत्कृत्वा व्याहृतीञ्च हुनेत्क्रमात्
महादेवादिमन्त्रेण पालाशादि हुनेत्क्रमात् ३८
महादेवहरो रुद्रः शङ्करो नीललोहितः
ईशानो विजयश्चैव देवदेवो भवोद्भवः ३९
कपालीशश्च सर्वज्ञः तत्तन्मन्त्रेण होमयेत्
पालाशवकुळाश्वत्थ प्लक्षोदुंबरबिल्वकम् ४०
खादिरं वेरवपामार्गं दूर्वामालूरपत्रकम्
सहस्त्रं वा तदर्द्धं वा सावधानेन होमकम् ४१
समिदाज्य चरून्लाजान्सक्तुमाषतिलं यवम्
कदळीगुळखण्डञ्च वेणुद्रव्येण होमयेत् ४२
ईशानाद्यस्त्रपर्यन्तं तद्द्रव्यञ्च हुनेत्क्रमात्
मुद्गान्नं पायसान्नञ्च माषापूपं हुनेत्क्रमात् ४३
मूलार्णन्तु हुनेत्पश्चात् दशांशं परिवारकम्
स्विष्टकृद्धोमपूर्वन्तु अभिषेकं यथा क्रमम् ४४
द्वारपूजादिसर्वत्र पूजयेत्तु विचक्षणः

गर्भगेहं प्रविश्याथ घण्टामन्त्रेण ताडयेत् ४५
पाद्यमाचमनं चार्घ्यं विशेषार्घ्यञ्च बुद्धिमान्
सामान्यार्घ्यं विशेषेण शङ्खपूजापुरस्सरम् ४६
नमोन्तं मूलमन्त्रेण निर्माल्यन्तु विसर्जयेत्

पुष्पं मूर्ध्नि च दापयेत्
महाभिषेकं विधिवत् गन्धतैलादिसङ्ग्रहम् ४८
द्रव्यं प्रतिविशेषेण सहस्रप्रस्थसंयुतम्
तदर्द्धं मद्ध्यमञ्चैव तदर्द्धं कन्यसं भवेत् ४९
शतप्रस्थं यथालाभं अभिषेकं यथा क्रमम्
अथवा द्रव्यहीनस्य प्रमाणं वर्ण्यते गुह ५०
अभिषेकादिपूजान्तं मूलमन्त्रमनुस्मरन्
आढकं गन्धतैलञ्च तदर्द्धं लिकुचं रसम् ५१
तदर्द्धं मुद्गपिष्टादि तत्समं त्रिभिरं रसम्
प्रस्थन्तु रजनीचूर्णं लेपयेल्लिङ्गपीठके ५२
शुद्धवस्त्रेण संवेष्ट्य धारयेदुपवीतकम्
खारित्रयसमं गव्यं उच्यते द्विगुणं तथा ५३
तत्समं गुळसारञ्च त्रिप्रस्थं मधुसंयुतम्
द्विगुणं सर्पिसंयुक्तं पञ्चामृताभिषेचनम् ५४
सितेक्ष्वं बुकभारार्द्धं शर्कराणां पलंशकम्
खारिमात्रं पञ्चरसं प्रत्येकमभिषेचनम् ५५
पनसं दशसङ्ख्या च चूतं पञ्चशतं तथा
फलं सहस्रं कदळी तत्समं नाळिकेरकम् ५६
भारमन्नाभिषेकन्तु तुलाद्वयन्तु चन्दनम्
खारिमात्रं बिल्वरसं कर्पूरेण समन्वितम् ५७
एलालवङ्गचूर्णादि षट्प्रस्थेन समन्वितम्
पञ्चभारं जलं गृह्य मद्ध्ये मद्ध्येऽभिषेचनम् ५८
सहस्रधारातोयन्तु गङ्गाजलसमं भवेत्
गोशृङ्गाग्रस्य तोयञ्च सप्तनद्यासमं भवेत् ५९

षट्षष्टिकोटितीर्थेन समं रत्नस्य तोयकम्
दक्षिणावर्तशङ्खस्य तोयं मूलाभिषेचनम्  ६०
अनुज्ञां देशिकात्प्राप्य साधको होममाचरेत्
जयादिरभ्याधानञ्च प्रायश्चित्तादिहोमकम्  ६१
शिवास्त्रन्तु हुनेत्पश्चात् अघोरास्त्रं हुनेच्छतम्
सदक्षिणां क्षौमवस्त्रां तांबूलेन समन्विताम्  ६२
पूर्णाहुतिमुत्तमाञ्च सप्तते त्वग्निमन्त्रतः
पूर्णाहुतिञ्च विधिवत् वाद्यघोषसमन्विताम्  ६३
परिषेचनं ततः कृत्वा ब्रह्मणो द्वासनं कुरु
परिस्तरणमादाय सङ्गृह्य त्वेकदर्भकम्  ६४
अग्निमद्ध्ये तु तान्दत्वा एकदर्भं प्रहृत्य च
तद्भस्म तिलकं कृत्वा ललाटे साधकोत्तमः  ६५
अग्निमद्ध्ये स्थितन्देवं कुम्भमद्ध्ये तु योजयेत्
मुद्गान्नन्तु निवेद्याथ नीराजनमथाचरेत्  ६६
मण्डलं पूजयेत्पश्चात् यथास्थाने नियोजयेत्
कदळीफलतांबूलं दानादिदशदानकम्  ६७
विप्राय वेदविदुषे भवेत्कुम्भस्य सन्निधौ
परिचारकमाहूय सोष्णीषञ्चोत्तरीयकम्  ६८
तन्मूर्ध्नि वृषमभ्यर्च्य सर्वालङ्कारसंयुतम्
कुम्भमुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम्  ६९
स्वस्तिवाचकसंयुक्तं नानावाद्य समन्वितम्
छत्रचामरसंयुक्तं पिञ्छतोरणसंयुतम्  ७०
तदग्रेनाट्यसंयुक्तं कृत्वा भक्तजनैस्सह
गर्भगेहं प्रविश्याथ कुम्भमादाय साधकः  ७१
साधकात्कुम्भमादाय देशिकस्सावधानतः
कुम्भं संपूज्य विधिवत् मूललिङ्गेऽभिषेचयेत्  ७२
वर्द्धनी कुम्भमादाय लिङ्गपीठेऽभिषेचयेत्
अनन्तादि शिखण्ड्यन्तं अभिषेकं यथाक्रमम्  ७३
बिल्वपत्रैस्समभ्यर्च्य मन्त्रान्नन्तु निवेदयेत्

खण्डवस्त्रं समादाय उद्वर्तनमथाचरेत् ७४
चन्दनागरुकस्तूरि मृगनाभिसमन्वितम्
कर्पूरेण समायुक्तं हिमतोयसमन्वितम् ७५
एवं गन्धं समादाय लेपयेल्लिङ्गमूर्द्धनि
धारयेत्क्षौमवस्त्रञ्च उत्तरीयसमन्वितम् ७६
गोळकाद्धरणादीनि मूलमन्त्रेण धारयेत्
मल्ली चंपकपुन्नाग करवीरसितांबुजैः ७७
भूषयेल्लिङ्गमामूलं एतैश्चैवं सुगन्धिभिः
आधारादीन्समभ्यर्च्य पञ्चावरणसंयुतान् ७८
सहस्रनाममन्त्रेण बिल्वपत्रेण चार्चयेत्
मुद्गान्नं कृसरान्नञ्च माषान्नञ्च गुळोदनम् ७९
मद्ध्योदनं पायसञ्च नानापूपसमन्वितम्
नानाव्यञ्जनसंयुक्तं दशभारसमन्वितम् ८०
कदळीमुखखण्डञ्च नाळिकेरादिखण्डकम्
महा--विर्निवेद्याथ पाद्यतोयकपूर्वकम् ८१
आचरेत्तु पुनः पाद्यं दीपाराधनमाचरेत्
भस्मधारणं कृत्वा तांबूलन्तु निवेदयेत् ८२
शङ्खमद्दळसंयुक्तं वेणुगानसमन्वितम्
निंबादिभस्मकार्पासदर्पणछत्रचामरैः ८३
मन्त्रपुष्पं समादाय वेदघोषसमन्वितम्
मूलमन्त्रैस्समभ्यर्च्य प्रार्त्थयेत्परमेश्वरम् ८४
भक्तस्तोत्रं पठेत्पश्चात् आशिषं सम्यगाचरेत्
सर्वेषां दापयेत् भस्म यजमानस्य पूर्वकम् ८५
आचार्यं पूजयेत्पश्चात् वस्त्रहेमाङ्गुलीयकैः
अधमं दशनिष्कं स्यात् मद्ध्यमं निष्कविंशतिः ८६
उत्तमं त्रिंशनिष्कञ्च एवमाचार्यदक्षिणा
रुद्रमन्त्रस्य जपतां विप्रादीनान्तु दक्षिणा ८७
गोमूल्यमुत्तमं प्रोक्तं यथावित्तानुसारतः
ब्राह्मणान्भोजयेत्पश्चात् महेश्वरान्सुपूजयेत् ८८

उत्तमं मराडलं पूजा तदर्द्धं मद्ध्यमं भवेत्
तदर्द्धं कन्यसं प्रोक्तं अभिषेकं प्रकीर्तितम् ८९
एवं यः कुरुते मर्त्यस्सपुरायां गतिमाप्नुयात्
इहैव धनवान्श्रीमान्सोन्ते शिवपुरेवसेत् ९०
इति महाभिषेकविधिपटलश्चतुरुत्तरशततमः

सौरस्थापनपटलप्रारंभः
सर्वाभीष्टप्रदञ्चैव सौरस्थापनमुत्तमम्
द्विभुजञ्च द्विनेत्रञ्च किरीटमकुटान्वितम् १
मकुटान्तं कराठमूलात्प्रभामराडलमरिाडतम्
गराडौ ताटङ्कसंयुक्तं रक्तवर्णं तथैव च २
सनळोब्जकरोपेतं कंसासक्तसमन्वितम्
समपादस्थितं पद्मे रक्तवस्त्रैरलङ्कृतम् ३
महापरिस्थञ्च द्वारस्य सव्यपार्श्वके
अथवा वामपार्श्वे तु सौरालयं प्रकल्पयेत् ४
षोडशस्तंभसंयुक्तं चतुर्द्वारसमन्वितम्
मद्ध्ये वेदिं प्रकल्प्याथ पञ्चकुराडं प्रकल्पयेत् ५
अथवा एककुराडं वा मेखलात्रयमुत्तमम्
मद्ध्ये दशघटं स्थाप्य सप्तधान्योपरिन्यसेत् ६
घटमेकं न्यसेदीशे एकं न्यस्त्वा तु पार्श्वके
नयनोन्मीलनं पूर्वं जलाधिवासनं परम् ७
शयनारोपणं पश्चात् घटे संपूजयेत्ततः
प्रणवं पूर्वमुच्चार्य हामित्यादि ततः परम् ८
मायाबीजं ततः पश्चात्सकारन्तु ततः परम्
हकारन्तु ततः पश्चात् शिवसूर्यमतः परम् ९
चतुर्त्थ्यन्तं नमोन्तञ्च मूलमन्त्रमिहोच्यते
मूलेन रविमावाह्य प्रथमावरणं यजेत् १०
तृतीयावरणे पूज्य होमादीन्संप्रपूजयेत्
गणेशमीशदिग्भागे गुरुमाग्नेयके पुरा ११

होमकर्मसमाराध्य पूर्वोक्तविधिना हुनेत्
त्रिखण्डं होमयेत्पश्चात्तत्त्वतत्त्वेश्वरान्न्यसेत् १२
सुमुहूर्ते सुलग्ने च अभिषिच्य विशेषतः
स्नपनं कारयेत्पश्चात् हविर्दत्वा विशेषतः १३
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः
एवं यः कुरुते मर्त्यस्सपुण्यां गतिमाप्नुयात् १४

इति सौरस्थापनपटलः पञ्चोत्तरशततमः

उत्तरकारणागमं संपूर्णमासीत्

Reference:
Karaṇāgama, vol. 2: Uttarakaraṇāgama, Mayilai Alagappa Mudaliyar (publisher): Chennai, 1921.